॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला

२२१



वेदान्तसूत्रवैदिकभाष्यापरनामधेया

# वेदान्तसूत्रवैदिकवृत्तिः

श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्या-
त्मरामभगवत्पादशिष्येण
श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्य-
पण्डितस्वामिज्वाहिरदासभगवत्पादाधिगतवेदवेदाङ्गविद्येन

श्रीमत्पण्डितस्वामिहरिप्रसादवैदिकमुनिना
विरचिता



चौखम्भा संस्कृत संस्थान
भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक
पो० आ० चौखम्भा, पो० बाक्स नं० ११३९
वाराणसी ( भारत )

प्रकाशक

**चौखम्भा संस्कृत संस्थान**

पो० आ० चौखम्भा, पो० बाक्स नं० १३९

जड़ाव भवन, के. ३७/११६, गोपाल मन्दिर लेन

वाराणसी–२२१००१ ( भारत )

दूरभाष : ६५८८९ तार : सोनोत्सव, वाराणसी

अन्य प्राप्तिस्थान

**चौखम्भा विश्वभारती**

पो० बा० नं० ६५

चौक ( चित्रा सिनेमा के सामने )

वाराणसी–२२१००१ ( भारत )

फोन : ६५४४४

मूल्यम् १५०–००

मुम्बयीस्थनिर्णयसागरयन्त्रालयप्रकाशनम् १९१४

पुनर्मुद्रणम् १९८२

मुद्रक—श्रीगोकुल मुद्रणालय, वाराणसी

THE

KASHI SANSKRIT SERIES

221

*****

# VEDĀNTASŪTRAVAIDIKAVṚTTI

A VEDIC COMMENTARY ON THE

BRAHMASŪTRA OF BĀDARĀYAṆA

*BY*

SVĀMI HARIPRASĀDA VAIDIKAMUNI

CHAUKHAMBHA SANSKRIT SANSTHAN

*Publishers and Distributors of Oriental Cultural Literature*

P. O. Chaukhambha, Post Box No. 139

VARANASI ( INDIA )



# अथ वेदान्तसूत्रवैदिकवृत्तिभूमिका ।

**अग्ने! नय सुपथा राये अस्मान् विश्वानि देव! वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ ( यजु० ४० । १८ )**

या हि लोके तावदृग्यजुःसामाथर्वनाख्यश्चतस्रः संहिताः सर्वत्र प्रसेषिध्यन्ते ता एव चत्वारो वेदाः सर्वैर्वेदविद्भिः समाख्यायन्ते । यत्रैतदुदाहृतं भवति **"द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च । ४ । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः"** ( मुं० १ । १ । ५ ) इति । **"स होवाचर्ग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थम्"** ( छां० ७ । १ । २ ) इति च । तेषामेषां चतुर्णां वेदानामन्तःपर्य्यवसानं यस्मिन्नर्थे वरीवृत्यते, यत्र किलार्थेऽमी चत्वारो वेदाः साक्षात् परम्परया वैदम्पर्य्येण पर्य्यवसासायन्ते, यमर्थं खलु भगवन्तस्ते शब्देन तात्पर्य्येण च मनुष्यमात्रमविशेषात् परमनिःश्रेयसावाप्तिहेतोर्यथापद्धत्युपदेदिश्यन्ते, सोऽयमर्थो "वेदान्तः" इति वेदान्तवेदिभिः परिजेगीयते । तमेव नः सौकर्य्येण ग्राहयितुं प्रवर्तमानाः परमकृपालवोऽत्रभवन्तस्तत्तत्कारप्रभृतिमहर्षयोऽनुग्रहातिशयवशेन सरलया मधुरया च भाषया यथोपदेशमीशाद्यासु दशसूपनिषत्सु विस्तरेणोपनिबबन्धुरिति ता अपि वेदान्ता लोकशास्त्रयोः संज्ञायन्ते । यत्रैतदुदाहृतं भवति **"वेदान्तविज्ञानसुनिश्चितार्थाः"** ( मुं० ३ । २ । ६ ) **"सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्"** ( वे० ३ । ३ । १ ) **"अवियज्ञं ब्रह्म अपेदाविदेविकमेव च । आप्यां-**

स्मिकं च सततं वेदान्ताभिहितं च यत्" (मनु० ६। ८३) इति। त्रेधा हि सर्वेषां वेदानामर्थः खलु प्राधान्येन कक्षीक्रियते कर्मोपासना ज्ञानं च। तत्रादिमः कर्म, मध्यम उपासना, चरमो ज्ञान-मिति। तेषां कर्मोपासनाभ्यामादिममध्यमाभ्यामैहिकामुष्मिकोऽभ्युदयः समवाप्यते। यत्रेदं श्रुतं भवति "कर्मणा पितृलोको विद्यया देवलोकः" (बृ० १।५।१६) इति। स च सातिशयः क्षयि-ष्णुश्चेति न तयोः पर्य्यवस्यन्ति भगवन्तो वेदाः। नहि मनुष्यमात्र-कल्याणाय भगवतः परब्रह्मणः परमेश्वरादवतीर्णास्ते यस्यार्थस्य सातिशयं क्षयिष्णु च फलं तत्र कर्हिचित्पर्य्यवसातुमुत्सहन्ते। महीयसेऽर्थाय किल कल्पते महतामवतारो न क्षुद्राय क्षयिष्णवे कस्मैचिदर्थाय। परमनिःश्रेयसं कैवल्यं च चरमेण ज्ञानेन सम्प्राप्यते। यत्रैतदुदाहृतं भवति "प्रज्ञानेनैनमाप्नुयात्" (कठ० २।२४) "ज्ञानान्मु-क्तिः" (सां० ३। २३) इति। तत्रास्ति निरतिशयं शाश्वतं च न सातिशयं न क्षयिष्णु। नहि तत् प्राप्तो जनपञ्चास्योऽजस्रं जाज्वल्य-मानेन रागद्वेषादिदावानलेन दन्दह्यमानामिमां संसारारण्यावनीं पुनः स्वप्नेऽपि कदाचिदावर्तते। अयमेवार्थः खलु तेषां पर्य्यवसानभूमिः। अत्रैवार्थे नूनं परिसमाप्यन्ते सर्वे वेदाः। यत्रैतदाम्नातं भवति "ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः। यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समा-सते" (ऋ० २। ३।२१।३९) इति। सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद् वदन्ति। यदि-च्छन्तो ब्रह्मचर्य्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमि-त्येतत्" (कठ० २।१५) इति च। सोऽयमुपनिषदाममूषां परमो विषयः। यत्रैतदुदाहृतं भवति "श्रुतोपनिषत्कगत्यभिधानाच्च" (वे० १।२।१६) इति। अतस्तासामपि वेदान्तत्वमुपपद्यतेतराम्। नहि वेदानामर्थं चरमं प्रतिपादयन्त्यस्ताः कदाचिद् वेदान्ता नोपपद्यन्ते।

'अपरे त्वाहुरन्ति त्रयोऽप्यर्थाः खलु चतुर्णां वेदानां प्रधानतोऽभ्युप-

गम्यन्ते प्रकृतिर्जीवात्मा ब्रह्म च । तत्र प्रकृतिः प्रथमो जीवात्मा मध्यमो ब्रह्म पश्चिम इति । तेषामेषां त्रयाणामर्थानां येषु तावद् वेदमन्त्रेषु पश्चिमोऽर्थो ब्रह्म मुमुक्षूणामवबोधाय संक्षिप्य मुख्यत्वेन प्रतिपाद्यते ते सर्वे मन्त्रा वेदान्ताः प्रणिगद्यन्ते यथेशावास्यप्रभृतयो मन्त्राः । किं कारणं? यत्कारणं विद्यते तत्र शब्दार्थयोगः साक्षात् । वेदानामन्तः पश्चिमोऽर्थः प्रतिपादयितव्यत्वेन विद्यते यत्रेति तद्व्युत्पत्तेः । उपनिषदोऽपि सर्वास्तमेव पश्चिममर्थं ब्रह्माशेषविशेषाभ्यां विस्तरेणाधिकारिवर्गमनुशेशिष्यन्त इति ता अपि वेदान्ता व्यपदेदिश्यन्ते । योगाविशेषात् । नहि वेदान्तशब्दार्थयोगं ताः कर्हिचिदतिशेरते । अन्यथा **"तं त्वौपनिषदं पुरुषं पृच्छामि"** (छां० ३ । ९ । २६) इति पश्चिमार्थस्य ब्रह्मणः पुरुषस्यौपनिषदविशेषणोपादानानुपपत्तेः । सर्वासां तासां पश्चिमार्थब्रह्मानुशासित्रीत्वं चोपनिषत्संज्ञयाऽपि पोस्फुट्यते । नहि तदनुशासित्रीत्वाभावे तासामुपनिषत्संज्ञेयं कथञ्चित् सङ्घटीति । गतिकर्मणो ह्यन्तर्भावितण्यर्थस्योपनिपूर्वस्य सदेः कर्तरि क्विपि रूपमुपनिषन्म्यते । तस्याश्च ब्रह्मोपदेशपरा वागर्थो विस्पष्टः । शोश्रूय्यमाणा सती गुरुमुखादुपनिषादयति ब्रह्म ब्रह्मविद्योपजननेन पुरुषमेनमधिकारिणमिति तद्व्युत्पत्तेः । प्रयुञ्जते च तच्छब्दमत्रैवार्थे प्रायेणोपनिषत्कृतोऽपि सर्वत्र । यत्रैतदुदाहृतं भवति **"उपनिषदं भो ब्रूहीति । उक्ता त उपनिषत्"** (के० ४ । ७) इति । प्रत्यगात्मोपदेशपरा वाक् चानयैव वाचा सङ्गृह्यते । तद्विज्ञाने तद्विज्ञाननियमात् । नहि येन प्रत्यगात्मा न विज्ञायते तेन ब्रह्म कर्हिचिद् विज्ञातुं शक्यते । यत्तु ब्रह्मविद्योपनिषदिति शङ्कराचार्य्याणामर्थः, यत्रैतदुदाहृतं भवति **"य इमां ब्रह्मविद्यामुपयन्त्यात्मभावेन श्रद्धाभक्तिपुरःसराः सन्तस्तेषां गर्भजन्मजरारोगाद्यनर्थपूगं निशातयति, परं वा ब्रह्म गमयति, अविद्यादिसंसारकारणं चात्यन्तमवसादयति विनाशयत्युपनिषत् । उपनिपूर्वस्य सदेरेवमर्थस्मरणात्"** (मुण्डकोप० भा० भूमिका) इति, सोऽप्यर्थो वेदितव्यो न सर्वार्थः ।

गुरुमुपसन्नः खलु शिष्यः श्रद्धाभक्तिसमन्वितो ब्रह्मोपदेशपरां तद्वाचमाकर्णयति तदनु चाभ्यासातिशयवशेन साक्षात् प्रतिपद्यते ब्रह्मेति दृष्टत्वात्। ब्रह्मविद्या च साक्षाद् ब्रह्मप्रतिपत्तिर्ब्रह्मावगतिरिति सिद्धान्तः। ब्रह्म च वेदानां पश्चिमोऽर्थ इति तदनुशासनीत्वादुपनिषदोऽपि वेदान्ता इति सम्यगालोचामहे।

ये तु कात्यायनबोधायनआपस्तम्बप्रभृतिमतेन मन्त्रा ब्राह्मणानि चोभये वेदा इत्यातिष्ठमाना यस्मिन् भागे वेदानामन्तः समाप्तिरन्तोऽन्तिमो वा भागो यः स वेदान्त इति व्युत्पत्त्या वेदानां ब्राह्मणानामन्तिमभागत्वादुपनिषदां वेदान्तत्वमाचक्षते, ते सर्वथाऽत्र चिन्तनीया वर्तन्ते। ब्राह्मणानां वेदव्याख्यानत्वेन वेदत्वासम्भवादुपनिषदां वेदान्तत्वानुपपत्तेः। व्याख्यानानि खलु ब्राह्मणानि वेदानामेकस्वरेण सर्वैर्वेदविद्भिः समाश्रीयन्ते। व्याख्यानव्याख्येयभावश्च सर्वः सर्वत्र भेदनिबन्धनः प्रवर्तते न क्वचिदभेदनिबन्धन इति सुप्रसिद्धम्। नहि यद् व्याख्येयं तदेव व्याख्यानं कर्हिचिद् भवितुमर्हति। तथाच कथमिमानि व्याख्यानानि भवन्ति साक्षाद् वेदाः सम्भवेयुः। तदसम्भवे चोपनिषदां वेदान्तत्वानुपपत्तिर्हस्तामलकायितैव न जातु व्याख्यानं किञ्चिदपेक्षते। यथा चेमानि ब्राह्मणानि न वेदास्तथोपनिषदोऽपि न वेदा इति **"विकारशब्दान्नेति चेन्न प्राचुर्यात्"** (वे० १।१।१३) इत्यत्र मयटो विकारार्थत्वमाशङ्क्य प्राचुर्यार्थकत्वेन समादधानास्तत्रभवन्तः सूत्रकृतोऽपि विज्ञापयन्ति। तदिदं तत्रैव वयं विस्तरेणोपपादयामेति न पुनरिह तदुपपादनाय प्रयतामहे।

यस्य पुनरेषा मतिरीशावास्योपनिषदो वेदस्यान्तत्वादन्तिमभागत्वान्मुख्यं वेदान्तत्वमितरासां च तन्मूलत्वाद् गौणमिति, तं सहर्षमाद्रियामहे। मुख्यवद्गौणेऽपि संज्ञाप्रवृत्तेरभ्युपगमात्। उपोद्बलयति चोपनिषत्सङ्ग्रहकृतां शिष्टानामुपनिषत्सङ्ग्रहोऽप्येतां मतिमिति युज्यतेऽस्माकं तत्र सहर्षमादरः। एतेनेदमप्यभिहितं वेदितव्यम्। यथा ऋग्वेदमन्त्राणां तावच्छाकली संहिता प्रमाणं मन्यते प्राथमिकीत्वात्, तथा याजुषमन्त्राणां

काण्वी संहिता प्रमाणं मन्यते शिष्टपरिगृहीतत्वान्न माध्यन्दिनी संहिता। तदपरिगृहीतत्वात्। नहि यथा काण्वी संहिता शिष्टैः परिगृह्यते तथा माध्यन्दिनी संहिताऽपि परिगृह्यते, येन प्रमाणं मन्येत। शिष्टा हि निखिलजनोपकारार्थमुपनिषदः सर्वाः सञ्जिघृक्षवो यथा काण्वानां मन्त्रोपनिषदमीशावास्यं तावत् सङ्गृह्णन्ति तथा ब्राह्मणोपनिषदं बृहदारण्यकमपि तेषामेव सञ्चिन्वन्ति न माध्यन्दिनानाम्। किं कारणम्? इदमेव कारणं न ते माध्यन्दिनीं संहितां प्रमाणं मन्वते। चेन्मन्वीरन् कथं न सञ्चिन्वीरन्। नहि प्रमाणस्य सतः सञ्चयो दुष्यति शिष्टानाम्। किमधिकेनेह स्यात्पण्डितानां मतिमतामिदानींतनो वेदभाष्यकृत्सायणाचार्योऽपि च काण्वसंहितामेव भाष्येणालङ्कुरुते न विन्दमानामपि माध्यन्दिनीं संहिताम्। तदेतेन तस्य तदप्रमाणत्वं शिष्टानुगामित्वं च मन्यतश्चाकाङ्क्ष्यते। माध्यन्दिनसंहिताभाष्यकृतो महीधरप्रभृतयस्तु नात्यन्तं शिष्टानुगामिन इति किं तत्र सताऽपि तद्भाष्येण। सूत्रकृता च तैत्तिरीयसंहितावद् विषयव्यवतिष्ठापयिषामात्रेण सा तत्र तत्रोदाह्रियते न प्रमाणमित्यभिप्रायेण। साम्प्रतिकैर्वैदिकैरपि सर्वदा सर्वत्र काण्वी संहितैव प्रमाणं विधातव्या न जातु माध्यन्दिनी संहिता। सर्वेषां शिष्टानुगामित्वस्यावश्यकत्वादिति युक्तं निभालयामहे। तैत्तिरीयसंहिता तु पुरैव न प्रमाणीक्रियत इति कृतमिह तद्गोचरकिञ्चिदभिधानेन।

वेदान्ता भवन्त्यश्चैता उपनिषदः कियन्तं कालं निगदेनैवाधिकारिवर्गो ब्रह्मात्मज्ञानं समनुशशासुः। न तदानीं तदानींतनानां तच्छब्देषु कुत्राप्यर्थगोचरः संशयः प्रादुरासीत्। अनन्तरं कालमहिम्ना नानाविधसम्प्रदायभेदेनाङ्कुरिते तावच्छाखाभेदबीजे सरलमतीनामधिकारिणामपि तच्छब्दार्थगोचरा अनेकधा संशयाः प्रादुरभवन्। तत्र प्रादुर्भूतेषु च तेषु वाक्यार्थगोचरः संशयः स्वयमेवाजनिष्ट। तत्संभवे च सुतरां सिद्धान्तार्थगोचरः संशयः—किं ब्रह्मोपासनाभिःश्रेयसं प्राप्यते किंवा ब्रह्मज्ञानात्। ब्रह्मज्ञानेनापि कर्मसमुच्चितेन किमुत केवलेन। केवलं ब्रह्मज्ञानं किं विशुद्धमनसा जन्यते, साक्षात्कृतेन वा तेनात्मना स्वेन। यथा-

शास्त्रमनुष्ठितयोः कर्मोपासनयोः किं ज्ञानहेतुर्मनोविशुद्धिरेवैकं फलं विद्यतेऽथवाऽस्त्यन्यदपि तत्फलं किञ्चित्। अन्यदपि स्वयं ते कर्मिभ्यो ब्रह्मोपासकेभ्यश्च जीवात्मभ्यः प्रयच्छतो यद्वा तदध्यक्षो जगज्जन्मादि कारणं ब्रह्म। तच्चेहैव सर्वैस्तैरुपभुज्यतेऽमुत्र वा क्वचित्। अमुत्र ते परेतास्तदुपभोगाय केनचित् पुरुषेण नीयन्ते तत्क्रतुसहायैः सूर्य्यरश्मिभिर्वा। तदुपभोक्तारो जीवात्मानोऽपि व्यापकाः स्युरणवो वा भवेयुः। अणवोऽपि संख्येया वर्तन्ते किमुतासंख्येयाः। अमुत्रैव निःश्रेयसेऽपि तेषां लिङ्गशरीराणि यथापूर्वमवतिष्ठन्ते किंवा नितान्तं प्रध्वंसन्ते। निःश्रेयसं किं ब्रह्मभावप्राप्तिः स्यादथवा ब्रह्मानन्दावाप्तिः। निःश्रेयसं प्रतिपद्यमानाः पुनः संसारमावर्तन्ते किंवा नावर्तन्ते। संसारोऽयं स्वाद्धः स्यादाहोस्विदस्वाद्धः। अस्वाद्धुरपि मिथ्या स्यादथवा सत्यः। सत्योऽपि ब्रह्मोपादानको भवेदुत प्रकृत्युपादानकः। प्रकृतिपुरुषा इमे स्वसत्तार्थं यथा ब्रह्म नापेक्षन्ते तथा स्वस्थित्यर्थमपि नापेक्षन्ते किमुतापेक्षन्ते। तदुभयाधिष्ठानं ब्रह्मापि परिच्छिन्नं स्यादथवाऽपरिच्छिन्नम्। अपरिच्छिन्नादपि तस्मादस्ति परं किञ्चिन्नास्ति वा, तदेवास्ति सर्वस्मात् परं सर्वस्याधिष्ठानं सर्वज्ञं सर्वशक्ति सच्चिदानन्दस्वरूपमित्येवञ्जातीयकः। न चैवं सिद्धान्तार्थे संशयानाः पुरुषाः कामयमाना अप्यैहिकामुष्मिकाभ्युदयं निःश्रेयसं वा पदं कर्हिचिदवाप्तुं शक्नुवन्ति नानाविधसंसारानर्थप्राप्तेर्वा रक्षितुमात्मानं कथञ्चिद् प्रभवन्ति। संशयस्यास्याश्रद्धाहेतुत्वेन तदनुकूलप्रवृत्तिविघटकत्वात्। अत एव स्मर्य्यते भगवद्गीतायाम् "**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति। नायं लोकोऽस्ति न परो न सुखं संशयात्मनः**" (गी० ४। ४०) इति। हन्तामी पुण्यमूर्तयो मनुपुत्राः शब्दार्थसंशयैः सिद्धान्तार्थसंशयमापन्नाः किङ्कर्तव्यविमूढत्वादैहिकामुष्मिकाभ्युदयं निःश्रेयसं वा पदं मा नाम नावाप्सुः, नानाविधसंसारानर्थानलस्य देदीप्यमानस्य चात्मानं मा नामेन्धनीकार्षुरिति करुणार्द्रहृदयो भगवान् व्यासापरनामधेयो बादरायणो मुनिर्वेदान्तशब्दार्थाभिधानमुखेन सिद्धान्तार्थनिरूपणपरं चतुरध्यायीशास्त्रं नाम

वेदान्तदर्शनमिदं रचयाञ्चकार । यत्किल कर्मसकाशादुत्तरबोधिनोपास-नयोर्मीमांसकत्वादुत्तरमीमांसानाम्ना संज्ञायते । याथातथ्यतो वेदान्ता-र्थस्य प्रदर्शनेन "वेदान्तदर्शनं" नाम चास्य सुव्यक्तम् । यत्रैतत् स्मृतं भवति "वेदान्तकृद् वेदविदेव चाहम्" (गी० १५ । १५) इति । ब्रह्मणः प्रधानतो निरूपणेन चैतत्सूत्राणि यथा सम्प्रति "ब्रह्मसूत्राणि" समाख्यायन्ते, यत्रैतदुक्तं भवति "ब्रह्मसूत्र-पदैश्चैव हेतुमद्भिर्विनिश्चितैः" (गी० १३ । ४) इति, तथा भगवतः पाणिनितः पूर्वं प्रायेण चतुर्थाश्रमिभिर्भिक्षुभिरध्येयत्वाद् "भिक्षुसूत्राणि" समाख्यायिषत । यत्रैतदुदाहृतं भवति "पारा-शर्य्यशिलालिभ्यां भिक्षुनटसूत्रयोः" (अष्टा० ४ । ३ । ११०) इति । पाराशर्य्यो बादरायणः । तानि चैतानि ब्रह्मसूत्राणा-मेषां मूलभूतान्यासन्निति केचिदाचक्षते, तद् वयं चिन्त्यं मन्यामहे । तदेतद् रच्यमानमपि शास्त्रं सम्प्रदायभेदाभिनिवेशितचेतसां नृणां दुरा-ग्रहग्राहग्रासैककर्मणो न तावदात्मानं पर्य्यमुमुचद्, वेदान्तशब्दार्थ-संशयापाकरणेन सिद्धान्तार्थनिरूपणाय च व्याख्यानादृते मात्रयाऽपि नापीपरत्, त्रिलोक्याश्चक्षुरिव व्याख्यानाय च सर्वलोकचक्षुरिदं सर्वेषां व्याख्यातृरूपाणां हृदयपद्मानि बलेनात्यन्तमकृक्षत् । एतस्यां वेलायां यः किल महान् तद्व्याख्यानाय यथाशेमुषि प्रथमं प्रववृते दर्शनेतिहासको-विदास्तं संज्ञातो बोधायनं मुनिं सङ्गिरन्ते । स खलु प्रवर्तमानो द्रविडदेशीयो मुनिवर्य्यो विस्तरेण वृत्तिनाम्ना व्याख्यानेन येन शास्त्रमिदं भूषयाम्बभूव तदासीद् विशिष्टाद्वैतपरमिति विशिष्टाद्वैतवादिनः के-चित् प्रतिजानते । वैदिकसिद्धान्तार्थनिरूपणपरमिति च केचनापरे । द्वयेषामेषां विशिष्टाद्वैतवादिनां प्रतिज्ञानं कथञ्चित् प्रामाणिकं सम्भा-व्यते । बोधायनमुनेः सम्प्रदायभेददूषितचेतस्त्वेन वात्स्यायनमुनिवद् वैदिकसिद्धान्तार्थनिरूपकत्वानुपपत्तेः । यथा हि न्यायदर्शनभाष्यकृत् खलु वात्स्यायनो मुनिः सम्प्रदायभेददूषितचेतस्त्वान्मन्त्रवद् ब्राह्मण-मपि वेदमातिष्ठते, वैदिकदर्शनानां च वैशेषिकादीनां मिथः प्रक्रि-

क्रमभेदवत् सिद्धान्तभेदमपि यथाकाममाश्रयते, तत्प्रदर्शनार्थं च "**विभक्त्यन्तरोपपत्तेश्च समासे**" (न्या० २ । २ । ३७) इत्यादिसूत्रेषु स्थानाभावेऽपि हठात् स्थानं सम्पादयते, अन्त्यजजातिप्रसिद्धानां भूतप्रेतादिमन्त्राणां प्रामाण्यमिव च भगवतो वेदस्य प्रामाण्यं व्यवस्थापयते, तथा बोधायनोऽपि मन्त्रवद् ब्राह्मणं वेदं प्रतिजानीते, वैदिकदर्शनानां परस्परं प्रक्रियाभेदवत् सिद्धान्तभेदं चानुमन्यते । नचैवं प्रतिजानानस्यानुमन्यमानस्य च तस्य वैदिकसिद्धान्तार्थनिरूपकत्वं भ्रमतोऽपि कथञ्चिदुपपद्यते । विशिष्टाद्वैतसिद्धान्तस्तु न वैदिकसिद्धान्त इति किं तन्निरूपणेन स्यादस्माकम् । ये च तथा सन्तमप्येनं मुनिवर्य्यं वात्स्यायनमुनिमिव वैदिकसिद्धान्तार्थनिरूपकं मन्यते ते महद्भिरनुग्रहणीयाः । परवशबुद्धयो हि ते न स्ववशबुद्धयः । बोधायनमुनेरनन्तरं च "**भर्तृ**"–प्रभृतिभिः कैश्चिदाचार्य्यैस्तद्व्याख्यानभूतानि भाष्याणि विस्तरशः प्रणाविषतेत्येतदपि कर्णगोचरतामापद्यते । शाङ्करे भाष्ये च तदुल्लेखोऽपि यत्र तत्रोपलभ्यते । तानि सर्वाणि महता यत्नेनान्विष्यमाणान्यपि नाधुनोपलभ्यन्ते, कालमहिम्ना विलुप्तत्वादिति न तद्विषयं किञ्चिद् वक्तुं चित्तमुत्सहते । ततोऽर्वाचीनाः खलु शङ्कराचार्य्यभास्कराचार्य्यरामानुजाचार्य्यप्रभृतयस्तद्व्याख्यानाय प्रवर्तमानाः स्वंस्वं विपुलं भाष्यं रचयाम्बभूवुः । तत्र च स्वाभिमतं मतं वैदिकमतनाम्ना विस्तरेण प्रमाणा-

(१) शङ्कराचार्य्यप्रादुर्भावो विक्रमार्कसमयादतीते पञ्चचत्वारिंशदधिकाष्टशतीमिते संवत्सरे भारतान्तर्गते केरलनाम्नि जनपदे कालपी—ग्रामे शिवभट्टशर्म्मणो भार्य्यायामार्य्याम्बायामभवदिति विवेकधियो विद्वांसः प्रतियन्ति । तद् वयमनुमन्यामहे । सम्प्रदायविदुक्त्या तथैव प्रतिपत्तेः । तद् यथाऽऽहुः सम्प्रदायविदः "निधिनागेभवह्न्यब्दे विभवे मासि माधवे । शुक्ले तिथौ दशम्यां तु शङ्कराचार्य्योदयः स्मृतः ॥ १ ॥" इति । निधिनागेभवह्न्यब्दे=नवाशीत्युत्तराष्टशत्यधिकत्रिसहस्रीमिते वर्षे इत्यर्थः । कलियुगस्येति शेषः । तथा शङ्करमन्दारसौरभे नीलकण्ठभट्टा अपि "प्रासूत तिष्यशरदामतियातवत्यामेकादशाधिकशतोनचतुःसहस्र्याम्" इति । तिष्यशरदां=कलियुगवर्षाणामित्यर्थः । भास्कराचार्य्यरामानुजाचार्य्यप्रभृतीनां प्रादुर्भावस्तु शङ्कराचार्य्यतः परतोऽनो निर्विवाद इति तोषणादुदास्महे ॥

भासयुक्तयाभासपुरःसरं प्रतिपादयाञ्चक्रुः । तानीमानि सर्वाणि भाष्याणि टीकावार्तिकोपेतानि सर्वैः सर्वत्र सम्प्राप्यन्तेऽधीयन्ते च । तेषाममीषां सर्वेषां शाङ्करं भाष्यं सर्वतो विशिष्टं मतिमतां पण्डितानां समादर्तव्यं च दार्शनिकरूपा मन्यन्ते । भाष्यान्तराणि च तदुपजीव्य विरचितानि तच्छायामात्राणीति न तैरत्यन्तमाद्रियन्ते । शाङ्करे भाष्येऽपि च बौद्ध-सिद्धान्तवधूरेव वेदवेदान्तश्रुतिवासोभिः समाच्छाद्य जनतामनोरञ्जनाय तत्समक्षं नीयते न वैदिकसिद्धान्तार्थयोषिता जरती । विशेषस्त्वियानेव वर्तते—बौद्धाः किल विज्ञानं शून्यं चोभयं तत्त्वं विविच्य स्वस्वनाम्ना प्रतिपादयन्ति, शङ्कराचार्य्यास्तु क्षणिकत्वं निरस्य विज्ञानं शून्यं चोभयं तत्त्वं समुच्चित्य ब्रह्मनाम्ना व्युत्पादयन्ति । नह्येतं विशेषं हित्वा विज्ञान-समुच्चिते शून्ये निर्विशेषे ब्रह्मणि चान्यः कश्चिद्विशेषो दर्शयितुं शक्यते । नाममात्रेण दर्श्यमानो विशेषस्तु न बुद्धिमद्भिर्विशेषो मन्यते । जगदा-कारेण विवर्तयन्ती सवासनाऽनिर्वचनीयाऽविद्या च यथा बौद्धानां शून्यविज्ञाने अवलम्ब्य विषययति तथा शङ्कराचार्य्याणां निर्विशेषं ब्रह्म समाश्रित्य गोचरयति चेति क स्यादन्यो विशेषः । तदभावे च सदपि सर्वतो विशिष्टं समादरणीयं चैतद् भाष्यं न वैदिकसिद्धान्तार्थ-दृष्ट्या वैदिकानामुपादानमर्हति । वैदिकाः खलु वैदिकसिद्धान्तार्थ-निरूपणपरं विशिष्टं भाष्यं बहु मन्यन्ते न विशिष्टं भाष्यमात्रम् । शास्त्रारम्भवैयर्थ्यापत्तेर्वैदिकसिद्धान्तविलोपापत्तेश्च । वेदान्तशब्दार्थसंशय-निराकरणेन वैदिकसिद्धान्तप्रकाशनाय हि शास्त्रमेतदारभ्यते । स चेत् प्रणीयमानेन भाष्येण सम्यङ्निरूप्य न प्रकाश्येत तदाऽवश्यमेतच्छास्त्रार-म्भो वैयर्थ्यमापद्येत, सनातनो वैदिकसिद्धान्तश्चैकपदे विलुप्येत । न चैतादृक्षं विशिष्टं भाष्यमद्ययावत् कैश्चिदाचार्य्यैः प्राणायि येनैतच्छा-स्त्रारम्भः सार्थकः सम्पद्येत, सनातनो वैदिकसिद्धान्तश्च सर्वथा सुर-क्ष्येत न जातु द्रागित्येव विलुप्येत । तदिदं लोलोच्यमानाः कथं वयं तूष्णीमास्महे इति शास्त्रस्यास्य वैदिकसिद्धान्तार्थनिरूपणपरं विशिष्टमेकं भाष्यं विस्तरशः प्रणेतुं प्रायतिष्महि । भगवत्साहाय्येन प्रयत्नसातत्येन

च सर्वाङ्गसुन्दरं तद् यथाऽभिलाषं प्राणेष्महि। प्रणीय च वैदिकसिद्धान्तार्णवमन्दरमेतत् साक्षाद् बोधायनमुनिवद् "वेदान्तसूत्रवैदिकवृत्ति"—नाम्ना लोके प्राकाश्यमवक्ष्महि। तत्र ब्रह्मणो निमित्तत्वं प्रकृतेरुपादानत्वं तदुपादेयस्य जगतोऽस्थायुत्वेऽपि सत्यत्वं, तदुपभोक्तृणां जीवात्मनामणुस्वरूपत्वं, बन्धमोक्षयोग्यत्वं, प्रकृतिसहितानां तेषां ब्रह्माधिष्ठेयत्वं, ज्ञानेन मुक्तिरज्ञानेन बन्धो, मुक्तौ संसारानर्थहेतुलिङ्गशरीरोच्छित्तिर्ब्रह्मानन्दावाप्तिरित्यादिसिद्धान्तार्थजातं च पूर्वाभिहितसंशयविध्वंसनेन सयुक्तिपुरस्सरं वेदादिप्रमाणपुरःसरं च साधु व्याकृष्महि। शुश्रूषुजनताबोधातिशयसम्पिपादयिषया च द्वित्रेष्वधिकरणेषु परेषां चेतोऽनवधानान्यपि निपुणं प्रत्याख्यामहि। नहि ते दार्शनिकीं परिभाषामभिलक्ष्य सर्वत्र सूत्रार्थमुपवर्णयन्ति। यथा हि पूर्वमीमांसादर्शने खलु सर्वाङ्गोपदिष्टो यागः प्रकृतिरिति परिभाष्यते तद्विपरीतश्च विकृतिस्तथाऽस्मिन्नुत्तरमीमांसादर्शनेऽपि जगतः पितृचरणं ब्रह्म प्रधानमिति परिभाष्यते, तज्जननी प्रकृतिश्च गुण इति। सेयं दार्शनिकी परिभाषा। न च तामनभिलक्ष्य भ्रमतोऽपि सूत्रार्थः क्वचिदुपवर्ण्यते। सोऽयमिहापरो विशेषो भाष्यान्तरेभ्यः। तदिदं प्रेक्षन्तां प्रेक्षावन्तो विमत्सराः, अधीयतां च वैदिकसिद्धान्तादृतमतयो विचक्षणाः, स्याम वयमेतेनैव फलेग्रहिप्रयत्ना इति शम्।



# अथ वेदान्तसूत्राणां वर्णानुक्रमणिका.

## अ


| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| १ | अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके | २ | ३ | ४३ | ५३८ |
| २ | अकरणत्वाच्च न दोषस्तथा हि दर्शयति .... .... .... | २ | ४ | ११ | ५६२ |
| ३ | अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् | ३ | ३ | ३३ | ७०६ |
| ४ | अक्षरमम्बरान्तधृतेः .... .... | १ | ३ | १० | २३१ |
| ५ | अग्निहोत्रादि तु तत्कार्य्यायैव तद्दर्शनात् .... .... .... | ४ | १ | १६ | ८०६ |
| ६ | अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् | ३ | १ | ४ | ५८४ |
| ७ | अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् .... .... .... | ३ | ३ | ५५ | ७२२ |
| ८ | अङ्गित्वानुपपत्तेश्च .... .... | २ | २ | ८ | ४३४ |
| ९ | अङ्गेषु यथाश्रयभावः.... .... | ३ | ३ | ६१ | ७२९ |
| १० | अचलत्वं चापेक्ष्य .... .... | ४ | १ | ९ | ७९० |
| ११ | अणवश्च .... .... .... | २ | ४ | ७ | ५५८ |
| १२ | अणुश्च .... .... .... | २ | ४ | १३ | ५६६ |
| १३ | अत एव च नित्यत्वम् .... | १ | ३ | २९ | २७२ |
| १४ | अत एव च सर्वाण्यनु .... | ४ | २ | २ | ८११ |
| १५ | अत एव चाग्नीन्धनाद्यनपेक्षा .... | ३ | ४ | २५ | ७६५ |
| १६ | अत एव चानन्याधिपतिः .... | ४ | ४ | ९ | ८५७ |
| १७ | अत एव चोपमा सूर्य्यकादिवत् | ३ | २ | १८ | ६४४ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| १८ | अत एव न देवता भूतं च .... | १ | २ | २७ | २०० |
| १९ | अत एव प्राणः .... .... | १ | १ | २३ | १०३ |
| २० | अतः प्रबोधोऽस्मात् ... .... | ३ | २ | ८ | ६३२ |
| २१ | अतश्चायनेऽपि दक्षिणे .... | ४ | २ | २० | ८३० |
| २२ | अतस्त्वितरज्ज्यायो लिङ्गाच्च ... | ३ | ४ | ३९ | ७७८ |
| २३ | अतिदेशाच्च .... .... .... | ३ | ३ | ४६ | ७१४ |
| २४ | अतोऽनन्तेन तथाहि लिङ्गम् .... | ३ | २ | ३६ | ६५२ |
| २५ | अतोऽन्याऽपि ह्येकेषामुभयोः ... | ४ | १ | १७ | ८०७ |
| २६ | अत्ता चराचरग्रहणात् .... | १ | २ | ९ | १५२ |
| २७ | अथातो ब्रह्मजिज्ञासा .... .... | १ | १ | १ | १ |
| २८ | अदृश्यत्वादिगुणको धर्मोक्तेः .... | १ | २ | २१ | १७९ |
| २९ | अदृष्टानियमात् .... .... | २ | ३ | ५१ | ५४८ |
| ३० | अधिकं तु भेदनिर्देशात् .... | २ | १ | २२ | ४०५ |
| ३१ | अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् .... .... ... | ३ | ४ | ८ | ७४९ |
| ३२ | अधिष्ठानानुपपत्तेश्च ... .... | २ | २ | ३९ | ४७४ |
| ३३ | अध्ययनमात्रवतः .... .... | ३ | ४ | १२ | ७५३ |
| ३४ | अनभिभवं च दर्शयति .... | ३ | ४ | ३५ | ७७५ |
| ३५ | अनवस्थितेरसम्भवाच्च नेतरः.... | १ | २ | १७ | १७१ |
| ३६ | अनारब्धकार्य्ये एव तु तदवधेः | ४ | १ | १५ | ८०४ |
| ३७ | अनाविष्कुर्वन्नन्वयात् .... | ३ | ४ | ५० | ७९१ |
| ३८ | अनावृत्तिः शब्दादनावृत्तिः शब्दात् | ४ | ४ | २२ | ८७० |
| ३९ | अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् .... .... .... | ३ | ३ | ३१ | ७०२ |
| ४० | अनिष्टादिकारिणामपि च श्रुतम् | ३ | १ | १२ | ५९९ |
| ४१ | अनुकृतेस्तस्य च .... .... | १ | ३ | २२ | २६१ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| ४२ | अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् .... .... .... | २ | ३ | ४८ | ५४४ |
| ४३ | अनुपपत्तेस्तु न शारीरः .... | १ | २ | ३ | १४३ |
| ४४ | अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् .... .... | ३ | ३ | ५० | ७२६ |
| ४५ | अनुष्ठेयं बादरायणः साम्यश्रुतेः | ३ | ४ | १९ | ७५९ |
| ४६ | अनुस्मृतेर्बादरिः .... .... | १ | २ | ३० | २०४ |
| ४७ | अनुस्मृतेश्च .... .... .... | २ | २ | २५ | ४५२ |
| ४८ | अनेन सर्वगतत्वमायामशब्दादिभ्यः | ३ | २ | ३७ | ६६० |
| ४९ | अन्तर उपपत्तेः .... .... | १ | २ | १३ | १६३ |
| ५० | अन्तरा चापि तु तद्दृष्टेः .... | ३ | ४ | ३६ | ७७५ |
| ५१ | अन्तरा भूतग्रामवत् स्वात्मनः | ३ | ३ | ३५ | ७०९ |
| ५२ | अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् .... | २ | ३ | १५ | ४९६ |
| ५३ | अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् .... .... .... | १ | २ | १८ | १७१ |
| ५४ | अन्तवत्त्वमसर्वज्ञता वा .... | २ | २ | ४१ | ४७५ |
| ५५ | अन्तस्तद्धर्मोपदेशात् .... .... | १ | १ | २० | ९३ |
| ५६ | अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः | २ | २ | ३६ | ४७१ |
| ५७ | अन्यत्राभावाच्च न तृणादिवत् | २ | २ | ५ | ४३१ |
| ५८ | अन्यथात्वं शब्दादिति चेन्नाविशेषात् | ३ | ३ | ६ | ६७२ |
| ५९ | अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् | २ | २ | ९ | ४३४ |
| ६० | अन्यथाभेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् .... .... | ३ | ३ | ३६ | ७०९ |
| ६१ | अन्यभावव्यावृत्तेश्च .... .... | १ | ३ | १२ | २३९ |
| ६२ | अन्याधिष्ठितेषु पूर्ववदभिलापात् | ३ | १ | २४ | ६१२ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| ६३ | अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ... ... | १ | ४ | १८ | ३४४ |
| ६४ | अन्यार्थश्च परामर्शः .... ... | १ | ३ | २० | २६० |
| ६५ | अन्वयादिति चेत् स्यादवधारणात् | ३ | ३ | १७ | ६८४ |
| ६६ | अपरिग्रहाच्चात्यन्तानपेक्षा .... | २ | २ | १७ | ४४३ |
| ६७ | अपि च सप्त .... .... | ३ | १ | १५ | ६०२ |
| ६८ | अपि च स्मर्य्यते .... .... | १ | ३ | २३ | २६२ |
| ६९ | अपि च स्मर्य्यते .... .... | २ | ३ | ४५ | ५४२ |
| ७० | अपि च स्मर्य्यते ... .... | ३ | ४ | ३० | ७७१ |
| ७१ | अपि च स्मर्य्यते .... .... | ३ | ४ | ३७ | ७७६ |
| ७२ | अपि चैवमेके .... .... | ३ | २ | १३ | ६४० |
| ७३ | अपि संराधने प्रत्यक्षानुमानाभ्याम् | ३ | २ | २४ | ६५० |
| ७४ | अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् | २ | १ | ८ | ३८९ |
| ७५ | अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात्तत्क्रतुश्च .... | ४ | ३ | १५ | ८४६ |
| ७६ | अबाधाच्च .... ... .... | ३ | ४ | २९ | ७७१ |
| ७७ | अभावं बादरिराह ह्येवम् .... | ४ | ४ | १० | ८५८ |
| ७८ | अभिध्योपदेशाच्च .... .... | १ | ४ | २४ | ३६५ |
| ७९ | अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् .... .... .... | २ | १ | ५ | ३८२ |
| ८० | अभिव्यक्तेरित्याश्मरथ्यः .... | १ | २ | २९ | २०३ |
| ८१ | अभिसन्ध्यादिष्वपि चैवम् .... | २ | ३ | ५२ | ५४८ |
| ८२ | अभ्युपगमेऽप्यर्थाभावात् .... | २ | २ | ६ | ४३२ |
| ८३ | अम्बुवदग्रहणात्तु न तथात्वम् .... | ३ | २ | १९ | ६४५ |
| ८४ | अरूपवदेव हि तत् प्रधानत्वात् | ३ | २ | १४ | ६४१ |
| ८५ | आर्चिरादिना तत्प्रथितेः .... | ४ | ३ | १ | ८१२ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| ८६ | अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च | १ | २ | ७ | १४७ |
| ८७ | अल्पश्रुतेरिति चेत्तदुक्तम् .... | १ | ३ | २१ | २६१ |
| ८८ | अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद् हृदि हि .... .... .... | २ | ३ | २४ | ५१० |
| ८९ | अवस्थितेरिति काशकृत्स्नः .... | १ | ४ | २२ | ३४७ |
| ९० | अविभागेन तु दृष्टत्वात् .... | ४ | ४ | ४ | ८५२ |
| ९१ | अविभागो वचनात् .... | ४ | २ | १६ | ८२६ |
| ९२ | अविरोधश्चन्दनवत् .... .... | २ | ३ | २३ | ५१० |
| ९३ | अशुद्धमिति चेन्न शब्दात् ... | ३ | १ | २५ | ६१३ |
| ९४ | अश्मादिवच्च तदनुपपत्तिः .... | २ | १ | २३ | ४१० |
| ९५ | अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ... .... .... | ३ | १ | ६ | ५८८ |
| ९६ | असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा | २ | २ | २१ | ४४८ |
| ९७ | असदितिचेन्न प्रतिषेधमात्रत्वात् | २ | १ | ७ | ३८६ |
| ९८ | असद्व्यपदेशान्नेतिचेन्न धर्मान्तरेण वाक्यशेषात् .... .... | २ | १ | १७ | ३९९ |
| ९९ | असन्ततेश्चाव्यतिकरः... ... | २ | ३ | ४९ | ५४५ |
| १०० | असम्भवस्तु सतोऽनुपपत्तेः .... | २ | ३ | ९ | ४८८ |
| १०१ | असार्वत्रिकी .... .... | ३ | ४ | १० | ७५१ |
| १०२ | अस्ति तु .... .... .... | २ | ३ | २ | ४८३ |
| १०३ | अस्मिन्नस्य च तद्योगं शास्ति .... | १ | १ | १९ | ९२ |
| १०४ | अस्यैवोपपत्तेरेष ऊष्मा .... | ४ | २ | ११ | ८२२ |
| | **आ** | | | | |
| १०५ | आकाशस्तल्लिङ्गात् .... .... | १ | १ | २२ | ९९ |
| १०६ | आकाशे चाविशेषात् .... | २ | २ | २४ | ४५२ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| १०७ | आकाशोऽर्थान्तरत्वादिव्यपदेशात् | १ | ३ | ४१ | २९२ |
| १०८ | आचारदर्शनात् ... .... | ३ | ४ | ३ | ७४६ |
| १०९ | आतिवाहिकस्तल्लिङ्गात् .... | ४ | ३ | ४ | ८३६ |
| ११० | आत्मकृतेः परिणामात् .... | १ | ४ | २६ | ३६७ |
| १११ | आत्मगृहीतिरितरवदुत्तरात् .... | ३ | ३ | १६ | ६८३ |
| ११२ | आत्मनि चैवं विचित्राश्च हि .... | २ | १ | १८ | ४१५ |
| ११३ | आत्मशब्दाच्च .... .... | ३ | ३ | १५ | ६८२ |
| ११४ | आत्मा प्रकरणात् .... .... | ४ | ४ | ३ | ८५२ |
| ११५ | आत्मेति तूपगच्छन्ति ग्राहयन्ति च | ४ | १ | ३ | ७९५ |
| ११६ | आदरादलोपः .... .... | ३ | ३ | ४० | ७१५ |
| ११७ | आदित्यादिमतयश्चाङ्ग उपपत्तेः | ४ | १ | ६ | ७९७ |
| ११८ | आध्यानाय प्रयोजनाभावात् .... | ३ | ३ | १४ | ६८० |
| ११९ | आनन्दमयोऽभ्यासात् .... | १ | १ | १२ | ७२ |
| १२० | आनन्दादयः प्रधानस्य .... | ३ | ३ | ११ | ६७७ |
| १२१ | आनर्थक्यमिति चेन्न तदपेक्षत्वात् | ३ | १ | १० | ५९७ |
| १२२ | आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च | १ | ४ | १ | ३०७ |
| १२३ | आपः .... ... .... | २ | ३ | ११ | ४९० |
| १२४ | आ प्रायणात् तत्रापि हि दृष्टम् | ४ | १ | १२ | ८०० |
| १२५ | आभास एव च .... .... | २ | ३ | ५० | ५४६ |
| १२६ | आमनन्ति चैनमस्मिन् .... | १ | २ | ३२ | २०५ |
| १२७ | आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते .... .... .... | ३ | ४ | ४५ | ७८५ |
| १२८ | आवृत्तिरसकृदुपदेशात् .... | ४ | १ | १ | ७९४ |
| १२९ | आसीनः सम्भवात् .... .... | ४ | १ | ७ | ७९८ |
| १३० | आह च तन्मात्रम् .... .... | ३ | २ | १६ | ६४३ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| | **इ** | | | | |
| १३१ | इतरपरामर्शात् स इति चेन्नासम्भवात् .... .... .... | १ | ३ | १८ | २५६ |
| १३२ | इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः .... .... | २ | १ | २१ | ४०४ |
| १३३ | इतरस्याप्येवमसंश्लेषः पाते तु | ४ | १ | १४ | ८०३ |
| १३४ | इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् .... .... | २ | २ | १९ | ४४६ |
| १३५ | इतरे त्वर्थसामान्यात् .... .... | ३ | ३ | १३ | ६७९ |
| १३६ | इतरेषां चानुपलब्धेः .... .... | २ | १ | २ | ३७८ |
| १३७ | इयदामननात् .... .... | ३ | ३ | ३४ | ७०८ |
| | **ई** | | | | |
| १३८ | ईक्षतिकर्मव्यपदेशात सः .... | १ | ३ | १३ | २४२ |
| १३९ | ईक्षतेर्नाशब्दम् .... .... | १ | १ | ५ | ४९ |
| | **उ** | | | | |
| १४० | उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः | १ | ४ | २१ | ३५७ |
| १४१ | उत्क्रान्तिगत्यागतीनाम् .... | २ | ३ | १९ | ५०४ |
| १४२ | उत्तराच्चेदाविर्भूतस्वरूपस्तु .... | १ | ३ | १९ | २५७ |
| १४३ | उत्तरोत्पादे च पुर्वनिरोधात् .... | २ | २ | २० | ४४७ |
| १४४ | उत्पत्त्यसम्भवात् .... .... | २ | २ | ४२ | ४७६ |
| १४५ | उदासीनानामपि चैवं सिद्धिः ... | २ | २ | २७ | ४५५ |
| १४६ | उपदेशभेदान्नेतिचेन्नोभयस्मिन्नप्यविरोधात् .... .... | १ | १ | २७ | ११९ |
| १४७ | उपादानात् .... .... | २ | ३ | ३५ | ५२६ |
| १४८ | उपपत्तेश्च .... .... .... | ३ | २ | ३५ | ६५८ |
| १४९ | उपपद्यते चाप्युपलभ्यते च .... | २ | १ | ३६ | ४२२ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| १५० | उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् | ३ | ३ | ३० | ७०१ |
| १५१ | उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम् | ३ | ४ | ४२ | ७८१ |
| १५२ | उपमर्दं च | ३ | ४ | १६ | ७५६ |
| १५३ | उपलब्धिवदनियमः | २ | ३ | ३७ | ५२७ |
| १५४ | उपसंहारदर्शनान्नेतिचेन्न क्षीरवद्धि | २ | १ | २४ | ४११ |
| १५५ | उपसंहारोऽर्थाभेदाद् विधिशेषवत् समाने च | ३ | ३ | ५ | ६७१ |
| १५६ | उपस्थितेऽतस्तद्वचनात् | ३ | ३ | ४१ | ७१७ |
| १५७ | उभयथा च दोषात् | २ | २ | १६ | ४४२ |
| १५८ | उभयथा च दोषात् | २ | २ | २३ | ४५१ |
| १५९ | उभयथाऽपि न कर्मातस्तदभावः | २ | २ | १२ | ४३८ |
| १६० | उभयव्यपदेशात्त्वहिकुण्डलवत् | ३ | २ | २७ | ६५३ |
| १६१ | उभयव्यामोहात् तत्सिद्धिः | ४ | ३ | ५ | ८३८ |
| | ऊ | | | | |
| १६२ | ऊर्ध्वरेतस्सु च शब्दे हि | ३ | ४ | १७ | ७५६ |
| | ए | | | | |
| १६३ | एक आत्मनः शरीरे भावात् | ३ | ३ | ५३ | ७३० |
| १६४ | एतेन मातरिश्वा व्याख्यातः | २ | ३ | ८ | ४८७ |
| १६५ | एतेन योगः प्रत्युक्तः | २ | १ | ३ | ३७९ |
| १६६ | एतेन शिष्टापरिग्रहा अपि व्याख्याताः | २ | १ | १२ | ३९३ |
| १६७ | एतेन सर्वे व्याख्याता व्याख्याताः | १ | ४ | २८ | ३७० |
| १६८ | एवं चात्माकार्त्स्न्यम् | २ | २ | ३४ | ४६९ |
| १६९ | एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः | ३ | ४ | ५२ | ७९३ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| १७० | एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः .... .... .... | ४ | ४ | ७ | ८५५ |
| | **ऐ** | | | | |
| १७१ | ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् | ३ | ४ | ५१ | ७९२ |
| | **क** | | | | |
| १७२ | करणवच्चेन्न भोगादिभ्यः .... | २ | २ | ४० | ४७४ |
| १७३ | कर्ता शास्त्रार्थवत्त्वात् .... | २ | ३ | ३३ | ५२४ |
| १७४ | कर्मकर्तृव्यपदेशाच्च .... .... | १ | २ | ४ | १४३ |
| १७५ | कर्मणि विरोध इति चेन्नानेकप्रतिपत्तेर्दर्शनात् .... .... .... | १ | ३ | २७ | २६७ |
| १७६ | कल्पनोपदेशाच्च मध्वादिवदविरोधः | १ | ४ | १० | ३२३ |
| १७७ | कामकारेण चैके .... .... | ३ | ४ | १५ | ७५५ |
| १७८ | कामाच्च नानुमानापेक्षा .... | १ | १ | १८ | ९१ |
| १७९ | कामादीतरत्र तत्र चायतनादिभ्यः | ३ | ३ | ३९ | ७१४ |
| १८० | काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् .... .... | ३ | ३ | ६० | ७३९ |
| १८१ | कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः .... .... ... | १ | ४ | १४ | ३२९ |
| १८२ | कार्य्यं बादरिरस्य गत्युपपत्तेः .... | ४ | ३ | ७ | ८४१ |
| १८३ | कार्य्याख्यानादपूर्वम् .... .... | ३ | ३ | १८ | ६८६ |
| १८४ | कार्य्यात्यये तदध्यक्षेण सहातःपरमभिधानात् .... .... | ४ | ३ | १० | ८४४ |
| १८५ | कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः .... .... | २ | ३ | ४२ | ५३४ |
| १८६ | कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च .... .... | ३ | १ | ८ | ५९२ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| १८७ | कृत्स्नभावात्तु गृहिणोपसंहारः .... | ३ | ४ | ४८ | ७९० |
| १८८ | कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा | २ | १ | २६ | ४१३ |
| १८९ | क्षणिकत्वाच्च .... .... .... | २ | २ | ३१ | ४६२ |
| १९० | क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् .... .... .... | १ | ३ | ३५ | २८४ |
| | **ग** | | | | |
| १९१ | गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च | १ | ३ | १५ | २५३ |
| १९२ | गतिसामान्यात् ... .... | १ | १ | १० | ७२ |
| १९३ | गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः .... .... .... | ३ | ३ | २९ | ६९९ |
| १९४ | गुणसाधारण्यश्रुतेश्च .... .... | ३ | ३ | ६४ | ७४१ |
| १९५ | गुणाद्वा लोकवत् .... .... | २ | ३ | २५ | ५११ |
| १९६ | गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् | १ | २ | ११ | १५६ |
| १९७ | गौणश्चेन्नात्मशब्दात् .... .... | १ | १ | ६ | ५३ |
| १९८ | गौण्यसम्भवात् .... .... | २ | ३ | ३ | ४८३ |
| १९९ | गौण्यसम्भवात् .... .... | २ | ४ | २ | ५५३ |
| | **च** | | | | |
| २०० | चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः | २ | ४ | १० | ५६१ |
| २०१ | चमसवदविशेषात् .... .... | १ | ४ | ८ | ३१८ |
| २०२ | चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः... .... .... | ३ | १ | ९ | ५९६ |
| २०३ | चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् .... | २ | ३ | १६ | ४९७ |
| २०४ | चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः .... .... .... | ४ | ४ | ६ | ८५४ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| | **छ** | | | | |
| २०५ | छन्दत उभयाविरोधात् .... | ३ | ३ | २८ | ६९९ |
| २०६ | छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात् तथाहि दर्शनम् .... | १ | १ | २५ | ११४ |
| | **ज** | | | | |
| २०७ | जगद्वाचित्वात् .... .... | १ | ४ | १६ | ३३४ |
| २०८ | जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च .... .... .... | ४ | ४ | १७ | ८६५ |
| २०९ | जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् | १ | १ | ३१ | १३० |
| २१० | ज्ञेयत्वावचनाच्च .... .... | १ | १ | ४ | ३१२ |
| २११ | ज्ञोऽत एव .... .... .... | २ | ३ | १८ | ५०० |
| २१२ | ज्योतिराद्यधिष्ठानं तु तदामननात् | २ | ४ | १४ | ५६८ |
| २१३ | ज्योतिरुपक्रमा तु तथा ह्यधीयत एके | १ | ४ | ९ | ३२० |
| २१४ | ज्योतिर्दर्शनात् .... .... | १ | ३ | ४० | २९१ |
| २१५ | ज्योतिश्चरणाभिधानात् .... | १ | १ | २४ | १०७ |
| २१६ | ज्योतिषि भावाच्च .... .... | १ | ३ | ३२ | २७६ |
| २१७ | ज्योतिषैकेषामसत्यन्ने .... | १ | ४ | १३ | ३२८ |
| | **त** | | | | |
| २१८ | त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् | २ | ४ | १७ | ५७२ |
| २१९ | तच्छ्रुतेः .... .... .... | ३ | ४ | ४ | ७४६ |
| २२० | तडितोऽधि वरुणः सम्बन्धात्.... | ४ | ३ | ३ | ८३४ |
| २२१ | तत्तु समन्वयात् .... ... | १ | १ | ४ | ४१ |
| २२२ | तत्साभाव्यापत्तिरुपपत्तेः .... | ३ | १ | २२ | ६१० |
| २२३ | तत्पूर्वकत्वाद् वाचः .... .... | २ | ४ | ४ | ५५४ |
| २२४ | तत् प्राक् श्रुतेश्च .... ... | २ | ४ | ३ | ५५३ |

| सूत्रसंख्या | सूत्राणि | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| २२५ | तत्रापि च तद्व्यापारादविरोधः | ३ | १ | १६ | ६०३ |
| २२६ | तथा च दर्शयति .... .... | २ | ३ | २७ | ५१४ |
| २२७ | तथा चैकवाक्यतोपबन्धात् .... | ३ | ४ | २४ | ७६५ |
| २२८ | तथाऽन्यप्रतिषेधात् .... .... | ३ | २ | ३६ | ६५९ |
| २२९ | तथा प्राणाः .... .... ... | २ | ४ | १ | ५५१ |
| २३० | तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् .... | ४ | १ | १३ | ८०१ |
| २३१ | तदधीनत्वादर्थवत् .... .... | १ | ४ | ३ | ३१२ |
| २३२ | तदनन्यत्वमारम्भणशब्दादिभ्यः | २ | १ | १४ | ३९५ |
| २३३ | तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ... | ३ | १ | १ | ५८० |
| २३४ | तदभावनिर्धारणे च प्रवृत्तेः .... | १ | ३ | ३७ | २८६ |
| २३५ | तदभावो नाडीषु तच्छ्रुतेरात्मनि च | ३ | २ | ७ | ६२८ |
| २३६ | तदभिध्यानादेव तु तल्लिङ्गात् सः | २ | ३ | १३ | ४९२ |
| २३७ | तदव्यक्तमाह हि .... ... | ३ | २ | २३ | ६५० |
| २३८ | तदाऽपीतेः संसारव्यपदेशात् .... | ४ | २ | ८ | ८१७ |
| २३९ | तदुपर्य्यपि बादरायणः सम्भवात् | १ | ३ | २६ | २६५ |
| २४० | तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया | ४ | २ | १७ | ८२६ |
| २४१ | तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् | २ | ३ | २९ | ५१५ |
| २४२ | तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः .... .... | ३ | ४ | ४० | ७७९ |
| २४३ | तद्वतो विधानात् .. ... | ३ | ४ | ६ | ७४७ |
| २४४ | तद्धेतुव्यपदेशाच्च ... ... | १ | १ | १४ | ८७ |

| सूत्रसंख्या सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|
| २४५ तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् .... ... | ३ | ३ | ४२ | ७१८ |
| २४६ तन्निष्ठस्य मोक्षोपदेशात् ... | १ | १ | ७ | ५६ |
| २४७ तन्मनः प्राण उत्तरात् ... | ४ | २ | ३ | ८१२ |
| २४८ तन्वभावे सन्ध्यवदुपपत्तेः ... | ४ | ४ | १३ | ८६२ |
| २४९ तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः .... | २ | १ | ११ | ३८९ |
| २५० तस्य च नित्यत्वात् .... ... | २ | ४ | १६ | ५७१ |
| २५१ तानि परे तथा ह्याह ... .... | ४ | २ | १५ | ८२५ |
| २५२ तुल्यं तु दर्शनम् .... .... | ३ | ४ | ९ | ७५० |
| २५३ तृतीयशब्दावरोधः संशोकजस्य | ३ | १ | २१ | ६०८ |
| २५४ तेजोऽतस्तथा ह्याह .... .... | २ | ३ | १० | ४८९ |
| २५५ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च | १ | ४ | ६ | ३१५ |
| २५६ त्र्यात्मकत्वात्तु भूयस्त्वात् .... | ३ | १ | २ | ५८३ |
| **द** | | | | |
| २५७ दर्शनाच्च .... .... .... | ३ | १ | २० | ६०७ |
| २५८ दर्शनाच्च .... .... .... | ३ | २ | २१ | ६४६ |
| २५९ दर्शनाच्च .... .... .... | ३ | ३ | ४८ | ७२५ |
| २६० दर्शनाच्च .... .... ... | ३ | ३ | ६६ | ७४३ |
| २६१ दर्शनाच्च .... .... .... | ४ | ३ | १३ | ८४५ |
| २६२ दर्शयतश्चैवं प्रत्यक्षानुमाने .... | ४ | ४ | २० | ८६७ |
| २६३ दर्शयति च .... .... .... | ३ | ३ | ४ | ६६९ |
| २६४ दर्शयति च ... .... .... | ३ | ३ | २२ | ६८९ |
| २६५ दर्शयति चाथो अपि स्मर्यते... | ३ | २ | १७ | ६४३ |
| २६६ दहर उत्तरेभ्यः .... .... | १ | ३ | १४ | २४५ |
| २६७ दृश्यते तु .... .... .... | २ | १ | ६ | ३८४ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| २६८ | देवादिवदपि लोके .... .... | २ | १ | २५ | ४१३ |
| २६९ | देहयोगाद्वा सोऽपि ... .... | ३ | ४ | ६ | ६२७ |
| २७० | द्युभ्वाद्यायतनं स्वशब्दात् .... | १ | ३ | १ | २०७ |
| २७१ | द्वादशाहवदुभयविधं बादरायणः | ४ | ४ | १२ | ८६० |

घ

| | | | | | |
|---|---|---|---|---|---|
| २७२ | धर्मं जैमिनिरत एव .... .... | ३ | २ | ४ | ६६२ |
| २७३ | धर्मोपपत्तेश्च .... .... .... | १ | ३ | ९ | २२९ |
| २७४ | धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः | १ | ३ | १६ | २५४ |
| २७५ | ध्यानाच्च .... .... .... | ४ | १ | ८ | ७९८ |

न

| | | | | | |
|---|---|---|---|---|---|
| २७६ | न कर्माविभागादिति चेन्नानादित्वात् | २ | १ | ३५ | ४२२ |
| २७७ | न च कर्तुः करणम् ... .... | २ | २ | ४३ | ४७९ |
| २७८ | न च कार्ये प्रतिपत्त्यभिसन्धिः | ४ | ३ | १४ | ८४६ |
| २७९ | न च पर्य्यायादप्यविरोधो विकारादिभ्यः .... .... .... | २ | २ | ३ | ४६९ |
| २८० | न च स्मार्तमतद्धर्माभिलापात् | १ | २ | १९ | १७६ |
| २८१ | न तु दृष्टान्तभावात् ... .... | २ | १ | ९ | ३८७ |
| २८२ | न तृतीये तथोपलब्धेः .... | ३ | १ | १८ | ६०३ |
| २८३ | न प्रतीके न हि सः .... | ४ | १ | ४ | ७९६ |
| २८४ | न प्रयोजनवत्त्वात् .... .... | २ | १ | ३२ | ४१८ |
| २८५ | न भावोऽनुपलब्धेः .... | २ | २ | ३० | ४६१ |
| २८६ | न भेदादिति चेन्न प्रत्येकमतद्वचनात् | ३ | २ | १२ | ६३७ |
| २८७ | न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् .... | १ | १ | २९ | १२३ |
| २८८ | न वा तत्सहभावाश्रुतेः .... | ३ | ३ | ६५ | ७४२ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| २८९ | न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ... .... ... | ३ | ३ | ७ | ६७४ |
| २९० | न वायुक्रिये पृथगुपदेशात .... | २ | ४ | ९ | ५६१ |
| २९१ | न वा विशेषात् .... .... | ३ | ३ | ११ | ६८८ |
| २९२ | न वियदश्रुतेः .... ... | २ | ३ | १ | ४८२ |
| २९३ | न विलक्षणत्वादस्य तथात्वं च शब्दात् | २ | १ | ४ | ३८१ |
| २९४ | न संख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च .... .... .... | १ | ४ | ११ | ३२५ |
| २९५ | न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः .... .... .... | ३ | ३ | ५१ | ७२८ |
| २९६ | न स्थानतोऽपि परस्योभयलिङ्गं हि सर्वत्र .... .... .... | ३ | २ | ११ | ६३५ |
| २९७ | नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् | २ | ३ | २१ | ५०८ |
| २९८ | नातिचिरेण विशेषात् .... | ३ | १ | २१ | ६१० |
| २९९ | नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः | २ | ३ | १७ | ४९९ |
| ३०० | नाधिकारिकमपि पतनानुमानात् तदयोगात् .... .... .... | ३ | ४ | ४१ | ७८१ |
| ३०१ | नाना शब्दादिभेदात् .... | ३ | ३ | ५८ | ७३८ |
| ३०२ | नानुमानमतच्छब्दात् .... .... | १ | ३ | ३ | २१५ |
| ३०३ | नाभाव उपलब्धेः .... .... | २ | २ | २८ | ४५७ |
| ३०४ | नाविशेषात् .... .... .... | ३ | ४ | १३ | ७५४ |
| ३०५ | नासतोऽदृष्टत्वात् .... .... | २ | २ | २६ | ४५४ |
| ३०६ | नित्यमेव च भावात् .... .... | २ | २ | १४ | ४४० |
| ३०७ | नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा .... .... | २ | ३ | ३२ | ५२२ |
| ३०८ | नियमाच्च .... .... .... | ३ | ४ | ७ | ७४८ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| ३०९ | निर्मातारं चैके पुत्रादयश्च .... | ३ | २ | २ | ६२० |
| ३१० | निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद् दर्शयति च .... | ४ | २ | १९ | ८२८ |
| ३११ | नेतरोऽनुपपत्तेः .... .... | १ | १ | १६ | ९० |
| ३१२ | नैकस्मिन् दर्शयतो हि .... | ४ | २ | ६ | ८१४ |
| ३१३ | नैकस्मिन्नसम्भवात् .... .... | २ | २ | ३३ | ४६३ |
| ३१४ | नोपमर्देनातः .... .... ... | ४ | २ | १० | ८२१ |
| | प | | | | |
| ३१५ | पञ्चवृत्तिर्मनोवद् व्यपदिश्यते .... | २ | ४ | १२ | ५६३ |
| ३१६ | पटवच्च .... . .... | २ | १ | १९ | ४०३ |
| ३१७ | पत्यादिशब्देभ्यश्च .... .... | १ | ३ | ४३ | ३०५ |
| ३१८ | पत्युरसामञ्जस्यात् .... .... | २ | २ | ३७ | ४७१ |
| ३१९ | पयोऽम्बुवच्चेत्तत्रापि .... .... | २ | २ | ३ | ४२८ |
| ३२० | परं जैमिनिर्मुख्यत्वात् .... | ४ | ३ | १२ | ८४५ |
| ३२१ | परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः .... .... .... | ३ | २ | ३१ | ६५५ |
| ३२२ | परात्तु तच्छ्रुतेः .... .... | २ | ३ | ४१ | ५३२ |
| ३२३ | पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ .... .... | ३ | २ | ५ | ६२७ |
| ३२४ | परामर्शं जैमिनिरचोदना चापवदति हि.... ... .... | ३ | ४ | १८ | ७५८ |
| ३२५ | परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः .... ... | ३ | ३ | ५५ | ७२९ |
| ३२६ | पारिप्लवार्था इति चेन्न विशेषितत्वात् | ३ | ४ | २३ | ७६३ |
| ३२७ | पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् | २ | ३ | ३१ | ५२० |
| ३२८ | पुरुषविद्यायामिव चेतरेषामनाम्नानात् | ३ | ३ | २४ | ६९२ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| ३२९ | पुरुषार्थोऽतःशब्दादिति बादरायणः | ३ | ४ | १ | ७४४ |
| ३३० | पुरुषाश्मवदिति चेत्तथापि .... | २ | २ | ७ | ४३२ |
| ३३१ | पूर्वं तु बादरायणो हेतुव्यपदेशात् | ३ | २ | ४१ | ६६३ |
| ३३२ | पूर्ववद्वा .... .... .... | ३ | २ | २९ | ६५४ |
| ३३३ | पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् .... .... | ३ | ३ | ४५ | ७२२ |
| ३३४ | पृथगुपदेशात्.... .... .... | २ | ३ | २८ | ५१४ |
| ३३५ | पृथिव्यधिकाररूपशब्दान्तरेभ्यः | २ | ३ | १२ | ४९० |
| ३३६ | प्रकरणाच्च .... .... .... | १ | २ | १० | १५५ |
| ३३७ | प्रकरणात् .... .... .... | १ | ३ | ६ | २१७ |
| ३३८ | प्रकाशवच्चावैयर्थ्यात् .... .... | ३ | २ | १५ | ६४२ |
| ३३९ | प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्... .... .... | ३ | २ | २४ | ६५१ |
| ३४० | प्रकाशादिवन्नैवं परः ... .... | २ | ३ | ४६ | ५४३ |
| ३४१ | प्रकाशाश्रयवद्वा तेजस्त्वात् .... | ३ | २ | २८ | ६५३ |
| ३४२ | प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् | १ | ४ | २३ | ३५९ |
| ३४३ | प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः .... .... | ३ | २ | २२ | ६४७ |
| ३४४ | प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः .... | १ | ४ | २० | ३५६ |
| ३४५ | प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः | २ | ३ | ६ | ४८५ |
| ३४६ | प्रतिषेधाच्च .... .... .... | ३ | २ | ३० | ६५४ |
| ३४७ | प्रतिषेधादिति चेन्न शारीरात् .... | ४ | २ | १२ | ८२२ |
| ३४८ | प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् .... ... | २ | २ | २२ | ४४९ |
| ३४९ | प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः .... ... | ४ | ४ | १८ | ८६५ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| ३५० | प्रथमेऽश्रवणादितिचेन्न ता एव ह्युपपत्तेः .... .... .... | ३ | १ | ५ | ५८६ |
| ३५१ | प्रदानवदेव तदुक्तम् ... ... | ३ | ३ | ४३ | ७२० |
| ३५२ | प्रदीपवदावेशस्तथा हि दर्शयति | ४ | ४ | १५ | ८६२ |
| ३५३ | प्रदेशादिति चेन्नाभावात् .... | २ | ३ | ५३ | ५४९ |
| ३५४ | प्रवृत्तेश्च .... .... ... | २ | २ | २ | ४२८ |
| ३५५ | प्रसिद्धेश्च .... .... ... | १ | ३ | १७ | २५५ |
| ३५६ | प्राणः कम्पनात् .... .... | १ | ३ | ३९ | २८९ |
| ३५७ | प्राणगतेश्च .... .... .... | ३ | १ | ३ | ५८४ |
| ३५८ | प्राणभृच्च ... .... .... | १ | ३ | ४ | २१५ |
| ३५९ | प्राणवता शब्दात् .... .... | २ | ४ | १५ | ५७० |
| ३६० | प्राणस्तथाऽनुगमात् .... .... | १ | १ | २८ | १२० |
| ३६१ | प्राणादयो वाक्यशेषात् .... | १ | ४ | १२ | ३२६ |
| ३६२ | प्रियाशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे .... .... | ३ | ३ | १२ | ६७८ |
| | **फ** | | | | |
| ३६३ | फलमत उपपत्तेः .... .... | ३ | २ | ३८ | ६६१ |
| | **ब** | | | | |
| ३६४ | बहिस्तूभयथाऽपि स्मृतेराचाराच्च | ३ | ४ | ४३ | ७८३ |
| ३६५ | बुद्ध्यर्थः पादवत् .... .... | २ | ३ | ३३ | ६५७ |
| ३६६ | ब्रह्मदृष्टिरुत्कर्षात् .... .... | ४ | १ | ५ | ७९६ |
| ३६७ | ब्राह्मेण जैमिनिरुपन्यासादिभ्यः | ४ | ४ | ५ | ८५३ |
| | **भ** | | | | |
| ३६८ | भाक्तं वाऽनात्मवित्त्वात् तथाहि दर्शयति .... .... | ३ | १ | ७ | ५९० |
| ३६९ | भावं जैमिनिर्विकल्पामननात् | ४ | ४ | ११ | ८५९ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| ३७० | भावं तु बादरायणोऽस्ति हि .... | १ | ३ | ३३ | २७८ |
| ३७१ | भावशब्दाच्च .... .... .... | ३ | ४ | २२ | ७६२ |
| ३७२ | भावे चोपलब्धेः .... .... | २ | १ | १५ | ३९८ |
| ३७३ | भावे जाग्रद्वत् .... .... | ४ | ४ | १४ | ८६२ |
| ३७४ | भूतादिपादव्यपदेशोपपत्तेश्चैवम् | १ | १ | २६ | ११७ |
| ३७५ | भूतेषु तच्छ्रुतेः .... .... | ४ | २ | ५ | ८१३ |
| ३७६ | भूमा सम्प्रसादादध्युपदेशात् .... | १ | ३ | ८ | २१९ |
| ३७७ | भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति .... .... .... | ३ | ३ | ५७ | ७३५ |
| ३७८ | भेदव्यपदेशाच्च .... .... | १ | १ | १७ | ९० |
| ३७९ | भेदव्यपदेशाच्चान्यः .... .... | १ | १ | २१ | ९० |
| ३८० | भेदव्यपदेशात् .... .... | १ | ३ | ५ | २१६ |
| ३८१ | भेदश्रुतेः .... .... .... | २ | ४ | १८ | ५७३ |
| ३८२ | भेदान्नेति चेन्नैकस्यामपि .... | ३ | ३ | २ | ६६६ |
| ३८३ | भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् | २ | १ | १३ | ३९४ |
| ३८४ | भोगमात्रसाम्यलिङ्गाच्च .... | ४ | ४ | २१ | ८६८ |
| ३८५ | भोगेन त्वितरे क्षपयित्वा सम्पद्यते | ४ | १ | १९ | ८०९ |


## म


| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| ३८६ | मध्वादिष्वसम्भवादनधिकारं जैमिनिः .... .... .... | १ | ३ | ३१ | २७५ |
| ३८७ | मन्त्रवर्णाच्च .... .... .... | २ | ३ | ४४ | ५४२ |
| ३८८ | मन्त्रादिवद्वाऽविरोधः .... .... | ३ | ३ | ५६ | ७३४ |
| ३८९ | महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् | २ | २ | ११ | ४३६ |
| ३९० | महद्वच्च .... .... .... | १ | ४ | ७ | ३१८ |
| ३९१ | मांसादि भौमं यथाशब्दमितरयोश्च | २ | ४ | २१ | ५०८ |
| ३९२ | मान्त्रवर्णिकमेव च गीयते .... | १ | १ | १५ | ८८ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| ३९३ | मायामात्रं तु कार्त्स्न्येनानभिव्य-क्तस्वरूपत्वात् .... .... .... | ३ | २ | ३ | ६२१ |
| ३९४ | मुक्तः प्रतिज्ञानात् .... .... | ४ | ४ | २ | ८५७ |
| ३९५ | मुक्तोपसृप्यव्यपदेशात् .... | १ | ३ | २ | २१३ |
| ३९६ | मुग्धेऽर्द्धसम्पत्तिः परिशेषात् .... | ३ | २ | १० | ६३४ |
| ३९७ | मौनवदितरेषामप्युपदेशात् .... | ३ | ४ | ४९ | ७९० |
| | **य** | | | | |
| ३९८ | यत्रैकाग्रता तत्राविशेषात् .... | ४ | १ | ११ | ८०० |
| ३९९ | यथा च तक्षोभयथा .... .... | २ | ३ | ४० | ५३० |
| ४०० | यथा च प्राणादि .... ... | २ | १ | २० | ४०३ |
| ४०१ | यदेव विद्ययेति हि .... .... | ४ | १ | १८ | ८०८ |
| ४०२ | यावदधिकारमवस्थितिराधिकारिका-णाम् .... .... .... .... | ३ | ३ | ३२ | ७०४ |
| ४०३ | यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् | २ | ३ | ३० | ५१७ |
| ४०४ | यावद्विकारं तु विभागो लोकवत् | २ | ३ | ७ | ४८६ |
| ४०५ | युक्तेः शब्दान्तराच्च .... .... | २ | १ | १८ | ४०१ |
| ४०६ | योगिनः प्रति च स्मर्य्यते स्मार्ते चैते | ४ | २ | २१ | ८३१ |
| ४०७ | योनिश्च हि गीयते .... .... | १ | ४ | २७ | ३६८ |
| ४०८ | योनेः शरीरम .... .... | ३ | १ | २७ | ६१७ |
| | **र** | | | | |
| ४०९ | रचनानुपपत्तेश्च नानुमानम् .... | २ | २ | १ | ४२६ |
| ४१० | रश्म्यनुसारी .... .... .... | ४ | २ | १८ | ८२८ |
| ४११ | रूपादिमत्त्वाच्च विपर्य्ययो दर्शनात् | २ | २ | १५ | ४४१ |
| ४१२ | रूपोपन्यासाच्च .... .... | १ | २ | २३ | १८८ |
| ४१३ | रेतःसिग्योगोऽथ .... .... | ३ | १ | २६ | ६१६ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| | **ल** | | | | |
| ४१४ | लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि | ३ | ३ | ४४ | ७२१ |
| ४१५ | लिङ्गाच्च .... .... .... | ४ | १ | २ | ७९४ |
| ४१६ | लोकवत्तु लीलाकैवल्यम् .... | २ | १ | ३३ | ४१९ |
| | **व** | | | | |
| ४१७ | वदतीतिचेन्न प्राज्ञो हि प्रकरणात् | १ | ४ | ५ | ३१३ |
| ४१८ | वाक्यान्वयात् .... .... | १ | ४ | १९ | ३४६ |
| ४१९ | वाङ्मनसि दर्शनाच्छब्दाच्च .... | ४ | २ | १ | ८१० |
| ४२० | वायुमब्दादविशेषविशेषाभ्याम् | ४ | ३ | २ | ८३३ |
| ४२१ | विकरणत्वान्नेति चेत् तदुक्तम् | २ | १ | ३१ | ४१७ |
| ४२२ | विकल्पोऽविशिष्टफलत्वात् .... | ३ | ३ | ५९ | ७३८ |
| ४२३ | विकारावर्ति च तथाहि स्थितिमाह | ४ | ४ | १९ | ८६७ |
| ४२४ | विकारशब्दान्नेति चेन्न प्राचुर्य्यात् | १ | १ | १३ | ८३ |
| ४२५ | विज्ञानादिभावे वा तदप्रतिषेधः | २ | २ | ४४ | ४८० |
| ४२६ | विद्याकर्मणोरिति तु प्रकृतत्वात् | ३ | १ | १७ | ६०४ |
| ४२७ | विद्यैव तु निर्धारणात् .... | ३ | ३ | ४७ | ७२४ |
| ४२८ | विधिर्वा धारणवत् .... .... | ३ | ४ | २० | ७६१ |
| ४२९ | विपर्य्ययेण तु क्रमोऽत उपपद्यते च | २ | ३ | १४ | ४९४ |
| ४३० | विप्रतिषेधाच्च.... .... .... | २ | २ | ४५ | ४८१ |
| ४३१ | विप्रतिषेधाच्चासमञ्जसम् .... | २ | २ | १० | ४३५ |
| ४३२ | विभागः शतवत् .... .... | ३ | ४ | ११ | ७५१ |
| ४३३ | विवक्षितगुणोपपत्तेश्च .... | १ | २ | २ | १४१ |
| ४३४ | विशेषं च दर्शयति .... .... | ४ | ३ | १६ | ८४८ |
| ४३५ | विशेषणभेदव्यपदेशाभ्यां च नेतरौ | १ | २ | २२ | १८७ |
| ४३६ | विशेषणाच्च .... .... .... | १ | २ | १२ | १६१ |
| ४३७ | विशेषानुग्रहश्च .... .... | ३ | ४ | ३८ | ७७७ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| ४३८ | विशेषितत्वाच्च .... .... | ४ | ३ | ८ | ८४२ |
| ४३९ | विहारोपदेशात् .... .... | २ | ३ | ३४ | ५२५ |
| ४४० | विहितत्वाच्चाश्रमकर्मापि .... | ३ | ४ | ३२ | ७७३ |
| ४४१ | वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् .... .... .... | ३ | २ | २० | ६४६ |
| ४४२ | वेधाद्यर्थभेदात् .... .... | ३ | ३ | २५ | ६९२ |
| ४४३ | वैद्युतेनैव ततस्तच्छ्रुतेः .... | ४ | ३ | ६ | ८३९ |
| ४४४ | वैधर्म्याच्च न स्वप्नादिवत् .... | २ | २ | २९ | ४५९ |
| ४४५ | वैलक्षण्याच्च .... .... .... | २ | ४ | १९ | ५७४ |
| ४४६ | वैशेष्यात्तु तद्वादस्तद्वादः .... | २ | ४ | २२ | ५७८ |
| ४४७ | वैश्वानरः साधारणशब्दविशेषात् | १ | २ | २४ | १९० |
| ४४८ | वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति .... .... .... | २ | १ | ३४ | ४२० |
| ४४९ | व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् .... .... .... | ३ | ३ | ५४ | ७३१ |
| ४५० | व्यतिरेकानवस्थितेश्चानपेक्षत्वात् | २ | २ | ४ | ४२८ |
| ४५१ | व्यतिरेको गन्धवत् .... .... | २ | ३ | २६ | ५१२ |
| ४५२ | व्यतिहारो विशिंषन्ति हीतरवत् | ३ | ३ | ३७ | ७१२ |
| ४५३ | व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः .... .... .... | २ | ३ | ३६ | ५२६ |
| ४५४ | व्याप्तेश्च समञ्जसम् .... .... | ३ | ३ | ९ | ६७६ |
| | **श** | | | | |
| ४५५ | शक्तिविपर्य्ययात् .... .... | २ | ३ | ३८ | ५२८ |
| ४५६ | शब्द इति चेन्नातःप्रभवात् प्रत्यक्षानुमानाभ्याम् .... .... .... | १ | ३ | २८ | २७० |
| ४५७ | शब्दविशेषात् .... .... | १ | २ | ५ | १४४ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| ४५८ | शब्दश्चातोऽकामकारे .... .... | ३ | ४ | ३१ | ७७२ |
| ४५९ | शब्दाच्च .... .... .... | २ | ३ | ४ | ४८४ |
| ४६० | शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते.... .... | १ | २ | २६ | १९६ |
| ४६१ | शब्दादेव प्रमितः .... .... | १ | ३ | २४ | २६२ |
| ४६२ | शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् | ३ | ४ | २७ | ७६७ |
| ४६३ | शारीरश्चोभयेऽपि हि भेदेनैनमधीयते | १ | २ | २० | १७७ |
| ४६४ | शास्त्रदृष्ट्या तूपदेशो वामदेववत् | १ | १ | ३० | १२७ |
| ४६५ | शास्त्रयोनित्वात् ... .... | १ | १ | ३ | ४० |
| ४६६ | शिष्टेश्च .... .... .... | ३ | ३ | ६२ | ७४० |
| ४६७ | शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि .... .... | १ | ३ | ३४ | २८२ |
| ४६८ | शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः .... .... | ३ | ४ | २ | ७४५ |
| ४६९ | श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च .... .... .... .... | १ | ३ | ३८ | २८८ |
| ४७० | श्रुतत्वाच्च .... .... .... | १ | १ | ११ | ७२ |
| ४७१ | श्रुतत्वाच्च .... .... .... | ३ | २ | ३९ | ६६१ |
| ४७२ | श्रुतेश्च .... .... .... | ३ | ४ | ४६ | ७८६ |
| ४७३ | श्रुतेस्तु शब्दमूलत्वात् .... | २ | १ | २७ | ४१४ |
| ४७४ | श्रुतोपनिषत्कगत्यभिधानाच्च .... | १ | २ | १६ | १६९ |
| ४७५ | श्रुत्यादिबलीयस्त्वाच्च न बाधः | ३ | ३ | ४९ | ७२६ |
| ४७६ | श्रेष्ठश्च .... .... .... | २ | ४ | ८ | ५५९ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| | **स** | | | | |
| ४७७ | संज्ञातश्चेत्तदुक्तमस्ति तु तदपि.... | ३ | ३ | ८ | ६७५ |
| ४७८ | संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् .... .... .... | २ | ४ | २० | ५७५ |
| ४७९ | संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् .... | ३ | १ | १३ | ६०० |
| ४८० | संस्कारपरामर्शात् तदभावाभिलापाच्च | १ | ३ | ३६ | २८५ |
| ४८१ | स एव तु कर्मानुस्मृतिशब्दविधिभ्यः .... .... .... | ३ | २ | ९ | ६३३ |
| ४८२ | सङ्कल्पादेव तु तच्छ्रुतेः .... | ४ | ४ | ८ | ८५७ |
| ४८३ | सत्त्वाच्चावरस्य .... ... | २ | १ | १६ | ३९९ |
| ४८४ | सन्ध्ये सृष्टिराह हि .... .... | ३ | २ | १ | ६१९ |
| ४८५ | सप्त गतेर्विशेषितत्वाच्च .... | २ | ४ | ५ | ५५५ |
| ४८६ | समन्वारम्भणात् .... .... | ३ | ४ | ५ | ७४७ |
| ४८७ | समवायाभ्युपगमाच्च साम्यादनवस्थितेः .... .... .... | २ | २ | १३ | ४३९ |
| ४८८ | समाकर्षात् .... .... .... | १ | ४ | १५ | ३३२ |
| ४८९ | समाध्यभावाच्च .... .... | २ | ३ | ३९ | ५२९ |
| ४९० | समान एवं चाभेदात् .... .... | ३ | ३ | १९ | ६८७ |
| ४९१ | समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च .... .... | १ | ३ | ३० | २७३ |
| ४९२ | समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य .... .... .... | ४ | २ | ७ | ८१५ |
| ५९३ | समाहारात् .... .... .... | ३ | ३ | ३६ | ७४० |
| ४९४ | समुदाय उभयहेतुकेऽपि तदप्राप्तिः | २ | २ | १८ | ४४४ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| ४९५ | सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति | १ | २ | ३ | २०४ |
| ४९६ | सम्पद्याविर्भावः स्वेनशब्दात् .... | ४ | ४ | १ | ८४९ |
| ४९७ | सम्बन्धादेवमन्यत्रापि .... .... | ३ | ३ | २० | ६८८ |
| ४९८ | सम्बन्धानुपपत्तेश्च .... .... | २ | २ | ३८ | ४७३ |
| ४९९ | सम्भृतिद्युव्याप्त्यपि चातः .... | ३ | ३ | २३ | ६९० |
| ५०० | सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् | १ | २ | ८ | १४९ |
| ५०१ | सर्वत्र प्रसिद्धोपदेशात् .... | १ | २ | १ | १३४ |
| ५०२ | सर्वथाऽनुपपत्तेश्च .... .... | २ | २ | ३२ | ४६३ |
| ५०३ | सर्वथाऽपि त एवोभयलिङ्गात् .... | ३ | ४ | ३४ | ७७४ |
| ५०४ | सर्वधर्मोपपत्तेश्च .... .... | २ | १ | ३७ | ४२५ |
| ५०५ | सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् | ३ | ३ | १ | ६६५ |
| ५०६ | सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् | ३ | ४ | २८ | ७६९ |
| ५०७ | सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् | ३ | ४ | २६ | ७६६ |
| ५०८ | सर्वाभेदादन्यत्रेमे ... .... | ३ | ३ | १० | ६७७ |
| ५०९ | सर्वोपेता च तद्दर्शनात् .... | २ | १ | ३० | ४१७ |
| ५१० | सहकारित्वेन च .... .... | ३ | ४ | ३३ | ७७४ |
| ५११ | सहकार्य्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् .... .... | ३ | ४ | ४७ | ७८६ |
| ५१२ | साक्षाच्चोभयाम्नानात् .... .... | १ | ४ | २५ | ३६६ |
| ५१३ | साक्षादप्यविरोधं जैमिनिः .... | १ | २ | २८ | २०१ |
| ५१४ | सा च प्रशासनात् .... .... | १ | ३ | ११ | २३७ |
| ५१५ | सामान्यात्तु .... .... .... | २ | २ | ३२ | ६५७ |
| ५१६ | सामीप्यात्तु तद्व्यपदेशः .... | ४ | ३ | ९ | ८४२ |
| ५१७ | साम्पराये तर्तव्याभावात् तथा ह्यन्ये | ३ | ३ | २७ | ६९७ |
| ५१८ | सुकृतदुष्कृते एवेति तु बादरिः | ३ | १ | ११ | ५९८ |
| ५१९ | सुखविशिष्टाभिधानादेव च .... | १ | २ | १५ | १६७ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| ५२० | सुषुप्त्युत्क्रान्त्योर्भेदेन .... ... | १ | ३ | ४२ | २९३ |
| ५२१ | सूक्ष्मं तु तदर्हत्वात् .... .... | १ | ४ | २ | ३१० |
| ५२२ | सूक्ष्मं प्रमाणतश्च तथोपलब्धेः.... | ४ | २ | ९ | ८२१ |
| ५२३ | सूचकश्च हि श्रुतेराचक्षते च तद्विदः | ३ | २ | ४ | ६२६ |
| ५२४ | सैव हि सत्यादयः .... .... | ३ | ३ | ३८ | ७१३ |
| ५२५ | सोऽध्यक्षे तदुपगमादिभ्यः .... | ४ | २ | ४ | ८१२ |
| ५२६ | स्तुतयेऽनुमतिर्वा .... .... | ३ | ४ | १४ | ७५४ |
| ५२७ | स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् .... .... .... | ३ | ४ | २१ | ७६१ |
| ५२८ | स्थानविशेषात् प्रकाशादिवत् .... | ३ | २ | ३४ | ७५८ |
| ५२९ | स्थानादिव्यपदेशाच्च .... .... | १ | २ | १४ | १६६ |
| ५३० | स्थित्यदनाभ्यां च .... .... | १ | ३ | ७ | २१८ |
| ५३१ | स्पष्टो ह्येकेषाम् .... .... | ४ | २ | १३ | ८२४ |
| ५३२ | स्मरन्ति च .... .... .... | २ | ३ | ४७ | ५४३ |
| ५३३ | स्मरन्ति च .... .... .... | ३ | २ | १४ | ६०१ |
| ५३४ | स्मरन्ति च .... .... .... | ४ | १ | १० | ७९९ |
| ५३५ | स्मर्य्यते च .... .... .... | ४ | २ | १४ | ८२५ |
| ५३६ | स्मर्य्यतेऽपि च लोके .... .... | ३ | १ | १९ | ६०७ |
| ५३७ | स्मर्य्यमाणमनुमानं स्यादिति .... | १ | २ | २५ | १९५ |
| ५३८ | स्मृतेश्च .... .... .... | १ | २ | ६ | १४५ |
| ५३९ | स्मृतेश्च .... .... .... | ४ | ३ | ११ | ८४४ |
| ५४० | स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् | २ | १ | १ | ३७१ |
| ५४१ | स्याच्चैकस्य ब्रह्मशब्दवत् .... | २ | ३ | ५ | ४८४ |
| ५४२ | स्वपक्षदोषाच्च .... .... .... | २ | १ | १० | ८८३ |
| ५४३ | स्वपक्षदोषाच्च .... .... .... | २ | १ | २९ | ४१६ |

| सूत्रसंख्या | सूत्रम् | अध्यायाङ्कः | पादाङ्कः | सूत्राङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|---|
| ५४४ | स्वशब्दोन्मानाभ्यां च .... | २ | ३ | २२ | ५०९ |
| ५४५ | स्वात्मना चेतरयोः .... .... | २ | ३ | २० | ५०७ |
| ५४६ | स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः .... | ३ | ३ | ३ | ६६८ |
| ५४७ | स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि .... .... | ४ | ४ | १६ | ८६४ |
| ५४८ | स्वाप्ययात् .... .... .... | १ | १ | ९ | ६९ |
| ५४९ | स्वामिनः फलश्रुतेरित्यात्रेयः .... | ३ | ४ | ४४ | ७८४ |
| | **ह** | | | | |
| ५५० | हस्तादयस्तु स्थितेऽतो नैवम् .... | २ | ४ | ६ | ५५७ |
| ५५१ | हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम् | ३ | ३ | २६ | ६९४ |
| ५५२ | हृद्यपेक्षया तु मनुष्याधिकारत्वात् | १ | ३ | २५ | २६५ |
| ५५३ | हेयत्वावचनाच्च .... .... | १ | १ | ८ | ६७ |






# अथ वेदान्तदर्शनम् ।

## प्रथमोऽध्यायः ।

### प्रथमः पादः ।

यस्य ब्रह्मोपदेशेन ब्रह्म सम्पद्यते परम् ।
ब्रह्मवित् तं मुनिं वन्दे व्यासं ब्रह्मविदां वरम् ॥ १ ॥
ब्रह्मसम्पत्तिकामानां ब्रह्मवित्तौ मनोरमाम् ।
कुर्वेऽहं व्याससूत्राणां वृत्तिं ब्रह्मपदानुगाम् ॥ २ ॥

अथ वैशेषिकादिषु पञ्चसु वैदिकदर्शनेषु शरीरादिभिन्नस्वन्तेभ्यः पदार्थेभ्यः प्रत्यगात्मतत्वविवेकः सफलः सोपायः प्रक्रियाभेदेन सम्यगुपदिष्टः। सम्प्रति तत्फलभूतं साक्षान्निःश्रेयससाधनं ब्रह्मज्ञानं विस्तरेणोपदिदिक्षु-राचार्यस्तत्परं शास्त्रमारभमाणः पूर्वं तावद् ब्रह्मणो जिज्ञासाकर्मत्वमाह—

"अथातो ब्रह्मजिज्ञासा" ॥ १ ॥

अथ=विवेकवैराग्यादिसाधनचतुष्टयसम्पत्त्यनन्तरम्, अतः=यतो ब्रह्मज्ञानं साक्षान्निःश्रेयससाधनमतः, ब्रह्मजिज्ञासा=वक्ष्यमाणलक्षणस्य ब्रह्मणो ज्ञातुं—साक्षात्कर्तुमिच्छा+ भवतीत्यर्थः ।

आनन्तर्यवचनो ह्यत्राथशब्दः प्रयुज्यते नाधिकारवचनः । ब्रह्मजि-ज्ञासाया ब्रह्मज्ञानेच्छात्मकत्वेनानधिकार्यत्वात् । नहि प्रत्यधिकरण-

---

(१) सम्पद्यतेऽउपसम्पद्यते प्राप्नोतीत्यर्थः । "ब्रह्मविदाप्नोति परम्" (तै० २ । १) इति श्रुतेः । वक्ष्यति च "सम्पद्याविर्भावः स्वेन शब्दात्" (वे० ४ । ४ । १) इति ।

मिच्छाऽधिक्रियते, येन तत्समभिव्याहारतोऽथशब्दोऽप्यधिकारवचनः कल्प्येत । प्रत्यधिकरणं चाधिक्रियमाणं ब्रह्म नाथशब्देन सम्बन्धुमर्हति । अप्रधानत्वात् । विशेषणं हि ब्रह्म, विशेष्या च जिज्ञासा । न च विशेषणं प्रधानं भवति । न च यथा "**ब्रह्मदण्डिनो ब्रह्मोपदेशाय भूमिमण्डले यत्र तत्र प्रचरन्ति**" इत्यत्राप्रधानमपि ब्रह्मदण्डो विवक्ष्यते तथेहापि ब्रह्म विवक्ष्यते, विवक्षितस्य चोपपद्यते सम्बन्धः इति युक्तं वचः । शास्त्रप्रवृत्ति प्रत्यङ्गभूतयोः संशयप्रयोजनयोः सूचनार्थत्वेन जिज्ञासाया एव प्रधानतो विवक्षितत्वात् । यदेव च प्रधानतो विवक्ष्यते तदेव क्रियया सम्बध्यते न विवक्षितमप्यप्रधानम् । अतो नाधिकारवचनोऽथशब्दः ।

न च मङ्गलवचनोऽपि कल्पयितुं शक्यते । मङ्गलस्य तद्वाच्यत्वाप्रसिद्धेः । नहि मङ्गलमथशब्दस्य वाच्यं क्वचित् प्रसिध्यति । न चाप्रसिद्धार्थकल्पनं न्याय्यम् । अथशब्दश्रवणमात्रकार्यं तु मङ्गलम् । न च तस्य वाक्यार्थे समन्वय उपपद्यते । शब्दार्थत्वाभावात् । शब्दार्थो हि वाक्यार्थे समन्वीयते, वाच्यो वा स्याल्लक्ष्यो वा, न च कार्य्यं न वा ज्ञाप्यम् । शब्दव्यवहारे सर्वत्र तथैव दृष्टत्वात् । न हि यथा वाच्यो वा लक्ष्यो वाऽर्थो वाक्यार्थे समन्वीयमानः सर्वत्र शब्दव्यवहारे दृश्यते तथा कार्य्यं वा ज्ञाप्यं वा समन्वीयमानं क्वचिदवलोक्यते । नच मङ्गलवचनत्वेऽपि "मङ्गलं ब्रह्मजिज्ञासा" इति वाक्यार्थः सङ्गच्छते । सूत्रस्यार्थवादत्वप्रसङ्गात् । नच सूत्राणामर्थवादत्वमभ्युपेयते किन्तु न्यायनिबन्धनत्वम् । तच्च तस्य मङ्गलवचनत्वेऽनुपपन्नम् । अतो न मङ्गलवचनोऽथशब्दः ।

न च प्रश्नार्थोऽप्युपपद्यते । प्रतिवचनानुपलब्धेः । नहि "किं ब्रह्मजिज्ञासा कर्तव्या ?" इति प्रश्ने "सा कर्तव्या" इति प्रतिवचनमुपलभ्यते । न च तदनुपलम्भे तत्कल्पनं युक्तम् । केवला वचनव्यक्तिस्तु न प्रश्नप्रतिवचनरूपेति नायं प्रश्नवचनोऽथशब्दः ।

न च पूर्वप्रकृतापेक्षोऽपि युज्यते । पक्षान्तरोपन्यासाभावात् । यत्र

हि पक्षान्तरमुपन्यस्यते तत्र पूर्वप्रकृतमपेक्ष्याथशब्दः प्रवर्तते, यथा "किमयमथशब्द आनन्तर्यवचनोऽथाधिकारवचनः" इति विमर्शवाक्येऽथशब्दः पूर्वप्रकृतमथशब्दमपेक्ष्य प्रवर्तते । नचेहास्ति पक्षान्तरोपन्यासः । तस्मान्नासौ पूर्वप्रकृतापेक्षोऽप्याश्रयितुं युक्त. । एतेन तस्य पक्षान्तरवचनत्वमपि प्रत्याख्यातं द्रष्टव्यम् । प्रकृतानुपलम्भात् ।

आनन्तर्यवचनत्वेऽपि च यदनन्तरं ब्रह्मजिज्ञासया भवितव्यं तद् वक्तव्यम् । न च तद् वेदाध्ययनमिति सम्भवति । साधारणत्वात् । साधारणकारणं हि ब्रह्मजिज्ञासाया वेदाध्ययनं न धर्मजिज्ञासाया इवासाधारणकारणम् । न हि वेदाध्ययने सति यथा नियमेन धर्मजिज्ञासा प्रवर्तते तथा ब्रह्मजिज्ञासाऽपि निर्वर्तते । तादृगसाधारणकारणं त्विह विवक्षितं यस्मिन्नसति ब्रह्मजिज्ञासा न भवति, सति च यस्मिन् भवन्ती भवत्येव । न च तथा वेदाध्ययनम् । **ननु** पूर्वोत्तरमीमांसयोरैकशास्त्र्याद् यदनन्तरं धर्मजिज्ञासाया आरम्भस्तदनन्तरं ब्रह्मजिज्ञासाया आरम्भोऽप्युपपद्यते । शास्त्राविशेषे कारणाविशेषस्याप्यौचित्यात् । **न । एकशास्त्रत्वासिद्धेः ।** मीमांस्यैकत्वे हि पूर्वोत्तरमीमांसयोरेकशास्त्रत्वं सिध्यति । न चोभयोस्तयोरस्ति मीमांस्यैकत्वम् । पूर्वमीमांसायां हि धर्माख्यं कर्म मीमांस्यम् । उत्तरमीमांसायां चेश्वराख्यं ब्रह्म । कर्म च भव्यम् । अनुष्ठानसापेक्षत्वात् । ब्रह्म च भूतम् । नित्यनिर्वृत्तस्वरूपत्वात् । न च मीमांस्यानेकत्वे मीमांसैकत्वमुपपद्यते । **सर्वशास्त्रभेदोच्छेदप्रसङ्गात् ।** अभ्युदयं निःश्रेयसं च कामयमानेन पुंसा प्रकृतिपुरुषेश्वराणां तत्त्वं विविच्यावगन्तव्यमिति वैदिकसिद्धान्तोपपादनाय हि यथाकाममभ्युपगताः प्रक्रियाभेदप्रयोजकाः खलु द्रव्यादयोऽभिधेयाः प्रतिशास्त्रं विभिद्यन्ते । तद्भिभेदाच्च वैशेषिकं न्यायः सांख्यं योगः पूर्वमीमांसोत्तरमीमांसा चेति सर्वलोकप्रसिद्धः षड्विधः शास्त्रभेदः । भवता चेदभिधेयभेदे सत्यपि पूर्वोत्तरमीमांसाशास्त्रयोर्भेदो नाभ्युपेयेत, तदा वैशेषिकादिसर्वशास्त्राणां भेदस्याप्युच्छेदः प्रसज्येत । पूर्वमीमांसया यथोत्तरमीमांसाया अभिधेयभेदे सत्यप्यभेदस्तथा वैशेषिका-

दिसर्वशास्त्राणामभेदस्यापि समर्थयितुं शक्यत्वात् । न चायमिष्टः । तस्मादयुक्तं ब्रह्मजिज्ञासाया वेदाध्ययनानन्तर्य्यम् ।

न च कर्मावबोधानन्तर्यमपि सङ्गच्छते । अप्रयोजकत्वात् । कर्मावबोधो हि कर्मानुष्ठानं प्रयोजयति, न ब्रह्मजिज्ञासाम् । नहि कर्मावबुध्यमानः पूर्वं कर्म नानुतिष्ठति ब्रह्म च जिज्ञासत इति सम्भवति । न च धूमधूमनिकेतनयोरिव वा कर्मब्रह्मणोरस्ति नियतः कश्चित्सम्बन्धः, येन कर्मावबोधाद् ब्रह्मजिज्ञासोदियात् । यस्य च यदनन्तरं नास्ति नियमेन सम्भवः, न तस्य तदानन्तर्य्यं कथमपि सङ्गच्छत इत्यलं कर्मावबोधेन ।

किमानन्तर्यं तर्हि ब्रह्मजिज्ञासाया अभ्युपगम्यते ? विवेकवैराग्यादिसाधनचतुष्टयसम्पत्त्यानन्तर्य्यमिति ब्रूमः । कुत एतल्लभ्यते ? साधनाध्यायसूत्रादिति विज्ञातव्यम् । अस्ति साधनाध्याये तृतीये पादे "**शमदमाद्युपेतः स्यात् तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्**" (वे. ३ । ४ । २७) इति सूत्रम् । अत्र हि विवेकवैराग्यहेतुकानां शमदमादीनामधिकारिणि योगस्याख्यानेन ब्रह्मज्ञानकारणता स्पष्टमुपदिश्यते । "**परीत्य भूतानि परीत्य लोकान् परीत्य सर्वाः प्रदिशो दिशश्च । उपस्थाय प्रथमजामृतस्यात्मनाऽऽत्मानमभिसंविवेश**" ( यजु० ३२ । ११ ) "**परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । स तद्विज्ञानार्थं गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्**" ( मु. १ । २ । १२ ) "**शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति**" (बृ० ४ । ४ । २३ ) इत्यादिश्रुतिभ्यश्च तन्मूलभूताभ्यःसैवाव्यक्तमवगम्यते । तस्मादधिकारिणि विशेषणतया युक्तं भवद् यद् ब्रह्मज्ञानस्य साक्षात्कारणं तदानन्तर्य्यं ब्रह्मजिज्ञासाया इति युक्तमुच्यते ।

परीत्य=परीक्ष्य, ऋतस्य=कर्मफलप्रदातुर्जगतो मूलकारणस्य भगवतो ब्रह्मणः, प्रथमजां=साक्षात्कारहेतुभूतत्वात् सर्वतः श्रेष्ठां नितान्त-

निर्मलां सूक्ष्मतमामग्र्यां बुद्धिम्, ऋतम्भरानाम्नीं प्रज्ञामिति यावत्, **उपस्थाय**=सम्प्रज्ञातयोगाभ्यासेन सम्पाद्य, **आत्मना**=साक्षात्कृतेन निजेन प्रत्यगात्मना, **आत्मानं**=परमात्मानम्, **अभिसंविवेश**= अभिसंविशति प्रविशति प्राप्नोति तमनुभवतीति यावत् (यजु० ३२।११) **परीक्ष्य**=विविच्य, **लोकान्**=आ शरीरादाच प्रकृतेरखिलान् पदार्थान्, **ब्राह्मणः**=प्रधानपरिग्रहेऽप्रधानपरिग्रहोऽर्थात्, ब्राह्मणप्रभृतिः समर्थो जनः, ब्रह्मप्राप्त्युत्सुको वा मुमुक्षुर्जनः, **निर्वेदं**=वैराग्यम्, **आयात्**= प्राप्नुयात्, **नास्ति**=विषयेण विषयिणमुपलक्षयति, न विज्ञायते, **अकृतः**= यो न केनचित् क्रियते स नित्यसिद्धः परमात्मा, **कृतेन**=क्रियमाणेन कर्मणा, **तद्विज्ञानार्थं**=तदाऽकृतं परमात्मानं परामृशति, **गुरुम्**= उपदेष्टारं, **श्रोत्रियं**=वेदशास्त्राभिज्ञं, **ब्रह्मनिष्ठं**=परमात्मैकप्रतिष्ठित- चित्तं, ब्रह्मणि परमात्मनि निष्ठा सर्वव्यापारपरित्यागेन चित्तस्य स्थितिः प्रतिष्ठेति यावद् यस्य तम्, इति तद्व्युत्पत्तेः (मु० १।२।१२) मैत्र्यादिभावनातो रागद्वेषादिचित्तदोषाणां निवृत्तिः शमः, तद्युक्तः **शान्तः**, कुत्सितनिषिद्धव्यापारेभ्यो बाह्येन्द्रियाणां निवृत्तिर्दमः, तद्युक्तो **दान्तः**, निषिद्धाविहितकाम्यकर्मपरित्याग उपरतिः, तद्युक्त **उपरतः**, शीतोष्णसुखदुःखादिद्वन्द्वसहिष्णुता तितिक्षा, तद्वान् **तितिक्षुः**, सम्प्रज्ञातभेदो निर्विचारः समाधिः, तद्वान् **समाहितः**, **आत्मन्येव**= समाधिप्रज्ञया साक्षात्कृते प्रत्यगात्मन्येव, **आत्मानम्**=अन्तरात्मानं परमेश्वरं, **पश्यति**=निजेनात्मनाऽनुभवति (बृ० ४।४।२३) इति श्रुतिपदार्थः ।

**विवेको वैराग्यं शमदमादिसम्पत् मुमुक्षा चेति साधनचतुष्टयम् । तत्र शरीरादिप्रकृत्यन्तेभ्यः पदार्थेभ्यः प्रत्यगात्मनो भेदज्ञानं विवेकः, ततो- दृष्टानुश्रविकविषयवैतृष्ण्यं प्रकृत्यन्तेषु सर्वपदार्थेष्वसक्तिरलंबुद्धिरिति यावद् वैराग्यम् । तत्परिपाकाज्जायमाना सम्पत् शमदमादिसम्पत् । आदिना उपरतिस्तितिक्षा श्रद्धा समाधानं चेति चतुष्टयं परिगृह्यते ।**

शमो दम उपरतितिक्षितिक्षा चेति चतुष्टयमुक्तार्थम् । **समाधानं** समाधिपर्यायम् । यथार्थं गुरुवेदवाक्यमिति बुद्धिः **श्रद्धा,** तदेतस्य शमदमादिषट्कस्य सम्पत् प्रकर्षः शमदमादिसम्पत्, मोक्षेच्छा मुमुक्षा चेति साधनपदार्थः ।

**अतः**शब्दो हेतुवचनः । यतो ब्रह्मज्ञानमेव साक्षान्निःश्रेयससाधनमत इति तच्छब्दार्थः । यथा हि कर्मज्ञानं फलप्रदानाय मध्ये यथाशास्त्रमनुष्ठानं तावदपेक्षते न तथा ब्रह्मज्ञानमपेक्षते । तद्धि जायमानं भवदनुष्ठानान्तरानपेक्षमेवामृतं फलं प्रददातीति साक्षादुक्तम् । ननु ब्रह्मज्ञानमेव निःश्रेयससाधनमिति कुतो लभ्यते ? वेदोपनिषच्छ्रुतिभ्य इत्यवगन्तव्यम् । सन्ति भगवतो वेदस्योपनिषदां च तादृशो बह्व्यः श्रुतयो याः खलु ब्रह्मज्ञानस्यैव निःश्रेयससाधनतामुपदिशन्ति । तद्यथा **"य इत्तद्विदुस्तेऽमृतत्वमानशुः"** ( ऋ० २ । ३ । १८ । २३ ) **"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"** ( यजु० ३१ । १८ ) **"तमेव विद्वान् न विभाय मृत्योः"** ( अथर्व० १० । ५ । ४४ ) **"अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते"** ( कठ० ३ । १५ ) **"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"** ( मु० ३ । १ । ३ ) **"ब्रह्मविदाप्नोति परम्"** ( तै० २ । १ ) **"तरति शोकमात्मवित्"** ( छा० ७ । १ । ३ ) **"य एतद्विदुरमृतास्ते भवन्ति"** ( श्वे० ३ । १ ) इति । **पन्थाः**=साधनम्, **अयनाय**=ब्रह्मप्राप्तिलक्षणाय निःश्रेयसाय, **महतः**=कारणे कार्यप्रयोगः, जगत्कारणात् प्रकृतेरिति तदर्थः, **निचाय्य**=ज्ञात्वा, **पश्यः**=विवेकी, **पश्यते**=साक्षात्कुरुते, **रुक्मवर्णं**=प्रकाशमयं, **कर्तारं**=जगत्कर्तारं, **पुरुषं**=पूर्णं, **ब्रह्मयोनिं**=शास्त्रयोनिं, **विधूय**=निरस्य दग्ध्वा, **निरञ्जनः**=शोकमोहविरहितः, **परमं**=प्रकृष्टं विभागानर्हं, **साम्यं**=समत्वम्, उ-

**पैति**=प्राप्नोति, **शोकं**=शोकमोहप्रभृति निखिलसांसारिकं दुःखं, **तरति**=उल्लङ्घ्य परमात्मानं प्राप्नोति, **आत्मवित्**=ब्रह्मविदिति श्रुतिपदार्थः । न च तज्ज्ञानस्य निःश्रेयससाधनतामुपदिशन्त्य एताः कथञ्चिदुपचरितार्थाः भवितुमर्हन्ति । सर्वाभ्यो ह्याभ्यो ब्रह्मज्ञानमेवैकं निःश्रेयससाधनं नान्यत् किंचिदिति स्पष्टमधिगम्यते । कथमन्यथा "तमेव" इत्येवकारः प्रयुज्येत । नहि तस्मिन् प्रयुज्यमाने निःश्रेयसं प्रति ब्रह्मज्ञानेन कारणान्तरमपि किंचित् समुच्चेतुं शक्यते । तस्यान्ययोगव्यवच्छेदार्थकत्वात् । अत एवाह भगवती श्रुतिः—"**यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः**" ( मु० २ । २ । ५ ) इति । वक्ष्यति च स्वयमाचार्योऽपि—"**विद्यैव तु निर्धारणात्**" ( वे० ३ । ३ ।३७ ) इति । नन्वत्रैवकारेणायोगो व्यवच्छिद्यते नान्ययोगः । ज्ञानवत् कर्मणोऽपि निःश्रेयसहेतुत्वावगमात् । यथा हि ब्रह्मज्ञानं निःश्रेयसस्य कारणं, तथा कर्मापि तत्कारणमवगम्यते । नहि कारणत्वाभावे तस्य यावज्जीवं कर्तव्यतोपदेष्टुं शक्यते । तत्कर्तव्यतां चोपदिशति भगवान् वेदः—"**कुर्वन्नेवेह कर्माणि जिजीविषेच्छत ँ समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे**" ( यजु० ४० । २ ) इति । **कुर्वन्नेव**=यथाशास्त्रमनुतिष्ठन्नेव, **कर्माणि**=वेदविहितान्यग्निहोत्रादीनि कर्माणि, **शतं समाः**=यावज्जीवम्, **एवं**=यथा मयाऽऽज्ञाप्यते तथा, **त्वयि**=वेदविहितकर्मानुष्ठाने यथाविधि वर्तमाने त्वयि, **नरे**=मनुष्ये, **कर्म**=कार्ये कारणप्रयोगः, उच्चावचनानायोनिप्राप्तिपरिहारलक्षणो बन्धापरपर्य्यायः संसारो, **न लिप्यते**="वर्तमानसामीप्ये वर्तमानवद्वा" ( अष्टा० ३ । ३ । १३१ ) समीपमेव सामीप्यं, स्वार्थे ष्यञ्, लेपः सम्बन्धः, न सम्भन्त्स्यते न स्पर्शमपि लप्स्यते, **इतः**=अस्मात् मदाज्ञानुपालनलक्षणात् कर्मानुष्ठानात्, **अन्यथा**=संसारासंबन्धहेतुरन्यः प्रकार उपायो, **नास्ति**=न विद्यत-

इति मन्त्रपदार्थः । न चेह केवलं यावज्जीवं कर्मानुष्ठानमेवोपदिश्यते, अपि च ये मूढधियो यथोपदेशं वैदिकं कर्म नानुतिष्ठन्ति तेषां पौनः-पुन्येन निकृष्टनिकृष्टतरनिकृष्टतमयोनिप्राप्तिलक्षणः संसारोऽपि प्रदर्श्यते, **"असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः । ताँस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः"** (यजु० ४०।३) इति । **असुर्याः**=प्राणमात्रपोषणे रताः असुराः पश्वादयः, तेषामिमे, **ते**=ये, **लोकाः**=लोक्यन्तेऽनुभूयन्ते भुज्यन्ते कर्मफलानि येषु ते योनि-विशेषाः, **अन्धेन**=विशालेन, **तमसा**=तमोगुणेन, **आवृताः**=आच्छन्नाः, यत्रेदं स्मर्यते **"तमोविशाला मूलतः"** (सां० ३।४) इति, **आत्महनः**=आत्मा परमात्मा, तस्य हननासम्भवात् पूर्वोक्ता कर्मानुष्ठानलक्षणा तदाज्ञोपलक्ष्यते, तां घ्नन्ति नानुपालयन्ति ये त आत्म-हनः परमात्माज्ञोपहन्तारः परमात्माज्ञाननुवर्तिन इति यावत्, **जनाः**=नराः इति मन्त्रपदार्थः । अनेन हि स्पष्टमधिगम्यते विद्यते तावद् ज्ञानवत् कर्मापि निःश्रेयसस्य कारणमिति । कथमन्यथा तद्भावे संसार-लेपाभावस्तदभावे च संसारलेप इत्युपदिशेत् । न चैतावन्मात्रमेव, अपि च ? मुमुक्षुणा निःश्रेयसं प्रति ज्ञानकर्मणोः समुच्चयो विज्ञातव्य इत्यपि साक्षादाम्नायते **"विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते"** (यजु०४०।१४) इति । **विद्या**=ज्ञानम्, **अविद्या**=कर्म, **यः**=यो मुमुक्षुः, **तद्**=ज्ञानं च कर्म च, **उभयं**=द्वयं, **सह**=समुच्चितं, **वेद**=जानीते, अनुतिष्ठति; **अविद्यया**=कर्मणा, **विद्यया**=ज्ञानेन, **अमृतं**=निःश्रेयसमिति श्रुतिपदार्थः । यथा चैषा श्रुतिर्ज्ञानकर्म्मणोः समुच्चये प्रमाणं तथा लिङ्ग-मपि प्रमाणमुपलभ्यते । अस्ति तावन्मुण्डकोपनिषदि **"प्राणो ह्येष यः सर्वभूतैर्विभाति विजानन् विद्वान् भवते नातिवादी । आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः"** (मु० ३।१।४) इति मन्त्रः । तत्र भगवतो ब्रह्मविदः **"क्रिया-**

**वान्**" इति विशेषणमुपादीयते । क्रिया च वैदिककर्म्मणामनुष्ठानम् । न च तज्ज्ञानेन कर्मणः समुच्चयाभावे कथञ्चिदुपपद्यते । न चानुपपद्यमानं किञ्चिदौपनिषदो मन्त्रः खलु कर्हिचिदुपादातुमर्हति । तस्मात् प्रतिपद्यतेऽस्ति ज्ञानवत् कर्मापि निःश्रेयसस्य कारणम् । वक्ष्यति च "**विहितत्वाच्चाश्रमकर्मापि**" (वे० ३ । ४ । ३२) "**सहकारित्वेन च**" (वे० ३ । ४ । ३३) इति । **तथा च** ज्ञानमेवैकं निःश्रेयसस्य कारणमित्यनुपपन्नम् । **न** । कर्मणो ज्ञानप्राप्तिहेतुत्वोपदेशोऽपि निःश्रेयसप्राप्तिहेतुत्वोपदेशादर्शनात् । यथा हि वेदोपनिषच्छ्रुतिषु ब्रह्मज्ञानं निःश्रेयसस्य साधनमुपदिश्यते न च तथा कर्म तत्साधनमुपदिश्यते । नह्युदाहृतश्रुतिवाक्येषु तादृशं किञ्चिद् वाक्यं विद्यते येन "कर्मणाऽमृतत्वमश्नुते" इति साक्षादनुशिष्यते । न च "**कुर्वन्नेव**" (यजु० ४० । २) इति मन्त्रेण यावज्जीवं कर्मानुष्ठानस्य तत्फलस्य संसारलेपाभावस्य चोपदेशात् "**असुर्या नाम**" (यजु० ४० । ३) इति मन्त्रेण च यथोपदेशं कर्मानुष्ठानाभावे पश्वादियोनिप्राप्तिलक्षणसंसारलेपस्य चानुशासनात् कर्मणो निःश्रेयससाधनत्वं कल्पयितुं शक्यते । "**विद्यां चाविद्यां च**" (यजु० ४० । १४) इत्यग्रिममन्त्रेऽमृतत्वरूपनिःश्रेयसंप्राप्तिलक्षणाज्ज्ञानफलाद् भेदेन कर्मफलस्य मृत्युतरणस्याभिधानात् । चेदिमे ज्ञानकर्मणी समुच्चिते निःश्रेयसकारणे तावदभविष्यतां तदा नूनमेष मन्त्रो निःश्रेयसप्राप्तिलक्षणाज्ज्ञानफलाद्भेदेन मृत्युतरणलक्षणं कर्मफलं नाभ्यधास्यत । नहि ज्ञानकर्मणोरुभयोर्निःश्रेयसं प्रति समुच्चित्य कारणत्वे भेदेन फलाभिधानं कथञ्चिद् युज्यते । मृत्युश्चेह न पौनःपुन्येन मरणमभिप्रेयते, तत्तरणस्य ज्ञानफलवाचिनाऽमृतपदेनाभिहितत्वात्, **किन्तु** तत्कारणं चेतोमालिन्यम् । तेन चात्र ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिर्विवक्ष्यते । न च तत्तरणफलकं कर्म ज्ञानोत्पत्तिसाधनं भवदपि निःश्रेयसप्राप्तिसाधनमुपपद्यते । कर्म ह्यनभिसंहितफलं क्रियमाणं ज्ञानोत्पत्तिप्रतिबन्धिकां बुद्धिसत्त्वाच्छादिकामविशुद्धिमपनयति । यां किलाऽध्यात्मविदो मालिन्यं दुरितं पाप्मा चेति सङ्गिरन्ते । ततश्च

जायमानया विविदिषया शास्त्रश्रवणादितः समुत्पन्नेनात्मतत्त्वज्ञानेन निखिलसाधनसम्पत्तौ ब्रह्मसाक्षात्कारे जाते निःश्रेयसं समवाप्यते । चेत् पूर्वं यथाविधानं कर्म नानुष्ठीयेत न जातु ज्ञानोत्पत्तिप्रतिबन्धकं चेतोमालिन्यमपनीयेत । तदनपनयने च न कर्हिचिद् विविदिषा तदनन्तरं ज्ञानं चोत्पद्येत । तदनुत्पत्तौ च न किञ्चित् साधनं सम्पद्येत । तदसम्पत्तौ च न ब्रह्मसाक्षात्कारः प्रजायेत । तदप्रजनने च न निःश्रेयसं समवाप्येत । सर्वस्यास्य कर्मानुष्ठानमूलकत्वात् । यथाविधि कर्मानुष्ठाने सत्येव सर्वमेतत् सम्पद्यते, नान्यथेत्येतावता याजुषमन्त्रयोर्यावज्जीवं कर्मानुष्ठानं तत्फलं संसारलेपाभावोऽननुष्ठाने संसारलेपश्चानुशिष्यते । न च साक्षान्निःश्रेयससाधनत्वाभिप्रायात् । एतेन "**आचार्यकुलाद् वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः । स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते**" (छा० ८ । १५ । १ ) इति छान्दोग्यश्रुतिरपि व्याख्याता वेदितव्या । तत्रापि परम्पराकारणत्वाभिप्रायेणैव "यावदायुषम्" इत्याम्नानात् । **आचार्य्यकुलात्**=गुरुकुलात्, **वेदं**=सार्थं वेदचतुष्टयम्, **अधीत्य**=पठित्वा, **यथाविधानं**=यथाविधि, **गुरोः**=आचार्य्यस्य, **कर्म्म**=शुश्रूषादिलक्षणं कर्तव्यं कर्म, **विधाय**=कृत्वा, **अतिशेषेण**=अवशिष्टेन कालेन वेदमधीत्येत्यन्वयः । **अभिसमावृत्य**=समावर्तनं कृत्वा धर्मजिज्ञासां समापयित्वेति यावत्, **कुटुम्बे**=पुत्रशिष्यादिसमन्विते गृहस्थाश्रमे, **शुचौ**=विविक्तेऽमेध्यादिरहिते पवित्रस्थाने, **स्वाध्यायं**=वेदम्, **अधीयानः**=पठन्, **धार्मिकान्**=पुत्रशिष्यादीन् सर्वान् जनान् प्रत्यहमुपदेशेन वैदिकधर्मयुक्तान्, **विदधत्**=कुर्वन्, **आत्मनि**=मनसि, **सर्वेन्द्रियाणि**=चक्षुरादीनि निखिलेन्द्रियाणि, **सम्प्रतिष्ठाप्य**=उपसंहृत्य, **तीर्थेभ्योऽन्यत्र**=तीर्थं शास्त्रम्, अत्र तद्विहितानि देशात्मोद्धारप्रयोजनानि धर्म्यसङ्ग्रामप्रभृतीनि कर्माणि लक्ष्यन्ते, तेभ्योऽन्यत्र तानि वर्जयित्वेति

यावत्, **सर्वभूतानि**=सर्वप्राणिनः, **अहिंसन्**=अपीडयन्+तिष्ठेदिति शेषः । **सः**=स एष महाशालः, **खलु**=निश्चयेन, **एवं**=यथोपदिष्टं तथा, **यावदायुषं**=यावज्जीवं, **वर्तयन्**=यथाशक्ति निर्वाहयन्, **ब्रह्म-लोकं**=ब्रह्मात्मकं लोकम्, **अभिसम्पद्यते**=प्राप्नोतीति श्रुतिपदार्थः । कर्म हि ज्ञानप्राप्तितः पूर्वं तत्प्राप्त्यर्थमनुष्ठीयते, पश्चाच्चेश्वराज्ञापरिपालनार्थ-मिति ज्ञानिनां जिज्ञासूनां च सर्वेषामविशेषेण यत्र तत्र श्रुतिषु यावज्जीवं तत्कर्तव्यतोपदिश्यते । "**क्रियावानेष ब्रह्मविदां वरिष्ठः**" (मु० ३ । १ । ४) इति लिङ्गादपि चैतदेवावगम्यते नान्यत् किञ्चित् । तत्र जिज्ञासुभिर्महाभागैर्बाह्यसाधनैर्ज्ञानिभिश्च चतुर्थाश्रमिभिरान्तरसाधनै-र्यथाविधानं यावज्जीवं कर्मानुष्ठातव्यमिति विशेषोऽवगन्तव्यः । सर्वबाह्यो-पकरणपरित्यागेन प्रव्रज्याश्रमग्रहणस्यापि श्रुतिस्मृतिषु दर्शनात् । तद्वि-चारश्चाग्रे साधनाध्याये प्रवर्तिष्यते । यथा चैतत् कर्म दुरितक्षयेण विवि-दिषामुत्पादयद् ब्रह्मज्ञानप्राप्तेरेव साधनं न निःश्रेयसप्राप्तेस्तथा भगवती श्रुतिःस्वयमभिवदति "**तमेतं वेदानुवचनेन ब्राह्मणा विविदि-षन्ति यज्ञेन दानेन तपसाऽनाशकेन**" (बृ० ४ । ४ । २२) इति । **तमेतं**=जगत्पतिं परमेश्वरं ब्रह्म, **वेदानुवचनेन**=स्वाध्यायेन, **विविदिषन्ति**=वेदितुमिच्छन्ति, **यज्ञेन**=अग्निहोत्रादारभ्याश्वमेधपर्य-न्तेन यज्ञकर्मणा, **दानेन**=प्राप्तब्रह्मसम्पद्भ्यो ब्राह्मणेभ्योऽनाथेभ्यश्च भूतेभ्यो यथाशक्ति हिरण्यान्नवस्त्रादिदानकर्मणा, **अनाशकेन**=हितमित-मेध्याशनात्मकेन, **तपसा**=शरीरशोधकतपःकर्मणेति श्रुतिपदार्थः । फलमनभिसन्धाय यथाविधि क्रियमाणानि खल्वेतानि कर्माणि बुद्धिसत्त्वा-विशुद्धिकारणं दुरितजातं निरस्य पुरुषं ब्रह्मप्राप्तियोग्यतां नयन्ति, यत्रेदं स्मर्यते, "**स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः । महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः**" (मनु० २ । २८) इति । ततश्चैव प्रक्षीणाशेषकल्मषो विशुद्धसत्त्वो जातविविदिषः सम-वाप्ताखिलसाधनो द्रागित्येव ब्रह्मज्ञानमुपसम्पद्यते । तदेवं ब्रह्मज्ञानप्रा-प्तिसाधनं कर्म ।

नमु "विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" ( बृ० ४ । ४ । २२ ) इत्यत्र यज्ञादिकर्मणां विविदिषासंयोगे सति ब्रह्मज्ञानप्राप्तिसाधनं कर्मेति घटते । न च तेषां विविदिषया संयोगः सम्भवति । प्राधान्याभावात् । तत्र हीष्यमाणत्वेन वेदनस्यैव प्राधान्यं वर्तते न विविदिषायाः । वेदनं च मानाधीनं न यज्ञादिकर्माधीनमिति तत्रापि न तान्यन्वीयन्ते । न चान्यत् किञ्चित् प्रसज्यते यत्रान्वयः कल्प्येत । पारिशेष्याद् वेदनफले निः श्रेयसे तदन्वयो वक्तव्यः । साधनविभक्त्योपात्तानां कुत्रचित् साध्येऽन्वयस्यावश्यकत्वात् । तत्र तदन्वये च निःश्रेयसप्राप्तिसाधनं कर्मेति युज्यते न ज्ञानप्राप्तिसाधनम् । न । वेदनस्य वस्तुतः प्राधान्येऽपि शब्दतः प्राधान्याभावात् । प्रकृतिप्रत्ययार्थयोर्हि प्रत्ययार्थः प्रधानं भवति न प्रकृत्यर्थः । प्रत्ययार्थश्चेह विविदिषा न वेदनम् । तस्य प्रकृत्यर्थत्वात् । प्रधानाप्रधानयोश्च प्रधाने कार्यसम्प्रत्ययो नाप्रधाने । नहि राजपुरुषमानयेत्युक्ते वस्तुतः प्रधानमपि राजा पुरुषविशेषणतया शब्दतोऽप्रधानमानीयते । अपि च ? पुरुष एव । तस्य शब्दतः प्राधान्यात् । प्रधानं चेह शब्दतो विविदिषा पुरुषवत् । अतो यज्ञादिकर्मणां तत्संयोगः सम्भवति, नास्तिकिञ्चिद्दूषणम् । तथा च युक्तं ज्ञानप्राप्तिसाधनं कर्म । नन्वेवं "विद्यां चाविद्यां च यस्तद्वेदोभयं सह" ( यजु० ४० । १४ ) इति मन्त्रो विरुध्येत । तत्र ज्ञानकर्मणोः सहवेदनस्योपदेशात् । नह्येष तयोः समुच्चित्यानुष्ठानं विना सङ्गच्छते । न । क्रमसमुच्चयाभिप्रायत्वात् । क्रमसमुच्चयाभिप्रायेण ह्येतत् सहवेदनमुपदिश्यते, न समसमुच्चयाभिप्रायेण । कथमेतदवगम्यते ? फलभेदाभिधानात् । मन्त्रस्योत्तरार्धे खलु-ज्ञानकर्म्मणोः फलं भेदेनाभिधीयते, कर्मणो मृत्युतरणं, ज्ञानस्य च निःश्रेयसाधिगम इति । न चैतत् समुच्चये कथञ्चिदुपपद्यते । नहि समुच्चयवतामाग्नेयादिकर्मणां कचिद्भेदेन फलमभिधीयते । क्रमसमुच्चये तु नास्ति कश्चिद्दोषः । यत्र ह्यनुष्ठीयमानात् कर्मणो दुरितक्षये पूर्वं सत्त्वशुद्धिस्ततो विविदिषा, तदनु ज्ञानं, ज्ञानाच्च निःश्रेयसाधिगम इति प्रनाड्या निःश्रेय-

समाप्तौ कर्म ज्ञानेन समुच्चीयते स क्रमसमुच्चयः। यत्र च साक्षात् स समसमुच्चय इति समुच्चयविदो व्याचक्षते। ज्ञानकर्मणोः सहत्वेदमं च समसमुच्चये यथोपदेष्टुं शक्यते तथा क्रमसमुच्चयेऽप्यनुशासितुं पार्यते। सहत्वस्योभयत्र समानत्वात्। अतो न मन्त्रविरोधः। एतेन "**विहितत्वाच्चाश्रमकर्मापि**" (वे० ३। ४। ३२) "**सहकारित्वेन च**" (वे० ३। ४। ३३) इति पूर्वोदाहृतसूत्रद्वयविरोधोऽपि प्रत्युक्तो वेदितव्यः। ज्ञानस्यात्मोत्पत्त्यर्थं कर्मापेक्षाया अभ्युपगमात्। यथा हि ज्ञानं शमदमादिसाधनं तावत् स्वोत्पत्तये नियमेनापेक्षते, तथा विहितत्वात् सर्वाश्रमकर्माप्यपेक्षत इत्यभ्युपगम्यते। ज्ञानादूर्ध्वं च विधिपरिपालनार्थं तस्यावश्यानुष्ठेयत्वात् सहकारित्वमप्युपपद्यते। द्विविधं हि सहकारित्वं फलोपकारलक्षणं सहभावलक्षणं च। यत् खलु सहवर्तमानं फलमुपकरोति तत्फलोपकारलक्षणं सहकारित्वं भजते, यथाऽऽग्नेयादीनां प्रयाजादिकम्। यच्च फलं न किञ्चिदुपकरोति केवलं सह वर्तते तत् सहभावलक्षणं यथा प्रत्यगात्मनः शरीरं, गर्दभ्याः वा भारवाहिकायाः विंशत्यब्दाः पुत्राः। तत्राद्यम् "**अतएव चाग्नीन्धनाद्यनपेक्षा**" (वे० ३। ४। २५) इति निःश्रेयसलक्षणे फले ज्ञानस्य कर्मानपेक्षायाः सूत्रणादभ्युपेयते। द्वितीये तु नास्ति काचिद् विप्रतिपत्तिः। अतो ज्ञानमेवैकं निःश्रेयसस्य साधनमिति निष्प्रत्यूहम्। तथा चोपपन्नः "यतो ब्रह्मज्ञानमेव साक्षान्निःश्रेयससाधनमतो ब्रह्मजिज्ञासा भवति" इति हेतुवचनोऽतः शब्दः।

ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा। ब्रह्मण इति कर्मणि षष्ठी। तदपेक्षाया एव प्रथममुपजायमानत्वात्। यद्धि यद्विना न निरूपयितुं शक्यते तस्य तद्गोचरापेक्षा नियमेन प्रथममुपजायते, यथा ज्ञेयगोचरापेक्षा ज्ञानस्य। नहि ज्ञेयं विना ज्ञानमिव जिज्ञासाऽपि जिज्ञास्यं विना कथञ्चिन्निरूपयितुं शक्यते। न च जिज्ञास्यं ब्रह्मव्यतिरिक्तं किञ्चिदन्यदत्र श्रूयते। श्रुतानुमानयोश्च श्रुतसम्बन्धो बलीयानिति ब्रह्मैव तस्याः जिज्ञास्यं कर्म। श्रुत्यनुगमाच्च। श्रुतिवाक्यानि खलु विचारयितुं सूत्राणीमान्यारभ्यन्ते। तानि च "**तद्विजिज्ञासस्व तद्ब्रह्म**"

(तै० ३ । १) इति प्रत्यक्षमेव ब्रह्मणो जिज्ञासाकर्मत्वं दर्शयन्ति। तथैतत् कर्मणि षष्ठीपरिग्रहे सूत्रेणानुगतं भवति नान्यथा। न च तर्हि **"कर्मणि च"** (अष्टा० २ । २ । १४) इति प्रतिषेधात् समासानुपपत्तिः। तस्य **"उभयप्राप्तौ कर्मणि"** (अष्टा० २ । ३ । ६६) इति कर्मषष्ठीविषयत्वात्। अत्र च **"कर्तृकर्मणोः कृति"** (अष्टा० २ । ३ । ६५) इति कर्मणि षष्ठी। न च **"प्रतिपदविधाना षष्ठी न समस्यते"** इति समासप्रतिषेधोऽप्युपपद्यते। **"कृद्योगा षष्ठी समस्यते"** इति प्रतिप्रसवसद्भावात्। अतो युक्ता "ब्रह्मणः" इति कर्मणि षष्ठी। ज्ञातुमिच्छा जिज्ञासा। "सन्"प्रत्ययस्येच्छायां विहितत्वात्। तद्वाच्यायाः इच्छायाः कर्मभूतं ज्ञानं च न मनोवृत्त्यात्मकं विवक्षितम्। तेन ज्ञातुं साक्षात्कर्तुमिष्टस्य ब्रह्मणस्तदविषयत्वावगमात्। **"यन्मनसा न मनुते येनाहुर्मनो मतम्"** (के० १ । ५) **"नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा"** (कठ० ६ । १२) **"यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह"** (तै० २ । ४) **"यं मनो न वेद"** (बृ० ३ । ७ । २०) इत्यादिश्रुतिभ्यो हि तस्य मनोऽविषयत्वमवगम्यते। यस्य च यदविषयत्वं न तद्गोचरं तेन ज्ञानमुपजनयितुं पार्य्यते। नहि रूपे रसनया रसे च चक्षुषा ज्ञानमुपजन्यते। ननु **"मनसैवेदमाप्तव्यम्"** (कठ० ४ । ११) **"मनसैवानुद्रष्टव्यम्"** (बृ० ४ । ४ । १९) इत्यादिश्रुतयस्तस्य मनोविषयत्वमप्यवगमयन्ति। **न**। साधनमात्राभिधानात्। ताः हि मनसो ब्रह्मप्राप्तिसाधनतामभिदधति न तद्विषयो ब्रह्म। तत्प्राप्तिसाधनतां च तस्य वयमप्यङ्गीकुर्मो न जातु व्यासेधामः। नहि साधनतामात्राभिधानेन ब्रह्म मनोविषयः सम्पद्यते। तद्धि **"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः। महतः परमव्यक्तमव्यक्तात् पुरुषः परः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः"** (कठ० ३ । १०–११) **"इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्त-**

**मम्। सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम्। ७। अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च। यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति"** (कठ० ६। ७–८) इत्यादिश्रुतयः प्रकृतितत्कार्येभ्यः परमावेदयन्ति। मनश्च ततोऽत्यन्तमवरमिति कथमेतस्य विषयः स्यात्। इन्द्रियाणि खलु नियमेन स्वसन्निकृष्टमर्थं गोचरयन्ति। मनसा च प्रत्यगात्मा सन्निकृष्यते न ब्रह्म। कथं तर्हि **"दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः"** (कठ० ३।१२) इति बुद्धिपदव्यपदेश्येन विशिष्टमनसा ब्रह्मदर्शनमुपदिश्यते ?। तन्निबन्धनत्वादिति ब्रूमः। यथा हि कर्मनिबन्धनं निःश्रेयसं यावन्न कर्म यथाशास्त्रमनुष्ठीयते तावन्न निःश्रेयसं समवाप्यते, तथा ब्रह्मदर्शनमपि मनोनिबन्धनं वेदितव्यं, यावन्न मनो विशोध्य प्रत्यगात्मदर्शनार्हं सम्पाद्यते तावन्न ब्रह्मदर्शनमासाद्यते। विशुद्धमनो हि प्रत्यगात्मदर्शनस्य साक्षाद्, ब्रह्मदर्शनस्य च परम्परया साधनं, यथा ज्ञानस्य साक्षाद् निःश्रेयसस्य च परम्परया साधनं वैदिकं कर्म निष्कामम्। अतो निष्कामकर्मानुष्ठानादखिलपाप्ममलाविशुद्धिनिवृत्त्या परमसूक्ष्मतामापन्नेन बुद्ध्यपरपर्य्यायेण विशुद्धतमेन तेन सर्वभूतेषु गूढमनुप्रविष्टो जगत्पतिः परमात्मा दृश्यते सूक्ष्मदार्शिभिर्विवेकिभिरिति श्रुत्युपदेशो न विरुध्यते। परम्परया साधनेऽपि साक्षात्साधनवदुपदेशसम्भवात्। साक्षात्प्रत्यगात्मदर्शनसाधनत्वं च तस्य **"कश्चिद् धीरःप्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्"** (कठ० ४। १) **"एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश"** (मु० ३। १। ९) इत्यादिश्रुतिषु सुव्यक्तमाम्नायते। चक्षुरित्युपलक्षणम्। वाह्यविषयेभ्यः प्रत्यावृत्ताखिलेन्द्रिय इति तदर्थः। **ऐक्षत्**=ईक्षते विशुद्धेन मनसा पश्यति, **प्रत्यगात्मानं**= जीवात्मानम्। **अणुः**=अणुपरिमाणः, **आत्मा**=प्रत्यगात्मा, **चेतसा**= मनसेति श्रुतिपदार्थः। ननु **"आत्मेत्येवोपासीत"** (बृ० १। ४। ७) **आत्मानमेव लोकमुपासीत"** (बृ० १।४। १५) इत्यादौ ब्रह्मोपासनविधानेन तद्दर्शनस्यापि साक्षात् साधनं मनः कल्पयि-

तव्यम् । उभयोर्ज्ञानत्वाविशेषात् । न । भावनामयत्वात् । उपासनं हि मनोहेतुकं भावनामयं ज्ञानम् । तच्च परोक्षं नापरोक्षम् । सन्वाच्यायाः इच्छायाः कर्मभूतं ज्ञानं चापरोक्षम् । न च परोक्षेण तेनापरोक्षस्य तस्य साक्षात्साधनं मनः कल्पयितुं शक्यते । तस्मादत्र सन्प्रत्ययवाच्यायाः इच्छायाः कर्मभूतं ज्ञानं न मनोवृत्त्यात्मकं विवक्षितमिति युक्तमुच्यते ।

किमात्मकं तर्हि विवक्षितम् ? । अनुभवात्मकम् । अनुभवश्च प्रत्यगात्मनः स्वरूपभूतं चैतन्यं न किञ्चिदर्थान्तरम् । एष खलु नियमः यावत्प्रत्यगात्मा न साक्षात् क्रियते न तावद् ब्रह्मदर्शनमुपजायते । तस्य तन्नान्तरीयकत्वात् । प्रत्यगात्मदर्शननान्तरीयकं हि ब्रह्मदर्शनम् । न च यद् यन्नान्तरीयकं भवति तत् तदन्तरेण सम्पद्यते । नहि धूमध्वजनान्तरीयको धूमो धूमध्वजमन्तरेण सम्भवति । ब्रह्मदर्शनस्य च प्रत्यगात्मदर्शननान्तरीयकत्वं **"यः सर्वज्ञः सर्वविद् यस्यैष महिमा भुवि । दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः । मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय । तद्विज्ञानेन परिपश्यन्ति धीराः आनन्दरूपममृतं यद्विभाति"** (मु० २ । २ । ७) **"हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः"** (मु० २ । २ । ९) इत्यादिश्रुतिभ्योऽधिगम्यते । तत्र प्रत्यगात्मविज्ञानेन ब्रह्मविज्ञानस्य प्रत्यगात्मविदश्च ब्रह्मवेदनस्योपदेशात् । नहि तस्य तन्नान्तरीयकत्वाभावे तद्विज्ञानेन तद्विज्ञानं तद्विदश्च तद्वेदनं कथञ्चिदुपदेष्टुं शक्यते । **छान्दोग्योपनिषदि** च चरमप्रपाठके सप्तमखण्डमारभ्य शिष्यभावेनोपसन्नमिन्द्रं प्रति विधीयमानः प्रजापतेः पूर्वं प्रत्यगात्मतत्त्वोपदेशोऽपि भवत्यत्रैवार्थे सुदृढं लिङ्गम् । तत्रापि विविक्तात्मतत्त्वविज्ञानेन परमज्योतिषो ब्रह्मण उपसम्पत्तेः स्पष्टमाम्नानात् । **बृहदारण्यके** च मैत्रेयीयाज्ञवल्क्यसंवादोऽप्यत्रैवार्थे लिङ्गं वेदितव्यम् । एतच्च विस्तरेणाग्रे निरूपयिष्यामः । प्रत्यगात्मदर्शनं च वैदिककर्मानुष्ठानाद्रजस्तमोविशुद्धिहेतुनिखिलपाप्माविशुद्धिप्रक्षये विशुद्धेन चित्तसत्त्वेन दीर्घकालनै-

रन्तर्य्यसत्कारासेवितादन्तरङ्गबहिरङ्गभेदभिन्नात् साधनजाताभिष्पन्ने सम्प्रज्ञातभेदे निर्विचारनाम्नि समाधौ तावत् सञ्जायते **"तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति"** (कठ० २। १२) इति श्रुतेः। देवं=प्रत्यगात्मानं। ब्रह्मदर्शनं च तदनन्तरभाविनि निखिलवृत्तिनिरोधात्मके निर्विकल्पसमाधावुपजायते। यं किल योगशास्त्रविदो निर्बीजसमाधिमसम्प्रज्ञातसमाधिं चोदाहरन्ति। न चास्मिन्नसम्प्रज्ञाते समाधौ सम्प्रज्ञातसमाधाविव चित्तसत्त्वमवतिष्ठते। अपिच? निरुद्धाखिलवृत्ति सह निरोधसंस्कारैः स्वस्यां प्रकृतौ प्रविलीयते। प्रविलीने च तत्र तस्मिन् निरस्तसमस्तप्रकृतितत्कार्यसम्बन्धः स्वरूपप्रतिष्ठः पुमांस्तदानीं पुरस्तादुपस्थितं प्राणप्रियं विरहिणीव निजेनात्मना सर्वतः सुखमयं सर्वज्ञं सर्वशक्ति ब्रह्मानुभवति **"न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा। ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः"** (मु० ३। १। ८) **यदाऽऽत्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत्। अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः"** (श्वे० २। १५) इत्यादिश्रुतिभ्यः। एतमेवानुभवं खलु ब्रह्मविदः परविद्यानाम्ना व्याचक्षते **"अथ परा यया तदक्षरमधिगम्यते"** (मु० १। १। ५) इति। सोऽयमनुभवः सन्प्रत्ययवाच्याया इच्छायाः कर्म्म। एतस्मिन्नेव ब्रह्मगोचरेऽनुभवे सञ्जाते संसारदुःखबीजमविद्याद्यनर्थजातं विनिवर्तते। पुरुषश्च सर्वदुःखेभ्यो विनिर्मुक्तो ब्रह्मानन्दमनुभवन्नभयं पदं विन्दते। यत्रेदमाम्नातम् **"एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य"** (मु० २। १। १०) **भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे"** (मु० २। २। ५) परावरे=अवरेभ्यः प्रकृतिपुरुषेभ्यः परं परावरं तस्मिन्।

"आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचन" (तै० २ । ४) इति । तस्माद् युक्ता ब्रह्मजिज्ञासा ।

ननु यदिदं जिज्ञास्यं ब्रह्म तत्किं प्रसिद्धम्, आहोस्विदप्रसिद्धम्? । प्रसिद्धं चेन्न जिज्ञासेत । प्रसिद्धस्याजिज्ञास्यत्वात् । अप्रसिद्धं चेत् सुतरां न जिज्ञासेत । अप्रसिद्धस्य जिज्ञासितुमशक्यत्वात् । नह्यप्रसिद्धं किञ्चिद् जिज्ञासितुं शक्यते । तस्मादनुपपन्ना ब्रह्मजिज्ञासा । न । सामान्यतः प्रसिद्धत्वेऽपि विशेषतोऽप्रसिद्धत्वाज्जिज्ञासोपपत्तेः । तद्धि जिज्ञास्यते यत् खलु सन्दिह्यते । सन्दिह्यते च तदेव यत् सामान्यतः प्रसिद्धं सद् विशेषतो न प्रसिध्यति । तादृशं च ब्रह्म । तद्विशेषस्वरूपं प्रति विप्रतिपत्तेः । ब्रह्मणः खलु सामान्यस्वरूपेऽविप्रतिपद्यमाना अपि वादिनो विशेषस्वरूपे बहुधा विप्रतिपद्यन्ते । केचिदाहुः प्रत्यगात्मैव ब्रह्म, न जातु तस्मो व्यतिरिच्यते । दृश्यमानव्यतिरेकस्त्वाविद्यको न पारमार्थिकः । स एव चाविद्यासम्बन्धाज्जगतोऽभिन्ननिमित्तोपादानकारणम् । इतरे प्राहुः प्रत्यगात्मतो ब्रह्म व्यतिरिच्यते । तच्चास्मदादिवच्छरीरि कश्चित् स्थानविशेषमध्यास्ते । लक्ष्मीसहायं च जगतो जन्मादिहेतुः । अपरे व्याहरन्ति न शरीरि ब्रह्म किन्त्वशरीरि सर्वज्ञं सर्वशक्ति प्रकृतितत्कार्य्याणां जीवात्मनां चोत्पादने निरपेक्षं कारणं, तेषां कर्मफलप्रदाने च पुरुषविशेषार्जनसापेक्षम् । अन्ये तु सूक्ष्मधियः प्रकृतिपुरुषाधिष्ठानं सर्वज्ञं सर्वशक्ति सर्वतः पूर्णं सर्वनियन्तृ सर्वान्तर्य्यामि यथापुरुषकर्म्म जगतो जन्मादिनिमित्तमिति व्याचक्षते । विप्रतिपत्तेश्च संशयः । स च विशेषतो ब्रह्मस्वरूपज्ञाने सति निवर्तितुमर्हति । नान्यथा । तन्निवृत्तिश्चावश्यकी । संशयितोपादाने प्रयोजनासिद्धेः । प्रयोजनं च ब्रह्मज्ञानस्य निःश्रेयसम् । तच्चोक्तमधस्तात् । तस्मात्तत्प्राप्त्यर्थमुपपन्ना तावद् ब्रह्मजिज्ञासा ॥ १ ॥

जिज्ञास्यं ब्रह्मेत्युक्तम् । किंलक्षणं तदित्याकाङ्क्षायामाह—

**"जन्माद्यस्य यतः"** ॥ २ ॥

ब्रह्मेत्यधिक्रियते । अस्य—प्रत्यक्षादिसन्निधापितस्य लोकत्रयस्य जगतो

**जन्मादि**=जन्मोत्पत्तिः, आदिना स्थितिप्रलयौ गृह्येते, जन्म च स्थितिश्च प्रलयश्चेत्येतत् त्रयं, **यतः**=यस्मात् कारणाद् भवति, तद् ब्रह्मेत्यर्थः ।

जन्म–आदि–अस्य स्थित्यादेरिति तद्गुणसंविज्ञानो बहुव्रीहिः । जन्मस्थितिप्रलयं च समासार्थः । नपुंसकैकवचनप्रयोगस्तु जन्मस्थितिप्रलयानां समुदायो लक्षणं नत्वेकैकमिति ज्ञापनाय लाघवाय च प्रतिपत्तव्यः । **यास्क**परिपठिताः "**जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यति**" ( नि० १ । १ । २ ) इति षड् भावविकारास्तु जगज्जन्मानन्तरभाविनो यथायथमेष्वेव त्रिष्वन्तर्भवन्ति, तस्मान्न तेऽत्र जन्मादिना परिगृह्यन्ते । यथाक्रमं जन्मादित्रयग्रहणं चेह "**यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म**" ( तै० ३ । १ ) इति श्रुतिनिर्देशापेक्षं वेदितव्यम् । अत्र हि "**यतो वा इमानि भूतानि जायन्ते**" इति जन्म, "**येन जातानि जीवन्ति**" इति जीवनं स्थितिः, "**यत्प्रयन्त्यभिसंविशन्ति**" इत्यभिसंवेशनं प्रलयश्च क्रमेण प्रत्यक्षं निर्दिश्यते । यथाश्रौतनिर्देशं च सूत्रेऽपि तद्ग्रहणं युक्तम् ।

"**अस्य**"इति सर्वनाम्ना नामरूपाभ्यां व्याकृतं नानाकर्तृभोक्तृसंयुक्तं प्रतिनियतदेशकालनिमित्तक्रियाफलाधिकरणं मनसाऽप्यचिन्त्यरचनारूपं प्रत्यक्षानुमितं लोकत्रयात्मकं जगद्धर्मि निर्दिश्यते । षष्ठ्या च तस्य जन्मादिधर्मत्रयसम्बन्धः । तस्यास्तत्र विहितत्वात् । न च धर्मिणो जगतः प्रवाहतोऽनादित्वेऽपि स्वरूपतोऽनादित्वं सम्भवति । सावयवत्वात् । नहि सावयवं चानादि चेति युज्यते । तस्मान्नास्ति तस्य तत्सम्बन्धानुपपत्तिः ।

"**यतः**" इति जगज्जन्मादिकारणनिर्देशः । तच्चेह निमित्तं विवक्षितं नोपादानकारणम् । **चेतनस्योपादानकारणत्वासम्भवात्** । चेतनो हि निमित्तकारणं सम्भवति नोपादानकारणम् । **परिणामित्वप्रसङ्गात्** । यत् खलु कार्य्याकारेण परिणमते तदुपादानकारणम्,

यदधिष्ठितं च तत् तथा परिणमते तन्निमित्तकारणमिति व्यपदिश्यते । न च ब्रह्म जगदाकारेण परिणमते । परिणमेत चेत्? परिणामि प्रसज्येत । कूटस्थनित्यं चाभ्युपेयते । न च कूटस्थनित्यस्य परिणामो घटते । स्वरूपच्युतिर्हि परिणामः । नहि कूटस्थनित्यं कदाचित् स्वरूपात् प्रच्यवते । न च प्रच्यवमानं वा पुनः कूटस्थनित्यतां भजते । **सारूप्याभावाच्च ।** यत् खलु यदुपादानकं तस्य तत्सारूप्यमुपलब्धं, यथा मृदुपादानकस्य कुम्भादेर्मृत्सारूप्यं, सुवर्णोपादानकस्य रुचकादेश्च सुवर्णसारूप्यम् । न चैवं जगतो ब्रह्मसारूप्यमुपलभ्यते । चेतनं विशुद्धं हि ब्रह्म । ततो विरुद्धमचेतनमविशुद्धं च जगत् । न च तयोः सारूप्याभावे परस्परं प्रकृतिविकारभाव उपपद्यते । सारूप्यनिबन्धनो ह्यसौ सर्वत्र कल्पयितव्यो भवति न वैरूप्यनिबन्धनः । निमित्तनैमित्तिकभावकल्पने तु नास्ति काचिदनुपपत्तिः । तत्र सारूप्याभावस्य सर्वतन्त्रसिद्धत्वात् । नहि कुम्भादीनां कुम्भकारादिसारूप्यं केनचिदभ्युपगम्यते । **दृष्टत्वाच्च ।** यत्र खलु चेतनं कारणं दृष्टं तत्र निमित्तकारणमेव दृष्टं नोपादानकारणम् । ब्रह्मापि चेतनं तेनापि यथादृष्टं निमित्तकारणेनैव भवितव्यं नोपादानकारणेन । दृष्टविरुद्धकल्पनस्यान्याय्यत्वात् । नहि दृष्टविरुद्धकल्पनं न्याय्यं मन्यन्ते तर्ककोविदाः । तस्मान्निमित्तकारणं जगतो ब्रह्म नोपादानकारणमिति सम्यग् विवक्षितम् ।

**ननु** नेदं सम्यग् विवक्षितं प्रतिभाति, "यतः" इति पञ्चम्याः प्रकृतिलक्षणेऽपादाने विधानात् । अस्ति तावद् **"जनिकर्तुः प्रकृतिः"** ( अष्टा० १ । ४ । ३० ) इति पाणिनीयं सूत्रम् । तेन जन्मवतोऽर्थस्य प्रकृतेरपादानसंज्ञायाम् **"अपादाने पञ्चमी"** ( अष्टा० २ । ३ । २५ ) इति पञ्चमी विभक्तिर्विधीयते । प्रकृतिश्चोपादानकारणं प्रसिद्धम् । न च तत्र विधीयमाना पञ्चमी विभक्तिर्निमित्ते व्याख्यातुं शक्यते । विहितातिक्रमप्रसङ्गात् । **न** । तत्र प्रकृतिशब्दस्य कारणमात्रपरत्वेन दोषाभावात् । कारणमात्रपरो ह्यत्र प्रकृतिशब्द उपादीयते, नोपादानकारणपरः । अन्यथा **"तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे"** (ऋ०

८।४।१८।९) **"आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः"** (मनु० ३ । ७६) **"पुत्रात् प्रजायते मोदः सुधनाज्जायते सुखम्"** इत्यादिप्रयोगानुपपत्तेः । नहि यज्ञादित्यपुत्रादय ऋग्वृष्टिमोदादीनामुपादानकारणानि भवन्ति । भवति च तेभ्यः **"जनिकर्तुः प्रकृतिः"** (अष्टा० १ । ४ । ३० ) इति प्रकृतिलक्षणेऽपादाने पञ्चमी विभक्तिः । अत एवोक्तं वृत्तौ **"पुत्रात् प्रमोदो जायते, इत्यादावनुपादानेऽपि पञ्चमीदर्शनात् प्रकृतिपदं हेतुमात्रपरम्"** इति । न्यासेऽपि च **"असति प्रकृतिग्रहण उपादानस्यैवापादानसंज्ञा स्यात् प्रत्यासत्तेर्नेतरस्य । प्रकृतिग्रहणात् कारणमात्रस्य भवतीति प्रकृतिपदमनुपादानेऽप्यपादानसंज्ञासिद्ध्यर्थम्"** इति । महाभाष्ये तु **"अयमपि योगः शक्योऽवक्तुम् । कथं गोमयाद् वृश्चिको जायते गोलोमाविलोमभ्यो दूर्वाः जायन्त इति । अपक्रामन्ति तास्ताभ्यः"** इत्यादिना गोलोमादीनां दूर्वादीन् प्रत्यवधित्वात् **"ध्रुवमपायेऽपादानम्"** (अष्टा० १ । ४ । २४ ) इत्यनेनैवापादानसंज्ञासिद्धेरनारम्भणीयं सूत्रमिति सूत्रमिदं प्रत्याख्यातम् । सूत्रकृता च **"हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः"** (अष्टा० ४ । ३ । ८१ ) इति हेतोर्मनुष्याच्च विकल्पेन रूप्यप्रत्ययविधौ **"तत आगतः"** (अष्टा० ४ । ३ । ७४) इति प्रकृतस्य पञ्चम्यर्थस्य हेतोरिति विशेषणमुपाददानेन हेतावपि पञ्चमी विभक्तिर्भवतीति स्फुटं विज्ञाप्यते । तस्मात् "नेदं सम्यग् विवक्षितं प्रतिभाति" इति यत्किञ्चिदेतत् ।

**ननु** किमर्थमिदं सूत्रम् ? अनुमानोपन्यासार्थमाहोस्विच्छ्रुतिवाक्यसमन्वयार्थम् ? । अनुमानोपन्यासार्थमिति चेत् । न । तस्य सामान्यमात्रगोचरत्वेन विशेषाप्रतिपत्तेः । सम्बन्धग्रहणाधीनजन्म ह्यनुमानम् । न च सम्बन्धग्रहणं विशेषतो युज्यते । जगतः प्रत्यक्षत्वेऽपि ब्रह्मणोऽप्रत्यक्षत्वात् । न च सामान्यतः सम्बन्धग्रहणे विशेषप्रतिपत्तिरुपपद्यते । यद्गोचरः सम्बन्धो गृह्यते तदधीनजन्मनोऽ-

नुमानस्यापि तद्गोचरत्वनियमात् । नहि "विवादाध्यासितास्तनुतरुमही-धरादयः उपादानाभिज्ञकर्तृकाः उत्पत्तिमत्त्वादचेतनत्वाद्वा प्रासादादिवत्" इति प्रवृत्तेनानुमानेन विशेषप्रतिपत्तिरुपजायते । अपेक्ष्यते च विशेष-प्रतिपत्तिः । तस्मान्नानुमानोपन्यासार्थं सूत्रम् । श्रुतिवाक्यसमन्वयार्थमिति चेत् ? तदा वक्तव्यं किं तच्छ्रुतिवाक्यमस्ति यत्समन्वयार्थं सूत्रमिद-मभिधत्से ? **"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व-तद्ब्रह्म"** (तै० ३ । १ ) इत्यादिश्रुतिवाक्यमिति चेत् । न युक्त-मुच्यते । निर्देशाप्रतिपत्तेः । "यत्प्रयन्त्यभिसंविशन्ति" इत्यभिदधता खलु श्रुतिवाक्येन जगतो जन्मस्थितिप्रलयानामाश्रयो ब्रह्मेति स्पष्टमवबोध्यते । न च तस्य निमित्तकारणत्वे ते तदाश्रया उपपद्यन्ते । लोके तेषां निमि-त्तकारणाश्रयत्वस्यानुपलब्धेः । उपादानकारणे हि कार्य्यमुत्पद्यमानमवतिष्ठ-मानं प्रविलीयमानं च सर्वत्रोपलभ्यते, न निमित्तकारणे । नहि कुम्भ-कारे कुम्भस्तावदुत्पद्यमानोऽवतिष्ठमानः प्रविलीयमानश्च क्वचित् केन-चिद्दृश्यते । तत्कथं प्रतिपद्येमहि "यतः" इति पञ्चम्या निमित्तकारणं जगतो ब्रह्म निर्दिश्यते नोपादानकारणमिति । **अत्राचक्ष्महे** । न खल्वस्माभिः कुम्भस्य कुम्भकार इव जगतो निमित्तकारणं ब्रह्मा-स्थीयते, येन तस्य जगज्जन्माद्याश्रयत्वानुपपत्त्या निर्देशाप्रतिपत्तिः स्यात् । अपिच ? ततो विलक्षणम् । कुम्भकारो हि स्वतो विभक्तामन्याधारां च मृदमधिष्ठाय करादिव्यापारेण कुम्भं निष्पादयति, ब्रह्म च स्वाविभक्तां स्वाधारां च प्रकृतिमधिष्ठाय सङ्कल्पमात्रेण जगदेतदुत्पादयति । यदधि-ष्ठानेन यदविभक्ता यदाधारा च सती प्रकृतिर्यथासमयं नानाविधमुच्चावचं जगदेतत् सम्प्रसूते न श्रुतिवाक्येन तदाश्रयतयाऽवगम्यमानाः जगतो जन्मस्थितिप्रलयाः खलु कथञ्चिद्विरुध्यन्ते । शरीराश्रयकर्मणामात्माश्रय-त्ववत् प्रकृत्याश्रयजगज्जन्मस्थितिप्रलयानामपि ब्रह्माश्रयत्वस्य वक्तुं शक्य-त्वात् । यथाह्यात्माविभक्तमात्माधारं च शरीरमाश्रयन्त्यपि कर्माण्यात्माश्र-याण्युच्यन्ते तथा प्रकृत्याश्रयाः सन्तोऽपि जगतो जन्मस्थितिप्रलयाः

ब्रह्माश्रयाः वक्तुं शक्यन्ते । प्रकृतेरपि शरीरवदविभागेन ब्रह्मण्यवस्थानस्याभ्युपगमात् । **या** खलु संसारबीजभूतानां सत्त्वरजस्तमसां प्रकाशक्रियास्तम्भनशक्तीनां काचित् साम्यावस्था यस्यामेताभिरेताः शक्तयः समानशक्तितामापद्यन्ते सा परमसूक्ष्मा महाशक्तिः प्रकृतिरिति परिभाष्यते । सा च सृष्टेः प्राक् प्रलयवेलायां निर्व्यापारा सती सह विज्ञानात्मभिः सर्वैः सर्वं स्थूलं सूक्ष्मं च जगदन्तर्भाव्य पुनः सार्धं जननीयात्मस्वामिनि भगवति ब्रह्मण्यविभागेनावतिष्ठते । यत्रेदमाम्नानम् **"वेनस्तत्पश्यन्निहितं गुहासद् यत्र विश्वं भवत्येकनीडम्"** (यजु० ३२ । ८) **"ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्"** (श्वेता० १ । १) इति । **वेनः**= विवेकी । **स्वगुणैः**= सहार्थे तृतीया, यथा हि प्रकृतिर्ब्रह्मप्रति गुणभूता तथा विज्ञानात्मनः प्रत्यपि । भोग्यत्वात् । अतः स्वा प्रकृतिर्गुणो येषां ते स्वगुणाः विज्ञानात्मानः, तैः सह, निगूढां=ब्रह्मण्यविभागेन स्थिताम् । वक्ष्यति च **"भूतेषु तच्छ्रुतेः"** (वे० ४ । २ । ५) **"तानि परे तथा ह्याह"** (वे० ४ । २ । १५) **"अविभागो वचनात्"** (वे० ४ । २ । १६) इति । तत्र तथाऽवस्थानाच्चैषा स्वरूपतो विद्यमानाऽपि सह विज्ञानात्मभिरप्रधानत्वाद् दुग्धे शर्करावत्, क्षीरे च नीरवत् समुद्रे च नदीवत्, सौर्यतेजसि च नक्षत्रतेजोवन्न व्यवहारगोचरतामापद्यते । व्यवहारस्य सर्वत्र प्रधानगोचरत्वनियमात् । तथा च वक्ष्यति **"वैशेष्यात्तु तद्वादस्तद्वादः"** (वे० २ । ४ । २२) इति । **वैशेष्यात्**= प्राधान्यात् । प्रधानं च तदा ब्रह्मैव भवति, नान्तर्भावितविज्ञानात्मपुरुषा प्रकृतिः । **मन्त्रवर्णात् तथैवावगतेः** । अस्ति तावद् **"न मृत्युरासीदमृतं न तर्हि न राज्या अह्न आसीत् प्रकेतः । आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास"** (ऋ० ८ । ७ । १७ । २) इति मन्त्रवर्णः । तत्र हि प्रलयवेलायां चेतनाचेतनात्मनो विश्वस्य जगतोऽन्तर्धारणात् प्राप्तसुधासंज्ञा प्रकृतिः **"स्वधया"** इति तृतीयया विभक्त्या, ब्रह्म च **"एकम्"** इति प्रथमया विभक्त्या

निर्दिश्यते। न च तयोरुभयोरेवंनिर्देशः परस्परं प्रधानाप्रधानभावाभाव सम्भवति। तृतीयाया अस्या अप्रधानार्थादन्यत्र लापयितुमशक्यत्वात्। नहि तृतीयेयं करणाद्यर्थेषु कथञ्चिल्लापयितुं शक्यते। स्मर्य्यते चाप्रधानार्थेऽपि **"सहयुक्तेऽप्रधाने तृतीया"** (अष्टा० २। ३। १९) इति तृतीया विभक्तिः। तस्मादवगम्यते नूनं तदानीं ब्रह्मैव प्रधानं भवति न खलु जगद्गर्भा प्रकृतिः। अत एव च तदैकस्य ब्रह्मण एवावस्थानं तत एव च सृष्टिवेलायां जगतो जन्मस्थितिप्रलयास्तदात्मकमेव चेदं सर्वं जगदित्युपनिषत्सु वेदेषु च सविस्तरमाम्नायते **"आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत्"** (ऐ० १।१) **"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"** (छा० ६। २। १) **"आत्मैवेदमग्र आसीत पुरुषविधः"** (बृ० १। ४। १) **"एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्य्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्"** (मा० ६) **"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति"** (तै० ३। १) **"सर्वाणि वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो ह्येभ्यो ज्यायानाकाशः परायणम्"** (छा० १। ९। १) **"ब्रह्मैवेदं विश्वम्"** (मु० २। २। ११) **"सर्वं खल्विदं ब्रह्म"** (छा० ३। १४। १) **"आत्मैवेदं सर्वम्"** (छा० ७। २५। २) **"पुरुष एवेदं सर्वम्"** (ऋ० ८। ४। १७। १) **"स एव जातः स जनिष्यमाणः"** (यजु० ३२। ४) इति। न च तत्र "एक एव, सदेव, आत्मैव" इत्यवधारणेन ब्रह्मणः प्रकृत्याद्यन्ययोगो व्यवच्छिद्यते। तस्य श्रुत्या स्वयमवबोधितत्वेन व्यवच्छेत्तुमशक्यत्वात्। इदंशब्दोदितां सह विज्ञानात्मभिः सकार्य्यां प्रकृतिं हि ब्रह्मसामानाधिकरण्येन निर्दिशन्ती श्रुतिर्ब्रह्मणस्तद्योगं तावत् स्पष्टमवबोधयति। स च कल्पनीयव्यवच्छेदापेक्षया श्रुतिमूलत्वात् प्रबलो विद्यते। अतो नासौ व्यवच्छेत्तुं शक्यते। **नित्यसिद्धत्वाच्च।**

नित्यं खलु ब्रह्म **"नित्यो नित्यानाम्"** ( कठ० ५ । १३ ) **"नित्यं विभुं सर्वगतं सुसूक्ष्मम्"** (मु० १ । १ । ६) **"सत्यं ह्येव ब्रह्म"** (बृ० ५।४।१) **"ब्रह्मवादिनो हि प्रवदन्ति नित्यम्"** ( श्वे० ३ । २१ ) इत्यादिश्रुतिभ्यः । तस्य नित्यत्वे च तदैश्वर्य्येणापि नित्येन भवितव्यम् । अन्यथा तस्य कदाचिदनीश्वरत्वापत्तेः । ऐश्वर्यं च तस्य चेतनाचेतनात्मकं जगदिदं हित्वा नान्यत्किञ्चिदभिधातुं शक्यते । अनुपलम्भात् । वेदोपनिषत्सु च तस्यैव तदैश्वर्य्यत्वेन सङ्कीर्तनात् **"यो विश्वस्य जगतः प्राणतस्पतिः"** ( ऋ० १ । ७ । १२ । ५ ) **"यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव"** ( ऋ० ८ । ७ । ३ । ३ ) **"यो भूतं च भव्यं च सर्वं यश्चाधितिष्ठति"** ( अथ० १० । ८ । ४ । १ ) **"स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा"** ( बृ० २ । ५ । १५ ) **"सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च"** ( बृ० ५ । ६ । १ ) इति । तच्च विज्ञानात्मसहिता प्रकृतिरेवापद्यते नान्यत् किञ्चित् । तस्य नित्यत्वे च ब्रह्मणस्तद्योगोऽपि नित्य एव सिध्यति । ईशेशितव्ययोर्नित्यत्वे तद्योगनित्यत्वस्याप्यावश्यकत्वात् । अन्यथा तयोस्तद्भावानुपपत्तेः । नित्यसिद्धस्य च व्यवच्छेदासम्भव इति नासौ व्यवच्छेत्तुं शक्यते । **नित्ययोगत्वाच्च** । नित्यज्ञानस्वरूपं हि ब्रह्म **"सत्यं ज्ञानमनन्तं ब्रह्म"** ( तै० २ । १ ) **"प्रज्ञानं ब्रह्म"** ( ऐ० ३ । १ ) **"विज्ञानमानन्दं ब्रह्म"** ( बृ० ३ । ९ । १८ ) इत्यादिश्रुतिभ्यः । तस्य नित्यज्ञानस्वरूपत्वे च तज्ज्ञानकर्मणाऽपि नित्येन भवितव्यम् । ऋते कर्मणो ज्ञानासिद्धेः । नहि किञ्चिज्ज्ञानमृते कर्म्मणः सिध्यति । न च तत्कर्म्म प्रकृतिपुरुषाभ्यामन्यत् किञ्चिद् वक्तुं शक्यते । **"यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः"** ( मु० १ । १ । ९ ) इत्यादौ श्रुत्यन्तरे चेतनाचेतनोभयवाचिना सर्वशब्देन तयोरेव तज्ज्ञानकर्मतयाऽभिधानात् । अथ मन्यसे ज्ञानस्वरूपं ब्रह्म, सर्वज्ञं च ब्रह्मेति

द्वयं विप्रतिषिध्यते, ज्ञानस्य ज्ञानाश्रयत्वासम्भवादिति । **न** । प्रकाशवदुभयस्याप्युपपत्तेः । यथा हि प्रकाशस्वरूपः सन्नपि प्रकाशः प्रकाश्यसंयोगात् प्रकाशक इति व्यपदिश्यते, तथा ज्ञानस्वरूपं सदपि ब्रह्म सर्वज्ञेयसंयोगात् सर्वज्ञमिति व्यपदेष्टुं शक्यते । स्वरूपापेक्षया हि ब्रह्म ज्ञानमात्रं कर्मयोगापेक्षया च सर्वज्ञमिति द्वयं तत्र प्रकाशवत् सुखेनोपपद्यते । नास्ति कश्चिद्विरोधः । कर्मयोगश्च नित्यः । ब्रह्मवत् कर्म्मणोः प्रकृतिपुरुषयोरपि नित्यत्वात् । अतो नासौ व्यवच्छेत्तुं शक्यते । किन्तर्ह्यवधारणेन व्यवच्छिद्यते ? अयोग इति ब्रूमः । विधेयेन सङ्गतस्य तस्योद्देश्यायोगव्यवच्छेदकत्वस्यैव युक्तत्वात् । इह हीदंशब्दवाच्यं प्रकृतिपुरुषात्मकं निखिलं जगत् सृष्टेः प्राग् ब्रह्मैवासीदित्युपदेशादुद्देश्यं तावज्जगद् विधेयं च ब्रह्मेति स्फुटमवगम्यते । तत्र विधेयेन सङ्गतः खल्वेवकारस्तस्योद्देश्यायोगमेव व्यवच्छेत्तुमर्हति न तद्योगम् । तदानीं तद्योगाभावे तस्य विधेयात्मकत्वाभिधानानुपपत्तेः । नहि प्रलयवेलायां जगद्योगाभावे तस्य ब्रह्मात्मकत्वाभिधानमुपपद्यते । अयोगश्चेह विभागो विवक्षितः । सुषुप्तिमोक्षयोरिव प्रलयवेलायामपि विज्ञानात्मनः पुरुषस्य सविकारायाश्च प्रकृतेर्ब्रह्मण्यविभागस्यैव श्रवणात् । **यथा** हि सुषुप्तौ मोक्षे च विज्ञानात्मनः पुरुषस्य सविकारायाः प्रकृतेश्च ब्रह्मण्यविभागः श्रूयते

**"स यथा सोम्य! वयांसि वासोवृक्षं सम्प्रतिष्ठन्ते । एवं ह वै तत्सर्वं पर आत्मनि सम्प्रतिष्ठते । ७ । पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च, तेजश्च तेजोमात्रा च, वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च, चक्षुश्च द्रष्टव्यं च, श्रोत्रं च श्रोतव्यं च, घ्राणं च घ्रातव्यं च, रसश्च रसयितव्यं च, त्वक् च स्पर्शयितव्यं च, वाक् च वक्तव्यं च, हस्तौ चादातव्यं चोपस्थश्चानन्दयितव्यं च, पायुश्च विसर्जयितव्यं च, पादौ च गन्तव्यं च, मनश्च मन्तव्यं च, बुद्धिश्च बोद्धव्यं चाहंकारश्चाहंकर्तव्यं च, चित्तं च चेतयितव्यं च, तेजश्च विद्योतयितव्यं च, प्राणश्च**

विचारयितव्यं च । ८ । एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः। स परेऽक्षरे आत्मनि सम्प्रतिष्ठते । ९ ।" (प्रश्न० ४ । ७-८-९) "यत्रैतत् पुरुषः स्वपिति नाम, सता सोम्य! तदा सम्पन्नो भवति, स्वमपीतो भवति, तस्मादेनं स्वपितीत्याचक्षते, स्वं ह्यपीतो भवति" (छा० ६ । ८ । १) "यत्रैष एतत् सुप्तोऽभूद् य एष विज्ञानमयः पुरुषः । तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते" (बृ० २ । १ । १७) न तु तद्द्वितीयमस्ति ततोऽन्यद् विभक्तं यत् पश्येत्" (बृ० ४ । ३ । २३) "गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु । कर्माणि विज्ञानमयश्चात्मा परेऽव्यये सर्व एकीभवन्ति" (मु० ३ । २ । २७) इति । तथा प्रलयेऽपि श्रूयते "स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति, भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति, भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते, स एषोऽकलोऽमृतो भवति" (प्र० ६ । ५) इति । न च श्रूयमाणे तस्मिन् तत्प्रतिद्वन्द्विनो विभागस्य व्यवच्छेदो विरुध्यते । समानविषयासु श्रुतिष्वेकत्र श्रुतस्यार्थस्य श्रुत्यन्तरेऽवधारणस्यौचित्यात् । "एकीभवन्ति" इत्यभूततद्भावे च्विप्रत्ययः । तेनाविभक्ता भवन्तीति तदर्थो वेदितव्यः । पूर्वं विभागवेलायामभूतस्यासिद्धस्याविभागस्यैव प्रलयवेलायां वक्तव्यत्वात् । "यथा गार्ग्य ! मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिन् तेजोमण्डल एकीभवन्ति" (प्र० ४ । २) इति श्रुत्यन्तरेऽविभागस्यैव तदर्थत्वोपलम्भाच्च । एवं नामरूपभेदनपूर्वकोऽस्तंभावोऽप्यविभाग एव प्रत्येतव्यो न तु तत्त्वतो नाशः "अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः (प्र० ६ । ६)

इत्युदाहृतश्लोके कलाप्रतिष्ठाया अभिधानात् । प्रतिष्ठा च तत्त्वतः सत एव सम्भवति न तु तत्त्वतो नष्टस्य । अविभागे च न किञ्चित् तत्त्वतो नश्यतीति युक्तोऽयं वैदिको राद्धान्तः । यत्रेदमाम्नायते **"असच्च यत्र सच्चान्तः"** (अथ० १० । ७ । १० ) इति । एतेन **"एकमेवाद्वितीयम्"** इत्यपि व्याख्यातं वेदितव्यम् । तत्रापि सजातीयादिविभागत्रयस्यैवैकमादिपदत्रयेण निराकरणात् । साम्प्रदायिकैः खलु सजातीयविभागः, विजातीयविभागः, स्वगतविभागश्चेति त्रिविधो विभागो व्याख्यायते । तत्र विज्ञानात्मविभागः सजातीयविभागः । चैतन्येन विज्ञानात्मनां ब्रह्मसमानजातीयत्वात् । सकार्यप्रकृतिविभागो विजातीयविभागः । प्रकृतेर्जडत्वेन ब्रह्मविजातीयत्वात् । **"पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि"** ( ऋ० ८ । ४ । १७ । ३ ) इत्याम्नातः स्वस्य पादैर्विभागः स्वगतविभागः । स्वमात्रगतत्वात् । त्रयाणां चैषां यस्तावत् प्रथमः स एकमिति पदेन, यश्च मध्यमः सोऽद्वितीयमिति पदेन, यस्तु चरमः सोऽवधारणेन निराक्रियते । **"अस्य गोर्द्वितीयेनार्थ इति गौरेवानीयते, नाश्वो न गर्दभः"** ( अष्टा० २ । ३ । ४ ) इति महाभाष्यकृद्वचनाद् द्वितीयपदस्य समानजातीयपरत्वेऽद्वितीयमिति पदेन वा सजातीयविभागः, शिष्टेन पदद्वयेन चावशिष्टं विभागद्वयं परिह्रियते । सर्वथा विभागत्रयप्रतिषेध एव वाक्यार्थ इति युक्तमुत्पश्यामः ।

केचित्तु सजातीय-विजातीय-स्वगतभेदप्रतिषेधो वाक्यार्थ इति व्याहरन्ति । तन्न रमणीयम् । **"यथा सोम्य ! मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान् समवहारमेकतां रसं गमयन्ति । १ । ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीति, एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पद्यामह इति । २ । त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा मशको वा यद् यद् भव-**

न्ति तद् आभवन्ति । ३ ।" ( छां० ६ । ९ ) इत्यादिश्रुत्या सृष्टेः प्रागविभागस्यैव प्रतिपत्तेः । नहि यथाऽनया श्रुत्या चेतनाचेतनात्मनः सर्वस्य सहेतुकस्य जगतस्तदानीमविभागः प्रतिपद्यते तथा तदभेदोऽपि कयाचित् प्रतिपद्यते । न चास्या अभेदपरत्वे "यथद् भवन्ति तद् आभवन्ति" इत्युक्तिः कथञ्चित् सङ्गच्छते । अविभागे तु नास्ति काचनानुपपत्तिः । सत्यपि तस्मिन् स्वरूपसत्ताया अभ्युपगमात् । अविभागो हि भेदगर्भोऽभेदप्रतिभासोऽभ्युपेयते । यत् किल पदार्थतत्त्वविदो लक्षणानन्यत्वमात्रमित्युदाहरन्ति । लौकिकाश्चात्यन्तमिश्रणमिति व्यवहरन्ति ; न तु तत्त्वतो नाशः । अत एव च प्रकृत्याश्रयं सदपि जगतो जन्मादिकं ब्रह्माश्रयं श्रावयन्त्यः सृष्टिश्रुतयोऽपि सम्यगुपपद्यन्ते । समानो हि नः सर्वदर्शनेषु जगतः सृष्टिक्रमः । स यथा वैशेषिके न्याये चाख्यायते न ततो विलक्षणः सांख्ये योगे चाम्नायते । अपि च ! यथा सांख्ये योगे च प्रतिपाद्यते तथैव वैशेषिके न्याये मीमांसायां वेदान्ते च व्युत्पाद्यते । ब्रह्मणि हि सह विज्ञानात्मभिरविभागेनावस्थिता तावत् प्रकृतिः पूर्वं तपःसमाख्यानात् तदभिध्यानाद् जगद्गर्भं धारयन्ती गर्भिणीव कुलवधूरुपचीयते । यत्रेदमाम्नातम् "तपसा चीयते ब्रह्म" ( मुं० १ । १ । ८ ) इति । ब्रह्म=प्रकृतिः । गर्भस्य च पूर्वावस्थायामम्मयत्वात् तद्बहुलेयं तदानीं वैदिकैरविति नाम्ना सलिलमिति नाम्ना च परिभाष्यते । यत्रेदमुदाहृतं भवति "तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे । अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः" ( ऋ० ८ । ३ । १७ । ६ ) "महद्यक्षं भुवनस्य मध्ये तपसि क्रान्तं सलिलस्य पृष्ठे । तस्मिन् श्रयन्ते य उ के च देवा वृक्षस्य स्कन्धः परित इव शाखाः" ( अथ० १० । ४ । ७ । ३८ ) इति । आपः=प्रकृतिः । जगद्गर्भधारणेनोपचीयमानायाश्चास्याः यथानियमं यत् किल प्रथमं नितान्तनिर्मलं सत्त्वमयं सत्वाख्यं बृहत्तत्त्वमुपजायते तद् वैदिकैः सृज्यमानमाणिमात्रोपभोगसाधनत्वाद् "अन्नम्" इति, बृहत्त्वाच "महद्" इति

व्याख्यायते । महत्तत्त्वाच्च तस्मादहङ्कारस्ततः पञ्चतन्मात्राणि सूक्ष्मभूतानि, तेभ्यश्च "शब्दतन्मात्रादाकाशं, तत्राविभागेनावस्थितात् स्पर्शतन्मात्राद् वायुः, वायावविभागेनावस्थिताद् रूपतन्मात्रात् तेजः, तेजस्यविभागेनावस्थिताद्रसतन्मात्रादापः, अप्स्वविभागेनावस्थिताद् गन्धतन्मात्रात् पृथिवी" इति क्रमेणाकाशादीनि पञ्च स्थूलभूतान्युत्पद्यन्ते । भूतेभ्यश्च लोकाः । यत्रेदं श्रूयते "**ऋतं च सत्यं चाभीद्धात् तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः ।१। समुद्रादर्णवादधि संवत्सरो अजायत । अहोरात्राणि विदधद् विश्वस्य मिषतो वशी ।२। सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः ।३।**" (ऋ० ८।८।४८) इति । "**तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात् प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्**" (मु० १।१।८) इति च । कर्मफलमृतम् । "**ऋतं पिबन्तौ सुकृतस्य लोके**" (कठ० ३ । १) इति श्रुतेः । अत्र तद्ग्रहणेन तद्धेतुर्गृह्यते । हेतौ हेतुमत्प्रयोगात् । यत्रेदं वक्ष्यति "**फलमत उपपत्तेः**" (वे० ३।२।३८) इति । यत्स्वरूपतो धर्म्मतश्च कालत्रयेऽपि न बाध्यते, तत्सत्यम् । यदृतं च सत्यं च ब्रह्म तत्सृष्टेः पूर्वमासीदिति शेषः । "**सदेव सोम्येदमग्र आसीत्**" (छां० ६ । २ । १) इति श्रुतेः । "**सत्यम्**" इत्यनेनैव निर्वाहे तदानीं भोक्तृभोग्यसाहित्यसूचनार्थम् "**ऋतम्**" इत्युपादीयते । चकारद्वयं च तदविभागसूचनपरम् । तस्य भगवतो ब्रह्मणस्तपसः="**तदैक्षत बहु स्यां प्रजायेय**" (छां० ६ । २ । ३) इति सङ्कल्पगर्भात् पर्यालोचनात्मकात् ज्ञानात् "**यस्य ज्ञानमयं तपः**" (मु० १ । १ । ९) इति श्रुतेः, **अभीद्धात्**=गर्भेण गर्भिण्या इवाभितः सर्वत इद्धात्-कर्तरि क्तः, उपचीयमानान्मूलकारणात् प्रकृतेः **अधि**=कार्य्यजातस्योपरि वर्तमानमाद्यकार्य्यं महत्तत्त्वमजायत-उदपद्यत । **ततः**=तस्मान्महत्तत्त्वात्, **रात्री**=रजस्तमोबहुलत्वाद् रात्रीकल्पोऽहङ्कारोऽजायत । **ततः**=अहङ्काराद्, **समुद्रः**=स्था-

निनि स्थानप्रयोगः, समुद्रेऽन्तरिक्षे दोधूयमानं सूक्ष्मभूतजातं, तद्विशेषणमर्णवः=अर्णांसि स्थूलभूतानि विद्यन्तेऽस्मिन्निति तथा, समुद्रादर्णवाद् अधि= उपरिष्टात्, **संवत्सरः**=स्थूलभूतवर्गः, संवसन्ति प्राणिनोऽस्मिन्निति तद्व्युत्पत्तेः, अजायतेति शेषः । **मिषतः**=उपलक्षणमेतत्, मिषतोऽमिषतो विश्वस्य जगतो, **वशी**=स्वामी, **धाता**=विधाता परमात्माऽहोरात्राणि **विदधद्**—विधास्यमानो, **यथापूर्वं**=यथापूर्वकल्पं, **सूर्याचन्द्रमसौ**=सूर्यं चन्द्रमसं च, **अकल्पयत्**=उदपादयत् । **दिवं**=द्युलोकं, **पृथिवीं**= पृथिवीलोकम्, **अन्तरिक्षं**=मध्यमं लोकं चाकल्पयत् । स्वरिति चान्तरिक्षविशेषणं, सर्वार्थे वा पृथक् पदम् ( ऋ० ८ । ८ । ४८ ) **तपसा**= अभिध्यानेन, **चीयते**=उपचीयते—अभिवर्द्धते, **अन्नं**=महत्तत्त्वम् । **प्राणः**=कारणे कार्य्यप्रयोगः, अहङ्कारः । **मनः**=सेन्द्रियं मनः, **सत्यं**=सद्भावमापन्नं स्थूलसूक्ष्मभूतजातमिति श्रुतिपदार्थः । वक्ष्यते चैतत् सर्वं विस्तरेण वियदादिपादे सृष्टिप्रकरणे । तत्र यथाऽऽकाशादिकं वाय्वादिकं प्रति निमित्तकारणमप्यविभागेन तत्कारणाधारत्वादुपादानकारणवच्छास्त्रे व्यपदिश्यते "**आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी**" ( तै० २ । १ ) इति, तथैव जगत्प्रति निमित्तकारणमपि ब्रह्म सह विज्ञानात्मभिस्तत्कारणभूतायाः प्रकृतेरविभागेनाधारत्वादुपादानकारणवदुपदिश्यते "**तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः**" ( तै० २ । १ ) "**एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्**" ( मां० ६ ) "**यतो वा इमानि भूतानि जायन्ते**" ( तै० ३ । १ ) "**सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते**" ( छां० १ । ९ । १ ) इति । विशेषस्त्वियानेव—यदाकाशादिकं वाय्वादेराधारमात्रं विद्यते न नियामकम्, ब्रह्म च सह विज्ञानात्मभिः प्रकृतेराधारो नियामकं चोभयमिति । अत एव च वैदिकाः एतदधिष्ठानकारणं परममूलकारणम्, आदिमूलं चेति स्वपरिभाषया परिभाषन्ते । यदधिष्ठानेन यदविभक्ता यदाधारा च सती प्रकृतिः कार्य्याकारेण परिणमते तदधिष्ठानकारणमिति

च तल्लक्षणं सङ्गिरन्ते । तदेतच्च भगवति वेदे "किं स्विदासादधिष्ठानम्" ( ऋ० ८ । ३ । १६ । २ ) "विश्वतश्चक्षुरुत विश्वतोमुखः" ( ऋ० ८ । ३ । १६ । ३ ) इत्यत्र प्रश्नोत्तररूपयोर्मन्त्रयोर्विस्पष्टम् । यच्च नियामकं भूत्वा सह विज्ञानात्मभिरविभागेनावस्थितायाः प्रकृतेरयःपिण्डवदग्नेराधारः, तस्यायःपिण्डस्य दाहादिलक्षणाग्निधर्माश्रयत्ववत् सृष्टिश्रुतिभिः श्राव्यमाणं जगज्जन्मादिलक्षणप्रकृतिधर्माश्रयत्वमपि नानुपपन्नमिति सर्वं चतुरस्रम् ।

अथ मन्यसे सृष्टेः प्रागविभागेऽपि सम्प्रति तदभावात् "सर्वं खल्विदं ब्रह्म" ( छां० ३ । १४ । १ ) "आत्मैवेदं सर्वम्" ( छां० ७ । २५ । २ ) "पुरुष एवेदं सर्वम्" ( ऋ० ८ । ४ । १७ । १ ) "स एव जातः स जनिष्यमाणः" ( यजु० ३२ । ४ ) इति श्रुत्याम्नानं नोपपद्यते । सर्वशब्दवाच्यस्य चेतनाचेतनात्मनः सहेतुकस्य जगतो विभक्तत्वेन ब्रह्मात्मकत्वासम्भवात् । न । आधारत्वादुपपत्तेः । वैदिकाः खलु मूलकारणं प्रकृतिर्विज्ञानात्मा पुरुषस्तत्पतिरीश्वरो ब्रह्म चेति नित्यं पदार्थत्रयं मन्यन्ते । तत्र च यद्यपि प्रकृतिपुरुषौ ब्रह्मवत् कालत्रयेऽपि सत्त्वादात्मसत्तायै न जातु ब्रह्मापेक्षेते, तथापि शरीरमिवात्मानं गुण इव च द्रव्यमात्मावस्थित्यर्थमवश्यं तदपेक्षेते । अवस्थाने परतन्त्रस्य तदपेक्षाया आवश्यकत्वात् । नहि स्वरूपतः सदपि शरीरमन्तरेणात्मानं तथा सँश्च गुणोऽन्तरेण द्रव्यं कर्हिचिदवस्थातुमर्हति । यथा चैतौ तथा प्रकृतिपुरुषावपि वेदितव्यौ । नहि तावप्यन्तरेण ब्रह्म कर्हिचिदवस्थातुमर्हतः । वायुवद्वा वेदितव्यम् । यथा वा स्वरूपतः सन्नपि वायुर्नान्तरेणाकाशं स्थित्यै कल्पते, तथा स्वरूपतः सन्तावपि प्रकृतिपुरुषौ नान्तरेण ब्रह्म स्थित्यै कल्पेते । प्रकृतिपुरुषात्मकं चेदं सर्वं जगत्, तस्य चाधारो ब्रह्मेति वेदोपनिषच्छ्रुतिषु स्फुटमाम्नायते "हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम" ( ऋ०८।७।३ । १ ) "स्कम्भो दाधार द्यावापृथिवी उभे इमे, स्कम्भो

दाधारोर्वन्तरिक्षम् । स्कम्भो दाधार प्रदिशः षडुर्वीः स्कम्भ इदं विश्वं भुवनमाविवेश" (अथ० १० । ४ । ७ । ३५) "स्कम्भेनेमे विष्टभिते द्यौश्च भूमिश्च तिष्ठतः । स्कम्भ इदं सर्वमात्मन्वद् यत्प्राणन्निमिषच्च यत्" (अथ० १० । ४ । ८ । २) "एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चाण्डजानि जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वाः गावः पुरुषा हस्तिनो यत्किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत् प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म" (ऐ० ३ । ३) "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" (छा० ६ । ८ । ४) "स होवाच यदूर्ध्वं गार्गि ! दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं प्रोतं चेति, कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति । ७ । स होवाचैतद्वै तदक्षरं गार्गि ! ब्राह्मणा अभिवदन्ति । ८ ।" (बृ० ३ । ८ । ७–८) "कर्माध्यक्षः सर्वभूताधिवासः" (श्वे० ६ । ११) इति । तत्र सह विज्ञानात्मभिः प्रकृतिर्हिरण्यं, तद्विषयते गर्भे यस्य, तदात्मको वा गर्भो यस्य, तस्मिन् गर्भवदवतिष्ठते यः, जगदात्मको गर्भो वा भवति यस्मादिति व्युत्पत्त्या हिरण्यगर्भ ईश्वरः । "तस्मिन्नपो मातरिश्वा दधाति" (यजु० ४० । ४) तस्मिन्=तद् ब्रह्म, तदाधारा मातरिश्वा=प्रकृतिः, मातरि प्रमातरि ब्रह्मणि श्वयति वर्द्धते महदादिरूपेणेति तद्व्युत्पत्तेः, अपः=कर्मणि द्वितीया, जगल्लक्षणं गर्भं, तस्यापि पूर्वावस्थायामम्मयत्वात्, दधाति=धत्ते धारयतीति श्रुतिस्तु चरमे पक्षे प्रमाणम् । स्कम्भः=स्तम्भः, स यथा प्रासादं स्कम्भते तथेश्वरोऽपि जगदिदं स्कम्भते=धारयति, तस्मादेष स्कम्भः । सत्प्रतिष्ठाः=

सद् ब्रह्म, आधारः प्रतिष्ठा, ब्रह्माधाराः, सः=याज्ञवल्क्यः, अक्षरंब्रह्म, न क्षरति विनश्यति स्वरूपतो धर्मतश्चेति तद्व्युत्पत्तेरिति श्रुतिपदार्थः। यद्विना च यन्न जातु स्थितिं लभते यदाधारा च यस्य स्थितिस्तदात्मकं तदित्याम्नानमुपपद्यते । न चेहास्ति काचनानुपपत्तिः । नहि शरीरस्यात्माधारत्वाच्छरीरमात्मा, गुणस्य च द्रव्याधारत्वाद् गुणो द्रव्यम्, इत्याम्नान कदाचिदनुपपन्नं सम्पद्यते । ब्रह्म चाभ्यामुभाभ्यामपि विलक्षणः खल्वाधारः । अन्तर्बहिः सर्वपदार्थेषु चेतनेष्वचेतनेषु चौतप्रोतत्वेनान्तर्य्यामितया वर्तमानत्वात् । न ह्याधारान्तराणि पदार्थान् ब्रह्मवदन्तर्बहिरभिव्याप्यान्तर्य्यामितया वर्तन्ते । ब्रह्म च तथा वर्तते । तद्यथाऽऽह भगवती श्रुतिः **"त्रिपादूर्ध्व उदैत् पुरुषः पादो अस्येहाभवत् पुनः । ततो विष्वङ् व्यक्रामत् साशनानशने अभि"** ( ऋ० ८ । ४ । १७ । ४ ) **"स ओतः प्रोतश्च विभूः प्रजासु"** (यजु० ३२।८) **"ईशावास्यमिद ँ सर्वं यत्किञ्च जगत्यां जगत्"** ( यजु० ४० । १ ) **"य इमं च लोकं परं च लोकं सर्वाणि च भूतान्यन्तरो यमयति"** ( व० ३ । ७ । १ ) इति । न चेदृग्आधारेऽवतिष्ठमानस्य जगतस्तदात्मकत्वव्यपदेशो विरुध्यते, अपि च नितरां प्रशस्यते। अत एव भगवान् वेदः पूर्वमाधाराधेयभावेन ब्रह्म सर्वं भूतजातं च विजानन्तं प्रशस्य पश्चादभ्यासोत्कर्षात् सर्वं ब्रह्मात्मकं पश्यन्तं तत्रभवन्तं योगिनं तत्फलप्रदर्शनेन प्रशंसति,—**"यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं ततो न विजुगुप्सते"** ( यजु० ४० । ६ ) **"यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः"** ( यजु० ४० । ७ ) इति । **यस्मिन्**=यस्मिन् काले, **तत्र**=तस्मिन् काले, **आत्मा**=ब्रह्म, तन्निष्ठा प्रथममन्त्रार्थः । तत्परिपाकात् तद्दर्शनं द्वितीयमन्त्रार्थः । एतेन **"ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्द्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्"** ( मु० २ । २ । ११ )

इति श्रुतिरपि व्याख्याता द्रष्टव्या । विश्वस्याधारत्वेन ब्रह्मणोऽन्तर्बहिः सर्वतो व्याप्तत्वात् तदात्मकत्वाभिधानोपपत्तेः ।

**केचित्तु** न खलूदाहृतश्रुतयो विश्वस्याधाराधेयभावेन ब्रह्माभेदमाचक्षते, **अपि च?** कल्पितत्वेन । सत्यत्वे तस्य तदभेदासम्भवात् । नहि सत्यं किञ्चिदचेतनं क्वचन चेतनाभेदमापद्यते । कल्पितस्य चाधिष्ठानानतिरेकाभ्युपगमेनाभेदसम्भवान्नास्ति कश्चिद्दोषः । तस्मात् कल्पितमेतद्विश्वमिति व्याचक्षते । **तन्न** चारु । तस्य कालत्रयेऽपि सत्त्वेन कल्पितत्वासिद्धेः । त्रेधा खलु कालो विभज्यते सृष्टिप्राक्कालः, सृष्टिकालः, भविष्यन् कालश्च । तत्र सृष्टिप्राक्काले चेदिदं विश्वमसद् भवेत् तदा न कदाचिदुत्पद्येत । न ह्यसच्छशशृङ्गादिकं कदाचिदुत्पद्यते । विश्वमिदं चोत्पद्यते । तस्मादवगम्यते नूनमेतत् तदानीं सद् विद्यते नासद् । **"असद्वा इदमग्र आसीत्"** (तै० २ । ७) इत्यसच्छ्रवणादसिद्धा तदानीं सत्त्वावगतिरिति चेत् । **न** । भावानवबोधात् । न खल्वेषा श्रुतिः सृष्टेः प्राग् विश्वस्य जगतोऽत्यन्तासत्त्वमवबोधयति, किन्तु येनाकारेणेदानीं विद्यते तेनाकारेण तदानीं नाविद्यतेति विज्ञापयति । सच्छब्दविपर्य्ययस्यासच्छब्दस्य तत्रैव व्युत्पत्तेः । अत एव च श्रुत्यन्तरे पूर्वमसद् व्यपदिश्य मा नाम कश्चिदत्यन्तासत्त्वं शङ्किष्टेति पश्चाद् सद् व्यपदिश्यते **"असदेवेदमग्र आसीत् तत्सदासीत्"** (छा० ३ । १९ । १) इति । **"तद्धेदं तर्ह्यव्याकृतमासीत् तत्सदासीत् तन्नामरूपाभ्यामेव व्याक्रियत"** (बृ० १ । ४ । ७) इति श्रुत्या च स्पष्टमेव जगतस्तदानीं नामरूपाभ्यां व्याकरणाभावादव्याकृतशब्देनोपादाय प्रकृत्यात्मना सत्त्वं प्रतिपाद्यते । **"तम आसीत् तमसा गूढमग्रेऽप्रकेतं सलिलं सर्वमा इदम्"** (ऋ० ८ । ७ । १७ । ३) इत्यादिवेदमन्त्रेणापि नामरूपाभ्यां व्याकरणाभावं तमःशब्देनाभिधाय तेनेदं सर्वमग्रे गूढमाच्छन्नमप्रकेतं निश्चिह्नं सलिलं प्रकृत्यात्मकम्, आः=आसीदित्यभिदधता स्फुटमेव तस्य प्रागुत्पत्तेः सत्त्वमभिधीयते। स्मर्य्यते चैतदेवं भगवता मनुनाऽपि

**"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः"** ( मनु० १ । ५ ) इति । वक्ष्यति चाचार्य्योऽपि **"सत्त्वाच्चावरस्य"** ( वे० २ । १ । १६ ) इति । तस्मान्नासिद्धा तदानीं सत्त्वावगतिः । **यच्च** सृष्टेः प्राक् सत् तदिदानीमसदिति न वक्तुं शक्यते । अयुक्तत्वात् । नहि यत् पूर्वं सदभूत् तदधुना विना कारणमसज्जातमिति युक्तिं सहते । **जनिरेव** तत्र कारणमिति चेत् । **न** । तस्या अनित्यत्वकारणत्वेऽप्यत्यन्तासत्त्वाकारणत्वात् । नहि वस्तु जन्या क्वचिदसत्त्वमापद्यते । अनित्यत्वापत्तिश्च तस्य सर्वसम्प्रतिपन्नेति यत्किञ्चिदेतत् । अर्थक्रियाकारित्वं च सत्त्वम् । तदिह विश्वस्मिन् जगति सर्वेषां नः प्रत्यक्षम् । न च तत् तस्यासत्त्वे कथञ्चिद् घटते । तस्मादेतदधुनाऽपि सदिति निश्चेतव्यम् । मन्त्रवर्णाश्च । **"यच्चिकेत सत्यमित् तन्न मोघं वसु स्पार्हम्"** ( ऋ० ८ । १ । १७ । ६ ) **"सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्"** ( ऋ० ८ । ८ । ४८ । ३ ) **"याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः"** ( यजु० ४० । ८ ) इत्यादिमन्त्रवर्णाः खलु विश्वस्य सत्त्वमीश्वरकर्तृकं च याथातथ्यतो यथापूर्वं निर्माणमुपवर्णयति । तच्चेह दृढं प्रमाणम् । अतो भवति प्रतिपत्तिर्नूनमिदं पूर्ववदिदानीमपि सदिति । **ननु** विश्वं चेत् सद्भवेत् न तन्निषेधः श्रूयेत । कल्पितं हि निषिध्यते यथा नायं पुरुषः स्थाणुरिति, न सद् । विश्वनिषेधस्तु श्रूयते **"मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति"** ( कठ० ४ । १० ) **"नेह नानाऽस्ति किञ्चन"** ( बृ० ४ । ४ । १९ ) इति । तस्मात् कल्पितमेतद्विश्वमिति । **न** । ब्रह्मनानात्वनिषेधात् । ब्रह्मप्रकरणे खल्वेतद् वाक्यद्वयमधीयते । ब्रह्मणि चैहिकामुष्मिकस्थितिभेदात् स्थूलदर्शिभिर्नानात्वं प्रसक्तम् । न च तत्प्रतिषेधाभावे यथायथं ब्रह्मप्रतिपत्तिः सुकरेति तदेवानेन पौनःपुन्येन जन्ममरणप्रबन्धलक्षणं संसारं दर्शयता प्रतिषिध्यते । तदेतच्च कृत्स्नवाक्यपर्य्यालोचनया स्फुटमधिगम्यते । कृत्स्नं चैतद् वाक्यद्वयं काठके बृहदारण्यके चैवं पठ्यते

**"यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति"** ( कठ० ४ । १० ) **"मनसैवानुद्रष्टव्यं नेह नानाऽस्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति"** ( बृ० ४ । ४ । १९ ) इति । यद् ब्रह्मास्मिन् लोके वर्तते तदेवामुष्मिन् लोके वर्तते । यच्चामुष्मिन् लोके वर्तते तदेवास्मिन् लोके वर्तते । यः पुरुषो लोकद्वयेऽभेदेन वर्तमानं ब्रह्म लोकभेदाद् नानेव=भिन्नमिव, पश्यति=जानाति स पुनः पुनर्म्रियते, न कदाचिन्मुच्यते ( कठ० ४ । १० ) तद् ब्रह्माध्यात्मयोगयुक्तेन मनसैवानु=प्रत्यगात्मदर्शनानन्तरं, द्रष्टव्यं=दर्शनार्हं विद्यते, कदापि च नानेव न सम्पद्यते, यस्तु नानेव पश्यति स पुनः पुनर्मृत्युमनुभवति, न कर्हिचिन्मुक्तिमृच्छति ( बृ० ४ । ४ । १९ ) इति तदर्थः । न चैतस्माद् वाक्यद्वयाद् ब्रह्मणि विश्वनिषेधः प्रतिपद्यते । ब्रह्मनानात्वप्रतिषेधस्तु विस्पष्टः । तस्मान्न कल्पितं विश्वम् । अथ मन्यसे **"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्"** ( छा० ६ । १ । ४ ) इति श्रुत्या वाचारम्भणशब्देन विकारस्यानृतत्वाभिधानात्तदात्मकं विश्वं कल्पितमिति । **नैतन्मन्तव्यम्** । अनित्यत्वप्रतिपादनात् । न ह्यस्वनया श्रुत्या विकारस्यानृतत्वं प्रतिपाद्यते । अपि च ? अनित्यत्वम् । सा हि **"मृत्तिकेत्येव सत्यम्"** इत्यन्तेऽभिदधाना कारणस्य नित्यत्वं विकारं च नामधेयावशेषत्वान्नामधेयमित्यभिदधती तस्यानित्यत्वं प्रतिपादयति । वाचारम्भणमिति च नामधेयविशेषणम् । "वाचयाऽऽरभ्यतेऽभ्युद्यते" इति वाचारम्भणम् **"कृत्यल्युटो बहुलम्"** ( अष्टा० ३ । ३ । ११३ ) इति कर्मणि ल्युट् प्रत्ययः । **"वाचा हि नामान्यभिवदति"** ( बृ० ३ । २ । ३ ) इति श्रुतेर्वागारभ्यमिति तदर्थः । कार्य्यं तावत् कारणमपिगच्छत् सह रूपेणाकारेणापिगच्छति । तन्नामधेयं च न तदैव रूपवदप्येति, किन्तु पश्चादपि किञ्चित् कालं प्रतितिष्ठति । तदेवाभिप्रेत्योच्यते "विकारो नामधेयम्" इति । नामधेयं च वाकार्य्यं प्रसिद्धम् । शब्दमयत्वात् । अतो युक्तं तस्य वाचारम्भणमिति

विशेषणम्। न चैतावता विकारस्य कार्य्यस्यानृतत्वमभिहितं भवति, किन्त्वनित्यत्वम्। कारणेऽप्ययाच्च कारणात्मना सत्त्वं कारणस्य च नित्यत्वम्। एतच्च वयमप्यभ्युपगच्छामः। सत्कार्य्यवादिनामस्माकं विकारमात्रे विकारात्मनाऽनित्यत्वस्य सर्वदा सिद्धत्वात्। सह विज्ञानात्मभिः प्रकृतिस्तु न कस्यचिद्विकारः। अपि च? सर्वविकारकारणम्। सर्वविकारात्मकं च विश्वम्। अतो न तत् कल्पितम्। **बाधकयुक्तेश्च।** अस्ति तावद् बाधिका युक्तिः। यदि विश्वमिदं कल्पितं भवेत् तदा "**ईक्षतेर्नाशब्दम्**" (वे० १।१।५) इति सूत्रे "**तदैक्षत बहु स्यां प्रजायेय**" (छा० ६।२।३) इत्यादिश्रुतौ चेश्वरस्येक्षणपूर्वकं तत्कर्तृत्वं न प्रोच्येत। नहि कल्पितं किञ्चित् केनचित् क्वचिदीक्षणपूर्वकं विधीयते। विश्वमिदं च तथा विधीयते। तस्मान्न तत्कल्पितम्। अपि च? सत्। तथा चोक्तं दर्शनान्तरे "**जगत्सत्यत्वमदुष्टकारणजन्यत्वाद् बाधकाभावात्**" (सां० ६।५२) इति। वक्ष्यति च व्यतिरेकमुखेनाचार्योऽपि "**नाभाव उपलब्धेः**" (वे० २।२।२८) "**वैधर्म्याच्च न स्वप्नादिवत्**" (वे० २।२।२९) इति। यच्चाधुनाऽपि सत् तदग्रेऽपि सदिति किमु वक्तव्यम्। सतो भावस्य कदाप्यसद्भावासिद्धेः। कालत्रये सतश्च सहेतुकस्य तस्याधाराधेयभावेनैव ब्रह्मात्मकत्वाभिधानं युक्तमुत्पश्यामो न प्रकारान्तरेणेति सर्वमनवद्यम्।

**ननु** कोऽयं लक्षणार्थः? **समानासमानजातीयव्यवच्छेद** इति ब्रूमः। प्रथमे जिज्ञासासूत्रे खलु ब्रह्मजिज्ञासितव्यमित्युक्तम्। तन्न तावज्जिज्ञासितुं शक्यते यावत् समानासमानजातीयेभ्यो न व्यवच्छिद्यते। ब्रह्मशब्दस्य ब्रह्मतदुभयसाधारणत्वेनानिर्धारकत्वात्। विज्ञानात्मानो हि ब्रह्मणः समानजातीयाः। चेतनत्वात्। प्रकृत्यादयश्चासमानजातीयाः। अचेतनत्वात्। **ब्रह्मशब्दश्च यथा "यो भूतं च भव्यं च सर्वं यश्चाधितिष्ठति। स्वर्यस्य च केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः"** (अ० १०।४।८।१) "**सत्यं ज्ञानमनन्तं ब्रह्म**" (तै० २।१)

**"विज्ञानमानन्दं ब्रह्म"** (बृ० ३। ९। २८) **"सत्यं ह्येव ब्रह्म"** (बृ० ५। ४। १) इति ब्रह्मणि प्रयुज्यमान उपलभ्यते तथा **"विज्ञानं यज्ञं तनुते कर्म्माणि तनुतेऽपि च। विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते"** (तै. २। ५) **"एवं हैवंविदं सर्वाणि भूतानि प्रतिकल्पन्त इदं ब्रह्मायातीदमागच्छति"** (बृ० ४। ३। ३७) **"स वा अयमात्मा ब्रह्म विज्ञानमयः"** (बृ० ४। ४। ५) इति विज्ञानात्मनि पुरुषे, **"तपसा चीयते ब्रह्म"** (मु० १। १। ८) **"सर्वाजीवे सर्वसंस्थे बृहन्ते तस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे"** (श्वे० १। ६) **"देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रम्"** (श्वे० ६। १) **"मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्"** (गी० १४। ३) इति जगदुपादानकारणे प्रकृतौ **"तत्त्वा यामि ब्रह्मणा वन्दमानः"** (ऋ० १। २। १५। ११) **"यस्य ब्रह्म मुखमाहुः"** (अथ० १०। ४। ७। १९) **"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्"** (मु० ३। १। ३) इति हिताहितप्राप्तिपरिहारोपायस्य बोधके भगवति वेदे **"यो ब्रह्मणे प्रथमं गा अविन्दत्"** (ऋ० १। ७। १२। ५) **"अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ"** (ऋ० ८। ७। १२। ६) **"यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः"** (कठ० १। २। २५) **"तदेतद् ब्रह्म क्षत्रं विट् शूद्रः"** (बृ० १। ४। १५) **"यो ब्रह्माणं विदधाति पूर्वम्"** (श्वे० ६। १८) इति वैदिकधर्मोपदेष्टरि तत्रभवति ब्राह्मणे च प्रयुज्यमान उपलभ्यते। न चैवमुपलभ्यमाने तस्मिन् जिज्ञास्यं ब्रह्म निर्धारयितुं शक्यते। नहि साधारणः शब्दः क्वचित् किञ्चिन्निर्धारणाय प्रकल्पते। तथा च लक्षणेनैतत् समानासमानजातीयेभ्यो व्यवच्छेत्तव्यमिति विज्ञायते। व्यवच्छिन्ने तस्मिन् किमेतज्जिज्ञास्यमाहोस्विदपरमिति संशयानुत्पत्तेः। नहि विज्ञानात्मा पुरुषो वा प्रकृतिर्वा वेदो वा ब्राह्मणो

वा, जगतो जन्मादेर्निमित्तंकारणमुपपद्यते, येन संशय उत्पद्येत । ब्रह्म च सर्वाधारत्वात् सर्वनियामकत्वाच्चोपपद्यतेतराम् । तस्मात् सूपपन्नं **"जन्माद्यस्य यतः"** इति ब्रह्मलक्षणम् ॥ २ ॥

जगज्जन्मादिकारणत्वप्रदर्शनेन सर्वज्ञं सर्वशक्ति ब्रह्मेत्युपक्षिप्तम् । सम्प्रति तदेव द्रढयन् तत्र हेतुमुपन्यस्यति—

**"शास्त्रयोनित्वात्"** ॥ ३ ॥

ब्रह्मेत्यधिक्रियते । **शास्त्रं**=वेदः, तस्य **योनिः**=कारणं, तद्भावस्तत्त्वं, तस्मात्=ऋग्वेदादिशास्त्रस्य कारणत्वात् सर्वज्ञं सर्वशक्ति च ब्रह्मेत्यर्थः ।

अत्र शास्त्रपदं वेदमाचष्टे । तस्य सकलभुवनवर्तिनां सर्वेषां मनुष्याणां हिताहितप्राप्तिपरिहारोपायस्यानुशासनात् । स हि भगवान् सकलभुवनवर्तिनः सर्वान् मनुष्यान् यथाधिकारं हिताहितप्राप्तिपरिहारोपायं तावदनुशास्ति । न च कस्मिँश्चिदपि पक्षपातित्वमवलम्बते । सर्वज्ञ इव च सर्वान् सर्वमनुशासत् प्रदीप इव च सर्वान् सर्वमवभासयन् न कदाप्यनवबोधको वाऽस्पष्टबोधको वा सम्पद्यते । अव्याहता हि तस्य सर्वेषूपायेषु सर्वासु च विद्यासु गतिः । न च सोऽस्ति कश्चिदभ्युदयोपायो यः किलातो न सम्भवति । न च साऽस्ति काचिद् विद्या या किलातो न प्रभवति । सर्वेषां सदुपायानां सर्वासां च सत्यविद्यानां प्रभवस्थानत्वाद् नूनं महदिदं शास्त्रमिति प्रतिपद्यते । योनिपदं च निमित्तवचनमिति **"योनिश्च हि गीयते"** (वे० १ । ४ । २७) इत्यत्र सविस्तरं निरूपयिष्यते । न चास्य महतः शास्त्रस्य कारणं ब्रह्मासर्वज्ञमसर्वशक्ति च युज्यते । यद्यद् विस्तरार्थं शास्त्रं यस्मात् पुरुषविशेषात् सम्भवति, तदपेक्षया तस्याधिकतरविज्ञानस्यावश्यकत्वात् । **शतपथो** हि याज्ञवल्क्यात् सम्भवति, **काणादं** च कणादात्, **पाणिनीयं** च भगवतः पाणिनेः । न च याज्ञवल्क्यादयः शतपथाद्यपेक्षयाऽधिकतरविज्ञाना न भवन्तीति वक्तुं पार्य्यते । तथा सति तेषां तत्कर्तृत्वानुपपत्तेः । नह्यल्पं विद्वान् बहुतरप्रकाशनायावकल्पते । सर्वज्ञगुणान्वितं चैतदृग्वेदादिलक्षणं शास्त्रम् । तस्मात् तत्कारणं ब्रह्म सर्वज्ञं सर्वशक्ति चेति किमु वक्तव्यम् ॥ ३ ॥

**शास्त्र**योनित्वात् सर्वज्ञं सर्वशक्ति ब्रह्मेति दर्शितम्। सम्प्रति तत् तस्य कुतोऽवगम्यते? इत्याकाङ्क्षायामाह—

**"तत्तु समन्वयात्"** ॥ ४ ॥

ब्रह्मण इति विपरिणम्याभिक्रियते। योग्यत्वाद्वा तथा तत्सम्बन्धः। तुशब्देनान्ययोगो व्यवच्छिद्यते। **तत्**=शास्त्रयोनित्वं ब्रह्मणः, **समन्वयात्**=समन्वयः सम्बन्धः, तस्मात्-युक्तया श्रुत्या न तत्रैव तत्सम्बन्धादवगम्यत इत्यर्थः।

यदिदं मनुष्येषु प्रतिदिनमुपचीयमानं ज्ञानैश्वर्य्यमुपलभ्यते। न च तत् स्वाभाविकं भवितुमर्हति। स्वाभाविकत्वे तस्य परसाहाय्यानपेक्षत्वप्रसङ्गात्। नहि स्वाभाविकं किञ्चिदात्मलाभाय परसाहाय्यमपेक्षते। यच्चापेक्षते न तत् स्वाभाविकम्। किन्तु नैमित्तिकम्। उपलभ्यमानं ज्ञानैश्वर्य्यं तु नियमेनात्मलाभाय परसाहाय्यमपेक्षत इति प्रत्यक्षमेतत्। कथमन्यथा तत्सम्पत्तये महाविद्यालयाः स्थाप्यन्ते। तत्राचार्य्याश्च विचक्षणाः समाहृत्य समाहृत्य नियुज्यन्ते। तदुपचयाय पुस्तकानि च विविधविषयाणि सम्पाद्यन्ते। नैमित्तिकत्वे चाधुनेव सर्गारम्भेऽपि निमित्तेन केनचिदवश्यभवितव्यम्। नैमित्तिकस्य निमित्तमन्तरा निर्वृत्त्यनुपपत्तेः। नह्यन्तरेण निमित्तं क्वचिन्नैमित्तिकस्य निर्वृत्तिरुपपद्यते। नैमित्तिकं निमित्तमन्तरा निर्वृत्तिं लभते चेति व्याघातात्। सर्गादिभुवो मनुष्याश्च सर्वेऽनधीतविद्यत्वेनाज्ञातार्थपरिभाषत्वात् समानबुद्धयो न परस्परस्मै ज्ञानैश्वर्य्यप्रदानाय निमित्तभावमुपयातुमर्हन्ति। पारिशेष्यात् सर्वज्ञं सर्वशक्ति ब्रह्मैव तेभ्यो वेदलक्षणेन शास्त्रेणादौ ज्ञानैश्वर्य्यं प्रददातीति विज्ञायते। स्मर्य्यते च दर्शनान्तरेऽपि **"पूर्वेषामपि गुरुः कालेनानवच्छेदात्"** (यो० १।२६।) इति। यथा हि ब्रह्मेदानीन्तनानामस्माकं वेदेन भगवता ज्ञानैश्वर्य्यं प्रददद्गुरुः, तथा सर्गादिभुवां पूर्वेषामपि तल्लक्षणेन शास्त्रेण ज्ञानैश्वर्य्यं प्रददद्गुरुरध्यवसातव्यः। ते चास्मदादयश्च शरीरित्वात् कालेनावच्छिद्यन्ते। ब्रह्म चाशरीरि न तत् कालेन

कथञ्चिदवच्छिद्यते । तेनादः पूर्वेषामपि गुरुरिति सङ्गच्छते । शास्त्रस्य चास्य न ततोऽन्यः कश्चिद् योनिरुपपद्यते । अन्यो हि तद्योनिर्भवन्नधिको वा स्यात् समो वा । न च ब्रह्मणोऽधिको वा समो वा कश्चिद् विद्यते । साम्यातिशयविनिर्मुक्तस्यैव ब्रह्मत्वाभ्युपगमात् । तदेव ह्यस्माभिर्जगतो जन्मादिकारणं ब्रह्माभ्युपगम्यते यत् खलु न केनचिदन्येनातिशय्यते, न वा साम्यं प्रपद्यते । साक्षाच्चैतद् भगवती श्रुतिरभिधत्ते—**"नकिरिन्द्र ! त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन् ! नकिरेवा यथा त्वम्"** ( ऋ० ३ । ६ । १९ । १ ) इति । **"न तत्समश्चाभ्यधिकश्च दृश्यते"** ( श्वे० ६ । ८ ) इति च । **पितृकल्पत्वाच्च ।** यथा हि पिता पुत्रानुत्पाद्य कथमिमेऽनधीतविद्यत्वेनाज्ञातार्थपरिभाषत्वाल्लौकिकपारमार्थिकव्यवहारानभिज्ञाः खलु मामकार्भकाः संसारयात्रामुद्वहन्तोऽहितं परिहास्यन्ति, हितं च प्राप्स्यन्तीति चिन्तयन् करुणार्द्रचित्तस्तेभ्योऽनृतादिदोषवर्जितेन सुबोधेन कर्णप्रियेण केनचिच्छब्दराशिना हिताहितप्राप्तिपरिहारोपायमुपदिशति, तथा परमकारुणिकेन भगवता ब्रह्मणाऽपि प्रजा उत्पाद्य ताभ्यः संसारयात्रोद्वहनाय परमादरणीयेन केनचिच्छब्दराशिना हिताहितप्राप्तिपरिहारोपायस्तावदुपदेष्टव्यः । पितृकल्पं हि तत् । यत्रेदमाम्नायते **"स नः पितेव सूनवेऽग्ने ! सूपायनो भव । सचस्वा नः स्वस्तये"** ( ऋ० १ । १ । २ । ९ ) **"त्वं हि नः पिता वसो ! त्वं माता शतक्रतो ! बभूविथ । अधा ते सुम्नमीमहे"** ( ऋ० ६ । ७ । २ । ११ ) इति । न च प्रजानां पितृकल्पस्य तस्य हिताहितप्राप्तिपरिहारोपायं विदुषः परमकारुणिकस्यात्मीयाभ्यस्ताभ्यः कर्हिचित् तदनुपदेशो घटते । नहि हिताहितप्राप्तिपरिहारोपायमविदुषीरात्मीयाः प्रजाः सर्वथा संसारयात्रायां विमूढाः संवीक्ष्य कश्चित् पृथग्जनोऽपि वज्रहृदयः स्वयं विद्वाँस्ताभ्यस्तमनुपदिश्य स्थातुमर्हति, किं पुनः परमकारुणिकं जगतो जन्मादिकारणं ब्रह्म । येन चानेन भगवता हिताहितप्राप्तिपरिहारोपायगोचरेण शब्दराशिनाऽऽत्मीयाः प्रजाः खलु यथाकालमुपदिश्यन्ते, तदेव ऋग्वेदादिलक्षणं शास्त्रम् । न च

प्रजावद् भगवतो ब्रह्मणः कश्चिज्जनिता विद्यते, येन भगवतस्तस्यान्यतस्तस्याप्तिरुत्प्रेक्ष्येत । श्रुतिश्च साक्षात् तज्जनितारं व्यासेधति **"न चास्य कश्चिज्जनिता न चाधिपः"** (श्वे० ६ । ९) इति । तस्माद् भवत्यवगतिर्नूनं येन शास्त्रेण ब्रह्मात्मीयाभ्यः प्रजाभ्यो हिताहितप्राप्तिपरिहारोपायमुपदिशति तस्य तदेव योनिरिति । **अधिपतित्वाच्च** । यथा हि प्रजाः पिपालयिषुणा लौकिकाधिपतिना "इदं ते हितसाधनम्, इदं चाहितसाधनम्, यत्ते हितसाधनं तत्त्वया हितप्राप्तये सम्यगनुष्ठेयम्, यच्चाहितसाधनं तत्त्वयाऽहितपरिहाराय न जात्वनुष्ठेयम्" इत्यात्मीयास्ताः यथाधिकारमनुशिष्यन्ते, तथा भगवता ब्रह्मणाऽपि प्रजा उत्पाद्य ताः सर्वा यथाधिकारमनुशासितव्याः । **"स वा अयमात्मा सर्वेषां भूतानामधिपतिः"** (बृ० २ । ५ । १५) **"सर्वस्येशानः सर्वस्याधिपतिः"** (बृ० ५ । ६ । १) **"विश्वाधिपो रुद्रो महर्षिः"** (श्वे० ४ । १२) इत्यादिश्रुतिभिस्तस्य तदधिपतित्वावगमात् । न च सर्वप्रजाधिपतिर्भूत्वा ब्रह्मात्मीयाभ्यः प्रजाभ्यो हिताहितप्राप्तिपरिहारोपायमाशेष्ट्वा कर्हिचिद् वर्तितुमुत्सहते । नहि प्रजापतिश्च प्रजाश्च हिताहितप्राप्तिपरिहारोपायं नानुशास्तीति कथञ्चिद् युज्यते । यदा खलु साधारणो लोकाधिपतिरात्मीयाः प्रजाः हिताहितप्राप्तिपरिहारोपायमनुशासद् दृश्यते लोके, तदा सर्वाधिपाधिपं सर्वज्ञं सर्वशक्ति जगतो जन्मादिकारणं ब्रह्मात्मीयाः प्रजाः हिताहितप्राप्तिपरिहारोपायमनुशास्तीति किमु वक्तव्यम् । यदेव चास्य भगवतोऽनुशासनं तदेव ऋग्वेदादिलक्षणं शास्त्रम् । न च लोकाधिपतिवदस्य कश्चिदधिपतिर्विद्यते, येन तस्याधिपत्यन्तरात् तत्प्राप्तिः कल्प्येत । तदभावे च तदेव तस्य योनिरिति निःसंशयं प्रतिपद्यते । यथा चैवं युक्त्या भगवतो ब्रह्मणः शास्त्रयोनित्वमवगम्यते तथा **"तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत"** (ऋ० ८ । ४ । १७ । ९) इत्यादिश्रुत्याऽप्यवगम्यते । अत्र तच्छब्देन पूर्वं प्रक्रान्तः पुरुषः परामृश्यते, यत्रेदमुक्तं भवति **"पुरुषान्न परं किञ्चित् सा काष्ठा सा परा**

**गतिः**" (कठ० ३ । ११) "**स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो, नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतम्**" (बृ० २ । ५ । १८) इति । यज्ञशब्दो यजनीयवचन. "**यज्ञेन यज्ञमयजन्त देवाः**" (ऋ० ८ । ४ । १८ । १६) इति वक्ष्यमाणमन्त्रात् "**यज्ञो वै विष्णुः**" (शत० १ । १ । १ । ३) इति ब्राह्मणवचनाच्च । "सर्वहुतः" इति पुरुषविशेषणम्, प्रीणनार्थोऽत्र जुहोतिः, प्रीणनं तर्पणम्, सर्वैर्वर्णाश्रमिभिः सर्वदा सर्वत्र मनोवाक्कायकर्मभिर्हूयमानात् तर्प्यमाणात्–इति तदर्थः, यत्रेदमुदाह्रियते,—"**प्रजापते! न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्**" (ऋ० ८ । ७ । ४ । १०) इति । येषु मन्त्रेषु पादव्यवस्था विद्यते तेऽत्र "ऋचः" इत्युच्यन्ते, ते ये गायत्रादिसामभिर्यज्ञे कर्मणि गीयन्ते, ते "सामानि" इत्याख्यायन्ते, तद्भिन्नाः गद्यात्मका मन्त्रास्तु "यजुः" इति "यजूंषि" इति वा परिभाष्यन्ते । स्मर्यते चैतदेवं पूर्वमीमांसायाम्–"**तेषामृग् यत्रार्थवशेन पादव्यवस्था**" (मी० २ । १ । ३५) "**गीतिषु सामाख्या**" (मी० २ । १ । ३६) "**शेषे यजुःशब्दः**" (मी० २ । १ । ३७) इति । मन्त्राणां च गायत्र्यादिछन्दोविशिष्टत्वेऽपि "यथा ते सर्गारम्भे ब्रह्मणो जज्ञिरे तथाऽङ्गोपाङ्गादिसर्वाः विद्या अपि सहैव जज्ञिरे" इति तेषां सर्वविद्यास्थानत्वसूचनार्थं "**छन्दांसि जज्ञिरे तस्मात्**" इति पृथगुपादीयते । गायत्र्यादिछन्दोविशिष्टा ऋक्सामाख्या मन्त्राः, न जातु यजुर्मन्त्रा इति सूचनार्थं वा यजुषः पूर्वं "**छन्दांसि जज्ञिरे तस्मात्**" इत्युक्तमिति वेदितव्यम् । **अथवा** छन्दो वेद इत्यनर्थान्तरम्, अवयवेऽवयविप्रयोगः, उपचारात्, तेन "छन्दांसि" **इत्यस्याथर्ववेदमन्त्रा इत्यर्थः । त्रेधा** हि सर्वे मन्त्राः विभज्यन्ते—**पद्यात्मका गद्यात्मकाश्चेति । तत्र ये तावत्** पद्यात्मकाः गायत्रादिसामभिर्यज्ञे **कर्मणि** गीयन्ते, ते "**सामानि**" ततोऽवशिष्टाश्च ते "**ऋचः**" इत्युच्यन्ते । ये च गद्यात्मकास्ते सर्वे "**यजूंषि**"

इति कथ्यन्ते। सर्वेषां चामीषां ये खलु मन्त्रा वर्णाश्रमिभिरनुष्ठेये यज्ञे कर्मणि न विनियुज्यन्ते, ते **"अथर्वाङ्गिरसः"** इति व्यपदिश्यन्ते। तदेवं द्वेधा विभक्ता अपि मन्त्राः पुनरवान्तरभेदात् त्रेधा चतुर्धा च विभज्यन्ते। अत एव च तेषां क्वचित् त्रेधा क्वचिच्च चतुर्धा श्रूयमाणोऽपि विभागो न जातु विरुध्यते। यत्रेद-मुदाहरन्ति—**"यस्मिन्नृचः साम यजूंषि यस्मिन् प्रति-ष्ठिता रथनाभाविवाराः"** (यजु० ३४।५) **"यस्मादृचो अपातक्षन् यजुर्यस्मादपाकषन्। सामानि यस्य लोमा-न्यथर्वाङ्गिरसो मुखम्"** (अथर्व० १०।४।७।२०) इति। **अपातक्षन्**=प्रादुर्भवन्ति, **यजुः**=यजूंषि, **अपाकषन्**=अपातक्षन्। सर्वे चामी मन्त्राः **"वेदः"** इति संज्ञां भजन्ते। यत्रेदमुदाह्रियते— **"यस्मात् कोशादुदभराम वेदं तस्मिन्नन्तरवदध्म एनम्। कृतमिष्टं ब्रह्मणो वीर्येण तेन मा तपसाऽवतेह"** (अथर्व० १९।७।७२।१) **"अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग् विवृताश्च वेदाः"** (मुं० ६।१।४) इति। मन्त्राणां चैषां चतुर्धा विभिन्नत्वाद् भगवान् वेदोऽपि चतुर्धा विभिद्यते—ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति। तत्र ऋचामृग्वेदो यजुषां यजुर्वेदः साम्नां सामवेदोऽथर्वाङ्गिरसां चाथर्ववेद इति संज्ञेत्यवगन्तव्यम्। तस्यचैतस्य भग-वतो वेदस्य योनिर्ब्रह्मेति मन्त्रवदौपनिषदश्रुतावपि साक्षादाम्नायते— **"तस्मादृचः साम यजूंषि"** (मुं०२।१।६) इति। **"कर्तारमीशं पुरुषं ब्रह्मयोनिम्"** (मुं० ३।१।३) इति च। **ब्रह्म**=वेदः, तस्य योनिं कर्तृलक्षणं कारणमित्यर्थः। न चैवं युक्त्या श्रुत्या चावगम्यमानं ब्रह्मणःशास्त्रयोनित्वं केनचिन्निह्नोतुं शक्यते। नह्यपरं किञ्चिच्छ्रुतितः प्रबलं प्रमाणं विद्यते। यदा खल्वेकाकिनी भवन्ती भवती श्रुतिरेव प्रबलं प्रमाणं सम्पद्यते तदा तर्कोपोद्बलिता सेति किमु वक्तव्यम्। अतः कथं तन्निह्नूयेत। अथ मा नामैतत् प्रमाणान्तरं निह्नोष्ट, न चैतावता ब्रह्मणः शास्त्रान्तर-योनित्वं प्रतिषिद्धं भवति। विशेषाभावात्। तथा च शास्त्रं वेद इत्यप-

व्याख्यानमिति । **न** । विद्योदयपश्चाद्भावित्वेन शास्त्रान्तराणां ब्रह्मयोनिकत्वानुपपत्तेः। यानि खल्वद्ययावज्जगतीतले शास्त्रान्तराण्युपलभ्यन्ते तानि सर्वाणि वेदोदयकालादर्वाक्कालकानीति निर्विवादम् । अर्वाक्कालश्च विद्योदयकालः । वेदविद्यायास्ततः प्रागुदयात् । न च तदानीमुदयमासादयन्ति तानि ब्रह्मयोनिकान्युपपद्यन्ते । विद्याध्ययनश्रवणाभ्यां मनुष्याणामपि तद्योनित्वस्य वक्तुं शक्यत्वात् । तदेव हि शास्त्रं ब्रह्मयोन्युपपद्यते, यत् खलु विद्योदयात् पूर्वं सर्वथाऽज्ञातार्थतत्त्वपरिभाषकेषु मनुष्येषु सत्सु प्रादुर्भवति यथा ऋग्वेदादिलक्षणं शास्त्रम् । न च शास्त्रान्तराणि विद्योदयात् पूर्वं प्रादुर्भवन्ति । विद्योदयादूर्ध्वं प्रादुर्भवन्ति तु तानि मनुष्ययोनिकान्यपि वक्तुं शक्यन्ते । नहि मनुष्या विद्याध्ययनश्रवणाभ्यां तादृक्शास्त्रनिर्माणे न प्रभवन्ति । यदा खल्वद्यतनीना अस्मदादयो मनुष्या विद्याध्ययनबलात् ततोऽपि प्रशस्ततरशास्त्रनिर्माणे पर्य्याप्ताः तदाऽधीतश्रुतविद्यानामस्मत्पूर्वेषां तेषां तन्निर्माणे सामर्थ्यस्य का कथेति किन्न विभाव्यते । अनधीतविद्यात्वप्रसिद्धिस्तु तेषां न तच्छ्रवणमपि निरुणद्धि । श्रवणं चाध्ययनकल्पमेव मन्यन्ते कोविदाः । तस्मान्न किञ्चिदेतत् । **तथा च** शास्त्रं वेद इति सुव्याख्यानं न जात्वपव्याख्यानम् ।

अथोच्येत नित्यो वेदः, यत्रेदं वक्ष्यति—"**अत एव च नित्यत्वम्**" ( वे० १ । ३ । २९ ) इति । न च नित्यस्य सततस्य ब्रह्मयोनिकत्वमुपपद्यते । अनित्यत्वप्रसङ्गात् । नहि योनिमतः कस्यचिदनित्यत्वं न प्रसज्यत इति । **मैवं वोचः** । समानानुपूर्वीकत्वाद् ब्रह्मयोनिकत्वेऽपि नित्यत्वोपपत्तेः । न खल्वस्माभिरुत्पत्तिविनाशशून्यत्वं नित्यत्वं भगवतो वेदस्याभ्युपेयते, येन ब्रह्मयोनिकत्वात् तस्य नित्यत्वं नोपपद्येत, अनित्यत्वं च प्रसज्येत । अपि च ! समानानुपूर्वीकत्वम् । या हि भगवतो वेदस्य शब्दानामानुपूर्वी खल्वस्मिन् कल्पेऽनुभवपथमारोहति "**अग्निमीले पुरोहितम्**" ( ऋ० १ । १ । १ । १ ) इत्यादिका, सा सर्वेषु सर्गेषु समाना भवति, न जातु कस्मिन्नपि सर्गे विपर्य्येति । नहि कदाचित् "पुरोहितमग्निमीले" कदाचिच्च "ईले पुरोहितमग्निम्"इति सम्भवति । अ-

कारादिवर्णेष्वपि चैष समानश्चर्चः। स्वरूपेण शब्दाश्चोत्पत्तिविनाशशालित्वाद् यथासमयमात्मनीनां प्रकृतिमपिगच्छन्तोऽपि सर्गवेलायां पूर्वानुपूर्वीसमानानुपूर्वीका एव प्रादुर्भवन्ति न मात्रयाऽपि तामतिक्रामन्ति । न च तेषामानुपूर्वीयमाकास्मिकी जायते, अपि च ? ब्रह्मसङ्कल्पपूर्विका। पदार्थमात्रप्रादुर्भावस्य तत्सङ्कल्पपूर्वकत्वाभ्युपगमात् । पदार्थमात्रप्रादुर्भावो हि ब्रह्मसङ्कल्पपूर्वकोऽभ्युपगम्यते नाकस्मिकः। सृष्टिश्रुतिषु सर्वत्र ब्रह्मसङ्कल्पस्य पूर्वमुपलम्भात् । ब्रह्मसङ्कल्पश्च सत्यः "**भारूपः सत्यसङ्कल्पः**" (छा० ३ । १४ । २ ) इति श्रुतेः । नच सत्योऽसौ कदाचिदन्यथात्वं भजते। तेन चोत्पद्यमानाः पदार्था यद्रूपा यन्नामानो यत्कार्यक्रमाश्च सङ्कल्प्यन्ते, तैः प्रतिसर्गं तद्रूपैस्तन्नामकैस्तत्कार्यक्रमैश्चावश्योत्पत्तव्यम् । अन्यथा तस्य सत्यत्वानुपपत्तेः । नहि सृज्यमानाः पदार्था यद्रूपा यन्नामानो यत्कार्यक्रमाश्च सङ्कल्प्यन्ते ते तद्रूपास्तन्नामानस्तत्कार्यक्रमाश्च नोत्पद्यन्ते तद्गोचरः सङ्कल्पश्च सत्य इत्युपपद्यते। तत्सत्यत्वाय च तेषां प्रतिसर्गे समानरूपसमाननामसमानकार्य्यक्रमत्वे वैदिकशब्दानामानुपूर्व्याऽपि सर्वेषु सर्गेषु समानया भवितव्यम् । अविशेषात् । तथा चोपपन्नं ब्रह्मयोनिकत्वेऽपि भगवतो वेदस्य नित्यत्वम् ।

यत्तु "**तेन प्रोक्तम्**" (अष्टा० ४ । ३ । १०१ ) इति सूत्रे महाभाष्यकृद्वचनं "**यद्यप्यर्थो नित्यः या त्वसौ वर्णानुपूर्वी साऽनित्या**" इति, तद् वैदिकैरुपेक्ष्यम्। एकदेशित्वात् । एतेनापौरुषेयत्वमपि व्याख्यातं वेदितव्यम् । तस्यापि नित्यत्वसमानयोगक्षेमत्वेन विशेषाभावात्। अथ कथमेष सर्गादौ ब्रह्मणः सकाशात् प्रादुर्भवति भगवान् वेद इति चेत्? । उच्यते । ब्रह्मसिसृक्षया खलु लोकसृष्ट्यनन्तरं यदा मनुष्यसृष्टिः प्रजायते तदा परमकारुणिकं ब्रह्म मनुष्याणां हिताहितप्राप्तिपरिहारोपायेषु सम्यक् प्रवृत्त्यर्थमृषीणां चित्तसत्त्वेषु सोच्चारणप्रकारं सार्थं सार्थसम्बन्धं पूर्वसर्गसिद्धानुपूर्वीसमानानुपूर्वीकं भगवन्तं वेदं परिस्फोरयति । ते च महाभागाः केवलं वेदप्रचाराय यथावेदं वैदिकाचारव्यवहारप्रचाराय च भगवदाज्ञया लब्धजन्मानस्तं

यथावदुक्तार्थान्येभ्यः परमप्रीत्योपदिशन्ति । ततोऽन्ये चान्येभ्यः । यत्रेदमाम्नायते "**यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन् ऋषिषु प्रविष्टाम्**" ( ऋ० ८ । ३ ।२३ । ३ ) इति । यज्ञेन=ब्रह्मणा सृष्टाः मनुष्या यदा वाचः=वेदलक्षणाया वाचः, पदवीयं=भावप्रधानो निर्देशः, पदवीयतां प्राप्तियोग्यताम्, आयन्=आप्नुवन्ति, तदा तां=वाचम्, ऋषिषु=ऋषीणां चित्तसत्त्वेष्विति यावत्, प्रविष्टां=परिस्फुरिताम्, अन्वविन्दन्=लभन्त इत्यर्थः । यज्ञेन पुण्येनेति वाऽर्थः । पुण्यकर्मणा हि मनुष्याः खलु वेदप्राप्तियोग्यतां लभन्ते । अत्र सृष्टा इति नाध्याहार्य्यम् । यज्ञेनर्षिषु प्रविष्टामिति वाऽन्वयः । प्रविष्टाम्=प्रवेशिताम् । "**साक्षात्कृतधर्माण ऋषयो बभूवुः, तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः**" ( निरु० १ । ६ । ५ ) इति च । तदेवं ब्रह्मणः सकाशात् प्रादुर्भूतः खलु भगवान् वेद ऋषिपरम्पराभिरद्ययावत् प्राप्त इत्यवगच्छामः । ऋषयश्च तत्र द्वारमात्रं न तत्प्रणेतार इति ब्रह्मण एव तद्योनित्वं नान्यस्य कस्यचिदिति सर्वमनवद्यम् ।

ननु शास्त्रयोनिश्चेद् ब्रह्म विद्येत, न तत्प्रादुर्भावाय मध्ये द्वारमपेक्षेत । नहि भूतानि प्रादुर्भावयन्मध्ये किञ्चिद् द्वारमपेक्षते । विद्यते च भूतयोनिरपि ब्रह्म—"**यद्भूतयोनिं परिपश्यन्ति धीराः**" ( मुं० १ । १ । ६ । इति श्रुतेः । न च तस्यैकत्र द्वारापेक्षा तदनपेक्षा चान्यत्रेति युज्यते । समानत्वात् । अतो भवति प्रतिपत्तिर्नूनं ब्रह्म नास्ति शास्त्रयोनिरिति । **न** । तस्याधिकारविशेषसूचनार्थत्वेनादोषत्वात् । सत्यं शास्त्रयोनित्वं भूतयोनित्वं च ब्रह्मणः समानं विद्यते, तथापि शास्त्रस्य भूतानां चास्ति कश्चित् परस्परं विशेषः । भूतेषु हि पृथिव्यादिषु मनुष्याः पशवः पक्षिणः कीटाः पतङ्गाश्च सर्वे प्राणिनोऽविशेषेणाधिक्रियन्ते । नहि मनुष्यो वा पशुर्वा पक्षी वा कीटो वा पतङ्गो वा कश्चिदपि प्राणी भुवमधिशयितुं नीरमभिपातुं तेजस्तप्तुं वायुमशितुं व्योम्नि गन्तुं च न पारयति । न चैवमृग्वेदादिलक्षणं शास्त्रम् । तत्र हि केवलं मनुष्या अधिक्रियन्ते । यत्रेदं वक्ष्यति "**हृद्यपेक्षया तु मनुष्याधिकारत्वात्**" ( वे०

१।३।२५) इति। न च तेभ्यो व्यतिरिक्तः पशुर्वा पक्षी वा कीटो वा पतङ्गो वा कश्चिदपि जन्तुरेतच्छास्त्रं पठितुं वा पाठयितुं वा प्रवक्तुं वा निर्वक्तुं वा शक्नोति। मनुष्याश्चैतत् सर्वं कुर्वाणा उपलभ्यन्ते। सोऽयमधिकारलक्षणो विशेषो द्वारापेक्षणेनानेन सूच्यते। तदनपेक्षणे हि ब्रह्मयोनिकत्वाविशेषाद् मनुष्या इव पश्वादयोऽपि तत्राधिकारिणो भवेयुः पश्वादय इव वा मनुष्या अपि तत्राधिकारिणो न स्युरिति कश्चिदाशङ्केत। न च तदपेक्षणे शङ्केयमुदयमासादयति। यस्य यद्द्वारा प्रादुर्भावस्तत्र तस्यैवाधिकार इति तदपेक्षणेनैव सूचितत्वात्। अतो ब्रह्मणः शास्त्रस्य भूतानां च योनित्वेऽविशेषेऽपि शास्त्रोत्पत्तौ द्वारापेक्षा भूतोत्पत्तौ च तदनपेक्षेति युज्यतेतरां, नास्ति कश्चिद्दोषः। तथा च शास्त्रयोनिर्ब्रह्मेति निर्बाधम्॥ ४॥

**ननु** भवतु शास्त्रयोनित्वात् सर्वज्ञं सर्वशक्ति ब्रह्म जगतो जन्मादिकारणम्। न चैतावता निमित्तकारणं तदभ्युपगन्तुं शक्यते। "जन्माद्यस्य यतः" इति लक्षणस्योपादानकारणसाधारणत्वात्। निमित्तकारणतायाश्चाशब्दत्वादिति। अस्योत्तरं पठति—

**"ईक्षतेर्नाशब्दम्"** ॥ ५॥

ब्रह्मेत्यधिक्रियते। **अशब्दं**=जगज्जन्मादेर्निमित्तकारणं ब्रह्मेत्यशब्दमश्रौतं **न**=न भवति, कुतः? **ईक्षतेः**=ईक्षणश्रुतेरित्यर्थः।

ऋग्वेदादिलक्षणं शास्त्रं अत्र शब्दः **"शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्"** (वे० १।३।२८) इति वक्ष्यमाणात्। तेन चोपनिषल्लक्ष्यते। अग्रिमसूत्रेषु तद्वाक्यविचारस्यैवोपलब्धेः। व्याख्यानव्याख्येयभावश्च शक्यसम्बन्धः। व्याख्येयमुक्तलक्षणं शास्त्रं, व्याख्यानं चोपनिषदो ब्राह्मणानि चेत्युभयम्। न विद्यते प्रतिपादकः शब्दो यस्य तदशब्दम्। न कश्चिच्छब्दो जगज्जन्मादिनिमित्तकारणं ब्रह्म प्रतिपादयतीति तदर्थः। सोऽयं नञा प्रतिषिध्यते। तत्र हेतुरीक्षतेः। एष च धात्वर्थनिर्देशो न धातुनिर्देशः। **"इक्श्तिपौ धातुनिर्देशे"**

इत्यत्र बहुलमित्यनुवृत्तेस्ततोऽन्यत्रापि श्तिपः सम्भवात् । अतएव च प्रयुज्यते दर्शनान्तरे **"बुद्धिपूर्वो ददातिः"** (वै० ६ । १ । ३) इति । **"यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात्"** (मी० ४ । २ । २७) **"तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात्"** (मी० ४ । २ । २८) इति च । यजतिचोदना=यजतिशब्दः । यजतिजुहोतिददातिषु च सर्वेषूत्सर्गः समानः । तत्र यजतिर्देवतामुद्दिश्योत्सर्गमात्रं, जुहोतिरासेचनाधिकः, आसेचनमग्नौ प्रक्षेपः, ददातिश्चोत्सर्गपूर्वकः परस्वत्वेन सम्बन्ध इत्येषां विशेषः । धात्वर्थश्चेक्षणम् । तच्च सङ्कल्पगर्भं पर्य्यालोचनात्मकं ज्ञानम् । यत्किलौपनिषदास्तप इत्यधीयते । तच्छ्रवणादिति तदर्थः । एवं हि छान्दोग्ये षष्ठप्रपाठके तावदीक्षणं श्रूयते **"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"** (छा० ६ । २ । १) इत्युपक्रम्य **"तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत"** (छा० ६ । २ । ३) इति । तत्राकाशं वायुं च सृष्ट्वा तत्तेजोऽसृजतेति शेषो द्रष्टव्यः । न चैवं श्रूयमाणेऽपि तस्मिन् जगतो जन्मादेर्निमित्तकारणं ब्रह्मश्रौतं सम्पद्यते । सृष्टेः प्रागिदंशब्दवाच्यं चेतनाचेतनात्मकं निखिलं जगत् प्रकृत्या सह सच्छब्दवाच्ये ब्रह्मण्यविभागेनावस्थानात् तदात्मनाऽवधार्य्य पुनस्तस्यैव सच्छब्दवाच्यस्य ब्रह्मण ईक्षणपूर्वकं तेजःप्रभृतेः स्रष्टृत्वस्य साक्षादभिधानात् । नहि श्रुत्या निमित्तकारणत्वाभावे तस्येक्षणपूर्वकं तेजःप्रभृतेः स्रष्टृत्वमभिधातुं शक्यते । नहि लोके मृत्तिकादेरुपादानकारणस्येक्षणपूर्वकं कुम्भादिस्रष्टृत्वं क्वचिदुपलभ्यते, येनात्रापि तत्तथा कल्प्येत । निमित्तकारणस्य कुम्भकारादेरीक्षणपूर्वकं कुम्भादिस्रष्टृत्वं तु प्रत्यक्षमुपलभ्यते । न च प्रत्यक्षसंवादिन्याऽनयाऽभिधीयमानं तत् कथञ्चिदपह्नोतुं पार्य्यते । श्रौतत्वेन प्रबलत्वात् । यथा चात्र ब्रह्मण ईक्षणपूर्विका सृष्टिः श्रूयते तथा श्रुत्यन्तरेऽपि श्रूयते **"आत्मा वा इदमेक एवाग्र आसीत् । नान्यत् किञ्चन मिषत् । स ईक्षत लोकान्नु सृजा इति । स इमाँल्लोकानसृजत"** (ऐत० १ । १) इति । **"स ईक्षांचक्रे स प्राणमसृजत"**(प्र०६।३) इति च। तथा भगवति

वेदेऽपि ब्रह्मणः सृष्टिहेतुः काम आम्नायते **"कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्। सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा"** (ऋ० ८ । ७ । १७ । ४) इति । अग्रे=सृष्टेः प्राक् स्वधया प्रकृत्या वर्तमानस्यैकस्य ब्रह्मणस्तत्=सः, कामः=बहु स्यां प्रजायेयेति सङ्कल्पोऽधिसमवर्तत=अजायत । यत्=यो, मनसः=महत्तत्त्वस्य **"महदाख्यमाद्यं कार्यं तन्मनः"** (सां० १ । ७१) इति स्मृतेः । प्रथमं=मुख्यं, रेतः=बीजं, प्रादुर्भावकारणमासीत्=अस्ति । सोऽयं भगवत्कामोऽस्य सतः=व्यक्तस्य जगतः प्रादुर्भावहेतुत्वाद् बन्धुः, तमसति=विषयसप्तमीयम्, असद्व्यक्तं मूलकारणं प्रकृतिं गोचरयन्तं कवयः=सूक्ष्मधियो योगिनो, मनीषा=सूक्ष्मधिया, हृदि=मनसि, प्रतीष्य=सम्यगन्विष्य, निरविन्दन्=व्यजानन्नित्यर्थः । यस्य च सृष्टिहेतुरीक्षणं कामश्च सञ्जायते, तन्निमित्तकारणमिति निश्चेतव्यम् । तदाश्रयस्य निमित्तकारणत्वनियमात् । ईक्षणं हि ज्ञानं, कामश्च सङ्कल्पः । तौ चेमौ नियमेन साश्रयविषयौ न कदाचिदाश्रयं विषयं च परित्यज्य तिष्ठत इति सर्वतन्त्रसिद्धान्तः । न च य आश्रयः स एव तयोर्विषय इति युज्यते । विरोधात् । ज्ञात्रादिभावो हि ज्ञानाद्याश्रयत्वम्, ज्ञेयादिभावश्च ज्ञानादिविषयत्वम् । ते चोभे गन्तृगन्तव्यत्वे इव परस्परं विरुद्धे नैकस्मिन् समवेतुमर्हतः । नहि गन्त्रेव गन्तव्यं भवति, गन्तव्यमेव वा गन्तृ । तस्माद् भिन्नस्तयोराश्रयो भिन्नो विषय इति वक्तव्यम् । यः खल्वाश्रयस्तन्निमित्तकारणं यथा कुम्भकारादिः । यश्च विषयस्तदुपादानकारणं यथा मृत्तिकादिः । अत्र विषयः प्रकृतिः **"तपसा चीयते ब्रह्म"** (मु० १ । १ । ८) इत्यादिश्रुतेः । आश्रयश्च ब्रह्म **"तदैक्षत बहु स्यां प्रजायेय"** (छा० ६ । २ । ३) **"सोऽकामयत बहु स्यां प्रजायेय"** (तै० २ । ६) इत्यादिश्रुतिभ्यः । तथा च **"जन्माद्यस्य यतः"** इति लक्षणस्योपादानकारणसाधारणत्वेऽपि श्रूयमाणस्यास्येक्षणस्यासाधारणत्वाद् जगतो जन्मादेर्निमित्तकारणं ब्रह्म नाश्रौतमिति सर्वं समञ्जसम् ॥

**केचित्तु** सूत्रमिदमेवं व्याचक्षते "**न**=न सांख्यपरिकल्पितमचेतनं प्रधानं जगतः कारणं शक्यं वेदान्तेष्वाश्रयितुम् । कुतः ? **अशब्दं** हि तत् । कथमशब्दत्वम् ? **ईक्षतेः**=ईक्षितृत्वश्रवणात् कारणस्य" इति । **तन्न** सम्यक् । प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गात् । अत्र हि ब्रह्म प्रक्रियते, न प्रधानम् । न ह्येतज्जिज्ञास्यं वा लक्ष्यं वा शास्त्रयोनिर्वा विद्यते, येन प्रक्रियेत । न वाऽत्र वा पूर्वत्र वा तद्वाचि किञ्चित् पदमुपलभ्यते । अध्याहारस्तु प्रकरणनिबन्धनो भवति न स्वतन्त्रः । न च सूत्रशैल्याऽपि तत्परिग्रह आपतति । तत्र हि प्रकृतस्य कस्यचित् प्राप्तमशब्दत्वमीक्षते-र्हेतोः प्रतिषिध्यते न प्रधानस्य कारणत्वमिति विस्पष्टम् । अकस्मात् तत्परिग्रहे च प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयाताम् । दूषणं चैतद् व्याख्यानस्य, न भूषणम् । न च कारणस्येक्षितृत्वश्रवणादपि प्रधानस्याशब्दत्वं सेद्धुमर्हति, किन्तु कारणस्य शब्दत्वम् । तच्च निमित्तकारणविषयेति मामको विजयो न तावकः । नापि प्रधानस्याशब्दत्वं वक्तुं शक्यते । "**आनीदवात स्वधया तदेकम्**" (ऋ० ८ । ७ । १७ । २) "**महतः परमव्यक्तम्**" (कठ० ३ । ११) "**इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् । सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम्**" (कठ० ६ । ७) "**पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च**" (प्र० ४ । ८) "**तपसा चीयते ब्रह्म ततोऽन्नमभिजायते**" (मुं० १ । १ । ८) "**अजामेकां लोहितशुक्लकृष्णाम्**" (श्वे० ४ । ५) "**प्रधानक्षेत्रज्ञपतिर्गुणेशः**" (श्वे० ६ । १६) इत्यादिश्रुतिभिः सपरिवारस्य तस्य श्रौतत्वावगमात् । **एतेन** "यस्मिन् शब्द एव प्रमाणं न भवति तदशब्दमानुमानिकं प्रधानमित्यर्थः" इति व्याचक्षाणोऽपि प्रत्याख्यातो द्रष्टव्यः । यच्चात्राधिकं वक्तव्यं केषांचिद्विद्यते, तदग्रेऽनूद्य प्रतिवदिष्याम इत्यलमिह विस्तरेण ॥ ५ ॥

जगतो जन्मादेर्निमित्तकारणं ब्रह्म नाश्रौतमीक्षतेरिति व्यवस्थापितम् । सम्प्रति तदेव द्रढयितुकामो गौणमीक्षणमाशङ्क्य निराकुरुते—

**"गौणश्चेन्नात्मशब्दात्"** ॥ ६ ॥

ईक्षतिरिति विपरिणम्यानुवर्तते । **गौणः**=गुणः प्रकृतिः "आनन्दादयः प्रधानस्य" (वे० ३।३।११) इति ब्रह्मणि प्रधानशब्दप्रयोगात्, भोग्यत्वाद्वा गुणरूपत्वाद्वा, तस्यायमीक्षतिरिति **चेत्**=यद्युच्यते तदा **न**=न वक्तव्यं, कुतः? **आत्मशब्दात्**=ईक्षितुरात्मशब्देनाभिधानादित्यर्थः ।

न खलु **"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"** (छा० ६ । २ । १) इत्यत्र सर्वज्ञं सर्वशक्ति ब्रह्म सच्छब्दवाच्यमभ्युपगन्तुं शक्यते । तस्येदंशब्दवाच्येन चेतनाचेतनात्मना जगता सामानाधिकरण्यनिर्देशासम्भवात् । आधाराधेयभावनिबन्धनो ह्येष सामानाधिकरण्यनिर्देश इति यौष्माकीणः सिद्धान्तः । न च लोके चेतनं किञ्चिदचेतनानां चेतनानां चाधारः क्वचिदुपलभ्यते, येनेदमपि तदाधारः कल्प्येत । न चानुपलब्धस्य कल्पनं युज्यते । तस्योपलब्धिपूर्वकत्वनियमात् । तथाचोक्तं दर्शनान्तरे **"तत्पूर्वकं त्रिविधमनुमानम्"** (न्या० १ । १ । ५) इति । न चाधाराधेयभावाभावे निर्देशोऽयं सम्भवति । भूमिश्चेयं चेतनानामचेतनानां च केषांचिदाधारः प्रत्यक्षा । सा चाचेतना । तत्सामान्यात् सच्छब्दवाच्येनापि चेतनाचेतनसर्वभूताधारयोग्येन केनचिदचेतनेन भवितव्यम् । तच्च मूलकारणं प्रकृतिरिति युक्तमवगम्यते । यां किलौपनिषदाः प्रधानमव्यक्तमव्याकृतमिति चाचक्षते । चेतनाचेतनसर्वभूताधारत्वं च तस्यास्तदुपभोगोत्पत्तिहेतुत्वात् सङ्गच्छते, नास्ति कश्चिद्विरोधः । न च तस्याः सच्छब्दवाच्यत्वे **"तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत"** (छा० ६ । २ । ३) इति श्रूयमाणेक्षणानुपपत्तिर्जडत्वादिति चारु भाषणम् । **"तत्तेज ऐक्षत"** (छा० ६ । २ । ३) **"ता आप ऐक्षन्त"** (छा० ६ । २ । ४) इत्यादिवत्तदुपपत्तेः । यथा हि युष्माकमचेतनयोरप्तेजसोः श्रूयमाणमीक्षण-

मुपपद्यते, तथाऽस्माकं सच्छब्दवाच्यायामचेतनायां प्रकृतावप्युपपद्यते । समानत्वात् । तत्र चेदौपचारिकं मन्यते, अत्राप्यौपचारिकं मन्तव्यम् । तत्सहचरितातत्सहचरितयोस्तत्सहचरितस्यैव ग्रहणमिति न्यायात् । तथा च गौणमीक्षणम्, तस्य गौणत्वे च जगतो जन्मादेर्निमित्तकारणं ब्रह्म-नाश्रौतमित्यनुपपन्नम् । **न** । आत्मशब्देनाभिधानात् । यद्धि सत् **"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"** इति प्रकृतं तदेव **"तदैक्षत बहु स्याम्"** इतीक्षितृ निरूप्य, पश्चात् **"तत्सत्यं स आत्मा"** ( छा० ६ । ८ । ७ ) इति चेतनवाचिनाऽऽत्मशब्देना-भिधीयते । तत्र चेत् सच्छब्दवाच्यं मूलकारणं प्रकृत्याख्यं किञ्चित् तत्त्वं परिकल्प्येत तदा प्रकृतत्वात् तदेवोत्तरत्र चेतनवाचिनाऽऽत्मशब्देनाभि-धीयेत । न च जड़ा प्रकृतिश्चेतनवाचिनाऽऽत्मशब्देन कर्हिचिदभिधातुं शक्यते । शब्दशक्तिविरोधप्रसङ्गात् । यथा हि गोत्वविशिष्टे सास्नादिमति गोपिण्डे गोशब्दस्य शक्तिर्वर्तते, न वडवात्वविशिष्टे केसरादिमति वडवापिण्डे तथाऽऽत्मशब्दस्याप्यात्मत्वविशिष्टे चिद्धातौ शक्तिर्वर्तते न प्रकृतित्वविशि-ष्टेऽचिद्धातौ प्रकृतिपिण्डे । यस्य च यत्र शक्तिर्न विद्यते तेन तदभिधाने शब्दशक्तिविरोधः प्रसज्यते । विरुद्धाभिधानात् । यथा गोशब्देन वड़-वाभिधाने । चेदात्मशब्देनापि प्रकृतिरभिधीयेत तदाऽवश्यं शब्दशक्ति-विरोधः प्रसज्येत । न चैवं ब्रह्मणः सच्छब्दवाच्यत्वे शब्दशक्तिविरोधः प्रसज्यते । तत्रात्मशब्दस्य शक्तेर्विद्यमानत्वात् । एतच्च **"तमेव विद्वान् न बिभाय मृत्योरात्मानं धीरमजरं युवानम्"** ( अथर्व० १० । ४ । ८ । ४४ ) **नायमात्मा प्रवचनेन लभ्यः"** ( क० २ । २३ ) **"अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्व-मस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा"** ( मुं० २ । १ । ४ ) **"य एषोऽक्षणि पुरुषो दृश्यते, एष आत्मेति होवाच, एतदमृतमभयमेतद् ब्रह्म"** ( छा० ४ । १५ । १ ) **"तदेतत्पदनीयमस्य सर्वस्य यदयमात्मा"** (बृ० १ । ४ । ७)

**"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा"** (श्वे० ६।११) इत्यादिश्रुतिवाक्येभ्योऽवगम्यते । तस्मात् सर्वज्ञं सर्वशक्ति ब्रह्मैव सच्छब्दवाच्यमास्थेयं न जातु प्रकृतिः । **ईक्षणस्यौपचारिकत्वकल्पने गौरवप्रसक्तेश्च** । यथा हि प्रकृतेः सच्छब्दवाच्यत्वे शब्दशक्तिविरोधस्तावत् प्रसज्यते तथेक्षणस्यौपचारिकत्वकल्पने गौरवमपि प्रसज्यते । चेतनधर्मो हीक्षणं न तज्जडायाः प्रकृतेर्धर्मो भवितुमर्हति । तस्य तद्धर्मत्वाय तत्र पूर्वं चेतनसम्बन्धाच्चेतनत्वस्योपचारः कल्पयितव्यः । तदनु च चेतनधर्मस्येक्षणस्येति कल्पनागौरवम् । यथा वा चेतनः पुरुषः स्नात्वा भुक्त्वा चापराह्णे ग्रामं रथेन गमिष्यामीतीक्षित्वाऽनन्तरं तथैव नियमेन प्रवर्तते, तथा प्रकृतिरपि जगद्रचनायां महदाद्याकारेण नियमेन प्रवर्तते, तदेतन्नियतप्रवृत्तिगुणसाम्यात् प्रकृतौ पुरुषवदीक्षणं तावत् कल्पयितव्यम् । तत्र चैका प्रकृतिपुरुषगुणसाम्यकल्पना, द्वितीया च गुणसाम्यकल्पनाद्वारकेक्षणकल्पनेति कल्पनागौरवम् । अप्तेजसोः श्रूयमाणमीक्षणं त्वगत्यौपचारिकमभ्युपगम्यते । न चैकत्रौपचारिकमीक्षणं दृष्टमित्येतावताऽन्यत्रापि स्वाभिमतमर्थं परिकल्प्य तत तथाऽभ्युपगन्तुं पार्य्यते । अन्याय्यत्वादित्यदृष्टान्तः । यदप्युक्तं चेतनाचेतनात्मनो जगतः प्रकृतिराधारः सम्भवति, यथा भूमिर्न पुनर्ब्रह्म । लोके चेतनस्य कस्यचित्तदाधारत्वानुपलब्धेः । तस्मान्न तत्सच्छब्दवाच्यं किन्तु प्रकृतिरिति । तदयुक्तम् । अधिष्ठानकारणत्वादुपपत्तेः । एतच्च कृतविस्तरमधस्तादित्युपरम्यते । न चान्या काचिदनुपपत्तिरस्ति ब्रह्मणः सच्छब्दवाच्यत्वे । प्रकृतेस्तद्वाच्यत्वे तूक्तम् "आत्मशब्दात्" इति । तथा च न गौण ईक्षतिरित्युपपन्नम् ॥ ६ ॥

अथोच्येत यथा हि ज्योतिःशब्दोऽनेकार्थो ब्रह्मणि ज्वलने चोभयत्र प्रयुज्यते, तथाऽऽत्मशब्दोऽप्यनेकार्थः प्रकृतौ ब्रह्मणि चोभयत्र प्रयोक्तुं शक्यते । ब्रह्मवद् भूतात्मेन्द्रियात्मेत्यचेतनेऽपि लोके तत्प्रयोगदर्शनात् । अतो न **"तत्सत्यं स आत्मा"** इत्यात्मशब्दादगौण ईक्षतिरिति युक्तं वचः । तस्य तत्र प्रकृतिवचनत्वादिति । अस्योत्तरं पठति—

**"तन्निष्ठस्य मोक्षोपदेशात्"** (॥ ७ ॥)

नात्मशब्द इति विपरिणम्यानुवर्तते। "तत्सत्यं स आत्मा" इत्यात्मशब्दः प्रकृतिवचनो नोपपद्यते, कुतः? **तन्निष्ठस्य**=तद्वाच्यनिष्ठस्य, **मोक्षोपदेशात्**=उत्तरत्र मोक्षानुशासनादित्यर्थः।

**"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"** इति प्रकृतं सत् **"तत्सत्यं स आत्मा"** इत्यात्मशब्देनोपादाय **"तत्त्वमसि श्वेतकेतो!"** (छा० ६। ८। ७) इति मोक्षयितव्यस्य चेतनस्य श्वेतकेतोस्तन्निष्ठामुपदिश्य **"तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ सम्पत्स्ये"** (छा० ६। १४। २) इति ब्रह्मोपसम्पत्तिलक्षणो मोक्ष उपदिश्यते। यदि हि "तत्सत्यं स आत्मा" इत्यात्मशब्दः प्रकृतिवचनो भवेत्, तदा न तन्निष्ठस्योक्तलक्षणो मोक्ष उपदिश्येत। प्रकृतिनिष्ठाया मोक्षहेतुत्वासिद्धेः। निष्ठा हि प्रतिष्ठा सर्वव्यापारपरित्यागेनानन्यचित्ततया प्रणिधानमिति यावत्। सा यद्गोचरा प्रजायते तद्गोचरमेव साक्षात्कारं प्रसूते नान्यगोचरमिति नियमः। प्रकृतिनिष्ठा च प्रकृतिगोचरा सा तद्गोचरमेव साक्षात्कारं प्रसोष्यते न ब्रह्मगोचरम्। मोक्षश्च ब्रह्मसाक्षात्काराद्भवति न प्रकृतिसाक्षात्कारादिति न सा मोक्षस्य हेतुः सिध्यति। न चासिद्धहेतुत्वायास्तस्यास्तद्धेतुत्वेनोपदेशो युज्यते। वञ्चकत्वप्रसङ्गात्। न खलु पितोद्दालकः पुत्रस्य श्वेतकेतोर्वञ्चनाय प्रवृत्ते। अपि च? प्रकृतिनिष्ठया मोक्षमार्गाद् भ्रश्यतस्तस्य तामपनीय मोक्षसाधनभूतां ब्रह्मनिष्ठामुपदेष्टुम्। यदि च तथा प्रवृत्तोऽप्यसौ पुनस्तामेव प्रकृतिनिष्ठां मोक्षसाधनतयोपदिशेत्, तदा वञ्चकः प्रसज्येत। न चैष **"श्वेतकेतो! वस ब्रह्मचर्य्यं, न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवति"** (छा० ६। १। १) इत्येवं वैदिकधर्मोपदेष्टा महर्षिर्वञ्चक इति कल्पयितुं युज्यते। तस्माद् यथा प्रजावत्सलः परमपिता परमात्माऽहर्निशं सुखार्थिन्याः प्रजाया अग्निहोत्रादिकं तत्साधनं यथाभूतमुपदिशति **"सुसमिद्धाय शोचिषे घृतं तीव्रं**

**जुहोतन**" (ऋ० ३ । ८ । २० । १) इति, तथा पुत्रवत्सलो महर्षिरुद्दालकोऽपि मोक्षकामस्य पुत्रस्य श्वेतकेतोः "**तत्सत्यं स आत्मा**" इति प्रकृतं सदात्मकं ब्रह्मात्मत्वेनोपादाय "**तत्त्वमसि श्वेतकेतो**" इति मोक्षसाधनं तन्निष्ठां यथाभूतमुपदिशतीति मन्तव्यम् । **एवं** च सति तस्य तत्त्वमसिवाक्यार्थनिरूपणपरे चरमपर्य्यायेऽनृताभिसन्धस्य प्रकृतिनिष्ठस्य बन्धः सत्याभिसन्धस्य ब्रह्मनिष्ठस्य च मोक्षो भवतीत्युपदेशोऽप्युपपद्यते । प्रकृतिवचनत्वे चात्मशब्दस्य नैतदुपपन्नं स्यात् । अतो न "तत्सत्यं स आत्मा" इत्यात्मशब्दः प्रकृतिवचनः ।

यच्चोक्तं ज्योतिःशब्द इवात्मशब्दोऽप्यनेकार्थ इति । तन्न सम्यग् । अनेकार्थत्वस्यान्याय्यत्वात् । शब्दशास्त्रविदः खलु वृत्त्यन्तरलोपभिया शब्दस्यैकार्थत्वमेव न्याय्यं मन्यन्ते नानेकार्थत्वम् । एषा हि तेषां स्थितिः शब्दस्तावत् स्वभावत एकस्मिन्नेवार्थे मुख्यया वृत्त्या प्रयुज्यते न सर्वत्र । यत्र च मुख्यया वृत्त्या प्रयुज्यते स एव तस्य मुख्योऽर्थः । ततोऽन्यस्तु गौणो वा स्यात् पारिभाषिको वा स्यादिति । क्वायं मुख्यः क्व च गौण इति तु शब्दव्युत्पत्त्या प्रयोगादिना चावगम्यते । न चात्मशब्दोऽयं व्युत्पत्त्या कथञ्चित् प्रकृतिवचन उपपद्यते । तस्य चेतनमात्रे व्युत्पन्नत्वात् । नापि निरुपपदस्य तस्य ब्रह्मणोऽन्यत्र क्वचित्प्रयोग उपलभ्यते, येन प्रकृतिवचनोऽपि कल्प्येत । सोपपदस्य प्रयोगस्त्वात्माविभागाद् गौण इति कल्पयितुं शक्यते । यथा भूतात्मेन्द्रियात्मेति च । एवमन्यत्रापि द्रष्टव्यम् । "तत्सत्यं स आत्मा" इति तु निरुपपदात्मशब्दप्रयोगः । तस्माद् ब्रह्मवचन एवासौ न प्रकृतिवचन इति गम्यते । ज्योतिःशब्दोऽपि नानेकार्थः । स हि "**तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः**" (मुं० २ । २ । ९) "**एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते**" (छा० ८ । १२ । ३) **तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्**" (बृ० ४ । ४ । १६) इत्यादिश्रुतिभ्यो ब्रह्मण्येव मुख्यः "**यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो**

**विद्धि मामकम्**" (गी० १५ । १२) इति स्मृतेर्ज्योतिष्ट्वगुणसादृश्येन तु ज्वलने प्रवृत्त इत्यदृष्टान्तः । तस्मात् "तत्सत्यं स आत्मा" इत्यात्म-शब्दो न प्रकृतिवचनः किन्तु प्रकृतसदीक्षितृब्रह्मात्मवचनस्तन्निष्ठस्य मोक्षो-पदेशात् ॥

**एतेन** "तत्त्वमसि" इति वाक्यमपि व्याख्यातं वेदितव्यम् । तन्नि-ष्ठस्येति तदर्थस्यैव सूत्रितत्वात् । उक्तवाक्ये हि पदत्रयं वर्तते "तत्" इति, "त्वम्" इति, "असि" इति च । तत्र "त्वम्" इति पदमसन्दि-ग्धार्थम् । "तत्" इति पदम्, "असि" इति पदं च सन्दिग्धार्थम् । न विज्ञायते तत्पदं प्रकृतसदीक्षितृब्रह्मात्मवचनं किंवा तन्निष्ठवचनम्, असीति च वर्तमानसत्तामात्रवचनं लटो रूपं, यद्वा विधिवचनं लेटो रूपमिति । उभयथा सम्भवात् सन्देहः । स च श्रुत्यर्थनिर्धारणाय प्रवृत्तेन पदवाक्यप्रमाणज्ञेनाचार्येणावश्यापाकरणीयः । अन्यथा न्यूनता-पत्तेः । सा मा नामापादीति तदपाकरणार्थं तन्निष्ठस्येति तदर्थः सूच्यते । अनेन तत्पदं तन्निष्ठवचनमाचार्याभिप्रेतमिति स्फुटमवगम्यते । कथम-न्यथा तन्निष्ठस्येति सूत्रयेत् । नहि तत्पदस्य तन्निष्ठार्थत्वाभावे तथासूत्रणं सङ्गच्छते । निष्ठा च भव्यपदार्थो न भूतपदार्थः क्रियात्वादिति यज्ञादि-क्रियावदात्मनिष्पत्तये विधिमपेक्षते । अन्यथा तदनिष्पत्तेः । अनेन चासीति पदमपि विधिवचनं लेटो रूपमिति गम्यते । न च "**लेटोऽ-डाटौ**" (अष्टा० ३ । ४ । ९४) इति विहितस्याटोऽटश्चादर्शनान्नेदं तद्रूपमिति चारु भाषणम् । "**षष्ठीयुक्तश्छन्दसि वा**" (अष्टा० १ । ४ । ९) इति सूत्रे "छन्दसि वा" इति योगं विभज्य "वा छन्दसि सर्वे विधयो भवन्ति" इति छन्दसि सर्वविधीनां विकल्पस्याश्रयणात् तद्रूपोपपत्तेः । उपनिषदां च मुख्यच्छन्दस्त्वाभावेऽपि छन्दोव्याख्यानात्मक-त्वाद् गौणं छन्दस्त्वमस्त्येव । अतो न कश्चिद्दोषः । यथा चासां गौणं छन्दस्त्वं न मुख्यं तथा "**विकारशब्दान्नेति चेन्न प्राचुर्यात्**" (वे० १ । १ । १३) इत्यत्र सविस्तरं प्रवेदयिष्यते । त्वंपदार्थश्च श्वेत-केतुरुपदेश्यः प्रत्यक्ष इति निर्विवादम् । तथा च तन्निष्ठस्त्वं भव श्वेत-

केतो ! इति वाक्यार्थो निष्पन्नः। सोऽयं युक्त इति पश्यामः। आचार्य्य-वचसोऽन्यथयितुमशक्यत्वात्। उपनिषदर्थनिर्धारणे तावदाचार्य्यवचः प्रमाणमिति सर्वे वैदिका अनुमन्यन्ते, नास्ति कस्याप्यत्र विमतिः। तत्र यथैकत्र तथा परत्रेति न तत्त्वमसिवाक्यार्थनिर्धारणसमये कथञ्चिदन्यथयितुं शक्यते। अर्द्धजरतीयानुहरणप्रसङ्गात्। तदेतदसाधु। स हि पश्यति यदा खलु स्वयमुद्दालको महर्षिः पुत्रस्य श्वेतकेतोः संसारहेतुं प्रकृतिनिष्ठामपनीय मोक्षसाधनभूतां ब्रह्मनिष्ठामापादयितुं नानाविधं पीठमारचयन् "तत्त्वमसि श्वेतकेतो !" इति नवकृत्व उपदिशति, तदर्थभ्रमापनोदनाय च चरमपर्य्याये स्तेनोदाहरणं पुरस्कृत्य प्रकृतिनिष्ठस्य संसारं ब्रह्मनिष्ठस्य च मोक्षं दर्शयति, तदा तदुपदिष्टं "तत्त्वमसि" इति वाक्यं कथं न "तन्निष्ठस्त्वं भव" इत्यर्थार्पितं स्यात्। नहि श्रुत्यर्थनिर्धारणे प्रवृत्तस्य प्रवक्त्राशयाननुसरणं युज्यते। प्रवक्तुश्च तत्पदं तन्निष्ठवचनमभिप्रेतमिति चरमपर्य्यायाद् विस्पष्टम्। एवं हि चरमपर्य्यायः पठ्यते "**पुरुषं सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत् स्तेयमकार्षीत्, परशुमस्मै तपतेति, स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते। १। अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते। २। स यथा तत्र नादाह्येतैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो !**" (छा० ६। १६। १-२-३) इति। सोम्य=हे प्रियदर्शन ! स्तैन्ये कर्मणि सन्दिह्यमानं पुरुषं यदा राजपुरुषाः राजसमक्षे हस्तगृहीतं=बद्धहस्तमानयन्ति=प्रापयन्ति, तदा ते तस्य पुरुषस्य परीक्ष्य हननाय परशुमस्मै तपतेत्याज्ञाप्यन्ते। स यदि तस्य=स्तैन्यस्य कर्म्मणः कर्ता भवति ततश्चात्मानमनृतम्=अनृतपरायणम्=अनृतनिष्ठमिति यावत् कुरुते, सोऽनृताभिसन्धः=अनृतनिष्ठः 'अनृतमभिसन्धत्ते प्रणिधत्ते तत्र

प्रतिष्ठति नितिष्ठति यः स तथेति तद्व्युत्पत्तेः, एतदेव स्फोरयति, अनृतेनात्मानमन्तर्धाय=लक्ष्यमयः शर इवानृतमयात्मा भूत्वा तप्तं परशुं प्रति गृह्णाति=गृह्णाति, स दह्यते तदनन्तरं च हन्यते। यदि च तस्य कर्मणोऽकर्ता भवति ततश्चात्मानं सत्यं सत्यपरायणं सत्यनिष्ठं कुरुते स सत्याभिसन्धः=सत्यनिष्ठः सत्येनात्मानमन्तर्धाय तप्तं परशुं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते। स एष सत्याभिसन्धः पुरुषो यथा तत्र तप्तपरशुग्रहणात्मके व्यापारे नादाह्येत=न दह्यते, तथा सत्यब्रह्मात्मनिष्ठः पुरुषोऽपि सांसारिके व्यापारे तप्तपरशुकल्पेन संसारेण न दह्यते, प्रारब्धभोगानन्तरं च मुच्यते=ब्रह्मोपसम्पद्यते। तस्मादैतदात्म्यं=येनैतेन परदेवताभिधेन प्रकृतसदीक्षितृब्रह्मात्मनाऽऽत्मवदिदं सर्वं जगत् तत् सत्यं स एवात्मा ब्रह्म तन्निष्ठस्त्वं भव श्वेतकेतो! इति च तदर्थोऽवगन्तव्यः। अत्र प्रवक्ता पितोद्दालकः श्वेतकेतुं पुत्रं सत्याभिसन्धो न हन्यते मुच्यते चेत्युदाहृत्य "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो!" इत्युपदिशति। तत्याभिप्रायः स्पष्टस्त्वमपि श्वेतकेतो! सत्याभिसन्धो भवेति। चेदेवमेष नाभिप्रेष्यत् तदा सत्याभिसन्धो न हन्यते मुच्यते चेति नोदाहरिष्यत्। उदाहरणोदाहरणिकयोः सर्वथा वैरूप्यप्रसङ्गात्। न च तयोः सर्वथा वैरूप्यमिष्यते। अपि च! उदाहरणं यस्मिन्नंशे तस्मिन्नंशे सारूप्यमन्यत्र वैरूप्यम्। मोक्षकारणांशे चोदाहरणम्। तत्रापि चेत् सारूप्यं न मन्येत तदा सर्वथा वैरूप्यं प्रसज्येत। नहि येन प्रकृतेन सदीक्षितृब्रह्मणेदं सर्वं जगदात्मवत् तत्सत्यं स आत्मा तन्निष्ठस्त्वं भव श्वेतकेतो! इत्यर्थं परित्यज्य तद् ब्रह्म त्वमसि=भवसीत्यर्थाभ्युपगमे किञ्चिदपि तत्सारूप्यं सम्भवति। न च सर्वथा विरूपमुदाहरणं न्यायविदो युक्तं मन्यन्ते। तस्माद् युक्तमाचार्य्यदर्शनमिति विज्ञायते। **प्रतिज्ञासामर्थ्याच्च**। उपक्रमे तावद् **"उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्"** (छा० ६।१।२) इति प्रतिज्ञेयं श्रूयते। तस्याश्च श्वेतकेतो! तमादेशम्=आदिश्यत उपदिश्यत इत्यादेशः केवलशास्त्राचार्य्योपदेशगम्यः परं ब्रह्म परमात्मा, तमुत अपि,

अप्राक्ष्यः=उपाध्यायादप्राक्षीः, येन श्रुतेनाश्रुतमन्यच्छ्रुतं भवति, मतेनामतमन्यन्मतं भवति, विज्ञातेन चाविज्ञातमन्यद् विज्ञातं भवतीत्यर्थः । न च ता तावदुपपद्यते यावद् ब्रह्मसाक्षात्कारो न प्रजायते । अधिष्ठानसाक्षात्कारे जाते हि तदधिष्ठेयं सर्वं वस्तु साक्षात्क्रियते नान्यथा । ब्रह्माधिष्ठानं च चिदचिदात्मकं वस्तुजातमित्यसकृदवोचाम । न च तद् ब्रह्म त्वमसीति कथञ्चिद् विजानतो ब्रह्मगोचरः साक्षात्कारः प्रजायते । लोके तथाऽनुपलब्धेः । नहि लोके देहादिव्यतिरिक्तस्त्वमसीति विजानानस्यात्मगोचरः साक्षात्कारो जायमानः कस्यचित्कचिदुपलभ्यते । किन्त्वात्मानं प्रणिदधानस्य । एवं ब्रह्म प्रणिदधानस्यापि ब्रह्मगोचरः साक्षात्कारो जायत इति वक्तव्यम् । प्रणिधानं च निष्ठेत्युक्तम् । तथा च तन्निष्ठोपदेशस्तत्त्वमसिवाक्यार्थ इति प्रतिज्ञासामर्थ्याद् युक्तं प्रतिपद्यते । **श्रुत्यन्तरानुगमाच्च ।** यथा ह्यत्र "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्युपक्रम्य ततो निखिलजगदुत्पत्तिप्रतिपादनपुरस्सरं मोक्षयितव्यस्य श्वेतकेतोः "तत्सत्यं स आत्मा तत्त्वमसि" इत्युपदिश्यते, तथा श्रुत्यन्तरेऽपि "**ब्रह्मविदाप्नोति परम्**" ( तै० २ । १ ) इति परं ब्रह्मोपक्रम्य ततः सर्वजगदुत्पत्तिप्रतिपादनपुरस्सरं "**यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति**" ( तै० २ । ७ ) इत्युपदिश्यते । द्वयोश्चानयोरुपदेशसाम्येनावश्यभवितव्यम् । समानविषयासु श्रुतिषु तद्वैषम्यानुपपत्तेः । श्रुत्यन्तरे च यदा हि=यदैव, एष=मुमुक्षुः, एतस्मिन्=आनन्दरूपे ब्रह्मणि, अदृश्ये=करणागोचरे, अनात्म्ये=अशरीरे, अनिरुक्ते=विशेषतया निर्वक्तुमशक्ये, अनिलयने=अनाधारे स्वमहिम्नि स्थिते भगवति परब्रह्मणि, अभयम्=अभयां निर्विघ्नां, प्रतिष्ठां=निष्ठाम्, विन्दते=लभते, अथैव=तदैव, स=मुमुक्षुः, अभयं=निर्भयं निर्विघ्नं ब्रह्म, गतः=प्राप्तो भवतीति मोक्षहेतुर्ब्रह्मनिष्ठा स्पष्टमनुशिष्यते । तदनुगमादत्रापि तत्त्वमसीति तन्निष्ठोपदेशोऽवगन्तुं शक्यते । अन्यथा परस्परविरोधेनोभयोरप्रामाण्यप्रसङ्गात् । न च स इष्टः । तस्मात् "तन्निष्ठस्त्वं भव" इति तत्त्वमसिवा-

वाक्यार्थः सम्यगवबुध्यते । युक्तेश्च । पितोद्दालको हि गुरुर्भूत्वा शिष्यभावेनोपसन्नं पुत्रं श्वेतकेतुं "तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो !" इत्युपदिशति । गुरुणा च श्रोत्रियेण ब्रह्मनिष्ठेन चावश्यभवितव्यम् । "**तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्**" (मु० १।२।१२) इति श्रुत्या तस्य तथात्वावगमात् । उद्दालकश्च तथा "**न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवति**" (छा० ६।१।१) "**यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्**" (छा० ६।१।१) इति लिङ्गादवगम्यते । नहि कश्चिदश्रोत्रियोऽब्रह्मनिष्ठश्चैवं वक्तुं प्रष्टुं च शक्नोति । यश्च स्वयं ब्रह्मनिष्ठो ब्रह्मनिष्ठां च मोक्षावाप्तिसाधनं मन्यते "**ब्रह्मसंस्थोऽमृतत्वमेति**" (छा० २।२३।१) इति श्रुतेः, न च स प्राणतः प्रियतमं शिष्यभावेनोपसन्नं पुत्रं तां विहाय तद् ब्रह्म त्वमसीति कथञ्चिदुपदेष्टुमुत्सहते । प्रतारकत्वप्रसङ्गात् । यो हि यमर्थं यथाभूतमवबुध्यते मन्यते च, स चेत् तद्बुभुत्सया शिष्यभावेनोपसन्नस्यान्यस्य कस्यचित् ततो विपर्य्ययेणोपदिशति, तदा प्रतारकः प्रसज्यते । न चैवंविध उद्दालको महर्षिः सम्भावयितुमपि शक्यते । वैदिको ह्यसौ । नहि वैदिकोऽपि कश्चित् कदाचित् कथञ्चित् प्रतारको भवति । नूनमेतदवैदिकस्य कस्यचिन्मन्दमतेराचरणं न वैदिकस्य तत्राप्याचार्यस्य । किमसौ न जानाति यमर्थमहं शरणागतस्यास्य शिष्यस्योपदेक्ष्यामि स श्रद्दधानतयाऽन्धगोलाङ्गूलन्यायेन न तं परिहास्यति, ततश्चार्थमप्रतिपद्यानर्थं प्राप्स्यति, किमतः परमस्ति पापकृत्यं यस्याहं कर्ता न स्यां तत्फलं च नरकं नाप्नुयामिति । तस्माद् यथाभूतमर्थमेष जानाति मन्यते च तथाभूतं तं शिष्यस्यास्य श्वेतकेतोरुपदिशति नान्यथेति मन्तव्यम् । ब्रह्मनिष्ठश्चासौ ब्रह्मनिष्ठां च मोक्षसाधनं मन्यत इति सैव तेन श्वेतकेतोरप्युपदेष्टव्या । तथा च तन्निष्ठस्त्वं भवेति तत्त्वमसिवाक्यार्थ इत्युपगन्तव्यम् । श्रुत्यन्तराच्च । "ऐतदात्म्यमिदँ सर्वं तत्सत्यं स

आत्मा तत्त्वमसि श्वेतकेतो!" इत्युपदिश्य "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति ब्रह्मोपसम्पत्तिलक्षणं मोक्षाख्यं तत्फलमुपदिश्यते। न चायं फलोपदेशस्तत्त्वमसिवाक्यस्य "तद् ब्रह्म त्वमसि" इत्यर्थकत्वे कथञ्चिदुपपद्यते। कर्तृकर्मणोरैक्यप्रसङ्गात्। या हि सकर्मिका क्रिया तस्या लोके भिन्नः कर्ता भिन्नं च कर्मेत्युपलब्धम्। नहि गच्छतेर्य एव कर्ता तदेव कर्मेति क्वचिदुपलभ्यते। तस्याः कर्ता देवदत्तो भिन्नः कर्म च देवदत्तसदनं भिन्नमिति प्रत्यक्षम्। एवमथ सम्पत्स्य इत्युपसम्पत्तिरपि सकर्मिका क्रिया। तस्या अपि कर्त्रा कर्मणा च भिन्नेनावश्यभवितव्यम्। न च तत्त्वमसिवाक्यस्य तद् ब्रह्म त्वमसीत्यर्थाभ्युपगमे तयोर्भेद आपद्यते। अपि च यस्तस्याः कर्ता श्वेतकेतुः पुरुषस्तद् ब्रह्म, यच्च कर्मोपसम्पत्तव्यं ब्रह्म स श्वेतकेतुः पुरुष इति तयोरैक्यं प्रसज्यते। तच्चायुक्तम्। परस्परविरोधेनैकत्र स्थित्यनर्हत्वात्। क्रियाश्रयत्वं हि कर्तृत्वं क्रियाविषयत्वं च कर्मत्वम्। तौ च परस्परं विरुद्धौ नैकस्मिन् धर्मिणि स्थातुमर्हतः। कथं तर्हि **"आत्मा वा अरे द्रष्टव्यः"** (बृ० ४। ५।६)इत्येक एवात्मा दर्शनक्रियायाः कर्ता कर्म चाम्नायते?। नैष दोषः। तद्भेदादुपपत्तेः। यदाश्रया हि क्रिया न तमविकुर्वती कर्हिचिदात्मानं लभते। अत एवाहुर्न्यायविदः **"उपयन्नपयन् धर्मो विकरोतीह धर्मिणम्"** इति। यद्यात्माऽपि जन्मविनाशवत्या तयाऽऽश्रीयेत, तदाऽवश्यं विक्रियेत। विक्रियमाणश्चानित्यतामश्नुवीतेति नास्माभिः केवलआत्मा कस्याश्चित् क्रियायाः आश्रयोऽभ्युपेयते, किन्तु मनोविशिष्टः।

**"आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः"** (कठ० ३।४)
**"विज्ञानं यज्ञं तनुते कर्म्माणि तनुतेऽपि च"** (तै० २।५)
**"विशिष्टस्य जीवत्वमन्वयव्यतिरेकात्"** (सां ६।६३)

इत्यादिश्रुतिस्मृतिभ्यः। आत्मा=देहः, इन्द्रियाणि, मनश्च, तद्युक्तं तद्विशिष्टं, भोक्तेत्युपलक्षणं कर्तेत्यपि द्रष्टव्यम्। आत्मानमिति चानुवर्तते। विज्ञानं=विज्ञानमय आत्मा। विज्ञानं बुद्धिस्तद्विशिष्ट इति यावत्। विशिष्टस्य=मनोविशिष्टस्य, मनोबुद्धिश्चित्तमहङ्कार

इत्यनर्थान्तरम्, जीवत्वं=कर्तृत्वमिति श्रुतिस्मृतिपदार्थः । सविस्तरं चैतत् "कर्ता शास्त्रार्थवत्त्वात्" (वे० २ । ३ । ३३ ) इत्यत्र प्रतिपादयिष्यते । विषयश्च तस्या बुद्ध्यंशं हित्वा केवल आत्मा । तथा च दर्शनक्रियाया आश्रयस्य विशिष्टस्य, विषयस्य च केवलस्यात्मनो भेदादात्मज्ञानमुपपद्यते, नास्ति कश्चिद्दोषः । नन्वात्माकारा मानसी वृत्तिरेव दर्शनक्रिया वक्तव्या । सा च जड़ा । मनसो जड़त्वात् । न च तयाऽऽत्मा प्रकाशयितुं शक्यते । प्रकाशनस्य चेतनधर्मत्वात् । चेतनं हि जडं प्रकाशयति, न जडं चेतनम् । आत्मा च चेतनः । तत्कथमेष दर्शनक्रियायाः कर्म स्यादिति चेत्? । उच्यते । न खल्वस्माभिरात्माकारा मानसी वृत्तिर्दर्शनक्रियेत्युच्यते येनात्मा तत्कर्म न स्यात् । अपि च ! तद्वृत्तिबोधः । एषा ह्यस्माकं सर्वत्र बाह्याभ्यन्तरविषयेषु तदुत्पत्तिप्रक्रिया । विषयेन्द्रियसम्बन्धे सति विषयाः इन्द्रियेषु प्रतिबिम्ब्य बुद्धिसत्त्वे प्रतिबिम्बन्ति । तत्र प्रतिबिम्बितानां च तेषामाकारेण परिणममानं बुद्धिसत्त्वं वृत्तिरित्याख्यायते । न चेयं वृत्तिर्बुद्धिसत्त्वात् तत्त्वान्तरम्, नापि तद्गुणः, अपि च ! सप्रतिबिम्बितविषयाकारस्तदवस्थाविशेषः । तां चैतां वृत्तिं यच्चैतन्यमारोहति येन वृत्तिस्तद्विषयश्चोभयं दीप्यते प्रकाश्यते तदेवास्माभिस्तद्वृत्तिबोध इति निगद्यते । सांख्यैर्योगैश्च तदेव पौरुषेयबोधः, पौरुषेयप्रत्ययः, स्वार्थप्रत्ययः, प्रमाणफलं, प्रमेति च परिभाष्यते । अयमेव च पुरुषानुभव इति सर्वतन्त्रसिद्धान्तः । सोऽयं बोधः पुरुषात्मकत्वान्नित्यः सन्नपि सत्यां वृत्तौ भवति नान्यथेति वृत्तिवज्जन्मविनाशी वृत्तेश्च विशिष्टाश्रयत्वाद् विशिष्टाश्रयश्चोपचर्य्यते । तदेवं वृत्तितद्बोधयोः सामानाधिकरण्यात् प्रमाणफलभाव उपपन्नः । यथा च बाह्यविषयेषु सन्निकर्षानन्तरं चक्षुषा घटे बुद्धौ प्रतिबिम्बिते तदाकारा वृत्तिरुपजायते, तां च तदारूढश्चैतन्यात्मा पुरुषः प्रकाशयन् येन तथाऽऽकार्य्यते बुद्धिस्तं विषयं प्रकाशयते, तथा सम्प्रज्ञातभेदस्य निर्विचारसमाधेर्वैशारद्यान्नितान्तनिर्मले चेतसि सम्पन्ने तत्र शरीरादिप्रकृत्यन्तेभ्यः प्रकृतितत्कार्य्येभ्यः प्रविविक्तस्यात्मनः प्रतिबिम्बनात् तदाकारा वृत्तिरुत्पद्यते, तां च तदारूढश्चैतन्यात्मा पुरुषः प्रकाशयन्नात्मनः

प्रकाशकः सम्पद्यते । प्रकाश्यप्रकाशकभावसम्बन्धस्य च वृत्तिद्वारकत्वेन स्वस्मिन्नप्युपपन्नत्वान्न कर्मकर्तृविरोधः प्रसज्यते । स्वस्मिन् स्वसम्बन्धानुपपत्तेरेव तत्प्रसक्तिबीजत्वात् । न च **"अत्रायं पुरुषः स्वयंज्योतिर्भवति"** ( बृ० ४ । ३ । ९ ) इति श्रुत्युक्तस्वयंज्योतिष्ट्वविरोधोऽप्यासज्यते । अनन्याधीनप्रकाशत्वस्यैव स्वयंज्योतिष्ट्वाभ्युपगमात् । अत एव **"विज्ञातारमरे केन विजानीयात्"** ( बृ० ४ । ५ । १५ ) इति श्रुतिरपि न विरुध्यते । केवलकरणाविज्ञेयत्वस्यैवात्मनः प्रतिपादनात् । सर्वथाऽविज्ञेयत्वे च को विजानीयादित्येवोच्येत । बुद्धिवृत्तिद्वारा स्वेन स्वस्य विषयान्तरस्य च प्रकाशो दर्शनान्तरेऽप्यभिहितः **"द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः"** ( यो० २ । २० ) इति । तथा च विशिष्टस्य कर्तृत्वं केवलस्य च कर्मत्वमिति भेदाभ्युपगमान्नास्माकं कर्तृकर्मणोरैक्यप्रसङ्गः । यस्य तु तद् ब्रह्म त्वमसीति तत्त्वमसिवाक्यार्थः तस्योपसम्पत्तव्यस्योपसम्पद्यमानस्य चोभयस्य ब्रह्मत्वात् कर्तृकर्मणोरैक्यप्रसङ्गो विस्पष्टः । अथोच्येत यथा हि भवता विशिष्टस्यात्मनः कर्तृत्वं केवलस्य च तस्य कर्मत्वमाश्रीयते, तथाऽस्माभिरप्यविद्याकल्पितजीवभावस्य ब्रह्मणः श्वेतकेतोरुपसम्पद्यमानत्वं शुद्धस्य च तस्योपसम्पत्तव्यत्वमाश्रीयते । अतस्तत्त्वमसिवाक्यस्य तद् ब्रह्म त्वमसीत्यर्थाभ्युपगमेऽपि नास्माकं कर्तृकर्मणोरैक्यं प्रसज्यत इति । नैतद्वक्तव्यम् । ब्रह्मणो विद्यास्वभावत्वेनाविद्याश्रयत्वासम्भवाज्जीवभावकल्पनानुपपत्तेः । ब्रह्मव्यतिरिक्तस्य हि चेतनाचेतनात्मनः सर्वस्याविद्यकत्वाभ्युपगमाद् ब्रह्मैवाविद्याश्रयो वक्तव्यः । ब्रह्म च विद्यास्वभावम् । न च तदविद्याया आश्रयः सम्भवति । विरोधात् । नहि प्रततौष्ण्यप्रकाशे सवितरि तमोऽवस्थातुमुत्सहते । यथा च प्रकाशस्तमोविरोधी, तथा विद्याऽप्यविद्याविरोधिनीति कथं सा विद्यास्वभावं ब्रह्माश्रयेत् । न च तदनाश्रयन्त्या तया तत्र जीवभावस्य कल्पना कर्हिचिदुपपद्यते । सा हि कञ्चिदाश्रयमाश्रयन्ती तत्र किञ्चित्कल्पनायै कल्पते, न निराश्रया । तथा च ब्रह्मणि जीवभावकल्पनानुपपत्त्या कर्तृत्वकर्मत्वव्यवस्थाऽसम्भवात् तत्त्वमसिवाक्यस्य तद् ब्रह्म त्वमसीत्यर्था-

भ्युपगमे कर्तृकर्मणोरैक्यप्रसङ्गस्तदवस्थः । स चायुक्तः । तस्मात् "तन्निष्ठस्त्वं भव" इत्येव तत्त्वमसिवाक्यार्थः साधीयान् नान्यः परपरिकल्पितः कश्चनेति युक्तमुत्पश्यामः । अत एव च सूत्रितमाचार्य्येणापि "तन्निष्ठस्य मोक्षोपदेशात्"इति ॥ ७ ॥

**स्यादेतत्**—न खलु तन्निष्ठस्य मोक्षोपदेशादात्मशब्दः प्रकृतिवचनो नोपपद्यत इति वक्तुं शक्यते । ब्रह्मनिष्ठस्येव प्रकृतिनिष्ठस्यापि मोक्षोपदेशसम्भवात् । यथा हि भगवतो ब्रह्मनिष्ठस्य मोक्षोपदेशः सम्भवति, तथाऽत्रभवतः प्रकृतिनिष्ठस्यापि स सम्भवति । नहि प्रकृतिमसाक्षात्कृत्य विज्ञानात्मा पुरुषः, तं चासाक्षात्कृत्य परब्रह्मेश्वरः केनचित् साक्षात्कर्तुं पार्य्यते । प्रकृतिपुरुषेश्वराणां हि सपरिवारा प्रकृतिस्तावत् स्थूला, भोग्यत्वात्, अतः सा विज्ञानात्मनः पुरुषस्य भगवतो ब्रह्मण ईश्वरस्य च बाह्यमवतिष्ठते । ततः सूक्ष्मश्च विज्ञानात्मा पुरुषः, भोक्तृत्वात्, अतः स भगवत्यास्तस्या अन्तरे वर्तते । ततश्च सूक्ष्मतरं ब्रह्म, तदन्तरात्मत्वात्, अतस्तत् तस्याप्यन्तरं विराजते, यत्रेदमाम्नातम् "**तदन्तरस्य सर्वस्य**" ( यजु० ४० । ५ ) "**एको वशी सर्वभूतान्तरात्मा**" (कठ० ५ । १२ ) "**अक्षरात्परतः परः**" ( मुं० २ । १ । २ ) अक्षरं ब्रह्माश्रया प्रकृतिः, ततः परो विज्ञानात्मा, ततः परः, "**सूक्ष्माच्च सूक्ष्मतरं विभाति**" ( मुं०।३।१।७ ) "**तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तरात्मा प्राणमयः**" ( तै० २।२ ) "**तस्माद्वा एतस्मात् प्राणमयादन्योऽन्तरात्मा मनोमयः**" ( तै० २ । ३ ) इति प्रकृतिरुक्ता, "**तस्माद्वा एतस्मान्मनोमयादन्योऽन्तरात्मा विज्ञानमयः**" ( तै० २ । ४ ) । विज्ञानमयः= विज्ञानात्मा पुरुषः । "**तस्माद्वा एतस्माद् विज्ञानमयादन्योऽन्तरात्माऽऽनन्दमयः**" ( तै० २ । ५ । ) । आनन्दमयः=ब्रह्म । "**सर्वस्मादन्तरतरं यदयमात्मा**" ( बृ० १ । ४ । ८ ) "**यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरो यमयत्येष त**

**आत्माऽन्तर्याम्यमृतः**" ( बृ० ३ । ७ । २२ ) इति । न चैवं प्रकृतिपुरुषयोरन्तरे वर्तमानस्य भगवतो ब्रह्मणः साक्षात्कारस्तत्साक्षात्कारं विना कथञ्चिदुपपद्यते । नह्यंशुकेन पिहितं कोषमदृष्ट्वाऽन्तरे वर्तमानमसिमसिनिष्ठेनापि द्रष्टुमीश्यते । किं बहुना सपरिवारां भगवतीं प्रकृतिं दृष्ट्वैव तु विज्ञानात्मा पुरुषस्तं च दृष्ट्वैव तु तदधिपतिः सर्वाधिष्ठानकारणं परब्रह्म परमेश्वरो द्रष्टुं शक्यते नान्यथेति वैदिको राद्धान्तः । अत एव च योगे समाधिपादे महामुनिर्भगवान् पतञ्जलिर्ब्रह्मसाक्षाच्चिकीर्षूणां मुमुक्षूणां हितं कामयमानः परमया कृपया प्रकृतिपुरुषगोचरमेव निष्ठापरपर्य्यायं प्राथमिकं सम्प्रज्ञातनामानं समाधिं तावदुपदिशति "**वितर्कविचारानन्दास्मितानुगमात् सम्प्रज्ञातः**" ( यो० १ । १७ ) इति । विभूतिपादे च "**स्थूलस्वरूपसूक्ष्मार्थवत्त्वसंयमाद् भूतजयः**" ( यो० ३ । ४४ ) इत्यादिना सिद्धस्य तस्यैव लौकिकं नानाविधमैश्वर्य्यं फलमनुशास्ति । यदा च प्रकृतिसाक्षात्कारं विना विज्ञानात्मसाक्षात्कारस्तं विना च ब्रह्मसाक्षात्कारो न जातु निष्पद्यते, तदा ब्रह्मसाक्षात्कारवदस्ति प्रकृतिसाक्षात्कारोऽपि मोक्षस्य कारणमिति स्फुटमवगम्यते । प्रकृतिसाक्षात्कारस्य च कारणं प्रकृतिनिष्ठेति ब्रह्मनिष्ठवत् प्रकृतिनिष्ठस्यापि मोक्षोपदेश उपपद्यते, नास्ति काचिदनुपपत्तिः । अतस्तन्निष्ठस्य मोक्षोपदेशान्नात्मशब्दः प्रकृतिवचन इति रिक्तं वच इति । अस्योत्तरं पठति—

"**हेयत्वावचनाच्च**" ॥ ८ ॥

नात्मशब्द इति पूर्ववद् विपरिणम्यानुवर्तते । चकारेणात्मशब्दस्य प्रकृतिवचनत्वाभावे "तन्निष्ठस्य मोक्षोपदेशात्" "हेयत्वावचनात्" इति हेतुद्वयं समुच्चीयते । **हेयत्वावचनात्**=प्रकृतिनिष्ठाया हेयत्वानभिधानादात्मशब्दः प्रकृतिवचनो नोपपद्यत इत्यर्थः ।

न खलु वयं प्रकृतिनिष्ठस्य मोक्षोपदेशं व्यासेधामः । प्रकृतिनिष्ठाया अभ्युदयनिःश्रेयससाधनताभ्युपगमात् । यथा हि प्रकृतिनिष्ठाऽभ्युदयस्य

साधनमभ्युपगम्यते, तथा निःश्रेयसस्यापि साधनमभ्युपेयते । नहि प्रकृतितत्त्वमविद्वान् कश्चिदभ्युदयं लभते । तल्लाभाभावे वा निःश्रेयसं प्रतिपद्यते । तन्निष्ठामन्तरेण प्रकृतितत्त्वं वा वेदितुं पारयते । विशेषस्त्वियानेव, यदेषा साक्षादभ्युदयस्य कारणं वर्तते परम्परया च निःश्रेयसस्य कारणमिति । यद्धि प्रकृतिनिष्ठया प्रकृतितत्त्वं विद्वांसं प्रति लौकिकं नानाविधमैश्वर्य्यं तावदुपतिष्ठते, तत्र चेदेष न रज्यति मोक्षमाणश्च ब्रह्मसाक्षात्काराय निरन्तरं यथाश्रद्धं तत्साधनं ब्रह्मनिष्ठामभ्यस्यति तदा ब्रह्मसाक्षात्कारे निष्पन्नेऽवश्यं निःश्रेयसं प्राप्नोति । नानाविधस्य लौकिकैश्वर्य्यस्य प्राप्तौ चास्य स्वभावत एव तत्र रागः सम्भाव्यते । विरलो हि लोके मनुष्याणां सहस्रेषु कश्चिदेकः पुण्यजन्मा मनुष्यपश्चास्यो धीराग्रणीर्यः किलोपस्थितेषु लौकिकेष्वर्थेषु स्वप्नेऽपि न रज्यति । नूनमेते कृपणजनप्रार्थनीयास्तृष्णायोनयो लौकिका सर्वे विषयाः, न चैषां भोगाभ्यासेन सहस्रेणापि पुरुषायुषैरिन्द्रियाणां वैतृष्ण्यं सम्पादयितुं शक्यत इत्यवधार्य्य च तेभ्यो विनश्वरस्वभावेभ्यो विरज्यति । यत्रेदमाम्नातम् **"श्वोभावा मर्त्यस्य यदन्तकैतत् सर्वेन्द्रियाणां जरयन्ति तेजः । अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते"** ( कठ० १ । २६ ) **"श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः । श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद् वृणीते"** ( कठ० २ । २ ) **"स त्वं प्रियान् प्रियरूपाँश्च कामानभिध्यायन् नचिकेतोऽत्यस्राक्षीः । नैतां सृङ्कां वित्तमयीमवाप्तो यस्यां मज्जन्ति बहवो मनुष्याः"** ( कठ० २ । ३ ) इति । रागश्च सर्वत्र मोक्षस्य प्रतिबन्धकः संसारस्य च साधकः । नहि सांसारिकेष्वर्थेषु रक्तः कश्चित् पुनर्नैश्रेयसात् पथो न प्रच्यवते । प्रच्यवमानश्च प्रज्वलतः संसारदावानलस्यात्मानं नेन्धनीकुरुते । सोऽयं मुमुक्षुर्निरतिशयानन्दमुपभोक्तुं ब्रह्मधामारुरुक्षया केनचित् पुण्यकर्मणा तदारोहणवर्त्मनि परमोत्साहेन पद्यमानो मध्ये प्रकृतिनिष्ठया प्रकृतितत्त्वसाक्षात्कारे प्राप्तेषु नानाविधैश्वर्य्येषु

जातानुरागो मा नाम आसीत्, ततो भ्रष्टश्च प्रज्वलतः संसारदावानल- स्यात्मानं मा नामेन्धनीकार्षीत्, तत्रैव सुस्थितंमन्यो वा ब्रह्मसाक्षात्कारस्य साधनं ब्रह्मनिष्ठां मा नाम कर्हिचिद्यथापूर्वमभ्यस्यदिति करुणार्द्रचित्तेना- चार्य्येण तद्धेतुः प्रकृतिनिष्ठा स्वरूपतः फलतश्च हातव्यत्वेनाभिधातव्येति गम्यते। नहि परम्परया पद्धत्या शिष्याणामुपदेशाय प्रवृत्तः खल्वा- चार्य्यः पूर्वं यां काञ्चिदेकां निष्ठामुपदिशति, पश्चात् निष्ठान्तरमभ्यसितुं न तां हेयत्वेनाख्यातीति युज्यते। चेदिहापि शिष्यभावेनोपसन्नं श्वेतकेतुं पुत्रं ब्रह्मसाक्षात्कारस्य साधनमुपदेष्टुं प्रवृत्तो महर्षिरुद्दालकः पूर्वं **"स आत्मा तत्त्वमसि श्वेतकेतो!"** इति प्रकृतिनिष्ठामनुशिष्यात् तदा नियमेनाग्रे ब्रह्मनिष्ठामभ्यसितुं तां हेयत्वेन ब्रूयात्। यथा हि योगे निष्ठापरपर्य्यायश्चतुर्विधः सालम्बनः समाधिः पूर्वमुपदिश्य पश्चात् समाध्य- न्तरमनुष्ठातुं **"ता एव सबीजः समाधिः"** (यो० १।४६) इति स्वरूपतः **"ते समाधावुपसर्गा व्युत्थाने सिद्धयः"** (यो० ३। ३७) **"तद्वैराग्यादपि दोषबीजक्षये कैवल्यम्"** (यो० ३। ५०) इत्यादिना फलतश्च हेयतयाऽभिधीयते, तथाऽत्रापि तस्यास्तथावचनं संश्लिष्यते। परं नासौ महर्षिस्तामत्र तथा ब्रवीति। न चोपरिष्टात् कुत्रचिन्निष्ठान्तरमनुशास्ति। **"तस्य तावदेव चिरं यावन्न विमो- क्ष्येऽथ सम्पत्स्ये"** इति फलानुशासनं च दृश्यते। तस्मात् **"स आ- त्मा तत्त्वमसि श्वेतकेतो!"** इत्यत्र ब्रह्मनिष्ठैवोपदिश्यते न जातु प्रकृतिनिष्ठेति स्पष्टं प्रतिपद्यते। न चेह तथाप्रतिपत्तौ सत्यामात्मशब्दः पुनः प्रकृतिवचनः कथञ्चित् सेद्धुमर्हति। न च तस्य तद्वचनत्वासिद्धौ **"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"** (छा० ६। २।१) इति सच्छब्दोऽपि तद्वचन उपपद्यते। तस्य ब्रह्मवचनत्वे तु नास्ति काचिदनुपपत्तिः। तथा च न गौणः=(गुणस्य प्रकृतेर्धर्म्मः) ईक्षतिरिति सूपपन्नम् ॥ ८ ॥

**ननु कुतः पुनरवगम्यते न गौण ईक्षातेरिति? तत्राह—**

**"स्वाप्ययात्" ॥ ९ ॥**

ईक्षतिर्गौणो नेति मण्डूकप्लुतिन्यायेनानुवर्तते । **स्वाप्ययात्**=स्वं प्रकृतं सत्, तस्मिन्नप्ययः सुषुप्तस्य विज्ञानात्मनो लयः, तस्मात्-सुषुप्त्यवस्थायां विज्ञानात्मनः पुरुषस्य सति लयाभिधानादवगम्यते न गौण ईक्षतिरित्यर्थः ।

एवं खलु सत् प्रकृत्य श्रूयते **"यत्रैतत् पुरुषः स्वपिति नाम, सता सोम्य! तदा सम्पन्नो भवति, स्वमपीतो भवति, तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति"** (छा० ६। ८।१) इति। सैषा श्रुतिर्विज्ञानात्मनः पुरुषस्य स्वपितीति लोकप्रसिद्धं नाम निर्ब्रुवाणा सुषुप्त्यवस्थायां सति लयमभिधत्ते। स चेह सम्पत्तिलक्षणो गृह्यते। **"सता सोम्य ! तदा सम्पन्नो भवति"** इति सत्सम्पत्ति-मुक्त्वा पश्चात् तस्या एव **"स्वमपीतो भवति"**=सदपिगतो भवति—सति प्रलीनो भवतीति पर्य्यायान्तरेणाभिधानात्। अपिपूर्वकस्य चैतेर्लयार्थत्वं प्रसिद्धम्। "प्रभवाप्ययौ"(कठ०६।११) इत्युत्पत्तिप्रलययोः प्रयोगदर्शनात्। सम्पत्तिश्च राद्धान्तेऽविभागोऽभिप्रेयते न जात्वर्थान्तरं किञ्चिदित्यधस्ताद्वक्ष्-वोचाम। जाग्रदवस्थायां हि विज्ञानात्मा पुरुषश्चेतनाचेतनात्मकेषु बाह्येषु विषयेषु यथाकामं रमते। सुषुप्त्यवस्थायां च जाग्रत्स्वप्नयोर्भ्रामं भ्रामं परिश्रान्त इव तेभ्यः सर्वेभ्यः उपसंहृताखिलकरणो वासवृक्षे पतत्रीव रात्रौ तत्रभवति सति लीन इवावतिष्ठते। अत एव च स्मर्य्यते दर्शनान्तरे **"समाधि-सुषुप्तिमोक्षेषु ब्रह्मरूपता"** (सां० ५।११६) इति। ब्रह्म-रूपता=ब्रह्मसम्पत्तिः, ब्रह्मण्यविभागेनावस्थानात् तत्सारूप्यमिति यावत्। सोऽयमस्य सति सुषुप्तौ लयः स्वपितीति नामप्रवृत्तौ निमित्तं स्वं ह्यपीतो भवतीत्युच्यते, यथा **"स एष आत्मा हृदि तस्यैतदेव निरुक्तं हृद्ययमिति, तस्माद् हृदयम्"** (छा० ८।३।३) इत्यत्र हृदयेति नामप्रवृत्तौ निमित्तं हृद्ययमिति। न चाभिधीयमानोऽयमस्य सति सुषुप्तौ लयः सच्छब्दस्य प्रकृतिवचनत्वे कथञ्चिदुपपद्यते। पुरुषवत् प्रकृतेरपि ब्रह्माश्रयत्वेन तत्र तल्लयासम्भवात्। यथा हि विज्ञानात्मा पुरुषो ब्रह्म तावदाश्रयति तथा भगवती प्रकृतिरप्याश्रयति, समानं

ष्वुभयोरात्मस्थितौ ब्रह्मपारतन्त्र्यम् । न च तत्र पारतन्त्र्याविशेषे विज्ञानात्मनः पुरुषस्य प्रकृतौ लयः सम्भवति । नहि यदात्मस्थित्यै नियमेन परमपेक्षते तत् स्वसमकक्षमपरं कदाप्यात्मनि प्रविलापयितुं क्षमते । न च कदाचित् पुरुषेण तादात्म्यं गता भोगस्थानं सम्भवन्त्यपि भवती प्रकृतिस्तल्लयस्थानं सम्भावयितुमपि शक्यते । अन्यद्धि भोगस्थानं भवति, लयस्थानं चान्यदिति लोके बहु दृष्टम् । न च तद्विपर्ययस्याश्रयणं प्रशस्तं मन्यन्ते शास्त्रविदः । न च श्रुत्याऽपि क्वचिद् विज्ञानात्मनः पुरुषस्य लयस्थानं प्रकृतिरुच्यते । भोगस्थानं चैषा **"जहात्येनां भुक्तभोगामजोऽन्यः"** (श्वे० ४ । ५) इत्यादिश्रुत्या स्पष्टं प्रतीयते । तस्माद् ब्रह्मैव सच्छब्दवाच्यं न जातु प्रकृतिरित्यास्थेयम् । ब्रह्मणश्च तल्लयस्थानत्वे नास्ति काचिद् विप्रतिपत्तिः । **"स परेऽक्षर आत्मनि सम्प्रतिष्ठते"** ( प्रश्न० ४ । ५ ) **"तद्यथाऽपि हिरण्यनिधिं निहितमक्षेत्रज्ञाः उपर्य्युपरि सञ्चरन्तो न विन्देयुः, एवमेवेमाः सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति"** ( छा० ८ । ३ । २ ) **"यत्रैष एतत् सुप्तोऽभूद् य एष विज्ञानमयः पुरुषः, तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते"** (बृ०२।१।१७) इत्यादिश्रुतिभिस्तस्य निर्णीतत्वात् । युक्त्याऽपि चैषोऽर्थः सुखेन निर्णेतुमीश्यते । नहि यत् प्रकृतिपुरुषौ द्वावप्यनिशमधिशयाते यथाकालं लीयमानौ सन्तौ ततोऽन्यत्र वा परस्परत्र वा लेतुमीशाते । नहि घटमधिशयानं रूपं लयवेलायां घटे न लीयत इति क्वचिद् दृश्यते येनात्रापि तथा कल्प्येत । सच्छब्दवाच्यं ब्रह्मैव चेक्षितृ । **"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"** ( छा०६।२।१ ) इत्युपक्रान्तस्य सतएव **"तदैक्षत बहु स्याम्"** ( छा० ६ । २ । ३ ) इति तच्छब्देन परामृश्येक्षणाभिधानात् । तथा चैष ईक्षतिर्ब्रह्मणो धर्मो न जातु गुणस्य प्रकृतेः, स्वाप्ययादिति निष्पन्नम् ॥ ९ ॥

ईक्षतेर्गौणत्वाभावे हेत्वन्तरमाह—

**"गतिसामान्यात्"** ॥ १० ॥

ईक्षतिर्गौणो नेति पूर्ववदनुवर्तते । **गतिसामान्यात्**=गतिर्ज्ञानं, तत्सामान्यं ज्ञानत्वं, तस्मान्नेक्षतिर्गौण इत्यर्थः ।

ज्ञानं हि चेतनस्य धर्म उपपद्यते न खल्वचेतनस्य । नह्यचेतनं कचित् किञ्चिच्चेतयते । गुणः प्रकृतिश्चाचेतना, ज्ञानं चेयमीक्षतिः । तस्मान्नासौ तद्धर्मः किन्तु ब्रह्मधर्मः ॥ १० ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"श्रुतत्वाच्च"** ॥ ११ ॥

ईक्षतिर्गौणो नेति पूर्ववदनुवर्तते । ब्रह्मेति यथापूर्वमुत्तरत्राप्यधिक्रियत इति सूचयितुमन्ते षष्ठ्यन्ततया तदन्वययोग्यस्य भावप्रत्ययस्योपादानम् । ईक्षतेर्गौणत्वाभावे **"गौणश्चेन्नात्मशब्दात्"** इत्यारभ्योक्तसर्वहेतुसमुच्चय इति चकारार्थः । **श्रुतत्वात्**=ब्रह्मण ईक्षितृत्वश्रवणादीक्षतिर्गौणो नोपपद्यत इत्यर्थः ।

**"स ईक्षाञ्चक्रे"** ( प्रश्न० ६ । ३ ) **"आत्मा वा इदमेक एवाग्र आसीत् । नान्यत् किञ्चन मिषत् । स ईक्षत"** (ऐत० १ । १ ) इत्यादिश्रुत्यन्तरे तावद् ब्रह्मणः साक्षादीक्षितृत्वं श्रूयते । तत्सामान्यात् **"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"** (छा० ६।२।१) इत्युपक्रम्य **"तदैक्षत बहु स्याम्"** ( छा० ६।२।३ ) इत्याम्नातमीक्षितृत्वमपि तस्यैवाभ्युपगन्तुं शक्यते, न गुणस्य प्रकृतेः। तस्याश्चेतनत्वाभावेन चेतनधर्माश्रयत्वानुपपत्तेः । तस्मान्न गौण ईक्षतिः । तथा च जगतो जन्मादेर्निमित्तकारणं सर्वज्ञं सर्वशक्ति ब्रह्मेति सिद्धम् ॥ ११ ॥

ब्रह्म जिज्ञास्यमित्यभिधाय तस्य लक्षणं तद्विस्पष्टप्रतिपत्तये च शास्त्रयोनित्वं जगज्जन्मादिनिमित्तत्वं च सविस्तरं निरूपितम् । सम्प्रति तस्य जिज्ञास्यत्वं निरूपयितुमधिकरणान्तरमारचयन्नानन्दरूपत्वमाह—

**" आनन्दमयोऽभ्यासात् "** ॥ १२ ॥

ब्रह्मेत्यधिक्रियते। **आनन्दमयः**=तैत्तिरीयकोक्त आनन्दमय आत्मा ब्रह्म प्रतिपत्तव्यः, कुतः? **अभ्यासात्**=पौनःपुन्येन कीर्तनमभ्यासः, तस्मात् आनन्दमयशब्दस्य सर्वत्र तत्रैवाभ्यस्यमानत्वादित्यर्थः।

तैत्तिरीयके ह्यन्नरसमयं प्राणमयं मनोमयं विज्ञानमयं चानुक्रम्य **"तस्माद्वा एतस्माद् विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः"** (तै० २। ५) इत्युच्यते। तत्र संशयः—किमानन्दमयशब्देन **"ब्रह्मविदाप्नोति परम्"** (तै० २। १) इति प्रकृतं ब्रह्माभिधीयते, अथवा ततोऽर्थान्तरभूतो जीवात्मेति। जीवात्मेति पूर्वः पक्षः, ब्रह्मेति सिद्धान्तः। किं तावत्प्राप्तम्? जीवात्मेति ब्रूमः। कस्मात्? **शरीरान्तरात्मत्वेनोपदेशात्**। "ब्रह्मविदाप्नोति परम्" (तै०२।१) इति प्रक्रान्तात् खलु ब्रह्मणः **"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधिभ्योऽन्नम्, अन्नाद्रेतः, रेतसः पुरुषः"** (तै० २। १) इत्याकाशादिक्रमेण पुरुषस्य=पुरुषशरीरस्योत्पत्तिमभिधाय तस्य च **"स वा एष पुरुषोऽन्नरसमयः"** (तै० २। १) इत्यन्नरसमयसंज्ञामुक्त्वा तदन्तर्वर्तिनः प्राणमयमनोमयविज्ञानमयाँश्च क्रमेणोत्तरोत्तरवर्तमानानुपदिश्य **"तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः"** इति तदन्तरात्मत्वेनानन्दमय उपदिश्यते। चेदुपदिश्यमानोऽयमानन्दमय आत्मा ब्रह्म भवेत् **तदा** न शरीरान्तरात्मत्वेनोपदिश्येत। नहि विश्वान्तरात्मा ब्रह्म शरीरमात्रान्तरात्मत्वेन कदाचिदुपदेष्टुं शक्यते। जीवात्मा च शरीरान्तरात्मा प्रसिद्धः। **शारीरत्वेन व्यपदेशाच्च**। अत्र ह्यानन्दमय आत्मा खलु शारीरत्वेन व्यपदिश्यते **"तस्यैष एव शारीर आत्मा यः पूर्वस्य"** (तै० २। ६) इति। शारीरत्वं च शरीरसम्बन्धः। न च स भगवतो ब्रह्मणः कर्हिचित्सम्भवति। **"स पर्य्यगाच्छुक्रमकायमव्रणम्"** (यजु० ४०। ८) **"न तस्य कार्यं करणं च विद्यते"** (श्वे० ६। ८) इत्यादिश्रुतिजातेन तस्य तत्प्रतिषे-

धात् । कथञ्चित् तत्सम्बन्धपरिग्रहे च प्रियाप्रियसंस्पर्शोऽप्यवश्यमुच्येत **"आत्तो वै सशरीरः प्रियाप्रियाभ्याम् । न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति"** (छा० ८ । १२ । १) इत्यादिश्रुत्या सशरीरस्य सतस्तत्संस्पर्शस्यावश्यम्भावात् । स च धर्माधर्मजन्य इति सर्वतन्त्रसिद्धान्तः । न च भगवतो ब्रह्मणो धर्माधर्मौ स्तः **"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्"** (कठ० २ । १४ ) इत्यादिश्रुत्या तस्य तदभावनिश्चयात् । तन्निश्चये च दूरं तस्य प्रियाप्रियसंस्पर्शः । जीवात्मनस्तु शरीरसम्बन्धः प्रियाप्रियसंस्पर्शश्च सर्वेषां नः प्रत्यक्षः । **अवयवश्रुतेश्च** । आनन्दमयस्य ह्यत्र तावच्छिरःप्रभृतयोऽवयवाः श्रूयन्ते **"तस्य प्रियमेव शिरः, मोदो दक्षिणः पक्षः, प्रमोदः उत्तरः पक्षः, आनन्दः आत्मा, ब्रह्म पुच्छं प्रतिष्ठा"** (तै० २ । ५) इति । चेदयं ब्रह्म स्यात् न तर्हि तदवयवाः श्रूयेरन् । नहि निरवयवस्य सतः कस्यचिदवयवश्रुतिरुपपद्यते । ब्रह्म च **"दिव्यो ह्यमूर्त्तः पुरुषः"** (मुं० २ । १ । २) **"ततस्तु तं पश्यते निष्कलं ध्यायमानः"** (मुं० ३ । १ । ८) **"अस्थूलमनणु"** (बृ० ३ । ८ । ८) **"निष्कलं निष्क्रियं शान्तम्"** (श्वे० ६ । १८) इत्यादिश्रुतिभ्यो निरवयवम् । तत्कथमस्यावयवश्रुतिरुपपद्येत । प्रियमोदप्रमोदाश्चाभीष्टवस्तुदर्शनलाभोपभोगजाः सुखविशेषाः । न च ते नित्यानन्दैकरूपस्य भगवतो ब्रह्मणोऽवयवा अपि कथञ्चित् सङ्गच्छन्ते, येन तदुपपत्तिः कल्प्येतापि । जीवात्मनस्तु जन्यसुखाश्रयत्वेन प्रत्यक्षत्वाच्छिरःप्रभृतिस्थानीयाः प्रियादयोऽवयवाः कथञ्चित् सम्भावयितुं शक्यन्ते, नास्ति काचनानुपपत्तिः । **पुच्छत्वेनाम्नानाच्च** । ब्रह्म ह्यत्रानन्दमयस्य पुच्छत्वेनाम्नायते **"ब्रह्म पुच्छं प्रतिष्ठा"** (तै०२।५) इति । चेदानन्दमयो ब्रह्म भवेत् न पुच्छत्वेनाम्नायेत । नहि स्वमेव स्वस्य पुच्छमाम्नातुं शक्यते । पुच्छं हि प्रतिष्ठाऽऽधारः । न च स कर्हिचिदाधेयं भवितुमर्हति । द्वयोरभेदे तद्भावानुपपत्तेः । आनन्दमयेन जीवात्मपरिग्रहे तु नास्ति किञ्चिदनुपपन्नं नाम । ब्रह्मणो विश्वाधार-

त्वेन जीवात्माधारत्वस्यापि सिद्धेः । तस्माज्जीवात्मैवेहानन्दमयः परिगृह्यते, न जगज्जन्मादिकारणं ब्रह्मेति । **एवं** प्राप्तेऽभिधीयते-"**आनन्दमयोऽभ्यासात्**" । आनन्दमयो ह्यत्र ब्रह्म भवितुमर्हति न खलु जीवात्मा । तत्र तच्छब्दप्रयोगानुपलब्धेः । नहि वेदोपनिषत्सु कुत्राप्यानन्दमयशब्दो जीवात्मनि प्रयुज्यमानस्तावदुपलभ्यते । परमप्रेमास्पदत्वं च तस्यात्मत्वप्रयुक्तं नानन्दत्वप्रयुक्तमिति तेनापि नासावानन्दरूपो गम्यते । ब्रह्मणि चैष शब्दो वेदोपनिषत्सु सर्वत्र बहुकृत्वोऽभ्यस्यमानो दृश्यते । तद्यथाऽत्रैवानन्दमयं प्रस्तुत्य "**रसो वै सः**" (तै० २ । ७) इति तस्यैव रसत्वमुक्त्वाऽऽम्नायते-"**रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति । को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति**" (तै० २ । ७) "**सैषाऽऽनन्दस्य मीमांसा भवति**" (तै० २ । ८) "**एतमानन्दमयमात्मानमुपसङ्क्रामति**" (तै० २ । ८) "**आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन**" (तै० २ । ९) इति । "**आनन्दो ब्रह्मेति व्यजानात्**" (तै० ३ । ६) इति च । "**तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति**" (मुं० २ । २ । ७) "**विज्ञानमानन्दं ब्रह्म**" (बृ० ३ । ९ । २८) "**एषोऽस्य परम आनन्दः । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति**" (बृ० ४ ।३। ३२) "**स्वर्यस्य च केवलम्**" (अथर्व० १०। ४।८।१ ) "**रसेन तृप्तो न कुतश्चनोनः**" (अथर्व० १० । ४।८ । ४४) "**नमः शम्भवाय च मयोभवाय च**" (यजु० १६ । ४१) इत्यादिषु श्रुत्यन्तरेषु च । यच्छब्दश्च यत्र बहुकृत्वोऽभ्यस्यते, तस्य स एवार्थो युज्यते नार्थान्तरं किञ्चित् । अतिप्रसक्तेः । अतो बहुकृत्वोऽभ्यासादिहानन्दमयो ब्रह्मेति प्रतिपद्यते न जीवात्मा । **नन्वेतत्** तदा प्रतिपद्येत, चेदिहानन्दमयोऽभ्यस्येत । न चानन्दमयोऽभ्यस्यते किन्त्वानन्द इति चेत् । **नैष दोषः** । आनन्दपदेनानन्दमयस्यैव विवक्षितत्वात् । यथा हि "**विज्ञानं यज्ञं तनुते**" (तै० २ । ५) इति विज्ञानमयाधि-

कारे प्रयुज्यमानेन विज्ञानपदेन विज्ञानमयो विवक्ष्यते, न विज्ञानमात्रम्, तथाऽत्राप्यानन्दमयाधिकारे पठितेनानन्दपदेनानन्दमय एव विवक्ष्यते न त्वानन्दः । यदधिकारे यत्पदं प्रयुज्यते तदेव तत्पदेन वक्तुमिष्यत इति नियमात् । ब्रह्म चानन्दरूपत्वादानन्दः, सार्वभौमादिसकलानन्दापेक्षया च निरतिशयत्वादानन्दमय इत्युच्यते । अतो द्वयोर्विशेषाभावादानन्दाभ्यासोऽप्यानन्दमयाभ्यास एवेति मन्यते । श्रूयते च क्वचित् साक्षादानन्दमयाभ्यासोऽपि "**एतमानन्दमयमात्मानमुपसङ्क्रामति**" (तै० २ । ८) इति । उपसङ्क्रामति=प्राप्नोति । तथा च युक्ता तेन तत्प्रतिपत्तिरित्यदोषः । ननु कथं तर्हि शरीरान्तरात्मत्वेनोपदिश्यत इति चेत् । नैतद्दूषणम् । विश्वान्तरात्मनः शरीरान्तरात्मत्वस्यापि सम्भवात् । यो हि विश्वस्यान्तरात्मा स विश्वान्तःपातिशरीरस्याप्यन्तरात्मा सम्भवति । नहि खलु गगनं मठान्तर्वर्त्ति भवत् पिठरान्तरवर्त्ति न भवतीति कस्यापि बुद्धिपथमारोहति । तथा च युक्तस्तस्य तदन्तरात्मत्वेनोपदेशः । **अथो**-च्येत नायमभिप्रायो विश्वस्यान्तरात्मा भवन् ब्रह्म शरीरान्तरात्मा न सम्पद्यत इति, **किन्तु** यदन्तरात्मत्वेनानन्दमय उपदिश्यते तत्सर्वं विशेषतो जीवात्मना सम्बध्यते न ब्रह्मणा । नहि शरीरं प्राणो मनो विज्ञानं चेति चतुष्टयं जीवात्मना न विशेषेण सम्बद्धमिति कश्चित् प्रतिपत्तुमर्हति । सम्बन्धसामान्याच्च सम्बन्धविशेषो बलीयानिति जीवात्मैवेहानन्दमयो न ब्रह्मेति । **नैतद्वक्तव्यम्** । विज्ञानमयेन जीवात्माभिधानस्याभ्युपगमात् । अत्र ह्यन्नरसमयेन पृथिवीप्रचुरं पाञ्चभौतिकं स्थूलं शरीरं, प्राणमयेन प्राणप्रचुरं पञ्चतन्मात्रात्मकं सूक्ष्मं शरीरं, मनोमयेन मनोनायकमुभयविधमिन्द्रियं, विज्ञानमयेन च विज्ञानं बुद्धिः, तत्प्रचुरस्तत्तादात्म्यमापन्नोऽस्मितालक्षणो यज्ञादिलौकिकवैदिककर्मकर्ता तत्फलोपभोक्ता च जीवात्माऽभिधीयत इत्यभ्युपगम्यते । दर्शनान्तरे तत्साक्षात्कारतायै योगोपायोपदिदिक्षया प्रवृत्तेन महामुनिपतञ्जलिनाऽनेनैव क्रमेण तदुपायस्य प्राथमिकसमाधेरनुशासनात् "**वितर्कविचारानन्दास्मितानुगमात्सम्प्रज्ञातः**" (यो० १ । १७) "**क्षीणवृत्तेरभिजातस्येव मणेर्ग्र**-

**हीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः"** (यो० १।४१) इति। न चायं सर्वलोकोपचिकीर्षया प्रवर्तमानः खलु वैदिको मुनिर्वैदिकीं पद्धतिं हित्वा कपोलकल्पितं किञ्चिदनुशासितुमर्हति। नहि स भगवान् विप्रलम्भकोऽसाक्षात्कृतधर्माऽपटिन्द्रियश्च विद्यते, येनोत्पथं किञ्चिदनुशिष्यात्, वैदिकीं पद्धतिं च परिजह्यात्, अन्तरेणार्थं लोकमतिं च विभिन्द्यात्, अत्युल्वणं पापं च सञ्चिनुयात्। नूनमेतदनार्य्यमुनिवृत्तं न किल **वैदिकमुनिवृत्तम्**। पूर्वं पूर्वं तत्त्वं चाशेषविशेषतोऽसाक्षात्कृत्य नोत्तरमुत्तरं शक्यते साक्षात्कर्तुमिति तथ्यं तस्य भगवतस्तथाविधमनुशासनम्। युक्तं च विज्ञानमयेन जीवात्माभिधानम्। यदि चानेन बुद्धिप्रचुरो जीवात्मा नाभिधीयेत किन्तु बुद्धिमात्रं, तदा विज्ञानपदादुपादीयमानः प्राचुर्य्यार्थो मयट्-प्रत्ययोऽवश्यं वैयर्थ्यमापद्येत। नहि केवला बुद्धिर्बुद्धिप्रचुरेति वचनं कथञ्चित्सङ्गच्छते। विकारार्थे च नायं प्रत्यय इत्यनन्तरं स्वयमेव वक्ष्यते। जीवात्मनो बुद्धिप्रचुरत्वं तु तद्वैशिष्ट्यात् सुव्यक्तमेव न किञ्चिद् वक्तव्यमपेक्षते। न च तस्य तद्वैशिष्ट्यमप्रामाणिकमिति शङ्कितव्यम्। **"योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव"** (बृ० ४।३।७) **"विशिष्टस्य जीवत्वमन्वयव्यतिरेकात्"** (सां० ६।६३) इत्यादिश्रुतिस्मृतिभ्यस्तत्प्रामाणिकत्वस्य सिद्धत्वात्। समान = विज्ञानेन बुद्ध्या समानतां तादात्म्यं प्राप्तः। **"विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च। विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते"** (तै० २।५) इति विज्ञानमये प्रमाणत्वेनोदाहृते श्लोके तु विज्ञानपदं विज्ञानमयाभिप्रायेण प्रयुक्तं वेदितव्यम्। अन्यथोदाहरणोदाहरणिकयोर्वैषम्यापत्तेः। तत्रोक्तस्य च यज्ञादेर्लौकिकवैदिककर्म्मणः कर्तृत्वस्य, देवैरिन्द्रियैरुपास्यत्वस्य च बुद्धिमात्रेऽनुपपत्तेः। नहि सङ्घातस्वामिनं परित्यज्यान्यः कश्चिल्लौकिकवैदिककर्मणः कर्ता देवानां तेषामुपास्यश्चोपपद्यते। सङ्घातस्वामी च बुद्धिमयो जीवात्मैव सम्भवति न केवला बुद्धिः। माध्यन्दिनाश्चान्तर्यामिब्राह्मणे **"यो विज्ञाने तिष्ठन्"** (बृ०३।७।२२)

इति काण्वपर्य्यायस्य स्थाने **"य आत्मनि तिष्ठन्"** (बृ० ३। ७। ३०) इति पर्य्यायमधीयानाः क्वचित् केवलं विज्ञानपदमपि विज्ञानमये जीवात्मनि प्रयुज्यत इति व्यक्तमाचक्षते। **"कृत्यल्युटो बहुलम्"** (अष्टा० ३। ३। ११३) इति कर्तरि ल्युटि, नन्द्यादित्वं वा समाश्रित्य **"नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः"** (अष्टा० ३। १। १३४) इति कर्तरि ल्युप्रत्ययेऽभ्युपगमे योगेनापि विज्ञानपदं विज्ञानमये जीवात्मनि सुखेन व्युत्पद्यते। अभिधास्यते चात एव स्वयमाचार्य्योऽप्यत्रत्यं विज्ञानपदं विज्ञानमयजीवात्मवचनम् **"व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्य्ययः"** (वे० २। ३। ३६) इत्यत्र। तदेवं विज्ञानमयेन जीवात्माभिधानाभ्युपगमे च स्थूलसूक्ष्मशरीरेन्द्रियवचनानां त्रयाणामन्नरसमय-प्राणमय-मनोमयानां विशेषतो विज्ञानमयसम्बन्धित्वेन कथञ्चिद् ब्रह्मसम्बन्धानङ्गीकारेऽपि विज्ञानमयस्य तत्सम्बन्धविशेषोऽस्त्येवेति निःशङ्कमभिधातुं शक्यते। **"तदन्तरस्य सर्वस्य"** (यजु० ४०। ५) **"एकस्तथा सर्वभूतान्तरात्मा"** (कठ० ५। ९) **"तमात्मस्थं येऽनुपश्यन्ति धीराः"** (कठ० ५। १२) **"अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा"** (कठ० ६। १७) **"एष सर्वभूतान्तरात्मा"** (मुं० १। ४) **"इदं वाव तद् यदिदमस्मिन्नन्तः पुरुषे ज्योतिः"** (छा० ३। १३। ७) **"तिलेषु तैलम्। एवमात्माऽऽत्मनि"** (श्वे० १। १५) **"सर्वव्यापी सर्वभूतान्तरात्मा"** (श्वे० ६। ११) इत्यादिश्रुतिवचोभ्यो ब्रह्मणस्तदन्तरात्मत्वप्रसिद्धेः। अध्यात्मं चोपनिषदो भगवत्यः प्रायशो हृदयान्तरात्मत्वेन विज्ञानमयान्तरात्मत्वेन च जगज्जन्मादिकारणं ब्रह्मोपदिशन्ति, यथाऽधिदैवतमादित्यान्तरात्मत्वेनेति नियतस्तासामुपदेशक्रमो न जातु कुत्रचित् कथञ्चिद् व्यभिचरति। तस्मादिह विज्ञानमयान्तरात्मत्वेनोपदिष्ट आनन्दमयोऽपि ब्रह्मैव भवितुमर्हति न जीवात्मेति गम्यते।

यत्तूक्तं शारीरत्वेन व्यपदेशान्नानन्दमयो ब्रह्मेति। **नासौ** दोषः। अन्तरात्मत्वेन शारीरत्वव्यपदेशोपपत्तेः। यथा हि विज्ञानमयो जीवात्मा-

पाञ्चभौतिकमिमं पिण्डमन्तरात्मा भवन् यावज्जीवमधिवसति तथा जगज्जन्मादिकारणं ब्रह्मापि चिदचिदात्मकं सर्वमेतज्जगदन्तरात्मा भवन्नित्यमधितिष्ठति । यत्रेदमाम्नातम् **"यो भूतं च भव्यं च सर्वं यश्चाधितिष्ठति । स्वर्यस्य च केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः"** (अथर्व० १० । ४ । ८ । १) इति । अन्तरात्मत्वसामान्याच्च विज्ञानमयस्यैतच्छरीरमिव भगवतो ब्रह्मणोऽपि सर्वमेतज्जगच्छरीरमित्याख्यायते । यत्रेदं श्रुतं भवति **"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः, यं पृथिवी न वेद, यस्य पृथिवी शरीरम् । ३ । योऽप्सु तिष्ठन्नद्भ्योऽन्तरः, यमापो न विदुर्यस्यापः शरीरम् । ४ । योऽग्नौ तिष्ठन्नग्नेरन्तरः, यमग्निर्न वेद यस्याग्निः शरीरम् । ५ । यो वायौ तिष्ठन् वायोरन्तरः, यं वायुर्न वेद यस्य वायुः शरीरम् । ७ । य आदित्ये तिष्ठन्नादित्यादन्तरः, यमादित्यो न वेद, यस्यादित्यः शरीरम् । ९ । यो दिक्षु तिष्ठन् दिग्भ्योऽन्तरः, यं दिशो न विदुर्यस्य दिशः शरीरम् । १० । य आकाशे तिष्ठन्नाकाशादन्तरः, यमाकाशो न वेद यस्याकाशः शरीरम् । १२ । यः प्राणे तिष्ठन् प्राणादन्तरः, यं प्राणो न वेद यस्य प्राणः शरीरम् । १६ । यो मनसि तिष्ठन् मनसोऽन्तरः, यं मनो न वेद यस्य मनः शरीरम् । २० । यो विज्ञाने तिष्ठन् विज्ञानादन्तरः, यं विज्ञानं न वेद यस्य विज्ञानं शरीरम् । यो विज्ञानमन्तरो यमयति । एष त आत्माऽन्तर्याम्यमृतः"** (बृ० ३ । ७ । ३–२२) इति । यत्किञ्चित्सामान्येन तथाऽऽख्यायमानं चैतन्न कर्हिचिदुपभोगसाधनं सम्पद्यते, येन तत्सम्बन्धाद् भगवतस्तस्य प्रियाप्रियसंस्पर्शः आशङ्क्येत । नहि कथञ्चिदग्निरित्याख्यायमानो माणवकः क्वचित्काष्ठानि भस्मीकुर्वाणो दृश्यते, सिंह इत्याख्यायमानो वा देवदत्तः क्वचिद्धस्तिकपालं बेभिद्यमानोऽनुभूयते, येनात्रापि तथोत्प्रेक्ष्येत ।

तैत्तिरीयके चेदृक्षमेवाकाशादिविज्ञानमयान्तं शरीरमभिप्रेत्यानन्दमयस्य भगवतो ब्रह्मणः शारीरत्वमाम्नायते **"तस्यैष एव शारीर आत्मा यः पूर्वस्य"** (तै० २ । ६) इति । पूर्वस्य=मनोमयस्य यः शारीर आत्मा सर्वश्रुतिप्रसिद्धः परमकारणभूत आनन्दमयो ब्रह्म, स एष एवानन्दमयः, तस्य=विज्ञानमयस्य शारीर आत्मेत्यर्थः । अनेन च विज्ञानमयादर्वाचीनानां मनोमयप्राणमयाऽन्नरसमयानां पृथिव्यप्तेजोवाय्वाकाशानां चाविशेषेणानन्दमयब्रह्मशरीरत्वं स्पष्टमधिगम्यते । **"ब्रह्मविदाप्नोति परम्"** इत्युपक्रान्तस्य ब्रह्मणः **"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः"** (तै०२।१) इत्यादिनाऽऽकाशाद्यन्तरात्मत्वमभिधाय विज्ञानमयमिव मनोमयं प्राणमयं च प्रस्तुत्यापि **"तस्यैष शारीर आत्मा यः पूर्वस्य"** इति शारीरत्वाम्नानात् । आनन्दमयस्य च नैवं पुनः शारीर आत्मा कश्चिदाम्नायते । तेन भवति प्रतिपत्तिर्नूनं शिष्यस्यावबुबोधयिषया यद्ब्रह्मोपक्रान्तं यस्मिँश्च **"सत्यं ज्ञानमनन्तं ब्रह्म"** इति स्वरूपप्रतिपादको मन्त्र उदाहारि तदेव सर्वान्तरात्मत्वेनानन्दमय इह समाम्नात इति । तस्य चोक्तलक्षणेषु शरीरेषु तथात्वेन वर्तमानस्य शारीरत्वव्यपदेश उपपद्यतेतरामिति सर्वमनवद्यम् ।

यत्तूक्तमवयवश्रुतेरानन्दमयो न ब्रह्मेति । तन्न पेशलम् । आत्मत्वसामान्येनावश्यवक्तव्यत्वादुपपत्तेः । यथा ह्यत्रान्नरसमयादिभ्यो भिन्नाः खलु प्राणमयादयोऽन्तरात्मानो यथानुपूर्व्यमनुशिष्यन्ते तथाऽऽनन्दमयोऽपि विज्ञानमयादन्योऽन्तरात्मा तावदनुशिष्यते **"तस्माद्वा एतस्माद् विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः"** इति । तदन्तरात्मत्वेन यथानुपूर्व्यमुपदिष्टानां च तेषां शिरःप्रभृतयोऽवयवा अपि प्रतिस्वमनुशिष्यन्ते **"तस्य प्राण एव शिरः, व्यानो दक्षिणः पक्षः, अपान उत्तरः पक्षः, आकाश आत्मा, पृथिवी पुच्छं प्रतिष्ठा"** (तै० २ । २) इत्यादिना । तत्सामान्यादानन्दमयस्यापि तेऽवश्यवक्तव्याः । अन्यथोपदेशवैरूप्यापत्तेः । उपदेशे च सारूप्यमावश्यकम् । नहि तदभावे कोऽप्युपदेशः

प्रज्ञावद्भिः श्रद्धीयते । न चानन्दमयस्य भगवतो ब्रह्मणः शिरःप्रभृतयोऽवयवास्तावत् पारमार्थिकाः उपपद्यन्ते । निरवयवत्वहानप्रसङ्गात् । काल्पनिकत्वेऽपि च तत्सलक्षणा एव केचित् कल्पयितव्याः, न जातु विलक्षणाः । लोके सर्वत्रावयवावयविनोरुभयोः सालक्षण्योपलब्धेः । नहि देहादेरवयविनो हस्तपादादयोऽवयवाः क्वचित् सलक्षणा नोपलभ्यन्ते । तत्रापि च के ते कल्पयितव्या इत्याकाङ्क्षायां प्रियमोदप्रमोदा एव तथात्वेनोपतिष्ठन्ते । तेषामानन्दमयब्रह्मसलक्षणत्वेन तदवयवत्वसम्भवात् । न चैते स्त्रीपुत्रादिसांसारिकवस्तुदर्शनलाभोपभोगजाः सुखविशेषा इहाभिप्रेयन्ते, किन्त्वानन्दमयस्य तस्य तास्ता अवस्थाः, याः किल ब्रह्मनिष्ठावेलायामभ्यासदार्ढ्यादत्रभवद्भिर्मुमुक्षुभिर्दृश्यन्त इव लभ्यन्त इवोपभुज्यन्त इव च यथाक्रमं विज्ञायन्ते । अवस्थावस्थावतोश्चाभेदस्याभ्युपगमान्नामूस्ततो मात्रयाऽपि विशिष्यन्ते । यं खल्वर्थं प्रयुज्यमानः प्रियशब्दः प्राह तमेव मोदशब्दः प्रमोदशब्द आनन्दशब्दो ब्रह्मशब्दश्चाह । सति चैवमविशेषे पक्षिरूपकेण तद्विशेषकल्पना तु हस्तिपदे पदान्तरवत् ब्रह्मानन्देऽपि सर्वे सांसारिका आनन्दाः परिसमाप्यन्त इति द्योतयितुं प्रवृत्तेति गम्यते । **"सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता"** (तै० २।१) इति, भगवति ब्रह्मणि प्रमाणत्वेनोदाहृतायामृचि तदविभागं प्राप्तस्य तत्रभवतो ब्रह्मविदः सर्वकामावाप्तेः सुस्पष्टमाख्यानात् । अत्रभवान् ब्रह्मवित् खल्वानन्दमयं ब्रह्म प्राप्तो लोके को नु नामानन्दो विद्यते यं न लभत इति स्पष्टश्चैतद्रूपकाशयः । तथा चानन्दमयस्य भगवतो ब्रह्मणो निरवयवत्वेऽपि प्रयोजनविशेषमुद्दिश्य प्रवृत्तेयमवयवश्रुतिरुपपद्यतेतरां नास्ति कश्चिद्दोषः । जगतो जन्मादिकारणस्य भगवतो ब्रह्मणश्च पक्षिरूपकेणाध्यात्मं प्रवेशो मधुविद्यायां बृहदारण्यकेऽप्युदाह्रियते **"पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्"** (बृ० २।५।१८) इति । सोऽप्यत्रोदितस्यानन्दमयस्यान्तरात्मनो

ब्रह्मत्वे दृढं लिङ्गमिति व्यक्तं प्रतिपद्यते, नास्ति संशयतुषः। तस्मादिहानन्दमयो ब्रह्मेति निरवद्यम्।

यत्त्वानन्दमयस्याब्रह्मत्वे ब्रह्मणः पुच्छत्वेनाम्नानादिति साधनमुपन्यस्तं, तदपि पराकृतं वेदितव्यम्। कल्पनामात्रत्वेनादूषणत्वात्। यथा ह्यानन्दमयस्य शिरःप्रभृतयोऽवयवाः खलु किञ्चित्सादृश्यं परिकल्प्याम्नायन्ते तथा पुच्छमपि किञ्चित्सादृश्यं परिकल्प्याम्नातव्यम्। रूपके सर्वत्र सर्वाङ्गविन्यासस्यौचित्यात्। नहि किञ्चिदङ्गविकलं रूपकं क्वचिद्रूपकविदः प्रशस्तं मन्यन्ते। पुच्छशब्दस्त्विहाधारवचनः प्रतिष्ठाशब्दसामानाधिकरण्येन प्रयुक्तत्वादित्युक्तम्। ब्रह्मापि चिदचिदात्मकस्य सर्वस्याधार इति स्वावसरे समगरिष्महि। तदिदमुभयत्र सादृश्यं परिकल्प्यानन्दमयस्य भगवतः पुच्छत्वेन ब्रह्म तावदाम्नातमिति गम्यते। कल्पनामात्रं चैतत्। कल्पना चाभिन्ने वस्तुनि भिन्नवत् प्रवर्तमानाऽपि न कर्हिचित् तद्भेदं प्रयोजयति। स्वस्य च स्वयमेवाधारो ब्रह्मेति छान्दोग्योपनिषदि प्रव्यक्तमाम्नायते **"स भगवः! कस्मिन्प्रतिष्ठित इति? स्वमहिम्नि"** (छा० ७।२४।२) इति। तस्मान्नैतत् किञ्चिद्दूषणम्। तथा च सिद्धमानन्दमयो ब्रह्म ॥ १२ ॥

**स्यादेतत्**—"आनन्दमयः" इत्यत्र श्रूयमाणः खलु मयट्—प्रत्ययो विकारार्थको विद्यते। **"मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः"** (अष्टा० ४।३।१४३) इति प्रकृत्य **"नित्यं वृद्धशरादिभ्यः"** (अष्टा० ४।३।१४४) इति विहितत्वात्। अनेन हि वृद्धेभ्यः शरादिभ्यश्च विकारार्थे मयट्—प्रत्ययो विधीयते। वृद्धसंज्ञकश्चायमानन्दशब्दः। **"वृद्धिर्यस्याचामादिस्तद्वृद्धम्"** (अष्टा० १।१।७३) इति स्मृतेः। ततश्च विहिते तस्मिन्नानन्दमय इत्यस्यानन्दविकार इत्यर्थो निष्पद्यते। तत्र चेदानन्दमयो ब्रह्मेत्यभ्युपगम्येत तदाऽऽनन्दविकारो ब्रह्मेति बलादापद्येत। न च भगवद् ब्रह्म तद्विकारो वर्तते। अपि च? तत्स्वरूपम्। जीवात्मा तु प्रलयवेलया-

मानन्दस्वरूपे भगवति तस्मिन्नविभागेन वर्तमानत्वात् सर्गादौ ततो निष्क्रामन् पृथिव्या ओषधिरिव कथञ्चित् तद्विकारो वक्तुं शक्यते। तस्मात्स एवात्रानन्दमयो युज्यते न ब्रह्मेत्येतदाशङ्क्य निराचष्टे—

**"विकारशब्दान्नेति चेन्न प्राचुर्य्यात्"** ॥ ३ ॥

ब्रह्मेति पूर्ववदधिक्रियते। आनन्दमय इति पूर्वसूत्रादनुवर्तते। **विकारशब्दात्**=विकारवाचकः शब्दो विकारशब्दः, विकारेति चैकदेशग्रहणम्, आनन्दविकारवाचित्वात्, **न**=आनन्दमयो ब्रह्म नेति चेन्न, **प्राचुर्य्यात्**=प्राचुर्य्यशब्दात् आनन्दप्राचुर्य्यवाचित्वादित्यर्थः।

न खल्वानन्दमय इत्यत्र मयट्प्रत्ययो विकारार्थे विद्यते। अपि च? प्राचुर्य्यार्थे। विकारवत् प्राचुर्य्येऽपि तस्य स्मरणात्। यथा ह्येष **"नित्यं वृद्धशरादिभ्यः"** (अष्टा० ४।३।१४४) इति विकारार्थे तावत् स्मर्य्यते, तथा **"तत्प्रकृतवचने मयट्"** (अष्टा० ५।४।२१) इति प्राचुर्य्यार्थेऽपि स्मर्य्यते। समाने चोभयत्र स्मरणे यदेवाश्रयितुं युक्तं तदेवाश्रयितव्यं भवति, न त्वितरत्। **अथोच्येत**—अन्नरसमयादिषु सर्वत्र विकारार्थे मयट्प्रत्ययः श्रूयते तत्प्रवाहे पठितश्चानन्दमय इति तत्रापि तेन तदर्थेन भवितव्यम्। अन्यथाऽर्द्धजरतीयन्यायानुहरणप्रसक्तेस्तत्सहचरितन्यायपरित्यागापत्तेश्चेति। **नैतद्युक्तम्**। तत्रापि मयटः प्राचुर्य्यार्थकत्वात्। यथा ह्यानन्दमय इत्यत्र मयट्प्रत्ययः खलु प्राचुर्य्यार्थको वर्तते, तथाऽन्नरसमयादिष्वपि प्राचुर्य्यार्थको द्रष्टव्यः। नहि स्थूलमिदं शरीरमन्नरसमात्रस्य विकारमौपनिषदा मन्यन्ते येन तत्र विकारार्थकोऽसौ समाश्रीयेत। अन्नरसमय इति व्यपदेशस्तु पाञ्चभौतिके तस्मिन् तत्प्राचुर्य्यनिबन्धनः प्रवर्तते, न जातु विकारनिबन्धन इति शक्यते वक्तुम्। वक्ष्यति च स्वयमाचार्य्योऽपि **"वैशेष्यात्तु तद्वादस्तद्वादः"** (वे० २।४।२२) इति। प्राणमये मनोमये विज्ञानमये च प्राणादिप्राचुर्य्यं विस्पष्टमिति युक्तः सर्वत्र प्राचुर्य्यार्थको मयडभ्युपगमः। **अथोच्येत**—प्राचुर्य्यार्थकत्वे खलु मयट आनन्दमय इत्यस्यानन्दप्रचुर इत्यर्थो वक्तव्यः। तथा च भगवति ब्रह्मणि दुःखाल्पत्वमपि

गम्येत । प्राचुर्य्यस्य प्रतियोग्यल्पत्वापेक्षत्वादिति । **नैतद्युक्तम्** । तस्य प्रमाणसिद्धप्रतियोग्यल्पत्वापेक्षत्वेऽपि प्रतियोगाल्पत्वानपेक्षत्वात् । सत्यं प्राचुर्य्यं प्रतियोग्यल्पत्वमपेक्षते, तथापि न प्रतियोगिमात्राल्पत्वं किन्तु प्रमाणसिद्धप्रतियोग्यल्पत्वम् । न चानन्दैकमूर्त्तौ भगवति ब्रह्मणि दुःखं मात्रयाऽपि केनचित् प्रमाणेन सिध्यति, येन तदल्पत्वमपेक्ष्येत । नच प्रमाणासिद्धस्यापेक्षणं तत्कल्पनं वा कदाचिदाचार्य्यरूपाः युक्तं मन्यन्ते । तदन्यानन्दाल्पत्वं तु प्रमाणेन सिद्धं वर्तते । श्रुतिरेव भगवती **"स एको मानुष आनन्दः"** (तै० २ । ८) इति मनुष्यादारभ्योत्तरस्मिन्नुत्तरस्मिन् स्थाने शतगुणानन्दमुक्त्वा ब्रह्मानन्दस्य निरतिशयत्वं प्रतिपादयन्ती तत्प्राचुर्य्यं तदन्यानन्दस्याल्पत्वं च सुदृढमवगमयति । तदेवावगम्यमानं चान्यानन्दाल्पत्वमत्रानन्दप्राचुर्य्येण तावदपेक्ष्यते, न जात्वप्रामाणिकं दुःखाल्पत्वमिति नास्ति प्राचुर्य्यार्थकेऽपि मयटि कश्चिद्दोषः ।

**यच्चोक्तं** जीवात्मा तु निष्क्रमणप्रवेशनाभ्यां कथञ्चिदानन्दविकारो वक्तुं शक्यते, तेन युक्तो विकारार्थे मयट्प्रत्यय इति । **तदसत्** । निष्क्रमणप्रवेशनमात्रस्य वस्तुविकारताऽप्रयोजकत्वात् । यत् खलु वस्तु पूर्वं रूपं हित्वा रूपान्तरेण स्वीयं कारणं प्रविशति, ततश्च रूपान्तरेण निष्क्रामति, तदेव तद्विकारो वक्तुं शक्यते । न च जीवात्मा ब्रह्म प्रविशन्नात्मनः पूर्वं रूपं जहाति ततश्च निष्क्रामन् किञ्चिद्रूपान्तरं गृह्णाति, येन तद्विकारो वक्तुं शक्येत । किन्तु शकुनिरिव सायंप्रातः प्रलयवेलायामात्मनो नीडं ब्रह्म प्रविशति, सर्गवेलायां च ततो निष्क्रामतीति वेदितव्यम् । न चेदृक्षे निष्क्रमणप्रवेशने खलु तस्य कर्हिचिद्विकारतां प्रयोजयितुमर्हतः । नहि तावच्छकुनिः कदापि स्वनीडस्य विकारो भवतीति केनचिद् वक्तुं पार्य्यते । सकलश्रुतिस्मृतिन्यायविरुद्धश्च जीवात्मनो विकारत्वाभ्युपगम इति नाविदितं शास्त्रपरिश्रमजुषां पण्डितानाम् । विस्तरेण चैतदग्रे यथावसरं निरूपयितास्महे । तस्मान्न विकारार्थे

युक्तो मयट्प्रत्यय आश्रयितुम् । तथाचानन्दप्राचुर्य्यार्थकत्वादानन्दमयो ब्रह्मेति सिद्धम् ।

**शङ्कराचार्य्यास्त्व**न्नरसमयादिष्वानन्दमयपर्य्यन्तेषु सर्वत्र विकारार्थे तावन्मयट्प्रत्ययमातिष्ठन्ते । तद्वैदिकधौरेयैः सूत्रकृद्वचनविरोधादुपेक्षितव्यम् । प्रबलं हि भगवतः सूत्रकृतो वचनं न तत् कथमप्यन्यथयितुं पार्य्यते । न च व्याख्यातारोऽपि क्वचित् सूत्रकृद्वचनाननुगुण्यमाचरन्तोऽवधेयवचसः सम्पद्यन्ते, येन तदुक्तिरप्युपेक्षणीया न स्यात् । स्पष्टश्चाक्षरविन्यासात् सूत्रकृदाशयो 'नात्र विकारार्थे किन्तु प्राचुर्य्यार्थे मयडिति । यथा चेह मयटः प्राचुर्य्यार्थकत्वे खलु तद्वचनं प्रमाणं, तथोपनिषदां छन्दोभावाभावेऽपि प्रमाणं वेदितव्यम् । **"मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः"** (अष्टा० ४ । ३ । १४३) इति भाषायां विकारार्थे मयट्प्रत्ययं विधाय छन्दसि तद्विधानाय **"द्व्यचश्छन्दसि"** (अष्टा० ४ । ३ । १५०) इति सूत्रमारभ्यते । तत्र छन्दसि चेद्विकारार्थे मयट्प्रत्ययस्तदा द्व्यच एवेति नियमः, द्व्यचश्चेद्विकारार्थे मयट्प्रत्ययस्तदा छन्दस्येवेति विपरीतनियमव्यवच्छेदश्च पूर्वत्र "भाषायाम्" इति ग्रहणसामर्थ्याल्लभ्यते । छन्दसि बह्वचः परस्य मयटोऽर्थान्तरपरत्वमेवेति तात्पर्य्यग्रहणार्थमेवेदं पदमिति शाब्दिकैरभ्युपगमात् । तेन छन्दसि द्व्यच एव विकारार्थे मयट्प्रत्ययो भवति न बह्वच इति सुनिष्पद्यते । तथा चावधातव्यं चेद्भगवान् सूत्रकृदुपनिषदां तावच्छन्दोभावमास्थास्यत, तदा न जातु तत्पठितेष्वन्नरसमयादिषु विकारार्थे मयट्प्रत्ययमाशङ्क्य प्राचुर्य्यार्थकत्वेन समाधास्यत । नहि तत्र प्राणमनःपदे विहाय शिष्टं पदत्रयमपि द्व्यच्कं विद्यते, येन ततो विकारार्थेऽसौ प्रत्ययः प्रसज्येत । प्रसक्तश्चाशङ्क्य समाधीयेत । न चाप्रसक्ताशङ्कासमाधाने खलु पदवाक्यप्रमाणज्ञस्य भगवतः सूत्रकृतः कर्हिचिद्युज्येते । स तु सुव्यक्तं विकारार्थे तं प्रत्ययमाशङ्क्य प्राचुर्य्यार्थकत्वेन समाधत्ते **"विकारशब्दान्नेति चेन्न प्राचुर्य्यात्"** इति । न च भगवतस्तस्यैते शङ्कासमाधाने तदछन्दोभावाभ्युपगममन्तरेण कथञ्चिदुपपद्येते ।

युक्ता च तदुपपत्तिः । तस्मात् प्रतिपद्यते नूनं तत्रभवान् सूत्रकृदुपनिषदां तावच्छन्दोभावं नाभ्युपगच्छतीति । **ननु** कथं तर्ह्युपनिषत्सूपलभ्यमानाः **"तत्त्वमसि"** ( छा० ६ । ८ । ७ ) **"विमोक्ष्येऽथ सम्पत्स्ये"** ( छा० ६ । १४ । २ ) इत्यादयश्छान्दसाः प्रयोगा उपपद्येरन्निति चेत् ? **गौण**छन्दोभावाभ्युपगमादित्याचक्ष्महे । द्विविधं हि छन्दोऽभ्युपगम्यते मुख्यं गौणं च । तत्र चत्वारो वेदाः मुख्यं छन्दः, ब्राह्मणानि च गौणं छन्दः । उपनिषद आरण्यके च ब्राह्मणभागविशेषत्वात् न ततो व्यतिरिच्यन्ते, तद्ग्रहणेनैव गृह्यन्ते । विधयश्च क्वचिच्छन्दस्त्वसामान्यं पुरस्कृत्य गौणं मुख्यं चोभयं समानं गोचरयन्ति, क्वचिच्च विशिष्टं मुख्यमात्रम् । तेषामुभयथा प्रवृत्तौ च वेदवदुपनिषत्सूपलभ्यमानाश्छान्दसाः प्रयोगा अपि सूपपद्यन्ते, नास्ति काचिदनुपपत्तिः । **ननु** छन्दोद्वैविध्यप्रतिपत्तिः कुतो जायत इति चेत् ? **पाणिनीयसूत्रेभ्य** इति वच्मः । पाणिनीयसूत्रेषु तावद् द्वेधा छन्दःपदप्रयोग उपलभ्यते । वेदब्राह्मणोभयगोचरो यथा **"षष्ठीयुक्तश्छन्दसि वा"** ( अष्टा० १ । ४ । ९ ) **"तृतीया च होश्छन्दसि"** ( अष्टा० २ । ३ । ३ ) **"ह्यश्छन्दसि"** ( अष्टा० ४ । ३ । १५० ) इत्यादिः; वेदमात्रगोचरश्च यथा **"चतुर्थ्यर्थे बहुलं छन्दसि"** ( अष्टा० २ । ३ । ६२ ) **"छन्दोब्राह्मणानि च तद्विषयाणि"** ( अष्टा० ४ । २ । ६६ ) **"अम्नरूधरवरित्युभयथा छन्दसि"** ( अष्टा० ८ । २ । ७० ) इत्यादिः । द्वेधोपलब्धस्य च तस्यावश्यं व्यवस्थाप्योपादानं कर्तव्यम् । अन्यथाऽव्यवस्थितोपादानप्रसङ्गात् । नहि प्रज्ञावन्तः शास्त्रिणः क्वचिदव्यवस्थितं किञ्चिदुपाददते । न च महाप्राज्ञो भगवान् पाणिनिः कदाचिदव्यवस्थितं किञ्चित्सूत्रयितुमर्हति । व्यवस्था चेह गौणमुख्यभेदं परिकल्प्यैव सम्भाव्यते, न प्रकारान्तरेण । तत्र क्व मुख्यः स्यात् क्व च गौणश्छन्दःशब्दप्रयोग इति भगवतस्तस्य सूत्ररचनया दुःखेन प्रतिपत्तुं शक्यते । स हि भगवान् **"द्वितीया ब्राह्मणे"** ( अष्टा० २ । ३ । ६० ) **"चतुर्थ्यर्थे बहुलं छन्दसि"** ( अष्टा० २ ।

३ । ६२ ) **छन्दोब्राह्मणानि च तद्विषयाणि**" ( अष्टा० ४ । २ । ६६ ) इति सूत्रयन् छन्दःशब्दो वेदेषु नियमेन ब्राह्मणेषु चानियमेन प्रयुज्यत इति दर्शयति । यस्य च यत्र नियमेन प्रयोगः स तस्य मुख्योऽर्थो दृष्टो यथा सिंहशब्दस्य सिंहः । यत्र चानियमेन स गौणो यथा देवदत्तः । यथादृष्टं चात्रापि प्रतिपत्तव्यमिति युक्तं पश्यामः । प्रतिपत्तेः सर्वदा सर्वत्र दृष्टानुसारित्वौचित्यात् । अतो ब्राह्मणेषु छन्दःपदप्रयोगो गौणो वेदेषु च मुख्य इति निःशङ्कं प्रतिपद्यते । योगाभावाच्च । छन्दःशब्दो हि वेदेषु तावद् गायत्र्यादिच्छन्दोयोगात्प्रवर्तते । ब्राह्मणेषु च तद्योगाभावान्नासौ कर्हिचित् प्रवर्तितुमुत्सहते । नहि पचिक्रियायोगात् प्रवर्तमानः पाचकशब्दस्तद्योगाभावेऽपि क्वचित् प्रवर्तते । दृश्यते च बहुकृत्वः पाणिनीयेषु तत्रापि तच्छब्दप्रयोगः । तस्मादवगम्यते नूनमाचार्यश्छन्दोव्याख्यानाभिप्रायात् तत्र तच्छब्दं प्रयुङ्क्ते न छन्दोऽभिप्रायात् । एवं श्रुतिशब्दोऽपि वेदब्राह्मणोभयसाधारण्येन प्रयुक्त ऊहनीयः । मन्त्रशब्दस्तु वेदेष्वेव प्रयुज्यते न ब्राह्मणेष्विति शास्त्रविदां स्थितिः । तां चैतां "**जुष्टार्पिते च छन्दसि**" ( अष्टा० ६ । १ । २०९ ) इति वेदब्राह्मणयोः साधारण्येन छन्दःशब्दं प्रयुज्य "**नित्यं मन्त्रे**" ( अष्टा० ६।१।२१० ) इति भूयो वेदमात्रे मन्त्रशब्दं प्रयुञ्जानो भगवान् पाणिनिरप्यनुमन्यते । केचित्तु क्वचित्पद्यात्मिकासूपनिषच्छ्रुतिष्वप्याधुनिकाः साम्प्रदायिका इव स्वस्वकल्पितकतिपयवाक्यविशेषेषु मन्त्रपदं प्रयुञ्जते । तदस्मभ्यं न रोचते । किमेतदुचितमाहोस्विदनुचितमिति स्वयमधुना विमृशन्तु विहितगुरुकुलपरिश्रमाः सुज्ञा इति वयं तल्लेखादुदास्महे ॥ १३ ॥

इतश्चानन्दमयो ब्रह्म—

"**तद्धेतुव्यपदेशाच्च**" ॥ १४ ॥

**ब्रह्मे**त्यधिक्रियते । पूर्ववदानन्दमय इत्यनुवर्तते । यत्र पूर्वो हेतुरुक्तस्तत्रैव हेत्वन्तरमेतदिति सूचनाय चकारः । **तद्धेतुव्यपदेशात्**=

तदैकदेशमानन्दं परामृशति, तस्य हेतुस्तद्धेतुः, तद्धेतुत्वेन व्यपदेशस्तद्धेतुव्यपदेशः, तस्मात्–आनन्दहेतुत्वव्यपदेशादानन्दमयो ब्रह्मेत्यर्थः ।

आनन्दमयं हि प्रकृत्य श्रूयते **"एष ह्येवानन्दयाति"** (तै० २ । ७) इति । एष एव ह्यानन्दमयः सर्वान् जीवात्मन आनन्दयतीत्यर्थः । अत्र सर्वभूतानन्दहेतुत्वं तावदानन्दमयस्य व्यपदिश्यते । चेदानन्दमयो ब्रह्म न भवेत् तदा श्रुत्या तस्य तद्धेतुत्वं न व्यपदिश्येत । नहि ब्रह्मणोऽन्यः कश्चित्तद्धेतुत्वेन व्यपदेष्टुं शक्यते । जीवात्मानो हि तदानन्दमात्रामुपजीवन्तः सर्वदा प्रमोमुद्यन्त इति स्वयं भगवती श्रुतिरुपदिशति **"एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति"** (बृ० ४ । ३ । ३२) इति । अन्यानि भूतानि=ब्रह्मभिन्नाः सर्वे जीवात्मान इत्यर्थः । येषां च स्वत आनन्दो नास्ति सर्वदा परानन्दमात्रामुपजीव्य च नानन्द्यन्ते, न च तेऽन्यान् काँश्चिदानन्दयितुं कर्हिचित् प्रभवन्ति, प्रागेव तु तेषां तद्धेतुत्वव्यपदेशः । ब्रह्म चानन्दस्वरूपत्वात् सर्वाणि भूतानि सर्वदा सर्वत्र यथाकाममानन्दयितुं प्रबोभोतीति नास्ति तस्य तद्धेतुत्वव्यपदेशानुपपत्तिः । तस्मात्सिद्धमानन्दमयो ब्रह्म ॥ १४ ॥

इतश्चानन्दमयो ब्रह्म—

**"मान्त्रवर्णिकमेव च गीयते"** ॥ १५ ॥

ब्रह्मेत्यधिक्रियते । पूर्ववदानन्दमय इत्यनुवर्तते । हेतौ चः । इतरगानव्यावृत्तिरवधारणार्थः । **च**=यस्मात्, **मान्त्रवर्णिकमेव**=मन्त्रात्मको वर्णो मन्त्रवर्णः, तत्र प्रतिपाद्यतया भवं, तेन प्रतिपाद्यमिति यावत्, मान्त्रवर्णिकं ब्रह्म, तदेव **गीयते**=आनन्दमयरूपेणेहाभिधीयते, तस्मादानन्दमयो ब्रह्मेत्यर्थः ।

**"ब्रह्मविदाप्नोति परम्"** (तै० २ । १) इत्युपक्रम्य तत्र भवता ब्रह्मविदाऽऽप्तव्यस्य परस्य ब्रह्मणो लक्षणस्वानाप्तिप्रतिपादनपरो मन्त्रस्तावदुदाहियते **"सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं**

**गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता**" ( तै० २ । १ ) इति । तत्र "सत्य ज्ञानमनन्तं ब्रह्म" इति लक्षणं, "निहितं गुहायां परमे व्योमन्" इति स्थानं, "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति च वेदनफलमाप्तिः प्रतिपाद्यते । परमव्योमशब्दश्च ब्रह्मणि रूढोऽप्यत्र लक्षणया विज्ञानमये जीवात्मनि प्रयुज्यते । बुद्धिस्थानं हृदयं गुहा । विविधं जगदशेषविशेषतः पश्यन्ती चित् विपश्चित् । पृषोदरादित्वात् पश्यच्छब्दावयवस्य यच्छब्दस्य लोपः । वैपश्चित्यं चात्र सार्वज्ञ्यम् । यत्खलु सत्तां भजमानं नित्यं चेचित्यते देशतः कालतश्च न परिच्छिद्यते हृदयगुहायां वर्तमाने परमे व्योमन्=सप्तम्याः लुक्, परमव्योम्नि विज्ञानमये जीवात्मनि चान्तरात्मत्वेनावतिष्ठते तद्ब्रह्म यो वेद= साक्षात्कुरुते, स परित्यक्ताखिलप्राकृतसम्बन्धः शुद्धः परिमार्जितो ब्रह्मणा सर्वज्ञेन सहाविभागं गतः स्वेनात्मना चिता सर्वान् कामान्=काम्यमानत्वात् काम आनन्दः, मानुषानन्दादारभ्य प्रजापत्यानन्दपर्य्यन्तान् सर्वानानन्दान् सर्वानन्दावधिभूतं निरतिशयं ब्रह्मानन्दमिति यावत्, समश्नुते=उपभुङ्क्ते । अत्रोपभोगोऽनुभवः प्राप्तिरिति यावदिति मन्त्रप्रतिपाद्योऽर्थः । एतमेव च मन्त्रप्रतिपाद्यमर्थं विशदीकृत्य ग्राहयितुमुत्तरं ब्राह्मणं प्रवर्तते—"**तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः**" इत्यादि । तत्राकाशादिक्रमेणान्नरसमयस्थूलशरीरोत्पत्तिमभिधाय ततोऽन्योऽन्तरात्मा प्राणमयस्ततोऽन्योऽन्तरात्मा मनोमयस्ततोऽन्योऽन्तरात्मा विज्ञानमयस्ततोऽन्योऽन्तरात्माऽऽनन्दमय इत्यभिधीयते । अन्नरसमयादिभ्य इव चानन्दमयादन्योऽन्तरात्मा कश्चन नाभिधीयते । अग्रे चानन्दमयप्राप्तिमुक्त्वा तत्प्रामाण्याय "**यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन**" ( तै० २ । ९ ) इति श्लोक उदाहृियते । तेन गुहायां परमे व्योम्नि निहितः सर्वान्तरात्माऽऽनन्दमयः स एव च तत्र भवतो ब्रह्मविदः प्रापणीयः, तत्प्राप्तिरेव चाभयपदप्राप्तिर्या किल मोक्षमुदाहरन्ति मोक्षविद इति

ब्राह्मणार्थः स्फुटमवगम्यते । मन्त्रब्राह्मणयोश्च समानार्थत्वं युक्तम् । अन्यथा व्याख्यानव्याख्येयभावानुपपत्तेः । नहि मन्त्रतो विरुद्धं किञ्चिद-भिदधद् ब्राह्मणं तद्व्याख्यानमुपपद्यते । व्याख्यानं हि व्याख्येयार्थस्य वैशद्याय प्रवर्तते न जातु यथाकामं गानाय । मन्त्रे च गुहायां परमे व्योम्नि निहितं ब्रह्मेति स्थितम् । अत्र चानन्दमयः । तस्मात्प्रतिपद्यते नूनमिह मन्त्रप्रतिपादितं ब्रह्मैवानन्दमयेन गीयते न त्वितरत् । तथा च सिद्धमानन्दमयो ब्रह्म ॥ १५ ॥

सिद्धान्तपक्षः समर्थितः । सम्प्रति पूर्वपक्षं निरसितुमुपक्रमते—

**"नेतरोऽनुपपत्तेः"** ॥ १६ ॥

आनन्दमय इत्यनुवर्तते । **इतरः**=ब्रह्मणो भिन्नो जीवात्मा, **न**= आनन्दमयो न भवति, कुतः ? **अनुपपत्तेः**=आनन्दमयं प्रकृत्याम्नातस्य सर्वस्रष्टृत्वस्यानुपपत्तेरित्यर्थः ।

आनन्दमयं हि प्रकृत्याम्नायते—**"सोऽकामयत बहुस्यां प्रजायेयेति । स तपोऽतप्यत, स तपस्तप्त्वा इदं सर्वमसृजत् यदिदं किञ्च"** (तै० २ । ६) इति । न चेदमाम्नातं सर्वस्रष्टृत्वमानन्दमयेन जीवात्मपरिग्रहे कथञ्चिदुपपद्यते । शरीराद्युत्पत्तेः प्राक् तस्य ज्ञानक्रियासाधनाभावात् । ऐश्वर्य्यस्य च सावग्रहत्वात् । न च ब्रह्मपरिग्रहेऽस्ति काचिदनुपपत्तिः । तस्मान्नात्रानन्दमयो जीवात्मा किन्तु ब्रह्म ॥ १६ ॥

**इतश्च** नानन्दमयो जीवात्मा—

**"भेदव्यपदेशाच्च"** ॥ १७ ॥

आनन्दमयो नेतर इति पदत्रयमनुवर्तते । यत्र पूर्वो हेतुरुक्तस्तत्रैवायमपरो हेतुरिति चार्थः । **भेदव्यपदेशात्**=आनन्दमयाद् ब्रह्मणो भेदेन व्यपदेशान्नेतरो जीवात्माऽऽनन्दमयो भवतीत्यर्थः ।

आनन्दमयं ह्यधिकृत्य श्रूयते **"रसो वै सः रसं ह्येवायं**

**लब्ध्वाऽऽनन्दी भवति**" ( तै० २ । ७ ) इति । अत्र रसशब्दवाच्यादानन्दमयाल्लब्धव्याल्लब्धा खलु जीवात्मा भेदेन व्यपदिश्यते । चेदानन्दमयो जीवात्मा श्रुत्या विवक्ष्येत तदा नासौ ततो भेदेन कर्हिचिद् व्यपदिश्येत । नहि क्वचिल्लब्धैव लब्धव्यो भवति । व्यपदिशति च तथा भगवती श्रुतिः । तस्मात् नानन्दमयो जीवात्मा ॥ १७ ॥

**स्यादेतत्**—सर्वस्रष्टृत्वानुपपत्तेर्भेदव्यपदेशाच्च मा नामानन्दमयो जीवात्मा सैत्सीत् । प्रकृतिः सेत्स्यति । तस्याः सर्वकारणत्वेन सर्वस्रष्टृत्वोपपत्तेः, जीवात्मवद्भेदव्यपदेशस्य चानुपलब्धेरिति । अस्योत्तरं पठति—

**"कामाच्च नानुमानापेक्षा" ॥ १८ ॥**

आनन्दमय इत्यनुवर्तते । अप्यर्थश्चो भिन्नक्रमः । **अनुमानापेक्षा च**=श्रुतिषु सामान्यसंक्षेपाभ्यां निरूपितत्वाद् विशेषतो विस्तरतश्चात्मनिरूपणार्थमनुमानम्–अदृष्टार्थप्रवक्तृकं शब्दमार्षस्मरणं स्मृतिमिति यावदपेक्षते या साऽनुमानापेक्षा प्रकृतिरपि, **न**=आनन्दमयो न भवति, कुतः ? **कामात्**=तदधिकारे पठ्यमानात् कामयितृत्वादित्यर्थः ।

आनन्दमयाधिकारे हि पठ्यते–"**सोऽकामयत बहुस्यां प्रजायेय**" ( तै० २।६ ) इति। न चायं पठ्यमानः कामोऽचेतनायाः प्रकृतेर्धर्मः सम्भवति । तस्य चेतनधर्मत्वेनाचेतनधर्मत्वानुपपत्तेः । नहि चेतनधर्मः कश्चित् क्वचिदचेतनधर्म उपपद्यते । प्रकृतेरानन्दमयत्वे चावश्यं चेतनधर्मः कामस्तद्धर्मः पठितः स्यात् । न च स तथा पठितुं शक्यते । अयथार्थाभिधानप्रसङ्गात् । न च भगवती श्रुतिः क्वचित् किञ्चिदयथार्थमभिधत्ते । अथोच्येत "**कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव**" (बृ० १ । ५ । ३) इति कामस्य प्राकृतत्वाभिधानान्न तस्या अयथार्थाभिधानप्रसङ्ग इति । **नैतद्वक्तव्यम्** । तात्पर्यानवबोधात् । न खल्वत्र मनोमात्रधर्मत्वाभिप्रायेण कामादयो मन एवेत्युच्यन्ते, येन कामस्य प्राकृतत्वेन श्रुतेरयथा-

र्थाभिधानं न प्रसज्येत। किन्तर्हि? मनःप्रयोज्यत्वमात्राभिप्रायेण। ते हि मनःसम्बन्धे सत्यात्मन्युत्पद्यन्ते नासति तस्मिन्नित्येतावन्मात्रेण मनएवेत्याख्यायन्ते। वस्तुतस्तु मनोविशिष्टस्यात्मनस्ते धर्मा आश्रीयन्ते, न केवलस्यात्मनः, कूटस्थनित्यत्वात्। नापि केवलस्य मनसो जडत्वादित्यवगन्तव्यम्। एवमत्रापि पठ्यमानः कामः प्रकृतिविशिष्टस्य ब्रह्मण एव धर्मः सम्भवति न जडायाः प्रकृतेः। तस्मान्न प्रकृतिरानन्दमयः॥ १८॥

अत्रैव हेत्वन्तरमाह—

**"अस्मिन्नस्य च तद्योगं शास्ति"** ॥ १९॥

आनन्दमयो नानुमानापेक्षेति पदत्रयमनुवर्तते। चो हेतौ। **च**=यस्माद् **अस्मिन्**=आनन्दमये, **अस्य**=ब्रह्मणि चित्तप्रतिष्ठां विन्दमानस्यास्य मुमुक्षोः, **तद्योगं**=योगः प्राप्तिः, अभयप्राप्तिं मुक्तिमिति यावत्, **शास्ति**=श्रुतिरुपदिशति, तस्मादानन्दमयो न प्रकृतिरित्यर्थः।

**"यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति"** (तै० २।७) इति श्रुतिस्तावदानन्दमये प्रतिष्ठितचित्तस्यास्य मुमुक्षोरभयप्राप्तिं मुक्तिमनुशास्ति। चेत् प्रकृतिरानन्दमयः स्यात् तदा नेयं तत्र चित्तप्रतिष्ठयाऽस्य मुमुक्षोरभयप्राप्तिमनुशिष्यात्। नहि प्रकृतौ प्रतिष्ठितचित्तः कश्चिदभयं गतो भवति। भयहेतुर्हि नूनं तत्र चित्तप्रतिष्ठा नाभयहेतुः। प्रतिक्षणं परिणामशीलत्वात्। परिणामशीला हि प्रतिक्षणं प्रकृतिर्यादृशी सा प्रथमे क्षणेऽस्माभिरुपलभ्यते, न तादृशी द्वितीये क्षणे समवलोक्यते। सा कदाचिदत्यन्तनिर्म्मलां सुखमयीं सात्त्विकीमवस्थामवलम्बते, कदाचिन्नितान्तघोरां दुःखमयीं राजसीं, कदाचिच्च ततोऽप्यधमां विषादमयीं तामसीमवस्थां समाश्रयते। यस्याश्चेदृशी गतिर्या च क्षणमप्यात्मन्यवस्थातुं न सहते, न तन्निष्ठेन कथञ्चिदभयं प्राप्तुं शक्यते। अत एव चाह भगवती श्रुतिः **"अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः। तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्**

**य उ प्रेयो वृणीते**" (कठ० २। १) इति। एतदेव च ब्रह्मनिष्ठाया अभयहेतुत्वं द्रढयता वाक्यशेषेणापि स्पष्टीक्रियते—"**यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति तत्त्वेव भयं विदुषो मन्वानस्य**" (तै० २। ७) इति। यदा ह्येवैष मुमुक्षुः, एतस्मिन्=आनन्दमये चित्तप्रतिष्ठामभ्यस्यमानः उदरमन्तरं=मध्येऽल्पमपि व्यवधानं, कुरुते=विधत्ते–अभयं प्रतिष्ठां न विन्दते तां परित्यज्य ततोऽन्यत्र निष्ठामभ्यस्यते, अथ=तदा, तस्य=मुमुक्षोः, भयं= जन्ममरणलक्षणं भयं, भवति=जायते। तदेव स्पष्टयति—तत्तु भयं विदुषः= प्रकृतिमेकां सारं पश्यतो, मन्वानस्य=तन्निष्ठां ज्यायसीमवबुध्यमानस्यैव भवतीत्यर्थः। ब्रह्मनिष्ठश्चाभयं ब्रह्म गतो भवतीति निर्विवादम्। तदेव चानन्दमयमधिकृत्यात्रानुशिष्यते। तस्मादानन्दमयो न प्रकृतिः, किन्तु ब्रह्मेति सिद्धम् ॥ १९ ॥

जिज्ञास्यत्वोपपत्तये ब्रह्मणस्तावदानन्दरूपत्वमुक्तम्। सम्प्रति तस्य सर्वान्तरत्वं वक्तुकामोऽधिकरणान्तरमारचयति—

"**अन्तस्तद्धर्मोपदेशात्**" ॥ २० ॥

ब्रह्मेत्यधिक्रियते। **अन्तः**=छान्दोग्यश्रुतावभिहितोऽक्ष्यादित्ययोरन्तःपुरुषो ब्रह्म प्रतिपत्तव्यः, कुतः? **तद्धर्मोपदेशात्**=तदाऽधिक्रियमाणं ब्रह्म परामृशति, तं प्रकृत्य सर्वपाप्मोदित्यादीनां ब्रह्मधर्माणामुपदेशादित्यर्थः।

छान्दोग्योपनिषदि तावदभिधीयते "**अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते, हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात् सर्व एव सुवर्णः। ६। तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी। तस्योदिति नाम। स एष सर्वेभ्यः पाप्मभ्य उदितः। उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद। ७। तस्यर्क् साम च गेष्णौ। स एष ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामानां च। इत्यधि-**

**दैवतम्**" (छा० १।६।६-७-८)"**अथाध्यात्मम्-अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते । तस्यैतस्य तदेव रूपं यदमुष्य रूपं, यावमुष्य गेष्णौ तौ गेष्णौ, यन्नाम तन्नाम।५। स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चेति । तद्य इमे वीणायां गायन्त्येतं ते गायन्ति, तस्मात्ते धनसनयः**" (छा० १ । ७ । ५-६) इत्यादि । तत्र संशयः—योऽयमादित्येऽक्षिणि चान्तःपुरुष उपास्यत्वेनाभिहितः स किं जीवात्मा स्यात् आहोस्विद् ब्रह्मेति । जीवात्मेति पूर्वः पक्षः, ब्रह्मेति सिद्धान्तः । किन्तावत्प्राप्तम् ! जीवात्मेति । कुतः ? **आधारश्रवणात्** । यथा खल्वस्मदादिजीवात्मनामाधारो भूप्रभृतिरुपलभ्यते, तथाऽऽदित्याक्ष्णोरन्तःपुरुषस्याप्यादित्याक्षिणी आधारः श्रूयेते "य एषोऽन्तरादित्ये, य एषोऽन्तरक्षिणि" इति । चेदसौ ब्रह्म भवेत् तदा न जात्वस्मदादिवत् तदाधारः कश्चिच्छ्रूयेत । नहि सर्वव्यापिनः स्वमहिमप्रतिष्ठितस्य भगवतो ब्रह्मणः कश्चिदाधार उपपद्यते । तस्य सर्वव्यापित्वं स्वमहिमप्रतिष्ठितत्वं च "**सर्वव्यापी सर्वभूतान्तरात्मा**" (श्वे० ६ । ११) "**स भगवः कस्मिन् प्रतिष्ठित इति ? स्वे महिम्नि**" (छा० ७ । २४ । १) इत्यादिश्रुतिभ्यां विस्पष्टम् । **रूपश्रवणाच्च** । यथा हि लोकेऽस्मदादीनां रूपं तावदवलोक्यते, तथाऽऽदित्यान्तःपुरुषस्यापि रूपं श्रूयते "हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात्सर्व एव सुवर्णः" इति । तथैतदक्ष्यन्तःपुरुषेऽप्यतिदिश्यते "तस्यैतस्य तदेव रूपं यदमुष्य रूपम्" इति । चेदादित्याक्ष्यन्तःपुरुषः खलु ब्रह्म भवेत् तदा नास्मदादिवत् तद्रूपं श्रूयेत । नहि भगवतो ब्रह्मणः किञ्चिद् रूपं विद्यते, "**अशरीरं शरीरेषु**" (कठ० २ । २१) "**अशब्दमस्पर्शमरूपमव्ययम्**" (कठ० ३ । १५) **दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः**" (मुं० २ । १ । २) "**अस्थूलमनण्वह्रस्वमदीर्घम्**" (बृ० ३ । ८ । ८) इत्यादिश्रुतिभिस्तस्य रूपाभावश्रवणात् ।

वक्ष्यति च स्वयमाचार्य्योऽपि **"अरूपवदेव हि तत् प्रधानत्वात्"** (वे० ३ । २ । १४) इति । **ऐश्वर्य्यमर्य्यादाश्रुतेश्च** । आदित्याक्षिपुरुषस्यैश्वर्य्यमर्य्यादा तावच्छ्रूयते—"स एष ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामानां च" इत्यादित्यान्तःपुरुषस्य, "स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च" इति चाक्ष्यन्तःपुरुषस्य । न चैवं भगवतो ब्रह्मण ऐश्वर्य्यमर्य्यादा युज्यते **"एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय"** (बृ० ४ । ४ । २२) इत्यादिश्रुत्या तस्य सर्वेश्वरताश्रुतेः । तस्मादादित्याक्ष्यन्तःपुरुषो जीवात्मैव कश्चिदिहोपास्यत्वेनाभिधीयते न ब्रह्मेति । एवं प्राप्त उच्यते—**"अन्तस्तद्धर्मोपदेशात्"** । "य एषोऽन्तरादित्ये, य एषोऽन्तरक्षिणि" इत्यभिहितस्तावदन्तःपुरुषो ब्रह्मैव प्रतिपत्तव्यो न जीवात्मा । यतोऽस्य ब्रह्मण एव धर्मा इहोपदिश्यन्ते । तद्यथा—"तस्योदिति नाम" इत्यादित्यान्तःपुरुषस्य नाम श्रावयित्वा "स एष सर्वेभ्यः पाप्मभ्य उदितः" इति सर्वपापोद्गमेन निर्वक्ति । तदेव च कृतनिर्वचनं नामाक्ष्यन्तःपुरुषस्याप्यतिदिशति—"यन्नाम तन्नाम" इति । न चैष सर्वपापोद्गमो धर्मः खलु ब्रह्मणोऽन्यस्य कस्यचिदुपपद्यते । ब्रह्मणस्तदुपपत्तौ च नास्ति कश्चित् प्रतिबन्धः । श्रूयतेऽपि च **"शुद्धमपापविद्धम्"** (यजु० ४०।८) **"एष आत्माऽपहतपाप्मा"** (छा० ८ । १ । ५) इति । **ननु** जीवात्मनोऽपि सर्वपापोद्गमः श्रूयते—**"य आत्माऽपहतपाप्मा"** (छा० ८ । ७ । १) इति । **सत्यं** श्रूयते तथापि तस्य पाप्मसम्बन्धोऽप्याकर्ण्यते **"यथाकारी यथाचारी तथा भवति । साधुकारी साधुर्भवति, पापकारी पापो भवति । पुण्यः पुण्येन कर्मणा भवति पापः पापेन"** (बृ० ४ । ४ । ५) इति । न चैवमस्ति भगवतो ब्रह्मणः कश्चित्पाप्मकर्मसम्बन्धश्रवणम् । अत एव च स्मर्यते दर्शनान्तरे—**"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः"** (यो० १ । २४)

इति । सर्वपाप्मोद्गमेन चात्र सर्वदा सर्वथा सर्वपाप्मसम्बन्धाभावो विवक्ष्यते । न च जीवात्मनः सर्वदा सर्वथा सर्वपाप्मसम्बन्धाभावो वक्तुं पार्य्यते । तस्य यावच्छरीरसम्बन्धो वर्तते तावत् पाप्मसम्बन्धस्यावर्जनात् । ब्रह्मणश्च न पाप्मसम्बन्धोऽभून्न भवति न भविष्यति । कदापि शरीरसम्बन्धाभावात् । यथा च तस्य कदापि शरीरसम्बन्धो न भवति तथा वयमग्रे यथावसरं विस्तरेण निरूपयितास्महे । तस्मात् सर्वपाप्मोद्गमधर्मेणात्रान्तःपुरुषो ब्रह्मैवाभिहितो न जीवात्मेति विज्ञायते । किञ्चाक्ष्यन्तःपुरुषं प्रकृत्याम्नायते–**सैव ऋक् तत्साम तदुक्थं तद्यजुस्तद् ब्रह्म**" (छा० १ । ७ । ५) इति । तत्र ऋग्वेदः ऋक्, सामवेदः साम. तदङ्गं शस्त्रमुक्थम्, यजुर्वेदो यजुः, अथर्ववेदो ब्रह्म । ऋगादिविधेयापेक्षो लिङ्गोपन्यासः । सामानाधिकरण्यं च प्रतिपाद्यप्रतिपादकभावाभिप्रायम् "**एतद्ध वै सत्यकाम ! परं चापरं च ब्रह्म यदोङ्कारः**" (प्रश्न० ५ । २) इतिवत् । कार्य्यकारणभावाभिप्रायं वा, लोके मृद्धट इतिवत् । न चैतदाम्नानं जीवात्मपरिग्रहे घटते । तत्र सामानाधिकरण्यस्योपपादयितुमशक्यत्वात् । ब्रह्मपरिग्रहे तु नास्ति काचिदनुपपत्तिः । "**ऋचो अक्षरे परमे व्योमन् यस्मिन्देवा अधि विश्वे निषेदुः**" ( ऋ० २ । ३ । २१ । ३९) "**सर्वे वेदा यत्पदमामनन्ति**" (कठ० २ । १०) "**तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत**" (ऋ० ८ । ४ । १८ । ९) "**कर्तारमीशं पुरुषं ब्रह्मयोनिम्**" (मु० ३ । १ । ३) "**शास्त्रयोनित्वात्**" (वे० १ । १ । ३) "**तद्वचनादाम्नायस्य प्रामाण्यम्**" (वै० १० । २ । १०) इत्यादिश्रुतिस्मृतिभिस्तस्य सिद्धतरत्वात् । अतोऽत्रान्तःपुरुषो ब्रह्मैव न जीवात्मेति युक्तं प्रतिप्रत्तुम् ।

पृथिव्यग्न्याद्यात्मके चाधिदैवतमृक्सामे वाक्प्राणाद्यात्मके चाध्यात्ममनुक्रम्याभिधत्ते—**तस्यर्क्साम च गेष्णौ**" (छा० ८ । ७ । १)

इत्यधिदैवतम्, तथाऽध्यात्ममपि "**यावमुष्य गेष्णौ तौ गेष्णौ**" इति। तदेतदभिधानमपि भगवतो ब्रह्मण एवोपपद्यते, न जीवात्मनः। नह्यल्पतमस्यास्येदृक्षाः पृथिव्यादयो महान्तः पदार्थाः कर्हिचित् क्षुद्रावयवौ गेष्णौ सम्भवतः। ब्रह्माण्डशरीरस्य भगवतो ब्रह्मणस्तु तदवयवत्वे नास्ति नाम कश्चिदसम्भवः। **किञ्च** "तस्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धनसनयः=धनभाजः" इति लौकिकेषु गानेष्वेतस्यैव गीयमानत्वं दर्शयन्ती श्रुतिः सुव्यक्तमिह ब्रह्मपरिग्रहमवगमयति। निरङ्कुशं सर्वलोककामेशितृत्वं चात्र ब्रह्मणो धर्मो विस्पष्टं व्यपदिश्यते, न जीवात्मनः। तस्य तदसम्भवात्। नहि निरङ्कुशं सर्वलोककामानामीशितोऽल्पज्ञोऽल्पशक्तिर्जीवात्मा कदाचित् सम्भवति। मर्यादावचनं चाध्यात्माधिदैवतविभागाभिप्रायं, नैश्वर्यपरिच्छेदाभिप्रायम्। स्वमहिमप्रतिष्ठितस्याधारविशेषोपन्यासश्चोपासनार्थो भविष्यति। सर्वगतत्वाद्भगवतो ब्रह्मणो व्योमवत् सर्वान्तरत्वोपपत्तेः। **यत्तूक्तं** हिरण्यश्मश्रुरित्यादिरूपश्रवणं तत्र नोपपद्यत इति। **अत्र** ब्रूमः। नेदं भगवतस्तस्य पारमार्थिकं रूपं श्राव्यते, किन्तर्हि? आलङ्कारिकम्। शैली ह्येषोपदेशकानां यत्ते भगवन्तः शिष्येभ्य उपदिशन्ति तत् सुखावबोधाय प्रायशोऽलङ्कारेणोपदिशन्ति। भूषणं खल्वलङ्कारो भाषाया भवति। यथा हि सौन्दर्यसौकुमार्यलावण्ययौवनसम्पन्नमपि प्रमदागात्रमलङ्कारेण हीनं न जातु शोभां विन्दते, तथा भाषाकामिनीतनुरप्यलङ्कारेण वर्जितं न जातु शोभां लभते। अत एव च भगवता जगदधिपतिना सर्गादौ मनुष्यमात्रोपचिकीर्षया यथानियमं प्रादुर्भावितेषु चतुर्षु वेदेषु बहुधाऽलङ्कार एव समाश्रीयते। दृश्यते च वेदोपनिषद्वत् क्वचिन्मानवधर्मशास्त्रेऽपि तत्समाश्रयणम् "**यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा। प्रजास्तत्र न मुह्यन्ति नेता चेत् साधु पश्यति**" (मनु० ७। २५) इति। यदा चेह पुरुषान्तरात्माऽसन्नपि दण्डः पुरुषाणां सुखप्रतिपत्त्यर्थं पुरुषरूपकेणोपन्यस्यते, तदा भगवतो ब्रह्मणोऽपि पुरुषरूपकेणोपदेशो न दुष्यति। तस्य पुरुषान्तरात्मत्वेन

सुतरां तथाविधोपदेशोपपत्तेः । तस्मादत्र ब्रह्मैवादित्याक्ष्णोरन्तरभिधीयते, न जीवात्मेति साधु निष्पन्नम् ॥ २० ॥

अथोच्येत रूपकेण चेदत्रोपवर्णनं मन्यते, तदाऽस्यैव दृश्यमानस्य सूर्य्यमण्डलस्योपवर्णनं मन्तव्यं न तावद् भगवतो ब्रह्मणः । **"य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते"** (छा० १ । ६ । ६) इति श्रूयमाणस्य दृशिधातुप्रयोगस्य तत्रानुपपत्तेः । यथा हि दृश्यमाने खल्वस्मिन् सूर्य्यमण्डले श्रूयमाणोऽयं दृशिधातुप्रयोगः सामञ्जस्येनोपपद्यते, न तथा भगवति ब्रह्मणि कथञ्चिदुपपत्तुमर्हति । नह्यादित्यमण्डलवद् भगवतस्तस्य कचिद्रूपं दर्शनगोचरतामापद्यते । **"न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्"** (कठ० ६ । ९) इति श्रुत्या च तस्य तद्गोचरता साक्षात् प्रतिषिध्यते । नच प्रतिषिद्धस्याश्रयणं युक्तं पश्यामः । **"स एष सर्वेभ्यः पाप्मभ्य उदितः"** (छा० १ । ६ । ७) इति श्रूयमाणः सर्वपाप्मोद्गमश्च तत्र ब्रह्मलोकद्वारत्वाद् घटते । द्वारिवद् द्वारस्यापि तथात्वोपपत्तेः । **"अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते । स ओमिति वा होद्वा मीयते । स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छति । एतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम्"** (छा० ८ । ६ । ५) इत्यादिश्रुत्या चादित्यस्य ब्रह्मलोकद्वारत्वं प्रसिद्धम् । कोऽयं ब्रह्मलोकः, कथञ्चैष उपासकः स्वकर्मफलभुक्त्यै तत्र गच्छतीति चाग्रे सविस्तरं निरूपयिष्यते । सर्वलोककामेशितृत्वं च तस्य सर्वलोककामानां तदधीनत्वात्, पृथिव्यादीनां तदवयवत्वं च सर्वलोकाधिपतित्वादुपपद्यतेतराम् । अक्षिपात्रे चैष समानश्चर्च इति । अस्योत्तरं पठति—

**"भेदव्यपदेशाच्चान्यः"** ॥ २१ ॥

अन्तरित्यनुवर्तते । चकारेण मुख्यवृत्त्या तद्धर्मानुपपत्तिं समुच्चिनोति । **भेदव्यपदेशात्**=भेदेन भेदतन्त्रेणाधाराधेयभावेन व्यपदेशात् कथनाद्, **अन्यः**=अक्ष्यादित्याभ्यामक्ष्यादित्यान्तःपुरुषोऽन्य इत्यर्थः ।

श्रुतिस्तावदक्ष्यादित्यमक्ष्यादित्यान्तःपुरुषं चाधाराधेयभावेन व्यपदिशति—"**य एषोऽन्तरादित्ये**" (छा० १।६।६) "**य एषोऽन्तरक्षिणि**" (छा० १।७।५) इति। न चाभिन्नस्यैकस्याधाराधेयभावेन व्यपदेशः सम्भवति। तस्य भेदतन्त्रतानियमात्। न ह्यक्ष्यादित्याभ्यामक्ष्यादित्यौ भिद्येते। दृशिधातुप्रयोगश्च ज्ञानसामान्याभिप्रायेणाक्ष्यादित्यान्तःपुरुषे प्रवर्तते, प्रतिषेधस्तु चक्षुरादिबहिरिन्द्रियजन्यज्ञानविशेषाभिप्रायेण। न च ज्ञानसामान्याभिप्रायेण तत्र तत्प्रयोगप्रवृत्तौ भवति किञ्चिदसामञ्जस्यम्। प्रतिषेधस्य विशेषविषयत्वेन विरोधाभावात्। विविदिषूणां शास्त्राभ्यासेन गुरूपदेशात् तद्गोचरतादृग्ज्ञानसम्भवाच्च। गौणमुख्ययोश्च सर्वत्र मुख्यस्य प्रथममुपस्थितत्वेनासति बाधके तद्ग्रहणमेव ज्यायो मन्यन्ते, न गौणग्रहणम्। न च सर्वपाप्मोद्गतत्वसर्वलोककामेशितृत्वादिकं ब्रह्मणोऽन्यत्र क्वचिन्मुख्यमुपपद्यते। तस्माद् ब्रह्मैवेहान्तःपुरुष उपदिश्यत इति सिद्धम्॥ २१॥

चिदचित्सर्वभूतान्तस्थं ब्रह्मेत्यभिहितम्। सम्प्रति तस्य व्यापकत्वमभिधातुकामोऽधिकरणान्तरमारचयन्नाह—

"**आकाशस्तल्लिङ्गात्**"॥ २२॥

ब्रह्मेत्यधिक्रियते। **आकाशः**=छान्दोग्यश्रुतौ श्रुत आकाशो ब्रह्मेत्यवगन्तव्यम्, कुतः? **तल्लिङ्गात्**=तदाऽधिक्रियमाणं ब्रह्म परामृशति, उद्बोधकलिङ्गकलापादित्यर्थः।

छान्दोग्योपनिषदि श्रूयते "**अस्य लोकस्य का गतिरिति? आकाश इति होवाच। सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति। आकाशो ह्येवैभ्यो ज्यायान्, आकाशः परायणम्**" (छा० १।९।१) इति। तत्र संशयः किमिहाकाशशब्देन भूताकाशमभिधीयत आहोस्विद् ब्रह्मेति। कुतः संशयः? उभयत्र प्रयोगदर्शनात्। यथाहि भूताकाशे तावदाकाशशब्दः प्रयुज्यते—"**पृथिव्यापस्तेजो-**

**वायुराकाशमिति भूतानि"** (न्या० १।१।१३) **"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः"** (तै० २।१) इति, तथा ब्रह्मण्यपि प्रयुज्यमानो दृश्यते—**"यदेष आकाश आनन्दो न स्यात्"** (तै० २।७) **"आकाशो वै नाम नामरूपयोर्निर्वहिता, ते यदन्तरा तद्ब्रह्म"** (छा० ८।१४।१) इति। उभयत्र प्रयोगोपलब्धेश्चेह संशयो युक्तः। तत्र भूताकाशमिति पूर्वः पक्षः, ब्रह्मेति सिद्धान्तः। किंतावत् प्राप्तम्? भूताकाशमिति वदामः। आकाशशब्दस्य तत्रैव प्रसिद्धत्वात्। यो हि शब्दो यस्मिन्नर्थे प्रसिध्यति, तस्मिन्नुच्चार्य्यमाणे स एवार्थः प्रथमं बुद्धिमारोहति, यथा गोशब्दोच्चारणे काचिद् सास्नादिमती व्यक्तिः, तिलकशब्दोच्चारणे च कश्चिन्महाराष्ट्रजनपदो बालगङ्गाधरतिलकः। आकाशशब्दोऽपि भूताकाशे तावत् प्रसिध्यतितराम्। को नु नामास्त्या पांसुलपादकहालिकादा च विद्वद्वरिष्ठाद् यः खलु श्रुतिपथमागतादाकाशशब्दाद् द्रागित्येव प्रथमं भूताकाशं न प्रतिपद्येत। यस्य च ततः प्रथमं प्रतिपत्तिस्तस्यैवेह ग्रहणं युक्तं, न पश्चात्सञ्जातप्रतिपत्तेः कस्य चिदर्थान्तरस्य। न चाकाशशब्दोऽयमुभयसाधारणोऽपि शक्यो विज्ञातुम्। अनेकार्थत्वप्रसङ्गात्। एकस्यानेकार्थत्वं च दोषः। नहि वृत्त्यन्तरेण निर्वाहे सम्भवति कश्चित् मुख्यया वृत्त्या शब्दानामनेकार्थत्वमास्थीयते। ब्रह्मणि चाकाशशब्दो विभुत्वादिभिर्धर्मैः प्रयोक्तुं शक्यते, यथा क्रौर्य्यादिभिर्धर्म्मैर्देवदत्ते सिंहशब्दः। तस्मात् तत्रैष गौणो न मुख्यः। न च मुख्यार्थग्रहणसम्भवे गौणोऽर्थः कर्हिचिद् ग्रहणमर्हति। सम्भवति चेह मुख्यस्यैव भूताकाशस्य ग्रहणम्। गौणमुख्ययोर्मुख्ये कार्य्यसम्प्रत्यय इति न्यायात्। **अथो**च्येताकाशशब्देन भूताकाशग्रहणे "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्ति। आकाशो ह्येभ्यः सर्वेभ्यो ज्यायानाकाशः परायणम्" (छा० १।९।१) इति वाक्यशेषो नोपपद्यत इति। **नैतद्वक्तव्यम्**। तस्य वाय्वादिक्रमेण सर्वभूतोत्पत्तिकारणत्वस्य तदपेक्षया ज्यायस्त्वपरायणत्वयोश्चोपपत्तेः। श्रूयते खलु **"तस्माद्वा

**एतस्मादात्मन आकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधिभ्योऽन्नम्, अन्नाद्रेतः, रेतसः पुरुषः"** (तै० २ । १ ) इति वाय्वादिक्रमेण सर्वभूतकारणं भूताकाशम् । यच्च यस्य कारणं तस्य तदपेक्षया ज्यायस्त्वं परायणत्वं चाप्युपपद्यतेतरामिति नास्ति वाक्यशेषानुपपत्तिः । तस्मादत्राकाशशब्देन भूताकाशस्यैवाभिधानं युक्तं न भगवतो ब्रह्मण इति । **एवं** प्राप्त उच्यते **"आकाशस्तल्लिङ्गात्"** । अत्र खल्वाकाशशब्देन ब्रह्माभिधीयते, न भूताकाशम् । वाक्यशेषे ब्रह्मबोधकलिङ्गकलापस्यैवोपन्यासात् । "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इत्यत्र वाक्यशेषे ह्याकाशस्य सर्वभूतोत्पत्तिकारणत्वं तावदुपन्यस्यते । तच्च ब्रह्मणो लिङ्गं न भूताकाशस्य । नहि भूताकाशं वाय्वादिक्रमेण सर्वभूतोत्पत्तिकारणं भवदपि स्वोत्पत्तिकारणं सम्भवति । स्वस्य स्वोत्पत्तिकारणत्वासिद्धेः । न चैवं तत्परिग्रहेऽपि सर्वाणीति विशेषणं तस्मादेवेत्यवधारणं च कथञ्चिदुपपद्यते । तस्य सर्वभूतकारणत्वाभावात् । ब्रह्म च सर्वभूतोत्पत्तिकारणं स्थितिकारणं प्रलयकारणं चेति सर्वतन्त्रसिद्धान्तः । यत्रेदमाम्नायते **"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद् ब्रह्म"** (तै० ३ । १ ) इति । तस्मादिह तस्यैव ग्रहणं युक्तं न भूताकाशस्य । "आकाशं प्रत्यस्तं यन्ति" इति च व्यक्तं ब्रह्मलिङ्गम् । ततोऽन्यत्र सर्वभूतलयासिद्धेः । "आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्" इति ज्यायस्त्वपरायणत्वे चापि ब्रह्मलिङ्गम् । भूताकाशे सापेक्षयोस्तयोः कथञ्चित् सम्भवेऽपि निरपेक्षयोस्तयोरसम्भवात् । नहि निरपेक्षं ज्यायस्त्वं परायणत्वं च ब्रह्मणोऽन्यत्र क्वचित् सम्भवति । निरपेक्षं च तदुभयमिह विवक्षितम् । तच्च श्रुतिर्ब्रह्मण्येवैकस्मिन् दर्शयति—**"ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः"** (छां० ३ । १४ । ३ ) इति ज्यायस्त्वम् । **विज्ञानमानन्दं ब्रह्म राते-**

**द्रोतुः परायणम्**" (बृ० ३ । ९ । २८) इति च परायणत्वम् । अपि च "**अन्तवत् किल ते शालावत्य ! साम**" (छा० १ । ८ । ८) इत्यन्तवत्त्वदोषेण शालावत्यस्य पक्षं निन्दित्वाऽनन्तं किञ्चिद्वक्तुकामेन जैवलिनाऽऽकाशः परिगृहीतः, तं चोद्गीथे सम्पाद्योपसंहरति—"**स एष परोवरीयानुद्गीथः स एषोऽनन्तः**" (छा० १ । ९ । २) इति । तच्चानन्त्यं ब्रह्मणो लिङ्गं न भूताकाशस्य । तस्यानन्त्याभावात् ।

यत्पुनरुक्तं भूताकाशं प्रसिद्धिवलात् प्रथमं बुद्धिपथमारोहति, तस्मादिह तस्यैव ग्रहणं युक्तमिति । तन्न चारु । प्रसिद्धेरुभयत्रापि समानत्वात् । यथा ह्याधिभौतिकविद्यायामाकाशशब्दो भूताकाशे प्रसिध्यति, तथाऽध्यात्मविद्यायां ब्रह्मण्यपि प्रसिध्यति । प्रादर्शि च तत्र तच्छब्दोऽधस्तात् "**यदेष आकाश आनन्दो न स्यात्**" (तै० २ । ७) "**आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म**" (छा० ८ । १४ । १) इति । यथा चायमाकाशशब्दो ब्रह्मणि प्रयुज्यते तथा तत्पर्य्यायवचनाः शब्दा अपि प्रयुज्यन्ते "**ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः**" (ऋ० २ । ३ । २१ । ३९) "**सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता**" (तै० ३ । ६) **ओं कं ब्रह्म खं ब्रह्म**" (छा० ४ । १० । ५) "**ओं खं ब्रह्म खं पुराणम्**" (बृ० ५ । १ । १) इति । न च तत्प्रयोगो ब्रह्मणि गौणो वर्तते भूताकाशे च मुख्यः किन्तु विधान्तरेण । स हि भगवति तस्मिन् मुख्यया शक्तिवृत्त्या प्रवर्तते भूताकाशे च तत्कल्पया निरूढलक्षणयेति न गौणमुख्यन्यायावतारप्रसङ्गः । अथोच्येत मा सैत्सीदेवमाकाशशब्दं खलु भूताकाशं, प्रकृतिः सेत्स्यति । तस्याः सर्वभूतोपादानत्वेन सर्वभूतकारणत्वोपपत्तेः । ब्रह्मभूताकाशयोरिव च तत्राप्याकाशशब्दप्रसिद्धेः "**स होवाच यदूर्ध्वं गार्गि ! दिवो यदवाक् पृथिव्याः, यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत**

**आकाश एव तदोतं च प्रोतं च**" (बृ० ३।८।७) "**विरजः पर आकाशादज आत्मा महान् ध्रुवः**" (बृ० ४।४।२०) इत्यादौ। **नैतद्वक्तव्यम्**। तत्रापि ज्यायस्त्वपरायणत्वयोरनुपपत्तेः। यथा हि भूताकाशे खल्वनापेक्षिके ज्यायस्त्वपरायणत्वे नोपपद्येते, तथा प्रकृतावपि नोपपद्येते। सा हि स्वरूपतः सती भवन्ती स्वसत्तार्थं ब्रह्मानपेक्षमाणाऽपि स्वावस्थित्यर्थमवश्यं ब्रह्मापेक्षते। तत्र तस्याः पारतन्त्र्यात्। यस्याश्च स्वावस्थित्यै नियमेन ब्रह्मापेक्षा विद्यते, न तयाऽनापेक्षिकं ज्यायस्त्वं परायणत्वं च कर्हिचिल्लब्धुमीश्यते। दर्शयति च स्वयमेव श्रुतिस्तस्यास्तदपेक्षत्वं गार्गीयाज्ञवल्क्ययोः प्रश्नोत्तराभ्याम्—"**कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति? ।७। स होवाचैतद्वै तदक्षरं गार्गि! ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशम्**" (बृ० ३।८।७-८) इति। न चैवं भगवता ब्रह्मणा कचित् किञ्चिदपेक्ष्यते। तस्मात् तदेवेहाकाशशब्दाभिधेयं न भूताकाशं, न वा प्रकृतिरिति सिद्धम्॥

केचित्त्वस्मिन्नधिकरणे "**यत्रैष एतत् सुप्तोऽभूद् य एष विज्ञानमयः पुरुषः। तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते**" (बृ० २।१।१७) इति बृहदारण्यकवाक्यमुदाहरन्ति। **तन्न** सम्यक् पश्यामः। दहरवाक्यविचारेणैव तद्विचारस्याप्युपपत्तेः। नहि दहराकाशाद्भिन्नं नाम हृदयाकाशं किञ्चिदस्ति, येनेह पृथगुदाह्रियेत। दहरवाक्यं च "**दहर उत्तरेभ्यः**" (वे० १।३।१४) इत्यत्र विचारयिष्यते। तत्रैव चैतद्वाक्यविचारणाऽपि सूचयिष्यते॥ २२॥

पूर्वसूत्रोदाहृतवाक्यसदृशमुत्तरं वाक्यमुदाहरिष्यन्नाह—

"**अत एव प्राणः**"॥ २३॥

ब्रह्मेत्यधिक्रियते। **अत एव**=तल्लिङ्गादेव, **प्राणः**=छान्दोग्यश्रुतौ श्रुतः प्राणो ब्रह्म वेदितव्य इत्यर्थः।

छान्दोग्ये **"प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता"** ( छा० १ । १० । ९ ) इत्युपक्रम्य श्रूयते—**"कतमा सा देवता ? इति । ४ । प्राण इति होवाच । सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते । सैषा देवता प्रस्तावमन्वायत्ता"** ( छा० १ । ११ । ४–५ ) इति । प्रस्तावं= साम्नो भक्तिविशेषः प्रस्तावस्तम्–अन्वायत्ता=अनुगताः, अभिसंविशन्ति= प्रलयवेलायां प्रविशन्ति, अभ्युज्जिहते=सर्गवेलायामुद्गच्छन्ति । तत्र संशयः किमिह श्रुतः प्राणो मुख्यः प्राणः स्यात्, आहोस्विद् ब्रह्मेति । कुतः संशयः ? **"एतस्माज्जायते प्राणः"** ( मुं० २ । १ । ३ ) **"स उ प्राणस्य प्राणः"** ( के० १ । २ ) इत्युभयत्र प्रयोगदर्शनात् । अत्र मुख्यः प्राण इति पूर्वः पक्षः । ब्रह्मेति सिद्धान्तः । किं तावत् प्राप्तम् ? मुख्यः प्राण इति वच्मः । प्रयोगप्रसिद्ध्या प्रथममुपस्थितत्वात् । लोके वा शास्त्रे वा यः खलु शब्दो यस्मिन्नर्थे प्रयोगप्रसिद्धिं भजते, श्रुतिपथमागतात् तस्मात् स एवार्थो नियमेन प्रथममुपतिष्ठते, यथा कम्बुग्रीवादिमानर्थो घटशब्दात् । नह्येष कम्बुग्रीवादिमति व्यक्तिविशेषे प्रसिद्धिं भजमानो यदा प्रयोक्तृभिः प्रयुज्यते तदा कर्णपथं प्राप्तेन तेन प्रतिपत्तृभिरुक्तोऽर्थो द्रागित्येव न प्रतिपद्यते । प्राणशब्दोऽपि लोकशास्त्रयोर्मुख्ये प्राणे तावत्प्रसिध्यति । लौकिकाः स्युः शास्त्रिणो वा भवेयुः सर्वे सर्वत्राविशेषेण मुख्यप्राण एव प्राणशब्दं प्रयुञ्जाना उपलभ्यन्ते । नहि तादृक्षः पुमान् कश्चिदीक्ष्यते येन तत्र तच्छब्दो न प्रयुज्यते । प्राणं मे पाहि भगवन्नित्यादिकं लोके, **" न वै तं चक्षुर्जहाति न प्राणो जरसः पुरा । पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते"** ( अथर्व० १० । १ । २ । ३ ) **"प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते, ब्रह्मचर्य्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते"** ( प्रश्न० १ । १३ ) **"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च"** ( मुं० २ । १ । ३ ) **"अन्नमयं हि सोम्य मनः आपोमयः प्राणः"** ( छा०

६।५।४) **"दशेमे पुरुषे प्राणा आत्मैकादशः"** (बृ० ३।९।४) **"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति"** (बृ० ४।४।२) इत्यादिकं च शास्त्रे तदुदाहरणमीक्षामहे । तदेतच्च तत्र तत्प्रसिद्धौ दृढं प्रमाणम् । तस्मादिह प्राणशब्देन मुख्यप्राणस्योपादानं युक्तम् । यस्य यत्र प्रसिद्धिस्तेन तदुपादानस्यैवौचित्यात् । **अथोच्येत**—वाक्यशेषे भूतानां संवेशनोद्गमनं ब्राह्मं लिङ्गमुपलभ्यते **"सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते"** (छा० १।११।५) इति । तस्मादिह ब्रह्मण एवोपादानं युक्तं न मुख्यप्राणस्येति पश्यामः । अन्यथा वाक्यशेषविरोधप्रसङ्गादिति । **नैतद्वक्तव्यम्** । तस्य मुख्यप्राणलिङ्गत्वस्याप्युपपत्तेः । एवं हि श्रूयते **"यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं मनः । स यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्ते"** (शत० १०।३।३।६) इति । प्रत्यक्षं चैतत् स्वापकाले प्राणवृत्तय एव केवलं प्रबुध्यन्त इन्द्रियवृत्तयश्च परिलुप्यन्ते प्रबोधवेलायां च पुनः प्रजायन्त इति । वागादीनि च तानि भूतानां सारभूतान्यभ्युपगम्यन्ते । तेषां मुख्यप्राणे संवेशनोद्गमने च भूतानामपि तत्र तदुपपद्यते । सारसंवेशनोद्गमने सारिसंवेशनोद्गमनस्यार्थिकत्वात् । अतोऽत्र मुख्यप्राणपरिग्रहेऽपि भूतसंवेशनोद्गमनवादिवाक्यशेषविरोधो न प्रसज्यते । **किञ्च** प्रस्तावदेवतायाः प्राणस्यानन्तरमुद्गीथपरिहारयोरादित्योऽन्नं च देवते निर्दिश्येते । ते चोभे न ब्रह्म, तत्सामान्यात् प्राणोऽपि न ब्रह्म भवितुमर्हति, किन्तु मुख्यः प्राण इति । **एवं** प्राप्त आह—**"अत एव प्राणः"** । इदमा तल्लिङ्गं परामृशति । तल्लिङ्गादेवात्र प्राणोऽपि ब्रह्मैव भवितुमर्हति, न मुख्यः प्राणः । यत् खलु वाक्यशेषे **"सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति, प्राणमभ्युज्जिहते"** (छा० १।११।५) इति सर्वभूतसंवेशनोद्गमनं लिङ्गमुपलभ्यते, तद् ब्रह्मण्येवोपपद्यते, न मुख्ये प्राणे । तत्र सर्वभूतसंवेशनोद्ग-

मनासम्भवात् । मुख्यप्राणे हि स्वापप्रबोधयोरिन्द्रियाणामेव कथञ्चित् संवेशनोद्गमनं सम्भवति, न सेन्द्रियाणां सशरीराणां च जीवात्माविष्टानां सर्वेषां भूतानाम् । नह्यसौ तेषामधिष्ठानकारणं विद्यते, येन तत्र तत् सम्भवेत् । इन्द्रियसारत्वात् तत्कल्पनं च न युक्तम् । मुख्ये सम्भवत्यमुख्यकल्पनस्यान्याय्यत्वात् । **अथ** भूतश्रुतिर्महाभूतविषयेति चेदुच्यते **तदापि** ब्रह्मलिङ्गत्वमविरुद्धं वेदितव्यम् । महाभूतसंवेशनोद्गमनस्यापि तत्रानुपपन्नत्वात् । इन्द्रियाणां तत्सारत्वानभ्युपगमाच्च । **अथोच्येत** शाखान्तरे तावत्सहाप्येतैर्विषयैरिन्द्रियाणां स्वापप्रबोधयोः प्राणाश्रयं संवेशनोद्गमनं श्रूयते **"यत्रैतत्पुरुषः सुप्तः स्वप्नं न कश्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभिः सहाप्येति"** (कौ० ३ । ३ ) इति । तस्माद् मुख्यप्राण एव प्राणशब्दो न ब्रह्मेति । **नैतद्वक्तव्यम् ।** तत्रापि तल्लिङ्गात् प्राणशब्दं ब्रह्मैवेति निर्धारणात् । यत्पुनरुक्तमुद्गीथपरिहारदेवतयोरन्नादित्ययोः सन्निधानात् प्रस्तावदेवतायाः प्राणस्याप्यब्रह्मत्वमिति । **तन्न युक्तम् ।** वाक्यशेषगतेन लिङ्गेन तस्य ब्रह्मतायां निर्धारितायां सन्निधानस्याकिञ्चित्करत्वात् । सन्निधानं हि स्थानम् । तच्च लिङ्गापेक्षया दुर्बलम् । यत्रेदं स्मर्य्यते **"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्"** ( मी० ३ । ३ । १४ ) इति । प्रबलदुर्बलयोश्च प्रबलाश्रयणं ज्यायो न दुर्बलाश्रयणमिति नान्नादित्ययोरिव प्राणोऽप्यब्रह्मेति निश्चेतव्यम् । यत्पुनरुक्तं प्रसिद्धिबलाद् ब्रह्मापेक्षया मुख्यप्राणो द्रुतं बुद्धिमारोहतीति । **तन्न** चारु । प्रसिद्धेर्मुख्यप्राणवद् ब्रह्मण्यपि समानत्वात् । यथा हि प्राणशब्दः खलु मुख्ये प्राणे प्रसिध्यति, तथा भगवति ब्रह्मण्यपि प्रसिध्यति **"प्राणाय नमो यस्य सर्वमिदं वशे । यो भूतः सर्वस्येश्वरो यस्मिन् सर्वं प्रतिष्ठितम्"** ( अथ० ११ । २ । ४ । १ ) **"यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम्"** ( कठ० ६ । २ ) **"प्राणो ह्येष यः सर्वभूतैर्विभाति"** ( मुं० ३ । १ । ४ ) **"प्राणबन्धनं हि सोम्य मनः"** ( छा०

६।८।२) मनः=जीवात्मा **"प्राणस्य प्राणम्"** (बृ० ४।४।१८) इति। सर्वेषां प्राणनहेतुत्वाद् ब्रह्म प्राण इति च श्रुतिभिः स्वयं प्रदर्श्यते **"यो मारयति प्राणयति यस्मात् प्राणन्ति भुवनानि विश्वा"** (अथर्व० १३।३।३।३) **"को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्"** (तै० २।७) इति। यथा चैष प्राणशब्दः प्रायेण तत्र प्रयुज्यते, तथा तत्पर्य्यायवचनाः शब्दा अपि प्रयुज्यन्ते **"यदङ्ग दाशुषे त्वमग्ने! भद्रं करिष्यसि। तवेत् तत्सत्यमङ्गिरः!"** (ऋ० १।१।२।६) दाशुषे=दानशीलाय, अङ्गिरः=प्राण!। **"य आत्मदा बलदा"** (ऋ० ८।७।३।२) आत्मदा=प्राणदा। **"समवर्त्ततासुरेकः"** (ऋ० ८।७।४।७) असुः=प्राण इति। तत्र तत्प्रवृत्तिश्च शक्त्याऽपरत्र च निरूढलक्षणयेति न गौणमुख्यन्यायावतारप्रसङ्गः। तस्मादत्र प्राणो ब्रह्मेति सिद्धम्॥ २३॥

व्यापकं ब्रह्मेति निर्णीतम्। सम्प्रति तस्य स्वयंज्योतिष्ट्वं निर्णेतुकामोऽधिकरणान्तरमारभमाण आह—

**"ज्योतिश्चरणाभिधानात्"** ॥ २४ ॥

ब्रह्मेत्यधिक्रियते। **ज्योतिः**=छान्दोग्ये श्रुतं ज्योतिर्ब्रह्म भवितुमर्हति। कुतः? **चरणाभिधानात्**=चरणं पादस्तदभिधायकत्वात्तदर्थत्वादित्यर्थः।

इदं श्रूयते छान्दोग्ये—**"यदतः परो दिवो ज्योतिर्दीप्यते विश्वतःपृष्ठेषु सर्वतःपृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद् यदिदमस्मिन्नन्तः पुरुषे ज्योतिः"** (छा० ३।१३।७) इति। तत्र संशयः किमेष ज्योतिःशब्दो ब्रह्मवचनः स्यादाहोस्विदादित्यादितेजोविशेषवचन इति। कुतः संशयः? उभयत्र प्रयोगदर्शनात्। यथा ह्यादित्यादितेजोविशेषे खलु ज्योतिःशब्दः प्रयुज्यमानो दृश्यते **"याज्ञवल्क्य! किंज्योतिरयं पुरुष इति? आदि-**

**स्यज्योतिः सम्राड् ! इति होवाच, आदित्येनैवायं ज्योतिषाऽऽस्ते"** ( बृ० ४ । ३ । २ ) **"खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी"** ( मुं० २ । १ । ३ ) इत्यादौ, तथा ब्रह्मण्यपि प्रयुज्यमान उपलभ्यते **"ध्रुवं ज्योतिर्निहितं दृशयेकं मनोजविष्ठं पतयत्स्वन्तः । विश्वेदेवाः समनसः सकेता एकं क्रतुमभिवियन्ति साधु"** ( ऋ० ४ । ५ । ११ । ५ ) **"एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते"** ( छा० ८ । १२ । ३ ) इत्यादौ । तेन युक्तः संशयः । अत्रादित्यादितेजोविशेषवचन इति पूर्वः पक्षः । ब्रह्मवचन इति सिद्धान्तः । किंतावत् प्राप्तम् ? आदित्यादितेजोविशेषवचन इति वदामः । कुतः ? **तल्लिङ्गोपलम्भात्** । यथा हि पूर्वत्र वाक्यशेषे प्राणाकाशशब्दयोर्ब्रह्मवचनत्वे खलु कानिचिल्लिङ्गान्युपलभ्यन्ते, तथेहापि ज्योतिःशब्दस्यादित्यादितेजोविशेषवचनत्वे तान्युपलभ्यन्ते । "दीप्यते" इति हि क्रियापदमिहोपादीयते । दीप्तिश्च ज्वलनापरपर्य्याया । सा च रूपादिमतः प्राकृतस्यादित्यादितेजोविशेषस्यैव धर्मः सम्भवति, न ब्रह्मणः । तस्य रूपादिहीनत्वात् । नहि रूपादिहीनं ब्रह्म कर्हिचिद् दीप्यत इति सङ्गच्छते । **मर्य्यादाश्रवणाच्च** । द्यौर्यस्य ज्योतिषो मर्य्यादा श्रूयते—**"यदतः परो दिवो ज्योतिः"** (छा०३ ।१३।७) इति । चेदिदं ज्योतिर्ब्रह्म भवेत् तदा नासौ तस्य मर्य्यादा श्रूयेत । परिच्छिन्नस्य हि मर्य्यादा क्रियते, नापरिच्छिन्नस्य । नहि सर्वगतं ब्रह्म कर्हिचिद्भवति परिच्छिन्नम् । **आधारश्रुतेश्च** । यथा हि खल्वस्य ज्योतिषो मर्य्यादा श्रूयते, तथाऽऽधारोऽपि श्रूयते—**"विश्वतःपृष्ठेषु सर्वतःपृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु"** ( छा० ३ । १३ । ७ ) इति । ब्रह्म चानाधारम् । न च तदाधारश्रवणं युज्यते । **कौक्षेयज्योतिषाऽभेदाम्नानाच्च** । अत्र हि दिवः परस्य ज्योतिषः कौक्षेयेण ज्योतिषाऽभेदमाम्नायते **"इदं वाव तद् यदिदमस्मिन्नन्तःपुरुषे ज्योतिः"** ( छा० ३ । १३ । ७ ) इति । कौक्षेयं ज्योतिस्तु **"तस्यैषा दृष्टिः**

। ७ । **यत्रैतदस्मिञ्छरीरे संस्पर्शेनोष्णिमानं विजानाति । तस्यैषा श्रुतिर्यत्रैतत् कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति**" (छा० ३ । १३ । ७—८) इति तदवबोधार्थमभिहिताभ्यां तद्दृष्टिश्रुतिभ्यामुदर्य्यं तेज इति गम्यते । नहि संस्पर्शेनोष्णिम्नो विज्ञानं कर्णेऽपिहिते श्रोत्राभ्यां घोषस्य श्रवणं चोदर्य्यात्तेजसोऽन्यत्र ब्रह्मणि कथञ्चिदवकल्पते । तस्माद्ब्रह्मत्वे च तदभिन्नस्य दिवः परस्य ज्योतिषोऽप्यब्रह्मत्वं युक्तमवलोकामहे । "**चक्षुष्यः श्रुतो भवति य एवं वेद**" (छा० ३ । १३ । ७) इति चाल्पफलश्रवणमपि तदब्रह्मत्वे व्यक्तं लिङ्गम् । महाफलं हि ब्रह्मोपासनं न जात्वल्पफलाय कल्पते । चक्षुष्यः=दर्शनीयः, श्रुतः=विश्रुतो विख्यातो भवतीति च नितान्तमल्पं फलम् । तच्च प्राकृतस्यादित्यादितेजोविशेषस्यैव घटते, न भगवतो ब्रह्मण इति स एवेह ज्योतिःशब्दो भवितुमर्हति, न ब्रह्मेति । एवं प्राप्त उच्यते "**ज्योतिश्चरणाभिधानात्**" । पूर्वत्र हि श्रुतिवाक्ये चतुष्पाद् ब्रह्माभिहितम् "**तावानस्य महिमा ततो ज्यायांश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि**" (छा० ३ । १२ । ६) इति । तत्राभिहितस्य चतुष्पदो ब्रह्मणः सर्वाणि भूतान्येकः पाद इत्यभिधाय यच्छिष्टं पादत्रयममृतं=भूतसंसर्गरहितमाम्नायते, तदेवेह ज्योतिःशब्देनाभिधीयत इति प्रतिपद्यते । **द्युसम्बन्धाविशेषात्** । उभयस्मिन् हि त्रिपाद्ब्रह्मणि ज्योतिषि च द्युसम्बन्धस्तावदविशिष्टो दृश्यते—"**त्रिपादस्यामृतं दिवि**" (छा० ३ । १२ । ६) "**यदतः परो दिवो ज्योतिः**" (छा० ३ । १३ । ७) इति । तत्सम्बन्धाविशेषे चोभाभ्यां तत्सम्बन्धिभ्यां ताभ्यामप्यविशेषेण भवितव्यमिति युज्यते । नहि यत्सम्बन्धित्वेनैकत्रैकं वस्तु निर्दिश्यते, तत्सम्बन्धित्वेनापरत्रापरमिति संश्लिष्यते । सर्वत्रानाश्वासप्रसङ्गात् । लोके हि सर्वो जनो व्यवस्थितां वाचं विश्वसिति । या च न व्यवतिष्ठते न तत्र मात्रयाऽपि विश्वासमापद्यते । अस्मान् ब्रह्म ग्राहयितुं प्रवृत्ता खलु श्रुतिवाक् चेदेकत्र द्युसम्बन्धि-

तथा त्रिपाद् ब्रह्म निर्दिश्यापरत्र सूर्यादि प्राकृतं तेजो निर्दिशति, तदा को नु नामानुन्मत्तः पुमानीदृक्षामव्यवस्थितवादिनीं तां विश्वसिष्यतीति भवतैवोत्तरयितव्यम्। द्युसम्बन्धप्रत्यभिज्ञाने च यच्चतुष्पदो ब्रह्मणस्त्रिपादमृतं द्युसम्बन्धिरूपं पूर्वं निर्दिष्टं तदेवेह द्युसम्बन्धाज्ज्योतिरिति निर्दिष्टमिति स्फुटं प्रत्यभिज्ञायते। **प्रकृतत्वाच्च**। ब्रह्म हि प्रकृतं तद् यथाऽस्मिन् ज्योतिर्वाक्ये तावदनुवर्तते, तथा परस्यामपि शाण्डिल्यविद्यायामनुवर्तिष्यते। तदेतत्सन्दंशपतितश्चैष ज्योतिःशब्दोऽपि ब्रह्मैवाभिधातुमर्हति न प्राकृतं सूर्य्यादितेजोविशेषम्। प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गात्। ज्योतिःशब्दस्य सूर्य्यादिप्राकृततेजोविशेषवचनत्वे हि प्रकृतं हीयतेऽप्रकृतकल्पनं च प्रसज्यते। न च सत्यां गतौ तद् युक्तम्। **यदः सामर्थ्याच्च**। प्रसिद्धार्थानुवादे हि सर्वनाम्नस्तावदौत्सर्गिकं सामर्थ्यमिति शास्त्रविद् आचक्षते। सर्वनामा चायं यच्छब्दः **"यदतः परो दिवो ज्योतिः"** (छा० ३।१३।७) इत्युपादीयते। तत्सामर्थ्याद् द्युमर्य्यादेनापि ज्योतिषा प्रसिद्धेनावश्यभवितव्यम्। न च प्रमाणान्तरतः कुतश्चित्तत् प्रसिध्यति। पूर्ववाक्ये चास्ति द्युसम्बन्धि त्रिपाद् ब्रह्म प्रसिद्धमिति प्रसिद्ध्यपेक्षायां तदेवेह सम्बन्धुमर्हति, न प्राकृतं सूर्य्यादि किञ्चिज्ज्योतिः। तस्माद् ब्रह्मवचन एवायं ज्योतिःशब्द इति प्रतिपत्तव्यम्।

यत्तूक्तं "दीप्यते" इति क्रियापदोपादानादादित्यादितेजोविशेषवचनो ज्योतिःशब्दो न ब्रह्मवचन इति। तन्न युक्तम्। दीपेः प्रकाशार्थत्वेन ब्रह्मणि प्रयोगसम्भवात्। दीप्तिर्हि प्रकाश इहाभिप्रेयते, न ज्वलनम्। प्रकाशश्च ब्रह्म चेतनत्वादिति तत्र तत्प्रयोगः सम्भवति, नास्ति काचिदनुपपत्तिः। एतेन ज्योतिःशब्दोऽपि ब्रह्मणि मुख्यो व्याख्यातो वेदितव्यः। प्रकाशवचनो हि ज्योतिःशब्दो यत्र स्वतः प्रवर्तते तत्र मुख्यो भवति, यत्र च परतस्तत्र गौणः। तत्स्वतःप्रवृत्तौ च निमित्तं चैतन्यम्। परतः प्रवृत्तौ च तद्विपरीतमचैतन्यम्। चैतन्यं प्रकाश इति चानर्थान्तरम्। तच्चास्माकं यथा विज्ञानात्मा तथा ब्रह्मेति तत्रैष मुख्यः प्रयुज्यते। ततोऽन्यत्र चादित्यादौ प्राकृते तेजोविशेषे सर्वत्र तत्प्रयुक्तत्वाद्गौणः।

अस्ति च तत्र ब्रह्मप्रकाशप्रयुक्त एव प्रकाशो न ब्रह्मवत् स्वरूपत इति सुव्यक्तमाम्नायते **"येन सूर्य्यस्तपति तेजसेद्धः, नावेदविन्मनुते तं बृहन्तम्"** (तै० ब्रा० ३ । १२ । ९ । ७) **"तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"** (कठ० २। ५ । १५) **"तच्छुभ्रं ज्योतिषां ज्योतिस्तद् यदात्मविदो विदुः"** (मुं० २ । २ । ९) **"एष उ एव भामनीः, एष हि सर्वेषु लोकेषु भाति"** (छा० ४ । १५ । ४) **"तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्"** (बृ० ४ । ४ । १६) इति । गौणमुख्ययोश्च मुख्यस्यैवोपादानं युक्तं न गौणस्य । तस्माद् ब्रह्मैवेह ज्योतिर्नादित्यादि प्राकृतं तेजः किञ्चिदिति निश्चेतव्यम् ।

**"यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति । दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु"** (यजु० ३४ । १) इत्यचेतने मनसि "ज्योतिषां ज्योतिः" इत्याम्नानं तु ज्योतींषि बाह्येन्द्रियाणि. तेषां ज्योतिर्मनो नायकत्वादित्यभिप्रायेणावगन्तव्यम् ।

यत्पुनरुक्तं द्युमर्य्यादात्वश्रुतेर्ज्योतिरादित्यादि प्राकृतं तेज उपपद्यते, न ब्रह्मेति । तन्न सम्यग् । अन्तर्बहिर्वर्तमानस्य भगवतस्तस्य तथोपदेशसम्भवात् । व्यापकं हि ब्रह्म । तद्यथाऽस्य सर्वस्यान्तर्वर्तते तथा बहिरपि वर्तते । यत्रेदमाम्नातं भवति **"तदेजति तन्नैजति तद्दूरे तद्वन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः"** (यजु० ४० । ५) **"एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च"** (कठ० ५ । ९) **"दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः"** (मुं० २ । १ । २) इति । यथास्यान्तर्बहिः सर्वत्र विद्यते तस्य सर्वान्तःपातिन्या दिवः परत्वेनाप्युपदेशः सम्भवति । नास्ति कश्चिद्विरोधः । एतेनाधारश्रवणमप्युपपादितं द्रष्टव्यम् । सर्वगतस्य तस्योत्तमानुत्तमसर्वलोकेषु वृत्त्यभिधाने दोषाभावात् । न च सर्वगं ब्रह्मो-

समानुत्तमसर्वलोकेष्वभिदधती श्रुतिर्दुष्यति । नहि याथातथ्याभिधानमपि कचिद्दोषाय कल्प्यते । यत्त्वभिहितं कौक्षेयज्योतिरभेदाभिधानादादित्यादिप्राकृततेजोविशेषवचनोऽयं ज्योतिःशब्दो न ब्रह्मवचन इति । तदपि न युक्तम् । कौक्षेयज्योतिषोऽपि ब्रह्मत्वेन तेन तदभेदाभिधाने दोषाभावात् । यदि हि कौक्षेयज्योतिर्ब्रह्म न भवेत् तदा तदभेदाभिधानं दिवः परस्य ज्योतिषोऽब्रह्मतां गमयेत् । भवति चैतदपि ब्रह्म । यत्रेदमाम्नातम् **"वि मे कर्णा पतयतो विचक्षुर्वीदं ज्योतिर्हृदय आहितं यत् । वि मे मनश्चरति दूर आधीः किंस्विद् वक्ष्यामि किमु नू मनिष्ये"** ( ऋ० ४ । ५ । ११ । ७ ) इति । हृदय आहितं ज्योतिः कौक्षेयज्योतिरिति च द्वयमेकार्थम् । न च ब्रह्मणः सतस्तस्य दिवः परेण तेनाभेदाभिधानं कर्हिचिद्दुष्यति । त्रीणि हि ब्रह्मण उपासनास्थानानि मुमुक्षूणां सौकर्य्याय शास्त्रेषु नियम्यन्ते, सूर्य्यमण्डलं चक्षुर्हृदयं चेति । तत्र मा नाम कश्चित् स्थानभेदात् स्थानिनस्तस्य भेदमवगमदिति तदभेदोऽभिधीयते **"स यश्चायं पुरुषे यश्चासावादित्ये स एकः"** ( तै० २ । ८ ) इत्यादिवत् । प्रदर्शितानि लिङ्गानि च कौक्षेयज्योतिषो ब्रह्मत्वेऽपि सम्यगुपपद्यन्ते । नहि योऽयमुष्णिमा संस्पर्शेन शरीरेऽस्मिन् विज्ञायते, घोषश्च कर्णौ पिधाय श्रोत्राभ्यामाकर्ण्यते तौ ब्रह्मणः सत्तामन्तरेण कथञ्चिदुपपत्तुमर्हतः । ब्रह्म हि सर्वस्यास्य प्राणनक्रियाहेतुत्वात् प्राणः **"यो मारयति प्राणयति यस्मात् प्राणन्ति भुवनानि विश्वा"** (अथर्व० १३ । ३ । ३ । ३) **"यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् ।"** ( कठ० ६ । २ ) **"को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्"** (तै० २ । ७) इत्यादिश्रुतिभ्यः । प्राणनक्रियानिमित्तश्च सर्व एव उष्णिमा घोषश्चेति ब्रह्मैव ताभ्यामनुमातुं शक्यते, नोदर्य्यं तेजः । न च **"चक्षुष्यः श्रुतो भवति य एवं वेद"** ( छा० ३ । १३ । ७ ) इत्यल्पफलश्रवणमपि कौक्षेयस्य ज्योतिषः उदर्य्यतेजस्त्वं तदभेदाद् दिवः परस्य ज्योतिषश्चाब्रह्मत्वं कर्हिचिद् गमयितुमर्हति । ब्रह्मोपासन-

स्यानेकविधत्वेनाल्पफलश्रवणस्याप्युपपत्तेः । यदि हि ब्रह्मोपासनमेकविधमेवाश्रीयेत, तदाऽवश्यमल्पफलश्रवणेन कौक्षेयस्य ज्योतिषो ब्रह्मत्वं बाध्येत । न च तदेकविधमेवाश्रीयते । अपि च? अनेकविधम् । गुणभेदात् कामभेदाच्च । निखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपतया सकलेतरविलक्षणे खलु भगवति ब्रह्मणि स्वाभाविकाः सीमातिशयविनिर्मुक्ताः असङ्ख्येयकल्याणगुणाः वर्तन्ते । **"यस्यामितानि वीर्य्या न राधः पर्य्येतवे । ज्योतिर्न विश्वमभ्यस्ति दक्षिणा"** (ऋ० ६ । २ । १९ । २१) इत्यादिमन्त्रवर्णात् । वीर्य्या=वीर्याणि शक्तयः गुणा इति यावत् । तत्र मनुष्याणां भेदेन तत्कामानामपि भेदाद् यो गुणो यस्मै पुण्यकर्मणे यथाकामं रोचते स तद्गुणसम्बन्धेन परमप्रेम्णा भगवद्ब्रह्मोपासीनस्तदनुरूपं फलं लभते । नहीयते फलाय ब्रह्मोपासितव्यमियते नेति कश्चिन्नियमहेतुरस्ति, येनासौ पुण्यकर्मा वैदिकाग्रणीर्यथाकामं तत्तद्गुणविशेषसम्बन्धेन ब्रह्मोपासीनस्तदनुरूपं फलं न लभेत । श्रुत्यन्तरेषु च तत्तद्गुणविशेषसम्बन्धेन ब्रह्मोपासीनस्य तदनुरूपं फलमुपसम्पद्यत इति स्पष्टमाम्नायते **"तत्प्रतिष्ठेत्युपासीत प्रतिष्ठावान् भवति । तन्मह इत्युपासीत महान् भवति"** (तै० ३ । १०) **"अतिष्ठाः सर्वेषां भूतानां मूर्धा राजेति वा अहमेतमुपास इति । स य एतमेवमुपास्ते, अतिष्ठाः सर्वेषां भूतानां मूर्धा राजा भवति"** (बृ० २ । १ । २) **"तेजस्वीति वा अहमेतमुपास इति । स य एतमेवमुपास्ते तेजस्वी ह भवति तेजस्विनी हास्य प्रजा भवति"** (बृ० २ । १ । ४) **"अन्नादो वसुदानो विन्दते वसु य एवं वेद"** (बृ० ४ । ४ । २४) इति । तथा भगवति वेदेऽपि तत्तद्गुणविशेषप्रार्थनाप्रकारोऽस्योपदिश्यमान उपलभ्यते **"बलं धेहि तनूषु नो बलमिन्द्रानडुत्सु नः । बलं तोकाय तनयाय जीवसे त्वं हि बलदा असि"** (ऋ० ३ । ३ । २२ । १८) **"तेजोऽसि तेजो मयि धेहि । वीर्य्यमसि वीर्य्यं मयि धेहि । बलमसि बलं मयि धेहि ।**

**ओजोऽस्योजो मयि धेहि। मन्युरसि मन्युं मयि धेहि। सहोऽसि सहो मयि धेहि"** (यजु० १९। ९) इति। यद्यद्गुणविशेषसम्बन्धाद् ब्रह्मोपास्यते, तत्तद्गुणविशेषप्राप्तिफलमुपासकस्य भवतीत्यनेन व्यक्तं प्रतिपद्यते। **तथा च** यस्तावद् दृष्टं श्रुतं च ब्रह्मेत्युपास्ते तस्य "चक्षुष्यः श्रुतो भवति" इति फलश्रवणमप्युपपद्यतेतराम्। उपासकस्योपासनानुरूपफलप्राप्तेरौचित्यात्। **"ये यथा मां प्रपद्यन्ते ताँस्तथैव भजाम्यहम्"** (गी० ४। ११) इति स्मृतेश्च। महाफलं कैवल्यं तु साक्षाद् ब्रह्मदर्शनाल्लभ्यत इति स्वयमेवाग्रे वक्ष्यते **"विद्यैव तु निर्धारणात्"** ( वे० ३। ३। ४७ ) इति। तस्मादिह ज्योतिर्ब्रह्म प्रतिपत्तव्यम्॥ २४॥

अत्राशङ्क्य समाधत्ते—

**"छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात् तथा हि दर्शनम्"** ॥ २५॥

ज्योतिरित्यनुवर्तते। ब्रह्मेति पूर्ववदधिक्रियते। **छन्दोऽभिधानात्**=पूर्वस्मिन् वाक्ये गायत्रीच्छन्दसोऽभिधानात् कथनात् **न**=अस्मिन्नुत्तरस्मिन् ज्योतिर्वाक्ये ज्योतिर्ब्रह्म प्रतिपत्तुमुचितं नेति **चेत्**=यद्युच्यते तदा **न**=न वक्तव्यम्, कुतः? **तथा**=यथोमा तथा गायत्र्या **चेतोऽर्पणनिगदात्**=तत्प्रतिपाद्ये ब्रह्मणि चेतसो मनसोऽर्पणस्य प्रवेशस्य निगदादभिधानात्। अत्रोपोद्बलकमाह—**तथा हि**=यथा चैतत् तथा हि **दर्शनं**=श्रौतं दर्शनमुपोद्बलयतीत्यर्थः।

आह—यदि हि ज्योतिर्वाक्यादस्मात् पूर्वस्मिन् श्रुतिवाक्ये चतुष्पाद् ब्रह्माभिधीयेत, तदाऽवश्यं वयमिह ज्योतिःशब्देन ब्रह्म प्रतिपद्येमहि। न च पूर्वस्मिन् श्रुतिवाक्ये चतुष्पाद् ब्रह्माभिधीयते, किन्तु गायत्र्याख्यं छन्दः। तथाहि **"गायत्री वा इदं सर्वं भूतं यदिदं किञ्च"** (छां० ३। १२। १) इति गायत्रीमुपक्रम्य तामेव वाग्-भूत-पृथिवी-शरीर-प्राण-हृदयैः षड्भिः प्रभेदैर्व्याख्याय **"सैषा चतुष्पदा षड्विधा**

**गायत्री**" (छा० ३।१२।५) इति चोपसंहृत्य "**तदेतदृचाभ्यनूक्तम्** "**तावानस्य महिमा ततो ज्यायाँश्च पूरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि**" (छा० ३। १२।५–६) इति तस्यामेव व्याख्यातरूपायामुपसंहृतायां च गायत्र्यामृङ्मन्त्र उदाहियते। न च तत्रोदाहृतोऽयं मन्त्रोऽकस्माद् ब्रह्म चतुष्पादभिधातुमर्हति। यदुदाहरणं यत्र, तेन तदभिधानस्यैवौचित्यात्। नहि चतुष्पदां गायत्रीमभिधातुमुदाहृतो मन्त्रोऽकस्माद् ब्रह्म चतुष्पादभिदधानः "आम्रान् पृष्टः कोविदारानाचष्टे" इति न्यायं नानुहरति। "**यद् वै तद् ब्रह्म**" (छां० ३।१२।७) इति ब्रह्मशब्दश्च गायत्रीगोचर एवेह प्रयुज्यते, प्रकृतत्वात्, नाप्रकृतब्रह्मगोचर इति शक्यते वक्तुं, यथा "**य एतां ब्रह्मोपनिषदं वेद**" (छां० ३।१२। ३) इत्यत्र वेदगोचरो ब्रह्मशब्दः। तदेवं पूर्वत्र गायत्रीच्छन्दसोऽभिधानादिह ज्योतिर्वाक्येऽपि तदभिधानमेव युक्तं न ब्रह्माभिधानम्। अप्रकृतपरामर्शप्रसङ्गादिति। **नैतत् साधीयः**। तत्र तदभिधानानुपपत्तेः। पूर्वस्मिन् श्रुतिवाक्ये हि "**गायत्री वा इदं सर्वं भूतं यदिदं किञ्च**" (छां० ३।१२।१) इति गायत्र्याः खलु सर्वभूतात्मकत्वमभिधीयते। चेदिह गायत्र्या गायत्रीच्छन्दोऽभिप्रेयेत तदा न तस्य सर्वभूतात्मकत्वमभिधीयेत। तद्ध्यक्षराणां सन्निवेशमात्रम्। न च तथाभूतस्य तस्य मुख्यतः सर्वभूतात्मकत्वं कथञ्चिदुपपद्यते। नहि परिच्छिन्नं किञ्चित् कचित् सर्वभूतात्मकं सम्भवति। ब्रह्माभिप्रायेणाभिधाने च नायं दोषः प्रसरति। ब्रह्मणोऽधिष्ठानकारणत्वेन सर्वभूतात्मकत्वाभिधानोपपत्तेः। "गायति च त्रायते च" इति गानेन त्राणकर्तृत्वमपि ब्रह्मण्येव सङ्गच्छतीति, न गायत्र्याम्। तस्य चेतनधर्म्मत्वात्। चेतनं च ब्रह्म, न गायत्री। "यद्वै तद् ब्रह्म" इति प्रयुज्यमानो ब्रह्मशब्दोऽपि गायत्र्या ब्रह्मपरिग्रहे मुख्य उपपद्यते, न गायत्रीच्छन्दःपरिग्रहे। तत्र तस्य लक्षणाश्रयणापत्तेः। लक्षणा च जघन्या। न च सा सत्यां मुख्यवृत्तौ कर्हिचिदाश्रयितुं शक्यते। तस्माद्ब्रह्माभिधानमेव पूर्वत्रोपपद्यतेतरां, न गायत्रीच्छन्दोऽभिधानम्।

किमर्थं तर्हि गायत्र्योपदिश्यते ब्रह्म "गायत्री वा इदं सर्वं भूतं यदिदं किञ्च" ( छां० ३।१२।१ ) इति? तत्प्रतिपाद्ये ब्रह्मणि मनःप्रवेशार्थमिति ब्रूमः। शैली ह्येषा खलु महर्षीणामुपनिषत्कृताम्—यथा ते साक्षाद् ब्रह्मोपदिशन्ति, तथा प्रतिपाद्यप्रतिपादकयोरभेदमाश्रित्य तत्प्रतिपादकशब्देनापि कदाचिदनुशासति। सूक्ष्मतमं हि ब्रह्म। न तत्र तावन्मनः प्रवेशं लभते, यावत् पौनःपुन्येन न भाव्यते। न च पौनःपुन्येन भावनं तस्य प्रतिपादकशब्दमन्तरा कुतश्चिदुपायान्तरात् सम्भवति। स हि तत्रासाधारणं निमित्तम्। यथा खलु शाकटे सूत्रप्रवेशे सूची लक्ष्ये वा शरप्रवेशे धनुर्निमित्ततां भजते, तथा ब्रह्मणि मनःप्रवेशे तत्प्रतिपादकशब्दोऽपि हेतुतां लभते। नहि प्रतिपादकं शब्दमनभ्यस्य कश्चित् प्रतिपाद्यमर्थं प्रणिधातुमर्हति। स्मर्य्यते चात एव दर्शनान्तरे "**तज्जपस्तदर्थभावनम्**" (यो० १। २८) इति। तत्प्रतिपादकशब्दानां च मुख्यः "**ओम्**" इति शब्दः। यत्रेदमाम्नायते "**ओम्! प्रतिष्ठ**" (यजु० २। १३) "**ओम् क्रतो! स्मर**" ( यजु० ४०। १५ ) इति। तथा योगेऽप्यधीयते "**तस्य वाचकः प्रणवः**" (यो० १। २७) इति। ब्रह्मणि मनःप्रवेशे च धनुःस्थानीयत्वमस्य मुण्डकोपनिषदि व्यक्तमाकर्ण्यते "**धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्धयीत। आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं ब्रह्म विद्धि। ३। प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते। अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्**" (मुं० २। २। ३–४) इति। आत्मा=मनः। यथा चैष "ओम्" इति शब्दो भगवतो ब्रह्मणः प्रतिपादकः समाश्रीयते, तथा गायत्रीच्छन्दोऽपि समाद्रियते। तद्धि तथैव ब्रह्म प्रतिपादयति, यथा "ओम्" इति शब्दः। तस्मादन्यत्रोमेवात्र तत्रभवतामुपासकानां मनःप्रवेशाय गायत्र्या ब्रह्मोपदिश्यते। प्रतिपादके प्रतिपाद्यगुणोपन्यासश्च तदुभयाभेदाभिप्रायो मनःप्रवेशप्रयोजन इत्यनन्तरमेवासूसुचाम। उपोद्बलयति च श्रौतं दर्शनं स्वयमेतत् "**सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च**

**यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्**" (कठ० २।१५) "**ओमित्येतदक्षरमिदं सर्वम्, तस्योपव्याख्यानं भूतं भवद् भविष्यदिति सर्वमोङ्कार एव**" (मां० १) "**ओमिति ब्रह्म। ओमितीदं सर्वम्**" (तै० १।८) "**तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णानि एवमोङ्कारेण सर्वा वाक् सन्तृण्णा। ओङ्कार एवेदं सर्वम्। ओङ्कार एवेदं सर्वम्**" (छां० २।२३।३) इति। तस्माद्विज्ञायतेऽस्ति तावत् पूर्वस्मिन् श्रुतिवाक्ये ब्रह्माभिधानं, न जातु गायत्रीच्छन्दोऽभिधानमिति निष्प्रत्यूहम्। तथा चोत्तरस्मिन् तस्मिन् तत्परामर्शोपपत्तेर्ज्योतिरिति ब्रह्मप्रतिपत्तिर्युज्यते, नास्ति कश्चिद्विरोधः॥

**केचित्तु** सादृश्यप्रयुक्तो ब्रह्मणि गायत्रीशब्दः प्रवर्तत इति व्याचक्षते। सादृश्यं च संख्यासामान्यनिबन्धनम्। अस्ति यथा गायत्री चतुष्पदा तथा ब्रह्मापि चतुष्पात्। संख्यासामान्यात्सादृश्याचान्यत्रापि छन्दोऽभिधायी शब्दोऽर्थान्तरे प्रयुज्यमानो दृश्यते। तद्यथा "**ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतम्**" (छां० ४।३।८) इत्युपक्रम्योच्यते "**सैषा विराडन्नादी**" (छां० ४।३।८) इति। अस्मिन् पक्षेऽपि ब्रह्मैवाभिहितमिति न छन्दोऽभिधानम्। सर्वथाऽप्यस्ति पूर्वस्मिन् श्रुतिवाक्ये प्रकृतं ब्रह्मेत्युत्तरत्र ज्योतिर्वाक्ये तत्परामर्शो घटते॥ २५॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"भूतादिपादव्यपदेशोपपत्तेश्चैवम्"** ॥ २६॥

पूर्वत्रैव हेत्वन्तरमेतदिति चकारार्थः। **भूतादिपादव्यपदेशोपपत्तेः**=ब्रह्मण्येव भूतपृथिवीशरीरहृदयलक्षणपादचतुष्टयव्यपदेशस्योपपत्तेः. **एवम्**=पूर्वत्र गायत्र्या ब्रह्मोपदिश्यत इत्यभ्युपगन्तव्यमित्यर्थः।

"**गायत्री वा इदं सर्वं भूतं यदिदं किञ्च**" (छां० ३।

१२ । १) इति गायत्रीमुपक्रम्य भूतपृथिवीशरीरहृदयानि च व्यपदिश्योपसंह्रियते **"सैषा चतुष्पदा षड्विधा गायत्री"** (छां० ३ । १२ । ५) इति । चेदिह गायत्रीशब्देन गायत्रीच्छन्दः परिगृह्येत तदा नैते व्यपदिश्यमाना भूतादयश्चत्वारः पादास्तस्योपपद्येरन् । अक्षराणां सन्निवेशमात्रं हि तत् । न च तथाभूतस्य तस्य भूतादयः पादाः कथञ्चिदुपपद्यन्ते । न च छन्दःपरिग्रहे "तावानस्य महिमा" इति मन्त्रोऽप्युदाहर्तुं शक्यते । संहितायां तस्य ब्रह्मपरत्वेनाम्नानात् । ऋग्वेदे ह्येष मन्त्रो ब्रह्मपरस्तावदाम्नायते, न गायत्रीच्छन्दःपरः । तत्र चास्यैवं पाठः **"एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि"** (ऋ० ८ । ४ । १७ । ३) इति । यश्च यत्परो नाम्नायते न च सोऽन्यत्र तत्परः कर्हिचिदुदाहर्तुं पार्य्यते । नह्युन्मत्तोऽपि कश्चिदन्यपरं मन्त्रमन्यपरमुदाहर्तुमुत्सहते, किं पुनरुपनिषत्कृतो वैदिका महर्षयः । न च कथञ्चित्तत्सामञ्जस्ये कल्प्यमानेऽपि "अतो ज्यायाँश्च पूरुषः" इति पुरुषश्रुतिः कदापि सामञ्जस्यमालिङ्गयते । गायत्र्याः पुरुषशब्देनाभिधानासम्भवात् । ब्रह्मपरिग्रहे च नायं कश्चिद्दोषः । तस्य सर्वभूताधिष्ठानकारणत्वेन भूतादिपादचतुष्टयव्यपदेशोपपत्तेः । पुरुषशब्दो ब्रह्मवचन इति तु प्रव्यक्तमेव शास्त्रतत्त्वविदामाचार्य्याणां न किञ्चिद्वक्तव्यमपेक्षते । **"तदेतत्पूर्णमप्रवर्ति । पूर्णामप्रवर्त्तिनीं श्रियं लभते य एवं वेद"** (छां० ३ । १२ । ९) इति श्रुतिरपि छन्दःपरिग्रहे न सङ्गच्छते । नह्यक्षरसन्निवेशमात्रस्य छन्दसः पूर्णत्वमपरिवर्तनशीलश्रीफलकत्वं च कथञ्चित्सम्भवति । ब्रह्म च व्यापकत्वादस्ति पूर्णम् **"स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः । नैनेन किञ्चनानावृतं नैनेन किञ्चनासांवृतम्"** (बृ० २ । ५ । १८) **"पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते"** (बृ० ५ । २ । १ ) इत्यादिश्रुतिसद्भावात् । कूटस्थनित्यत्वाच्चाप्रवर्ति **"अस्थूलमनण्वह्रस्वमदीर्घम्"** (बृ० ३ । ८ । ८) **"स न साधुना कर्मणा**

**भूयान् नो एवासाधुना कनीयान्"** (बृ० ४ । ४ । २२) इत्यादिश्रुतिजातात् । पूर्णस्याप्रवर्त्तिनश्च तस्य पूर्णाऽप्रवर्त्तिनी च श्रीः फलमुपपद्यते । धनधान्यादिसम्पत्तिः=श्रीः । न च गायत्र्या छन्दःपरिग्रहे **"तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः"** (छां० ३ । १३ । १) देवसुषयः=देवैः प्राणादिभिरधिष्ठिताः सुषयः प्रागादिदिग्गताश्छिद्रविशेषाः" इत्युपक्रम्य **"ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः"** (छां० ३ । १३ । ६) इति प्राणव्यानापानसमानोदानानां पञ्चानां ब्रह्मपुरुषत्वं तल्लोकस्य स्वर्गस्य पूर्वादिदिग्गतेषु द्वारलक्षणेषु पञ्चसु छिद्रेष्ववस्थानाद् द्वारपालत्वं च श्रावयन्ती श्रुतिरपि सङ्गच्छते । नहि प्राणादयो ब्रह्मपुरुषाः सन्तश्छन्दःपुरुषाः कर्हिचित् सम्भवन्ति । ब्रह्मशब्दस्य छन्दःपरत्वे च लक्षणाप्रसङ्गात् । हृदयं चक्ष्यादित्यवदुपलब्धिस्थानत्वाद् भगवतो ब्रह्मणः स्थानम् । यत्रेदमाम्नायते **"स वा एष महानज आत्मा, योऽयं विज्ञानमयः प्राणेषु, य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते"** (बृ० ४ । ४ । २२) इति । स्मर्य्यतेऽपि च **"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया"** (गी० १८ । ६१) इति । यस्य च यत्स्थानं तद्द्वारेष्ववस्थिताः प्राणादयोऽपि तस्यैव पुरुषा द्वाररक्षकाश्चोपपद्यन्ते, न ततोऽन्यस्य गायत्रीच्छन्दसः । तस्मादस्ति पूर्वस्मिन् श्रुतिवाक्ये गायत्र्याख्यं ब्रह्म प्रकृतं तदेव चोत्तरत्र ज्योतिर्वाक्ये द्युसम्बन्धात् प्रत्यभिज्ञायमानं परामृश्यत इति युक्तमवधारयामः ॥ २६ ॥

अत्राशङ्क्य समाधत्ते—

**"उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्"** ॥२७॥

ब्रह्मेत्यधिक्रियते । ज्योतिरित्यनुवर्तते । **उपदेशभेदात्**=उपदेशयोः पूर्वोत्तरोपदेशवाक्ययोर्भेदात् अर्थभेदात् परस्परविरुद्धार्थकत्वात, **न**=उत्तरवाक्ये ज्योतिर्ब्रह्म न, **इति चेत्**= यद्युच्यते तदा, **न**=न वक्त-

व्यम्, कुतः ? **उभयस्मिन्नपि**=वाक्यद्वयेऽपि, **अविरोधात्**=अर्थविरोधाभावात् अर्थभेदाभावादिति यावदित्यर्थः ।

अथाह—"गायत्री वा इदं सर्वम्" इत्युपक्रम्योदाहृते मन्त्रवाक्ये हि "त्रिपादस्यामृतं दिवि" इति सप्तम्या द्यौराधारत्वेनोपदिश्यते । अस्मिन् ज्योतिर्वाक्ये च "यदतः परो दिवः" इति पञ्चम्या मर्य्यादात्वेनानुशिष्यते । ते चाधारमर्य्यादे परस्परमत्यन्तं भिद्येते । अन्यो ह्याधारो भवति मर्य्यादा चान्या । तयोर्भेदे चोभयोर्वाक्ययोरर्थभेदोऽपि बलादासज्यते । पूर्वस्य हि दिवि त्रिपाद् ब्रह्म वर्तते इत्यर्थः सम्पद्यते । ततोऽन्यस्योत्तरस्य च दिवः परमित्यर्थः । तत्र पूर्वत्र दिवि तस्य व्याप्तिरवगम्यते, अपरत्र च दिवो बहिरिति विशेषः । तथा च द्युसम्बन्धाविशेषेऽपि पूर्वस्मिन् निर्दिष्टस्य त्रिपाद्ब्रह्मण उत्तरस्मिन्नस्मिन् ज्योतिर्वाक्ये न प्रत्यभिज्ञानं सम्भवतीति निश्चीयते । तस्मान्नात्र ज्योतिर्ब्रह्मेति । **नैतद्**युक्तं भाषणम् । उभयोरप्यर्थभेदाभावात् । व्यापकं हि ब्रह्म । तदा भूमेरा च दिवः सर्वस्यास्यान्तर्बहिर्वर्तते "**तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः**" (यजु० ४० । ५) इति मन्त्रवर्णात् । सर्वस्यान्तर्बहिर्वर्तमानस्य च तस्य यथा "दिवि" इत्युपदेशः सम्भवति, तथा "दिवः परम्" इत्यप्युपदेशो युज्यते, घटे वर्तमानमाकाशं घटात्परं वर्तत इतिवत् । एवं च तदाधारमर्य्यादात्वेन दिवोऽभिधानमपि न विरुध्यते । अन्तर्वृत्त्यपेक्षयाऽऽधारत्वेन बहिर्वृत्त्यपेक्षया च मर्य्यादात्वेन तदभिधानसम्भवात् । सम्भवति चैतस्मिन् पूर्वोत्तरवाक्ययोरर्थभेदोऽपि न प्रसज्यते । तथा च पूर्वत्र निर्दिष्टस्योत्तरत्र प्रत्यभिज्ञानमप्युपपद्यते । द्युसम्बन्धाविशेषात् । अतो ज्योतिश्चरणाभिधानाद् ब्रह्मेति निर्बाधम् ॥ २७ ॥

**स्वयं**ज्योतिष्ट्वं ब्रह्मणो निर्णीतम् । सम्प्रति तस्य सर्वत्र प्राणनक्रियाहेतुत्वात् प्राणात्मत्वं निरूपयिष्यन्नधिकरणान्तरमारचयति—

**"प्राणस्तथाऽनुगमात्"** ॥ २८ ॥

ब्रह्मेत्यधिक्रियते। **तथा**=यथा ज्योतिश्चरणाभिधानाद् ब्रह्म प्रतिपद्यते, तथा **प्राणः**=कौषीतकिब्राह्मणोपनिषदि श्रूयमाणः प्राणोऽपि ब्रह्म प्रतिपत्तव्यः, कुतः? **अनुगमात्**=ब्रह्मधर्मसम्बन्धादित्यर्थः।

कौषीतकिब्राह्मणोपनिषदि हि **"प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च"** (कौ० ३। १) इत्यारभ्याम्नातायामिन्द्रप्रतर्दनाख्यायिकायामिन्द्रस्य प्रतर्दनं प्रत्युपदेशस्तावच्छ्रूयते **"स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व"** (कौ० ३। ३) इति। तत्र संशयः किमिह प्राणशब्देन मुख्यः प्राणोऽभिधीयतेऽथवा ब्रह्मेति। कुतः संशयः? उभयत्र प्रयोगदर्शनादिति ब्रूमः। यथा हि मुख्ये प्राणे खलु प्राणशब्दः प्रयुज्यमान उपलभ्यते **"तान् वरिष्ठः प्राण उवाच"** (प्र० २। ३) **"य एवायं मुख्यः प्राणः"** (छां० १। ५। ३) इति, तथा ब्रह्मण्यपि प्रयुज्यमानो दृश्यते **"प्राणाय नमो यस्य सर्वमिदं वशे"** (अथर्व० ११। २। ४। १) **"यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतम्"** (कठ० ६। २) इति। उभयत्र प्रयोगोपलब्धेश्चोपपन्नः संशयः। अथोच्येत—**"अत एव प्राणः"** (वे० १। १। २३) इत्यत्र प्राणशब्दो ब्रह्मवचन इति निर्णीतत्वान्नेह पुनः संशय उपपद्यत इति। **नैतद्वक्तव्यम्**। विरुद्धनानालिङ्गोपलम्भात् संशयोपपत्तेः। न केवलमिह पूर्ववद् ब्रह्मलिङ्गमेवैकमुपलभ्यते, येन संशयानुपपत्तौ पूर्वेणैवास्य गतार्थत्वमाशङ्क्येत, किन्तर्हि? ब्रह्मलिङ्गमिव जीवलिङ्गं मुख्यप्राणलिङ्गं चाप्युपलभ्यते **"मामेव विजानीहि"** (कौ० ३। १) **"अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति"** (कौ० ३। ३) इत्यादि। विरुद्धनानालिङ्गोपलम्भेषु च सत्सु न तावदर्थो निश्चेतुं पार्य्यते, यावत् तेषां कतमल्लिङ्गं, लिङ्गाभासश्च कतम इति न विचार्य्यते। न च विचारोऽयं पूर्वत्र प्रावर्तिष्ट। तस्माद् युज्यतेऽत्र पुनः संशयः। **तत्र** मुख्यप्राण इति पूर्वः पक्षः।

ब्रह्मेति सिद्धान्तः । **किं** तावत्प्राप्तम्? मुख्यप्राण इति वदामः । कुतः? लोकप्रसिद्धेः । लौकिका हि प्राणशब्दं प्रायेण मुख्यप्राणे प्रयुञ्जते "मम प्राणः कष्टं वहति स्वस्थं वहति" इति । यथा च लौकिकास्तथैव परीक्षकाः । नहि ते लौकिकीं प्रसिद्धिमुलङ्घ्य कदाचिद् वर्त्तितुमुत्सहन्ते । अन्यथा प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येरन् । अतो विज्ञायते नूनमत्र प्राणो मुख्यप्राण इति । **एवं** प्राप्तेऽभिधीयते-- **"प्राणस्तथाऽनुगमात्"** । सत्यमस्ति तथा लोकप्रसिद्धिः । तथापि नासौ शास्त्रीयप्रसिद्धिं विरुणद्धि । तन्मूलकत्वात् । शास्त्रे च यथा प्राणशब्दो मुख्यप्राणे प्रयुज्यमान ईक्ष्यते, तथा ब्रह्मण्यपि प्रयुज्यमानो निरीक्ष्यते । किमिह युक्तमाश्रयितुमित्येतदधुना विचारणीयम् । उपक्रमे तावद् "वरं वृणीष्व" इतीन्द्रेणोक्तः प्रतर्दनो हिततमं वरमुपचिक्षेप **"त्वमेव मे वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे"** (कौ० ३ । १) इति । तस्मै चेन्द्रः **"प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व"** (कौ० ३ । २) इति हिततमत्वेनोपास्यं प्राणमुपदिदेश । न च तेनोपदिश्यमानोऽयमुपास्यः प्राणो ब्रह्मणोऽन्यः कश्चित् सम्भवति । तत्र हिततमत्वाननुगमात् । हिततमत्वं हि ब्रह्मानुगन्तुमर्हति, न जातु मुख्यं प्राणम् । नह्येनं वेदतत्त्वाभिज्ञाः कर्हिचिद्धिततमं मन्वते । ते हि तमेव हिततमं ब्रुवते, येन खलु तत्त्वतो ज्ञातेन सर्वं दुःखं समूलघातमुपहन्यते, सुखं च निरतिशयं समवाप्यते । न च समूलं सर्वदुःखनिवृत्तिर्निरतिशयसुखावाप्तिश्च ब्रह्मज्ञानतोऽन्यत्र क्वचिदुपपद्यते । **"य इत्तद्विदुस्तेऽमृतत्वमानशुः"** (ऋ० २ । ३ । १८ । २३) **"तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय"** (यजु० ३१ । १८) **"तमेव विद्वान् न बिभाय मृत्योः"** (अथर्व० १० । ५ । ८ । ४४) **"आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचन"** (तै० २ । ४) **"ज्ञानान्मुक्तिः"** (सां० ३ । २३) **"सम्यग्दर्शनसम्पन्नः"** (मनु० ६ । ७४) इत्यादिश्रुतिस्मृतिभ्यस्तयोरेव ब्रह्मज्ञानैकफलत्वनिर्धारणात् । न च हिततमत्ववत् प्रज्ञात्मत्वमपि मुख्यं प्राणमनुग-

च्छति । अचेतनत्वात् । ज्ञानवचनो ह्यत्र प्रज्ञाशब्दः । आत्मा च स्वरूपम् । नह्यचेतनस्य मुख्यप्राणस्य स्वरूपं ज्ञानमिति सम्भवति । ब्रह्मणि तदनुगमे च नास्ति काचिदनुपपत्तिः । तस्य चेतनत्वेन प्रज्ञात्मत्वोपपत्तेः । उपसंहारे च **"स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः"** (कौ० ३ । ८) इत्युक्त्वा आनन्दत्वादयोऽपि न ब्रह्मणोऽन्यत्र मुख्यप्राणे कथञ्चिदनुगन्तुं शक्यन्ते । ब्रह्मणि तदनुगमश्च विस्पष्टः । तस्मादत्र प्राणो ब्रह्म ॥ २८ ॥

आशङ्क्य निराकुरुते —

**"न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्"** ॥ २९ ॥

प्राण इत्यनुवर्तते । ब्रह्मेति पूर्ववदधिक्रियते । नेति द्विरावृत्त्या शङ्कावत् समाधानादावपि सम्बध्यते । **न**=इह प्राणो ब्रह्म न, कुतः? **वक्तुः**=इन्द्रस्य वक्तुः, **आत्मोपदेशात्**=आत्मनः स्वस्योपदेशादनुशासनादिति **चेत्**=यद्युच्यते तदा **न**=न वक्तव्यम्, कुतः? **हि**=यतः, **अध्यात्मसम्बन्धभूमा**=ब्रह्मवचनोऽत्रात्मशब्दः, आत्मानमधिकृत्य सम्बन्धो विद्यते येषां धर्माणां तेषां भूमा—भूयस्त्वम्, **अस्मिन्**=प्रकरणेऽस्मिन्नुपलभ्यत इत्यर्थः ।

**अथाह**—प्रतर्दनेन हिततमाय वरायोपक्षिप्तस्तावदिन्द्रः **"मामेव विजानीहि"** इत्युपक्रम्य **"प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व"** इत्यहङ्कारवादेनोपदिशति । न च स्वात्मनो भिन्नस्य ब्रह्मणोऽहङ्कारवादेनोपदेशो युज्यते । स्वात्मा हि कस्मैचित् तथोपदेष्टुं शक्यते । न परात्मा । नहि चैत्रो मैत्राय विष्णुमित्रात्मानमुपदिदिक्षुः कदाचित् **"मामेव विजानीहि"** इत्युपदेष्टुं शक्नोति । न च तस्य स्वात्मतोऽन्यः कश्चिद्धिततमोऽपि विद्यते, येन हिततमाय वरायोपक्षिप्तः स्वात्मनो भिन्नं ब्रह्मोपदिशेत् । न च **"न वाचं विजिज्ञासीत वक्तारं विद्यात्"** (कौ० ३।८) इति वक्तृवेदनोपदेशोऽपि तस्य ब्रह्मपक्षे घटते ।

वक्ता ह्यत्रेन्द्रो विद्यते, न ब्रह्म । न ह्यसौ प्राणशब्दं ब्रह्माभिप्रयन् वक्तुरात्मनो वेदनं कर्हिचिदुपदेष्टुमीष्टे । चेदसौ प्राणशब्देन ब्रह्माभिप्रैष्यत् तदा न जातु वक्तृवेदनमुपादेक्ष्यदिति कल्पनासम्भवात् । न च वक्तृत्वमपि भगवतस्तस्य कथञ्चिदुपपद्यते । शरीराभावेन तद्धेत्विन्द्रियासिद्धेः । **"अचक्षुष्कमश्रोत्रमवागमनाः"** (बृ० ३ । ८ । ८) इत्यादिश्रुतेश्च । प्राणत्वं च वक्तुरिन्द्रस्य प्राणनक्रियाश्रयत्वान्निर्वोढुं पार्य्यते । यस्मादेष प्राणिति तस्मात् प्राण इति वक्तुं शक्यत्वात् । प्रज्ञात्मत्वं च तस्य चेतनत्वादुपपन्नम् । आयुश्च प्राणनिबन्धनम् । यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुरिति प्राणात्मत्वादायुष्ट्वं नित्यत्वाच्चामृतत्वमपि युक्ततरं प्रतिभाति । **"त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान् यतीन् शालावृकेभ्यः प्रायच्छम् । तस्य मे तत्र न लोम च मामीयते"** (कौ० ३ । १) इत्यादीनि स्तुतिपराणि वाक्यानि चेह वक्तुरिन्द्रस्यात्मोपदेशं स्पष्टं गमयन्ति । तस्मादिन्द्रो वक्ताऽत्र प्राणो न ब्रह्मेति । **नैतद्युक्तम्** । ब्रह्मधर्माणामिह बाहुल्येनोपलम्भात् । अस्मिन् प्रकरणे हि बाहुल्येन ब्रह्मणः खलु धर्मा उपलभ्यन्ते, न वक्तुरिन्द्रस्य । यस्य च धर्माणामिह बाहुल्येनोपलब्धिः स एव प्रकरणार्थो नान्य इति सुखेन धियमारोहति । नहि यत्र देवदत्तस्य धर्माः भूयस्त्वेन कीर्त्यन्ते, तत्र प्रकरणी यज्ञदत्त इति कदाचित् सम्भवति । तत्र हि **"न वाचं विजिज्ञासीत वक्तारं विद्यात्"** इत्युपक्रम्य **"तद्यथा रथस्यारेषु नेमिरर्पिता नाभावराः अर्पिताः, एवमेवैताः भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः, स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः"** (कौ० ३ । ८) इत्युपदिश्यते । भूतानि च मात्राश्चेति भूतमात्राः, भूतानि पृथिव्यादीनि स्थूलभूतानि, मात्राश्च शब्दादयः सूक्ष्मभूतानि । प्रज्ञामात्राशब्देऽपि पूर्ववद् द्वन्द्वसमासः । तत्रेन्द्रियजाः प्रज्ञाः प्रज्ञाः, मात्राश्चेन्द्रियाणि, मीयन्ते शब्दादयो विषया आभिरिति तद्व्युत्पत्तेः । अनेन भोक्तारो जीवात्मानोऽप्युपलक्ष्यन्ते **"आत्मे-**

**न्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः"** ( कठ० ३ । ४ ) इति श्रुतेः । अर्पिताः=विषयत्वेनार्पिताः । नेमिवद्भूतमात्राः अरवत् प्रज्ञामात्राः, नाभिवत् प्राणो ब्रह्म । न चेह प्राणस्योपदिश्यमानं ग्राह्यग्रहणग्रहीतृलक्षणसर्ववस्त्वाधारत्वं वक्त्रिन्द्रपरिग्रहे घटते । जीवो ह्यसौ । सर्वाधारश्च ब्रह्म । **"स दाधार पृथिवीं द्यामुतेमाम्"** ( ऋ० ८ । ७ । ३ । १ ) **"स्कम्भो दाधार द्यावापृथिवी उभे इमे"** ( अथर्व० १० । ४ । ७ । ३५ ) **सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः"** ( छां० ६ । ८ । ४ ) **"कर्म्माध्यक्षः सर्वभूताधिवासः"** ( श्वे० ६ । ११ ) इत्यादिश्रुतिभ्यः । तेनैतद् ब्रह्मणो धर्मो न वक्तुरिन्द्रस्येति स्फुटमवगम्यते । न चानन्दत्वमपि ब्रह्मणोऽन्यस्य धर्म्मः सम्भवति । तद्भिन्नस्य चेतनाचेतनवर्गस्य सर्वस्यानानन्दात्मकत्वेन तदाश्रयत्वानुपपत्तेः । **"एष लोकाधिपतिरेष सर्वेशः"** ( कौ० ३ । ८ ) इति प्राणमुद्दिश्याभिहितं सर्वलोकाधिपतित्वं सर्वलोकेशानत्वं च ब्रह्मणो धर्मो विस्पष्टः **"यो विश्वस्य जगतः प्राणतः पतिः"** ( ऋ० १ । ७ । १०१ । ५ ) **"यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः"** ( ऋ० ८ । ७ । १२१ । ३ ) **"यो भूतः सर्वस्येश्वरो यस्मिन् सर्वं प्रतिष्ठितम्"** ( अथर्व० ११ । २ । ४ । १ ) **सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च"** ( बृ० ५ । ६ । १ ) इत्यादिश्रुतिभ्यः । प्राणत्वमपि मुख्यं ब्रह्मण उपपद्यते, न वक्तुरिन्द्रस्य । तस्य प्राणनक्रियाश्रयत्वेऽपि तदहेतुत्वात् । प्राणो हि जीवनम् । तच्च ब्रह्माधीनं न जीवात्माधीनम् । अन्यथाऽमरणप्रसङ्गात् । दर्शयति चैतत् स्वयं श्रुतिः **"न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ"** ( कठ० ५ । ५ ) इति । एतेनायुष्ट्वमपि ब्रह्मणो धर्म इति व्याख्यातम् । श्रूयते च **"तद्देवाः ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्"** ( बृ० ४ । ४ । १६ ) इति । वा-

ग्व्यापाराश्रयत्वं च वक्तृत्वम् । वाग्व्यापारस्य च हेतुर्ब्रह्म । **"यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते"** ( के० १ । ४ ) इत्यादिश्रुतेः । तेन **"न वाचं विजिज्ञासीत वक्तारं विद्यात्"** इति वक्तृवेदनोपदेशोऽपि ब्रह्मपरिग्रहे संश्लिष्यते, नेन्द्रवक्तृपरिग्रह इत्यपरोक्षम् । **"त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान् यतीन् शालावृकेभ्यः प्रायच्छम् । तस्य मे तत्र न लोम च मामीयते"** ( कौ० ३ । १ ) इत्यादीनि स्तुतिपराणि वाक्यान्यपि न वक्तारमिन्द्रं स्तुवन्ति, किन्तर्हि ? ब्रह्मज्ञानमाहात्म्यं घोषयन्ति । यो हि महाभागो ब्रह्मतत्त्वं विद्वान् कृतकृत्यः, स चेत् कदाचिद्देशात्मद्रुहो विपक्षिणः पश्यन् सङ्ग्रामेऽपराङ्मुखस्तीक्ष्णैः क्षुरधारैस्तान् यमपुरं प्रवेशयति, तत्र मात्रयाऽप्यहङ्कृतभावं च न गच्छति, तदा नासौ शास्त्राचार्य्यन्यायसंस्कृतात्मा पुण्यधीस्तद्धिंसाकृतेन पापेन संस्पृश्यते । न वा देशात्मोद्धृत्यै साहसानि कुर्वतस्तस्य लोमापि हिंस्यते । ब्रह्मज्ञानं हि केवलं तत्र हेतुः । तेन ह्येष वीरपुङ्गवः पद्मपत्रवन्निर्लेपोऽजायत । यत्रेदं श्रूयते **"यथा पुष्करपलाश आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यते"** ( छां० ४ । १४ । ३ ) इति । स्मर्य्यतेऽपि च **"यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते । हत्वाऽपि स इमाँल्लोकान् न हन्ति न निबध्यते"** ( गी० १८ । १७ ) इति । लोकान्=असुरान्—इत्यानन्दतीर्थः । असुरप्रायान् देशात्मद्रुहो विपक्षिण इति तदभिप्रायः । तदेतच्च **"स यो मां विजानीयान्नास्य केन च कर्म्मणा लोको मीयते न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया"** ( कौ० ३ । १ ) इति वाक्यात् साधु पोस्फुट्यते । **"स मे आत्मेति विद्यात्"** ( कौ० ३ । ९ ) इत्युपसंहारोऽपि ब्रह्मपरिग्रहे सङ्गच्छते, नेन्द्रवक्तृपरिग्रहे । तत्र सम्बन्धषष्ठ्यनुपपत्तेः । **"अयमात्मा ब्रह्म सर्वानुभूः"** ( बृ० २ । ५ । १९ ) इत्यादिश्रुतेर्ब्रह्मणः सर्वात्मत्वोपपत्तेश्च । तस्मादत्र प्राणो ब्रह्म, नेन्द्रो वक्ता ॥ २९ ॥

**ननु** चेदिह प्राणो ब्रह्म वर्तते नेन्द्रो वक्ता, कुतस्तर्हि वक्त्रा तेन **"मामेव विजानीहि"** इत्युपक्रम्य **"तं मामायुरमृतमित्युपास्व"** इत्यात्मोपदेशः क्रियते ? तत्राह—

**"शास्त्रदृष्ट्या तूपदेशो वामदेववत्"** ॥ ३० ॥

वक्तुरित्यनुवर्तते । तुना जीवो ब्रह्मैवेत्यशास्त्रदृष्टिर्व्यवच्छिद्यते । **शास्त्रदृष्ट्या**=शास्त्रं वेदः, अत्र तत्प्रतिपाद्यमन्तरात्मा ब्रह्म लक्ष्यते, दृष्टिर्बुद्धिः, वेदप्रतिपाद्यान्तरात्मब्रह्मबुद्ध्यो**पदेशः**=आत्मोपदेशो वक्तुरिन्द्रस्य वेदितव्यः, **वामदेववत्**=यथर्षिवामदेवस्य शास्त्रदृष्ट्याऽऽत्मोपदेश इत्यर्थः ।

**यो**ऽयं खल्विन्द्रेण वक्त्रा प्रतर्दनाय शिष्याय **"मामेव विजानीहि"** इत्युपक्रम्य **"तं मामायुरमृतमित्युपास्व"** इत्यात्मोपदेशो विधीयते, स च शास्त्रीयदृष्ट्या विहितो द्रष्टव्यः । शास्त्रं हि चिदचिदात्मकस्य सर्वस्यास्य जगतोऽन्तरात्मा ब्रह्मेति साक्षादुपदिशति **"सूर्य आत्मा जगतस्तस्थुषश्च"** (ऋ० १ । ८ । ७ । १) **"तदन्तरस्य सर्वस्य"** (यजु० ४० । ५) **"स्कम्भ इदं सर्वमात्मन्वद् यत् प्राणन्निमिषच्च यत्"** (अथर्व० १० । ४ । ८ । २) इति । तथोपनिषदोऽप्यनुशासति **"आत्माऽस्य जन्तोर्निहितो गुहायाम्"** (कठ० २ । २०) **"एको वशी सर्वभूतान्तरात्मा"** (कठ० ।५। १२) **"अङ्गुष्ठमात्रः पुरुषोऽऽन्तरात्मा"** (कठ० ६ । १७) **"सर्वस्मादन्तरतरं यदयमात्मा"** (बृ० १। ४ । ८) **"यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुः, यस्य सर्वाणि भूतानि शरीरम् । यः सर्वाणि भूतान्यन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः"** (बृ० ३ । ७ । १५) **"सर्वव्यापी सर्वभूतान्तरात्मा"** (श्वे० ६ । ११) इति । यत्र चिदचिदात्मकस्य सर्वस्यास्य जगतोऽन्तरात्मा ब्रह्म शास्त्रेणोपदिश्यते, न च तस्य

वक्तुरिन्द्रस्यात्मत्वेनोपदेशः कथञ्चिद् विरुध्यते । देहविशिष्टस्य जीवात्मनः प्रत्यगात्मनीव तदन्तरात्मनि ब्रह्मण्यप्यात्मत्वबुद्धिसम्भवात् । यो हि महाभागो वेदान्तविज्ञानसुनिश्चितब्रह्मैकतत्त्वो दृष्टानुश्रविकविषयेभ्यो विरज्य प्रमादविरहितस्तपस्वी प्रतिक्षणं ब्रह्मैकचित्तो ब्रह्मैवैकं समुपास्ते सोऽभ्यासप्रकर्षात् दुरत्ययं प्रकृतिप्राकारमुलङ्घ्य सत्वरं ब्रह्मधाम प्रविशति । यत्रेदमाम्नातम् "**नायमात्मा बलहीनेन लभ्यो न च प्रमादात् तपसो वाऽप्यलिङ्गात् । एतैरुपायैर्यतते यस्तु विद्वाँस्तस्यैष आत्मा विशते ब्रह्मधाम**" ( मुं० ३ । २ । ४ ) इति । ब्रह्मधामनि प्रविष्टात्मा च "**ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्**" ( मुं० २ । २ । ११ ) इति श्रुत्युक्तदिशा यत्र यत्र निशामयते, तत्र तत्र ब्रह्मैव निभालयते । न च तद्दृष्ट्यां ब्रह्मणोऽन्यत् किञ्चिद् विद्यते । स ह्यात्मानं ब्रह्मतोऽविभक्तं लोकयमानस्तदाधारं चिदचिदात्मकं सर्वमात्माधारं निरीक्षते । सर्वस्य च तस्य ब्रह्मवदन्तरात्मा भवन् निःशङ्कं सर्वमहमस्मीति मनुते । अस्यामवस्थायां यद्यद् भवति, तत्सर्वं ब्रह्मतो भवतीति तस्य दृष्टिरुपजायते । तामेव चेमां दृष्टिं लोके शास्त्रविदो मनीषिणः खलु शास्त्रदृष्टिनाम्ना व्याकुर्वते । तद्गोचरः सर्वभावश्च ब्रह्मभाववदौपचारिको न मुख्य इति द्रष्टव्यम् । अनयैव च दृष्ट्या किलेन्द्रो वक्ता शिष्यभावेनोपसन्नाय प्रतर्दनाय मामेव विजानीहीत्युपक्रम्यात्मानमुपदिदेश । **वामदेववत्** । यथा हि वामदेव ऋषिः प्रकृष्टादुपासनबलाल्लब्धेन ब्रह्माविभागेन तदाधारं सर्वमात्माधारं पश्यन् सर्वमहमस्मीति प्रतिपेदे, अनुष्ठाय च तथा निशामयाञ्चक्रे, ब्रह्मवचनं चात्मवचनत्वेनोदाजह्रे, यत्रेदमाम्नातम्— "**तद्धैतदृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति**" ( बृ० १ । ४ । १० ) इत्यादि । तथैतदपि विज्ञातव्यं, नास्ति कश्चिद्विरोधः । तस्माद् ब्रह्मवाक्यमेतन्नेन्द्रवाक्यम् ।

**अपर** आह—यथा हि शास्त्रे खलु प्रजाः प्रति भगवतो **ब्रह्मणोऽन्य-**
मुखेनोपदेश उपलभ्यते "**अग्निमीळे पुरोहितं यज्ञस्य देवमृत्वि-
जम् । होतारं रत्नधातमम्**" (ऋ० १ । १ । १ । १) "**हिरण्य-
गर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दा-
धार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम**" । १ ।
"**यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम**"
(ऋ० ८ । ७ । ३ । १–३) "**न मृत्युरासीदमृतं न तर्हि न
रात्र्या अह्न आसीत्प्रकेतः । आनीदवातं स्वधया तदेकं
तस्माद्धान्यन्न परः किञ्चनास**" (ऋ० ८ । ७ । १७ । २)
इत्यादिः । तथाऽऽत्ममुखेनापि दरीदृश्यते "**अहं राष्ट्री सङ्गमनी
वसूनां चिकितुषी प्रथमा यज्ञियानाम् । तां मा देवा
व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्य्यावेशयन्तीम्**" । ३ ।
"**मया सोऽन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणो-
त्युक्तम् । अमन्तवो मां त उपक्षियन्ति श्रुधि श्रुत ।
श्रद्धिवं ते वदामि**" । ४ । "**अहमेव स्वयमिदं वदामि
जुष्टं देवेभिरुत मानुषेभिः । यं कामये तं तमुग्रं कृणोमि
तं ब्रह्माणं तमृषिं तं सुमेधाम्**" (ऋ० ८ । ७ । ११ । ३–
४–५) "**वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः पर-
स्तात् । तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्य-
तेऽयनाय**" (यजु० ३१ । १८) "**सहृदयं सांमनस्यमविद्वेषं
कृणोमि वः । अन्यो अन्यमभिहर्यत वत्सं जातमि-
वाघ्न्या**" । १ । "**समानी प्रपा सह वोऽन्नभागः समाने
योक्त्रे सह वो युनज्मि । सम्यञ्चोऽग्निं सपर्य्यतारा नाभि-
मिवाभितः**" (अथ० ३ । ६ । ३ । १–४) इति । **ब्रह्मचान्तरा-**
त्मत्वात् प्राणिमात्रस्य **हृदये** सन्निकृष्यते "**अङ्गुष्ठमात्रः पुरुषोऽ-
न्तरात्मा सदा जनानां हृदये सन्निविष्टः**" (कठ० ६ । १७)

इत्यादिश्रुतिभ्यः । तस्माद् यस्य भगवतो ब्रह्मविदः प्राणिविशेषस्य वाग्-बुद्धिशरीरारब्धे व्यापारमात्रे स्वप्नेऽप्यहङ्कृतभावो न प्रवर्तते, बुद्धिश्च तत्र मात्रयाऽपि न संश्लिष्यते तस्यैतच्छास्त्रदृष्ट्या परं प्रत्यात्मनोपदेशो ब्रह्मोपदेशो वेदितव्यो, न स्वात्मोपदेशो यथर्षेर्वामदेवस्य "**अहं मनुरभवं सूर्य्यश्च**" इत्यात्मनोपदेशो ब्रह्मोपदेश इति । शास्त्रे च यथा "**शुनःशेप**"-शब्दो बद्धमात्मविशेषमभिधत्ते, तथा "**वामदेव**"-शब्दोऽपि ब्रह्मविद्रमात्मविशेषमाचष्टे। सर्वथाऽप्येष प्रतर्दनायेन्द्रोपदेशः शास्त्रप्रतिपाद्यान्तरात्मब्रह्मदृष्ट्या प्रववृते, न जातु जीवो ब्रह्मैवेत्युच्छास्त्रदृष्ट्येति सर्वं चतुरस्रम् ॥ ३० ॥

सविस्तरं प्राणो ब्रह्मेति निर्णीतम् । तदेव स्थूणानिखननन्यायेन द्रढयितुकामः पुनराशङ्क्य निराचष्टे—

**"जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्"** ॥ ३१ ॥

प्राणसम्बन्धो ब्रह्मसम्बन्धश्च पूर्ववत् । **जीवमुख्यप्राणलिङ्गात्**=जीवात्मनो लिङ्गान्मुख्यप्राणस्य लिङ्गाच, **न**=प्राणो ब्रह्म नेति **चेत्**=यद्युच्यते, **न**=तदा न वक्तव्यम् । कुतः? **उपासात्रैविध्यात्**=उपासनात्रैविध्यप्रसङ्गात्, **आश्रितत्वात्**=प्राणशब्दस्य ब्रह्मणि वृत्तेरभ्युपगमात्, **इह**=अत्र च, **तद्योगात्**=ब्रह्मलिङ्गसम्बन्धसत्त्वादित्यर्थः ।

**अथो**च्येत चेदिह केवलं ब्रह्मलिङ्गमुपलभ्येत, तदाऽवश्यं प्राणशब्दं ब्रह्मैवेति प्रतिपद्येत । न चेह केवलं ब्रह्मलिङ्गमुपलभ्यते, किन्तु जीवात्मलिङ्गं मुख्यप्राणलिङ्गं चाप्युपलभ्येते । दृश्यते तावद् "**न वाचं विजिज्ञासीत वक्तारं विद्यात्**" (कौ० ३ । ३) इत्यादिकं जीवात्मनो विस्पष्टं लिङ्गम् । वक्तृत्वस्यान्यत्रानुपपत्तेः । वागिन्द्रियं व्यापारयन् हि वक्ता सम्पद्यते । नहि वागिन्द्रियं न व्यापारयति वक्ता च सम्पद्यत इति सम्भवति । न च वागिन्द्रियं जीवात्मतोऽन्यः कश्चिद् व्यापारयितु-

मर्हति। ततोऽन्यस्य तदभावात्। जीवात्मनश्च तद्भावः प्रत्यक्ष इति स एव तद्व्यापारक उपपद्यते व्यापारकत्वाच्च वक्ता सुतराम्। **"अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति"** (कौ० ३। ३) इति च मुख्यप्राणस्य लिङ्गम्। अत्र हि प्राणस्य प्रज्ञात्मत्व-मुक्त्वा शरीरमवष्टभ्य धारणं धर्मोऽभिधीयते। स च प्राणशब्देन मुख्य-प्राणपरिग्रहे घटते, नार्थान्तरपरिग्रहे। श्रुत्यन्तरे शरीरधारणस्य मुख्यप्राण-धर्मत्वश्रवणात्। प्राणसंवादे हि वागादीन् प्राणान् प्रकृत्य श्रूयते **"तान् वरिष्ठः प्राण उवाच मा मोहमापद्यथाहमेवैतत्पञ्चधाऽऽत्मानं प्रविभज्यैतद् बाणमवष्टभ्य विधारयामि"** (प्र० २। ३) इति। श्रुतिसामान्यार्थसामान्येनाप्यवश्यभवितव्यमिति युक्तं मन्यामहे। प्रज्ञात्मत्वं च जीवात्मनि चेतनत्वात् मुख्यप्राणे च प्रज्ञासाधनप्राणान्तराश्रयत्वादुपपद्यते। न चैवं जीवमुख्यप्राणयोर्लिङ्गस्यो-पलब्धौ सहसा ब्रह्मैव प्राणशब्दमभ्युपगन्तुमुचितमिति। **नैतद्युक्त-व्यम्**। उपासात्रैविध्यप्रसङ्गात्। यदि हि प्राणशब्देन जीवात्मा मुख्य-प्राणो ब्रह्म चेति त्रितयं परिगृह्येत, तदा त्रिविधमुपासनं प्रसज्येत— जीवात्मोपासनं, मुख्यप्राणोपासनं ब्रह्मोपासनं चेति। न चेहोपदेश-वाक्यसन्दर्भपर्य्यालोचनेन त्रिविधोपासनविधिः सम्प्रतीयते। अत्र हि **"मामेव विजानीहि"** इत्युपक्रम्य **"प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व"** इत्यभिधायान्ते **"स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः"** इत्युपदिश्यते। तस्य च यः प्राणः प्रज्ञानस्वरूप आनन्दस्वरूपो न कदाचिज्जीर्य्यते न वा म्रियते स एवाह-मस्मि, स एव त्वयोपासितव्य इत्यर्थो विस्पष्टः। जीवात्मा च नानन्दरूपः, मुख्यः प्राणश्च नाजर इत्युभयविशेषणोपादानात् तदुभयव्युदासोऽपि न तिरोहितः। नहि प्राणशब्देन ब्रह्मवज्जीवात्मनो मुख्यप्राणस्य चोपासनं विधित्सुरिन्द्रः कर्हिचिदानन्दोऽजर इति तदुभयविशेषणमुपादातुमर्हति। न च तदुपादानोऽपि ब्रह्मवत् तदुभयोपासनमप्यभिप्रैति लिङ्गोपन्यासा-दिति कल्पयितुं शक्यते। लिङ्गयोस्तयोर्ब्रह्मण्यपि योजनासम्भवात्। नहि

सर्वव्यापारहेतुर्ब्रह्म प्राणव्यापारहेतुर्न सम्पद्यते । **"न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ"** ( कठ० ५ । ५ ) **"यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते"** ( के० १ । ४ ) इत्यादिश्रुतिसङ्घेन च ब्रह्मणस्तद्व्यापारहेतुत्वं सुव्यक्तम् । नचात्र जीवात्मोपासनं मुख्यप्राणोपासनं चापि युक्तमीक्षामहे । हिततमत्वाभावात् । जीवात्मानं ह्युपासीनः कथञ्चित् तदधिकृतान् शब्दादीन् विषयानुपभुङ्क्ते । युक्ताहारादिना च मुख्यं प्राणमुपासीनः कदाचिच्चिरजीवितं लभते । न चैतदुभयं हितं भवदपि हिततमं विद्यते । हिततमोपदेशाय चारम्भः । तथाभूतं च ब्रह्मोपासनमिति तदेवेह प्राणशब्देन विधित्सितं गम्यते । नच प्राणशब्दो ब्रह्मणि न प्रयुज्यते । तत्र तद्वृत्तेराश्रितत्वात् । न्यरूपयाम चैतद् **"अत एव प्राणः"** ( वे० १ । १ । २३ ) इत्यत्राधस्तात् । इह च हिततमोपन्यासादिब्रह्मलिङ्गयोगात् प्राणो ब्रह्मेति निश्चीयते । तस्माद् ब्रह्मवाक्यमेतदिति सिद्धम् ॥

**ननु** वैदिकानामीशाद्याः दशोपनिषदः प्रमाणमिति **"न्यायसूत्रवैदिकवृत्तौ"** व्याख्यातम् . कौषीतकिब्राह्मणोपनिषच्च ततो बहिर्भूतेति किमर्थमिह विचार्य्यते । नह्याचार्य्योऽप्रामाणिकं वचो विचारयितुं प्रावर्तिष्टेति चेत् ? **अत्राचक्ष्महे** । सत्यं वैदिकानामस्माकं यासामुपनिषदामादावीशावास्यनाम्नी संहितोपनिषद् विद्यते तास्तलवकारमारभ्य श्वेताश्वतरपर्य्यन्ताः दशोपनिषदः शिष्टपरिगृहीतत्वात् प्रमाणम् । तथापि कौषीतकिब्राह्मणोपनिषदैतरेयोपनिषदा सङ्गृह्यते । ब्राह्मणसम्बन्धावगमात् । ऋग्वेदस्य हि ब्राह्मणद्वयं कौषीतकिना प्रणीतं **"कौषीतकिब्राह्मणं"** प्रथमम्, ऐतरेयेण महीदासेन प्रणीतम् **"ऐतरेयब्राह्मणं"** द्वितीयम् । तत्र प्रथमं तावद् द्वितीयेन गतार्थत्वान्न पृथक् प्रमाणं मन्यते । वैशिष्ट्यं हि प्रामाण्यं प्रयोजयति । न चैतरेयब्राह्मणतः कौषीतकिब्राह्मणे किञ्चिद्विषयकृतं वैशिष्ट्यमनुभूयते । येनेदं गतार्थतां नेयात् । कौषीतकिब्राह्मणोपनिषच्चैतरेयब्राह्मणे कस्याश्चिदुपनिषदोऽभावान्न

तेन गतार्थतामर्हति । अगतार्थायाश्च तस्याः नाकस्मादप्रामाण्यं युक्तमाश्रयितुम् । तस्मादेषा महीदासप्रणीते ब्राह्मणोत्तरभागे **"ऐतरेयारण्यके"** विद्यमानया खल्वैतरेयोपनिषदा सङ्गृह्यते । विषयभेदेनारण्यकगतया तया गतार्थत्वानभ्युपगमात् । **नन्वेवं** कैवल्यजाबालप्रभृतय उपनिषदोऽपि कयाचित् सङ्ग्रहणीयाः, अविशेषादिति चेन्न युक्तं भाष्यते । तासां केनापि ब्राह्मणेन सम्बन्धानवगमादप्रामाण्यानुपपत्तेः । आप्तप्रणीतत्वग्रहो हि प्रामाण्याय तासामावश्यकः । न च कौषीतकिब्राह्मणवत् तासामाप्तप्रणीतत्वमद्यापि गृह्यते । भाषाशैली चाधुनिकी प्रत्यक्षा, बाह्यसम्प्रदायात्रेशश्च सुव्यक्त इति न ताः प्रामाणिक्योऽभ्युपगम्यन्ते । तस्मादेता दूरतः परित्यक्तव्याः वैदिकैः परमार्थचिन्तने सर्वदेति युक्तमवधारयामः ॥ ३१ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादवैदिकमुनिविरचितायां वेदान्तसूत्रवैदिकवृत्तौ प्रथमाध्यायस्य प्रथमः पादः ॥**





# प्रथमोऽध्यायः



## द्वितीयः पादः

प्रथमे पादे **"अथातो ब्रह्मजिज्ञासा"** इति ब्रह्मणो जिज्ञास्यत्वमुक्त्वा लक्षणाकांक्षायां **"जन्माद्यस्य यतः"** इति लक्षणमुक्तम्। अर्थाक्षिप्तं सर्वज्ञत्वं सर्वशक्तित्वं च **"शास्त्रयोनित्वात्" "तत्तु समन्वयात्"** इति सूत्राभ्यां समर्थयित्वा **"ईक्षतेर्नाशब्दम्"** इत्यादिना निमित्तकारणत्वं निर्धारितम्। जिज्ञास्यत्वोपपादनाय चानन्दत्वादिप्रतिपादनपराणां स्पष्टब्रह्मलिङ्गानां किमिमानि ब्रह्म प्रतिपादयन्ति किंस्विदर्थान्तरमिति सन्दिह्यमानानां केषाञ्चिच्छ्रुतिवाक्यानां तत्र समन्वयः पूर्वोत्तरपक्षाभ्यां सुदृढं प्रदर्शितः। सम्प्रति तथासन्दिह्यमानानामस्पष्टब्रह्मलिङ्गानां केषाञ्चिच्छ्रुतिवाक्यानां समन्वयोऽपि प्रदर्शयितव्यः। उपस्थितत्वात्। तदर्थमिमौ द्वितीयतृतीयपादौ प्रारभमाण आह—

**"सर्वत्र प्रसिद्धोपदेशात्"** ॥ १ ॥

ब्रह्मेत्यधिक्रियते। **सर्वत्र**=उपासनाप्रकारणेषु सर्वत्र **प्रसिद्धोपदेशात्**=प्रसिद्धस्य श्रुतिस्मृतिभिः प्रमितस्य भगवतः परब्रह्मणः परमेश्वरस्योपदेशादुपास्यत्वेनानुशासनादिह छान्दोग्यश्रुतौ शाडिल्यविद्यायामपि श्रूयमाणं ब्रह्म परब्रह्म परमेश्वरः प्रतिपत्तव्य इत्यर्थः।

छान्दोग्ये हि शाण्डिल्यविद्यायामाम्नायते **"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत, अथ खलु क्रतुमयः पुरुषः। यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति, स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः"** (छां० ३।१४।१–५) इत्यादि। तज्जलानिति सर्वं विशेष्यते, सामानाधिकर-

ण्योपपत्त्यर्थम् । इतिशब्दश्च हेतुवचनः । यस्मादिदं सर्वं तज्जलान्= तस्माद् ब्रह्मणो जायते सृष्टिवेलायामुत्पद्यते, तस्मिन् ब्रह्मणि लीयते प्रलयवेलायामविभागेन संश्लिष्यते, तेन ब्रह्मणा चानिति प्राणिति स्थिति-वेलायां जीवद्वतिष्ठते, तस्माद् ब्रह्म । शान्त इत्युपासको निर्दिश्यते । मैत्र्यादिभावनया निवृत्तरागद्वेषादिमलः शान्त इदं सर्वं जगद् यदधीन-जन्मस्थितप्रलयं तद् ब्रह्मोपासीतेत्यर्थः । अत्र शमविधिरयमिति केचिदा-चक्षते । तन्न युक्तं मन्यामहे । वाक्यार्थे लक्षणाप्रसङ्गात् । लक्षणा च पदधर्मोऽभ्युपेयते न वाक्यधर्मः । उपासकविशेषणतया च स्वयमेव लभ्यते शम इति लक्षणाभ्युपगमोऽपि व्यर्थः । ब्रह्मोपासनविधिश्चैष विस्पष्टः । स एव गुणविशेषविधित्सया जुहोतिवदनूद्यते "स क्रतुं कुर्वीत=क्रतुः प्रज्ञा ज्ञानं निश्चयोऽध्यवसायः एवमेव नान्यथेत्यविचलः प्रत्ययस्तं कुर्वीत वक्ष्यमाणगुणविशेषाश्रयब्रह्मविषयं विदधीत, उपासीतेति समुदायार्थः । विधेयाश्च गुणविशेषा मनोमयत्वादय इह क्रतुविषयत्वेन निर्दिश्यन्ते "मनोमयः प्राणशरीरो भारूपः" इति । तत्र संशयः किमिह ब्रह्मशब्देन प्रत्यगात्मोपदिश्यते किंवा परब्रह्म परमेश्वर इति ? । कुतः संशयः ? उभयत्र प्रयोगेक्षणात् । यथा हि ब्रह्मशब्दः खलु भगवति परब्रह्मणि प्रयुज्यमान ईक्ष्यते "**तस्मै ज्येष्ठाय ब्रह्मणे नमः**" ( अथ० १० । ४ । ८ । १ ) "**तदेव ब्रह्म त्वं विद्धि**" (के० १।५) "**विरजं ब्रह्म निष्कलम्**" ( मुं० २ । २ । ९ ) "**सत्यं ज्ञानमनन्तं ब्रह्म**" ( तै० २ । १ ) "**यद्वै तद्ब्रह्म**" ( छां० ३ । १२ । ७) "**विज्ञान-मानन्दं ब्रह्म**" ( बृ० ३ । ९ । २८ ) इत्यादौ, तथा प्रत्यगात्मन्यपि प्रयुज्यमानो निरीक्ष्यते "**विज्ञानं सर्वे देवा ब्रह्म ज्येष्ठमुपा-सते**" (तै० २ । ५) "**इदं ब्रह्मायाति**" ( बृ० ४ । ३ । ३७ ) "**स वा अयमात्मा ब्रह्म विज्ञानमयः**" ( बृ० ४ । ४ । ५ ) इत्यादौ । **किं** तावत् प्राप्तम् ? प्रत्यगात्मेत्यभिदध्महे । **तल्लिङ्गोपलम्भात्** । यस्य हि यत्र किञ्चिल्लिङ्गमुपलभ्यते तस्य तत्र निर्देश इति गम्यते, यथा शब्दलिङ्गोपलम्भान्नभसः, विजातीयस्पर्शलि-

श्रोपलम्भाच्च नभस्वतः । प्रत्यगात्मनो लिङ्गं चेह व्यक्तमुपलभामहे "मनोमयः प्राणशरीरः" इत्यादि । मनःप्रचुरो मनोमयः, प्राणः शरीरेऽस्येति च प्राणशरीरः । न च यस्य मनःसम्बन्धो न विद्यते तस्य मनःप्राचुर्यं, यस्य च शरीरसम्बन्धो न वर्तते तस्य शरीरे प्राण इति कथञ्चिदुपपद्यते । मनआदिभिः सम्बन्धश्च कार्य्यकरणाधिपतेः प्रत्यगात्मनः प्रसिद्धो न परस्य ब्रह्मणः । **"अप्राणो ह्यमनाः शुभ्रः"** ( मुं० २ । १ । २ ) **"अवागमनाः"** ( बृ० ३ । ८ । ८ ) **"अकायमव्रणम्"** (य० ४० । ८) **अशरीरं शरीरेषु"** ( कठ० २ । २१ ) इत्यादिश्रुतिभ्यस्तस्य तत्प्रतिषेधात् । **अथोच्येत**–ब्रह्मशब्देनात्र प्रत्यगात्मपरिग्रहे तज्जलानिति सर्वविशेषणं न सङ्गच्छते, प्रत्यगात्मनि सर्वजगज्जन्मस्थितिप्रलयहेतुत्वानुपपत्तेरिति । **नैतद्वक्तव्यम्** । तत्कर्मनिमित्तत्वादुपपत्तेः । सर्वस्य जगतो जन्मस्थितिप्रलया हि कर्मनिमित्ता आश्रीयन्ते **"कर्मवैचित्र्यात् सृष्टिवैचित्र्यम्"** ( सां० ६ । ४१ ) इति सांख्यसूत्रात् । कर्मसु च सर्वत्र प्रत्यगात्मा निमित्तमिति तस्य तद्धेतुत्वमुपपद्यते । तदुपपत्त्या च तज्जलानिति सर्वविशेषणमपि सङ्गङ्गमीति । स्वरूपेणाकाशवत्स्वच्छत्वाच्चाकाशात्मा । **"सर्वकर्मा सर्वकामः"** इत्यादिकञ्च पर्य्यायेण प्रत्यगात्मविषयं सुखेनोपपादयितुं शक्यते । **"एष म आत्मा अन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा"** ( छां० ३ । १४ । ३ ) इति श्रूयमाणं हृदयायतनत्वमणीयस्त्वं चाणुपरिमाणस्य प्रत्यगात्मन एवावकल्पते न महत्परिमाणस्य भगवतः परब्रह्मणः । नन्वणीयस्त्ववज्ज्यायस्त्वमपि श्रूयते **"ज्यायान् पृथिव्याः"** ( छां० ३ । १४ । ३ ) इत्यादि । सत्यं श्रूयते तथापि न तदुभयमेकस्मिन् शक्यं समाश्रयितुं विरोधादिति व्यवस्थया समाश्रयितव्यम् । सत्यां व्यवस्थायां गौणमुख्यकल्पनस्यान्याय्यत्वात् । तत्राणीयस्त्वं प्रत्यगात्माभिप्रायं, ज्यायस्त्वं च तदन्तरात्मब्रह्माभिप्रायमिति युक्तेयं व्यवस्था लोक्यते । युक्ताश्रयणं च साधु । तस्मादुपासनाविषयतया मनोमयत्वादिगुणकः प्रत्यगात्मैवेह ब्रह्मशब्देनोपदिश्यते न परब्रह्मेति । एवं प्राप्ते प्रतिविधी-

यते "**सर्वत्र प्रसिद्धोपदेशात्**"। उपासनाप्रकरणेषु हि सर्वत्र श्रुतिस्मृतियुक्तिभिः प्रमितं ब्रह्मैवैकमुपास्यत्वेनोपदिश्यमानं तावदुपलभ्यते। तत्सामान्यादिहापि तदुपदेशेनैव भवितव्यं न प्रत्यगात्मोपदेशेन। नहि शास्त्रं सर्वत्रोपास्यमेकं ब्रह्मोपदिशत् कचिदेकत्र प्रत्यगात्मानमुपदेष्टुमर्हति। व्याघातप्रसङ्गात्। न च परस्परं व्याहन्यमानमर्थं कर्हिचित् प्रमाणभूतं शास्त्रं ब्रूते। **अथोच्येत**—न खलु वयं ब्रह्मैवैकमुपास्यमुपदिश्यमानं शास्त्रे सर्वत्रोपलभामहे येन कचित् प्रत्यगात्मोपदेशेन व्याघातः प्रसज्येत, किन्तु कचिदग्निः, कचिदिन्द्रः, कचिद्वरुणः, कचित्सुपर्णः, कचिद्बृहस्पतिः, कचित्प्रजापतिः, कचिद्वायुः, कचिदापः, कचित्सविता, कचिच्चन्द्रमाः, कचिदाकाशः, कचिद्वैश्वानरः, कचिद्ब्रह्मा, कचित्प्राण इति। यत्र चैवंविधा अनेके स्तुत्याः प्रार्थयितव्या उपास्याश्चोपदिश्यन्ते तत्रोपास्यत्वेन प्रत्यगात्मोपदेशोऽप्युपपद्यते। अग्न्याद्युपासनावत् तदुपासनयाऽपि यत्किञ्चित्फलप्राप्तिसम्भवादिति। **मैवं वक्तव्यम्**। तत्र शब्दभेदेऽप्यर्थभेदाभावात्। ये ह्यग्न्यादयः शब्दविशेषा उपास्यं तत्त्वं समर्पयितुं शास्त्रे तावदुपादीयन्ते, ते सर्वे स्वरूपतो भिद्यमाना अपि न जात्वर्थतो भिद्यन्ते। नहि यमर्थमग्निशब्दोऽत्र ब्रूते न तमर्थमिन्द्रप्रभृतिशब्द आचष्टे। नूनमिह भिन्नार्थोऽग्निशब्दो भिन्नार्थश्चेन्द्रशब्दः इति संशयः शास्त्रतत्त्वानभिज्ञस्य कस्यचिन्मन्दमतेरिति विज्ञायते। किं न जानीषेऽस्माकं शासनपटोः प्रदीपवत्सर्वार्थावद्योतिनो भगवतो वेदस्य तदनुगच्छत उपनिषल्लक्षणस्य च शास्त्रस्य मनोह्लादिनीमर्थप्रतिपादनपद्धतिम्। मनागिवावेक्ष्यतामायुष्मन्! न खल्वेतदेकमर्थं प्रतिपादयदेकेन शब्देन प्रतिपादयति। येन च प्रतिपादयति न तेनापि रूढेन सता, किन्तु प्रायेण यौगिकेन कचिच्च योगरूढेन। अनेन ह्यस्यार्थसौन्दर्यं पोस्फुरयते। नहि योऽर्थो यथा विद्यते स यावत् तथा न प्रकाशते तावदभिरोचते। नचार्थस्य याथातथ्येन प्रकाशः केनचिदेकेन शब्देन तत्रापि रूढेन कथञ्चिद् विधातुं पार्यते। यदा खलु प्रत्यक्षस्यास्यैकस्य पृथिवीतत्त्वस्यैव याथातथ्यतो निरूपणेऽपर्याप्तस्तावदेकः शब्दस्तदाऽप्रत्यक्षस्य परब्रह्मपरमेश्वरतत्त्वस्य याथातथ्यतो निरूपणेऽपर्याप्त-

इति किमु वक्तव्यम् । अर्थमात्रस्य यथातथमवबोधयितुं परमपितुः परमात्मनोऽवतीर्णे चैतच्छास्त्रमिति कथं न तत्रैकैकस्यार्थतत्त्वस्य निरूपणाय भिन्नमुखाः शब्दविशेषा उपादीयेरन् । किमिहायुष्मता चित्रमिवालोक्यते । अग्रणीर्योऽर्थः सर्वेषामर्थानां सोऽयमत्राग्निशब्देन प्रतिपाद्यते । भौतिकेषु ह्यग्रणीर्भौतिकोऽग्निः, आधिदैविकेष्वग्रणीरर्थः सूर्य्यः, आध्यात्मिकेष्वग्रणीरर्थः परब्रह्मपरमेश्वरः । प्राधान्यात् । कस्य कुत्र ग्रहणमिति तु प्रकरणवशेन यथासम्भवं व्यवस्थाप्यते । यथा चैषोऽग्निशब्दोऽग्रणीत्वं धर्मं पुरस्कृत्य भगवति परब्रह्मणि परमेश्वरे प्रवर्तते तथेन्द्रप्रभृतिशब्दोऽप्यैश्वर्यादिकं निरतिशयं पुरस्कृत्य तत्र प्रवर्तेत इति विज्ञातव्यम् । न चेहाग्न्यादिशब्दोपादानाभावे भगवति तस्मिन्नग्रणीत्वादिकं निरतिशयं धर्मं केनचिदेकेन शब्देन प्रतिपादयितुं शक्यते । तदुपादानात्तु सर्वमेतत्स्वरसादेव निर्वर्तते । तस्मात् सर्वजनोपचिकीर्षयाऽवतीर्णेन खलु शास्त्रेणोपास्यत्वादिप्रतिपत्तये जगतां पितरि भगवति तस्मिन्नग्रणीत्वादिधर्मवैशिष्ट्यमवबोधयितुमग्निप्रभृतयः शब्दास्तत्र तत्रोपादीयन्ते । न च तेषां तत्र तत्रोपादानात् तत्प्रतिपाद्योऽर्थः परब्रह्म परमेश्वरः स्वप्नेऽपि भेदमापद्यते । स तु भूमिप इव तत्तच्छब्दविशेषप्रतिपाद्यतामापद्यमानोऽपि सर्वदैक एव विराराज्यते । **किं बहुना** स्वरूपत एकस्मिन् सत्येव तस्मिन्ननन्तकल्याणगुणगणसमर्थकास्तद्वचनास्ते ते शब्दविशेषास्तत्रभवतामुपासकानां बोधसौकर्य्याय यथाकामं प्रयुज्यन्ते । तदेतच्च परमया कृपया स्वयमेवावबोध्यते शास्त्रेण "**इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः**" (ऋ० २ । ३ । २२ । ४६) "**तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः । तदेव शुक्रं तद्ब्रह्म ता आपः स प्रजापतिः**" (यजु० ३२।१) **स धाता स विधर्ता स वायुर्नभ उच्छ्रितम् । ३ । सोऽर्यमा स वरुणः स रुद्रः स महादेवः । ४ । सोऽग्निः स उ सूर्यः स उ एव महायमः**" (अथ० १३ । ४ । ४ । ३–४–५) इति । स्मर्य्यते चैवमेव मानवधर्मशास्त्रेऽप्येतत् "**एतमेके वदन्त्यग्निं**

**मनुमन्ये प्रजापतिम् । इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम्"** (मनु० १२ । १२३) इति । ये चैतेनापि न परितुष्यन्ति, शास्त्रे चास्मिन्ननेकविधोपास्यविधिं परिजल्पन्ति, **तान्** शब्दत एकमेव परब्रह्म परमात्मानं सर्वतः सर्वदा सर्वत्रोपासितव्यमवबोधयच्छास्त्रं स्वयमेव प्रव्यक्तं प्रत्याह **"य एक इद् विदयते वसु मर्ताय दाशुषे"** (ऋ १ । ६ । ६ । ७) **"यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा । यो देवानां नामधा एक एव तं सम्प्रश्नं भुवना यन्त्यन्या"** (ऋ० ८ । ३ । १७ । ३) **"यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य ईशेऽस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम** (ऋ० ८ । ७ । ३ । ३) **"स सर्वस्मै विपश्यति यच्च प्राणिति यच्च न । १२ । तमिदं निगतं सहः स एष एक एक वृदेक एव"** (अथ० १३ । ४ । ४ । १९–२०) इति । यथाहि भगवान् वेदः खलु सर्वेषामविशेषेण जगज्जन्मादिकारणं ब्रह्मैवैकमुपास्यमुपदिशति तथा तदनुगन्त्री भगवती काठिकी मौण्डिकी च श्रुतिरप्युनशास्ति **"सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीमि "ओम्" इत्येतत्"** (कठ० २ । १५) **"यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः"** (मुं० २ । २ । ५) इति । तदेवं परब्रह्मणः परमेश्वरस्योपास्यत्वेनोपदेशो शास्त्रे सर्वत्रोपलभ्यमाने छान्दोग्योपनिषदि शाण्डिल्यविद्यायामपि तदुपदेशेनैव भवितव्यमविशेषादिति निश्चीयते । मनोमयत्वादिकं च भगवति परब्रह्मण्यपि नासंश्लिष्टम् । उपासना हि सर्वव्यापारपरित्यागेन मनसस्तत्र निवेशनं तैलधारावदविच्छिन्नैकाकारवृत्तिसन्तानोपजननमिति यावदित्युच्यते । यदा खल्वेतन्मनो दीर्घकालनैरन्तर्य्यसत्कारासेविताभ्यामभ्यासवैराग्याभ्यां निरस्तसमस्तरजोमलं

नितान्तं परिशुद्धं सर्वेभ्यो बाह्याभ्यन्तरविषयेभ्यः प्रत्याहृतं तत्रभवतः उपासकस्य श्रद्धाभक्तिसमन्वितेन प्रयत्नविशेषेण जगतः पितृचरणे भगवति परब्रह्मणि परमेश्वरे सजवं निवेविश्यते, तदा तैलसन्तानेन नीरमिवात्मप्रत्ययसन्तानेन तं भगवन्तं द्रागित्येव व्याशाश्यते । तदिदमालक्ष्यैव चैनमृषयो मनोमयमिति सङ्गिरन्ते । तदानीं व्याप्तिकर्मापेक्षया मनसः प्राचुर्य्यान्मनोमयः शुद्धेन मनसोपास्य इति यावदित्यक्षरार्थः। प्राणः शरीरमस्येति प्राणशरीरः **"स उ प्राणस्य प्राणः"** ( के० १।२ ) **"यः प्राणे तिष्ठन् प्राणादन्तरः, यं प्राणो न वेद, यस्य प्राणः शरीरम्, य प्राणमन्तरो यमयति, एष त आत्माऽन्तर्य्याम्यमृतः"** ( बृ० ३ । ७ । १६ ) **"प्राणस्य प्राणम्"** ( बृ० ४ । ४ । १२ ) इत्यादिश्रुतिभ्यः। **"अप्राणोह्यमनाः शुभ्रः"** ( मुं० २ । १ । २ ) इत्यादिका श्रुतिस्तु ब्रह्मणो मनोऽधीनं ज्ञानं प्राणाधीनां स्थितिं च व्यासेधति नोक्तमनोमयत्वं प्राणशरीरत्वं चेत्यदोषः । प्रकाशस्वरूपत्वं च **भारूपत्वम्** । प्रकाशश्चैतन्यम् । तदपि भगवति तस्मिन् नानुपपन्नम् । प्रत्यगात्मन इव तस्यापि भारूपत्वाभ्युपगमात् । **"तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"** ( कठ० ५ । १५) **"तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्"** ( बृ० ४ । ४ । १६ ) इत्यादिश्रुतिभ्यः । **अथ** यदुक्तं प्रत्यगात्मपरिग्रहेऽपि तज्जलानिति सर्वविशेषणमुपपद्यत इति । **तदयुक्तम्** । मुख्यसम्भवे गौणकल्पनस्यान्याय्यत्वात् । तत्कर्मनिमित्तत्वेऽपि जगज्जन्मस्थितिप्रलयेषु परब्रह्मण एव कारणत्वव्यवस्थापनात् । प्रत्यगात्मनस्तत्कारणत्वस्य च **"जगद्व्यापारवर्ज्जम्"** ( वे० ४ । ४ । १७ ) इत्यत्र प्रतिषेधिष्यमाणत्वात् । **"सर्वकर्म्मा सर्वकामः"** इत्यादीनां प्रत्यगात्मनि पर्य्यायेनोपपादनं च जघन्यम् । अणीयस्त्वं च स्वयमाशङ्क्य समाधास्यते **"अर्भकौकस्त्वात्"** ( वे० १ । २ । ७ ) इत्यत्र । तस्मात् **परब्रह्मवचनोऽत्र ब्रह्मशब्द इति निष्प्रत्यूहम्** ॥ १ ॥

उक्तार्थे हेत्वन्तरं समुच्चिनोति—

**"विवक्षितगुणोपपत्तेश्च" ॥ २ ॥**

पूर्वत्रैव हेत्वन्तरमेतदिति चकारार्थः। ब्रह्मसम्बन्धः पूर्ववत्। **विवक्षितगुणोपपत्तेः**=शाण्डिल्येनर्षिणा वक्तुमिष्टानां वक्ष्यमाणानामुपास्यगुणानां भगवति परब्रह्मण्येवोपपत्तेर्ब्रह्मशब्दोऽत्र परब्रह्मवचनो गम्यत इत्यर्थः।

उक्तोपासनाविध्यनन्तरं हि ये केचिदुपास्यगुणास्तावदुच्यन्ते **"मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः"** (छां० ३। १४। २) इति। तथा **"एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः"** (छां० ३। १४। ३) इति च। ते सर्वे निरवशेषेण ब्रह्मण्येवोपपद्यन्ते न प्रत्यगात्मनि। नहि तस्य सर्वे सङ्कल्पाः सर्वदा सत्या भवन्ति, स्वरूपं वा कर्हिचिदाकाशवत्सम्पद्यते। भगवतः परब्रह्मणस्तु सर्वमेतत्सूपपन्नं नास्ति किञ्चिदनुपपन्नं नाम। तत्र मनोमयत्वं प्राणशरीरत्वं भारूपत्वं चोक्तार्थम्। प्रतिघातरहितः सत्यः, जगतः सृष्टिस्थितिप्रलयेष्वन्यत्र वा न कदाचित्प्रतिहन्यते सङ्कल्पो यस्य स **सत्यसङ्कल्पः**। आकाश इव आत्मा=स्वरूपं यस्य स **आकाशात्मा,** व्यापकत्वं सूक्ष्मतमत्वं रूपादिहीनत्वञ्चाकाशेन सादृश्यम्। सर्वं=विश्वं जगत् कर्म=कार्य्यं यस्यासौ **सर्वकर्म्मा**। परब्रह्म परमात्मा हि सर्वस्यास्य कार्य्यस्य जगतः कर्ता **"य इमा जजान"** (ऋ० २। ३। १७। ७) **"कर्तारमीशम्"** (मुं० ३। १। ३) **"स विश्वकृत्"** (श्वे० ६। १५) **"स हि सर्ववित्सर्वकर्ता"** (सां० ३। ५६) इत्यादिश्रुतिस्मृतिभ्यः। **सर्वे** काम्यन्ते प्रतिपलं प्रार्थ्यन्ते प्रत्येकं प्राणिभिरात्मोपभोगार्थमिति **कामाः** त्रिलोकीभवाश्चेतनाचेतनात्मानः पदार्था आयत्ता विद्यन्ते यस्यासौ **सर्व-**

**कामः**। परब्रह्मपरमात्मायत्ता हि सर्वेऽमी प्राणिनामुपभोग्याः खलु पदार्थाः। न च तद्दानादृते केनचित्कुत्रचित् कदाचिदुपभोक्तुं शक्यन्ते। सोऽयं प्रभुरात्मीयया परमया दयया यथाप्राणिकर्म यदा कदा यस्मै कस्मै चिद् यं कञ्चित् पदार्थं प्रददाति स एव पुण्यजन्मा तदुपभोगं लभते नान्यः। दानं चास्य भगवतः प्रत्येकमुपभोग्यानां पदार्थानां प्रतिप्राणिभेदं सततमनुवर्त्तते न जातु क्षणमपि विरम्यते। नहि लोके तादृक्षः प्राणी कश्चिद् विद्यते येनाद्य न मह्यं किञ्चिददादिति वक्तुं पार्य्यते। अजस्रमविशिष्टा चास्ति तद्दानप्रवृत्तिः। यत्रेदमाम्नातम् "**अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि सञ्जयामि शश्वतः। मां हवन्ते पितरं न जन्तवोऽहं दाशुषे विभजामि भोजनम्**" (ऋ० ८। १।५।१) "**अहं राष्ट्री सङ्गमनी वसूनां चिकीतुषी प्रथमा यज्ञियानाम्। तां मा देवा व्यदधुः पुरुत्रा भूरि स्थात्रां भूर्य्यावेशयन्तीम्**" (ऋ० ८।७।११।३) "**मया सोऽन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम्। अमन्तवो मां त उपक्षियन्ति श्रुधि श्रुत! श्रद्धिवं ते वदामि**" (ऋ० ८।७।११।४) "**नकिरस्य शचीनां नियन्ता सूनृतानाम्। नकिर्वक्ता न दादिति**" (ऋ० ६। ३।३।१५) इति। सर्वे गन्धाः प्रभवन्ति यस्मात्, यदधिष्ठाना सर्वगन्धोत्पत्तिः, अधिष्ठानकारणत्वात् सर्वगन्धानां यः प्रभवस्थानं विद्यते स **सर्वगन्धः**। एवं **सर्वरसो**ऽपि व्याख्येयः। **सर्वमिदमभ्यात्तः**= अततेर्व्याप्तिकर्म्मणः कर्त्तरि निष्ठाप्रत्ययः। सर्वमिदं चराचरं जगदभिव्याप्तः अभिव्याप्य स्थित इति यावदित्यर्थः। **अवाकी**=उच्यतेऽनयेति वाक्, वागेव वाकः, **यद्वा** वचेर्घञन्तस्य करणे वाकः, वागिन्द्रियम्, स विद्यते यस्य स **वाकी** न वाक्यवाकी, वाक्प्रतिषेधश्चात्रोपलक्षणार्थः, तेनेन्द्रियान्तरप्रतिषेधोऽप्यवगन्तव्यः "**अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः**" (श्वे० ३।१९) इत्यादिश्रुतेः। **अनादरः**=अवाप्तसमस्तकामत्वेन नित्यतृप्ततया न विद्यते

क्वचिदादरः=सम्भ्रमो यस्य सोऽनादरः आदर्तव्याभावादादररहितः । अप्राप्तप्राप्तौ ह्यादरः स्यादनाप्तकामस्य, नाप्तकामत्वान्नित्यतृप्तस्य भगवतः परब्रह्मणः स युज्यते क्वचिदित्यनादरः । **ज्यायस्त्वं** परममहत्वम् । तत्पृथिव्यादीनां सातिशयं भगवतस्तस्य च निरतिशयम् । एतदेव "**ज्यायान् पृथिव्याः**" इत्यादिना प्रदर्श्यते । अनेन "**स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपमाकाशात्मानं कामरूपिणं मनोजवसं सत्यसङ्कल्पं सत्यधृतिं सर्वगन्धं सर्वरसं सर्वा अनुदिशः प्रभूतं सर्वमिदमभ्याप्तमवाकमनादरम्**" ( शत० १० । ६ । ३ । २ ) इति श्रुतिरपि व्याख्याता द्रष्टव्या । विवक्षितगुणोपपत्तेरात्मशब्दस्य परमात्मवचनत्वावधारणात् । अतो ब्रह्मशब्दोऽत्र परब्रह्मवचन इति सिद्धम् ॥ २ ॥

**सिद्धान्तं** व्यवस्थाप्य पूर्वपक्षं निरस्यन्नाह—

"**अनुपपत्तेस्तु न शारीरः**" ॥ ३ ॥

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । **शारीरः**=प्रत्यगात्मा, **न**=अत्र ब्रह्मशब्दार्थो न युज्यते, कुतः ? **अनुपपत्तेः**=विवक्षितगुणानुपपत्तेरित्यर्थः ।

ये हि मनोमयत्वादयस्तावदिहोपास्यगुणा विवक्ष्यन्ते न च ते परब्रह्मवत् प्रत्यगात्मन्याञ्जस्येनोपपद्यन्ते । नहि प्रत्यगात्मा मनोमयः प्राणशरीरो भारूप इति कथञ्चिदुपपद्यमानोऽप्याकाशात्मा सर्वगन्धः सर्वरसः सर्वमिदमभ्याप्तोऽवाक्यनादरो ज्यायान् पृथिव्याः ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्य इत्युपपद्यते । न चानुपपन्नस्य स्वीकारो ज्यायान् । परब्रह्मपरमेश्वरस्तु शरीरे भवोऽपि न तदात्मेत्यभिमन्यते, प्रत्यगात्मा च तथाऽभिमन्यते । तस्मादेष शारीरो नात्र ब्रह्मशब्दार्थः ॥ ३ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

"**कर्मकर्तृव्यपदेशाच्च**" ॥ ४ ॥

हेत्वन्तरपरश्चकारः । न शारीर इत्यनुवर्तते । **कर्मकर्तृव्यपदेशात्**=उपास्यस्य मनोमयत्वादिगुणकस्य ब्रह्मणः कर्मत्वेन प्राप्यत्वेनोपास

कस्य पुरुषस्य शारीरस्य प्रत्यगात्मनः कर्तृत्वेन प्रापकत्वेन व्यपदेशात्=अभिधानाद् गम्यते न शारीरः प्रत्यगात्मा ब्रह्मशब्दार्थ इत्यर्थः ।

**"एतमितः प्रेत्याभिसम्भवितास्मि"** (छां० ३ । १४ । ४) इत्युपसंहरन्ती खलु श्रुतिरभिसम्भवितास्मि=प्राप्तास्मीत्युपास्यं ब्रह्मात्मानम् "एतम्" इति परामृश्य प्राप्तिक्रियां प्रति कर्मत्वेन प्राप्यत्वेनोपासकं पुरुषं शारीरं प्रत्यगात्मानं च कर्तृत्वेन प्रापकत्वेन व्यपदिशति । कर्मकर्तृभावश्च भेदाधिष्ठानो न जात्वभेदे व्यपदेष्टुं शक्यते । नहि प्राप्तिक्रियाया यत्कर्म स एव तस्याः कर्तेति युज्यते । यत्प्राप्यते तदुपास्यमन्यद् येन प्राप्यते स उपासकोऽन्य इति प्राप्यप्राप्तृभावलक्षणः कर्मकर्तृभावो यथा भेदाधिष्ठानस्तथोपास्योपासकभावोऽपि भेदाधिष्ठानो द्रष्टव्यः । अभेदे तदनुपपत्तेः । तस्मात् प्रत्यगात्मा शारीरो नात्र ब्रह्मशब्दार्थ इति सिद्धम् ॥ ४ ॥

ननु **"आत्मा वा अरे द्रष्टव्यः"** (बृ० ४ । ५ । ६) इत्यादिवत् कर्मकर्तृव्यपदेशोऽयं गौणः किन्न स्यात्? तत्राह—

**"शब्दविशेषात्"** ॥ ५ ॥

न कर्मकर्तृव्यपदेश इति विपरिणम्यानुवर्त्तते । **शब्दविशेषात्**=कर्मवाचककर्तृवाचकशब्दयोर्विशेषाद् भेदान्न कर्मकर्तृव्यपदेशो गौण इत्यर्थः । **"आत्मा वा अरे द्रष्टव्यः"** (बृ० ४ । ५ । ६) इत्यादौ हि कर्मवाचकशब्दात् कर्तृवाचकः शब्दः खलु न विशिष्यते, तेन तत्रोपाधिं पुरस्कृत्य कर्मकर्तृव्यपदेशो गौणः कथञ्चिदास्थातुं शक्यते । अत्र चास्ति कर्मवाचककर्तृवाचकशब्दयोर्विशेषः । कर्म ह्युपास्यं परं ब्रह्म परमात्मा तावत् **"एष म आत्माऽन्तर्हृदये"** (छां० ३ । १४ । ३) इति प्रथमया विभक्त्या, कर्ता चोपासकः प्रत्यगात्मा शारीरः षष्ठ्या विभक्त्या निर्दिश्यते । प्रथमा च षष्ठ्या विशिष्टेति निर्विवादम् । यथाचेह तथा समानप्रकरणे श्रुत्यन्तरेऽपि तच्छब्दविशेषः श्रूयते **"यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा, एवमन्तरात्मन्पुरुषो**

**हिरण्मयः"** (शत० १० । ६ । ३ । २) इति । अत्र हि कर्तुरुपासकस्य प्रत्यगात्मनोऽभिधायको यः शब्दः सप्तम्यन्तः "अन्तरात्मन्" इति, तस्माद्विशिष्टोऽन्यः प्रथमान्तः पुरुषशब्दः कर्म्मण उपास्यस्य परब्रह्मणः परमेश्वरस्याभिधायकः स्फुटमुपादीयते । न चैतावन्मात्रमेव । अपि च ! अत्रैवोपक्रमे कर्मोपास्यं ब्रह्मात्मशब्दाभ्यां कर्तोपासकश्च पुरुषशब्देनोपन्यस्यते । सोऽयं कर्मकर्तृशब्दयोर्विशेषः कर्मकर्तृव्यपदेशो मुख्येऽभ्युपगम्यमाने सत्युपपद्यते न गौणे । नहि राज्ञः पुरुष इति शब्दविशेषः खलु स्वस्वामिभावं गौणमभ्युगम्योपपादयितुं शक्यते । "राहोः शिरः, आत्मनश्चैतन्यम्" इत्यादिव्यपदेशस्तु बाधितः शास्त्रानुमानाभ्यामिति नोदाहरणाय कल्पते । नचेह मुख्ये किञ्चिद् बाधकमुपलभामहे । तस्माद् गम्यते नूनम् **"एतमितः प्रेत्याभिसम्भवितास्मि"** इति कर्मकर्तृव्यपदेशो मुख्यो न जातु गौण इति ॥ ५ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"स्मृतेश्च"** ॥ ६ ॥

न कर्मकर्तृव्यपदेश इति पूर्ववदनुवर्तते । हेत्वन्तरमेतदिति चकारेणोच्यते । **स्मृतेः**=मनुस्मृतेर्गम्यते न कर्मकर्तृव्यपदशो गौण इत्यर्थः ।

**"एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना । स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम्"** (मनु० १२ । १२५) इति हि मानवी स्मृतिः । अत्राभ्येति=प्राप्नोतीति प्राप्तिक्रियाकर्म प्राप्यं तावत् परब्रह्म परमेश्वरस्तत्क्रियाकर्तुः प्रापकात् प्रत्यगात्मनः शारीरादत्यन्तं भेदेनाधीयते । तमेतं कर्मकर्तृभेदं मा नाम कश्चिद्गौणं शङ्किष्टेति तद्व्यावृत्त्यर्थं परं पदमिति कर्मविशेषणमुपादीयते । **त्रीणि खलु पदानि** भवन्ति–प्रकृतिः, प्रत्यगात्मा, परमात्मा च । **तत्र** प्रकृतिराद्यं पदम् । सा हि संसारदुःखादात्मानं मोचयितुकामैः प्रथमं पद्यते । नहि कश्चिदशेषविशेषतः प्रकृतिं न पनिपद्यते संसारदुःखाच्च मोमुच्यते इति सञ्जङ्गमीति । प्रकृत्याऽपिधीयते खलु प्रत्यगात्मा । न च तामप्रति-

पद्य स केनचित्प्रतिपत्तुं पार्य्यते । तत्प्रतिपत्तिश्चावश्यकी । परमात्मप्रतिपत्तिहेतुत्वात् । प्रत्यगात्मनोऽन्तरात्मा च परमात्मा । तेन तत्पित्सुना पूर्वमवश्यं प्रकृतिः पत्तव्या, तदनन्तरं प्रत्यगात्मा, ततश्च परमात्मा । स्थूलसूक्ष्मा तावत्प्रकृतिः, सूक्ष्मतरः प्रत्यगात्मा, सूक्ष्मतमश्च परमात्मा । न च स्थूलसूक्ष्माविज्ञाने तदन्तरस्य सूक्ष्मतरस्य, तद्विज्ञाने च तदन्तरस्य सूक्ष्मतमस्य विज्ञानं कर्हिचिदुत्पत्तुमर्हति । लोके बालोऽपि पूर्वं स्थूलं तदनु सूक्ष्मं तदनु सूक्ष्मतरं तदनु सूक्ष्मतमं चार्थं गृह्णन्नुपलभ्यते । धानुष्कोऽपि प्राथमिकः पूर्वं स्थूलं वेद्धव्यं विध्यति तदनु सूक्ष्मं तदनु सूक्ष्मतरं तदनु सूक्ष्मतमं चेत्यालोक्यते । यथा च लोकस्तथा वेदः । लोकार्थत्वाद् वेदस्य । ततो गम्यते नूनं प्रकृतिपुरुषेश्वराणामेष एव युक्तः प्रतिपत्तिक्रमः । परमात्मनः परं च नास्त्यन्यत्किञ्चित्पत्तव्यम् । अतः प्रकृतिरधमं पदं, प्रत्यगात्मा मध्यमं पदं, परमात्मा च परमं पदमिति व्याख्यायते । यत्रेदमाम्नातं भवति **"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्" ।२०। तद्विप्रासो विपन्यवो जगृवांसः समिन्धते । विष्णोर्यत्परमं पदम्"** ( ऋ० १ । २ । ७ ।२०–२१ ) **"सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्"** ( कठ० २ । १५ ) **यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः स तु तत्पदमाप्नोति यस्माद्भूयो न जायते । ८ । "विज्ञानसारथिर्यस्तु मनःप्रग्रहवान् नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्"** ( कठ० ३ । ८९ ) इति । परं पदं परमं पदमितिचानर्थान्तरम् । स्वरूपवचनश्चात्र पदशब्दः । पद्यते=गम्यते=संसारदुःखादात्मानं मोचयितुकामैः प्राप्यते यत् तत्पदमिति तद्व्युत्पत्तेः । तत्र परपरमोपपदेन पदशब्देन परमात्मनः स्वरूपमाख्यायते, निरुपपदेन केवलेन च यथाप्रकरणं प्रत्यगात्मनः प्रकृतेश्च स्वरूपमिति बोद्धव्यम् । अस्यैव परमपदस्य परमं धाम शाश्वतं स्थानं चेति नामान्तरम् । यत्रेदं स्मर्यते

**"न तद्भासयते सूर्यो न शशाङ्को न पावकः । यद्गत्वा न निवर्तन्ते तद्धाम परमं मम"** (गी० १५ । ६) **"तमेव शरणं गच्छ सर्वभावेन भारत । तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्"** (गी० १८ । ६२) इति । न च पदं परं पदं चोभयं कदाचिदेकं सम्पद्यते । तथा सति परमिति विशेषणोपादानवैयर्थ्यप्रसङ्गात् । अतः पदं प्रत्यगात्मा, परं पदं च परमात्मेत्येनयोः स्पष्टो मुख्यो भेदः । न च तत्र मुख्ये तस्मिन्विद्यमाने तन्निबन्धनः कर्मकर्तृव्यपदेशो गौणः कर्हिचिदाश्रयितुं शक्यते । भेदे मुख्ये तन्निबन्धनव्यपदेशस्यापि मुख्यत्वौचित्यात् । तथा च नात्र कर्मकर्तृव्यपदेशो गौण इति निर्बाधम् ॥ ६ ॥

**सम्प्रति** जैवं लिङ्गमणीयस्त्वमाशङ्क्य निरस्यति—

**"अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च"** ॥ ७ ॥

**अर्भकौकस्त्वात्**=अर्भकमल्पं परिच्छिन्नमोको नीडं स्थानमायतनं यस्य, तस्य भावस्तत्त्वं, तस्मात् हृदयपुण्डरीकलक्षणाल्पायतनत्वात्, **तद्व्यपदेशाच्च**=तदाऽर्भकं परामृशति, व्यपदेशः कथनम्, अर्भककथनाच्च **न**=ब्रह्मशब्दोऽत्र परमेश्वरवचनो नेति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः ? **निचाय्यत्वात्**=हृदयपुण्डरीके द्रष्टव्यत्वादुपास्यत्वादेव**म्**=अर्भकौकस्त्वेनार्भकत्वेन च व्यपदिश्यते न स्वरूपतः, यतो **व्योमवच्च**=आकाशवत् सर्वेभ्यो ज्यायान् महानपि निर्दिश्यत इत्यर्थः ।

**अथोच्येत "एष म आत्माऽन्तर्हृदये"** (छां० ३ । १४ । ३) इति पूर्वमुपदिष्टस्योपास्यस्य परब्रह्मणः परमात्मनः खल्वर्भकेऽल्पे परिच्छिन्ने हृदयपुण्डरीके स्थितिमुक्त्वा **"अणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा"** (छां ३ । १४ । ३) इत्यणीयस्त्वमर्भकत्वमल्पत्वं परिच्छिन्नत्वं तावद्व्यपदिश्यते । तदिदं व्यपदिश्यमानं हृदयस्थानत्वमल्पत्वं च शरीरेन्द्रियपञ्जराध्यक्षस्यास्य प्रत्यगात्मनो

धर्मः सम्भवति न भगवतो जगज्जन्मादिकारणस्य परमात्मनः । स हि सर्वभूतान्तरात्मत्वात् सर्वस्थानो विभुत्वाच्च महत्परिमाणः । यत्रेदमाम्नायते **"सर्वभूतेषु चात्मानम्"**(यजु० ४०।६) **"स्कम्भ इदं सर्वमात्मन्वद्"** (अर्थ० १० । ४ । २ । २) **"एकस्तथा सर्वभूतान्तरात्मा"** (कठ० ५ । ११) **"य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति"** (बृ० ३ । ७ । १) **"तेनेदं पूर्णं पुरुषेण सर्वम्"** (श्वे० ३ । ८) **"प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः"** (यजु० ३२ । ४) **"एष हि सर्वेषु लोकेषु भाति"** (छां० ४ । १५ । ४) **"स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः"** (बृ० २ । ५ । १८) **सर्वात्मानं सर्वगतं विभुत्वात्"** (श्वे० ३ । २१) **"स ओतः प्रोतश्च विभुः प्रजासु"** (यजु० ३२ । ८) **यो वै भूमा तत् सुखम्"** (छां० ७ । २३ । १) **"सर्वव्यापिनमात्मानम्"** (श्वे० १ । १६) **"वेदाहमेतं पुरुषं महान्तम्"** (यजु० ३१ । १२) **"अज आत्मा महान् ध्रुवः"** (बृ० ४ । ४ । २०) **"स वा एष महानजः आत्मा"** (बृ० ४ । ४ । २५) इति । न च सर्वस्थानस्य हृदयमात्रस्थानत्वं महत्परिमाणस्य चाल्पत्वं कथञ्चिदुपपद्यते । प्रत्यगात्मा च **"हृदि ह्येष आत्मा"** (प्र० ३ । ६) **"योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः"** (बृ० ४ । ३ । ७) **"एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश"** (मुं०३ । १।९) **"बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः"** (श्वे० ५ । ८) इत्यादिश्रुतिभ्यो हृदयमात्रस्थानोऽणुपरिमाणश्च निश्चीयते । तस्माद्भवति प्रतिपत्तिर्नूनमेष एवात्र ब्रह्मशब्दार्थो न जातु परब्रह्म परमात्मेति । **नैतद्वक्तव्यम्** । परमात्मनोऽपि तथा व्यपदेशोपपत्तेः । सत्यं सर्वभूतान्तरात्मत्वात् सर्वस्थानो विभुत्वाच्च परममहत्परिमाणो जगतः कारणं परब्रह्म परमात्मा तावद्विद्यते तथापि तस्य तथा व्यपदेश उपपद्यते । नह्येष सर्वगतो भवन् कदाचिद्

हृदयगतः प्रत्यगात्मगतश्च न भवति । हृदयप्रत्यगात्मनोरपि सर्वान्तः-पातित्वात् । हृदयं च न महत् प्रत्यगात्मा चाणुरिति हृदयगतत्वाद् हृदयस्थानः प्रत्यगात्मगतत्वाच्चाणीयानिति निःशङ्कं व्यपदेष्टुं शक्यते । यथा खलु सर्ववसुधाधिपतिः सन्नपि रामोऽयोध्यायां सुखेनोपासितुं द्रष्टुं च शक्यत्वादयोध्याधिपतिरिति व्यपदिश्यते, तथा सर्वगतः सन्नपि जगतां पतिः परमेश्वरो हृदयपुण्डरीके सुखेनोपासितुं द्रष्टुं च शक्यत्वाद् हृदयस्थानोऽणीयानिति च व्यपदिश्यते । नच स वस्तुतो हृदयमात्रस्थानः स्वरूपतो विज्ञानात्मेवाणीयाँश्च विद्यते । नच कया चिद्यपेक्षया तथा व्यपदिश्यमानः परमार्थतस्तथैव किं न स्यादिति वक्तुं पार्य्यते । तस्य व्योमवत्सर्वतो ज्यायस्त्वस्यापि श्रवणात् । यथा हि लोके पृथिव्यादिभूतापेक्षया खलु ज्यायानाकाशस्तथा पृथिव्यादिसर्वलोकापेक्षया परब्रह्म परमात्माऽपि ज्यायान् श्रूयते "**ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः**" (छां० ३ । १४ । ३) इति । नचाकाशवच्छ्रूयमाणस्य ज्यायसस्तस्य तथा व्यपदेशः कथञ्चित्पारमार्थिकः उपपद्यते । तस्मान्मन्तव्यं यथा सर्वगतस्याप्याकाशस्य सूचीपाशाद्यपेक्ष-मर्भकौकस्त्वमणीयस्त्वं च व्यपदिश्यते तथा परमात्मनोऽपि निचाय्यत्वा-पेक्षमर्भकौकस्त्वमणीयस्त्वं च व्यपदिश्यते, न पारमार्थिकमिति । तथाच जगतां पतिः परमात्मैवात्र ब्रह्मशब्दार्थो न प्रत्यगात्मेति निष्प्रत्यूहम् ॥७॥

**परब्रह्मणः** परमेश्वरस्य हृदयस्थानत्वं व्यपदिश्यमानमुपश्रुत्य तस्य प्रत्यगात्मन इव सम्भोगप्राप्तिमाशङ्कमानं कञ्चित् पार्श्वस्थं व्युदस्यति—

"**सम्भोगप्राप्तिरितिचेन्न वैशेष्यात्**" ॥ ८ ॥

अर्भकौकस्त्व इति सप्तम्या विपरिणम्यानुवर्तते । **सम्भोगप्राप्तिः**= **ब्रह्मणोऽर्भकौकस्त्वे**=**हृदयस्थानत्वे** प्रत्यगात्मवत्सुखदुःखोपभोगप्रसक्तिरि-ति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः ? **वैशेष्यात्**=विशेषो भेदः, प्रत्ययप्रयोगेण तस्यौपाधिकत्वं निराक्रियते, भेदादित्यर्थः ।

**अथोच्येत**-**हृदयस्थानो** हि प्रत्यगात्मा सुखदुःखयोरुपभोक्ता तावद-

भ्युपेयते, जगतः कारणं परब्रह्म परमेश्वरोऽपि चेद् हृदयस्थानोऽभ्युपगम्येत, तदाऽवश्यं तस्य प्रत्यगात्मवत् सुखदुःखयोरुपभोगः प्रसज्येत। नहि दहनागारे स्थास्नुरेको दह्यते नापर इति सम्भवति । स्थानाविशेषे भोगाविशेषस्याप्यौचित्यादिति । **नैतद्वक्तव्यम्** । स्थानाविशेषेऽपि कर्माभावाद् भोगाप्रसक्तेः। कर्मनिबन्धनो हि सर्वत्र भोगः प्रवर्तते न जातु स्थाननिबन्धनः । चेदसौ स्थाननिबन्धनः प्रवर्तेत तदा जगित्पतुः परमात्मनोऽपि प्रसज्येत । कर्म च प्रत्यगात्मन उपपद्यते न परमात्मनः। शरीरसम्बन्धाभावात् । शरीरसम्बन्धाद् हि चेतनस्तावत्कर्मस्वधिक्रियते । अधिक्रियमाणश्च शुक्लमशुक्लं वा कर्माशयं सञ्चिनुते । शुक्लाशुक्लकर्माशयं सञ्चिन्वानश्च यथासमयं सुखं दुःखं वा तत्फलमुपभुङ्क्ते । शरीरसम्बन्धश्चास्याविद्यामूल इति सर्वतन्त्रसिद्धान्तः । न च भगवतस्तस्याविद्या विद्यत इति वक्तुं शक्यते। अनीश्वरत्वप्रसङ्गात् । तदभावे च न शरीरसम्बन्धः । शरीरसम्बन्धाभावे च न कर्म । कर्माभावे च न भोग इति स्थानाविशेषेऽपि न भोगप्रसक्तिः । **वैशेष्याच्च** । यदि हि प्रत्यगात्मा परमात्मनः सकाशादुपाधितो विशिष्येत तदोपाधेरैक्यादुपधेयैक्यस्यावश्यकतया प्रत्यगात्मन इव तस्यापि सुखदुःखोपभोगः आशङ्क्येत । न च प्रत्यगात्मपरमात्मनोरौपाधिको विशेषो वक्तुं पार्य्यते । अविद्याया उपाधेर्विद्यास्वभावे भगवति तस्मिन्नवस्थातुमशक्यत्वादुपाध्यन्तरस्य च दुर्निरूप्यत्वादौपाधिकभेदासिद्धेः । न चानयोः परमार्थतो विशेषेऽन्यस्य कर्मणाऽन्यस्योपभोगः शङ्कितुमीश्यते । अतिप्रसङ्गात् । आनन्दस्वरूपो हि परमात्मा, प्रत्यगात्मा च नानन्दस्वरूपः, सर्वज्ञः सर्वशक्तिर्जगतः कारणं च परमात्मा, प्रत्यगात्मा च न तथा, क्लेशकर्मविपाकाशयैरपरामृष्टः परमात्मा, प्रत्यगात्मा च तत्परामृष्टः, परममहत्परिमाणः परमात्मा, प्रत्यगात्मा चाणुपरिमाण इति पारमार्थिकस्तयोर्विशेषो गम्यते । पारमार्थिके च तस्मिन् गम्यमाने स्थानभेदाभावेऽपि न विज्ञानात्मोपभोगेन जगत्पितुः परमात्मन उपभोगप्रसङ्गो युज्यते । तदेतच्च स्वयं मन्त्रो दर्शयति "**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं**

**परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति**" ( ऋ० २ । ३ । १७ । २० ) इति । पर्णे=पक्षः, ते सुष्ठुनी शोभने विद्येते यस्य, स पक्षिविशेषः सुपर्णः । तत्सामान्यात् प्रत्यगात्मा परमात्मा चापि सुपर्णा इहोपन्यस्येते । तयोर्ज्ञानशक्तिर्दक्षिणः पक्षः, क्रियाशक्तिश्चोत्तरः । यथा हि लोके खलु कोऽपि सुपर्णो नान्तरेण दक्षिणोत्तरपक्षाभ्यामात्मनीनां गगनोड्डयनलक्षणां क्रियामभिनिर्वर्त्तयितुं पारयते तथा प्रत्यगात्मपरमात्मानावपि ज्ञानक्रियाशक्तिलक्षणाभ्यां दक्षिणोत्तरपक्षाभ्यामन्तरेण नात्मनीनां जगन्निर्वहनलक्षणां क्रियामभिनिर्वर्तयितुं पारयेते । तौ चैतौ द्वा="**सुपां सुलुक्**०" ( अष्टा० ७ । १ । ३९ ) इत्यादिना द्विवचनौकारस्याकारादेशः । एवमग्रेऽपि द्रष्टव्यः, द्वौ नैकौ, नैकात्मानाविति यावत् । अनेनैकात्मवादो व्युदस्यते । सयुजा=सयुजौ समानयोगौ, योगः सम्बन्धः, स्वसत्तासमानसत्ताकसम्बन्धौ सदातनसम्बन्धकाविति यावत् । नियम्यः खलु शरीराध्यक्षः प्रत्यगात्मा, तस्य परमात्मना, नियामकश्च जगत्पतिः परमात्मा, तस्य प्रत्यगात्मना नियम्यनियामकभावलक्षणः सम्बन्धः सदातनः । सम्बन्धिनोः सदातनत्वे तत्सम्बन्धस्यापि सदातनत्वौचित्यात् । न तयोरागन्तुकः सम्बन्धः, किन्तु सांसिद्धिक इति च तदभिप्रायः । अनेन हि प्रत्यगात्मपरमात्मनोरौपाधिको भेदो न पारमार्थिक इति मतं पराक्रियते । तस्यौपाधिकत्वे तादृक्सम्बन्धानुपपत्तेः । अयमेव च स्वस्वामिभावः सम्बन्ध इत्याख्यायते । सखाया=सखायौ समानख्यानौ, चैतन्यलक्षणः प्रकाशः ख्यानं, तदनयोः समानं विद्यते । यथा हि परमात्मा चेतनस्तथा प्रत्यगात्माऽपि चेतनः । चैतन्यमुभयत्राविशिष्टम् । अनेन हि प्रत्यगात्मपरमात्मनोः सर्वथा वैशिष्ट्यं पराणुद्यते । चैतन्येनावैशिष्ट्यं तयोर्न जात्वानन्दत्वेनेत्येतदपि ध्वन्यतेऽनेनेति द्रष्टव्यम् । समानम्=एकम् । वृक्षं=यो वृश्च्यते छिद्यते भिद्यते स वृक्षस्तम् । व्यष्टौ तेन देह उच्यते । तस्य छेदो भेदश्च सुप्रसिद्धः । अत्र तत्स्थं हृदयं लक्ष्यते । समष्टौ च प्रकृतिः । सा हि विकारजातमनुपतन्ती तदुच्छेदेनोच्छिद्यते भिद्यते चेति युक्तं तस्या अपि

वृक्षत्वम् । परि...जात=व्यत्ययेनात्मनेपदम्, परिष्वजतः, आश्रयतः। प्रकृतिपक्षे भोग्यत्वेन प्रत्यगात्मा, नियम्यत्वेन च परमात्मेति विवेकः। प्रत्यगात्मा हि भोक्ता, जगत्पतिः परमात्मा च नियामकः। भोग्या नियम्या च प्रकृतिरिति तयोस्तथा तत्समाश्रयणमुपपद्यते। तयोः= प्रत्यगात्मपरमात्मनोरन्यः=प्रत्यगात्मा स्वादु=तदेतदुपलक्षणं, स्वाद्वस्वादु पिप्पलं=शुक्लाशुक्लकर्मजन्यं सुखदुःखात्मकं फलमत्ति=भुङ्क्ते। यस्य यदु-पार्जितं तत्तस्य स्वादु नापरस्येति स्वादुग्रहणेन सूच्यते। स्वादूकृत्य स्वं स्वं कर्मफलं वा प्रत्येकमुपभोक्तव्यमित्यभिप्रायः। अन्यः=परमात्माऽनश्नन्= पिप्पलमभुञ्जानोऽभिचाकशीति=साक्षित्वेनाभितो निरीक्षत इति मन्त्रार्थः। अनेन हृदयस्थानत्वेऽपि जगत्पतिः परमात्मा मात्रयाऽपि प्रत्यगात्मवद् भोगेन न संस्पृश्यत इति स्फुटं विज्ञायते। तदिदं च भगवतः पतञ्जले-र्लक्षणसूत्रादप्यभिव्यज्यते "**क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः**" (यो० १।२४) इति। **तथा च** छान्दोग्ये शाण्डिल्यविद्यायां "**सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत**" (छां० ३।१४।१) इति ब्रह्मशब्दः परमात्मवचन उपादीयते न प्रत्यगात्मवचन इति सिद्धम् ॥ ८ ॥

**पूर्व**सूत्रे ब्रह्मणो भोक्तृत्वं प्रतिषिद्धम्। तत्सामान्यादत्तृत्वमपि मा नाम प्रतिषिद्धं वेदीदिति तत्प्रतिपादयितुमधिकरणान्तरमारच्यन्नाह—

"**अत्ता चराचरग्रहणात्**" ॥ ९ ॥

ब्रह्मेत्यधिक्रियते। **अत्ता**=कठवल्ल्यामवगतोऽत्ता परब्रह्म परमात्मा प्रतिपत्तव्यः, कुतः? **चराचरग्रहणात्**=तदत्तव्यत्वेन चराचरस्य जगत उपादानादित्यर्थः।

कठवल्ल्यां हि श्रूयते "**यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः**" (कठ० २।२५) इति। यस्य ब्रह्म च क्षत्रं च=उपलक्षणमेतत्, ब्रह्मक्षत्रादि समस्तं चराचरं जगदोदनः=ओदनस्थानीयं मृत्युः=सर्वमारकः

कालश्चोपसेचनं=स्वयमद्यमानं भवदन्यस्यात्ममिश्रस्यादने हेतुरोदनमिश्र-घृतवदिति यावद् भवतः=भवति विद्यते, तं **"नाविरतो दुश्चरितात्"** (कठ० २।२४) इति पूर्वश्रुतिप्रकाशितोपायवान् यथा वेद, इत्था=इत्थम्—एवं कः=अन्यस्तद्रहितः को वेद=जानाति, यत्र स वर्तेत इत्यर्थः। अत्र ब्रह्मक्षत्रादीनामोदनोपसेचनतानिर्देशेन तत्साम-र्थ्याद् यस्येति यच्छब्दनिर्दिष्टस्यात्तृत्वमवगम्यते। सोऽयमवगतोऽत्ता किं जीवात्मा स्यात् आहोस्वित् परमात्मेति संशयः। कुतः संशय्यते? विशेषानवगमात्। नह्यत्र कश्चिदत्ता विशेषतोऽवगम्यते। सामान्यतोऽ-वगते च तस्मिन् युक्तः संशयः। सर्वत्र सामान्यावगतेरेव संशायकत्वाभ्यु-पगमात्। तत्र जीवात्मेति पूर्वः पक्षः, परब्रह्म परमात्मेति सिद्धान्तः। किं तावत् प्राप्तम्? जीवात्मेति निगदामः। अत्तृत्वस्य तद्धर्मत्वावधार-णात्। अत्तृत्वं हि भोक्तृत्वम्। तच्च पूर्वस्मिन् सूत्रे प्रत्यगात्मनो धर्मोऽ-वध्रियते न जगत्पितुः परमात्मनः। शास्त्रतश्च। शास्त्रं खलु भोक्तृत्वं प्रत्यगात्मनो धर्ममनुशास्ति **"तयोरन्यः पिप्पलं स्वाद्वत्ति"** (ऋ० २।३।१७।२०) इति। परमात्मनश्च प्रतिषेधति **"अनश्नन्नन्यो अभिचाकशीति"** (ऋ० २।३।१७।२०) इति। तेन प्रत्यगात्मैवात्ता न परमात्मेति गम्यते। अनुभवाच्च। यथा हि शास्त्रं तावदर्थं प्रतिपादयति तथाऽनुभवोऽप्यवगमयति। समानो ह्युभयोरर्थप्रति-पादने व्यापारः। लोके प्रत्यगात्मैव सर्वमदनीयमुपभुञ्जानोऽनुभूयते न परमात्मा। न च जायमानोऽयमनुभवोऽपह्नोतुं शक्यते। प्रत्यक्षत्वेन बली-यस्त्वात्। यथा हि प्रत्यगात्मना खलु स्वकाः स्त्रीपुत्रादयश्चेतना अचेतनाश्च क्षेत्रप्रभृतय उपभुज्यन्ते तथा ब्रह्मक्षत्रपूर्वकाः सर्वे चेतनाचेतनात्मानः पदार्था अप्युपभोक्तुं शक्यन्ते। योगमाहात्म्याद्दीर्घायुष्ट्वलाभे श्रूयमाणो मृत्यूपभोगोऽपि समुपपद्यते। **"क इत्था वेद यत्र सः"** इति च प्रत्यगात्मनः सूक्ष्मत्वाद् दुर्विज्ञेयत्वमभिप्रेत्य निर्दिश्यते। यत्रेदमाम्नातं पुरस्तात् **"देवैरत्रापि विचिकित्सितं पुरा न हि सुविज्ञेय-मणुरेष धर्मः"** (कठ० १।२१) इति, न ज्ञानाभावमभिप्रेत्य।

तज्ज्ञानसाधनोपदेशस्यासङ्कच्छ्रुतेः। तस्मादिह जीवात्मैवात्ता प्रतिपद्यते न परमात्मेति । **एवं** प्राप्ते ब्रूमहे—**अत्ता** खल्विह परमात्मैव प्रतिपत्तव्यो न जीवात्मा । तस्य सर्वात्तृत्वासम्भवात् । यदि हि भोक्तृत्वमत्तृत्वमभिप्रेयेत, तदा मुक्तसंशयं जीवात्मैवात्ता प्रतिपद्येत । न चेह भोक्तृत्वमत्तृत्वमभिप्रेतं विज्ञायते । नहि तस्मिन्नभिप्रेते मृत्युनोपसिच्यमानस्य ब्रह्मक्षत्रपूर्वकस्य चराचरस्यास्य कृत्स्नस्य जगत ओदनवददनीयत्वाभिधानं कथञ्चिदुपपद्यते । न च ब्रह्मक्षत्रादिकं कृत्स्नं जगत् प्रत्यगात्मनस्तावत् साक्षाद्भोग्यमपि विद्यते **किन्तु** भोगायतनतया किञ्चिद् यथा शरीरम्, भोगसाधनतया च किञ्चिद् यथा स्त्रीपुत्रादिकम्, ओदनश्च साक्षाद्भोग्य इति कृत्स्नस्य तस्य तत्त्वं श्रावयन्त्या श्रुत्या तदत्तृत्वसमकक्षमेवात्तृत्वमिहाभिप्रेयते न जातु शरीरस्त्रीपुत्रभोक्तृत्वसमकक्षमिति स्फुटमवगम्यते । तदत्तृत्वं च भक्षितृत्वमिति युक्तं मन्यामहे । धात्वर्थानुगमात् । तच्च संहर्तृत्वे पर्य्यवस्यति न भोक्तृत्व इति सर्वजनीनम् । प्रत्यगात्मनश्च कतिपयार्थात्तृत्वसम्भवेऽपि न मृत्यूपसेचितब्रह्मक्षत्रादिसर्वार्थात्तृत्वं सम्भवति । तत्र तत्सामर्थ्याभावात् । परब्रह्मणः परमेश्वरस्य सर्वार्थात्तृत्वं च सर्वविकारसंहर्तृत्वात् सिद्धमेव न किञ्चित् साधनमपेक्षते । अतएव च भगवति वेदे प्रलयवेलायां प्रदीप्तेऽग्नौ घृतमिव होता जगदधिपतिः परमात्माऽपि समृत्युं चराचरं सकलं जगदात्मनि जुह्वदिवोपदिश्यते **"य इमा विश्वा भुवनानि जुह्वद् ऋषिर्होता न्यसीदत् पिता नः"** ( ऋ० ८। ३ । १६ । १ ) इति । तैत्तिरीयाश्चैतदेवादनमभिसंवेशननाम्ना श्वताश्वतराश्च संहारनाम्ना व्यपदिशन्ति **"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व"** ( तै० ३ । १ ) **"एकैकं जालं बहुधा विकुर्वन्नस्मिन् क्षेत्रे संहरत्येष देवः। भूयः सृष्ट्वा यतयः। तथेशः सर्वाधिपत्यं कुरुते महात्मा"** ( श्वेता० ५ । ३ ) इति । तथेशो महात्मा सर्वं संहरति भूयः सृष्ट्वा च सर्वाधिपत्यं कुरुत इत्युत्तरार्धान्वयः । **"अनश्नन्नन्यो अभिचाकशीति"** ( ऋ० २ ।

३ । १७ । २० ) इति च परमात्मनः कर्मफलभोक्तृत्वं प्रतिषिध्यते। सन्निहितत्वात् । न सर्वविकारसंहर्तृत्वम् । वेदोपनिषत्सु सर्वत्र सृष्टिस्थितिसंहारकारणत्वेन भगवतस्तस्य प्रसिद्धत्वात् "**क इत्था वेद यत्र सः**" इति निर्दिश्यमानं दुर्विज्ञेयत्वं च सूक्ष्मतरत्वाद् ब्रह्मणोऽप्युपपद्यतेतराम् । यत्रेदमाम्नातम् । "**बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति**" ( मुं० ३ । १ । ७ ) इति । तस्मादिहावगतोऽत्ता परब्रह्म परमात्मैव प्रतिपत्तुमुचितो न प्रत्यगात्मा ॥ ९ ॥

**ननु** कस्मात्पुनरिहावगतोऽत्ता परब्रह्म परमात्मैव प्रतिपत्तुमुचितो न प्रत्यगात्मा ? तत्राह—

"**प्रकरणाच्च**" ॥ १० ॥

ब्रह्मेत्यधिक्रियते । पूर्वत्रैवायं हेतुरिति चार्थः । **प्रकरणात्**=प्रक्रिया प्रकरणं, तस्मात् परब्रह्म परमात्मैवात्ता प्रतिपत्तव्य इत्यर्थः ।

**यथा** हि लिङ्गमर्थप्रतिपत्तिसाधनं तथा प्रकरणमपि तत्प्रतिपत्तिसाधनं मन्यते । प्रकरणं चेदं परमात्मनो न प्रत्यगात्मनः ।"**तं दुर्दर्शं गूढमनुप्रविष्टम्**" ( कठ० २ । १२ ) इति प्रत्यगात्मसाक्षात्कारोपायस्याध्यात्मयोगस्य हर्षशोकनिवृत्तिलक्षणस्य च तत्फलस्य निरूपणानन्तरम् "**एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः**" ( कठ० २ । १३ ) इति तत्प्रकरण परिसमाप्य "**अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद**" ( कठ० २ । १४ ) इति परमात्मस्वरूपप्रतिपिपादयिषया तद्गोचरप्रश्नोत्थानात् । पूर्वस्मिन् श्रुतिवाक्ये अध्यात्मयोगेन कृतात्मसाक्षात्कारस्य भगवतो योगिनः सांसारिकहर्षशोकयोर्निवृत्तिमभिधाय मोदनीयब्रह्मप्राप्त्या शाश्वतिको मोदः, स च त्वादृक्षस्य विशिष्टाधिकारिणो नचिकेतसः सुलभ इत्युपदिश्यते । तत्र कीदृशं तन्मोदनीयं ब्रह्म, किञ्च तत्प्राप्तिसाधनमिति तदुपश्रुत्य सञ्जाता शिष्यस्य तस्य तीव्रा जिज्ञासा तद्गोचर-

प्रश्नोत्थाने बीजमिति द्रष्टव्यम्। अग्रे च "**सर्वे वेदा यत्पदमामनन्ति**" (कठ० २ । १५) इत्युपक्रम्य यथाप्रश्नं ब्रह्मप्रतिपादनादध्यायसमाप्ति-पर्य्यन्तं ब्रह्मप्रकरणं विस्पष्टम्। "**न जायते म्रियते वा विपश्चित्**" (कठ० २ । १८) इत्यादिवाक्यद्वयेन च मध्ये सिंहावलोकितन्यायेन ब्रह्मलोके महीयमानस्य जीवात्मनः स्वरूपं प्रतिपाद्यते न प्रकरणित्वाभि-प्रायेणेति मन्यते । परब्रह्मणः परमेश्वरस्य शरीराभावेन तद्द्वारा तद्धन्य-मानताप्रतिषेधानुपपत्तेः । "**उभौ तौ न विजानीतः**" (कठ०२।१९) इत्युक्ताया हन्तृहन्तव्यताभ्रान्तेश्च तदाश्रयत्वायोगेन जीवात्मन्येवोपपत्तेः । तदनन्तरं च ब्रह्मनिरूपणमतिरोहितमिति न तत्प्रकरणं विच्छिद्यते । प्रकरणिग्रहणं च सर्वत्र न्याय्यं पश्यामः । अन्यथा प्रकृतहानाप्रकृतप्रक्रिये स्याताम् । तच्चायुक्तम् । **तस्मा**दिहावगतोऽत्ता परब्रह्म परमात्मैव भवितुमर्हति न प्रत्यगात्मेति सिद्धम् ॥ १० ॥

**सम्प्रति** प्रसङ्गादुपस्थितं तत्प्रकरणकं श्रुत्यन्तरं निर्णेतुकामोऽधि-करणान्तरमारचयति--

**"गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्"** ॥ ११ ॥

हिरवधारणे । **गुहां प्रविष्टौ**=कठवल्ल्यामृतपातारौ हृदयगुहायां प्रविष्टौ हृदयगुहां श्रितौ यौ समाम्नातौ, ताव**ात्मानौ**=जीवात्मपरमा-त्मानौ, **हि**=एव प्रत्येतव्यौ, कुतः? **तद्दर्शनात्**=तयोर्हृदयगुहाश्रयत्वस्य सर्वत्र श्रुतिषु दर्शनादित्यर्थः ॥

कठवल्ल्यां हि समाम्नायते "**ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः**" (कठ० ३ । १) इति । सुकृतस्य=कर्मणो लोके=शरीरे गुहां=हृदयगुहायां परमे=बाह्याकाशापेक्षया प्रकृष्टे परार्द्धे=जीवात्मा परमात्मा च परः, तस्यार्द्धे स्थाने हार्दे नभसि प्रविष्टौ=प्रविश्य स्थितौ कर्मफलमृतं पिबन्तौ=भुञ्जानौ यौ स्तः, तौ छायातपौ=छायातपसदृशौ ब्रह्मविदः=ब्रह्मतत्त्वविदस्तत्रभवन्तश्चतुर्थाश्र-

मिणो वदन्ति=कथयन्ति, ये च पञ्चाग्नयः=वैखानसाः **"ग्रीष्मे पञ्चतपास्तु स्यात्"** (मनु० ६। २३) इति स्मृतेः, ये च त्रिणाचिकेताः=नाचिकेतो यज्ञाग्निः, गार्हपत्यो दक्षिणाग्निराहवनीयश्चेति त्रयो यज्ञाग्नयो येषां, ते च गृहमेधिनो वदन्तीति श्रुतिपदार्थः। **तत्र** संशयः किमिह सुकृतस्य लोके कर्मफलपातारौ यौ कौचन द्वौ समाम्नातौ तौ बुद्धिजीवात्मानौ स्यातामथवा जीवात्मपरमात्मानाविति। कुतस्तद्गोचरसंशयः? प्रकृतत्वात्। यथा ह्यत्र जीवात्मा तावत्प्रक्रियते तथा परमात्माऽपि प्रक्रियते। अस्ति पूर्वं जीवात्मगोचरः प्रश्नः **"येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः"** (कठ० १। २०) इति। तथा परमात्मगोचरः प्रश्नोऽपि **"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत् तत् पश्यसि तद्वद"** (कठ० २। १४) इति। यच्च प्रक्रियते तद्गोचर इह संशयो युज्यते। प्रश्नानन्तरं पृच्छ्यमाननिरूपणस्यैवौचित्यात्, तस्य च संशयपूर्वकत्वनियमात्। **ननु** पूर्वत्रैकाकी जीवात्मा परमात्मा च प्रक्रियमाणावुपलभ्येते। न बुद्धिजीवात्मानौ जीवात्मपरमात्मानौ वा मिलितौ। श्रुतौ च द्विवचनबलेनावश्यं निरूपणीयौ कौचन द्वौ वक्तव्यौ। तौ चान्यौ कौचन सम्भवतामपि नैतौ द्वौ कर्हिचित्सम्भवतः। प्रत्येकं प्रकृतत्वेऽप्युभयोरप्रकृतत्वात्। अप्रकृतकल्पनस्य चावैशिष्ट्यात्। अतो नेह तद्गोचरसंशयो युक्त इति। **नैष दोषः।** तत्सहचरितन्यायेनोभयग्रहणसम्भवात् संशयोपपत्तेः। जीवात्मनः सहचारिणी हि बुद्धिः **"आत्मानं रथिनं विद्धि शरीरं रथमेव तु। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च"** (कठ० ३। ३) **"कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः"** (बृ० ४। ३। ७) **"सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति"** (बृ० ४। ४। २) **"बुद्धेर्गुणेनात्मगुणेन चैव"** (श्वे० ५। ८) **"द्रष्टा दृशि-**

**मात्रः शुद्धोऽपि प्रत्ययानुपश्यः"** (यो० २ । २० ) इत्यादि-श्रुतिस्मृतिभ्यः । परमात्मसहचारी च जीवात्मा **"द्वा सुपर्णा सयुजा सखाया"** ( ऋ० २ । ३ । १७ । २० ) **"समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः"** ( मुं० ३ । १ । २ ) **"एष त आत्माऽन्तर्य्याम्यमृतः"** ( बृ० ३ । ७ । ३ ) इत्यादिवेदोपनिषच्छ्रुतिभ्यः । उभयोरुभयसहचारित्वे चोत्तरत्र विषय-श्रुतौ **"तत्सहचरितातत्सहचरितयोस्तत्सहचरितस्यैव ग्रहणम्"** इति न्यायेन जीवात्मपरिग्रहे तत्सहचारिण्या बुद्धेः, परमात्म-परिग्रहे च तत्सहचारिणः प्रत्यगात्मनोऽपि ग्रहणं सम्भवति । तदुभय-ग्रहणसम्भवे चाञ्जस्येन द्विवचनश्रुत्युपपत्त्या तद्गोचरसंशयोऽप्युपपद्यते नास्ति तदयोगः । **अथोच्येत**—अन्यकल्पनयाऽप्येतदुपपद्यते व्यर्थं न्याया-यानुसरणमिति । **नैवं वक्तव्यम्** । अध्यात्माधिकारे कयोश्चिदन्ययोः कल्पयितुमशक्यत्वात् । अध्यात्माधिकारे हि द्विवचनश्रुतिबलेन चेत्कौचन द्वौ कल्पयितुं शक्येते तदा बुद्धिजीवात्मानावेव जीवात्मपरमात्मानावेव वा कल्पयितुं शक्येते, नान्यौ कौचन । नह्यन्याधिकारेऽन्यं किञ्चित् कल्पयितुं पार्य्यते । अध्यात्माधिकारश्चायम् । अतस्तत्कल्पनमेव वरं कृतमन्याप्रकृत-कल्पनया । **ननु** तथापि न वयं संशयोपपत्तिमीक्षामहे । ऋतपानस्य प्रत्येकं सम्भवेऽप्युभयत्रासम्भवात् । ऋतपानं हि कर्मफलोपभोगः । सुकृतस्य लोक इति लिङ्गात् । तच्च बुद्धिजीवात्मपक्षे जीवात्मनः सम्भ-वदपि बुद्धेर्न सम्भवति । अचेतनत्वात् । नहि चेतनधर्मः क्वचिदचेतन-धर्मः सम्पद्यते । जीवात्मपरमात्मपक्षे च जीवात्मनः सम्भवेऽपि जगत्पितुः परमात्मनो न सम्भवति । **"अनश्नन्नन्यो अभिचाकशीति"** ( ऋ० ३ । ३ । १७ । २० ) इति प्रतिषेधात् । श्रुतिश्च पिबन्ताविति द्विवचनेन द्वयोः पानं दर्शयति । तस्मादनुपपन्नः संशय इति । **नैष दोषः** । छत्रिन्यायेन द्विवचनोपपत्त्या संशयस्याप्युपपन्नत्वात् । यथाहि छत्रिणो गच्छन्तीत्यत्रैकोऽपि छत्रिशब्दश्छत्र्यच्छत्र्युभयसाधारणः प्रयु-

ज्यते तथाऽत्राप्येकः पिबतिशब्दः पिबदपिबदुभयसाधारणः प्रयुज्यते। तस्योभयत्र तथा प्रयोगे चैकेनापि पिबता सता पिबन्ताविति द्विवचनमुपपद्यते। प्रयोज्यप्रयोजकभावेन वा पिबन्ताविति द्विवचनमुपपादनीयम्। ऋतं हि जीवात्मा तावत् पिबति, परमात्मा च तं पाययति। पाने च कर्तृत्वाविशेषाद् यथा पिबन् जीवात्मा पिबतीत्युच्यते तथा पाययन्नीश्वरोऽपि पिबतीति वक्तुं शक्यते। नहि पानक्रियायां स्वातन्त्र्यलक्षणं कर्तृत्वं यथा पातुर्जीवात्मनो विद्यते तथा पाययतुर्जगत्पितुः परमात्मनो न वर्तेत इति केनचिदभिधातुमुत्सह्यते। बुद्धिजीवात्मपक्षेऽपि चैधांसि पचन्तीतिवत् करणे कर्तृत्वोपचारात् पिबन्ताविति द्विवचनमुपपद्यते। तदुपपत्तौ च किमिह सुकृतस्य लोके गुहां प्रविष्टौ कर्मफलपातारौ बुद्धिजीवात्मानौ स्यातां जीवात्मपरमात्मानौ वेति संशयोऽप्युपपन्नः। **तत्र** बुद्धिजीवात्मानाविति पूर्वः पक्षः। जीवात्मपरमात्मानाविति सिद्धान्तः। **यदा** बुद्धिजीवात्मानौ **तदा** बुद्धिप्रधानात् कार्य्यकरणसङ्घाताद्विलक्षणो जीवात्मेति पूर्वपक्षे, **यदा** च जीवात्मपरमात्मानौ **तदा** जीवात्मनो विलक्षणः खलु परमात्मेति सिद्धान्ते फलम्। किं तावत् प्राप्तम्? बुद्धिजीवात्मानाविति निगदामः। कर्मगोचरताऽभिधानात्। सुकृतस्य लोक इति हि कर्मगोचरताऽभिधीयते। सुकृतस्य दुष्कृतस्य वा कर्मणो गोचरता च जीवात्मनो वर्तते **"यथाकारी यथाचारी तथा भवति। साधुकारी साधुर्भवति पापकारी पापो भवति। पुण्यः पुण्येन कर्मणा भवति पापः पापेन। अथो खल्वाहुः काममय एवायं पुरुष इति। स यथाकामो भवति तत्क्रतुर्भवति, यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते"** (बृ० ४। ४। ५) इत्यादिश्रुतेः, न परमात्मनः **"स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान्"** (बृ० ४। ४। २२) इत्यादिश्रुतेः। गुहां प्रविष्टाविति विशेषणाच्च। हृदयं ह्यत्र गुहा विवक्ष्यते। तां च बुद्धिक्षेत्रज्ञौ प्रवेष्टुमर्हतो न परमात्मा। नहि सर्वगतस्य परिच्छिन्नदेशप्रवेशः कल्पयितुं शक्यते।

लोके च परिच्छिन्नं प्रविशन्निरीक्ष्यते न सर्वगतम् । परिच्छिन्नौ बुद्धिक्षेत्रज्ञौ सर्वगतश्च परमात्मेति न तत्परिग्रहोऽत्र युज्यते । छायातपाविति च निर्देशात् । बुद्धिर्हि जड़त्वादत्र छायात्मना निर्दिश्यते, जीवात्मा च चेतनत्वादातपात्मना, सङ्गतश्चैवमेष निर्देशः । अन्यथाऽसाङ्गत्यप्रसङ्गात् । नहि स जीवात्मपरमात्मपक्षे कथञ्चित्सङ्गच्छते । द्वयोश्चेतनत्वेन कस्यापि छायात्वानुपपत्तेः । तस्मादिह कर्मफलभोक्तारौ बुद्धिजीवात्मानौ भवितुमर्हतो न जीवात्मपरमात्मानाविति । **एवं** प्राप्ते प्रतिविधीयते—**आत्मानौ हि तद्दर्शनात्** । ऋतं पिबन्ताविति समाम्नातं तावदृतपानं प्रत्यगात्मनो धर्मो न बुद्धेन वा जगत्पितुः परमात्मन इति निर्विवादम् । प्रत्यगात्मा चैकत्वात् सहचारित्वाविशेषेऽपि परमात्मनैव सद्वितीयं सम्पत्तुमर्हति न बुद्ध्या । नहि सरूपे विद्यमाने सहचारिणि द्वितीये तादृशा विरूपेण कश्चित् सद्वितीयः सम्पद्यमानो निरीक्ष्यते । न ह्यस्य गोर्द्वितीयोऽन्वेष्टव्य इत्युक्ते केनचिदश्वो द्वितीयोऽन्विष्यते न गौरिति क्वचिदवलोक्यते । सरूपश्च प्रत्यगात्मनः परमात्मा चेतनत्वाद् । विरूपा च बुद्धिः । अचेतनत्वात् । न च तत्र कर्तृत्वोपचारोऽपि युज्यते । मुख्यकर्तृत्वसम्भवे करणे कर्तृत्वोपचारकल्पनस्यायुक्तत्वात् । कर्तृत्वं च प्रत्ययार्थत्वेन प्राधान्यादुपचरितमपि न शक्यते । गुणप्रधानसन्निधौ गुणे तत्प्रवृत्तेरङ्गीकारात् । **अत एवाहुर्न्यायविदः "गुणे त्वन्याय्यकल्पना"** इति । परमात्मनि च प्रयोजकत्वान्मुख्यं कर्तृत्वमुपपद्यते नास्त्युपचारकल्पनावकाशः । पिबतिश्चाजहत्स्वार्थयाऽपिबत्यपि तस्मिन्नुपचरितुं पार्यते । गुण-वान् । मुक्तस्य लोके गुहाप्रवेशस्तु तस्य कर्माभावेऽपि सर्वगतत्वादुपपद्यते । नहि सर्वगतः सर्वत्र भवन् हृदयप्रदेशे न भवतीति सङ्गच्छते । श्रुतयश्च हृदयगुहाश्रयत्वं प्रत्यगात्मनः परमात्मनश्चोभयोः समानं दर्शयन्ति **"तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्"** (कठ० २ । १२) इति प्रत्यगात्मनः । **गूढं**=छन्नं यथा भवति तथाऽनुप्रविष्टम् । **गुहाहितं**=हृदयगुहायां स्थितम् । **गह्वरे**=अनेकानर्थसङ्कटे तिष्ठतीति गह्वरेष्ठम् । **पुराणं**=चिर-

न्तनम् । **"योऽयं विज्ञानमयः प्राणेषु हृद्यान्तर्ज्योतिः पुरुषः"** (बृ० ४ । ३ । ७) इति च । **प्राणेषु**=अभिव्याप्तौ सप्तमी, प्राणैरभिव्याप्यः । प्राणा इन्द्रियाणि । **"वेनस्तत् पश्यन्निहितं गुहा सद्"** (यजु० ३२ । ८) **गुहा**=गुहायाम् । **"पश्यत्स्विहैव निहितं गुहायाम्"** (मुं० ३ । १ । ७) **"आविः सन्निहितं गुहाचरं नाम"** (मुं० २ । २ । १) **"यो वेद निहितं गुहायाम्"** (तै० २ । १) **"एष म आत्माऽन्तर्हृदये"** (छां० ३ । १४ । ३) **"स वा एष आत्मा हृदि"** (छां० ८ । ३ । ३) **"य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते"** (बृ० २ । १ । १७) इत्याद्याश्च परमात्मनः । छायातपाविति च निर्देशो जीवात्मपरमात्मपक्षेऽपि सूपपद्यते । जीवात्मा हि चेतनत्वात् प्रकाशस्वरूपः सन्नप्यविद्याश्रयत्वाच्छायात्मना निर्दिश्यते, परमात्मा च तदनाश्रयत्वादातपात्मनेति नास्ति तत्र काचिदनुपपत्तिः । तस्माच्छायातपात्मानौ हृदयगुहाप्रविष्टौ यौ द्वौ समाम्नातौ तौ जीवात्मपरमात्मानौ भवतः ॥ ११ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"विशेषणाच्च"** ॥ १२ ॥

गुहां प्रविष्टावात्मानावित्यनुवर्तते । पूर्वत्रेवायं हेतुरिति चार्थः । **विशेषणात्**=विशेषणं भेदनं भेदेन निरूपणं, तस्मात्—उत्तरत्र विभिद्य निरूपणात् प्रतिपद्यते नूनं गुहां प्रविष्टौ जीवात्मपरमात्मानौ भवत इत्यर्थः ।

यौ हि पूर्वं समुच्चित्य निरूप्येते तावेव प्रतिपत्तिसौकर्यार्थमुत्तरत्र विशिष्य निरूप्येते इत्यस्ति शास्त्रविदां परामर्शः । उत्तरत्र च जीवात्मपरमात्मानावेव विशिष्य निरूप्यमाणौ दृश्येते **"यः सेतुरीजानानामक्षरं ब्रह्म यत्परम् । अभयं तितीर्षतां पारं नाचिकेतं शकेमहि"** (कठ० ३ । २) इति परमात्मा । **ईजानानाम्**=ईजिर्गतिकर्मा । नाचिकेतं=नाचिकेतकर्मणा प्राप्यम । **"आत्मेन्द्रियम-**

**नेत्युक्तं भोक्तेत्याहुर्मनीषिणः"** ( कठ० ३ । ४ ) इति च जीवात्मा । नहि पूर्वत्र बुद्धिजीवात्मनोराम्नानेऽनन्तरं दृश्यमानमिदं जीवात्मपरमात्मनोर्विशिष्य निरूपणं कथञ्चित् सङ्गच्छते । न च **"उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत । क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति ।१४। अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात् प्रमुच्यते"** ( कठ० ३ । १४–१५ ) इति तद्बोधर उपसंहारोऽपि घटते । स्पष्टं चेह संसारदुःखादात्मानं मोचयितुकामानां बोध्यः परमात्मा तद्बोद्धा जीवात्मा चेत्युभयमुपसंह्रियते । सर्वत्रोपक्रमोपसंहारयोश्चैकवाक्यत्वं न्याय्यम् । प्रकरणं चेदं परमात्मनः सुव्यक्तम् । **"ब्रह्मविदो वदन्ति"** इति लिङ्गमपि चैतदुपोद्बलयति । तस्मादिह गुहां प्रविष्टौ जीवात्मपरमात्मानौ स्त इति सिद्धम् ॥

कश्चित्तु **"विशेषणाच्च"**=**"ब्रह्मविदो वदन्ति"** इति विशेषणोपादानाच्चेह हृदयगुहाप्रविष्टौ जीवात्मपरमात्मानौ गम्येते इत्यर्थापयति । तस्य च विशेषणमिदं बुद्धिजीवात्मपरिग्रहे नोपपद्यते जीवात्मपरमात्मपरिग्रहे तु तदुपपत्तिरतिरोहितेत्याकूतम् ॥

एष एव न्यायः **"द्वा सुपर्णा सयुजा सखाया"** ( मुं० ३ । १ । १ ) इत्येवमादिवाक्येष्वपि योजयितव्यः । तत्रापि हि जीवात्मपरमात्मानावेव रूपकेण सुपर्णावुच्येते नान्यौ प्राकृतौ कौचन । अध्यात्माधिकारे तद्वचनानौचित्यात् । वाक्यं चेदं व्याख्यातमधस्तात् । **"विशेषणाच्च"** इत्यस्योदाहरणं तु **"समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः"** ( मुं० ३ । १ । २ ) इत्यनन्तरं श्रुतिवचनं द्रष्टव्यम् ॥ १२ ॥

हृदयान्तरः परब्रह्म परमात्मा निर्णीतः । अक्ष्यन्तरं तं निर्णेतुकामोऽधिकरणान्तरमारचयति—

**"अन्तर उपपत्तेः" ॥ १३ ॥**

ब्रह्मेत्यधिक्रियते । **अन्तरः**=छान्दोग्ये पठितोऽक्ष्यभ्यन्तरः पुरुषः परब्रह्म परमात्मा प्रत्येतव्यः, कुतः? **उपपत्तेः**=अमृतत्वादिगुणजातस्य तत्रैवोपपत्तेरित्यर्थः ।

छान्दोग्ये ह्युपकोसलविद्यायां पठ्यते **"य एषोऽक्षिणि पुरुषो दृश्यते एष त आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति । तद् यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति"** (छां० ४।१५।१) इत्यादि। तत्र संशयः किं योऽयमक्ष्यन्तरः पुरुषोऽत्र निर्दिश्यते स जीवात्मा स्यादथवा परमात्मेति । कुतः संशयः? शब्दसामान्यात् । यथा हि पुरुष-शब्दः खलु जीवात्मनि प्रयुज्यमान उपलभ्यते **"एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः"** (प्र० ४।९) **"यत्रैतत् पुरुषः स्वपिति नाम"** (छां० ६। ८।१) **"योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः"** (बृ० ४।३।७) **"अत्रायं पुरुषः स्वयंज्योतिर्भवति"** (बृ० ४।३।९) इति, तथा परमात्मन्यपि प्रयुज्यमानो निरीक्ष्यते **"सहस्रशीर्षा पुरुषः"** (ऋ० ८।४।१७।१) **"दिव्यो ह्यमूर्त्तः पुरुषः"** (मुं० २।१।२) **"स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः"** (बृ० २।५।१८) **"यस्मात् परं नापरमस्ति किञ्चिद् यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्"** (श्वे० ३।९) इति । अतो युक्तः संशयः । तत्र जीवात्मेति पूर्वः पक्षः, परमात्मेति सिद्धान्तः । किंतावत् प्राप्तम्? जीवात्मेति ब्रूमः । **प्रसिद्धवदुपदेशात्** । यद्धि वस्तु पूर्वं प्रसिध्यति तदेव यदेतद्भ्यां सर्वनामशब्दाभ्यां परामृश्योपदिश्यते । नहि नो चेन् प्रसिध्येत् तथा चोपदिश्येतेति युज्यते । प्रसिद्धश्च सर्वस्यात्मत्वाज्जीवात्मा विद्यत न

परमात्मा । **दृश्यत इति प्रयोगाच्च ।** दर्शनमिहैन्द्रियकं खल्वभिप्रेतमिति गम्यते । प्रसिद्धदर्शनस्यैन्द्रियकत्वनियमात् । प्रयुज्यमानं तद्गोचरत्वं च जीवात्मनः सम्भवति, न जातु परमात्मनः । तस्य **"यन्मनसा न मनुते येनाहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि"** (के० १ । ५) **"यत्तदद्रेश्यम्"** (मुं० १ । १ । ६) इत्यादिभिः श्रुतिभिस्तद्गोचरतायाः प्रतिषेधात् । इह च प्रसिद्धवदुपदिशन्ती श्रुतिस्तस्य तद्गोचरतां विस्पष्टं प्रतिपादयति **"य एषोऽक्षिणि पुरुषो दृश्यते, एष त आत्मा"** (छां० ४ । १५ । १) इति । श्रुत्यन्तरेऽपि च जीवात्मगोचरः प्रसिद्धवत्तथोपदेशः श्रूयते **"तौ ह प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो दृश्यते एष त आत्मा"** (छां० ८ । ७ । ४) इति । तौ=इन्द्रविरोचनौ । न च परमात्मगोचर एष भगवतः प्रजापतेरुपदेश इति युक्तं मन्यामहे । अग्रे जाग्रदाद्यवस्थातो विविक्तस्य प्रत्यगात्मनो निखिलसाधनसम्पत्त्या निर्वृत्ते ब्रह्मदर्शने जीवन्मुक्तिसुखभोगानन्तरं विदेहमुक्तिवेलायाम् **"एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते"** (छां० ८ । १२ । ३) इति परज्योतिःपरमात्मोपसम्पत्तेर्व्यक्तमनुशासनात् । नहि स्वस्य स्वोपसम्पत्तिरनुशासितुं शक्यते । जीवात्मनस्तु शिष्यमाणा सा घटते । **"ब्रह्मविदाप्नोति परम्"** (तै० २ । १) इत्यादिश्रुतिभ्यस्तथैवावगमात् । अमृतत्वादयो गुणाश्च तत्र कथञ्चिदुपपादयितुं शक्यन्ते । अक्षिणीति स्थानविशेषनिर्देशश्चानुकूलोऽतिरोहितः । तस्मादत्र पठितोऽक्ष्यभ्यन्तरः पुरुषो जीवात्मैव प्रतिपत्तव्यो न परब्रह्म परमात्मेति । **एवं** प्राप्तेऽभिधीयते **अन्तर उपपत्तेः** । परमात्मैवाक्ष्यभ्यन्तरः पुरुषः खल्विह निर्दिष्टो वेदितव्यः । उपदिश्यमानस्य गुणजातस्य तत्रैवाञ्जस्येनोपपत्तेः । अत्र हि ये तावदमृतत्वाभयत्वसंयद्वामत्वप्रभृतयो गुणा उपदिश्यन्ते **"एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्म"** (छां० ४ । १५ । १) **"एतं संयद्वाम इत्याचक्षते, एतं हि सर्वाणि वामान्यभिसं-**

यन्ति" (छां० ४।१५।२) **"एष उ एव वामनीः, एष हि सर्वाणि वामानि नयति"** (छां० ४।१५।३) **"एष उ एव भामनीः, एष हि सर्वेषु लोकेषु भाति"** (छां० ४।१५।४) इति। तेषाममृतत्वाभयत्वयोर्जीवात्मनि कथञ्चिदुपपत्तावपि संयद्वामत्वादयः परब्रह्मणि परमात्मन्येवाञ्जस्येनोपपद्यन्ते। नहि जीवात्मा संयद्वामो वामनीर्भामनीर्वा कर्हिचित् सम्भवति। कर्मफलोदयहेतुवचनो हि **संयद्वाम**-शब्द इह प्रयुज्यते। **संयन्ति** समुदयं गच्छन्ति **वामानि**=वननीयानि सम्भजनीयानि शोभनानि कर्मफलान्यनेनेति तद्व्युत्पत्तेः। **वामनी**-शब्दश्च प्रतिप्राणिभेदं कर्मफलनयनकर्तरि **भामनी**-शब्दश्च यः स्वयं भासमानः परान् भासयते भानं नयते तत्र प्रयुक्त इत्यपरोक्षम्। परमात्मा च तथा श्रुतिस्मृतिभ्योऽवगम्यते न जीवात्मा **"अहं राष्ट्री सङ्गमनी वसूनाम्"** (ऋ० ८।७।११।३) **"कर्माध्यक्षः सर्वभूताधिवासः"** (श्वे० ६।११) **"मया सोऽन्नमत्ति"** (ऋ० ८।७।११।४) **"स वा एष महानज आत्माऽन्नादो वसुदानः"** (बृ० ४।४।२४) **"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"** (मुं० २।२।१०) **"यदादित्यगतं तेजो जगद् भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्"** (गी० १५।१२) इति। सर्वभूतान्तरात्मतया जगज्जन्मादिकारणतया च परब्रह्म परमात्माऽपि प्रसिध्यतितरामिति तस्य प्रसिद्धवदुपदेशोऽपि न विरुध्यते। दर्शनं चेह न विशिष्टमभिप्रेयते किन्तु दर्शनमात्रम्। तच्च ब्रह्मणोऽप्युपपद्यते। तस्यैन्द्रियकदर्शनाविषयत्वेऽप्यात्मना स्वेन द्रष्टुं शक्यत्वात्। अत एव च **"यत्तदद्रेश्यम्"** इत्युपक्रम्याह श्रुतिः **"यद्भूतयोनिं परिपश्यन्ति धीराः"** (मुं० १।१।६) इति। **"तमात्मस्थं येऽनुपश्यन्ति धीराः"** (कठ० ५।१२) इति च

श्रुत्यन्तरम् । अक्षिणीति स्थाननिर्देशश्च परब्रह्मणः परमेश्वरस्याप्यानुकूल्यं व्याभज्यते । सादृश्यात् । यथा ह्येष सर्वलेपरहितः, यत्रेदमाम्नातं "**सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः**" ( कठ० ५ । ११ ) इति, तथाऽक्षिस्थानमपि सर्वलेपरहित-मिह निर्दिश्यते "**तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति**" ( छां० ४ । १५ । १ ) इति । न च सादृश्यनिबन्धने निर्देशेऽभ्युपगम्यमाने भवति कश्चिद्दोषः । तस्मात् परब्रह्म परमात्मैवात्राक्ष्यभ्यन्तरः पुरुषः पठ्यत इति निश्चेतव्यम् ॥ १३ ॥

**अत्रैव** हेत्वन्तरं समुच्चिनोति—

**"स्थानादिव्यपदेशाच्च"** ॥ १४ ॥

अन्तर इत्यनुवर्तते । ब्रह्मेति पूर्ववदभिक्रियते । पूर्वत्रैवायं हेतुरिति चकारेणोच्यते । **स्थानादिव्यपदेशात्**=उपासनव्यपदेशः, तत्फल-व्यपदेशश्चादिपदार्थः, व्यपदेश उपदेश अनुशासनम्, आदित्यचन्द्र-विद्युल्लक्षणस्थानादेरुपदेशाद् गम्यतेऽन्तरः परब्रह्म परमेश्वर इत्यर्थः ।

**गार्ह**पत्यादयो ह्यग्नयः खलु प्रत्येकमुपदेशाय प्रवर्तमाना उपक्रान्तस्य प्राणरूपस्य परब्रह्मणः परमेश्वरस्यादित्यं चन्द्रमसं विद्युदिति च स्थानत्रयं शासित्वाऽनन्तरं यस्यान्तरवस्थानादादित्यादयोऽमी ग्रहोपग्रहभेदा निरन्तरं भासन्ते वयं च भासामहे, यत्तेजसा तेजस्विनो भवन्तश्च वयं नात्मानं ततो व्यतिरिक्तं कालत्रयेऽपि मन्तुमीश्महे, अपि च तदेवेति सर्वदा वक्तुं सहामहे, तद् ब्रह्म त्वयोपासितव्यमित्युपासनं तत्फलं चोपदिशन्ति "**य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि । १ । स य एतमेवं विद्वानुपास्ते अपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग् जीवति नास्यावरपुरुषाः क्षीयन्ते**" ( छां० ४ । ११ । १–२ ) इति । अपहते=अपहन्ति, पापकृत्यां=पापं कर्म, लोकी=ब्रह्मलोकाधिकारी, ज्योग्=व्याधिभिरनुपहतः

प्रख्यातश्च जीवति=यावद्ब्रह्मलोकप्राप्ति प्राणान् धारयति, अस्य=उपासकस्यावरपुरुषाः=शिष्यप्रशिष्यादयः पुत्रपौत्रादयश्च न क्षीयन्ते=स्वाधिकारान्न प्रच्यवन्ते अब्रह्मोपासका न जायन्त इति यावदिति श्रुतिपदार्थः । न च गार्हपत्यादीनामेष उपदेशस्तावत् परमात्मतो भिन्नगोचरः कथञ्चिदुपपद्यते । तद्भिन्नस्यादित्ये चन्द्रमसि विद्युति च युगपदवस्थानासम्भवात् । नहि तद्भिन्नोऽणुरयं जीवात्मा यदाऽऽदित्येऽवतिष्ठते तदैव चन्द्रमसि विद्युति चावस्थातुं पारयते । न चादित्यचन्द्रमोविद्युतो वा तद्भानेन भान्तुं कल्पन्ते, फलं चैतदुपदिश्यमानं वा तदुपासनस्य कथञ्चित् सङ्गच्छते । ब्रह्मोपासनस्य चैतत्फलं स्वयं दर्शयिष्यति श्रुतिरुपरिष्टात् **"यथा पुष्करपलाश आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यते"** (छां० ४ । १४ । ३) इति । नास्यावरपुरुषाः क्षीयन्ते इति च ब्रह्मोपासनफलं विस्पष्टम् । **"नास्याब्रह्मवित् कुले भवति"** (मुं० ३ । २ । ९) इति श्रुत्यन्तरात् । व्यापकत्वाच्च ब्रह्मणो युगपदादित्ये चन्द्रमसि विद्युति चावस्थानमपि न विरुध्यते । भानं चैषां तद्भानेनासकृदुक्तम् **"तस्य भासा सर्वमिदं विभाति"** (मुं० २ । २ । १०) इत्यादिना । तस्माद् ब्रह्मगोचरोऽयमुपदेशो गार्हपत्यादीनामिति निर्विवादम् । यस्य खलु परब्रह्मणः परमेश्वरस्यादित्यादिकं स्थानमुपासनं तत्फलं च गार्हपत्यादिभिरग्निभिरनुशिष्यते स एव परमपुरुषो ब्रह्माक्षिण्याचार्य्येणाप्युपदिश्यते । नहि तदनुशिष्टादन्यस्योपदेशे पापापहतिलक्षणफलसामान्यं स्थानसामान्यं च कथञ्चिद् घटते । अक्षिसूर्य्यौ चाध्यात्मिकाधिदैविके चक्षुषी सुप्रसिद्धे । स्थानमात्रभेदेन च नोपास्यस्य स्थानिनो भेदो भवितुमर्हति । तस्मादत्र परमात्मैवाक्ष्यभ्यन्तरः पुरुष इति निर्विप्लवम् ॥ १४ ॥

अत्रैव हेत्वन्तरमवतारयति–

**"सुखविशिष्टाभिधानादेव च"** ॥ १५ ॥

अन्तर इत्यनुवर्तते । ब्रह्मेति पूर्ववदधिक्रियते । पूर्वत्रैवायं हेतुरिति

चकारेणोच्यते। पूर्वत्रोपक्रमेऽभिहितस्यैवेहोपसंहारेऽक्षिण्यभिधानं नान्यस्येत्येवकारेणावध्रियते। **सुखविशिष्टाभिधानात्**=सुखमानन्दः, अभेदोऽत्र वैशिष्ट्यम्, उपक्रमेऽभिहितस्य सुखस्वरूपस्य ब्रह्मणोऽक्षिण्यभिधानाद् गम्यते तदन्तरः पुरुषो ब्रह्मेत्यर्थः।

वाक्योपक्रमे हि सम्भूय गार्हपत्यादिभिरग्निभिरुपकोसलाय **"प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म"** (छां० ४।१०।५) इत्युपदिष्टमुपलभ्यते। अस्यार्थं विज्ञातुमुपकोसलेन **"विजानाम्यहं यत् प्राणो ब्रह्म, कं च तु खं च न विजानामि"** (छां० ४। १०।५) इत्युक्ते च **"यद्वाव कं तदेव खं, यदेव खं तदेव कम्"** (छां० ४।१०।५) इति तेषां प्रतिवचनं निरीक्ष्यते। अनेन च न खलु खशब्दवाच्यं भूताकाशं कशब्दवाच्यं वैषयिकं सुखं चात्र ब्रह्मोपदिश्यते, किन्तु यत्सर्वस्य जगतः प्राणनक्रियाहेतुत्वात् प्राणः, आकाशवद् व्यापकं सुखस्वरूपं च ब्रह्म, तदेवेहोपदिश्यत इति स्फुटमवगम्यते। सामानाधिकरण्यं च प्राणस्वरूपं सुखस्वरूपं व्यापकं च ब्रह्मेति बोधनाय प्रदर्श्यते, न प्राणे के खे च लौकिके ब्रह्मबुद्धिविधानार्थम्। अपसिद्धान्तापातात्। अविद्या हि सा तदा भवेन्न विद्या। विद्योपदेशाय चारम्भः **"एषा सोम्य! तेऽस्मद्विद्या"** (छां० ४।१४।१) इति विद्यात्वनिगमनाच्च। एतदेव च **"यद्वाव कं तदेव खं यदेव खं तदेव कम्"** इत्यवधारणेनावबोध्यते। तदेवं वाक्योपक्रमे सुखस्वरूपं ब्रह्माभिहितमिति भवति हस्तामलकायितम्। यदेतत् खलु वाक्योपक्रमे सुखस्वरूपं ब्रह्माभिहितं तदेव मध्येऽपि प्रत्येकमुपदेशाय प्रवर्तमानैर्गार्हपत्यादिभिरग्निभिरादित्यादिस्थानेष्वभिधीयते, अन्ते चाचार्य्येणापि तदेवाभिधातव्यमिति युक्तं प्रतीयते। प्रकृतपरिग्रहस्यैव न्याय्यत्वात्। अन्यथा हि प्रकृतहानाप्रकृतप्रक्रिये स्याताम्। प्रत्येकं च गार्हपत्यादयोऽग्नयः स्वस्वबुद्ध्यनुसारेण ब्रह्मोपदिश्य **"एषा सोम्य! तेऽस्मद्विद्याऽऽत्मविद्या च"** (छां० ४।१४।१) इत्युपसंहरन्तः पूर्वत्रोपक्रमे सुखस्वरूपं ब्रह्माभिहितमिति व्यक्तमवबोधयन्ति। **"आचार्य्यस्तु**

**ते गतिं वक्ता"** ( छां० ४ । १४ । १ ) इत्याचार्य्यस्य गतिमात्राभिधानं कीर्तयन्तश्चार्थान्तरविवक्षां वारयन्ति । स्वयमाचार्य्योऽपि च **"लोकान् वाव किल सोम्य ! तेऽवोचन्, अहं तु ते तद् वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते"** ( छां० ४ । १४ । ३ ) इत्यग्नीनां लोकानधिकृत्य वर्तमानस्य पुरुषस्योपदेशमभिधायात्मनोपदेक्ष्यमाणमक्षिस्थानं पुरुषं विजानतः पापेनानुपघातं फलं व्याचक्षाणः स्वोपदिष्टमग्न्युपदिष्टं पुरुषं चैकं दर्शयति । नह्युभयोरनेकत्वे तद्विजानतः पुरुषस्यैकविधं फलमुपदेष्टुं शक्यते । गार्हपत्याद्यग्निभिरादित्यादिस्थानं पुरुषं ध्यायतो यत्पापानुपघातलक्षणं फलमुपदिष्टं तदेवाचार्य्येणाक्षिस्थानं पुरुषं ध्यायतोऽप्यनुशिष्यते । फलसामान्यानुशासनाच्चोभयत्रैकः पुरुषो ध्येय इति सुखेन प्रतिपद्यते । अनेन चादौ मध्येऽन्ते चैकस्यैव परब्रह्मणः पुरुषस्योपदेशात् प्रकरणमपि ब्रह्मैकविद्यागोचरतां बाभज्यमानं संश्लिष्यते । ये तु मध्येऽग्निविद्यामादावन्ते च ब्रह्मविद्यां व्याहरन्ति ते वैदिकैरुपेक्ष्याः । सम्भवति प्रकरणैकत्वे तदनेकत्वकल्पनस्यानौचित्यात् । मध्ये विद्यान्तराभ्युपगमे चोपक्रमोपसंहारयोरैक्यानुपपत्तेः । न च सम्भूयोपदेशाय प्रवृत्ताः खलु गार्हपत्यादयः सुखस्वरूपं ब्रह्मोपदिशन्ति प्रत्येकं प्रवर्तमानाश्चाग्निविद्यामिति सम्भावयितुमपि शक्यते । तस्माद् यदुपक्रमे सुखस्वरूपं ब्रह्माभिहितं तस्यैवेहाचार्य्येणाभिधानात् सिध्यति नूनमक्ष्यभ्यन्तरः पुरुषः परमात्मा ॥ १५ ॥

अत्रैवान्यं हेतुं दर्शयति–

**"श्रुतोपनिषत्कगत्यभिधानाच्च"** ॥ १६ ॥

अन्तर इत्यनुवर्तते । ब्रह्मेति पूर्ववदधिक्रियते । पूर्वत्रैवायं हेतुरिति चकारार्थः । **श्रुतोपनिषत्कगत्यभिधानात्**=श्रवणमनुष्ठानम्, उपनिषद् ब्रह्मविद्या ब्रह्मोपासना, श्रुता–अनुष्ठिता उपनिषत्–ब्रह्मविद्या येन स श्रुतोपनिषत्कः, तस्य या गतिः, तस्या इहाक्षिपुरुषविदोऽभिधानाद् गम्यतेऽक्ष्यभ्यन्तरः पुरुषः परमात्मेत्यर्थः ।

या हि खलु भगवतो ब्रह्मविदो ब्रह्मोपासकस्य देवयानाख्या गतिराकर्ण्यते "अथोत्तरेण तपसा ब्रह्मचर्य्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्यादित्यमभिजयन्ते । एतद् वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्ते" (प्र० १ । १०) "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद् यान् षडुदङ्केति मासाँस्तान् । १ । मासेभ्यः संवत्सरं संवत्सरमादित्यमादित्याचन्द्रमसं चन्द्रमसो विद्युतं, तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष देवयानः पन्था" (छां० ५ । १० । १-२) "ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिरभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद् या षण्मासानुदङ्ङादित्य एति, मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद् वैद्युतं तान् वैद्युतान् पुरुषो मानस एत्य ब्रह्मलोकान् गमयति, ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः" (वृ० ६ । २ । १५) इति । "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" (गी० ८ । २४) इति च । सैवात्राक्षिपुरुषविदोऽप्यभिधीयमाना दृश्यते "अथ यदु चैवास्मिन् शव्यं कुर्वन्ति यदि च न, अर्चिषमेवाभिसम्भवन्ति" इत्युपक्रम्य "आदित्याचन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" (छां०४।१ ।५) इति। चेदयं पुरुषः परमात्मा न भवेत्, न जातु तद्विदां गतिरेतद्विदोऽभिधीयेत । नहि यो यत्र भवति तद्विदस्तद्विदां गतिः कर्हिचिदभिधातुं शक्यते । अभिधीयते च । तदिदं भवत्यस्य ब्रह्मत्वे सुदृढं लिङ्गम् । तस्मात् प्रतिपद्यते नूनमक्ष्यभ्यन्तरः पुरुषः परमेश्वर इति ॥१६॥

**सिद्धान्त** उपपादितः । **सम्प्रति** पूर्वपक्षं निरस्यन्नाह—

**"अनवस्थितेरसम्भवाच्च नेतरः"** ॥ १७ ॥

अन्तर इत्यनुवर्तते । **अनवस्थितेः**=सर्वदाऽक्षिण्यवस्थानाभावाद् **असम्भवाच्च**=अमृतत्वादिगुणजातस्य सम्भवाभावाच्च **इतरः**=परमात्मनोऽन्यो जीवात्मा **न**=अक्ष्यभ्यन्तरः पुरुषो न भवतीत्यर्थः ।

**जागरितं** स्वप्नः सुषुप्तिश्चेति तिस्रोऽवस्था जीवात्मनो भवन्ति । ताः सविस्तरमिह तृतीये प्रवक्ष्यन्ते । तासामेष सुषुप्त्यवस्थायां हृद्यवतिष्ठते, स्वप्नावस्थायां हृदयान्मूर्द्धानमभिनिःसृतायां कण्ठगायां नाड्यां, जागरितावस्थायां च मूर्द्धनि । मूर्द्धा भ्रुवोर्मध्यं स्थानं, तत्रावस्थितः सान्निध्यादक्षिणीति व्यपदिश्यते, यथा हृदयस्थे ब्रह्मण्यवस्थितो हृदि सुषुप्त्यवस्थायाम् । यथा हि भगवतः परमेश्वरस्य तावद् द्वयी शक्तिर्वर्तते क्रिया ज्ञानं च, तथा जीवात्मनोऽपि द्वयी शक्तिर्विद्यते क्रिया ज्ञानं च । तत्र क्रियाशक्तिमपेक्ष्य हृदि, ज्ञानशक्तिमपेक्ष्य च मूर्द्धनीति व्यवह्रियते । मूर्द्धन्यवस्थितस्याक्षिणीति व्यवहारश्च बाह्यविषयदर्शनद्वारत्वाद् गवाक्षे सौधस्थस्येवौपचारिको द्रष्टव्यः । न चाणुपरिमाणस्यास्य जीवात्मनो युगपद् हृदयेऽक्षिणि चावस्थानमुपपद्यते । नहि परिच्छिन्नः कश्चिदेकत्रावस्थितोऽन्यत्राप्यवस्थातुमर्हति । योगिनस्तु नानाचेतोभिरनेकत्र वर्तमाना अप्यात्मनैकत्रैवावतिष्ठन्ते न सर्वत्र । **न** चामृतत्वादयो गुणा अपि जीवात्मनि सम्भवन्ति । नहि स कथञ्चिदमृतोऽभयो भवन्नपि संयद्वामो वामनीर्भामनीरिति च सम्भवति । अवस्थाभेदेऽपि च तदैश्वर्यस्य सावग्रहत्वाभ्युपगमान्न शक्यते संयद्वामत्वादिगुणसम्भवः कर्हिचिदुपपादयितुम् । परमात्मनि च तत्सम्भवो बहूपपादितोऽस्माभिरधस्तात् । तस्मात् स एवात्राक्ष्यभ्यन्तरः पुरुषो न जीवात्मेति निःसंशयम् ॥ १७ ॥

**इदानीं** समानार्थकं श्रुत्यन्तरं निर्णिनीषुरन्यमधिकरणमारभते—

**"अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्"** ॥१८॥

**ब्रह्मे**त्यधिक्रियते । **अधिदैवादिषु**=अधिदैवशब्देन पृथिव्यबग्न्य-

न्तरिक्षवाय्वादित्यदिक्चन्द्रतारकाकाशतमस्तेजांसि गृह्यन्ते, **दैवात्** दिव्यगुणानधिकृत्याश्रित्य वर्तमानत्वात्, दिव्यगुणा दैवा इति च सुव्यक्तम्, देवानामयमीति तद्धुत्पत्तेः, देवत्वं च पृथिव्यादीनामाम्नातं साक्षाद् भगवति वेदे **"अग्निर्देवता वातो देवता"** (यजु० १४ । २०) इत्यादिषु, भूतप्राणवागादयश्चादिपदार्थाः, तेष्वधिदैवादिषु पृथिव्यादिष्व-**न्तर्य्यामी**=बृहदारण्यकेऽन्तर्य्यामिब्राह्मणे श्रुतोऽन्तर्य्यामी परब्रह्म परमात्मा प्रत्येतव्यः, कुतः? **तद्धर्मव्यपदेशात्**=तदाऽधिक्रियमाणं ब्रह्म परामृशति, तद्धर्मस्य यमयितृत्वादेरभिधानादित्यर्थः।

बृहदारण्यके ह्यन्तर्य्यामिब्राह्मणे **"य इमं च लोकं परं च लोकं सर्वाणि च भूतान्यन्तरो यमयति"** (बृ० ३ । ७ । १) इत्युपक्रम्य श्रूयते **"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्य्याम्यमृतः"** (बृ० ३ । ७ । १) इत्यादि। **"पृथिव्याः"** इति पञ्चमी विभक्तिः **"योऽन्तरिक्षे तिष्ठन्नन्तरिक्षादन्तरः"** इत्यादिष्वग्रिमपर्य्यायेषु सर्वत्र तद्दर्शनात्, **अन्तरः**=बाह्यो भिन्न इति यावत्। तत्र संशयः किमिह प्रधानशब्दवाच्या जगज्जननी प्रकृतिरन्तर्य्यामीति निर्दिश्यते, किं वा जीवात्मा, यद्वा परब्रह्म परमात्मेति। कुतः संशयः? यमयितृत्वस्याशरीरिणि शरीरिणि चोभयत्र दर्शनात्। दृश्यते खलु जीवात्मा शरीरमिन्द्रियं मनश्चाशरीरो नियच्छति, भृत्यं पुत्रं भार्यां च सशरीर इति। प्रकृतिः परमात्मा चाशरीरः। जीवात्मा च सशरीरोऽशरीरश्च। तस्माद् युक्तः संशयः। तत्र प्रकृतिर्जीवात्मा वाऽन्तर्य्यामीति पूर्वः पक्षः, परब्रह्म परमात्मा चेति सिद्धान्तः। **किं** तावत् प्राप्तम्? प्रकृतिरिति वदामः। **कारणत्वात्**। कारणतन्त्राः खलु सर्वे विकाराः सर्वदा सर्वत्रात्मानं लभन्ते, लब्धात्मानश्चार्थक्रियां कुर्वते। येषां चात्मलाभार्थक्रियाकारित्वे यत्तन्त्रे, तेषां तन्नियम्यत्वं तस्य तन्नियमयितृत्वं च निर्बाधम्। सर्वविकारकारणं च भगवती प्रकृतिः। अतः सैवाधिदैवादिष्वन्तर्य्यामीति युक्तं विज्ञायते। अथवा

जीवात्मेति निगदामः। तस्यापि योगाभ्यासतो ब्रह्मदर्शनसम्पत्त्या प्राप्तसकलैश्वर्य्यस्य विश्वनियन्तृत्वोपपत्तेः। **यदा** हि खल्वेष जीवात्माऽध्यात्मयोगमभ्यस्यति, विघ्नैः पुनः पुनः प्रतिहन्यमानोऽपि च न क्षणमपि ततो विरमति, तदाऽस्य दीर्घकालनैरन्तर्य्यसत्कारासेवितात् तस्माद् भूतजयादिसिद्धयः प्रादुर्भवन्ति। प्रादुर्भवन्त्यश्च ता ब्रह्मदर्शनाभिरुचिं वर्द्धयन्ति न चेत्तत्रानुरज्येत्। ब्रह्मदर्शनप्राप्तौ च सर्वभावाधिष्ठाता सर्वभावज्ञाता च द्रागित्येव बोभोति। यत्रेदमुक्तं दर्शनान्तरे "**सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च**" (यो० ३। ४९) इति। ततश्चायं तत्र तत्रानेकविधदेहेन्द्रियादिकं निर्मिमाणः सर्वान् लोकान् यथाकामं नियन्तुमर्हति। देहेन्द्रियादिनिर्मातृत्वं चास्य स्मर्य्यते दर्शनान्तरे "**निर्माणचित्तान्यस्मितामात्रात्**" (यो० ४। ४) इति। श्रूयतेऽपि च "**स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा च**" (छां० ७। २६। २) इति। यथा वा जीवात्मा शरीरेन्द्रियादिकमदृष्टसम्बन्धान्नियमयति तथा पृथिव्यादीन्यपि नियमयितुं शक्नोति। जीवात्मादृष्टकारितं हि सर्वं पृथिव्यादिकं जगत्। यत्रेदमुक्तं दर्शनान्तरे "**कर्मवैचित्र्यात् सृष्टिवैचित्र्यम्**" (सां० ६। ४१) इति। वक्ष्यति च स्वयमाचार्य्योऽपि "**वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति**" (वे० २। १। ३४) "**न कर्माविभागादिति चेन्नानादित्वात्**" (वे० २। १। ३५) इति। कर्मेति कार्य्ये कारणप्रयोगः। उपचारात्। यस्य यददृष्टकारितं तस्य तन्नियम्यं वक्तुं शक्यते। अणुपरिमाणस्य च जीवात्मनः शरीरवत् सर्वत्रादृष्टकृतः सम्बन्धो युज्यते। "**यो विज्ञाने तिष्ठन्**" (बृ० ३। ७। २२) इति निर्देशश्चाभेदेऽप्यौपचारिकं भेदं परिकल्प्य यथा कथञ्चिदुपपादयितुं शक्यते "**स भगवः कस्मिन् प्रतिष्ठितः स्वमहिम्नि**" (छां० ७। २४। १) इत्यादिवत्। तस्मादिह जीवात्मैवान्तर्य्यामी समधिगम्यते न परब्रह्म परमात्मेति। **एवं** प्राप्तेऽभिधीयते—परब्रह्म परमात्मैवात्रान्तर्य्यामी समधिगन्तव्यो न प्रधानं न वा जीवा-

त्मा । **तद्धर्मव्यपदेशात्** । पृथिव्यादियमयितृत्वं ह्यत्र परमात्मधर्मस्तावद् व्यपदिश्यते न प्रधानधर्मो न वा जीवात्मधर्मः । नहि प्रधानं कारणत्वेन पृथिव्यादिविकारजातस्यान्तस्तिष्ठदपि जीवात्मानं विज्ञानमन्तस्तिष्ठन्नियमयितुमर्हति । कारणं हि विकारमन्वेति नाविकारम् । जीवात्मा च न प्रधानस्य न वाऽन्यस्य कस्यचिद्विकारः । परमात्मन इव तस्यापि कूटस्थनित्यत्वाभ्युपगमात् । **"न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे"** (कठ० २ । १८) इत्यादिश्रुतिभ्यः । श्रूयते च जीवात्मनियमयितृत्वमपि **"यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरो यमयति"** (बृ० ३ । ७ । २२) इति । **नच** विकारा अपि लब्धात्मानोऽर्थक्रियायां कचित् प्रकृतिमपेक्षन्ते । न चानपेक्षमाणानां तेषां तन्नियम्यत्वमाख्यातुं शक्यते । अर्थक्रियायाः प्रयोजको हि यमयिता भवति, तत्र प्रयोज्यस्तु यम्यः । यदा हि प्रकृतिः खलु विकारान् नार्थक्रियां प्रति प्रयोजयति, तदा नासौ तेषां यमयित्री कथञ्चिदुपपद्यते । **"एष त आत्माऽन्तर्य्याम्यमृतः"** (बृ० ३ । ७ । १) इत्यात्मत्वधर्मोऽपि परमात्मन एवाञ्जसेन घटते न प्रधानस्य प्रकृतेः । **न च** जीवात्मनोऽपि पृथिव्यादियमयितृत्वं धर्मः सङ्गच्छते । तस्याणुत्वेन पृथिव्यादिषु सर्वत्र युगपदवस्थानासम्भवात् । नह्यणुपरिमाणो जीवात्मा पृथिव्यां तिष्ठन्नप्स्वपि तिष्ठति, तत्र तिष्ठँश्च तेजस्यपि तिष्ठतीति सम्भवति । कर्मद्वारकः सम्बन्धस्तु नार्थक्रियाहेतुराश्रीयते । साक्षात्सम्बन्धस्यैव तद्धेतुत्वाभ्युपगमात् । **"यो विज्ञाने तिष्ठन्"** (बृ० ३ । ७ । २२) इत्यादौ च **"स्वमहिम्नि"** (छां० ७ । २४ । १) इत्यादिवद् भेदोपचारकल्पनक्लेशोऽपि मुधैव । **"एष त आत्माऽऽन्तर्य्याम्यमृतः"** इति भेदप्रतिपत्तेः स्पष्टत्वात् । **"यं विज्ञानं न वेद"** इति श्रूयमाणस्य स्वात्माज्ञानस्य स्वात्मनि वृत्तिविरोधाभिप्रायेण समर्थनं च नितान्तमसमञ्जसं प्रसज्यते । **न च** योगेन प्राप्तै-

श्वर्य्यस्यापि तस्य पृथिव्यादिसमस्तजगद्यमयितृत्वं धर्म उपपद्यते । तदैश्वर्य्यस्य निरङ्कुशत्वानभ्युपगमात् । जगद्व्यापारवर्जं हि तदैश्वर्य्यमभ्युपगम्यते । यत्रेदं वक्ष्यति **"जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च"** (वे० ४ । ४ । १७) इति । न च तादृक्षैश्वर्य्यस्य पृथिव्यादिसमस्तजगद्गोचरो नियमनव्यापारः सम्भवति । तदसम्भवे च पृथिव्यादिसमस्तजगद्यमयितृत्वं न तद्धर्म इत्यपरोक्षम् । परमात्मा च निरङ्कुशैश्वर्य्यः सर्वभूतान्तरात्मा चेति तस्य पृथिव्यादिसमस्तजगद्यमयितृत्वे नास्ति काचिदनुपपत्तिः । एवं च **"एष त आत्माऽन्तर्याम्यमृतः"** इति भेदव्यपदेशोऽप्यत्र मुख्यः सम्पद्यते । **"अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता"** (बृ० ३ । ७ । २३) इत्यदृष्टत्वादयो द्रष्टृत्वादयश्च धर्मा अपि परमात्मन एव सङ्गच्छन्ते न प्रकृतेर्न वा जीवात्मनः । नहि प्रकृतिरदृष्टा जीवात्मा चादृष्टो भवति । योगजधर्मसहकृतेन मनसा तद्दृष्टत्वस्याङ्गीकारात् । श्रूयतेऽपि च तद्दर्शनं योगिनाम् **"ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्"** (श्वे० १ । ३) **"अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति"** (कठ० २ । १२) इति । बाह्यविषयेभ्यो व्यावृत्य यथाशास्त्रं मनसोऽन्तरात्मनि योजनमध्यात्मयोगः, तस्य प्राप्तिरधिगमः, तेन, देवं=करणाधिपं प्रत्यगात्मानं, मत्वा=साक्षात्कृत्येति चरमश्रुतिपदार्थः । द्रष्टृत्वादयश्चात्रानैन्द्रियका अभिप्रेयन्ते । तेन प्रकृतेरचेतनत्वात्प्रत्यगात्मनश्च चेतनत्वेऽपि द्रष्टृत्वादेरैन्द्रियकत्वात् तेऽपि तद्धर्मा नोपपद्यन्ते । **ननु** कुतोऽवगम्यते [illegible]त्वादयोऽत्रानैन्द्रियका अभिप्रेयन्त इति चेत्? **उच्यते**—द्रष्ट्रन्तरादिप्रतिषेधात् । **"नान्योऽतोऽस्ति द्रष्टा, नान्योऽतोऽस्ति श्रोता"** (बृ० ३ । ७ । २३) इत्यादौ हि वाक्यशेषे द्रष्ट्रन्तरादेः प्रतिषेधः श्रूयते । न च स द्रष्ट्रन्तरादिमात्राभिप्राय इति वक्तुं शक्यते । परमात्मनोऽन्यस्य प्रत्यगात्मनो द्रष्ट्रन्तरस्य विद्यमानत्वात् । न च स परमार्थतः परमात्मनो न भिद्यत इति प्रामाणिकं वचः । भेदस्याग्रे व्यपदेक्ष्यमाण-

त्वात्। अविद्याप्रत्युपस्थापितकार्य्यकरणोपाधिनिमित्तोऽयं शरीरान्तर्य्यामिणोर्भेदव्यपदेशो न पारमार्थिक इति तु स्वशिष्यव्यामोहनमन्त्रमात्रम्। विद्यास्वभावे ब्रह्मण्यविद्यावस्थानानुपपत्तेरसकृदुक्तत्वात्। द्रष्ट्रन्तरादिविशेषाभिप्राये तु द्रष्टृत्वादयोऽत्रानैन्द्रियका अभिप्रेयन्त इति युक्तमभ्यूहते। शारीरस्य जीवात्मनो द्रष्टृत्वादिकं चैन्द्रियकं प्रत्यक्षम्। पश्यति चक्षुषा शृणोति श्रोत्रेणेत्यादिप्रत्ययात्। परब्रह्मणः परमेश्वरस्य चानैन्द्रियकम् **"पश्यत्यचक्षुः स शृणोत्यकर्णः"** (श्वे० ३। १९) इत्यादिश्रुतिभ्यः। तथा च द्रष्ट्रन्तरादिप्रतिषेधवचनस्य स्वरसत एवैषोऽर्थो निष्पद्यते "यादृक्षोऽन्तर्यामी परमेश्वरः खलु द्रष्टा श्रोता वर्तते तादृक्षोऽतोऽन्यः कश्चन द्रष्टा श्रोता न विद्यते" इति। न च तन्निष्पत्तौ सत्याम-द्रष्टृत्वादयो द्रष्टृत्वादयश्च प्रकृतिपुरुषयोर्धर्माः पुनः सङ्गच्छन्ते। परमात्मनस्तद्धर्मत्वे च नास्ति किञ्चिन्नामासाङ्गत्यम्। **अत एव** स्मर्यते दर्शनान्तरे **"साक्षात्सम्बन्धात् साक्षित्वम्"** (सां० १। १६१) इति। तस्मात् परमात्मैवात्रान्तर्यामी॥ १९॥

**सि**द्धान्त उपपादितः। **पू**र्वपक्षं व्युदस्यन्नाह—

**"न च स्मार्तमतद्धर्माभिलापात्"** ॥ १९॥

अन्तर्य्याम्यधिदैवादिष्वित्यनुवर्तते। **स्मार्तं**=श्रुतिषु संक्षेपेण वर्णितत्वेऽपि स्मृतिषु विस्तरेण वर्णितत्वात् स्मार्तं प्रधानं प्रकृतिरिति यावन्न **च**=अधिदैवादिषु श्रुतोऽन्तर्य्यामी नैव भवितुमर्हति, कुतः? **अतद्धर्माभिलापात्**=अभिलापो व्यपदेशः, तद्धर्मव्यपदेशाभावादित्यर्थः।

**यदि** हि प्रधानधर्मा इहाभिलप्येरन् तदाऽवश्यमेतदन्तर्य्यामिशब्दं परिकल्प्येत। धर्माश्रयतया धर्मिकल्पनोपपत्तेः। न चेह तद्धर्मा अभिलप्यन्ते। ये चाभिलप्यन्ते यमयितृत्वप्रभृतयो द्रष्टृत्वादिपर्य्यन्ताः, न ते तद्धर्माः सम्भवन्ति। तदसम्भवश्च सोपपत्तिकमुपपादितः पूर्वसूत्रे। तस्मान्नान्तर्य्यामिशब्दमत्र स्मार्तं प्रधानम्॥ १९॥

भवतु तर्हि शारीरो जीवात्माऽत्रान्तर्यामिशब्दः? तत्राह—

**"शारीरश्चोभयेऽपि हि भेदेनैनमधीयते" ॥ २० ॥**

अन्तर्य्याम्यधिदैवादिषु, न चेति चानुवर्तेते । चोऽप्यर्थः । **शारीरश्च**=शरीरे भोक्तृतया विद्यमानो जीवात्माऽप्यधिदैवादिषु श्रुतोऽन्तर्य्यामी नैव भवितुमर्हति, कुतः ? **हि**=यस्माद् **उभयेऽपि**=काण्वा माध्यन्दिनाश्चोभयशाखिनोऽपि **भेदेन**=शारीराज्जीवात्मनः सकाशाद् भेदे**नैनम्**=अन्तर्यामिण**मधीयते**=पठन्तीत्यर्थः ।

**अतद्धर्माभिलापात्**" इति हेत्वनुवृत्तिसम्भवेऽपि शारीरान्तर्य्यामिणोर्भेदः पारमार्थिकः सूत्रकृदभिमत इति द्रढयितुं हेत्वन्तरोपन्यासः । यथा हि **"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः"** (बृ० ३ । ७ । १) इति पृथिव्यादिभ्यो भेदेनान्तर्य्यामिणं काण्वा माध्यन्दिनाश्चाधीयते, तथा **"यो विज्ञाने तिष्ठन् विज्ञानादन्तरः"** (बृ० ३ । ७ । २२) इति काण्वाः **"य आत्मनि तिष्ठन्नात्मनोऽन्तरः"** (बृ० ३ । ७ । ३०) इति माध्यन्दिनाश्च जीवात्मनोऽप्येनं भेदेनाधीयते । यदि हि जीवात्माऽत्रान्तर्य्यामिशब्द इष्येत तदा न ततोऽन्तरोऽन्तर्य्यामी तावदधीयेत । नहि स्वस्मादन्तरः स्वमिति कचिदधीयते । माध्यन्दिनानामात्मशब्दः शारीरस्य वाचक इति निःसंशयम् । काण्वानां तत्स्थाने पठितत्वाद् विज्ञनशब्दोऽपि तद्वचन इति निश्चीयते । प्रयुज्यते च विज्ञानशब्दो जीवात्मवचनः श्रुत्यन्तरेऽपि **"विज्ञानं यज्ञं तनुते"** (तै० २ । ५) इति । अन्तर इत्यस्य च 'भिन्न इत्यर्थः इति सूत्रकृद्वचनादेवावधार्य्यते । नह्याचार्य्योऽन्तरशब्दस्य भिन्नार्थकत्वाभावे **"भेदेनैनमधीयते"** इति सूत्रयितुमर्हति । न च **"यो विज्ञाने तिष्ठन्" "य आत्मनि तिष्ठन्" "एष त आत्मा"** इत्यानुमानिकभेदाभिप्रायेण सूत्रकृत्सूत्रणमिति युक्तं कल्प्यते । **"श्रुतानुमानयोः श्रुतसम्बन्धो बलीयान्"** इति न्यायेन श्रुतसम्बन्धकल्पनस्यैव न्याय्यत्वात् । श्रुतसम्बन्धासम्भवे ह्यानुमानिकसम्बन्धकल्पनं न्याय्यं मन्यते । सम्भवति चेह श्रुतसम्बन्धः । भिन्नार्थकस्यान्तरशब्दस्य साक्षात्

प्रयुज्यमानत्वात् । **अथोच्येत**—अभ्यन्तरवचनोऽयमन्तरशब्दः प्रयुज्यते न भिन्नवचन इति । **नैतद्वक्तव्यम्** । पौनरुक्त्यप्रसङ्गात् । द्वौ ह्यत्रान्तरशब्दौ प्रयुज्येते '**यो विज्ञाने तिष्ठन् विज्ञानादन्तरः**" इत्येकः, "**यो विज्ञानमन्तरो यमयति**" इति च द्वितीयः । तत्रोभौ चेदभ्यन्तरवचनौ स्यातां तदाऽवश्यं पौनरुक्त्यं प्रसज्येत । पौनरुक्त्यं च दूषणम् । न चानुवादादृते क्वचिदन्यत्र तदुपादीयते । मा नाम तर्ह्यत्रैतत्प्रसाङ्क्षीदिति पूर्वोऽन्तरशब्दोऽकामेनापि भिन्नार्थको वक्तव्यः । **न** चैतावताऽप्यानुमानिको भेदो न परिगृह्यत इत्यूहितव्यम् । उपोद्धलकत्वेन परिग्रहणात् । उपोद्बलकत्वेन ह्यसौ श्रुतभेदस्य परिगृह्यते न जातु परित्यज्यते । अधिकस्याधिकं फलमित्यनुसन्धानात् । न चैवं जीवात्मनो भेदेनाधीयमानोऽन्तर्य्यामी जीवात्मा भवितुमर्हति । भिन्नयोरैक्यासम्भवात् । **एकस्यैव** सतो ब्रह्मणोऽन्तर्य्यामी शारीर इति च भेदव्यवहारोऽविद्योपाधिकृत इति तु विद्यास्वभावे ब्रह्मण्यविद्याया निरूपयितुमशक्यत्वेन नाभिधातुं शक्यते । नहि प्रकाशस्वभावे सवितरि तमोऽवस्थातुं पारयति । तत्राप्यवतिष्ठते परपरिकल्पितमिति तु विषमोपन्यासः । अद्वैतब्रह्मवादे तद्व्यतिरिक्तस्य कस्यचित् प्रकल्पकस्य परस्यानभ्युपगमात् । स्वयं भगवतो ब्रह्मणः प्रकल्पकत्वे चाविद्याश्रयो भवदविद्यां प्रकल्पयति किंवा तदनाश्रयो भवदिति प्रश्न उपतिष्ठते । स च दुरुत्तरः । अज्ञत्वभ्रान्तत्वप्रसक्तयोराद्ये निर्विशेषत्वमोक्षाभावप्रसक्त्योश्चान्त्ये वक्तुं शक्यत्वात् । "**यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्**" ( बृ० ४ । ५ । १५ ) इति श्रुतिवचसा तु सर्वस्यात्मार्थत्वेनात्मतो बुद्धिलक्षणोऽविभागः प्रदर्श्यते न तदभाव इति न कस्याप्यन्तर्य्यामिणः सकाशाद् भेद औपाधिकः, शारीरस्य प्रत्यगात्मन इति तु किमु वक्तव्यम् । शारीरान्तर्य्यामिणोर्भेदस्य पारमार्थिकत्वे च ज्ञातृज्ञेयादिभेदश्रुतयः प्रत्यक्षादीनि प्रमाणानि संसारानुभवो विधिनिषेधशास्त्रं चेति सर्वमेतद् यथाविषयमुपपद्यते । अन्यथा ह्युपरुध्येत । तदुपरोधश्च नेष्टः । तस्मात् परब्रह्म परमात्मैवात्रान्तर्य्यामी न शारीरो जीवात्मेति निष्प्रत्यूहम् ॥ २० ॥

अधिदैवादिषु श्रुतोऽन्तर्य्यामी परब्रह्म परमात्मेति निरणायि । सम्प्रति तस्याहृश्यत्वादिगुणसम्पत्तयेऽन्यमधिकरणमारभमाण आह—

**"अदृश्यत्वादिगुणको धर्मोक्तेः" ॥ २१ ॥**

**ब्रह्मे**त्यधिक्रियते । **अदृश्यत्वादिगुणकः**=मुण्डके श्रुतोऽदृश्यत्वादिगुणको भूतयोनिरक्षरं परब्रह्म परमात्मा वेदितव्यः, कुतः? **धर्मोक्तेः**= तद्धर्मस्य सर्वज्ञत्वादेरभिधानादित्यर्थः ।

मुण्डके हि श्रूयते **"अथ परा यया तदक्षरमधिगम्यते ।५। यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः"** (मुं० । १ । ५-६ ) इति । अद्रेश्यम्= अदृश्यं ज्ञानेन्द्रियाविषयः, अग्राह्यं=कर्मेन्द्रियागोचरः, अगोत्रं=गोत्रो वंशः, कारणं वा, तद्रहितम्, अवर्णं=ब्राह्मणत्वादिधर्मो वर्णं तद्धीनम्, अचक्षुःश्रोत्रं=चक्षुःश्रोत्रादिज्ञानेन्द्रियवर्जितम्, अपाणिपादं=हस्तपादादिकर्मेन्द्रियशून्यम्, नित्यं=शाश्वतं, विभुं=प्रभुं, सर्वगतं=व्यापकं, सुसूक्ष्मं=जीवात्मपरमात्मापेक्षया स्थूला प्रकृतिः, ततः सूक्ष्मो जीवात्मा, ततोऽपि सूक्ष्मं सुसूक्ष्मम्—अतिसूक्ष्मम्, अव्ययं=वृद्धिक्षयविकलं कूटस्थनित्यमिति यावत्, भूतयोनिं=जगतः कारणमित्यर्थः । **तत्र** संशयः किमिहादृश्यत्वादिगुणको भूतयोनिरक्षरं प्रधानं स्यादुत जीवात्मा, किं वा परब्रह्म परमेश्वर इति । कुतः संशयः? साधारणशब्दप्रयोगात् । अक्षरशब्दः खल्वत्र साधारणः प्रयुज्यते । स ह्यश्नुते स्वविकारानिति व्युत्पत्त्या यथा प्रधानमाचष्टे तथा न क्षरतीति व्युत्पत्त्या जीवात्मानं परमात्मानं चाभिधत्ते । अक्षरशब्दवच्च भूतयोनिशब्दोऽपि तत्त्रितयसाधारणः प्रयुक्तो द्रष्टव्यः । प्रकृतिपरमेश्वरयोरिव जीवात्मनोऽपि धर्माधर्माभ्यां भूतजातस्योपार्जनाद् भूतयोनित्वोपपत्तेः । अतः संशयः । **तत्र** प्रधानं जीवात्मा चेति पूर्वः पक्षः, परब्रह्म परमेश्वर इति सिद्धान्तः । **किं** तावत् प्राप्तम्? प्रधानमिति वच्मः । **सारूप्यात्** । अदृश्यत्वादिगुणकं तावदक्षरमिह भूतयोनि

निर्दिश्यते । भूतस्य विकारजातस्य योनिरुपादानकारणमित्यर्थः । विकारोपादानकारणयोश्च सारूप्यं सर्वत्रेष्यते न क्वचिद्वैरूप्यम् । नहि घटशरावोदञ्चनादयो मृद्विकाराः मृत्सरूपाः कटककुण्डलकेयूरादयश्च सुवर्णविकाराः सुवर्णसरूपा न भवन्ति । न चास्य विकारजातस्य परमात्मसारूप्यं वक्तुं शक्यते । जड़त्वात् । परमात्मनश्च चेतनत्वात् । प्रधानसारूप्ये तु नास्ति काचिदनुपपत्तिः । जड़ं हि प्रधानं जड़ं चैतद् विकारजातमिति प्रधानमेवाक्षरं विकारजातस्यास्य जगतो योनिरिति प्रतिपद्यते । **दृष्टान्तोपन्यासाच्च** । ये हि खल्वदृश्यत्वादिगुणकस्याक्षरस्य भूतयोनित्वं श्रावयित्वा दृष्टान्ता उपन्यस्यन्ते "**यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम्**" (मुं० १ । १ । ७) इति । ऊर्णनाभिः=लूताकीटः, सृजते=सृजति, गृह्णते=गृह्णाति संहरति, ओषधयः=व्रीहियवादयः, सम्भवन्ति=प्रादुर्भवन्ति, सतः=जीवतः, केशलोमानि=केशाश्च लोमानि चेत्यर्थः । तेभ्योऽपि जड़ं किञ्चिदक्षरं भूतयोनिर्गम्यते । नह्यक्षरस्य भूतयोनेश्चेतनत्वे दृष्टान्ता अमी उपन्यस्यमानाः कथञ्चित् सङ्गच्छन्ते । अत्र हि सुव्यक्तमूर्णनाभिशरीरं जालतन्तूनां, पुरुषशरीरं च केशलोम्नां योनिरिति कथ्यते । पृथिवी च जड़ा प्रत्यक्षा । दृष्टान्तानुरूप्यं च दार्ष्टान्तिकस्योचितम् । अन्यथा "**तथाऽक्षरात्सम्भवतीह विश्वम्**" इत्युपन्यासानुपपत्तेः । तस्मात् प्रधानमेवाक्षरं भूतयोनिरिह निर्दिष्टमिति युज्यते । **अथोच्येत** प्रधानपरिग्रहे "**यः सर्वज्ञः सर्ववित्**" (मुं० १ । १ । ९) इति वाक्यशेषो नोपपद्यते । प्रधानस्याचेतनत्वेन सर्वज्ञत्वसर्ववित्त्वासिद्धेः । चेतनं हि चेतयते नाचेतनं किञ्चिदिति । **नैतद्वक्तव्यम्** । तस्यान्यपरत्वेनोपपादनसम्भवात् । वाक्यशेषस्य ह्यस्यान्यपरत्वेनोपपादनं सम्भवति । नहि स भूतयोनिमक्षरं सर्वज्ञं सर्वविदं प्रतिपादयति, **किन्तर्हि ?** "यया तदक्षरमधिगम्यते यत्तदद्रेश्यम्" इति श्रावयित्वा यः पुनरन्ते कश्चित् परोऽक्षराच्छ्राव्यते "**अक्षरात्परतः परः**"

(मुं० २ । १ । २) इति, स तेन सर्वज्ञः सर्ववित् प्रतिपाद्यते । तत्प्रतिपादने च नास्ति तदनुपपत्तिः । **अथवा** जीवात्मा भूतयोनिरक्षरमिह भविष्यति । योनिशब्दस्य निमित्तवचनत्वस्याप्यभ्युपगमात् । भवति च जीवात्माऽपि धर्माधर्माभ्यां विकारजातस्य योनिः, अविनाशित्वाच्चाक्षरमिति । **एवं** प्राप्तेऽभिधीयते—परमात्मैवादृश्यत्वादिगुणको भूतयोनिरक्षरमिह स्यान्न प्रधानं न वा जीवात्मा । **तद्धर्माम्नानात् ।** अत्र ह्यदृश्यत्वादिगुणकं भूतयोनिमक्षरं प्रक्रम्य सर्वज्ञत्वादिधर्मस्तावदाम्नायते "**यः सर्वज्ञः सर्ववित्**" (मुं० १ । १ । ९) इति । स च परमात्मत्वे तस्य सम्भवति नान्यथा । नहि प्रधानं वा जीवात्मा वा कर्हिचित् सर्वज्ञत्वादिधर्मा भवितुमर्हति । प्रधानस्याचेतत्वेन जीवात्मनश्चाल्पज्ञत्वेन तद्धर्मत्वानुपपत्तेः । **ननूक्तमदृश्यत्वादिगुणकाद्** भूतयोनेरक्षरात् परस्य कस्यचिदन्यस्य सर्वज्ञत्वादिधर्मः प्रतिपाद्यते नादृश्यत्वादिगुणकस्य भूतयोनेरक्षरस्येति नासौ परमेश्वर इति । **नैतद्** युक्तमुक्तं मन्तव्यम् । तस्यैव तद्धर्मप्रतिपादनात् यः खल्वदृश्यत्वादिगुणको भूतयोनिरक्षरमिह पूर्वं प्रक्रियते तस्यैव सर्वज्ञत्वादिधर्मः प्रतिपाद्यते न ततः परस्यान्यस्य कस्यचित् । यदि हि पूर्वप्रकृतादृश्यत्वादिगुणकाद् भूतयोनेरक्षरात् परः कश्चित् सर्वज्ञत्वादिधर्माऽभविष्यत् तदा न जातु श्रुतिस्तस्य भूतयोनित्वं निरदेक्ष्यत् । नह्यभूतयोनेर्भूतयोनित्वं निर्देष्टुं शक्यते । श्रुतिस्तु तस्य सर्वज्ञत्वादिधर्मं प्रतिपादयन्ती सर्वभूतयोनित्वं निर्दिशति "**यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः । तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते**" (मुं० १ । १ । ९) इति । तेन यो भूतयोनिः स सर्वज्ञत्वादिधर्मेति स्फुटमवगम्यते । सर्वज्ञत्वादिधर्माश्रयत्वाच्च परमेश्वर इति निश्चीयते । **योनिशब्दश्चात्र** निमित्तवचनः प्रयुज्यते नोपादानवचनः । चेतनस्योपादानत्वासम्भवात् । जीवात्मा च चेतनः सन्नपि न धर्माधर्माभ्यां भूतयोनिः कल्पयितुं शक्यते । अत्राभिहितस्य सर्वज्ञत्वादेस्तद्धर्मस्य तत्रानुपपत्तेः । **न च** प्रधानमपि भूतयोनिरिह वक्तुं पार्य्यते । तस्योपादानत्वेन निमित्तत्वासिद्धेः । "**अक्षरात्परतः परः**"

(मुं० २ । १ । २) इत्यत्र चाक्षरशब्दः प्रधानवचन उपादीयते न प्रकृतभूतयोनिवचनः । न चाक्षरशब्दस्य प्रधाने प्रयोगानुपपत्तिरिति वाच्यम् । तस्य प्रकृतिपुरुषेश्वरत्रितयसाधारणत्वेन प्रयोगोपपत्तेः । "**अक्षरात् परतः परः**" इत्यस्य श्रुतिवाक्यस्य चाक्षरं प्रधानं, तस्मात् परो जीवात्मा, ततः परः परमेश्वर इत्यर्थोऽवगन्तव्यः । तथा च "**अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यम्**" (मुं० १ । १ । ५–६) इति प्रकृताक्षरशब्देन योऽसावदृश्यत्वादिगुणको भूतयोनिः परिकीर्त्यते स एवाग्रे सर्वज्ञः सर्वविच्च प्रणिगद्यते न ततः परोऽन्यः कश्चिदिति निर्बाधम् ।

"**कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति**" (मुं० १ । १ ।३) इत्येकविज्ञानेन सर्वविज्ञानापेक्षणमपि भूतयोनिशब्देन परब्रह्मणि परमेश्वरे विवक्ष्यमाणेऽवकल्पते नाचेतनमात्रायतने भोग्ये प्रधाने न वा तद्व्यतिरिक्ते तद्भोक्तरि प्रत्यगात्मनि । नह्यधिष्ठानेऽविज्ञाते तदधिष्ठेयं सर्वं कर्हिचिद् विज्ञातुं पार्य्यते । न च प्रधानं वा जीवात्मा वा चेतनाचेतनात्मनः सर्वस्य जगतोऽधिष्ठानं कथञ्चिदुपपद्यते । जगत्पितुः परमेश्वरस्य तदधिष्ठानत्वे तु नास्ति कश्चिद् बाध इत्येकविज्ञानेन सर्वविज्ञानोपपादनाय स एवेह भूतयोनिशब्देन प्रक्रियत इति गम्यते । "**तस्मै स होवाच द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च**" (मुं० १ । १ । ४) इति परापरभेदेन विद्याद्वैविध्यमुपन्यस्य परविद्याविषयत्वेनादृश्यत्वादिगुणको भूतयोनिरक्षरं तावदुपक्षिप्यते "**अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यम्**" (मुं० १ । १ । ५–६) इति । चेदसौ प्रधानं वा जीवात्मा वा भवेत्, तदा न तद्विद्या परविद्या समाख्यायेत । जगज्जन्मादिहेतुपरमात्मगोचरोऽनुभवो हि परविद्येति समाख्यायते न प्रधानगोचरो न वा जीवात्मगोचरोऽनुभवः ।

**सारूप्यं** चोपादानोपादेयभावे नियम्यते न निमित्तनैमित्तिकभावे । भवति च परमेश्वरो निमित्तं नैमित्तिकं च सर्वं जगत् । यत्तूर्णनाभि-

शरीरादीनां जड़ानां दृष्टान्तत्वेनोपन्यासाद् दार्ष्टान्तिकेनापि भूतयोनिना तदनुरूपेण जड़ेन भवितव्यमिति। तन्न युक्तं पश्यामः। प्रकृताक्षरस्य परब्रह्मणः परमेश्वरस्य भूतयोनित्ववैशद्यायोक्तदृष्टान्तत्रयोपन्यासात्। न खलु **"यथोर्णनाभिः सृजते गृह्णते च"** (मुं० १।१।७) इत्यत्र जड़मूर्णनाभिशरीरं दृष्टान्त्यते येन भवदुक्तं कथञ्चित् सङ्गच्छेत **किन्तु** तदधिष्ठाता चेतन आत्मा। स **यथा** स्वं शरीरमधिष्ठाय जालतन्तूनाविर्भावयन् सृजति तिरोभावयँश्च गृह्णाति संहरति चेति व्यपदिश्यते, सृजन् गृह्णँश्च न जातु मात्रयाऽपि स्वरूपतो विक्रियते **तथा** परमात्माऽपि प्रकृतिशरीरमधिष्ठाय विश्वमिदं जगदाविर्भावयन् सृजति तिरोभावयँश्च संहरतीति चोपदिश्यते, तस्य सृजतः संहरतश्च स्वरूपमूर्णनाभिरिव न तावत्कर्हिचिद् विकारमापद्यते। तदेतद्धि दृष्टान्तदार्ष्टान्तिकयोः साम्यम्। तन्तून् प्रति निमित्तमूर्णनाभिः, उपादानं तच्छरीरम्, जगत् प्रति च निमित्तं परब्रह्म परमेश्वरः, उपादानं प्रकृतिः। निमित्तनैमित्तिकयोश्च वैरूप्यं सर्वत्रेप्यते न सारूप्यमिति युक्तो भूतयोनितावैशद्याय परमेश्वरस्यादिम **ऊर्णनाभि**दृष्टान्तः। कथमेतस्माद् भगवतो भूतयोनेः परमेश्वराद् विश्वमिदं जगदुत्पद्यत इति विशदयितुं द्वितीयस्तावत् **पृथिवी**दृष्टान्तः उपन्यस्यते। पृथिव्यामित्याधारे सप्तमी। यथाहि व्रीहियवादीनामोषधिभेदानां स्वस्वबीजादुत्पत्तिः पृथिव्याधारा भवति, तथा विश्वस्यास्य जगतः उत्पत्तिरपि मूलकारणात्प्रकृतेः परमेश्वराधारा भवतीति द्रष्टव्यम्। ओषधिभेदानां हि तेषां स्वस्वबीजमुपादानकारणम्, तदाधारः पृथिवी चाधारकारणापरपर्य्यायं निमित्तकारणम्। आधारकारणमधिष्ठानकारणमिति चानर्थान्तरम्। विश्वस्यास्य जगत उपादानकारणं प्रकृतिः, तदाधारः परमेश्वरश्च निमित्तकारणमिति दृष्टान्तदार्ष्टान्तिकयोः साम्यम्। **यथा** खलु स्वस्वबीजादुत्पद्यमाना अपि व्रीहियवादय ओषधिभेदास्तदाधारात् पृथिव्या उत्पद्यन्त इति व्यवह्रियते **तथा** मूलकारणात् प्रकृतेरुत्पद्यमानमपि जगदिदं विश्वं तदाधारात् परमेश्वरादुत्पद्यत इति व्यपदिश्यते। तदेतच्च पृथिव्यामित्याधारसप्तम्या सूच्यते। सोऽयं व्यपदेशो जगत्पितुः

परमेश्वरस्य भूतयोनितायां विवक्षितायामुपपद्यते न जात्वन्यस्य कस्यचिदिति तद्वैशद्याय द्वितीय**पृथिवी**दृष्टान्तोपन्यासः । भगवतो भूतयोनेरक्षरस्य परमात्मनो विश्वजगदुत्पादने मा नाम भूत् कश्चिदायास इत्येतत्प्रदर्शयितुमन्ते तृतीयः **पुरुषदृष्टान्त** उपादीयते । यथाहि सतो जीवतः शरीरिणः पुरुषादात्मनः केशलोमानि स्वयमेवोत्पद्यन्ते तदुत्पादने च न तस्य भवति कश्चिदायासः, तथा भगवतो भूतयोनेरक्षरात् परमात्मनोऽपि विश्वमिदं जगत् स्वयमेवोत्पद्यते, न च तस्य तदुत्पादने भवति कश्चिदायासः । **यथा** खलु शरीरे पुरुषस्यात्मनः सद्भावात् स्वयमेव शरीरतः केशलोमानि यथाकालं प्रजायन्ते, तत्प्रजननार्थं च न पुरुषेण किञ्चित् प्रयत्यते **तथा** प्रकृतौ भगवतो भूतयोनेरक्षरस्य परमात्मनोऽपि सद्भावमात्रात् स्वयमेव प्रकृतितो विश्वमिदं जगद् यथाकालमुपजायते, पुनश्च यथाकालं प्रलीयते । न च परमात्मा तत्प्रजननार्थं तत्प्रलयनार्थं वा कर्हिचित् किञ्चित् प्रयतते । सन्निधिरेव भगवतस्तस्य तत्रापेक्ष्यते सर्वशक्तित्वान्न प्रयत्नान्तरम् । स हि सन्निधिमात्रादेव नित्यं प्रकृतिपुरुषावधितिष्ठति न लौकिकजनवत् कुतश्चित्प्रयत्नविशेषात् । अत एव सूत्रितं दर्शनान्तरे "**तत्सन्निधानादधिष्ठातृत्वं मणिवत्**" (सां० १ । ९६) इति । पदयति चाचार्य्योऽपि जगत्सर्जनक्रियायास्तल्लीलामात्रत्वम् "**लोकवत्तु लीलाकैवल्यम्**" (२ । १ । ३३) इति । सोऽयमायासविरहो जगद्रचनायां भगवतो भूतयोनेरक्षरस्य परमात्मनः इह पुरुषदृष्टान्तेन विशदीक्रियते । तत्र पुरुषशरीरं यथा केशलोम्नामुपादानं पुरुषश्च निमित्तं तथा विश्वस्य जगतः प्रकृतिरुपादानं परमात्मा च निमित्तमिति द्रष्टव्यम् ।

अपि चोपक्रमे श्रूयते "**ब्रह्मा ह देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह । १ । अथर्वणे यां प्रवदेत ब्रह्मा, अथर्वा तां प्रोवाचाङ्गिरे ब्रह्मविद्याम् । स भारद्वाजाय सत्यवाहाय प्राह, भारद्वाजोऽङ्गिरसे परावरां**

**राम्**" (मुं० १ । १ । १-२) इति । ब्रह्मा=परमेश्वरः, भरणाद्वा बृहत्त्वाद्वा । स ह्यविशेषेण सर्वान् बभर्त्ति, ज्ञानक्रियाशक्तिभ्यां चालयेति । यत्रेदमाम्नातम् "**त्वं ब्रह्मा रयिविद् ब्रह्मणस्पते ! त्वं विधर्तः सचसे पुरन्ध्या**" (ऋ० २ । ५ । १७ । ३) इति । ह-शब्देन लोकवेदप्रसिद्धिर्द्योत्यते । देवाः=वेदप्रतिपाद्यधर्मानुष्ठायिनो विद्वांसः "**सत्यसंहिता वै देवाः, अनृतसंहिता मनुष्याः**" (ऐत० ब्रा० १।१।६) "**विद्वांसो हि देवाः**" (शत० ३ । ७ । ३ । १०) इत्यादिश्रुतिभ्यः, तेषां प्रथमः=अग्रणीर्देशिकः "**पूर्वेषामपि गुरुः कालेनानवच्छेदात्**" (यो० १ । २६) इति स्मृतेः । सम्बभूव=समा सर्गारम्भः सूच्यते, विद्यादानसमयमपेक्ष्य च भूतप्रयोगः, समवर्ततासीत् । यत्रेदमाम्नातम् "**हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्**" (ऋ० ८ । ७ । ३ । १) इति । ब्रह्मणो विशेषणं विश्वस्य कर्ता=सर्वस्य जगतो जन्महेतुः "**द्यावा-भूमी जनयन् देव एकः**" (ऋ० ८ । ३ । २६ । ३) इति मन्त्रवर्णात् । भुवनस्य गोप्ता=भुवनं विश्वं जगत्, तस्य गोप्ता पालयिता धारयिता स्थितिहेतुरिति यावत् । यत्रेदमाम्नातम् "**इनो विश्वस्य भुवनस्य गोपाः**" (ऋ० २ । ३ । १८ । २१) इति इनः=ईश्वरः । "**तस्यादध्यतिष्ठद् भुवनानि धारयन्**" (ऋ० : । ३ । १६ । ४) इति च । स ब्रह्मविद्याम्=आत्मगोचरां विद्यां सर्वविद्याप्रतिष्ठां सर्वा विद्याः प्रतितिष्ठन्ति—फलतः पर्यवस्यन्ति यत्र तां सर्वविद्यापरत्वात् निरतिशयफलाम् । अथर्वाय=अथर्वणे, ज्येष्ठपुत्राय=सर्वपुत्रेषु ज्येष्ठाय । अस्मदादयः सर्वे भगवतो ब्रह्मणः पुत्राः । आर्य्यत्वात् । अर्य्यस्य ब्रह्मणः इमे इति तद्व्युत्पत्तेः । तत्र तदाज्ञारूपस्य भगवतो वेदस्य प्रकाशकाः ज्येष्ठाः, ज्येष्ठकार्य्यकारित्वात्, ते च यद्यपि बहवस्तथापि मुण्डकोपनिषदोऽस्या अथर्ववेदसम्बन्धादथर्ववेदस्य चाथर्वणा प्रकाशितत्वादथर्वाऽत्र ज्येष्ठपुत्र उक्त इति वेदितव्यम् । प्रवदेत=प्रावदत् । अङ्गिरे=अङ्गिर्नाम्ने । भारद्वाजाय=भरद्वाजगोत्राय । परावरां=परस्मात्परस्मादवरेण प्राप्ताम्, **अथवा**

परावरं ब्रह्म **"तस्मिन् दृष्टे परावरे"** (मुं० २ । २ । ८) इति श्रुतेः, तद्गोचरामित्यर्थः । एतेन **"तद्धैतद् ब्रह्मा प्रजापतय उवाच, प्रजापतिर्मनवे, मनुः प्रजाभ्यः"** (छां० ८ । १५ । १ ) इति श्रुतिरपि व्याख्याता द्रष्टव्या । प्रजापतिः=आदित्यः । मनुरिति च सामान्यतः सम्राजः संज्ञा वैदिकानामीश्वरत्वादिति विज्ञातव्यम् । न चोपक्रमे श्रूयमाणेयं सर्वविद्याप्रतिष्ठा ब्रह्मविद्या परमात्मविद्यातोऽन्या काचन सम्भवति । सर्वविद्याप्रतिष्ठात्वानुपपत्तेः । तस्याः परमात्मविद्यात्वे च **"कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति"** (मुं० १ । १) इति जिज्ञासामवतार्य्य परापरभेदेन विद्याद्वैविध्यमुक्त्वा येयमक्षराधिगमनी परा विद्या प्रदर्श्यते नूनं सा परमात्मविद्यैवेति स्फुटं प्रतिपद्यते । पूर्वोपक्रान्तप्रदर्शनस्यैवौचित्यात् । नह्यन्यदुपक्रम्यते प्रदर्श्यते चान्यदिति संश्लिष्यते । विभागवचनं च परविद्यायाः परमात्मविद्यात्वे व्यक्तं लिङ्गम् । परविद्यैवैका तादृशी यदुदयात् खलु सर्वमिदं विज्ञातं भवतीति चापरोक्षस्तदभिप्रायः । परमात्माश्रयत्वेन सर्वस्य तद्विद्यया सर्वविज्ञानोपपत्तेरार्थिकत्वात् । नह्याश्रये विज्ञाते तदाश्रितं सर्वं न विज्ञायत इति युज्यते ।

अपि चाग्रे **"प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति"** (मुं० १ । २ । ७) इत्यादिनाऽनित्यफलत्वेन कर्माणि निन्दित्वा ततो विरक्तस्य विवेकिनः परविद्याधिकारं दर्शयति **"परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्"** (मुं० १ । २ । १२) इति । प्लवन्ते गच्छन्तीति प्लवाः, अतएवादृढाः, के ते ? यज्ञरूपाः= रूप्यन्ते निरूप्यन्तेऽनेनेति रूपं, यज्ञो रूपमुपाधिर्येषां ते यज्ञरूपाः, यदाश्रयतया यज्ञो रूप्यते निरूप्यत इति वा, यज्ञकर्तार इति फलितम्, तत्र षोडशर्त्विजः, ऋतुयजनेनोपाधिना तच्छब्दः प्रवृत्त इति यज्ञोपाधय ऋत्विजः ।

**एवं** यजमानोऽपि यज्ञोपाधिरेव, **एवं** पत्नी **"पत्युर्नो यज्ञसंयोगे"** ( अष्टा० ४ । १ । ३३ ) इति स्मरणात् । त एते अष्टादश यज्ञरूपाः । येषु=यदाश्रयमुक्तं=शास्त्रेण विहितं कर्म=यज्ञः, अवरं=न वरमवरफलत्वात् । अपियन्ति=प्राप्नुवन्तीति श्रुतिपदार्थः । यदि हि परविद्या परमात्मविद्या न भवेत् न जातु विवेकवैराग्यादीनि परमात्मविद्यासाधनानि तत्साधनानि कीर्तयेत् । नह्यन्यस्य साधनानि सन्त्यन्यस्य निष्पत्त्यै कीर्तयितुं शक्यन्ते । भवन्ति च विवेकवैराग्यादीनि परमात्मविद्यासाधनानीति विस्तरेण न्यरूपयाम जिज्ञासाधिकरणेऽस्माभिः । **"तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्"** (मुं० १। २ । १३ ) **"तेषामेवैतां ब्रह्मविद्यां वदेत"** (मुं० ३ । २ । १०) इत्युपसंहारेऽप्युपक्रमवत् परमात्मविद्योपन्यासान्मध्ये परविद्याऽपि परमात्मविद्योपन्यस्तेति गम्यते । तस्यामद्रिश्यान्वे च तदभिधानतस्यास्यादृश्यत्वादिगुणकस्य भूतयोनेरक्षरस्य परमात्मत्वमिति किमु वक्तव्यम् । विपर्ययसमाख्याया विषयतन्त्रतानियमात् । तस्माददृश्यत्वादिगुणको भूतयोनिरक्षरं परमात्मैवेति सिद्धम् ॥ २१ ॥

**सि**द्धान्तोऽभिहितः, **पू**र्वपक्षं निराचक्षाण आह—

**"विशेषणभेदव्यपदेशाभ्यां च नेतरौ"** ॥ २२ ॥

अदृश्यत्वादिगुणकाविति विपरिणम्यानुवर्तते । चकारेण पूर्वपक्षनिराकरणोपक्रमः सूच्यते । **विशेषणभेदव्यपदेशाभ्यां**=विशेषणाद् भेदव्यपदेशाच्च **नेतरौ** परमात्मेतरौ जीवात्मा प्रधानं चेत्येतौ द्वौ **न**—अदृश्यत्वादिगुणकौ न भवत इत्यर्थः ।

**प्र**कृतं तावददृश्यत्वादिगुणकं भूतयोनिमक्षरं प्रधानपुरुषाभ्यां व्यवर्तयितुं **"तदेतत् सत्यं—यथा सुदीप्तात्पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद् विविधाः सोम्य! भावाः प्रजायन्ते तत्र चैवापियन्ति"** ( मुं० २ । १ । १ ) इति प्रधानतः सृष्टिमुपवर्ण्य विशिनष्टि, भेदेन व्यपदिशति च

**"दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः"** (मुं० २ । १ । २) इति । दिवि स्वात्मनि प्रकाशरूपे भवो दिव्यः । बहिर्भवो बाह्यः, अभ्यन्तरे भव आभ्यन्तरः, बाह्यश्चाभ्यन्तरश्च बाह्याभ्यन्तरः, व्यापक इति यावत् जन्मरहितोऽजः, सर्वथा जन्मराहित्यं ह्यर्थः, स्वरूपत उपाधितः कथमपि न जायत इति फलितम् । प्राणरहितोऽप्राणः । मनोरहितोऽमनाः । ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च हिना प्रतिषिध्यन्ते । शुभ्रः=शुद्धः, क्लेशकर्मविपाकाशयैरपरामृष्ट इति यावदित्यर्थः । तत्र **"दिव्यो ह्यमूर्त्तः"** इत्यादिविशेषणम्, **"अक्षरात् परतः परः"** इति च भेदव्यपदेशः । यदि हि जीवात्माऽदृश्यत्वादिगुणको भूतयोनिरक्षरं स्यान्नैवं श्रुतिस्तं विशिंष्यात् । नहि दिव्यत्वादीनि विशेषणानि जीवात्मनि युज्यन्ते । परमात्मनि तद्योगे च नास्ति किञ्चिदसामञ्जस्यम् । यथा च जीवात्मव्यावृत्त्यर्थं दिव्यत्वादिविशेषणैरदृश्यत्वादिगुणको भूतयोनिरक्षरं तावद् विशेष्यते तथा प्रधानव्यावृत्त्यर्थं ततो भेदेनापि व्यपदिश्यते **"अक्षरात्परतः परः"** इति । अत्राक्षरं प्रधानमुच्यते, ततः परो जीवात्मा, ततः परः प्रकृतो भूतयोनिरक्षरमिति तस्य प्रधानतो भेदेन व्यपदेशो विस्पष्टः । सचेह परमात्मविवक्षायामुपपद्यते न प्रधानविवक्षायाम् । स्वस्य स्वस्माद् भेदव्यपदेशानुपपत्तेः । परमात्मनि च नास्ति तदनुपपत्तिः । सर्वभूतान्तरात्मत्वात् । यत्रेदमाम्नातम् **"तदन्तरस्य सर्वस्य"** (यजु० ४० । ५) **"इदं वाव तद् यदिदमस्मिन्नन्तः पुरुषे ज्योतिः"** (छां० ३ । १४ । ७) **"सर्वस्मादन्तरतरं यदयमात्मा"** (बृ० १ । ४ । ८) इति । जीवात्मा च कूटस्थनित्यत्वाद् भवति प्रधानात् सूक्ष्म इति ततः परो व्यपदेष्टुं शक्यते । तस्मादिह परमात्मैवादृश्यत्वादिगुणको भूतयोनिरक्षरं न जीवात्मा न वा प्रधानम् ॥ २२ ॥

अत्रैव हेत्वन्तरमुपन्यस्यति—

**"रूपोपन्यासाच्च"** ॥ २३ ॥

अदृश्यत्वादिगुणकाविति विपरिणम्य, नेतराविति चानुवर्तते । यत्र

पूर्वो हेतुरुपन्यस्तस्तत्रैव हेत्वन्तरमेतदिति चकारेणोच्यते । **रूपोपन्यासात्**=परमात्मरूपोपाख्यानान्नेतरावदृश्यत्वादिगुणकौ भवत इत्यर्थः ।

**"अक्षरात्परतः परः"** ( मुं० २ । १ । १ ) इत्यस्यानन्तरं हि **"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी"** ( मुं० २ । १ । ३ ) इति प्रकृताद् भूतयोनेरक्षरात् प्राणप्रभृतीनां पृथिवीपर्य्यन्तानां पदार्थानां सृष्टिमभिधाय तद्रूपमुपन्यस्यते **"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्य्यौ दिशः श्रोत्रे वाग् विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा"** ( मुं० २ । १ । ४ ) इति । यदि हि प्रकृतोऽदृश्यत्वादिगुणको भूतयोनिरक्षरमिह प्रधानं वा जीवात्मा वा भवेन्न तस्यैवंविधं रूपमुपन्यस्येत । नहि परब्रह्मणः परमेश्वरादन्यस्य कस्यचिदेवंविधं रूपमुपन्यसितुं शक्यते । न च प्रधानस्य कथञ्चिदेतद्रूपसम्भवेऽपि सर्वभूतान्तरात्मत्वमुपपद्यते । जीवात्मा चाणुपरिमाणत्वादणुमाहात्म्यो न तस्येदं रूपं सर्वभूतान्तरात्मत्वं चोभयं कर्हिचिद् युज्यते । **"यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद, यस्य विज्ञानं शरीरम् । यो विज्ञानमन्तरो यमयत्येष त आत्माऽन्तर्य्याम्यमृतः"** (बृ० ३।७।२२) इति तदन्तरात्मनोऽन्यस्यान्तर्य्यामिणः श्रवणात् । परब्रह्मणः परमेश्वरस्य सर्वभूतान्तरात्मत्वं च सुप्रसिद्धम् । तथाभूतस्य च तस्य यथा **"विश्वतश्चक्षुरुत विश्वतोमुखः । विश्वतोबाहुरुत विश्वतस्पात्"** ( ऋ० ८ । ३ । १६ । ३ ) **"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्"** ( ऋ० ८ । ४ । १७ । १ ) इत्यादिरूपमुपपद्यते तथेदमप्युपपद्यतेतराम् । एष इति सर्वनाम्नाच प्रकृतो भूतयोनिरेवानुकृष्यते नान्यः कश्चिदप्रकृतत्वादिति तस्यैवायं रूपोपन्यास इति गम्यते । **"तस्मादग्निः समिधो यस्य सूर्य्यः"** ( मुं० २ । १ । ५ ) इत्युत्तरत्र च प्रकृतभूतयोनेर्द्युलोकादीनां सृष्टेरभिधानं सुव्यक्तम् । तस्मादिति सर्वनाम्ना तत्परामर्शस्यैवोचित्यात् । अन्यतस्तत्सृष्टेरसम्भवाच ।

सति चैवं पूर्वोत्तरत्र तद्रूपोपन्यासे मध्येऽपि तस्यैवैष रूपोपन्यास इति सुखेन प्रतिपत्तुं शक्यते । **"हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्"** ( ऋ० ८ । ७ । ३ । १ ) इत्यत्र च सूर्य्यादिसर्वलोकाधिष्ठानत्वात्परमात्मैव हिरण्यगर्भः प्रतिपाद्यते न प्रथमः शरीरी जीवात्मा कश्चित् । तस्य सर्वलोकाधिष्ठानत्वानुपपत्तेः । **न** चादृश्यत्वादिगुणकस्य भगवतो भूतयोनेः कथं विग्रहवद्रूपोपन्यास इत्याक्षेपो युक्तः । सर्वभूतान्तरात्मनस्तस्य रूपकेणैतद्रूपोपन्यासोपपत्तेः । सर्वभूतान्तरात्मत्वविवक्षया खलु रूपकेण भगवतस्तस्य रूपमिदमुपन्यस्यते न परमार्थतो विग्रहवत्त्वविवक्षयेत्यदोषः । **तस्मात्** परब्रह्म परमेश्वर एवादृश्यत्वादिगुणको भूतयोनिरक्षरं न प्रकृतिपुरुषाविति सिद्धम् ॥ २३ ॥

अदृश्यत्वादिगुणको भूतयोनिः परमेश्वर इति निर्णीतम् । सम्प्रति तस्य सर्वभूताधिपत्यं निर्णेतुकामोऽधिकरणान्तरमारचयन्नाह—

**"वैश्वानरः साधारणशब्दविशेषात्"** ॥ २४ ॥

ब्रह्मेत्यधिक्रियते । **वैश्वानरः**=छान्दोग्योपनिषदि श्रुतो वैश्वानरः परब्रह्म परमात्मा विज्ञातव्यः, कुतः ? **साधारणशब्दविशेषात्**= साधारणशब्दोऽत्रात्मशब्दः, स हि यथा परमात्मनि वर्तते तथा जीवात्मन्यपि वर्तते, अनेकत्र वर्तनाच्च साधारणः, तेन **विशेषाद्** विशेषितत्वादित्यर्थः ।

छान्दोग्ये पञ्चमप्रपाठके ह्येवं श्रूयते—प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनबुडिलाः पञ्चामी महाश्रोत्रियाः समेत्य मीमांसाञ्चक्रुः **"को न आत्मा, किं ब्रह्म"** ( छां० ५ । ११ । १ ) इति । तत्रात्मेत्युपादाने मा नाम जीवात्मनि प्रत्ययो भूदतो ब्रह्मेत्युपात्तं द्रष्टव्यम् । ते चैवं मीमांसमानाः कञ्चिन्निश्चयमनधिगच्छन्तः **"उद्दालको ह वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति, तं हन्ताभ्यागच्छाम"** ( छां० ५ । ११ । १ ) इति निश्चित्य भगवन्तमुद्दालकमारुणिमभ्याजग्मुः । भगवानुद्दालकश्चैतान् महाशालान् महाश्रोत्रियान् वैश्वानरात्मजिज्ञासूनभिलक्ष्य स्वस्य चाकृत्स्नवेदित्वं मत्वा व्यक्तं प्रोवाच

**"अश्वपतिर्वै भगवन्तोऽयं कैकेयः सम्प्रतीममात्मानं वैश्वानरमध्येति ।** गतिकर्मणः सोपसर्गस्यैते रूपम्, अधिगच्छति= सम्यग् जानाति । **तं हन्ताभ्यागच्छाम"** (छां० ५ । ११ । ४) इति । तदेतदुपश्रुत्य ते चोद्दालकषष्ठास्तमश्वपतिं कैकेयं राजानमुपसेदुः । उपसद्य चोचुः **"आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि"** (छां० ५ । ११ । ६) इति । तदेवं प्राचीनशालादिभिः प्रार्थितोऽश्वपतिः कैकेयो द्युसूर्य्यवाय्वाकाशवारिभूमिषु मूर्धचक्षुःप्राणसन्देहबस्तिपादेषु वैश्वानरावयवेष्वेकैकं वैश्वानरबुद्ध्या समुपासमानानां तेषां मूर्धपाताचक्षुरन्धप्राणोत्क्रमणदेहशीर्णत्वबस्तिभेदपादश्लथीभावलक्षणैर्दूषणैरुपासनानि विनिन्द्य वैश्वानरं प्रत्येषां मूर्धादिभावमुपदिशन्नाह— **"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ।१। तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजा, श्चक्षुर्विश्वरूपः, प्राणः पृथग्वर्त्मात्मा, सन्देहो बहुलो, बस्तिरेव रयिः, पृथिव्येव पादौ, उर एव वेदिः, लोमानि बर्हिः, हृदयं गार्हपत्यः, मनोऽन्वाहार्य्यपचनः, आस्यमाहवनीयः"** (छां० ५ । १८ । १-२) इति । अत्रैष संशयः **किं** वैश्वानरशब्देन जाठरोऽग्निरुपदिश्यतेऽ**थवा** भूताग्निः, **उत** तद्देवः सूर्य्यो देवता, **यद्वा** जीवात्मा **किंवा** परब्रह्म परमेश्वर इति । कुतः संशयः ? सर्वत्र प्रयोगोपलम्भात् । यथा खलु वैश्वानरशब्दस्य जाठरेऽग्नौ प्रयोगो दृश्यते तथा भूताग्नौ सूर्य्ये जीवात्मनि परब्रह्मणि परमेश्वरे चाप्युपलभ्यते । सति चैवं सर्वत्र तत्प्रयोगोपलम्भे न सहसा किञ्चिदेकं ग्रहीतुमपरं च हातुं शक्यते । विनिगमनाविरहात् । अतो युज्यते संशयः । **तत्र** जाठराग्नि भूताग्निः सूर्य्यो देवता जीवात्मा चेति पूर्वः पक्षः, परब्रह्म परमेश्वर इति सिद्धान्तः । **किं** तावद् युक्तम् ? जाठरोऽग्निरिति ब्रूमः । प्रयोगसामर्थ्यात् । प्रयोगो हि शब्दार्थप्रतिपत्तौ मुख्यो हेतुः । अत एव यः शब्दो यस्मिन्नर्थे प्रयुज्यते तस्य स एवार्थ इति तत्सामर्थ्येन निःशङ्कं प्रतिपत्तुं

शक्यते। अन्यथा तत्र तत्प्रयोगानुपपत्तेः। नहि प्रयोक्तारः खलु शब्दार्थसम्बन्धमजानन्तः कश्चिच्छब्दं कचिदर्थे प्रयुञ्जते। नहि केसरिणि केसरिशब्दं प्रयुञ्जानास्तदर्थं केसरिणं न जानते। यथा चैषा केसरिशब्दः केसरिणि प्रयुज्यमान ईक्ष्यते तथा वैश्वानरशब्दोऽपि जाठरेऽग्नौ प्रयुज्यमानो निरीक्ष्यते "**अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते**" (बृ० ५।९।१) इति। न च तत्र तत्प्रयोगोऽयमौपचारिक इति वक्तुं शक्यते। "**येनेदमन्नं पच्यते यदिदमद्यते**" इति तल्लिङ्गस्यान्नपाकस्यान्यत्रोपन्यासासम्भवात्। नहि जाठरादग्नेरन्येन केनचिदद्यमानमन्नं पाचयितुं शक्यते येनेदमुपन्यस्यमानं लिङ्गं तत्र सम्भवेत्। जाठराग्नेरद्यमानस्यान्नस्य पाकस्तु ध्रुवं लिङ्गमिति को नु नाम वक्तुं नोत्सहते। न च श्रुतिलिङ्गाभ्यामध्यवसितेऽर्थे कदाचिद् विवदन्ते विद्वांसः। तस्माज्जाठरोऽग्निरेवेह वैश्वानर इति निश्चीयते। भूताग्निर्वा स्यादिह वैश्वानरः। तत्रापि तत्प्रयोगोपलब्धेः यथा हि वैश्वानरशब्दस्य जाठरेऽग्नौ खलु प्रयोगउपलभ्यते तथा भूताग्नावप्युपलभ्यते "**स एषोऽग्निर्वैश्वानरः**" (शत० १० । ६ । १ । ११) इति। प्रयोगसामर्थ्याच्चार्थनिर्णयनियम इत्युक्तम्। सूर्य्यो वा देवता स्याद् वैश्वानरः। तत्रापि तत्प्रयोगावेक्षणात्। अवेक्ष्यते हि सूर्य्यदेवतायामपि भूतजाठराग्निवद् वैश्वानरशब्दप्रयोगः "**विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्। आ यस्ततानोषसो विभातीरपो ऊर्णोति तमो अर्चिषा यन्**" (ऋ० ८।४। १२।१२) इति। शारीरो वा जीवात्मा वैश्वानर इह भविष्यति। तत्रापि तत्प्रयोगालोचनात्। यथा खलु सूर्यदेवतायां वैश्वानरशब्दः प्रयुज्यमान आलोक्यते तथा जीवात्मनि शारीरेऽपि प्रयुज्यमान आलोच्यते "**वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान्। तस्यैतां शान्ति कुर्वन्ति हर वैवस्वतोदकम्**" (कठ० १ । ७) इति। नचैवमालोच्यमाने तत्र तत्प्रयोगे नासौ वैश्वानरशब्देन ग्रहीतुं शक्यत इति वक्तुं पार्य्यते। प्रयोगवैयर्थ्यप्रसङ्गात्।

स्वार्थं ग्राहयितुं हि शब्दः खलु प्रयुज्यते। चेत्प्रयुज्यमानेऽपि तस्मिन् न तदर्थो गृह्येत नूनं तत्प्रयोगवैयर्थ्यं प्रसज्येत। न च तदभ्युपायो ज्यायान्। तस्माज्जीवात्मैवात्र वैश्वानरो न परब्रह्म परमेश्वर इति। **एवं** प्राप्त उच्यते—**साधारणशब्दविशेषात्**। यदि हि वैश्वानरशब्दः खलु केवल इह प्रयुज्येत तदाऽवश्यं जाठरादीनामन्यतमस्तदर्थोऽवगम्येत। न च स केवल इह प्रयुज्यते। अपि च? साधारणेनात्मशब्देन विशेषितः **"आत्मानं वैश्वानरमुपास्ते"** इति। न च तथा प्रयुज्यमानोऽसौ जाठरादिकमर्थं कर्हिचिदभिधातुमर्हति। तत्र तद्वृत्तित्वासिद्धेः। प्रयोगबलेन ह्यस्य शब्दस्यास्मिन्नर्थे वृत्तिरिति विज्ञायते, यथा कम्बुग्रीवादिमति व्यक्तिविशेषे कुम्भशब्दस्य, केसरादिमति व्यक्तिविशेषे च सिंहशब्दस्य वृत्तिः। न चात्मशब्देन विशेषितस्य वैश्वानरशब्दस्य जाठरादिष्वर्थेषु प्रयोगः क्वचिन्निभाल्यते, यथा केवलस्य तस्य। न च प्रयोगोपलम्भाभावे तत्र तद्वृत्तिः साधयितुं शक्यते। अतिप्रसङ्गात्। वृत्तित्वासिद्ध्या च दूरं ततो जाठराद्यर्थप्रत्यय इति निश्चितम्। परमेश्वरे चात्मशब्दो यथा प्रयुज्यमानो निरीक्ष्यते **"आत्मानं धीरमजरं युवानम्"** (अथर्व० १०।४।८।४४) **"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः"** (तै० २।१) इति, तथा वैश्वानरशब्दोऽपि प्रयुज्यमानोऽवेक्ष्यते **"वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः"** (ऋ० १।७।६।१) इति। तदुभयप्रयोगावेक्षणे चात्मशब्देन विशेषितो वैश्वानरशब्दः प्रयुज्यमानोऽपि नूनं परमात्मानमेवाभिधत्त इति सुखेन प्रतिपत्तुं शक्यते। केवलेन तदभिधाने विशिष्टेन तदभिधानस्यापि न्याय्यत्वात्। जाठरादिसाधारणो हि वैश्वानरशब्दः, स यदाऽऽत्मशब्देन विशेष्यते तदा जाठरादितो व्यावर्तमानः परब्रह्मण्येव परमेश्वरे व्यवतिष्ठते यथा दाशरथिशब्देन विशेषितो रामशब्दोऽयोध्याधिपतौ रामे। न चैवं तत्र व्यवतिष्ठमानस्य तस्यान्यः कश्चिदर्थः कल्पयितुं पार्य्यते। यत्र यस्य व्यवस्थानं स एव तस्यार्थ इति सिद्धान्तात्। **अथोच्येत** मा नामात्मशब्देन विशेषितो वैश्वानरशब्दो विशेषणाप्रसङ्गाज्जाठ-

राग्निं भूताग्निं सूर्य्यदेवतां चाभिधित, जीवात्मानमभिधास्यते । परमेश्वरवत्त-त्राप्यात्मशब्दप्रयोगोपलम्भात् "**एषोऽणुरात्मा चेतसा वेदितव्यो-यस्मिन् प्राणः पञ्चधा संविवेश**" (मुं० ३ । १ । ९) इति । "**सूर्य्य आत्मा जगतस्तस्थुषश्च**" (ऋ० १ । ८ । ७ । १) इत्यत्र च सूर्य्यशब्देन परब्रह्म परमेश्वर उच्यते न सूर्य्यो देवतेति । **नैतद्वक्तव्यम्** । उपक्रमविरोधप्रसङ्गात् "**को न आत्मा किं ब्रह्म**" (छां० ५ । ११ । १) इत्युपक्रमे ह्यात्मशब्दमुपादाय ब्रह्मशब्द उपादीयते । किमर्थमिदं पुनरुपादानम् ? मा नाम कश्चित् केवलादात्म-शब्दादिह शारीरं जीवात्मानं प्रतिपादि, **किन्तु** परब्रह्म परमेश्वरमेवाधि-गच्छेदिति विज्ञायते । युक्तं चैतद् । अन्यथाऽऽत्मेत्युक्त्यैवं निर्वाहे ब्रह्मेति वचनं वैयर्थ्यमापद्येत । न च व्यर्थस्योपादानं युज्यते । अनेन परमात्मगोचरो नूनमेष उपक्रम इति भवति प्रत्ययः । उपक्रमगतेनैव च परमात्मपरेणा-त्मशब्देन वैश्वानरशब्दो विशेष्यते । स चेत्तद्विशेषित इह जीवात्मपरः परिकल्प्येत तदाऽवश्यमुपक्रमेण विरोधः प्रसज्येत । स्वार्थाच्चात्मशब्दः प्रच्यवेत । नहि परमात्मानमुपक्रम्य तद्विरुद्धो जीवात्मा कथञ्चिदुपदेष्टुं शक्यते । न च परमात्मजिज्ञासयोपसन्नाः खलु प्राचीनशालप्रभृतयो महा-शालाः परमधार्मिकेण राज्ञा जीवात्मानमुपदिश्य कदाचिद् वञ्चयितुं वा शक्यन्ते । कल्पनामात्रं च न स्वार्थात् प्रच्यावने भवत्यात्मशब्दस्य कदाचित् पर्य्याप्तम् । न च वैश्वानरशब्देन जीवात्मपरिग्रहे "**तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः**" (छां० ५ । १८ । २) इति द्युलोकादीनां मूर्द्धत्वादिकल्पनाऽपि कथ-ञ्चिदुपपद्यते । अणुपरिमाणो हि जीवात्मा । न च तथाभूतस्य तस्य द्युलोको मूर्द्धा सम्भवति । सूर्य्यश्चक्षुर्वायुर्वा प्राणः कल्पयितुं शक्यते । परब्रह्मणि परमेश्वरे च सर्वभूतान्तरात्मत्वेन सर्वाधारत्वाद् द्युलोकादीनां मूर्द्धत्वादिकल्पनोपपद्यते नास्ति कश्चिद् विरोधः । "**स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति**" (छां० ५ । १८ । १) इति श्रूयमाणमुपासनाफलमपि परमेश्वरपरिग्रहे घटते न जीवात्मपरिग्रहे ।

नहि जीवात्मानमुपासीनः खलु कश्चिन्मर्त्यलोकादिषु वर्तमानं स्वत एवानवधिकातिशयानन्दं परब्रह्म परमात्मानं कदाचिदुपभोक्तुं लभते । परमेश्वरोपासकस्य तु नास्ति तदुपभोगो दुर्लभः । यत्रेदमाम्नातम् "**युञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्थुषः । रोचन्ते रोचना दिवि**" (ऋ० १ । १ । ११ । १) इति । परितस्थुषः=परितः सर्वतः स्थितिशीलान् सर्वान् पदार्थान् चरन्तं=ज्ञातारं सर्वज्ञमरुषम्=अहिंसकं ब्रध्नम्=सर्वानन्दवर्धकं परब्रह्म परमात्मानं युञ्जन्ति=उपासते ये उपासकास्ते रोचनाः=परमतेजस्विनो दिवि=द्योतनात्मके सर्वप्रकाशके भगवति तस्मिन् रोचन्ते=परमानन्दमुपभुञ्जाना प्रकाशन्त इत्यर्थः । "**तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते**" (छां० ५ । २४ । ३) इति च वैश्वानरविदः सर्वपाप्मप्रदाहश्रवणमपि वैश्वानरस्य परमेश्वरत्वे भवति लिङ्गम् । नह्यितोऽन्यत्र तत्प्रदाहानुपपत्तेः । तस्मादिह श्रुतो वैश्वानरः परब्रह्म परमेश्वरः ॥ २४ ॥

अत्र हेत्वन्तरमाह—

"**स्मर्यमाणमनुमानं स्यादिति**" ॥ २५ ॥

ब्रह्मेत्यधिक्रियते । वैश्वानर इत्यनुवर्तते । हेत्वर्थ इतिः । स्मृतिरिह प्रत्यभिज्ञा । कचिदेकदेशग्रहणेन समुदायग्रहणस्याप्यभ्युपगमात् । **स्मर्यमाणं**=प्रत्यभिज्ञायमानं पारमेश्वरं रूप**मनुमानं**=वैश्वानरस्य परमेश्वरत्वे लिङ्गं **स्यात्**=भवेद्, **इति**=अतो विज्ञायते वैश्वानरोऽत्र परब्रह्म परमेश्वरइत्यर्थः ।

यद्धि पारमेश्वरं रूपं वेदेषु तावदाम्नायते "**यस्य भूमिः प्रमाऽन्तरिक्षमुतोदरं । दिवं यश्चक्रे मूर्द्धानं तस्मै ज्येष्ठाय ब्रह्मणे नमः**" (अथर्व १० । ४ । ७ । ३२) "**यस्य सूर्यश्चक्षुश्चन्द्रमाश्च पुनर्णवः । अग्निं यश्चक्रे आस्यं तस्मै ज्येष्ठाय ब्रह्मणे नमः**" (अथर्व० १० । ४ । ७ । ३३) इत्यादि, तथा श्रुत्यन्तरे च पठ्यते "**अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्य्यौ दिशः**

**श्रोत्रे वाग् विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा"** ( मुं० २ । १ । ४ ) इति, तदेव रूपमिह प्रत्यभिज्ञायमानं दृश्यते **"तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजा,श्चक्षुर्विश्वरूपः, प्राणः पृथग्वर्त्मात्मा, सन्देहो बहुलो, बस्तिरेवरयिः, पृथिव्येव पादौ, उर एव वेदि,र्लोमानि बर्हि,र्हृदयं गार्हपत्यो, मनोऽन्वाहार्य्यपचन,आस्यमाहवनीयः"** (छां० ५ । १८ ।२) इति । सुतेजाः=सुतेजस्त्वगुणो द्युलोकः । विश्वरूपः=विश्वरूपत्वगुणः सूर्य्यः । पृथग्वर्त्मात्मा=पृथग् वर्त्म गतिर्यस्य वायोः स पृथग्वर्त्मा, स एवात्मा स्वभावो यस्य स पृथग्वर्त्मात्मा पृथग्गतिमत्त्वगुणो वायुरिति यावत् । बहुलः=सर्वगतत्वं बहुलत्वं, तद्गुण आकाशः सन्देहः=देहमध्यभागः । रयिः=धनं, तद्गुणा आपो बस्तिः=बस्तिस्थमुदकम् । अद्भ्यो ह्यन्नं प्राप्यतेऽन्नाच्च धनमिति रयिगुणा आप उच्यन्ते, मूत्रीभूतानां च तासां बस्तिः स्थानमिति बस्तिरेव रयिरित्युक्तं द्रष्टव्यम् । बर्हिः=आस्तीर्णबर्हिरित्यर्थः । **यदि** हि वैश्वानरः परमेश्वरो न भवेन्न जातु पारमेश्वरं रूपमिह तद्रूपत्वेन प्रत्यभिज्ञायेत । नह्यन्यस्य रूपमन्यत्र प्रत्यभिज्ञातुं शक्यते । प्रत्यभिज्ञायमानं चेदं भवेद् वैश्वानरस्य परमेश्वरत्वे लिङ्गम् । अतो विज्ञायते नूनमत्रोपदिष्टो वैश्वानरः परब्रह्म परमेश्वरः ॥२५॥

**आशङ्क्य** समाधत्ते—

**"शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न, तथादृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते"** ॥ २६ ॥

**ब्रह्मेत्यधिक्रियते** । वैश्वानर इत्यनुवर्तते । **शब्दादिभ्यः**=शब्दोऽत्र वैश्वानरः, प्रादेशमात्रव्यपदेशो मूर्द्धाद्यवयवव्यपदेशश्चादिना गृह्येते, तेभ्यो, **अन्तः प्रतिष्ठानाच्च**=शरीरान्तरवस्थानाच्च **न**= वैश्वानरः परब्रह्म परमेश्वरो नेति **चेत्**=यद्युच्यते, तदा **न**=न वाच्यम्, कुतः? **तथादृष्ट्युपदेशात्**=शब्दस्य परमेश्वरेऽपि प्रसिद्धेः, अवयवव्यपदेशोपपत्त्या प्रादेशमात्रव्यपदेशस्य स्वत एवोपपत्तेः, तृतीयस्योत्तरमेतत्–मूर्द्धाद्यवयव-

गोचरदृष्टिमात्रानुशासनात्, **असम्भवात्**=परमेश्वरतोऽन्यत्र तथादृष्ट्युपदेशासम्भवात्, **पुरुषमपि च**=अन्तःप्रतिष्ठानस्योत्तरमेतत, अपिनाऽन्तःप्रतिष्ठानमभ्युपगच्छति, पुरुषत्वं चैतन्यं, यतश्चेतनमपि च, **एनं**=वैश्वानरमधीयते=पठन्ति वाजसनेयिनः, अतो वैश्वानरः परब्रह्म परमेश्वर इत्यर्थः ।

**अथोच्येत**–न खल्वेष वैश्वानरशब्दः परमेश्वरपरो युज्यते । तस्य जाठरेऽग्नौ प्रसिद्धत्वात् । यत्र हि यस्य प्रसिद्धिः स एव तस्यार्थ इत्यस्ति शब्दार्थविदां सिद्धान्तः । वैश्वानरशब्दस्य जाठरेऽग्नौ प्रसिद्धिश्च **"एषोऽग्निर्वैश्वानरः"** (शत० १० । ६ । १ । ११) इत्यग्निशब्दसामानाधिकरण्यादवसीयते । अन्यथा तदनुपपत्तेः । नहि तस्य परमेश्वरपरत्वे सामानाधिकरण्यमिदमुपपद्यते । जड़चेतनयोस्तदयोगात् । न च वैश्वानरशब्देन परमेश्वरपरिग्रहे प्रादेशमात्रमिति व्यपदेशोऽपि सङ्गघटीति । तस्य व्यापकत्वेन प्रादेशमात्रत्वासम्भवात् । जाठरोऽग्निस्तु शरीरान्तर्वर्तित्वात् प्रादेशपरिमाणः सम्भवति, नास्ति काचनानुपपत्तिः । न च वैश्वानरस्य परमेश्वरत्वे **"तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाः"** इति मूर्द्धाद्यवयवाभिधानमपि सङ्गच्छते । परमेश्वरस्याशरीरत्वेनावयवाभावात् । नहि यस्य शरीरमेव न विद्यते तस्य मूर्द्धादयोऽवयवाः कथञ्चिदभिधातुं शक्यन्ते । अशरीरत्वं च भगवतः परमेश्वरस्य साक्षाद् वेदउपनिषदश्चाभिदधते **"स पर्य्यगाच्छुक्रमकायम्"** (यजु० ४० । ८) **"अशरीरं शरीरेषु"** (कठ० २ । २२) **"दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः"** (मुं० २ । २) **"न तस्य कार्य्यं करणं च विद्यते"** (श्वे० ६ । ८) इति । तथाऽवयवप्रतिषेधोऽपि श्रूयते **"अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः"** (श्वे० ३ । १९) इति । न च प्रतिषेधे श्रूयमाणे तदभ्युपायो युज्यते । जाठराग्नेश्चाग्निसामान्यतोऽनतिरेकेण व्यापकत्वसम्भवादवयवाभिधानमुपपद्यते नास्ति कश्चिद्दोषः । **अन्तःप्रतिष्ठानाच्च** । वाजसनेयिनां हि वैश्वानरविद्यायां वैश्वानरस्य

शरीरान्तःप्रतिष्ठानमाम्नायते **"पुरुषेऽन्तःप्रतिष्ठितं वेद"** (शत० १०।६।१।११) इति। न चैतत् परब्रह्मणि परमेश्वरे सम्भवति। तस्य परममहत्त्वेनान्तर्बहिः सर्वत्र प्रतिष्ठितत्वात्। पुरुषेऽन्तःप्रतिष्ठिते जाठरेऽग्नौ च नास्ति मात्रयाऽपि तदसम्भवः। तस्मात् स एव वैश्वानरो युक्तो न परमेश्वर इति। **नैतद् वक्तव्यम्।** वैश्वानरशब्दस्य परब्रह्मणि परमेश्वरेऽपि प्रसिद्धत्वात्। यथा हि वैश्वानरशब्दः खलु पुरुषान्तर्वर्तिनि जाठरेऽग्नौ प्रसिध्यति तथा विश्वाधिपे भगवति परब्रह्मणि परमेश्वरेऽपि प्रसिध्यति। परं न स केवल इह प्रयुज्यते येन जाठरोऽग्निरपि तदर्थः सम्भाव्येत। किन्त्वात्मशब्देन विशेषितः। तथाभूतश्चैष परब्रह्म परमेश्वरमेवाभिधातुमर्हति न जाठराग्निम्। तत्र तदप्रसिद्धेः। नहि केवलप्रसिद्ध्या विशिष्टप्रसिद्धिरुत्प्रेक्षितुं शक्यते। विशेषणवैयर्थ्यापातात्। प्रादेशमात्रव्यपदेशप्रवृत्तिश्च भगवति तस्मिन्ननुपदमाचार्यः स्वयमुपपादयिष्यति, **"तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ"** (छां० ५।१८।२) इति मूर्द्धादयोऽवयवा अपि न जातु भगवतो वैश्वानरस्यावयवित्वाभिप्रायेण व्यपदिश्यन्ते येन तत्र तदसम्भव आशङ्क्येत, **किन्तु** प्राचीनशालप्रभृतयो महाशालाः पृथिवीपर्य्यन्तानां द्युलोकादीनां प्रदेशविशेषाणामेकैकं वैश्वानरमात्मानमभिमन्योपासमाना मा नाम **"मूर्द्धा ते व्यपतिष्यत्"** (छां० ५।१२।२) इति मूर्द्धपातादिकमनर्थमागुः, भगवतस्तस्य विराडाख्यं समग्रं रूपं च समधिगच्छेयुरिति तत्समग्रं रूपमुपदिदिक्षुणा करुणार्द्रचेतसा राज्ञा द्युलोकादयो मूर्द्धप्रभृतयोऽवयवाः किल द्रष्टव्यत्वाभिप्रायेणोपदिश्यन्ते। **यद्यपि** भगवतो वैश्वानरस्यात्मनो निराकारत्वादस्मदादिशरीरिणामिव वस्तुतो मूर्द्धप्रभृतयोऽवयवाः कालत्रयेऽपि न विद्यन्ते **तथापि** चित्तसन्तोषार्थं तस्य किमपि रूपं चेद् दिदृक्ष्यते तदा द्युलोकादय एव मूर्द्धप्रभृतयस्तदवयवाः कथञ्चिद् द्रष्टव्या इति तदभिप्रायो विस्पष्टः। भगवान् वैश्वानरः परमेश्वरस्तु सर्वान्तरात्मतया सर्वाधार-

त्वात् प्राणत्वाच्च शरीरे प्रत्यगात्मवद् द्युलोकादिषु सर्वत्र वरीवृत्यते। यत्रेदमाम्नातम् **"तदन्तरस्य सर्वस्य"** (यजु० ४०।५) **"एको वशी सर्वभूतान्तरात्मा"** (कठ० ५।१२) **"स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः"** (बृ० २।५।१८) इति। तस्यैवं सर्वत्र वर्तमानस्य चास्मदादिवन्मूर्द्धप्रभृतयोऽवयवा अपि कल्पयितुं शक्यन्ते नास्ति कश्चिद् विरोधः। अत एव श्रूयते भगवति वेदे **"वया इदग्ने! अग्नयस्ते अन्ये त्वे विश्वे अमृता मादयन्ते। वैश्वानर! नाभिरसि क्षितीनां स्थूणेव जनाँ उपमिद् ययन्थ"** (ऋ० १।४।२५।१) इति। **अग्ने**=प्रकाशस्वरूप परमात्मन्! **अन्ये**=त्वत्तोऽन्येऽग्नयः=सूर्य्यप्रभृतयः सर्वेऽग्नयः, **ते**=प्रकाशवृक्षस्य ते प्रकाशेन प्रकाशमयत्वाद् **वया इत्**=शाखा इव शरीरावयवा इव विद्यन्ते, **त्वे**= विश्वाधारभूते त्वयि **विश्वे**=सर्वे**ऽमृताः**=मुक्तिभाजो जीवात्मानो **मादयन्ते**=चिदात्मना स्वेन त्वत्स्वरूपभूतमानन्दमुपभुञ्जानाः सर्वदा विगतभया अवतिष्ठन्ते **"य इत्तद्विदुस्त इमे समासते"** (ऋ० २।३।२१।३९) **"आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचन"** (तै० २।४) इत्यादिश्रुतिभ्यः। **समासते**=ब्रह्मानन्दमुपभुञ्जानाः समुद्रे नद्य इव सर्वदा निर्भया अवतिष्ठन्ते। **वैश्वानर**=हे विश्वाधिप! हे सर्वस्वामिन्! **क्षितीनां**=जड़चेतनानां सर्वेषां पदार्थानां **नाभिः**=नाभिवदन्तरात्मतया मध्ये वर्तमानः सन्नद्ध इति यावदसि=भवसि, **जनान्**=उपलक्षणमेतद् जडचेतनान् निखिलान् पदार्थान् **स्थूणेव**=गृहान्तर्वर्त्तिस्तम्भ इवोपमिद्=धारकः सन् **ययन्थ**=त्वमधारयः धारयसीत्यर्थः। न चैवविधावयवकल्पनया भगवतो वैश्वानरस्यावयवित्वमायाति। यत्कारणं शैलीयं निरूपणस्य न तत्र वस्तुसतत्त्वमपेक्ष्यते। अतो निरवयवः सन्नप्येष सर्वान्तरात्मत्वेन सर्वाधारत्वात् सर्वव्यपदेशभाक् सुसम्पद्यते नास्ति चित्रमिव किञ्चिद्। **अथ** यदुक्तम् **"अन्तः प्रतिष्ठानात्"** इति, तदपि भगवतो वैश्वानरस्य परमेश्वरत्वाभावे लिङ्गं नोपपद्यते। तस्य व्यापकत्वेनान्तर्बहिः सर्वत्र प्रतिष्ठानसम्भवात्। नाि

यो व्यापको भवन्नन्तर्बहिः सर्वत्र प्रतितिष्ठति सोऽन्तर्न प्रतितिष्ठतीति सम्भवति । वाजसनेयिनश्च यथा भगवतो वैश्वानरस्य पुरुषेऽन्तःप्रतिष्ठानमामनन्ति तथा पुरुषमपि चैनमधीयते **"स एषोऽग्निर्वैश्वानरो यत्पुरुषः, स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद"** ( शत० १० । ६ । १ । ११ ) इति । न च जाठराग्नेः पुरुषान्तःप्रतिष्ठानोपपत्तावपि पुरुषत्वं कर्हिचिदुपपद्यते । जडो ह्यसौ न चेतनः । पुरुषशब्दश्चेह चेतनवचन उपादीयते, तत्रापि परमेश्वरवचनः **"पुरुष एवेदं सर्वम्"** ( ऋ० ८ । ४ । १७ । २ ) इत्यादौ तस्य तथात्वदर्शनात् । शरीरे च पुरुषाश्रयत्वादौपचारिकः पुरुषशब्दः प्रयुज्यते न मुख्यः । तस्मात् परब्रह्म परमेश्वर एवात्र वैश्वानरो न जाठरोऽग्निः ॥ २६

**ननु** मा भूदत्र वैश्वानरो जाठरोऽग्निः सूर्य्यो देवता भूताग्निर्वा भविष्यति । तयोर्व्यापकत्वेन द्युमूर्द्धत्वाद्युपपत्तेः । व्यापकत्वं च **"यो भानुना पृथिवीं द्यामुतेमामाततान रोदसी अन्तरिक्षम्"** ( ऋ० ८ । ४ । १० । ३ ) इत्यादिमन्त्रवर्णादस्त्यतिरोहितमिति । तत्राह—

**"अत एव न देवता भूतं च" ॥ २७ ॥**

वैश्वानर इत्यनुवर्तते । **अत एव**=पूर्वोक्तादेव हेतोर्**देवता**=सूर्य्यो देवता **भूतं च**=भूताग्निश्च **न**=वैश्वानरो न भवतीत्यर्थः ।

पूर्वत्र हि जाठराग्नेर्वैश्वानरत्वाभावे **"द्युमूर्द्धत्वाद्यसम्भवात्"** **"पुरुषत्वाम्नानाच्च"** इति हेतुद्वयमुपन्यस्तम् । सूर्य्यदेवतायाः भूताग्नेश्च तदभावे तदेव हेतुद्वयमिदमा परामृश्यते । समानयोगक्षेमत्वात् । देवताशब्दश्च भूताग्निशब्दसाहचर्य्यादिह सूर्य्यदेवतामाचष्टे न देवतान्तरं किञ्चित् । सूर्य्यो ह्यग्निमयः सततं दिवि द्योतते । द्योतनाद् द्युस्थानत्वाच्च तस्य देवतात्वम् । निर्ब्रुवते च तथा नैरुक्ता अपि **"देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा"** ( नि० ७ । ४ ) इति । देवता देव इति चानर्थान्तरम् । भगवति वेदे च रात्रिदिवसप्रयोजकाभ्यां

रश्मिसंहरणवितननाभ्यां सूर्य्यस्य देवत्वं प्रत्यक्षमाम्नायते **"तत्सूर्य्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सञ्जभार। यदेदयुक्त हरितः सधस्थादाद् रात्री वासस्तनुते सिमस्मै"** (ऋ० १। ८।७।४) इति। सूर्य्यदेवतायां भूताग्नौ च द्युमूर्द्धत्वादेः पुरुषत्वस्य चासम्भवो जाठराग्निवदपरोक्षो विद्यते न किञ्चिद् व्याख्यानमपेक्षते। **"यो भानुना पृथिवीं द्यामुतेममाततान रोदसी अन्तरिक्षम्"** (ऋ० ८। ४। १०। ३) इति मन्त्रवर्णस्तु भगवतः परमेश्वरस्य पृथिवीपर्य्यन्तेषु द्युलोकादिषु सर्वत्र व्यापकत्वं दर्शयति न सूर्य्यस्य, न वा भूताग्नेरिति न तद्बलेनापि तत्र तत्सम्भवः कल्पयितुं शक्यते। न च तत्सम्भवाभावे सूर्य्यो वा भूताग्निर्वा वैश्वानरो युज्यते। सर्वान्तरात्मतया सर्वाधारे भगवति परब्रह्मणि परमेश्वरे तु नास्ति तदसम्भवतुपलेशः। तस्मान् स एवात्र वैश्वानर इति युक्तमुत्पश्यामः॥ १७॥

**वैश्वानरशब्दस्य** जाठरादिष्वर्थेषु रूढिमभ्युपेत्य विशेषणादिसामर्थ्यान् परमात्मपरत्वं निरधारि। सम्प्रति तस्य साक्षाद्=यौगिक्या वृत्त्या तत्परत्वं निर्देधारयिषुर्मतान्तरोपन्यासमुखेनाह—

**"साक्षादप्यविरोधं जैमिनिः"** ॥ २८॥

वैश्वानरस्येति षष्ठ्या विपरिणम्यानुवर्तते। **साक्षादपि**=यौगिक्या वृत्त्याऽप्य**विरोधं**=वैश्वानरस्य परमात्मपरत्वेऽन्यत्राप्रसक्तिं **जैमिनिः**= जैमिनिराचार्य्यो मन्यत इत्यर्थः।

**यथा** हि वैश्वानरशब्दः स्वल्वात्मेतिविशेषणादिसामर्थ्यात् परब्रह्म परमात्मानमभिदधदन्यत्र जाठराग्न्यादिषु न तावदतिप्रसज्यते, तथा यौगिक्या वृत्त्याऽपि भगवन्तं तमभिदधानो न जात्वतिवर्तते। **स** हि यौगिक्या वृत्त्या किल विश्वस्वामिन्यर्थे वर्तते। विश्वेषां=जड़चेतनानां सर्वेषां नरः=नेता कर्मफलप्रापकोऽधिष्ठाता स्वामीति यावद् विश्वानरः, **"नरे संज्ञायाम्"** (अष्टा० ६। ३। १२९) इति पूर्वपदस्य दीर्घः।

विश्वानर एव वैश्वानरः, राक्षसो वायस इत्यादिवत् स्वार्थे तद्धितः । विश्वे चेमे नरा विश्वानराः, पूर्वपदस्य दीर्घः पूर्ववत्, तेषामयं वैश्वानरः । **"तस्येदम्"** (अष्टा० ४ । ३ । १२०) इत्यण् । स्वस्वामिभावः सम्बन्धः षष्ठ्यर्थ इति तन्निर्वचनात् । **निराहुश्चैनमेवं नैरुक्ता अपि "वैश्वानरः कस्मात्? विश्वान् नरान् नयति, विश्व एनं नरा नयन्तीति वा"** (नि० ७ । ६ । १) इति । नयति=शुभाशुभकर्मफलं प्रापयति, नयन्ति=फलार्थितया स्वस्वकर्म प्रापयन्तीत्यर्थः । न चैतद् विश्वस्वामित्वं भगवतः परमेश्वरादन्यत्र क्वचिदुपपद्यते । नहि सावग्रहैश्वर्य्यो जीवात्मा विश्वस्य स्वामी भवितुमर्हति । जाठरादयश्च चेतनाहीनाः सर्वथा परतन्त्रा न तत्र तदाशङ्कितुमपि शक्यते । परब्रह्म परमेश्वरस्तु **"यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव"** (ऋ० ८ । ७ । १२१ । ३) **"यो भूतं च भव्यं च सर्वं यश्चाधितिष्ठति"** (अथर्व० १० । ५ । ४ । १) **"प्राणाय नमो यस्य सर्वमिदं वशे । यो भूतः सर्वस्येश्वरो यस्मिन् सर्वं प्रतिष्ठितम्"** (अथर्व० ११ । २ । ४ । १) **"स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा"** (बृ० ३ । ५ । १५) **"सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च"** (बृ० ५ । ६ । १) इत्यादिश्रुतिसहस्रेभ्यो निरङ्कुशो विश्वस्वामी प्रमीयते । न च प्रमितेऽर्थे युक्ता विप्रतिपत्तिः । सर्वत्रानाश्वासप्रसङ्गात् । तस्मात् स एवेह वैश्वानरः साक्षान्न जाठरादय इति जैमिनिराचार्य्यो मन्यते ।

**एतेन** वैश्वानरसमानाधिकरणोऽग्निशब्दोऽप्यग्रणीत्वादियोगात् परमेश्वरपरो व्याख्यातो द्रष्टव्यः । **"अग्निः कस्मात्? अग्रणीर्भवत्यग्रं यज्ञेषु प्रणीयतेऽङ्गं नयति सन्नममानः"** (नि० ७ । ४ । १) इति तन्निर्वचनोपलब्धेः । आत्मशब्दश्च परमेश्वरवचनः प्रसिद्धः । अभिविमानमित्यस्य च सर्वज्ञमित्यर्थः । यो हि सर्वं जगदाभिमुख्येनापरोक्ष्येण विमिमीते प्रमिमीते सामान्यविशेषाभ्यां प्रतिपद्यते जानीते सम्पश्यति, यत्रेदमाम्ना-

तम् **"यो विश्वा अभिविपश्यति भुवना सं च पश्यति"** (ऋ० ३ । ४ । १० । ९) इति, सोऽभिविमान इत्युच्यते । सर्वज्ञ इति च तदभिप्रायः **"यः सर्वज्ञः सर्ववित्"** (मुं० १ । १ । ९) इत्यादिश्रुतेः । अस्मिन् पक्षे च **"आत्मानम"** इति विशेषणं परिचायकं न तु व्यावर्तकमिति विज्ञातव्यम् ॥ २५ ॥

**वैश्वानरः** परमेश्वर इत्युपपादितम् । सम्प्रति तत्र प्रादेशमात्रव्यपदेशप्रवृत्तिमुपपादयिष्यन् पूर्वं तावत् परमतमुपन्यस्यति—

**"अभिव्यक्तेरित्याश्मरथ्यः"** ॥ २९ ॥

**अभिव्यक्तेः**=निमित्तत्वं पञ्चम्यर्थः, उपासनसमये हृदयपुण्डरीके भगवत्स्वरूपोपलब्धिरभिव्यक्तिः, तन्निमित्तः प्रादेशमात्रव्यपदेश **इत्याश्मरथ्यः**=आश्मरथ्याचार्यो मन्यत इत्यर्थः ।

**यदा** ह्यनन्यभक्तियोगेन मोक्षमाणा उपासकाः खलु जगत्पतिं परमात्मानं यथाशास्त्रमुपासते, प्रकृतितत्कार्येभ्यः समुत्थाय च परमप्रेम्णा भगवति तस्मिन् प्रवेविश्यन्ते, यत्रेदमाम्नातम् **"शरवत्तन्मयो भवेत्"** (मुं० २ । २ । ४) इति, तदा करुणावरुणालयो भक्तवत्सलोऽसौ भगवान् मा नामैतेऽतप्यं तपस्तन्वानाः पुण्यमूर्त्तयो वैदिकोत्तमाः सततं मद्दर्शनोत्सुकाः सन्तो हन्त क्लिश्यन्तामिति तूर्णं किल हृदयपुण्डरीके तेषामभिव्यज्यते । यत्रेदमाम्नातम् **"यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्"** (मुं० ३ । २ । ३) इति । हृदयपुण्डरीकं च भगवतस्तस्याभिव्यक्तिस्थानं प्रसिद्धम् । यत्रेदं श्रूयते **"वेनस्तत्पश्यन् निहितं गुहा सद्"** (यजु० ३२ । ८) **"एतद् यो वेद निहितं गुहायाम्"** (मुं० २ । १ । १०) **"पश्यत्स्विहैव निहितं गुहायाम्"** (मुं० ३ । १ । ७) **"सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायाम्"** (तै० २ । १) **"एष म आत्माऽन्तर्हृदये"** (छां० ३ । १४ । ३) **"स वा एष आत्म हृदि"** (छां० ८ । ३ । ३) इति । स्मर्यते च **"ईश्वरः**

**सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति"** (गी० १८ । ६१) इति हृदयपुण्डरीकं च भौतिकत्वात् प्रादेशमात्रमिति हृदयविद आचक्षते । तत्रोपासकानां कृतेऽभिव्यक्तेर्भगवान् वैश्वानरोऽपि प्रादेशमात्रो व्यपदिश्यते । यत्रेदमाम्नातम् **"अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्य्येण तं विद्याच्छुक्रममृतम्"** (कठ० ६ । १७) इति । अङ्गुष्ठमात्रः प्रादेशमात्र इति चानर्थान्तरम् । हृदयपरिमाणनिमित्तश्च परमेश्वरेऽङ्गुष्ठमात्रव्यपदेश इति स्वयमाचार्य्योऽप्यभिधास्यते **"हृद्यपेक्षया तु मनुष्याधिकारत्वात्"** (वे० १ । ३ । २५) इति । तस्माद् हृदयाभिव्यक्तिनिमित्ता भगवति वैश्वानरे प्रादेशमात्रव्यपदेशप्रवृत्तिरित्याश्मरथ्याचार्य्यो मन्यते ॥ २९ ॥

मतान्तरं दर्शयति—

**"अनुस्मृतेर्बादरिः"** ॥ ३० ॥

**अनुस्मृतेः**=पञ्चम्यर्थः पूर्ववत्, श्रुतस्य पश्चात् स्मरणं चिन्तनमुपासनमनुस्मृतिः, तन्निमित्तः प्रादेशमात्रव्यपदेश इति **बादरिः**=बादरिराचार्य्यो मन्यत इत्यर्थः ।

जगत्पतिः परमात्मा हि शास्त्रादुपश्रुत्य साक्षाच्चिकीर्षया मोक्षमाणैरुपासकैः खलु हृदयपुण्डरीके सततमनुस्मर्य्यते । अनुस्मरणमनुचिन्तनमुपासनमिति चानर्थान्तरम् । हृदयपुण्डरीकं च शास्त्रविद्भिर्योगिभिः प्रादेशपरिमाणमवध्रियते । अतस्तत्रोपास्यमानो भगवान् वैश्वानरोऽपि प्रादेशमात्रो व्यपदिश्यत इति बादरिराचार्य्योऽवबुध्यते ॥ ३० ॥

अन्यं मतमवतारयति—

**"सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति** ॥ ३१ ॥

**सम्पत्तेः**=पञ्चम्यर्थः पूर्ववत्, वैश्वनराङ्गत्वेनोपन्यस्तानां द्युप्रभृतिपृथिवीपर्य्यन्तानां प्रदेशविशेषाणां प्रादेशमात्रे मूर्द्धादि–चुबुकान्ते शरीराङ्गसमूहे सम्पादनं सम्पत्तिः, तन्निमित्तः प्रदेशमात्रव्यपदेश इति

**जैमिनिः**=जैमिनिराचार्य्यो मन्यते । सम्पत्तौ प्रमाणमाह–**तथाहि दर्शयति**—वाजसनेयिब्राह्मणश्रुतिरिति शेष इत्यर्थः ।

ये हि द्युप्रभृतयः पृथिवीपर्य्यन्ताः खलु प्रदेशविशेषा भगवतो वैश्वानरस्य मूर्धाद्यङ्गत्वेनोपन्यस्यन्ते ते वाजसनेयिब्राह्मणे वैश्वानरविद्याया-मुपासकशरीरे मूर्धादिषु चुबुकपर्य्यन्तेष्वङ्गेषु सम्पाद्यन्ते "**प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसम्पन्नाः, तथा नु वः एतान् वक्ष्यामि, यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामीति ।१०। स होवाच । मूर्द्धानमुपदिशन्नुवाचैष वा अतिष्ठा वैश्वानर इति । चक्षुषी उपदिशन्नुवाचैष वै सुतेजा वैश्वानर इति । नासिके उपदिशन्नुवाचैष वै पृथग्वर्त्मात्मा वैश्वानर इति । मुख्यमाकाशमुपदिशन्नुवाचैष वै बहुलो वैश्वानर इति । मुख्या अप उपदिशन्नुवाचैष वै रयि वैश्वानर इति । चुबुकमुपदिशन्नुवाचैष वै प्रतिष्ठा वैश्वानर इति**" (शत० १० । ६ । १ । १०–११) इति । अतीत्याधोलोकान् स्थिताऽतिष्ठा=द्यौः । मुखे भवं मुख्यम् । एवं मुखे भवा मुख्याः । अधरं मुखफलकं चुबुकम् । वाजसनेयकेऽतिष्ठात्वगुणा द्यौः, आदित्यश्च सुतेजस्त्वगुण आम्नायते, छान्दोग्ये पुनः सुतेजस्त्वगुणा द्यौः, आदित्यश्च विश्वरूपत्वगुण इति विशेषः । मूर्द्धादिचुबुकपर्यन्तानां शरीराङ्गानां च प्रादेशमात्रं स्थानं प्रत्यक्षम् । तत्र द्युप्रभृतिपृथिवीपर्यन्तानां वैश्वानराङ्गानां सम्पादनात् तत्प्रयुक्तोऽङ्गिनि भगवति वैश्वानरेऽपि प्रादेशमात्रव्यपदेशो युज्यते । तस्मात् सम्पत्तिनिमित्ता प्रादेशमात्रव्यपदेशप्रवृत्तिरिति जैमिनिराचार्य्यो निश्चिनुते ॥ ३१ ॥

आत्ममतमाह—

"**आमनन्ति चैनमस्मिन्**" ॥ ३२ ॥

**हेत्वर्थश्चः** । यस्मा**देनं**=भगवन्तं वैश्वानरम**स्मिन्**=द्यामारभ्य पृथिवीपर्य्यन्ते प्रदेशविशेषेऽवयवित्वेन द्रष्टव्यम**ामनन्ति**=पठन्ति छन्दोगास्तस्मादेवं प्रादेशमात्रो व्यपदिश्यत इत्यर्थः ।

न खलु भगवति वैश्वानरेऽभिव्यक्त्यादिनिमित्तः प्रादेशमात्रव्यपदेशः प्रवर्तते, किं तर्हि ? द्युलोकादिप्रदेशविशेषनिमित्तः । ये हि द्युलोकादयः प्रदेशविशेषाः पुरुषाणां जगदवबोधसम्पादनार्थं कथञ्चिद् विभज्य शास्त्रेणादिश्यन्ते ते भगवतो वैश्वानरस्य परमात्मनो मूर्द्धाद्यवयवत्वेनात्र परिकल्प्यन्ते । अवयवी चानुगतत्वादवयवैर्यथा मीयमानो लक्ष्यते तथा वैश्वानरोऽपि द्युलोकादिषु तेष्वन्तर्यामितयाऽनुगतोऽवयविवदवयवकल्पैस्तैः सुखेन मातुं विज्ञातुं शक्यते । अवयवविज्ञानेऽवयविविज्ञानस्यावश्यकत्वात् । अतो द्युलोकादिप्रदेशविशेषनिमित्तस्तत्र प्रादेशमात्रव्यपदेशो न स्वाभाविको नाप्यभिव्यक्त्यादिप्रयुक्त इति भगवान् सूत्रकृन्मन्यते ॥३२॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादवैदिकमुनिविरचितायां वेदान्तसूत्रवैदिकवृत्तौ प्रथमाध्यायस्य द्वितीयः पादः ॥**





# प्रथमोऽध्यायः

## तृतीयः पादः

जगज्जन्मादिहेतोः सर्वज्ञसर्वशक्तेर्भगवतः परब्रह्मणः परमेश्वरस्य द्युभ्वादिविश्वस्वामित्वमुपपादितम्। तच्च तस्य विश्वान्तरात्मतया तदाधारत्वान्नतु ताटस्थ्यादित्येतदिदानीमुपपादयिष्यन्नाह —

**"द्युभ्वाद्यायतनं स्वशब्दात्"** ॥ १ ॥

ब्रह्मेत्यधिक्रियते। **द्युभ्वाद्यायतनं**=द्यौर्द्युलोकः, भूः पृथिवीलोकः, द्यौश्च भूश्च द्युभुवौ, द्युभुवावादी यस्य तद् द्युभ्वादि विश्वं जगत्, तस्यायतनं स्थानमाधारोऽधिष्ठानमिति यावद् यन्मुण्डके श्रूयते तद् ब्रह्मावगन्तव्यम्, कुतः? **स्वशब्दात्**=आत्मशब्दः स्वशब्दः, तेनाभिधानादित्यर्थः।

मुण्डके तावच्छ्रूयते **"यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः। तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः"** (मुं० २ । २,। ५) इति। **ओतं**=समाश्रितं, **प्राणैः**-प्राणनक्रियाहेतुभिर्जीवात्मभिः। **तत्र** संशयः किं यदिदं द्युभ्वादीनामायतनमाकर्ण्यते तत् परब्रह्म परमेश्वरः स्यादुत जीवात्मा, किंवा विश्वजगदुपादानकारणं प्रधानमिति। **कुतः** संशयः? ओतमिति साधारणशब्दप्रयोगात्। ओतत्वं हि समाश्रितत्वम्। तच्च निरपेक्षं वा सापेक्षं वा परब्रह्मणि परमेश्वरे जीवात्मनि प्रधाने च समानं विद्यते। नहि यथा परब्रह्म परमेश्वरं पदार्थजातं समाश्रयते तथा जीवात्मानं प्रधानं वा न किञ्चित्समाश्रयते। समाश्रयणाच्च युक्तः संशयः। **तत्र** जीवात्मा प्रधानं चेति पूर्वः पक्षः, परब्रह्म परमेश्वर इति

सिद्धान्तः । **किं** तावत् प्राप्तम् ? प्रधानमिति ब्रूमः । **प्रकृतित्वात्** । प्रधानं हि विश्वस्य द्युभ्वादिजगतः प्रकृतिरभ्युपगम्यते । प्रकृतिं च स्वां कार्यजातं नियमेन समाश्रयत इति प्रसिद्धम् । नहि कार्य्यमवयवि स्वप्रकृतिभूतानवयवान् कदाचिदसमाश्रित्य क्वचिदन्यत्रावस्थातुं पारयते । तस्य तत्समाश्रयत्वे च द्युभ्वादिकार्य्यस्य जगतः प्रधानमेवायतनमित्युपपद्यते । **"अमृतस्यैष सेतुरिति श्रवणाच्च"** । द्युभ्वाद्यायतनं खल्वमृतस्य सेतुरिह श्रूयते । जगज्जन्मादिकारणं ब्रह्म चामृतम् **"आनन्दरूपममृतं यद्विभाति"** ( मुं० २ । २ । ७ ) इत्यादिश्रुतिभ्यः । न चामृतं सद् ब्रह्मामृतस्य सेतुः सम्भवति । सेतुश्च पारवान् लोके दृष्टः । न च परब्रह्म परमेश्वरः पारवान् शक्यतेऽभ्युपगन्तुम् । **"पुरुषान्न परं किञ्चित्"** (कठ० ३ । ११) **"अनन्तमपारम्"** (बृ० २ । ४ । १२) इति प्रतिषेधात् । प्रधानस्य पारे च परब्रह्म परमेश्वरो वर्तेत इत्यस्ति पारवत् प्रधानम् । **अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च । यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति"** (कठ० ६ । ८) इति तत्पारे वर्तमानस्य परब्रह्मणः परमेश्वरस्य विज्ञानेनामृतत्वप्राप्त्या चामृतस्य सेतुः । **आ**त्मशब्दश्चात्मीयवचनः प्रधानेऽपि प्रयोक्तुं शक्यते नास्ति काचिदनुपपत्तिः । **तस्मा**दिह श्रूयमाणं द्युभ्वाद्यायतनं प्रधानमेव युक्तं नान्यत्किञ्चिदिति सम्यगीक्षामहे । **जी**वात्मा वा तदायतनं भविष्यति । तस्य भोक्तृत्वेन द्युभ्वादिभोग्याश्रयत्वोपपत्तेः । भोक्त्रर्थं हि सर्वं भोग्यम् । न चेत् कश्चिद् भोक्ता स्यात् किमर्थमिदं भोग्यमुदियात् । नहि भोक्तारं विना भोग्यं सम्भवति । **सापेक्षत्वात्** । भोक्त्रपेक्षं खलु भोग्यम् । यच्च यदपेक्षं तत्तद्भावे भवति तदभावे च न भवति । यच्च यद्भावे भवति यदभावे च न भवति तत्तदाश्रयमिति नियमः, यथाप्रजानाथाश्रयं प्रजामण्डलम् । भोक्ता च जीवात्मा, भोग्यं च विश्वमिदं द्युभ्वादि जगत् । अतस्तदायतनं जीवात्मेति सुखेन पर्य्यवस्यति । **लिङ्गाच्च** । लिङ्गादपि द्युभ्वाद्यायतनं जीवात्मेति गम्यते । भवति च **"ओतं मनः सह प्राणैश्च सर्वैः"** इति जीवात्मनः सुव्यक्तं लिङ्गम् । प्राण-

सहितस्य मनसस्तेनैव सम्बन्धात्। अस्ति तावदुपकरणोपकरणिभावः प्राणसहितस्य मनसो जीवात्मना सम्बन्धः। यस्य च येन सम्बन्धस्तस्य स एवाश्रय इति युज्यते, नान्यः कश्चित्। परम्परासम्बन्धापेक्षया साक्षात्सम्बन्धस्य बलीयस्त्वात्। **"अरा इव रथनाभौ संहता यत्र नाड्यः। स एषोऽन्तश्चरते बहुधा जायमानः"** (मुं० २। २। ६) इत्युत्तरस्मिञ्छ्लोके च पूर्वश्लोकोक्तं द्युभ्वाद्यायतनं **"यत्र"** इति सप्तम्यन्तेन परामृश्य नाड्याश्रयं बहुधा जायमानं चाभिदधाति। तदिदं नाड्याश्रयत्वं बहुधा जायमानत्वं चोभयं जीवात्मनो लिङ्गम्। श्रुत्यन्तरेषु तस्यैव नाडीसम्बन्धस्य बहुधा जायमानत्वस्य च श्रवणात्। श्रूयते खलु श्रुत्यन्तरेषु जीवात्मनो नाडीसम्बन्धो बहुधा जायमानत्वं चोभयं साक्षात् **"तद् यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति"** (छां० ८। ६। ३) **"अथ यदा सुषुप्तो भवति यदा न कस्य चन वेद हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते"** (बृ० २। १। १९) इति नाडीसम्बन्धः, **"अपाङ् प्राङेति स्वधया गृभीतः"** (ऋ० २। ३। २१। ३८) **"सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः** (कठ० १। ६) **"योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनु संयन्ति यथाकर्म यथाश्रुतम्"** (कठ० ५। ७) **"तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतरं रूपं तनुत एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानाम्"** (बृ० ४। ४। ४) इति च बहुधा जायमानत्वम्। न च श्रूयमाणमेतदुभयं कथञ्चिदन्यथयितुं पार्यते। तस्माज्जीवात्मैवात्र स्याद् द्युभ्वाद्यायतनमिति। एवं प्राप्ते प्रतिविधीयते—

**द्युभ्वाद्यायतनं स्वशब्दात्** । यत् खलु द्युभ्वाद्यायतनमिह श्रूयते तदात्मशब्देनान्ते कीर्त्यते "**तमेवैकं जानथ आत्मानम्**" इति। यदि जगदुपादानकारणं प्रधानं द्युभ्वाद्यायतनं विवक्ष्येत तदा नात्मशब्देनान्ते कीर्त्येत । नहि प्रधानमात्मशब्देन कीर्तयितुं शक्यते । तस्यात्मीयत्वेऽप्यात्मत्वाभावात् । मुख्ये सम्भवति चामुख्यकल्पनं न न्याय्यं मन्यते । **न च** प्रधानं स्वीयकार्य्यवर्गस्यायतनं भवदपि सर्वस्य द्युभ्वादिजगतः कथञ्चिदायतनमुपपद्यते । जीवात्मनां चेतनानामपि तदन्तःपातित्वात् । जड़चेतनात्मकस्य कार्य्याकार्य्यात्मनः सर्वस्य जगतश्चायतनमिह विवक्ष्यते न कार्य्यमात्रस्य । **जीवात्मा** चात्मत्वेऽपि न द्युभ्वाद्यायतनं सम्भवति । अधिष्ठानाधिष्ठेयभावेन तदायतनत्वस्याभिप्रेतत्वात् । यदि हि भोक्तृभोग्यभावेन खलु द्युभ्वाद्यायतनत्वमत्राभिप्रेयेत तदा जीवात्माऽपि तदायतनं सम्भवेत् । न च तथा तदभिलष्यते । क्लिष्टत्वात् । ओतमिति वचनाच्च । किं तर्हि ? अधिष्ठानाधिष्ठेयभावेन । तदेतच्च परमात्मन्येव सङ्घटीति न कस्मिँश्चिदन्यस्मिन् । नहि परमात्मानं विहाय कश्चिदन्योऽधिष्ठानाधिष्ठेयभावेन द्युभ्वादीनामायतनमुपपद्यते । परतन्त्रत्वात् । परब्रह्मणः परमात्मनस्तथा द्युभ्वाद्यायतनत्वं च श्रुत्यन्तरेभ्योऽवगम्यते "**स दाधार पृथिवीं द्यामुतेमाम्**" (ऋ० ८ । ७ । ३ । १) "**येन द्यौरुग्रा पृथिवी च दृढा येन स्वः स्तभितं येन नाकः**" (ऋ० ८ । ७ । ३ । ५) "**स्कम्भो दाधार द्यावापृथिवी उभे इमे, स्कम्भो दाधारोर्वन्तरिक्षम् । स्कम्भो दाधार प्रदिशः षडुर्वीः स्कम्भ इदं विश्वं भुवनमाविवेश** (अथर्व० १० । ४ । ७ ।३५) "**सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः**" (छां० ६ । ८ । ४) इति । तत्सामान्यादिहापि तस्यैव ग्रहणमुचितमिति पश्यामः । अन्यथा परस्परविरोधप्रसङ्गात् । सर्वायतनस्य च प्राणैः सह मनसो नाडीनां चायतनत्वमपि न विरुध्यते । सर्वान्तःपातित्वात् । नहि सर्वस्याधारो भवँस्तदन्तर्गतस्याधारो न भवतीति वक्तुमुत्सहते । **यदा** खलु जीवात्मैव परमात्माधारस्तदा तत्सम्बन्धिनो मनःप्राणादयः सन्ति

तदाधारा इति किमु वक्तव्यम् । बहुधा जायमानत्वं च न बहुषु योनिषु जायमानत्वाभिप्रायेणोच्यते येनायं जीवात्मनो धर्म आशङ्क्येत, **किंतर्हि ?** बहुधा भवन्त्याः प्रकृतेः प्रयोजकत्वाभिप्रायेण । न च जीवात्मा बहुधा भावाय प्रकृतिं प्रयोजयितुमर्हति । हीनशक्तित्वात् । प्रकृतिर्हि जगदाकारेण बहुधा जायते । तां च बहुधा जायमानामन्तश्चरन्नीश्वरः प्रयोजयति । तावन्मात्रेणैषोऽपि "अन्तश्चरते बहुधा जायमानः" इति व्यपदिश्यते यथा विजेजीयमानेषु योद्धृषु विजेजीयते नराधिप इति । सोऽयमर्थो वाक्यशेषेणोपोद्बल्यते **"ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात्"** (मुं० २ । २ । ६) इति । यस्मिन्नरा इव रथनाभौ द्युलोकादयो नाडीपर्य्यन्ता आधिदैविका आधिभौतिका आध्यात्मिकाश्च स्थूलसूक्ष्माः सर्वे पदार्थाः **संहताः**=सम्प्रविष्टाः सन्ति, यत्रेदमाम्नातम् **"यस्मिन् भूमिरन्तरिक्षं द्यौर्यस्मिन्नध्याहिता । यत्राग्निश्चन्द्रमाः सूर्यो वातस्तिष्ठन्त्यर्पिताः"** (अथर्व० १० । ४ । ७ । १२) इत्यादि, स **एषोऽन्तः**=अन्तरात्मतया सर्वस्य मध्ये **चरते**=वर्तते, **बहुधा जायमानः**=बहुधा जायमानया प्रकृत्या बहुधा जायमान इव च व्यपदिश्यते, तमा**त्मानं**=परमात्मानमोमित्येवं **ध्यायथ**=चिन्तयत, स **तमसः**=प्रकृतेः **परस्तात्**=परो **वः**=मोक्षमार्गं गच्छतां युष्माकं **पाराय**=संसारार्णवस्य पाराय **स्वस्ति**=कल्याणकरो विघ्ननिवारको भूयादिति, तदर्थः । यदि द्यर्षिरत्र "बहुधा जायमानः" इति जीवात्मानमभिप्रेष्यत् तदा न जातु वाक्यशेषे कदाचित् "ओमित्येवं ध्यायथ" इत्यवदिष्यत् । नहि जीवात्मा कर्हिचिदोमित्येवं ध्यातुं शक्यते । परमात्मनो नाम हि "ओ३म्" इत्येतत्, यत्रेदं स्मर्य्यते **"तस्य वाचकः प्रणवः"** (यो० १ । २७) इति । प्रकृतेर्बहुधा जायमानत्वं च परमात्मायत्तं श्रुतिस्मृतिभ्यां स्पष्टमधिगम्यते **"एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति"** (कठ० ५ । १२) **"मयाऽध्यक्षेण प्रकृतिः सूयते स चराचरम्"** (गी० ९ । १०)

इति । रूपं=प्रकृतिः, रूप्यते निरूप्यते बहुधा परिणममानेति तद्व्युत्पत्तेः । **"अमृतस्यैष सेतुः"** इत्यपि परमात्मनि न तावदनुपपन्नं भवति । नहि यादृशो लोके सेतुर्दृष्टस्तादृशः सेतुरिह परमात्मा विवक्ष्यते । अन्यथा मृद्दार्वादिमयोऽप्यसौ परिकल्प्येत । **किं तर्हि ?** सेतुरिव सेतुः । यथा हि लोके खलु देशात्मोद्दिधीर्षुर्मनुष्यः सेतुसमाश्रयणेन गङ्गायाः पारे वर्तमानं स्वाभीष्टं गुरुकुलमुपगच्छति तथा मुमुक्षुरपि परमात्मसमाश्रयणेन संसारार्णवस्य पारे वर्तमानं स्वाभीष्टं दुःखत्रयात्यन्तनिवृत्तिपूर्वकपरमानन्दावाप्तिलक्षणममृतं मोक्षं प्राप्नोति । प्रापकत्वमात्रसाधर्म्यादेव च जगज्जन्मादिहेतुः परमात्माऽत्र मोक्षस्यामृतस्य सेतुः प्रापक इत्युपदिश्यते । **धात्वर्थयोगाद्वा** । सिनोतेर्बन्धनकर्मणस्तावत् सेतुशब्दो निष्पद्यते । बन्धनं विधारणमिति चानर्थान्तरम् । तेन बन्धको विधारको व्यवस्थापक इति तदर्थः । यथा हि लोके "बन्धा" इत्यपर्य्यायः सेतुः खलु पयसामोघस्य बन्धको विधारको व्यवस्थापको दरीदृश्यते तथैव जगतां पतिः परमेश्वरोऽपि सर्वेषां लोकानां मृत्योरमृतस्य च बन्धको विधारको व्यवस्थापको वरीवृत्यते । अन्यथा सर्वेऽपि परस्परमभिहत्य द्रागित्येव सम्भिद्येरन् विदीर्य्येरन् । ते च सर्वे यथास्थानं यथाकार्य्यं यथासमयं च सुव्यवस्थिता दृश्यन्ते । नहि द्युलोकादयो मात्रयाऽपि स्वस्वस्थानमतिशेरते, अग्न्यादयश्च स्वस्वकार्य्यं न विदधते, व्रीहियवादयश्च यथाकालं न विकुर्वते, पक्वत्वं च न समश्नुवते । अत एव चैषामेवंविधो बन्धको विधारको व्यवस्थापको भगवान् जगत्पतिः परमेश्वरोऽपि सेतुरित्याख्यायते । **"यःसेतुरीजानानामक्षरं ब्रह्म यत्परम् । अभयं तितीर्षतां पारं नाचिकेतं शकेमहि"** (कठ० ३ । २) **"अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय । नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम् । १ । सर्वे पाप्मानोऽतो निवर्तन्ते, अपहतपाप्मा ह्येष ब्रह्मलोकः"** (छां० ८ । ४ । १-२) **"एष सर्वेश्वर एष भूताधिपतिरेष**

**भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय"** (बृ० ४ । ४ । २२) इति । **ईजानानाम्**=ईजिर्गतिकर्मा, प्रतिक्षणं गच्छतां सर्वेषामेषां द्युप्रभृतिलोकानाम्, **तितीर्षतां**=संसारसागरं तर्तुमिच्छतां, पारं=पारभूतं, **नाचिकेतं**=नाचिकेतकर्मणा प्राप्यम् । इत्थं भूतं यद् ब्रह्म तद् वयं **शकेमहि**=वक्तुं ज्ञातुं च शकुम इत्यर्थः । यथा चैतं परमात्मलक्षणं सेतुं द्युप्रभृतयो लोका न तावदतिवर्तन्ते, मृत्युश्च नातिक्रामति तथाऽमृतमपि न तरति । लोकादिवत् तस्यापि तदधीनत्वात् । यत्रेदमाम्नातम् **"यस्य छायाऽमृतं यस्य मृत्युः"** (ऋ० ८ । ७ । ३ । २) **"उतामृतत्वस्येशानः"** (ऋ० ८ । ४ । १७ । २) इति । **छाया**=अधीनम् । यस्य च यदधीनं यश्च यस्येशानः स तस्य सेतुरिति सुनिर्णीतमेव विद्यते, नास्ति तत्र किञ्चिद्वक्तव्यम् । प्रकरणं चेदं परमात्मनो, न प्रधानस्य, न वा जीवात्मन इति स्वयमग्रे वक्ष्यते । **तस्मा**दिह द्युभ्वाद्यायतनं परब्रह्म परमात्मैवेति निश्चेतव्यम् ॥ १ ॥

अत्रैव हेत्वन्तरमाह—

**"मुक्तोपसृप्यव्यपदेशात्"** ॥ २ ॥

ब्रह्मेत्यधिक्रियते । द्युभ्वाद्यायतनमित्यनुवर्तते । पूर्वत्रैवायं हेतुरिति चकारेणोच्यते । **मुक्तोपसृप्यव्यपदेशात्**=प्राप्तब्रह्मदर्शनाश्चरमदेहास्तत्रभवन्तो जीवन्मुक्ता अत्र मुक्ताः, उपसृप्यमिति भावप्रधानो निर्देशः, उपगम्यत्वं प्राप्यत्वमिति तदर्थः, व्यपदेशोऽभिधानम्, मुक्तात्मभिरत्रभवद्भिर्ब्रह्मविद्भिरुपसृप्यत्वस्योपगम्यत्वस्याभिधानाद् द्युभ्वाद्यायतनं ब्रह्म प्रतिपत्तव्यमित्यर्थः ।

**"यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः"** (मुं० २ । २ । ५) इति द्युभ्वाद्यायतनं प्रकृत्य **"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"** (मुं० २ । २ । ८) इति तद्वेदनेन रागद्वेषभयशोकात्मकहृदयग्रन्थिभेदनादिकमुक्त्वा **"हिर-**

**ण्मये परे कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः"** ( मुं० २ । २ ।९ ) इति च तद्वेदनप्रकारमभिधाय मुक्तोपसृप्यत्वं तस्य व्यपदिशति **"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति । ७ । यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान् नामरूपाद् विमुक्तः परात्परं पुरुषमुपैति दिव्यम्"** ( मुं० ३ । २ । ७–८ ) इति । परमं साम्यं=परब्रह्मणा पुरुषेणात्यन्ताविभागम् । उपैति=प्राप्नोति । यदि जीवात्मा प्रधानं वा द्युभ्वाद्यायतनं भवेन्न जातु श्रुत्या तस्य मुक्तोपसृप्यत्वं व्यपदिश्येत । नहि जीवात्मा वा प्रधानं वा तत्रभवद्भिर्ब्रह्मविद्भिर्मुक्तैरुपसृप्यत इति क्वचित् प्रसिध्यति । परब्रह्मणो भगवतः परमेश्वरस्य तदुपसृप्यत्वं चास्ति सर्वशास्त्रेषु सुप्रसिद्धम् **"स पर्यगाच्छुक्रम्"** ( यजु० ४० । ८ ) स=परमात्मदर्शी, पर्यगात्=प्राप्नोति **"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते"** ( कठ० ६ । १४ ) **"तदक्षरं वेदयते यस्तु सोम्य! स सर्वज्ञः सर्वमेवाविवेश"** (प्र० ४ । ११ ) सर्वं=ब्रह्म, सर्वाधारत्वात् **"ब्रह्म विदाप्नोति परम्"** ( तै० २ । १ ) **"स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म, अभयं वै ब्रह्म, अभयं वै ब्रह्म भवति य एवं वेद"** ( बृ० ४ । ४ । २५ ) भवति=प्राप्नोति **"नान्यः पन्था विद्यतेऽयनाय"** ( श्वे० ३ । ८ ) अयनाय=ब्रह्मप्राप्तिलक्षणाय मोक्षाय **"सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम् । तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः"** ( मनु० १२ । ८५ ) अमृतं=ब्रह्म **"एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना । स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम्"** ( मनु० १२ । १२५ ) इति । न च प्रसिद्धस्यातिक्रमणं न्याय्यम्, सुप्रसिद्ध

स्येति तु किमु वक्तव्यम् । **श्रुत्यन्तराच्च** । यथा ह्यत्र वाग्विमोकपूर्वकं द्युभ्वाद्यायतनस्य परब्रह्मणः परमेश्वरस्य ज्ञानं तावदुपदिश्यते तथा श्रुत्यन्तरेऽप्यनुशिष्यते "**तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद् बहून् शब्दान् वाचो विग्लापनं हि तत्**" ( बृ० ४ । ४ । २१ ) इति । तत्र च तद्गोचरो ज्ञानोपदेशो विस्पष्टः । तच्छब्देन परामृष्टव्यस्य परब्रह्मणः परमेश्वरस्य प्रकृतत्वात् "**विरजः पर आकाशादज आत्मा महान् ध्रुवः**" ( बृ० ४ । ४ । २० ) इति । आकाशः=प्रकृतिः । तत्सामान्यादिहापि तद्गोचरेण ज्ञानोपदेशेन भवितव्यम् । अन्यथा श्रुत्योर्विरोधापत्तेः । न चाविरोधे सम्भवति विरोधाश्रयणं युक्तम् । तस्माद् द्युभ्वाद्यायतनं परब्रह्म परमेश्वरः ॥ २ ॥

**सि**द्धान्तः समर्थितः । सम्प्रति पूर्वः पक्षो व्युदसनीयः । तत्रादौ प्रधानं निरसन्नाह—

**"नानुमानमतच्छब्दात्"** ॥ ३ ॥

द्युभ्वाद्यायतनमित्यनुवर्तते । **आनुमानं**=स्मृतिरनुमानं, तद्गम्यं, श्रुत्या सामान्यतः प्रतिपादनात् स्मृत्या विशेषतः प्रतिपाद्यमिति यावत् प्रकृत्यपरपर्य्यायं प्रधानं **न**=द्युभ्वाद्यायतनं न भवति, कुतः ? **अतच्छब्दात्**=तत्प्रतिपादकशब्दाभावादित्यर्थः ।

**य**था हि परब्रह्मणः परमेश्वरस्य प्रतिपादकः खल्वात्मशब्द इह विद्यते "**तमेवैकं जानथ आत्मानम्**" ( मुं० २ । २ । ५ ) इति, न तथा प्रधानस्य प्रतिपादकः कश्चिच्छब्दो वर्तते । न चावर्तमाने तस्मिन् तत्कल्पना युज्यते । निराश्रयत्वेनानुपादेयत्वप्रसङ्गात् । **अतो** न द्युभ्वाद्यायतनं प्रधानम् ॥ ३ ॥

**अतिदिशति**—

**"प्राणभृच्च"** ॥ ४ ॥

**द्युभ्वाद्यायतनं नातच्छब्दादिति पदत्रयमनुवर्तते । तथार्थश्च ।**

**प्राणभृच्च**—यथा प्रधानमतच्छब्दाद् द्युभ्वाद्यायतनं न भवति तथा प्राणभृज्जीवात्मेत्यर्थः ।

यद्यप्यात्मशब्दो जीवात्मपरमात्मसाधारणस्तथापि नासौ जीवात्मपर इह प्रयुज्यते । **"यः सर्वज्ञः सर्ववित्"** (मुं० २ । २ । ७ । इत्यनन्तरश्लोके सर्वज्ञत्वादिविशेषणोपादानात् । यदि हि जीवात्मपरः प्रयुज्येत तदा सर्वज्ञत्वादिकं तद्विशेषणं नोपादीयेत । नहि जीवात्मा सर्वज्ञः सर्ववित् क्वचिदाम्नायते । अल्पविदल्पज्ञश्चासौ प्रत्यक्षः । परब्रह्मणः परमेश्वरस्य सर्वज्ञत्वं सर्ववित्त्वं च वेदोपनिषत्सु प्रव्यक्तमाम्नायते **"यो विश्वाऽभिविपश्यति भुवना सं च पश्यति"** (ऋ० ३ । ४ । १० । ९) **"यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः"** (मुं० १ । १ । ९) **"एष सर्वेश्वर एष सर्वज्ञः"** (मां० ६) **"स विश्वकृद् विश्वविद्"** (श्वे० ६ । १५) इति । **तस्मात्** स एवेह द्युभ्वाद्यायतनं न प्राणानां भर्ता जीवात्मा ॥ ४ ॥

**ननु** जीवन्मुक्त्यवस्थायां जीवात्माऽपि सवज्ञः सम्पद्यते, यत्रेदं समाम्नायते **"तदक्षरं वेदयते यस्तु सोम्य ! स सर्वज्ञः सर्वमेवाविवेश"** (प्र० ४ । ११) **"सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः"** (छां० ७ । २६ । २) इति । **सर्व**—ब्रह्म, सर्वाधारत्वात्, **सर्वशः**—अविभागशः । स्मर्य्यतेऽपि च **"सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वज्ञत्वं सर्वभावाधिष्ठातृत्वं च"** (यो० ३ । ४९) इति । तदपेक्ष्य सर्वज्ञत्वादिविशषणोपादानमिह सङ्गंस्यते नास्ति कश्चिद् विरोध इति । तत्राह—

**"भेदव्यपदेशात्"** ॥ ५ ॥

द्युभ्वाद्यायतनं न प्राणभृदिति पदत्रयमनुवर्तते । **भेदव्यपदेशात्**—द्युभ्वाद्यायतनतो भेदेन व्यपदेशान्न प्राणभृद् द्युभ्वाद्यायतनं सम्भवतीत्यर्थः ।

**सत्यं** जीवात्मा जीवन्मुक्त्यवस्थायां सर्वज्ञः सम्पद्यते तथापि नासौ द्युभ्वाद्यायतनमिह परिग्रहीतुं शक्यते । यत्कारणं द्युभ्वाद्यायतनतो भेदे-

नैनं व्यपदिशति श्रुतिः **"तमेवैकं जानथ आत्मानम्"** इति । अत्र ह्यात्मशब्दवाच्यं द्युभ्वाद्यायतनं ज्ञेयत्वेन, जीवात्मा च ज्ञातृत्वेन विस्पष्टं व्यपदिश्यते । न चाभेदे सति भेदाश्रयो ज्ञेयज्ञातृभावव्यपदेशोऽयमुपपद्यते । भेदे च सर्वज्ञत्वादिकं विशेषणमुपादीयमानं न जातु प्राणभृति जीवात्मनि कथञ्चित् सङ्गमयितुं शक्यते । तत्साङ्गत्यं चावश्यकम् । **तस्माद्** यत्रैतत्सङ्गच्छते विशेषणं तदेव परब्रह्म द्युभ्वाद्यायतनं न प्राणभृत् ॥ ५ ॥

**नन्व**भेदेऽपि कथञ्चिद्भेदं परिकल्प्य ज्ञेयज्ञातृभावोऽयमुपपादयितुं शक्यते नास्ति काचिदनुपपत्तिरिति । **तत्राह**—

**"प्रकरणात्"** ॥ ६ ॥

द्युभ्वाद्यायतनं न प्राणभृदिति पदत्रयमनुवर्तते । **प्रकरणात्**—प्रक्रिया प्रकरणं, तस्माद् द्युभ्वाद्यायतनं न प्राणभृदित्यर्थः ।

यत्र हि जीवात्मा खलु ज्ञातव्यत्वेनोपदिश्यते यथा **"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"** (बृ० ४ । ५ । ६) इत्यादौ, तत्राभेदे सत्यपि कथञ्चिद् भेदं परिकल्प्य ज्ञेयज्ञातृभावव्यपदेश उपपाद्यते । गत्यन्तराभावात् । न चेह जीवात्मा तथोपदिश्यते । **किं तर्हि ?** परब्रह्म परमात्मा । स च जीवात्मनः सकाशात् परमार्थतो भिद्यते, यत्रेदमाम्नातम् **"तस्य भ्राता मध्यमो अस्त्यश्नः"** (ऋ० २ । ३ । १४ । १) **"जुष्टं यदा पश्यत्यन्यमीशम्"** (मुं० ३ । १ । २) इति । सति च पारमार्थिके भेदे न तत्कल्पनाऽवकाशं लभते, प्रागेव तु ज्ञेयज्ञातृभावव्यपदेशोपपादनम् । **ननु** कुतोऽवगम्यते परब्रह्म परमेश्वरोऽत्र ज्ञातव्यत्वेनोपदिश्यते न जीवात्मेति चेत्? **उच्यते**— प्रकरणात् । प्रकरणं हीदं परब्रह्मणः परमेश्वरस्य विद्यते न प्राणभृतो जीवात्मनः **"कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति"** (मुं० १ । १ । ३) इत्येकविज्ञानेन द्युभ्वादिसर्वविज्ञानस्य पृष्टत्वात् । नहि प्राणभृति जीवात्मनि विज्ञाते

द्युभ्वादिसर्वविज्ञानं युज्यते । परब्रह्मणः परमेश्वरस्य विज्ञानेन तु युक्तं तद्विज्ञानम् । तस्य तदाधारत्वात् । अतो यस्येदं प्रकरणं परब्रह्मणः परमेश्वरस्य स एवेह द्युभ्वाद्यायतनं न प्राणभृज्जीवात्मेति साधु विज्ञायते ॥ ६ ॥

नन्वेकविज्ञानेन सर्वविज्ञानस्य पृष्टत्वात् परब्रह्मणः परमेश्वरस्यापि प्रकरणमिदं न घटते । श्रुत्यन्तरे जीवात्मविज्ञानेनापि सर्वविज्ञानस्यानुशासनात् **"आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्"** ( बृ० ४ । ५ । ६ ) इति । तस्मात् सन्दिग्धमिदं प्रकरणं न जीवात्मनो द्युभ्वाद्यायतनताप्रतिषेधाय कल्पते । तत्राह—

**"स्थित्यदनाभ्यां च"** ॥ ७ ॥

द्युभ्वाद्यायतनं न प्राणभृदिति पदत्रयमनुवर्तते । प्राणभृतो द्युभ्वाद्यायतनताप्रतिषेधे भेदव्यपदेशादिहेतुत्रयसमुच्चय इति चार्थः । **"स्थित्यदनाभ्यां**=साक्षित्वेनावस्थानं स्थितिः, अदनमशनं कर्मफलभोगः, आद्यः परमेश्वरधर्मः, द्वितीयो जीवात्मधर्मः, स्थितिश्चादनं च, ते तथा, ताभ्यां जीवात्मपरमात्मनोर्भेदेन निर्दिश्य ज्ञातृज्ञेयभावाभिधानाद् गम्यते द्युभ्वाद्यायतनं न प्राणभृदित्यर्थः ।

द्युभ्वाद्यायतनाधिकारे खलु पठिते **"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति"** ( मुं० ३ । १ । १ ) इति मन्त्रे **"तयोरन्यः पिप्पलं स्वाद्वत्ति"** इति स्वाद्वस्वादुकर्मफलाशनेन जीवात्मानम् **"अनश्नन्नन्यो अभिचाकशीति"** इति साक्षित्वेन स्थित्या च परमात्मानं भेदेन निर्दिश्य तयोर्ज्ञातृज्ञेयभावं तावदभिधत्ते **"समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः"** ( मुं० ३ । १ । २ ) इति । तत्र पश्यतिक्रियाया आश्रयत्वाज्जीवात्मनो ज्ञातृभावो विषयत्वाच्च

परब्रह्मणः परमेश्वरस्य ज्ञेयभावो विस्पष्टः । द्युभ्वाद्यायतनवाक्येऽपि च ज्ञात्रंशे नास्ति कश्चित् सन्देहः । जीवात्मनो ज्ञातृभावस्य तत्राप्यपरोक्षत्वात् । उभयत्र ज्ञातुरेकत्वे च ज्ञेयेनाप्येकेन भवितव्यमिति न्यायसामान्यादापद्यते । अन्यथा श्रुत्युपदेशवैरूप्यप्रसङ्गात् । न च समानप्रकरणेऽप्रासङ्गिकं ज्ञेयगोचरं श्रुत्युपदेशवैरूप्यं कथञ्चिद् युज्यते । ज्ञातुरिव ज्ञेयस्यापि समानत्वे च द्युभ्वाद्यायतनं परब्रह्म परमात्मैवेति निःशङ्कमास्थातुं शक्यते नास्ति कश्चित् प्रतिबन्धः । श्रुत्यन्तरे जीवात्मविज्ञानेन सर्वपदार्थविज्ञानं च परमात्मज्ञानस्य तदविनाभूतत्वेनावश्यम्भावित्वमभिप्रेत्यानुशिष्यते न केवलजीवात्मज्ञानाभिप्रायेणेति न प्रकरणमपि सन्दिह्यते । **तस्मात्** सिद्धं द्युभ्वाद्यायतनं ब्रह्म ॥ ७ ॥

द्युभ्वाद्यायतनं ब्रह्मेत्युपवर्णितम् । सम्प्रति तस्य द्युभ्वादिनो भूयस्त्वमुपवर्णयितव्यम् । अन्यथा तदायतनत्वानुपपत्तेः । तदेवोपविवर्णयिषुरधिकरणान्तरं तावदारभमाण आह—

**"भूमा सम्प्रसादादध्युपदेशात्" ॥ ८ ॥**

ब्रह्मेत्यधिक्रियते । **भूमा**=छान्दोग्ये समाम्नातो भूमा परब्रह्म परमात्मा वेदितव्यः, कुतः? **सम्प्रसादादध्युपदेशात्**=सम्प्रसादो जीवात्मा **"एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः"** (छां० ८ । १२ । ३) इति श्रुतेः, आधिक्यमधि, तस्मादाधिक्येन भूयस्त्वेनोपदेशादनुशासनादित्यर्थः ।

छान्दोग्ये हि समाम्नायते **"यो वै भूमा तत्सुखं नाल्पे सुखमस्ति, भूमैव सुखम् । भूमा त्वेव विजिज्ञासितव्य इति, भूमानं भगवो विजिज्ञास इति । १ । यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमा । अथ यत्रान्यत् पश्यत्यन्यच्छृणोत्यन्यद् विजानाति तदल्पम् । यो वै भूमा तदमृतम् । अथ**

**यदल्पं तन्मर्त्यम्**" (छां० ७ । २३–२४ । १–१) इति । तत्र संशयः किमिह भूमा जीवात्मा स्यादाहोस्वित् परब्रह्म परमेश्वर इति । कुतः संशयः? सन्निधेः प्रकरणाच्च । पृथ्व्यादिषु हि पठिताद् बहुशब्दाद् भावार्थे "**पृथ्वादिभ्य इमनिज्वा**" (अष्टा० ५ । १ । १२२) इतीमनिचि प्रत्यये "**बहोर्लोपो भू च बहोः**" (अष्टा० ६ । ४ । १५८) इति बहुशब्दस्थाने भ्वादेशे तत्परस्य प्रत्ययेकारस्य लोपे च भूमेति शब्दो व्युत्पद्यते । तत्प्रकृतिभूतो बहुशब्दश्च "**बहुषु बहुवचनम्**" (अष्टा० १ । ४ । २१) इत्यादाविव त्रिप्रभृत्यनेकसंख्यान्विते प्रयुज्यमानो दृष्टोऽप्यत्र "बहु श्रुतमल्पं श्रुतम्" इत्यादिवदधिकवचनः परिगृह्यते । "**यत्रान्यत् पश्यत्यन्यच्छृणोत्यन्यद् विजानाति तदल्पम्**" (छां० ७ । २४ । २) इत्यल्पप्रतियोगित्वश्रवणात् । ततो व्युत्पन्नो भूमशब्दश्चेह भावप्रत्ययान्तोऽपि धर्मिपरः प्रयुज्यते न धर्ममात्रपर इति विज्ञातव्यम् । अन्यथा तस्यान्यशब्दनिर्दिष्टधर्मिप्रतियोगिप्रतिपादनपरत्वानुपपत्तेः । तथाच भूमेत्यस्याधिको भूयानित्यर्थो निष्पद्यते । भूयस्त्वं च गुणकर्मस्वभावकृतमत्राभिप्रेयते न गुणमात्रकृतम् । तच्च कार्य्यमपेक्ष्य कारणे, तत्रापि विश्वहेतौ प्रकृतिलक्षणे सदात्मनि भोग्ये, तदपेक्ष्य सच्चिदात्मकेऽस्मिन् शरीरनायके भोक्तरि जीवात्मनि, तदपेक्ष्य च सर्वाधिष्ठानकारणे सच्चिदानन्दात्मनि भगवति परब्रह्मणि परमेश्वरे वरीवृत्यत इति वैदिको राद्धान्तः । प्राणशब्दश्चात्र जीवात्मनि प्रयुज्यते । प्रयोजकस्यापि प्रयोज्यशब्देनाभिधानोपपत्तेः । स हि प्राणनक्रियायाः प्रयोजकः प्रसिद्धः । न च तत्र तत्प्रयोगानभ्युपगमे सूत्रकृतः सम्प्रसादशब्देन तद्विवरणं कथञ्चित् सङ्गच्छते । न ह्यसौ मुख्यप्राणपरो भवन् जीवात्मवचनेन सम्प्रसादशब्देन विवरीतुं शक्यते । जीवात्मपरत्वं च तस्य "**प्राणो ह पिता प्राणो माता**" (छां० ७ । १५ । १) इत्यादिना सुस्पष्टमवगम्यते । तदेव च सप्राणानां तेषामुपमर्दकारिणि "**पितृहा वै त्वमसि मातृहा वै त्वमसि**" (छां० ७ । १५ । २) इत्यादिना हिंसकत्वनिमित्तोपक्रोशवचनेन सुदृढं पोपु-

प्यते। तत्सन्निधाने चैष भूमा समाम्नातः। प्रकरणं चेदं परब्रह्मणः परमेश्वरस्य न परोक्षम्। **"श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति, सोऽहं भगवः शोचामि, तं मा भगवान् शोकस्य पारं तारयतु"** (छां० ७।१।३) इत्युपक्रमात्, **"तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः"** (छां ७। २६ ।२) इति चोपसंहारात्। अतो युक्तः संशयः। **तत्र** जीवात्मेति पूर्वः पक्षः, परब्रह्म परमेश्वर इति सिद्धान्तः। **किं** तावत् प्राप्तम्? जीवात्मेति ब्रूमहे। **भूयः प्रश्नप्रतिवचनानुपलब्धेः**। नारदः खल्वनात्मवित्तया शोच्यमात्मानं मन्यमानो भगवन्तमात्मविदमाजन्मसिद्धं महायोगिनं सनत्कुमारमुपससाद। तमुपसद्य च "अनात्मविद्याजनितशोकसागरपारमुत्तारयतु मां भगवान्" इति नम्रया वाचा निजगाद। तदुपश्रुत्य भगवता सनत्कुमारेणोक्तं नारद! या एता विद्यास्त्वया परिगणितास्ताः सर्वा नामप्रचयरूपत्वान्नाम्नो नातिरिच्यन्ते। वर्णो नाम। तस्मान्नामैव ब्रह्मोपवर्णकत्वाद्वा ब्रह्मप्रभवत्वाद्वा ब्रह्मप्राप्तिसाधनत्वाद्वा ब्रह्मेत्युपास्व=विजानीहि। तदाकर्ण्य नारदेन पृष्टं किमस्ति भगवो नाम्नोऽपि किञ्चिद् भूय इति। भगवता सनत्कुमारेणोच्चरितमस्ति तन्निष्पादिनी वाङ् नाम्नो भूयसीति। वागादिभ्यो भूयो भूयः प्रश्ने च वाचो मनः, मनसः सङ्कल्पः, सङ्कल्पाच्चित्तं, चित्ताद् ध्यानं, ध्यानाद् विज्ञानं, विज्ञानाद् बलं, बलादन्नम्, अन्नादापः, अद्भ्यस्तेजः, तेजसो वायुः, वायोराकाशम्, आकाशात् स्मरः, स्मरादाशा, आशायाः प्राणो भूयानिति च समाहितम्। तत्र कुर्यामिति निश्चयो **मनः**। तद्धि वाचं प्रेरयतीति प्रेरकत्वाद् वाचः कारणम्। तद्धेतुः कर्तव्याकर्तव्यविवेकः **सङ्कल्पः**। तत्कारणमतीतादिविषयसाध्यप्रयोजनज्ञानं **चित्तम्**। शास्त्रीयविषयैकाग्र्यं **ध्यानम्**। तच्च लौकिकविषयाच्चित्तात्फलतो भूयः। ध्यानस्य कारणं शास्त्रीयविषयविषयं **विज्ञानम्**। तस्य प्रतिभातसामर्थ्यं मनोगतं **बलम्**। तस्याप्यायमानमन्नम्। तस्यापः। तासां **तेजः**। तेजसो **वायुः**। **वायोराकाशम्**। आकाशस्य भोग्यत्वे **स्मरः**=स्मरणम्।

तस्याशा । तया हीष्टं तात्पर्य्येण स्मरति । तस्य हेतुः **प्राणो** जीवात्मा । गुणानां गुणिन्युत्पादस्य नियमात् । स च भोक्तृतया सर्वहेतुत्वान्नामाद्या-शान्तेभ्यः सर्वेभ्यो भूयानित्युक्तं द्रष्टव्यम् । **तदेवं** नारदसनत्कुमारयोरुत्त-रोत्तरं प्रवर्तमानानि भूयःप्रश्नप्रतिवचनान्या नामादिभ्य आ च प्राणाद् यथोपलभ्यन्ते "अस्ति भगवो नाम्नो भूयः, अस्ति भगवो वाचो भूयः" इत्यादयः प्रश्नाः, "वाग् वाव नाम्नो भूयसी, मनो वाव वाचो भूयः" इत्यादीनि च प्रतिवचनानि, न तथा प्राणात् परं किञ्चिद् भूयःप्रश्न-प्रतिवचनमुपलभ्यते "अस्ति भगवः प्राणाद् भूयः ? अदो वाव प्राणाद् भूयः" इति । न च तदुपलम्भाभावे प्राणतो भूयान् कश्चिदन्यो भूमा कल्पयितुं शक्यते । यदा खलु स्वयं भगवान् सनत्कुमारो विनैव प्रश्नं सर्वेभ्यो नामाद्याशान्तेभ्यो भूयांसं प्राणमुक्त्वा तद्वेदिनः "**प्राणो ह्येवैतानि सर्वाणि भवति, स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति, तं चेद् ब्रूयुरति-वाद्यसीति, अतिवाद्यस्मीति ब्रूयान्नापह्नुवीत**" (छां० ७ । १५ । ४) इत्यतिवादित्वमभ्यनुज्ञाय "**एष तु वा अतिवदति यः सत्येनातिवदति**" (छां० ७ । १६ । १) इति सत्यवद-नेन तत्त्वमुपदिशन् प्राणविज्ञानतत्साधनश्रवणमननादिपरम्परया भूमानं निर्दिशति तदा को नु नाम विद्याबुभुक्षुः पण्डितरूपः प्राणतो व्यतिरिक्तं तं मन्तुमर्हति । नहि नामाद्याशान्तमतिक्रम्य वर्तमानस्य वादिनः सत्ये-नातिवादित्वमुपदिशता भगवता तेन प्राणः सत्यो नाभिप्रेयत इति वक्तुमुत्सह्यते । सत्यत्वं च त्रिकालाबाध्यत्वम् । तच्च परमात्मवदस्ति जीवात्मनि प्राणेऽपि सर्वसम्मतमिति न सत्यशब्देन तदुपादानं दुष्यति । तुशब्दश्च नामाद्यतिवादिनः प्राणसत्यत्ववादिनं भिनत्ति न प्राणात् सत्यं व्यवच्छिनत्ति । प्राणसत्यवादी खलु वस्तुतोऽतिवादी भवति न नामा-द्याशान्तवादीति तदभिप्रायो विस्पष्टः । "**यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पितम्**" (छां० ७ । १५ । १) इत्यरनाभिदृष्टान्तश्च जीवात्मनि प्राणे भोक्तृत्वाद् भोग्यभोगो-

प्रकरणस्य चिदचिद्वस्तुनः सर्वस्य तदायत्तस्थितितया सम्यगुपपद्यते। **"यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमा"** (छां० ७।२४।१) इति भूम्नो लक्षणवचनं च सम्प्रसादशब्देन जीवात्मानं प्राणं विवृण्वता भगवता सूत्रकारेण स्वयमेव व्याख्यायि। सुषुप्त्यवस्थासम्बन्धाद् हि जीवात्मा मज्ञसम्बन्धान्मज्ञस्थो मज्ञवत् सम्प्रसाद इति व्यपदिश्यते। सुषुप्त्यवस्थायां च सर्वेन्द्रियोपरमात् त्यक्तबाह्यवस्तुसम्बन्धः परब्रह्मणा परमेश्वरेण सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमिति प्रसिध्यतितराम्। यत्रेदमाम्नायते **"नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति, नो एवेमानि भूतानि"** (छां० ८।११।२) **"तद् वा एतस्यैतदतिच्छन्दा अपहतपाप्माऽभयं रूपम्। तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्, एवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं। तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम्"** (बृ० ४।३।२१) इति। परब्रह्म परमात्मा च सुखस्वरूपः। तत्परिष्वङ्गादेषोऽपि सुखमिति निर्दिश्यते। अनेन च **"यो वै भूमा तत्सुखं भूमैव सुखम्"** इत्यादिकमपि सुव्याख्यातं द्रष्टव्यम्। **"नाल्पे सुखमस्ति"** इति चाल्पे जीवात्मनि सुखप्रतिषेधः स्वरूपसुखमपेक्ष्य प्रवर्तते न सुखमात्रम्। अल्पशब्दश्चेह जीवात्मवचनः **"अथ यदल्पं तन्मर्त्यम्"** (छां० ७।२४।१) इति श्रुतिवचनादवगम्यते। तत्रामृतत्वं स्वरूपतो मर्त्यत्वं च शरीरसम्बन्धादिति भेदोऽवगन्तव्यः। एतेन **"यो वै भूमा तदमृतम्"** (छां० ७।२४।१) इत्यपि व्याख्यातं वेदितव्यम्। उपक्रमोपसंहारौ च जीवात्मज्ञाने ब्रह्मज्ञानस्यावश्यम्भावादुपपद्येते। ब्रह्मज्ञानं हि जीवात्मज्ञानाविनाभावि तद्भावे भवति तदभावे च न भवति। यद्भावाभावायत्तौ च यद्भावाभावौ तत् तत्फलेन व्यपदेष्टुं शक्यते, नास्ति काचिदनुपपत्तिः। तस्मादत्र जीवात्मैव भूमा न परब्रह्म परमेश्वर इति।

**एवं** प्राप्त उच्यते—**प्राणादध्युपदेशात्** । यथा हि नामादितोऽध्युपदिश्यमानं खलु वागादिकमन्यद् विद्यते तथा जीवात्मनः प्राणादध्युपदिश्यमानो भूमाऽप्यन्यो भवितुमर्हति । यदि ह्यसौ जीवात्मनः प्राणादध्युपदिश्यमानोऽपि जीवात्मा प्राण एवाभ्युपगम्येत तदा बह्वश्लिष्टमापद्येत । नहि स्वमेव स्वस्मादध्युपदिश्यते । न च नाम्नोऽध्युपदिश्यमाना वाक् कदाचिन्नामैव प्रतिपत्तुं शक्यते । भूमा च जीवात्मनः प्राणादध्युपदिश्यते । अतस्तेनापि नामादितो वागादिवदर्थान्तरेण केनचिद्भवितव्यम् । **अथोक्तं** भूयःप्रश्नप्रतिवचनानुपलब्धेः प्रतिपद्यते न भूमा जीवात्मनः प्राणादध्युपदिश्यत इति । **नैतद्वक्तव्यम्** । भूयःप्रश्नप्रतिवचनोपलम्भाभावेऽपि तदुपदेशाधिगमात् । **सत्यं** यथा हि प्राणात् पूर्वम् "अस्ति भगवो नाम्नो भूयः, वाग् वाव नाम्नो भूयसी" इत्यादिप्रश्नप्रतिवचनमुपलभ्यते तथा प्राणादूर्ध्वं न तदुपलभामहे "अस्ति भगवः प्राणाद् भूयः?, भूमा वाव प्राणाद् भूयान्" इति, **तथापि** भूम्नः प्राणादध्युपदेशोऽधिगन्तुं शक्यते । नहि सर्वत्रार्थान्तरोपदेशाधिगमे प्रश्नप्रतिवचनमेव कारणं भवति । भगवति वेदे तद्विनाऽपि तदधिगमदर्शनात् । केन तर्ह्यत्र भूम्नः प्राणादध्युपदेशोऽधिगम्यते? व्यावर्त्योपदेशादिति ब्रूमः । यदा खलु सनत्कुमारो नारदाय नामादिप्राणान्तमनुशासनं कृत्वा प्राणविदमतिवादित्वेन प्रशशंस, तस्य तथाऽतिवादित्वं चानुजज्ञे "प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्यन्=शास्त्रतः शृण्वन्, एवं मन्वानः=तर्कतो निश्चिन्वानः, एवं विजानन्=साक्षात्कुर्वन्नतिवादी भवति, तं चेद् ब्रूयुरतिवाद्यसीति, अतिवाद्यसीति ब्रूयान्नापह्नुवीत" (छां० ७ । १५ । ४) इति, तदा नारदो नूनमत्रैवात्मोपदेशः पर्य्यवसित इति मत्वा तूष्णीं बभूव, पूर्ववत् प्राणादुपरिष्टाच्च न किञ्चित् पप्रच्छ । तदेतदालोच्य परमकृपालुर्भगवान् सनत्कुमारो मा नामैष परमपुरुषार्थस्वरूपमन्तरात्मानमविज्ञायैव मध्ये प्रव्राजीदिति स्वयमेव पूर्वोपदिष्टात् प्राणविज्ञानेनातिवादित्वाद् व्यावर्त्य सत्यविज्ञानेनातिवादित्वमुपदिदेश **"एष तु वा अतिवदति यः सत्येनातिवदति"** (छां० ७ । १६ । १)

इति। यदि अनेन सन्निध्यनुरोधात् "एष तु वै वेदज्ञो यः सत्यं वदति" इत्यत्र वेदविज्ञानस्येव प्राणविज्ञानस्याङ्गतया सत्यवदनमुपदिश्यत इत्याश्रीयेत तदा श्रुत्यर्थः परित्यज्येत। न च सन्निध्यनुरोधेन श्रुत्यर्थः परित्यक्तुं शक्यते। प्रबलत्वात्। प्रबला हि श्रुतिर्निर्बलं च सन्निधानम्। न च निर्बलानुरोधेन प्रबलं नीयते। अन्यथा हि सत्येनेति तृतीया नोपपद्येत। तथा च क्लिष्टा गतिराश्रीयेत। सन्निकृष्टव्यावृत्त्यर्थस्तुशब्दश्च विप्रकृष्टव्यावृत्त्यर्थः परिकल्प्येत। न चैतद् युक्तम्। श्रुत्या च प्राणविज्ञानेन यदतिवादित्वं तत्र परमार्थतोऽतिवादित्वं किन्तु सत्यविज्ञानेन यदतिवादित्वं तदेव परमार्थतोऽतिवादित्वमिति स्फुटमभिधीयते। तच्च "**सोऽहं भगवः सत्येनातिवदानि**" (छां० ७। १६। १) इति नारदस्य प्रार्थनेन "**सत्यं त्वेव विजिज्ञासितव्यम्**" (छां० ७। १६। १) इति सनत्कुमारस्य जिज्ञास्यत्वाभिधानेन चोपोद्बल्यते। सत्यं चेत् प्राणतोऽर्थान्तरं किञ्चिन्न भवेन्न जातु नारदस्य तद्गोचरं प्रार्थनं सनत्कुमारस्य च तद्गोचरं जिज्ञास्यत्वाभिधानं सङ्गच्छेत। नहि सत्यप्राणयोरनतिरेकं जानानः प्राणविशारदः पुनः सत्यस्य विज्ञानाय प्रार्थयितुमर्हति, सनत्कुमारश्च तथा विद्वान् तस्य जिज्ञास्यत्वमभिधातुं शक्नोति। तस्माद् यथैकवेदज्ञप्रशंसायां प्रकृतायाम् "एष तु महाब्राह्मणो यश्चतुरो वेदान् याथातथ्यतो जानाति" इत्येकवेदविज्ञातुरर्थान्तरभूतश्चतुर्वेदविज्ञाता प्रशस्यते, तथाऽत्रापि प्राणं विजानतोऽर्थान्तरभूतः सत्यं जानानः प्रशस्यत इति द्रष्टव्यम्। तत्र प्राणो जीवात्मेत्यवोचाम। सत्यमिति परब्रह्मोच्यते। प्रकृतेर्नामादेर्जीवात्मनः प्राणस्य च पूर्वमुक्तत्वात्। "**हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्**" (यजु० ४०। १५) "**सत्यं ह्येव ब्रह्म**" (बृ० ५। ४। १) इत्यादौ श्रुत्यन्तरे च तत्र तत्प्रयोगोपलम्भात्। इत्थम्भूतलक्षणे च तृतीया। सत्योपलक्षितः सत्यविज्ञानसमन्वितः सत्यं सञ्जानान इति समुदायार्थः। जीवात्मानं विजानन्तमपेक्ष्य परब्रह्म विजानतः प्राशस्त्यं च सर्वजनप्रत्यक्षमिति न किञ्चिदत्रायुक्तं गीयते। यच्चेह प्राणाद् व्यावर्त्य सत्यं तावद्

विज्ञातव्यमुपदिष्टं तदेवाग्रे तद्विजानतोऽतिवादित्वसिद्धये तद्विज्ञानसाधनानि मतिप्रभृतीनि निर्दिश्य भूमत्वेनोपदिश्यते **"यो वै भूमा तत्सुखं नाल्पे सुखमस्ति"** (छां० ७।२३।१) इति। तस्य सत्यस्य ब्रह्मणो विज्ञानं वेदनं दर्शनमनुभवः साक्षात्कार इति यावत्। यत्किलौपनिषदाः परा विद्येति सङ्गिरन्ते। तत्साधनं मतिः, श्रद्धा, निष्ठा, कृतिरिति चतुष्टयम्। **मति**र्मननं श्रुतस्यार्थस्य वेदाविरोधितर्केभ्यश्चेतसि निवेशनम्। एतद्ग्रहणेनार्थतः पूर्वोत्तरे श्रवणनिदिध्यासने गृह्येते। निदिध्यासनं विना विज्ञानस्य, श्रवणं विना मननस्य चानुपपत्तेः। श्रवणविषया चेतसोऽभिरुचिः **श्रद्धा,** यां किलौपनिषदाः विविदिषेति परिभाषन्ते। यत्रेदं श्रूयते **"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति"** (बृ० ४।४।२२) इति। वेदविहितेषु कर्मसु नियता स्थितिरत्र **निष्ठा।** तदर्थं यत्नविशेषः **कृतिः।** न च प्राणतो व्यावर्त्योपदिष्टस्य सत्यस्य ब्रह्मणो भूमत्वेनोपदेशो सत्यो भूमेति न प्रतिपत्तुं शक्यते। तस्य तथा प्रतिपत्तौ च भूम्न एवास्ति प्राणतोऽध्युपदेश इति सिध्यतितराम्। **तस्मात्** परमात्मैव भूमा न जीवात्मा प्राणः।

**यत्तु** भूम्नो लक्षणस्य जीवात्मनि प्राणे सुषुप्त्यवस्थाभिप्रायेणोपपादनम्। तदतिमन्दम्। अल्पाद् व्यावृत्तं रूपं दर्शयितुं हि भूम्नो लक्षणमिदं प्रववृत इति विज्ञायते। अन्यथा तल्लक्षणानन्तरं **"यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद् विजानाति तदल्पम्"** (छां० ७।२४।१) इत्यल्पस्य लक्षणं न विधीयेत। अल्पश्च जीवात्मेत्युक्तम्। न च जीवात्मनो जीवात्मनः सकाशाद् व्यावृत्तिः सिध्यति। नहि स्वमेव स्वस्माद् व्यावृत्तं भवति। अन्यद् ह्यन्यस्माद् व्यावर्त्यते, न स्वस्मात्स्वम्। **अथोच्येत**—सुषुप्त्यवस्थाभिप्रायेण पूर्वलक्षणं प्रवर्तते जाग्रदवस्थाभिप्रायेण चैतदिति। **नैतच्चतुरस्रम्**। प्रवृत्तिनैष्फल्यप्रसङ्गात्। यस्यात्मतत्त्वस्य बोधात् खलु समूलः शोकमोहादिलक्षणः संसारो निवर्तते तस्यात्मतत्त्वस्य बोधाय हि भगवान् सनत्कुमारो लक्षणेन प्रावर्तिष्टेति विस्पष्टम्। सम्प्रति चेज्जीवात्मावस्थाभेदानामवबोधाय तत्प्रवृत्तिं मन्येत

तदा निष्फला सा प्रसज्येत । नहि जीवात्मावस्थाभेदानामवबोधेन समूलः शोकमोहादिलक्षणः संसारः कर्हिचिदुपरमते । न च प्रयोजनहीनायां क्रियायां मन्दोऽपि प्रवर्तते, महायोगी भगवान् सनत्कुमार इति तु किमु वक्तव्यम् । भगवता सूत्रकृता तु प्राणशब्दोऽयमत्र विशुद्धजीवात्मपरो व्याख्यायेत न मुख्यप्राणपर इत्येतदर्थं सम्प्रसादशब्देन विव्रीयते न भूमलक्षणोपपत्त्यर्थम् । सम्प्रसादशब्दश्चोपरिष्टादिन्द्रप्रजापतिसंवादे विशुद्धजीवात्मनि प्रवर्तिष्यत इति सर्वमनवद्यम् । अतो भूम्नः परब्रह्मणो लक्षणमिदमुच्यते न सुषुप्तस्य जीवात्मनः । यदा हि खल्वेष जीवात्मा स्वकीये जीवात्मरूपेऽवतिष्ठते तदा प्रकृत्यावेष्टितस्वरूपत्वादात्मतोऽन्यत् प्राकृतं प्रियाप्रियं रूप पश्यति मधुरामधुरं शब्दं शृणोति रम्यारम्यं चार्थं विजानाति । यदा चाभ्यासवैराग्याभ्यां निरुद्धाखिलवृत्तिः सर्वथा प्रकृतिसम्बन्धं हित्वा विशुद्धः केवलः सन् परब्रह्मणि भूम्नि सम्प्रतिष्ठते तदा नान्यत् किञ्चित् पश्यति शृणोति विजानाति चेति युक्तं भूम्नो जीवात्मनोऽल्पस्य च लक्षणं **"यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमा । अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद् विजानाति तदल्पम्"** (छां० ७ । २४ । १) इति । एतेन **"यो वै भूमा तत्सुखं नाल्पे सुखमस्ति"** (छां० ७ । २४ । १) इत्येतदपि समाहितं वेदितव्यम् । नह्यक्लिष्टायां गतौ सत्यां क्लिष्टा गतिः क्वचिदाश्रयणमर्हति । जीवात्मनि प्राणे प्राज्ञपरिष्वङ्गात् सुखस्वरूपत्वस्य स्वरूपतस्तत्प्रतिषेधस्य च कल्पनं क्लिष्टम् । तद्धि यथा बहुश्रुतस्य चित्तमुद्वेजयति तथाऽल्पश्रुतस्यापि चेतः क्लिश्नाति । न च भूम्नः परमात्मत्वे कल्पनाक्लेशोऽयं मात्रयाऽपि कस्य चिच्चेतसि प्रवेशं लभते । तस्य स्वरूपेण सुखरूपतायाः श्रुतिस्मृतिभ्यां सिद्धत्वात् । भूमाल्पौ च परस्परं प्रतिद्वन्द्विनावत्रोपन्यस्येते । न च तथोपन्यस्यमानयोस्तयोरेवंकल्पनेऽप्यैक्यमुपपद्यते । तदनुपपत्तौ चायासमात्रमिदं कल्पनमिति सुव्यक्तं पश्यामः । **अतो** वरं परमात्मत्वमेव भूम्नो न जीवात्मत्वम् । **एवं** चोपक्रमोपसंहारावपि गौणार्थौ न भविष्यतः ।

**"श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति। सोऽहं भगवः शोचामि तं मा भगवान् शोकस्य पारं तारयतु"** ( छां० ७। १। ३ ) इति ह्युपक्रम्य **"तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः"** ( छां० ७। २६। २ ) इत्युपसंह्रियते । तत्रोपक्रमे तावच्छोकशब्दः कार्य्यवचनोऽप्युपचारात् कारणे प्रयुक्त इति विज्ञायते । तत्पर्य्याये तमःशब्दप्रयोगस्योपसंहारे दर्शनात् **"तमसः पारं दर्शयति"** ( छां० ७। २६ । २ ) इति। **शोकः**=शोकमोहादिलक्षणः संसारः। तस्य त्रिगुणात्मकत्वेन तन्मयत्वोपपत्तेः। एकदेशेन समुदायाभिधानस्याप्यभ्युपगमात्। उपसंहारे तम इति तत्कारणं प्रकृतिरुच्यते । तमोगुणात्मकत्वात्। चैतन्यलक्षणप्रकाशेन वा हीनत्वात् । उपलभ्यते च **"तम आसीत् तमसा गूढमग्रे"** ( ऋ० २ । ७ । १७। ३ ) **"आसीदिदं तमोभूतम्"** ( मनु० १। ५ ) इत्यादिश्रुतिस्मृत्योस्तत्र तत्प्रयोगः। तस्य पारं=भूमानं दर्शयति=प्रापयति भगवान् सनत्कुमार इति चोपसंहारार्थः। तमसः परत्वं च परब्रह्मणः परमेश्वरस्य भगवति वेदे विस्पष्टमाम्नायते **"वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्"** ( यजु० ३१। १८ ) इति। तत्सामाम्यादिहापि तत्परेण भूम्ना परब्रह्मणा परमेश्वरेणैव भवितव्यम् । अन्यथा मिथो विरोधापत्तेः। नहि भगवतो वेदस्योपनिषदां च सत्यां गतौ मिथोविरोधोऽभ्युपगन्तुमुत्सह्यते। अनेनोपक्रमगत आत्मशब्दोऽपि परमात्मवचन एवेति निश्चेतव्यम् । अन्यथोपक्रमोपसंहारयोरैक्यानुपपत्तेः । ऐक्यं च तयोरावश्यकम्। न खलु साधारणपुरुषवचसामुपक्रमोपसंहारयोरनैक्यमापद्यते किं पुनरार्षवचसामुपनिषदाम्। नहि ता उन्मत्तवचांसि किलाभ्युपगम्यन्ते येन तत्र तत्सम्भाव्येतापि। येषां श्वेताः सयुक्तिगर्भाः वचनसन्दर्भा उपनिषदस्ते वेदवेदाङ्गपारगाः विद्वच्छिरोमणयः कायेन वाचा मनसा दिवानिशं सत्यनिष्ठा अभूवन्। अतो न स्वप्नेऽपि तत्र तत् सम्भावयितुं शक्यते. प्रागेव तु तत्र तत्सम्भवः। तथाच परमा-

त्मपरावेवैताविति सुध्रुवम्। इदानीं चेदिमौ जीवात्मपरौ व्याख्यायेयातां नूनं गौणार्थौ प्रसज्येयाताम्। न च मुख्यार्थत्वे सम्भवति गौणार्थत्वं न्याय्यं मन्यन्ते न्यायनयविदः सूक्ष्मधियो विद्वांसः। मुख्यार्थत्वे च तयोर्भूम्नः परमात्मत्वमेव युक्तं न जीवात्मत्वम्। तस्मादत्र परमात्मैव भूमा न जीवात्मा ॥ ८ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"धर्मोपपत्तेश्च"** ॥ ९ ॥

ब्रह्मेति पूर्ववदधिक्रियते। भूमेति पूर्वसूत्रादनुवर्तते। पूर्वत्रैव हेत्वन्तरमेतदिति चकारेणोच्यते। **धर्मोपपत्तेः**=भूम्नः समाम्नातानां स्वमहिमप्रतिष्ठितत्वादीनां धर्माणां परमात्मन्येवोपपत्तेः परमात्मैव भूमेति गम्यत इत्यर्थः।

भूमानमुपन्यस्य स्वमहिमप्रतिष्ठितत्वादयस्तद्धर्मास्तावत् समाम्नायन्ते **"स भगवः कस्मिन् प्रतिष्ठित इति? स्वे महिम्नि"** (छां० ७। २४। १) इति स्वमहिमप्रतिष्ठितत्वम्। **"स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात्"** (छां० ७। २५। १) इति सर्वगतत्वम्। **"आत्मतः प्राण आत्मत आशाऽऽत्मतः स्मर आत्मत आकाशः"** (छां० ७। २६। १) इति सर्वाधारत्वं चेति। ते चैते परब्रह्मणः परमेश्वरस्यैवोपपद्यन्ते न जातु जीवात्मनः प्राणस्य। **स्वमहिमप्रतिष्ठितत्वं** 'अनन्याधारत्वम्। न च जीवात्मनः प्राणस्यानन्याधारत्वं वक्तुं शक्यते। तस्य स्वसत्तायां परब्रह्मापेक्षाभावेऽप्याधारे तदपेक्षायाः सत्त्वात्। यथा हि गुणप्रभृतिः पदार्थः खलु स्वसत्तार्थं द्रव्यं नापेक्षते स्वाश्रयार्थं च यावद्भावमाशंसते तथा जीवात्मा प्राणोऽपि स्वसत्तार्थं परब्रह्म परमेश्वरं नाकांक्षते स्वाश्रयार्थं च नित्यमाशास्ते। सनातनश्चैष वैदिको राद्धान्तः। तं वयं सयुक्तिपुरस्सरं समार्थयामहि सविस्तरमधस्तादिति न पुनरिह तत्समर्थनाय प्रयतामहे। परब्रह्मणः परमेश्वरस्य च परमेश्वरान्तराभावादनन्याधारत्वं युज्यतेतराम्। अतः स्वमहिमप्रतिष्ठितत्वं परमात्मन एव धर्मो न जी-

वात्मनः प्राणस्य । **सर्वगतत्वं** च सर्वत्रगतिमत्त्वम् । गतिः प्राप्ति-र्व्याप्तिः । अन्तर्बहिः सर्वत्र विद्यमानत्वमिति यावत् । एतदपि परमा-त्मनो धर्म उपपद्यते न जीवात्मनः । स ह्यणुपरिमाणः । न च तादृश-स्तस्य सर्वत्र व्याप्तिरवकल्पते । नहि कश्चिदेकदेशे विद्यमानो विश्वं जगद् व्याप्तुमर्हति । परमात्मा च महत्परिमाणः । तस्यान्तर्बहिः सर्वत्र व्याप्तौ नास्ति काचिदनुपपत्तिः । अतस्तस्यैव सर्वगतत्वं धर्मो न प्राणस्य जीवात्मनः । सोऽयं धर्म इह तच्छब्दात्सच्छब्दात्मशब्दपूर्वकं पर्य्यायत्र-येणोपवर्ण्यते । तत्र सर्वत्र "सर्वम्" इत्यस्यानन्तरं "व्याप्याधितिष्ठति" इति क्रियाशेषोऽवगन्तव्यः । **सर्वाधारत्वं** च जीवात्मान्तसर्वार्थाश्रय-त्वम् । एतदपि परमात्मनो धर्म उपपद्यते न जीवात्मनः । नह्यसावेकस्य कस्य चिदर्थस्याश्रयो भवन्नपि जीवात्मान्तस्य सर्वस्यार्थस्याश्रयः सम्भ-वति । स्वरूपतः शक्तितश्चाल्पत्वात् । स्वस्य स्वाश्रयत्वप्रसङ्गाच्च । जीवा-त्मान्तस्य सर्वस्यार्थस्याश्रयो भूमा चात्र सुस्पष्टमाम्नायते **"आत्मतः प्राण आत्मत आशाऽऽत्मतः स्मरः"** ( छां० ७ । २६ । १ ) इत्यादौ । तत्र प्राणो जीवात्मेत्यगादिकम् । आत्मत इति सार्वविभक्तिक-स्तसिप्रत्ययः । आत्मेति च भूमा निर्दिश्यते । प्राणप्रभृति सर्वं तदाधार-मिति तस्यार्थः । न च परमात्मनो जीवात्मान्तसर्वार्थाश्रयत्वेऽभ्युपगम्य-माने जीवात्मवदनुपपन्नं नाम किञ्चिदुत्प्रेक्षितुं शक्यते । तस्य तदाश्रय-त्वस्य स्वयं भगवता वेदेनोक्तत्वात् **"स दाधारा पृथिवीं द्यामुते-माम्"** ( ऋ० ८ । ७ । ३ । १ ) **"स्कम्भो दाधार द्यावा-पृथिवी उभे इमे । स्कम्भो दाधारोर्वन्तरिक्षम्"** ( अथ० १० । ४ । ७ । ३५ ) इति । प्रमाणं च नः सर्वेषां सर्वत्राविशेषेण वैदिकं वचः । ईश्वरोक्तत्वात् । **तदेवं** स्वमहिमप्रतिष्ठितत्वादिधर्माणां परमात्मन्येवोपपत्तेर्भूम्नः परमात्मत्वं प्रव्यक्तं प्रतिपद्यते । **तथा च** भूमा परमात्मैव न जीवात्मा प्राण इति सिद्धम् ॥ ९ ॥

परमात्मा भूमेत्युपपादितम् । सम्प्रति तस्याक्षरत्वं प्रतिपिपादयिषु-रग्र्यमधिकरणमारभते—

**"अक्षरमम्बरान्तधृतेः"** ॥ १० ॥

ब्रह्मेत्यधिक्रियते। **अक्षरं**=बृहदारण्यके श्रुतमक्षरं ब्रह्म भवितुमर्हति, कुतः? **अम्बरान्तधृतेः**=अम्बरमाकाशं प्रकृतिरिति यावत्, तत्पर्य्यन्तस्य विश्वस्य धृतेर्धारणादित्यर्थः।

बृहदारण्यके हि गार्गीयाज्ञवल्क्यसंवादे श्रूयते **"कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति। स होवाचैतद् वै तदक्षरं गार्गि! ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वम्"** (बृ० ३। ८। ७-८) इत्यादि। **ओतश्च प्रोतश्च**=विधृतः समाश्रित इति यावत्। तत्र संशयः किमिदं प्रकृतिलक्षणाकाशाश्रयत्वेन श्रुतमक्षरं जीवात्मा स्यादाहोस्वित् परब्रह्म परमेश्वर इति। कुतः संशयः? योगादिति ब्रूमः। यथा ह्यक्षरशब्दः खलु न क्षरति विनश्यतीति योगात् परब्रह्म परमेश्वरमभिधत्ते तथा देहेन्द्रियसङ्घातस्वामिनं जीवात्मानमप्याचष्टे। द्वयोस्तयोरुत्पत्तिवद् विनाशस्याप्यभावात्। नन्वेवं तर्हि प्रकृतिः कुतो न सन्दिह्यते? जीवात्मपरमात्मनोरिव तस्या अप्युत्पत्तिविनाशयोरनभ्युपगमात्। न। तदाश्रयस्यैव प्रत्युच्यमानत्वात्। पूर्वं हि **"यदूर्ध्वं याज्ञवल्क्य! दिवो यदवाक् पृथिव्याः, यदन्तरा द्यावापृथिवी इमे, यद्भूतं भवच्च भविष्यच्चेत्याचक्षते, कस्मिँस्तदोतं प्रोतं च"** (बृ० ३। ८। ३), इति गार्ग्या पृष्टे पृथिव्यादिविकारजातस्याधारे याज्ञवल्क्यः खलु **"आकाशे तदोतं प्रोतं च"** (बृ० ३। ८। ४) इति तदाधारत्वेनाकाशं समादधे। न च स भूताकाशो भवितुमर्हति। तस्य स्वयं विकारत्वेन प्रश्नान्तर्गतत्वात्। कालत्रयवर्तिसकलविकाराश्रयत्वानुपपत्तेश्च। जीवात्मा परमात्मा च नात्राकाशशब्देन ग्रहणमर्हतः। प्रश्नप्रतिवचनान्तरानुपपत्तेः। परिशिष्यते च ताभ्यामन्या जगज्जननी प्रकृतिः। तस्मात् सैवात्राकाशः स्यादिति निश्चीयते। तस्याश्चोपादानकारणत्वेनोच्यमानं पृथिव्यादिनिखिलविकाराश्रयत्वं सुखेनोपपद्यते। सेयं किमाधारेति पुनर्गार्ग्या पृष्टे तदाधारे याज्ञवल्क्येन तदाधारतया प्रत्युच्यमानमक्षरं न जातु प्रकृतित्वेन

सन्देग्धुं पार्य्यते । "**ब्राह्मणा अभिवदन्ति**" इति वचनानुपपत्तेश्च । परमात्मतत्त्वविदो हि ब्राह्मणाः शास्त्रे समाख्यायन्ते न प्रकृतितत्त्वविदः । तेषामब्राह्मणत्वे च नूनमिह प्रकृतितोऽन्योऽक्षरपदार्थ इति गम्यते । **स्यादेतत्**—मा नाम प्रकृतिरत्र सन्देहि, वर्णाः कुतो न सन्दिह्यन्ते । तेषां जीवात्मपरमात्मापेक्षया प्रथममुपस्थितत्वात् । यथा हि योगः खलु नामिकी वृत्तिराश्रीयते तथा रूढिरपि तद्वृत्तिराश्रीयते । तत्र जीवात्मपरमात्मानौ योगेनाक्षरशब्दाद् धियमुपावर्तेते वर्णाश्च रूढ्या ततो बुद्धिमधिशेरते । रूढिश्चास्ति योगाद्बलीयसी । रूढिर्योगमपहरतीति न्यायात् । अतोऽक्षरशब्देन तेषां जीवात्मपरमात्मापेक्षया प्रथममुपस्थितिर्युज्यते । **अथोच्येत**—प्रथममुपस्थिता अपि वर्णा नात्र सन्देहमर्हन्ति । तेषां सविकारस्याकाशस्य प्रकृतेराश्रयत्वानुपपत्तेरिति । **नैतद्वक्तव्यम्** । सर्वस्य रूपधेयस्य नामधेयात्मकत्वेनोपपन्नत्वात् । सर्वं हि रूपधेयं नामधेयेन सम्भिन्नं तावदनुभूयते घटोऽयं पटोऽयमिति । न च नामधेयस्य रूपधेयानुभवोपायत्वादुपायनिबन्धनोऽयं सम्भेदानुभवो न तदात्मकत्वनिबन्धन इति वक्तुं शक्यते । धूमोपाये धूमध्वजानुभवेऽदृष्टत्वात् । यदि ह्युपायनिबन्धनोऽयमनुभवो भवेत् तदाऽन्यत्रापि तथा दृश्येत । न च धूमोपायो धूमध्वजानुभवो धूमसम्भिन्नं धूमध्वजमवगाहमानो दृश्यते धूमोऽयं धूमध्वज इति । धूमाद् धूमध्वज इति वैपरीत्येनावगाहमानस्तु न तस्योपायनिबन्धनत्वं गमयितुमर्हति । यतश्च यस्य सम्भेदः खल्वनुभवपथमारोहति नूनं तदात्मकं तदिति निश्चेतुमीश्यते । निश्चयस्य यथानुभवमौचित्यात् । पृथिव्यादिप्रकृतिपर्य्यन्तं सर्वं रूपधेयम् । नामधेयं च तदभिधायकाः सर्वे वर्णाः । यान् किलौपनिषदाः वागिति नाम्ना व्यपदिशन्ति । तथा च तदात्मकेषु तेषु सविकारस्याकाशस्य प्रकृतेस्तादात्म्येनाश्रयत्वमुपपद्यते नास्ति कश्चिद् विरोधः । तस्माज्जीवात्मपरमात्मवद् वर्णा अप्यत्र सन्देग्धव्या इति । **न** । लोके योगापेक्षया रूढेर्बलीयस्त्वेऽपि वेदोपनिषद्ब्राह्मणेष्वबलीयस्त्वात् । **लोके** हि रूढिर्योगापेक्षया बलीयसी वर्तते । तत्रैव चोक्तन्यायावतारः । लौकिक-

त्वात्। यदि ह्येषा लोक इव वेदोपनिषद्ब्राह्मणेष्वपि बलीयसी वर्तेत तदाऽवश्यमक्षरशब्देन जीवात्मपरमात्मभ्यां प्रथमं वर्णा अप्युपतिष्ठेरन्। न च सा तत्र बलीयसी वर्तते। न्यूनमुच्यते। वेदोपनिषद्ब्राह्मणेषु प्रायो यौगिका योगरूढाश्च शब्दा विद्यन्ते, रूढिश्च रूढमात्रवृत्तिरिति न सा तत्र सम्भावयितुमपि शक्यते, प्रागेव तु तस्यास्तदपेक्षया बलीयस्त्वम्। नहि यद् यत्र स्वरूपमेव न लभते तत् तत्र प्रबलं वा निर्बलं वा विचारयितुं क्षम्यते। वेदादिषु शब्दानां तथात्वं च महामुनेर्जैमिनेर्न्यायात् स्फुटमवगम्यते। एष हि तस्य न्यायः **"प्रोक्षणीष्वर्थसंयोगात्"** (मी० १। ४। ११) इति। शब्दानामवयवशक्त्याऽर्थप्रतिपादनसम्भवे समुदायशक्तिकल्पनमयुक्तमिति तदभिप्रायः। न च तत्रासम्भावितया तयाऽक्षरशब्देन वर्णाः कर्हिचिदुपस्थापयितुं शक्यन्ते। न चानुपस्थितेषु तेषु सन्देहो युज्यते। सति कुड्ये चित्रमिति न्यायात्। **यत्तु** रूपधेयस्य नामधेयात्मकत्वेन वर्णेषु सविकारस्याकाशस्य प्रकृतेराश्रयत्वसाधनम्। **तद**पि न युक्तं पश्यामः। स्वरूपभेदादिभिस्तस्य तदात्मकत्वासिद्धेः। शब्दत्वसामान्यात्मकं हि नामधेयं, घटत्वपटत्वादिसामान्यात्मकं च रूपधेयमिति स्वरूपभेदः। श्रोत्रेन्द्रियग्राह्यं नामधेयं, चक्षुरादिसर्वेन्द्रियग्राह्यं च रूपधेयमिति साधनभेदः। अभिधेयप्रत्ययार्थक्रियं नामधेयं, मधुधारणाङ्गप्रावरणाद्यर्थक्रियं च रूपधेयमित्यर्थक्रियाभेदः। न चैषु स्वरूपभेदादिषु सत्सु रूपधेयस्य नामधेयात्मकत्वं कथञ्चित् सेद्धुमर्हति। न च घटोऽयं पटोऽयमिति जायमानो नामधेयसम्भेदानुभवोऽपि तस्य तदात्मकत्वं गोचरयति, **किन्तु** यदिदं विप्रकृष्टदेशकालसम्भुतं रूपधेयं तदिदं सन्निहितदेशकालमिति विषययति। नामधेयं तु गृहीतसम्बन्धैः पुम्भिरत्यन्ताभ्यासदार्ढ्याद् रूपधेयसम्भिन्नं संस्कारोद्बोधात् स्मर्य्यत इति यत्किञ्चिदेतत्। तथा च रूपधेयस्य नामधेयात्मकत्वासिद्ध्या सविकारस्याकाशस्य प्रकृतेराश्रयत्वानुपपत्तेर्न जातु वर्णा अत्र कर्हिचित् सन्देहगोचरतामापद्यन्ते। **अथोच्येत**–ओङ्कारस्तर्हि सन्देग्धव्यः। तस्य योगरूढाऽक्षरशब्दादुपस्थितिसम्भवात्। यथा हि पङ्कजशब्दः खलु पङ्कजेऽ-

रविन्दे योगरूढो वर्तते तथाऽक्षरशब्दोऽप्योङ्कारे योगरूढो द्रष्टव्यः। ततश्चास्य **"यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण"** (प्र० ५।५) **"ओमित्येतदक्षरम्"** (मां० १) **"ओमित्येतदक्षरम्"** (छां० १। १।१) **"एतदक्षरमेतां च"** (मनु० २। ७८) **"ओमित्येकाक्षरं ब्रह्म"** (गी० ९। १३) इत्यादिश्रुतिस्मृतिभ्यो वर्णविशेषत्वाद् रूढ्या, अश्नुते व्याप्नोति वाचमिति योगेन चोपस्थितिः सम्भवति यथा पङ्कजस्य पङ्कजशब्दात्। सर्वस्यां वाचि तद्व्याप्तिश्च छान्दोग्योपनिषदि स्पष्टमाम्नायते **"तद् यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येवमोङ्कारेण सर्वा वाक् सन्तृण्णा"** (छां० २। २३। ४) इति। **शङ्कुना**=पर्णनालेन, **पर्णानि**=पर्णावयवाः, **सन्तृण्णानि**=विद्धानि। न चोपस्थितौ सत्यां तद्गोचरः संशयो न युज्यते। अन्यथा जीवात्मपरमात्मगोचरोऽपि न युज्येत। समानत्वात्। तत्र संशये चात्रापि स युक्त इति सम्यगुत्पश्यामो विनिगमनाविरहादिति। **नैतद्वक्तव्यम्।** उक्तोत्तरत्वात्। उक्तमस्योत्तरम्। यथा हि वर्णाः खलु सविकारस्याकाशस्य प्रकृतेराश्रयत्वानुपपत्त्या न सन्देहमर्हन्ति तथोङ्कारोऽपि न सन्देहमापद्यते। अविशेषात्। **अथोच्येत**—यथा हि **"पुरुष एवेदं सर्वम्"** (ऋ० ८।४।१७।२) **"पुरुष एवेदं विश्वम्"** (मुं० २।१।१०) **"ब्रह्मैवेदं विश्वम्"** (मुं० २।२।११) **"सर्वं खल्विदं ब्रह्म"** (छां० ३।१४।१) इत्यादिभिः श्रुतिवचोभिः श्रूयमाणं सर्वत्वं ब्रह्मणस्तावत् सर्वाधारत्वात् समाधीयते तथोङ्कारस्यापि **"ओङ्कार एवेदं सर्वम्"** (छां० २।२३।२४) इत्यादिना श्रूयमाणं सर्वत्वं सर्वाधारत्वात् समाधातव्यम्। सर्वत्वं च प्रकृतितत्कार्य्योभयत्वम्। तथा च तस्योच्यमानं सविकारस्याकाशस्य प्रकृतेराधारत्वमुपपद्यते नास्ति तदनुपपत्तिरिति। **नैतद्वक्तव्यम्।** अर्थभेदाभ्युपगमात्। न खलु **"पुरुष एवेदं सर्वम्"** (ऋ० ८। ४।१७।२) इत्यादाविव **"ओङ्कार एवेदं सर्वम्"** (छां० २।२३।२४) इत्यादावपि सर्वशब्दस्यार्थः कार्य्यसहिता प्रकृतिरभ्यु-

पगम्यते, किन्तु वाङ्मात्रम्। प्रकृतत्वात्। अन्यथा हि प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयाताम्। सामानाधिकरण्यं च तद्व्याप्तिनिबन्धनं नाधाराधेयभावनिबन्धनम्। तथा च तदवस्था तत्र तदनुपपत्तिरिति नासौ संशयमर्हति। तस्माद् युक्तो जीवात्मपरमात्मनोरेव संशयः। तत्र जीवात्मेति पूर्वः पक्षः, परमात्मेति सिद्धान्तः। किं तावत् प्राप्तम्? जीवात्मेति निगदामः। सर्वस्य प्रकृतिविकारस्य तदर्थत्वात्। परार्थं खलु प्रकृतिः सर्वात्मना विक्रियते न स्वार्थम्। किं कारणम्? यत्कारणमचेतना सा। भोगापवर्गौ हि शास्त्रेऽर्थ इति परिभाष्यते। तौ च चेतनस्य सम्भवतो नाचेतनस्य। नहि चेतनाहीनः कश्चन भोगापवर्गार्थं परिस्पन्दमानः क्वचिदवलोक्यते। प्रकृतिश्चाचेतनेति कथं सा स्वार्थं परिस्पन्देत विश्वात्मना च विक्रियेत। न च परमेश्वरार्थमपि तद्विक्रिया घटते। तस्य नित्यतृप्तत्वेनाभिलाषाभावात्। नित्यतृप्तो हि जगतां पतिः परमेश्वरः। यत्रेदमाम्नायते **"अकामो धीरो अमृतः स्वयम्भू रसेन तृप्तो न कुतश्चनोनः"** (अथ० १०।४।८।४४) इति। **रसेन**=स्वरूपभूतेनानन्देन **"रसो वै सः"** (तै० २७) इति श्रुतेः। स न कर्हिचिद् भोगमभिलषते न वाऽपवर्गमर्थयते। यस्य खलु भोगापवर्गगोचरोऽभिलाषः कालत्रयेऽपि नोपावर्तते। यश्च लीलयाऽपि न तौ कर्हिचिदाकाङ्क्षते कथं तदर्थं प्रकृतिर्विक्रियेत। न च जीवात्मपरमात्मभ्यामन्यः कश्चन चेतनो विद्यते यदर्थं तद्विक्रिया कल्प्येत। पारिशेष्याज्जीवात्मार्थमेव सा विकारमनुभवतीति कल्पयितव्यम्। अन्यथा मा नाम तत्सृष्टेर्नैरर्थक्यं प्रसांक्षीत्। न च जीवात्मनोऽपि परमात्मवद् भोगापवर्गगोचरोऽभिलाषो न वर्तत इति वक्तुमुत्सहते। तस्य सर्वानुभवसिद्धत्वेन प्रत्याख्यातुमशक्यत्वात्। यथा हि जीवात्मा खलु सांसारिकं शब्दादिविषयोपभोगमभिलषमाणःप्रत्यात्ममनुभूयते तथाऽपवर्गं कामयमानोऽप्युपलभ्यते। न च यदनुभवसिद्धं तत्केनचित्प्रत्याख्यातुं शक्यते। न चापि प्राणान् धारयते भोगापवर्गौ च न कामयत इति कदाचित् सम्भवति। यस्य च भोगापवर्गगोचरोऽभिलाषः

सततमनुवर्तते यथाशक्ति तदुचितं विहितमविहितं कर्म च सञ्चिनुते तदर्थं प्रकृतेरपि सृष्टिलक्षणा विक्रिया युज्यते । यथा यक्षस्तथा बलिरिति न्यायात् । अत एव चोक्तं दर्शनान्तरे **"अनुपभोगेऽपि पुमर्थं सृष्टिः प्रधानस्योष्ट्रकुङ्कुमवहनवत्"** ( सां० ६ । ४० ) इति । भोग्यशक्तिर्हि प्रकृतिः । सा यदा सृष्टिनियोगं लभते तदा जीवात्मनो भोगापवर्गौ प्रयोजनमुररीकृत्य यथाकर्म विविधमिदं विषयेन्द्रियात्मकं जगदारभते । जीवात्मा च भोक्तृशक्तिः । स तदारब्धेऽस्मिञ्जगति कदाचिदिष्टविषयसंयोगात् सुखमुपलभते कदाचिदनिष्टविषयसंयोगाद् दुःखमुपभुङ्क्ते । सोऽयमस्य भोगः । यत्रेदं स्मर्य्यते **"चिदवसानो भोगः"** ( सां० १ । १०४ ) इति । यदा चायं दिवानिशमिष्टानिष्टविषयजातमुपभुञ्जानो नात्यन्तां शान्तिं विन्दते तदुपभोगाभ्यासं च रागादिविवर्द्धनेनेन्द्रियचाञ्चल्यहेतुत्वात् तदनुपायं निश्चिनुते तदा ततो विरज्यते । श्रोत्रियं ब्रह्मनिष्ठं गुरुं चोपसम्पद्य यथोपदेशं यतमानः परमात्मदर्शनमापद्यते । अथ मुच्यते । सोऽयमस्यात्यन्ता शान्तिरपवर्गः । यत्रेदं श्रूयते- **"यो योनिं योनिमधितिष्ठत्येको यस्मिन्निदं सं च विचैति सर्वम् । तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति"** ( श्वे० ४ । ११ ) इति । स्मर्य्यते च **"तदत्यन्तविमोक्षोऽपवर्गः"** ( न्या० १ । १ । २२ ) इति । भोग्यभोक्तृशक्त्योश्च तयोर्यथा परस्परमविद्यापरिबृंहितो योग्यतालक्षणः सम्बन्धस्तावदभ्युपेयते तथाऽऽश्रयाश्रयिभावोऽप्यास्थातुं शक्यते । भोग्यस्य भोक्तारमन्तरेणावस्थानानुपपत्तेः । यथा खलु राजानमन्तरेण राज्यस्यावस्थानं नावकल्पते तथा जीवात्मानमन्तरेण सविकारायाः प्रकृतेरप्यवस्थानं न जातूपपद्यते । यद्विना च यदवस्थानानुपपत्तिर्नूनं स तदाश्रय इति प्रतिपद्यते । तस्माज्जीवात्मैव सविकारस्याकाशस्य प्रकृतेराश्रयत्वादत्राक्षरं न परब्रह्म परमेश्वर इति । एवं प्राप्त उच्यते—**अक्षरमम्बरान्तधृतेः** । सत्यं प्रकृतिर्जीवात्मनो भोगापवर्गौ प्रयोजनमुररीकृत्य विषयेन्द्रियात्मकं पृथिव्यादिविकारजातमारभते, तच्च तावदवतिष्ठते यावज्जीवात्मनः प्रयोजन-

मिदं न सम्पद्यते । न चैतावता तस्य कथञ्चिद् विकारावस्थाने हेतुत्वे कल्प्यमानेऽपि प्रकृत्यवस्थाने हेतुत्वं कल्पयितुं शक्यते । नहि यद्विकारावस्थाने हेतुस्तेन तत्प्रकृत्यवस्थानेऽपि हेतुना भवितव्यमित्यस्ति कश्चिन्नियमः । न च यदेकमवस्थापयति तेनापरमप्यवस्थाप्यत इति तर्कपथमारोहति । न च यस्य यदवस्थानहेतुत्वमनुपपन्नं तस्य तदाश्रयत्वं कर्हिचिद् घटते । स्पष्टं चेह पृथिव्यादिविकारजातमाश्रयन्त्याः प्रकृतेराश्रयस्तावत् पृच्छ्यते **"कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च"** (बृ० ३ । ८ । ७) इति । व्यक्तं च तदाश्रयोऽक्षरं प्रत्युच्यते **"एतद् वै तदक्षरं गार्गि! ब्राह्मणा अभिवदन्ति"** (बृ० ३ । ८ । ६) इति । **"यस्मिन् भूमिरन्तरिक्षं द्यौर्यस्मिन्नध्याहिता"** (अथर्व० १० । ४ । ७ । १२) **"यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः"** (मुं० २ । २ । ५) इत्यादिश्रुतिभ्यः सविकारायाः प्रकृतेराश्रयत्वं च परब्रह्मणः परमेश्वरस्यैव धर्मोऽवगम्यते । तत्सामान्यादिहापि तेनैव तदाश्रयेण भवितव्यमिति विज्ञायते । **तस्मादत्र** सविकारस्याकाशस्य प्रकृतेराश्रयत्वेन श्रुतमक्षरं परब्रह्म परमेश्वर एव भवितुमर्हति न जीवात्मा ॥ १० ॥

**स्यादेतत्**—तदा हि जीवात्मा खलु विकारावस्थाने हेतुर्भवन् प्रकृत्यवस्थाने हेतुर्न भवेद् यदि विकारेभ्यः प्रकृतिर्विशिष्येत । न च सा तेभ्यो विशिष्यते । सत्कार्य्यवादात् । सत्कार्य्यवादे च प्रकृतिविकारयोरभेदोऽभ्युपगम्यते न भेदः । नहि भेदाभ्युपगमे **"प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्"** (यो० २ । १८) इति प्रकृतिलक्षणं कथञ्चित् सङ्गच्छते । **नन्वस्तु** तर्ह्यसत्कार्य्यवादः । **न** । व्युदस्तत्वात् । अतो विकारावस्थाने यो हेतुः स एव तत्प्रकृत्यवस्थानेऽपि हेतुरिति वक्तव्यम् । **तथा च** जीवात्मैवाक्षरमम्बरान्तधृतेर्न परब्रह्म परमेश्वर इति । अस्योत्तरं पठति—

**"सा च प्रशासनात्" ॥ ११ ॥**

**पूर्वत्र यो हेतुरुपन्यस्तस्तत्रैष हेतुरिति चार्थः । अधिक्रियमाणं ब्रह्म**

**षष्ठ्या** विपरिणम्य सम्बध्यते । **सा**=अम्बरान्तधृतिः परब्रह्मणः परमेश्वरस्य धर्मोऽवगन्तव्यः, कुतः? **प्रशासनात्**=प्रशासनपूर्वकत्वादित्यर्थः ।

न खल्वक्षरस्य परमेश्वरत्वे केवलाऽम्बरान्तधृतिर्हेतुः क्रियते, येनासौ जीवात्मनि कथञ्चिद् व्यभिचरन्ती तस्य परमेश्वरत्वं न प्रसाधयेत्, किन्तु प्रशासनपूर्विका सा हेतुर्विधीयते **"एतस्य वा अक्षरस्य प्रशासने गार्गि! सूर्य्याचन्द्रमसौ विधृतौ तिष्ठतः । एतस्य वा अक्षरस्य प्रशासने गार्गि! द्यावापृथिव्यौ विधृते तिष्ठतः"** ( बृ० ३ । ८ । ९ ) इत्यादिवाक्यशेषात् । प्रशासनं च प्रकृष्टं शासनं नियोगो नियमनमाज्ञा, तस्य प्रकृष्टत्वमनिवार्य्यत्वमप्रतिहतत्वमिति यावत् । न च तत्पूर्विकाऽम्बरान्तधृतिर्जीवात्मनो धर्मो भवितुमर्हति । नहि स कतिपयपदार्थानां प्रशास्ता भवन्नपि पृथिव्यादिप्रकृतिपर्य्यन्तानां सर्वेषां पदार्थानां प्रशास्ता विद्यते, येन तत्पूर्विका सा तस्य परिकल्प्येत । परब्रह्मणःपरमेश्वरस्य सर्वपदार्थप्रशास्तृत्वं च श्रुतिस्मृतिभ्यामध्यवसीयते **"सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च"** ( बृ० ५ । ६ । १ ) **"प्रशासितारं सर्वेषामणीयांसमणोरपि । रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम्"** ( मनु० १२ । १२२ ) इति । यथा चैष भगवान् जगतां पतिरीश्वरः सर्वपदार्थानां प्रशास्ता श्रुतिस्मृतिभ्यामध्यवसीयते तथा प्रशासनपूर्वको विधर्ताऽपि प्रमीयते **"सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि"** ( ऋ० २ । ३ । २१ । ३६ ) **"कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद् यः । सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात्"** ( गी० ८ । ९ ) इति । **भुवनस्य**=लोकत्रयस्य, **रेतः**=बीजभूताः, **अर्धगर्भाः**=अर्धं समृद्धं लोकत्रयं गर्भे यासां प्रकृतीनां ताः **सप्त**=महदाद्याः सप्त प्रकृतयो **विष्णोः**=सर्वव्यापकस्य परब्रह्मणः परमेश्वरस्य **प्रदिशा**=अप्रतिहताज्ञया **विधर्मणि**=विधृताः

सत्यः स्वस्वव्यापारे **तिष्ठन्ति**=वर्तन्त इति मन्त्रार्थः । तत्सामान्यादत्रापि परब्रह्मणा परमेश्वरेणैव पृथिव्यादिसर्वपदार्थविधर्त्रा भवितव्यम् । अन्यथा मिथो विरोधापत्तेः । न चाविरोधे सम्भवति विरोधाभ्युपायो ज्यायान् । **तस्मादिह** परब्रह्म परमेश्वर एवाक्षरमम्बरान्तधृतेर्न जीवात्मा ॥ ११ ॥

अक्षरस्य परमेश्वरत्वे हेत्वन्तरं समुच्चिनोति—

**"अन्यभावव्यावृत्तेश्च" ॥ १२ ॥**

ब्रह्मेत्यधिक्रियते । अक्षरमिति पूर्वसूत्रादनुवर्तते । अक्षरस्य परमेश्वरत्वे हेत्वन्तरमेतदिति चकारेणोच्यते । **अन्यभावव्यावृत्तेः**=परमेश्वरादन्यस्य भिन्नस्य पृथिव्यादिप्रकृतिपर्य्यन्तस्याचेतनस्य जीवात्मनश्चेतनस्य च भावस्य पदार्थस्य व्यावृत्तेर्व्यावर्तनादक्षरं परब्रह्म परमेश्वरो गम्यत इत्यर्थः ।

ये खलु परमेश्वरादन्ये चेतनाचेतनात्मानः पदार्था विद्यन्ते ते सर्वेऽत्राक्षरस्य विशेषणविशेषोपादानेन व्यावर्त्यन्ते **"एतद् वै तदक्षरं गार्गि! ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन"** ( बृ० ३ । ८ । ८ ) इति । तत्रास्थूलमित्यादिना **पृथिवी,** अलोहितमित्यादिना **तेजः,** अस्नेहमित्यादिना **जलम्,** अवाय्वनाकाशमित्यादिना **वायुः, आकाशं** च, अचक्षुष्कमित्यादिना **जीवात्मा,** अनन्तरमबाह्यमित्यादिना च **प्रकृतिर्व्यावर्त्यते** । चेदिह जीवात्मनोऽक्षरशब्देन ग्रहणमभिप्रेयेत तदा न आत्मसौ व्यावर्त्येत । नह्यक्षरस्य जीवात्मत्वे तद्व्यावृत्तिर्युज्यते । तथा **"तद्वा एतदक्षरं गार्गि! अदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ"** ( बृ० ३ । ९ । ११ ) इत्यक्षरस्यादृष्टत्वादिपूर्वकद्रष्टृत्वादिकं प्रतिपादयन्ती श्रुतिस्तस्य स्पष्टं जीवात्मतां व्यावर्तयति । नहि जीवात्मा यदा रूपं पश्यति तदा न

*

दृश्यते, यदा शब्दं शृणोति तदा न श्रयते, यदा मननीयं मनुते तदा न मन्यते, यदा विज्ञातव्यं विजानाति तदा च न विज्ञायते । अक्षरं चास्ति ततो विपरीतम् । **अथच** छान्दसत्वात् करणेऽत्र निष्ठा-प्रत्ययः । दर्शनसाधनं चक्षुर्दृष्टं, श्रवणसाधनं श्रोत्रं श्रुतं, मननसाधनं मनो मतं, विज्ञानसाधनं बुद्धिर्विज्ञातम् । तद् यस्य नास्ति पश्यति शृणोति मनुते विजानाति च गार्गि ! तद्वा एतदक्षरमित्यर्थः । अनेन जीवात्मव्यावृत्तिः सुव्यक्ता । नहि स चक्षुरभावे पश्यति श्रोत्राभावे शृणोति मनोऽभावे मनुते, बुद्ध्यभावे च जानीते । न चायं चक्षुषा पश्यन् श्रोत्रेण शृण्वन् मनसा मन्वानो बुद्ध्या जानानोऽक्षरं भवितुम-र्हति । परमात्मा चास्ति ततो विपरीतश्चक्षुरभावे पश्यति श्रोत्राभावे शृणोति मनोऽभावे मनुते बुद्ध्यभावे च जानीते । यत्रेदं श्रूयते **"अतो विश्वान्यद्भुता चिकित्वाँ अभिपश्यति कृतानि या च कर्त्वा"** ( ऋ० १ । २ । १८ । ११ ) **"अचक्षुष्कम-श्रोत्रमवागमनः"** ( बृ० ३ । ८ । ८ ) **"सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्"** ( श्वे० ३ । १७ ) **"अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः"** ( श्वे० ३ । १९ ) इति । तस्मात् स एवात्राक्षरमिति विज्ञायते । **"नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ"** ( बृ० ३ । ९ । ११ ) इति द्रष्ट्रन्त-रादीनां प्रतिषेधस्तु तत्तुल्यद्रष्ट्रन्तरादिप्रतिषेधाभिप्रायो द्रष्टव्यः । यथा ह्यस्मिन् **दहरादूने** खलु "ज्योतिस्स्वरूपतोऽन्यः पुरुषो न विद्यते" इत्युक्ते तत्र पुरुषमात्रप्रतिषेधो नाभिप्रेयते किन्तु ज्योतिस्स्व-रूपतुल्यपुरुषान्तरप्रतिषेधः । पुरुषान्तराणां प्रमाणसिद्धत्वेन प्रतिषेद्धुम-शक्यत्वात् । तथाऽत्रापि द्रष्ट्रन्तरादीनां जीवात्मनां प्रमाणसिद्धत्वेन न द्रष्ट्रन्तरादिमात्रं प्रतिषिध्यते किन्तु प्रकृताक्षरतुल्यं द्रष्ट्रन्तरादिकमिति साधु प्रतिपद्यामहे । जीवात्मा हि चक्षुरादिभिः करणैर्द्रष्टा श्रोता मन्ता बोद्धा बोभूयते नाक्षरं परब्रह्म परमेश्वरः । **यद्वा** द्रष्टुः श्रोतुर्मन्तुर्विज्ञातु-

जीवात्मनोऽन्यद् यथाऽक्षरं द्रष्टृ श्रोतृ मन्तृ विज्ञातृ विद्यते तथाऽक्षरतोऽप्यन्यत् तत्समं तदधिकं वा किञ्चिद् द्रष्टृ श्रोतृ मन्तृ विज्ञातृ च स्यादिति शङ्कां व्युदस्यन् **"नान्यदतोऽस्ति द्रष्टृ"** इत्यादिकमुपदिश्यते। परब्रह्मणा परमेश्वरेणाक्षरेण तुल्यं ततोऽधिकं वा नान्यत् किञ्चिदभ्युपगम्यते। **"नकिरिन्द्र! त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन्!। नकिरेवा यथा त्वम्"** (ऋ० ३। ६। १९। १) **"न तत्समश्चाभ्यधिकश्च दृश्यते"** (श्वे० ६। ८) इत्यादिना प्रतिषिद्धत्वात्। अतो युक्तो द्रष्ट्रन्तरादिप्रतिषेधः। **"यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि, अन्तवदेवास्य तद् भवति। यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति स कृपणः। अथ य एतदक्षरं गार्गि! विदित्वाऽस्माल्लोकात् प्रैति स ब्राह्मणः"** (बृ० ३। ८। १०) इति चाक्षरस्यावेदनेन यथाशास्त्रमनुष्ठितानामपि वैदिककर्मणां क्षयिष्णुत्वम्, अवेदितुः पुनः पुनर्जन्ममरणप्रबन्धलक्षणसंसाराम्बुधिपतनरूपं कृपणत्वं, वेदितुरुक्तलक्षणसंसाराम्बुधिमुत्तीर्य्य ब्रह्मप्राप्तिरूपं ब्राह्मणत्वं चोपदिशन् प्रत्यक्षमस्य जीवात्मतां व्यावर्तयति, परमात्मतां च व्यवस्थापयति। प्रसिद्धं खल्वेतत्। परब्रह्म परमात्मानमविदित्वैव जीवात्मा जन्ममरणप्रबन्धलक्षणसंसाराम्बुधौ पनीपत्य कृपणः=दीन आस्ते, विदित्वा चोक्तलक्षणं संसाराम्बुधिमुत्तीर्णः परब्रह्म परमात्मानं सुखमध्यास्ते। यत्रेदं श्रूयते **"इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः"** (के० २। १३) इति। न च प्रसिद्धेऽर्थे युक्तः संशयः। **तत्प्रयोगोपलम्भाच्च।** परब्रह्मणि परमेश्वरे खल्वक्षरशब्दप्रयोगोऽप्युपलभ्यते **"ऋचो अक्षरे परमे व्योमन्"** (ऋ० २। ३। २१। ३९) **"परमेवाक्षरं प्रतिपद्यते"** (प्र० ४। १०) **"अथ परा यया तदक्षरमधिगम्यते"** (मुं० १। १। ५) **"येनाक्षरं पुरुषं वेद सत्यम्"** (मुं० १। २। १३) **"यदक्षरं वेदविदो वदन्ति"**

(गी० ८ । ११ ) "**त्वमक्षरं परमं वेदितव्यम्**" (गी० ११ । १८) इति । न चाक्षरस्य जीवात्मत्वे तत्र तत्प्रयोगोपलम्भः कथञ्चिदुपपद्यते। **ननु** "**तथाऽक्षराद् विविधाः सोम्य! भावाः**" (मुं० २ । १ । १) "**अक्षरात्परतः परः**" (मुं० २ । १ । २) इति प्रकृतौ "**कूटस्थोऽक्षर उच्यते**" (गी० १५ । १६) इति जीवात्मनि चापि तत्प्रयोग उपलभ्यत इति चेत्? । **अत्रोच्यते**—सत्यमुपलभ्यते प्रयोगः, तथाप्यत्र तदुपादानकारणं न किञ्चिदीक्षामहे, येन तदन्यतरं कञ्चनोपाददीमहि । **तस्माद्** ब्रह्मैवात्राक्षरमिति सिद्धम् ॥ १२ ॥

अक्षरं ब्रह्मेत्यभिहितम् । **सम्प्रति** तस्य पुरुषत्वमभिधातुकामोऽन्यमधिकरणमवतारयति—

"**ईक्षतिकर्मव्यपदेशात् सः**" ॥ १३ ॥

ब्रह्मेत्यधिक्रियते । सः=प्रश्नोपनिषदि श्रुतः स पुरुषः परब्रह्म परमेश्वरो वेदितव्यः, कुतः? **ईक्षतिकर्मव्यपदेशात्**=ईक्षणरूपकर्माभिधानादित्यर्थः ।

प्रश्नोपनिषदि हि षष्ठे प्रश्ने "**षोडशकलं भारद्वाज! पुरुषं वेत्थ**" (प्र० ६ । १) इति प्रकृत्य श्रूयते "**इहैवान्तः शरीरे सोम्य! स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्ति**" (प्र० ६ । २) इति । तत्र संशयः किमिह श्रुतः स पुरुषो जीवात्मा स्यादाहोस्वित् परब्रह्म परमेश्वर इति । कुतः संशयः? साधारणशब्दप्रयोगात् । जीवात्मपरमात्मसाधारणः खलु पुरुषशब्दः । स **यथा** परमात्मनि प्रयुज्यमान ईक्ष्यते "**सहस्रशीर्षा पुरुषः**" (ऋ० ८ । ४ । १७ । १) "**वेदाहमेतं पुरुषं महान्तम्**" (यजु० ३१ । १८) "**यत्रामृतः स पुरुषो ह्यव्ययात्मा**" (मुं० १ । २ । ११) "**दिव्यो ह्यमूर्तः पुरुषः**" (मुं० २ । १ । २) इति, **तथा** जीवात्मनि प्रयुज्यमानोऽपि निरीक्ष्यते "**एतद् वृक्ष्णे पुरुषस्याल्पमेधसः**" (कठ० १ । ८) "**तेन तथैव पुरुषो न शृणोति न**

**पश्यति**" (प्र० ४।२) "**एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः**" (प्र० ४।९) "**अथ खलु क्रतुमयः पुरुषः**" (छां० ३।१४।१) इति। न चैवं साधारणशब्दप्रयोगे निरीक्ष्यमाणे जीवात्मनो वा परब्रह्मणः परमेश्वरस्य वाऽत्र ग्रहणमिति निश्चेतुं शक्यते। शरीरान्तराख्यानाच्च। स पुरुषः खलु शरीरस्यान्तराख्यायते "**इहैवान्तः शरीरे स पुरुषः**" (प्र० ६।२) इति। शरीरान्तरवस्थानं च यथा परब्रह्मणः परमेश्वरस्य वर्तते तथा जीवात्मनोऽपि वरीवृत्यते। तस्माद् युक्तः संशयः। **तत्र** जीवात्मेति पूर्वः पक्षः, परब्रह्म परमेश्वर इति सिद्धान्तः। **किं** तावत् प्राप्तम्? जीवात्मेति वच्मः। तल्लिङ्गोपलब्धेः। **अस्त्युत्क्रान्तिः** खलु जीवात्मनो लिङ्गम्। स हि कर्मार्जिते शरीरे यावत् कर्म न भुज्यते तावत् तत्र प्रतितिष्ठति, भुज्यमाने च तस्मिन् पुनर्यथाकर्म शरीरान्तरग्रहणाय पूर्वस्मात् तस्मादुत्क्रामति। यत्रेदं श्रूयते "**स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति**" (बृ० ४।३।८) "**तस्य हैतस्य हृदयस्याग्रं प्रद्योतते, तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः**" (बृ० ४। ४। २) "**स यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति**" (कौ० ३।४) इति। "**कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि**" (प्र० ६।३) इति च। न चात्र श्रूयमाणस्य पुरुषस्य परमात्मत्वे सा कथञ्चिदुपपद्यते। परमात्मनो व्यापकत्वेन तदसम्भवात्। अपसृप्यपरपर्य्याया ह्युत्क्रान्तिः। सा च परिच्छिन्नस्य जीवात्मनः सम्भवति नापरिच्छिन्नस्य जगत्पितुः परमात्मनः। **तस्मा**ज्जीवात्मैवात्र श्रुतः स पुरुषो न परब्रह्म परमेश्वर इति। **एवं** प्राप्त उच्यते—**स ईक्षतिकर्मव्यपदेशात्**। इह ह्युत्तरत्र वाक्यशेषे तच्छब्देन प्रकृतं पुरुषं परामृश्य तद्धर्म ईक्षतिरूपं कर्म तावद् व्यपदिश्यते "**स ईक्षाञ्चक्रे**" (प्र० ६।३) इति। वक्ष्यमाणमाणश्रद्धाऽऽकाशवायुतेजोऽप्पृथिव्यादिषोडशकलोत्पत्त्यनुकूलसङ्कल्पगर्भे प-

र्य्यालोचनं चेक्षतिः, यं किलौपनिषदास्तपोनाम्ना व्याचक्षते **"स तपोऽतप्यत"** ( प्र० १ । ४ ) **"तपसा चीयते ब्रह्म"** ( मुं० १ । १ । ८ ) इति । स च पुरुषस्य तस्य परमात्मत्वे सङ्गच्छते न जीवात्मत्वे । यः खलु कलानामासां स्रष्टा भवेत् स एव तत्सृष्टेर्हेतोरीक्षितुमर्हति । न चाल्पज्ञोऽल्पशक्तिर्जीवात्मा तत्स्रष्टा सम्भवति । नहि तस्य प्राप्तमैश्वर्य्यमपि कदाचिज्जगद्व्यापारविषयं कल्पते, येन तत्स्रष्टा परिकल्प्येत परमात्मा चास्ति तत्स्रष्टा **"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी** ( मुं० २ । १ । ३ ) इत्यादिश्रुतिभ्यः । तस्य स्रष्टृत्वे चेक्षतिः कर्मापि तद्धर्म उपपद्यते । स्रष्टुः स्रष्टव्यगोचरेक्षणक्रियाया औचित्यात् । श्रुत्यन्तरेऽपि चेक्षतिस्तद्धर्म एवाम्नात उपलभ्यते **"स ईक्षत लोकान्नु सृजै"** ( ऐ० १ । १ ) **"तदैक्षत बहुस्यां प्रजायेय"** ( छां० ६ । २ । १ ) इति । तत्सामान्यादिहापि तद्धर्मेणैव तेन भवितव्यमिति युक्तं विज्ञायते । अन्यथा मिथोविरोधप्रसङ्गात् । न च स इष्यते कुत्रापि, किं पुनः श्रुतिषु । **प्रलयाभिधानाच्च** । यथा हि पुरुषात्तस्मादीक्षणपूर्विका खलु प्राणादीनामुत्पत्तिर्गीयते तथा तदाश्रयस्तत्प्रलयोऽपि दृष्टान्तपूर्वकोऽभिधीयते **"यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति, भिद्येते तासां नामरूपे, समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति, भिद्येते तासां नामरूपे, पुरुष इत्येवं प्रोच्यते"** ( प्र० ६ । ३ ) इति । प्रकृतिभावं गतानां प्राणादीनां समुद्रे सरितामिव पुरुषेऽविभागेनावस्थानं प्रलयः । स च समुद्रस्थानीयेऽधिष्ठानकारणे महति परब्रह्मणि परमात्मन्युपपद्यते न तद्वोक्तरि परिच्छिन्ने जीवात्मनि । **श्रुत्यन्तराच्च** । श्रुत्यन्तरेऽपि सर्वकलाप्रलयस्तावत् परमात्माश्रय एव श्रूयते न जीवात्माश्रयः **"गताः कलाः पञ्चदश प्रतिष्ठाः, देवाश्च सर्वे प्रतिदेवतासु । कर्माणि विज्ञानमयश्च आत्मा, परेऽव्यये सर्व एकीभ-**

**वन्ति"** (मुं० ३।२।७) इति। अविभागेनावस्थानमेकीभावः। न चैकत्र श्रुतमन्यत्र परित्यज्यते। श्रुतिसंयोगसामान्यात्। अतः परमात्मैव स पुरुषो न जीवात्मेत्यवसीयते। **माश्रवर्णिकलिङ्गाच्च**। मन्त्रवर्णाद्धि षोड़शकलासम्बन्धः खलु परमात्मन एवाधिगम्यते न जीवात्मनः। नहि मन्त्रवर्णेषु षोड़शकलानिमित्तं षोड़शीति नाम जीवात्मनः कश्चिदुपलभ्यते। परमात्मनश्चास्ति तदुपलब्धिरपरोक्षा **"यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा। प्रजापतिः प्रजया संरराणस्त्रीणि ज्योतींषि सचते स षोड़शी"** (यजु० ८।३६) इति। तदिदं तस्य पुरुषस्य परमात्मत्वे मान्त्रवर्णिकं लिङ्गम्। **यच्चोक्तं** जीवात्मलिङ्गोपलब्धेर्जीवात्मैव स पुरुषो न परमात्मेति। **तन्न** चारु। वाक्यार्थाज्ञानपूर्वकत्वात्। न खलु **"कस्मिन्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि"** (प्र० ६।२) इत्यत्र षोड़शकलस्य पुरुषस्य शरीरादुत्क्रान्तिरुपन्यस्यते **किन्तु** जीवात्मनः। तदुत्क्रान्तिनिमित्तं व्यपदेशमात्रं चान्तरात्मनि षोड़शकले पुरुषे। कस्मिन्नु जीवात्मनि पुरुषे खलु शरीरादुत्क्रान्तेऽहमुत्क्रान्तो भविष्यामि=तन्निमित्तमुत्क्रान्तिव्यपदेशं भक्ष्यामि, कस्मिन् वा तत्र प्रतिष्ठितेऽहमपि प्रतिष्ठास्यामि=प्रतिष्ठाव्यपदेशमेष्यामीति वाक्यार्थात्। अनेन हि यं जीवात्मानं पुरुषं खलु निमित्तीकृत्य स पुरुषः प्राणादिकलोत्पत्त्यर्थमीक्षणं विधत्ते तस्मिन्नेवोत्क्रान्तिप्रतिष्ठे नेक्षणकर्तरि पुरुषे, स हि तत्र तद्व्यपदेशमात्रमाश्रयते न परमार्थतस्तदाश्रयतां भजत इति विस्पष्टम्। **तस्मात्** परब्रह्म परमात्मैव स पुरुषो न जीवात्मेति निश्चयः॥ १३॥

**परब्रह्म** परमात्मा पुरुष इति निरूपितम्। **सम्प्रति** तस्य पुरुषत्वसामान्यात्प्रसक्तं परिच्छिन्नत्वं निराचिकीर्षुरन्यमधिकरणमारभते —

**"दहर उत्तरेभ्यः"** ॥ १४॥

**ब्रह्मेत्यधिक्रियते**। **दहरः**=छान्दोग्योपनिषदि श्रुतो दहराकाशः परब्रह्म परमेश्वरो वेदितव्यः, कुतः? **उत्तरेभ्यः**=उत्तरवाक्यगतेभ्यो हेतुभ्य इत्यर्थः।

छान्दोग्योपनिषदि अष्टमप्रपाठके श्रूयते **"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः, तस्मिन् यदन्तः, तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्"** (छां० ८ । १ । १ ) इति । **तत्र** संशयः किमिह **ब्रह्मपुरे**=शरीरे **दहरे**=परिच्छिन्ने **पुण्डरीके**=हृदयपुण्डरीके **वेश्मनि**=सद्मनि श्रुतो दहराकाशो जीवात्मा स्यादाहोस्वित् परब्रह्म परमेश्वर इति । कुतः संशयः? दहराकाशशब्दाभ्यामिति ब्रूमः । परिच्छिन्नवचनो हि दहरशब्दः । परिच्छिन्नश्च जीवात्मा भवति न परमेश्वरः । आकाशशब्दश्च परमेश्वरे प्रयुज्यते न जीवात्मनि । योगेन तत्र तत्प्रयोगे दहरशब्दोऽपि हृदयपुण्डरीकोपाधिना परब्रह्मणि परमेश्वरे प्रयोक्तुं शक्यते । तस्माद् युक्तः संशयः । **अथोच्येत**—भूताकाशे कुतो न संशय्यते तत्रापि तदुपाधिना दहरत्वोपपत्तेराकाशशब्दप्रयुक्तेश्चेति । **नैतद् वक्तव्यम्** । उपमानोपमेयभावेन भेदप्रतिपत्त्या प्रतिरोधाद् संशयानुत्पत्तेः । आन्तरः खलु दहराकाश इह बाह्याकाशेनोपमीयते **"यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः"** (छां० ८ । १ । ३ ) इति । भेदतन्त्रश्चायमुपमानोपमेयभावो न जात्वभेदे कथञ्चिदवकल्पत इति तदुभयोर्भेदः प्रतिपद्यते । न च तत्प्रतिपत्तौ सत्यां "भूताकाशो वा दहराकाशः स्यात्" इति संशय उत्पत्तुमर्हति । तस्य तत्प्रतिपत्त्या प्रतिरोधात् । **तत्र** जीवात्मेति पूर्वः पक्षः, परब्रह्म परमेश्वर इति सिद्धान्तः । **किं** तावत् प्राप्तम्? जीवात्मेति निगदामः । **दहरत्वात्** । दहरत्वं हि परिछिन्नत्वम् । तच्चाऽणुत्वाज्जीवात्मनि मुख्यमुपपद्यते न परब्रह्मणि परमेश्वरे । महत्त्वात् । मुख्यामुख्ययोश्चासति बाधके मुख्यस्योपादानमुचितं मन्यामहे नामुख्यस्य । नहि सिंहशब्दप्रतिपाद्यं प्रतिपित्सुः प्रथमं देवदत्तं सिंहं कदाचित् प्रतिपद्यते न केसरिणम् । आकाशशब्दश्चाकाशते प्रकाशत इति योगेन जीवात्मन्यपि प्रयोक्तुं शक्यते । **प्रकाशात्मकत्वात्** । यथा हि प्रकाशात्मा खलु परब्रह्म परमेश्वर आ पृथिव्या आ च दिवः सर्वमिदं जगदवभासयति **"तमेव भान्तमनुभाति सर्वं तस्य**

**भासा सर्वमिदं विभाति**" (मुं० २ । २ । १०) इत्यादिश्रुतेः, तथा जीवात्मा पुरुषोऽपि प्रकाशात्मा पादतलादारभ्य मूर्धपर्य्यन्तं सर्वमिदं शरीरं सम्यक् प्रकाशयति । यत्रेदं श्रूयते "**योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः**" (बृ० ४ । ३ । ७) इति । यश्च स्वयं प्रकाशमानः परं प्रकाशयति तत्र योगेनाकाशशब्दप्रयोगोऽपि युज्यतेतरां नास्ति काचिदनुपपत्तिः । **ब्रह्मपुरव्यपदेशाच्च** । जीवात्मनो हि शरीरमिदं पुरं सद् ब्रह्मपुरमिति व्यपदिश्यते "**यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकम्**" (छां० ८ । १ । १) इति । व्यपदेशश्च सर्वोऽसाधारण्येन प्रवर्तमानो दृश्यते न तु साधारण्येन । नहि क्षितिजलपवनबीजादिसमवधानजन्माऽप्यङ्कुरः क्वचित् कदाचित् क्षित्यादिभिर्व्यपदिश्यमानो निरीक्ष्यते । तेषां कार्य्यान्तरेष्वपि हेतुत्वेन साधारण्यात् । शालिबीजेन व्यपदेशस्तु प्रत्यक्षः शाल्यङ्कुर इति । तस्य चास्ति तत्रासाधारण्यम् । तदिदं शरीरमपि ब्रह्मणा व्यपदेष्टव्यम् । जीवात्मा परमात्मा चोभयं ब्रह्मेति समगरिष्महि पुरस्तात् । तत्र न तावत् परमात्मना व्यपदेष्टुं शक्यते । तस्य सर्वविकारकारणत्वेनातिसाधारण्यात् । जीवात्मनश्चास्ति तत्रासाधारण्यम् । स्वधर्माधर्माभ्यामुपार्जितत्वात् । जीवात्मना हि स्वधर्माधर्माभ्यां शरीरमिदमुपार्ज्यते "**पुण्येन पुण्यं लोकं नयति पापेन पापम्, उभाभ्यां मनुष्यलोकम्**" (प्र० ३ । ७) इत्यादिश्रुतेः । अतो युक्तस्तेन तस्य तद्व्यपदेश इति सम्यगुत्प्रेक्षामहे । न च यस्य येन व्यपदेशस्तस्य हृदयपुण्डरीके वेश्मनि वर्तमानो दहराकाशस्ततोऽन्यो भवितुमर्हति । तत्सहचरितन्यायातिक्रमप्रसङ्गात् । अस्ति खलु लिङ्गलिङ्गिनोरिव व्यपदेश्यव्यपदेशकयोरपि परस्परं सहचारनियमः । कथमन्यथा तेनेदं व्यपदिश्येत । नहि प्रजासहचाराभावे कश्चित् प्रजाधिपो व्यपदिश्यते । व्यपदेश्यं चात्र शरीरं व्यपदेशकश्च जीवात्मा ब्रह्म । चेत्तद्व्यपदेश्ये शरीरेऽस्मिन् हृदयपुण्डरीके वेश्मनि वर्तमानो दहराकाशो जीवात्मनोऽन्यः परिगृह्येत तदा "**तत्सहचरितानत्सहचरितयोस्तत्सहचरितस्यैव ग्रहणम्**" इति न्यायस्यातिक्रमः प्रसज्येत ।

न च स प्रशस्यते । **सप्तमीश्रवणाच्च ।** इह हि ब्रह्मपुर इति सप्तमी श्रूयते । सप्तम्याश्चाधारोऽर्थः । तेनानेनाधेयेन सम्बन्धव्यम् । न च परब्रह्मणः परमेश्वरस्याधेयत्वं युज्यते । तस्य व्यापकतया स्वमहिम्न्यवस्थितत्वेनानाधेयत्वात् । जीवात्मा चाणुपरिमाण इति सम्भवत्याधेयः । **स्वस्वामिभावसम्बन्धाच्च ।** अस्ति खलु स्वं ब्रह्मपुरं शरीरम् । नियम्यत्वात् । न चास्य जीवात्मनोऽन्यः कश्चित् स्वामी सम्भोभोति । नहीदं परब्रह्मणा परमेश्वरेण स्वकर्मणा सम्पाद्यते । न च मुख्ये सम्भवति गौणस्य ग्रहणं न्यायविदो न्याय्यं मन्यते । यस्य चैतत् स्वं यश्चैष स्वामी तेनैवास्य स्वस्वामिभावः सम्बन्धः । स्वामिनश्च परिच्छिन्नस्य स्वपुरैकदेशे वृत्तिर्दृष्टा यथा पञ्चमजार्जस्य, राज्ञो वा गायकवाडस्य । परिच्छिद्यते चायं जीवात्मेति तेनैवास्य ब्रह्मपुरस्य शरीरस्यान्तर्हृदयपुण्डरीके वेश्मन्यपि वर्तितव्यम् । तथा च को नु नाम जीवात्मनोऽन्यो दहराकाशो भवेदिति न विज्ञायते । द्यावापृथिव्यादीनां च सर्वपदार्थानां तत्र वासनारूपेणान्तः समाहितत्वोपपत्तेराकाशोपमितत्वमपि न विरुध्यते **"यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः, उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते, उभावग्निश्च वायुश्च सूर्य्याचन्द्रमसावुभौ, विद्युन्नक्षत्राणि, यच्चास्येहास्ति यच्च नास्ति, सर्वं तदस्मिन् समाहितम्"** ( छां० ८ । १ । ३ ) इति । **समाहितत्वं**=प्रतिष्ठितत्वम् । तस्माज्जीवात्मैवेह दहर आकाशो न परब्रह्म परमेश्वर इति । **एवं** प्राप्तेऽभिधीयते—**दहर उत्तरेभ्यः ।** उत्तरत्र खलु प्रकृतं दहराकाशमेतच्छब्देन परामृश्य तस्यात्मत्वाभिधानपूर्वकमपहतपाप्मत्वादयो धर्माः केचनाम्नायन्ते **"एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः"** ( छां० ८ । १ । ५ ) इति । न च ते परब्रह्मणः परमेश्वरादन्यत्र जीवात्मन्युपपद्यन्ते । तस्य पाप्मादिभिः संयोगेन तदभावस्य सिद्धत्वात् । जीवात्मा हि दिवानिशं पाप्मना संयुज्यते । नो चेत् संयुज्येत न तद्विनिर्मोकं प्रार्थयेत । प्रार्थयमानश्चोपलभ्यते **"जातवेदसे**

सुनवाम सोममरातीयतो निदहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरिताऽत्यग्निः" (ऋ० १ । ७ । ७ । १ ) दुरिता=दुरितानि । "विश्वानि देव! सवितर्दुरितानि परासुव । यद् भद्रं तन्न आसुव" (ऋ० ४ । ४ । २५ । ५ ) "अग्ने नय सुपथा राये अस्मान् विश्वानि देव! वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम" (यजु० ४० । १६ ) "यद् विद्वांसो यदविद्वांस एनांसि चकृमा वयम् । यूयं नस्तस्मान्मुञ्चत विश्वे देवाः सजोषसः" (अथ० ६ । १२ । ११५ । १ ) इति । यस्य चास्त्यहर्निशं पाप्मना संयोगः स जायते म्रियते जीर्य्यति शोचति विजिघत्सति पिपासति चेति ध्रुवम् । सति कर्मणि तत्फलस्य जन्मादेरावश्यकत्वात् । यत्रेदं श्रूयते "तयोरन्यः पिप्पलं स्वाद्वत्ति" (ऋ० २ । ३ । १७ । २० ) "अपाङ् प्राङेति स्वधया गृभीतः" (ऋ० २ । ३ । २१ । ३८ ) "कृतस्य तस्यैव स चोपभोक्ता" (श्वे० ५ । ७ ) "अजीर्य्यताममृतानामुपेत्य जीर्य्यन्मर्त्यः क्वधःस्थः प्रजानन्" (कठ० १ । १८ ) "अनीशया शोचति मुह्यमानः" (मु० ३ । १ । २ ) "स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः" (छां० ३ । १७ । १ ) इति । लिङ्गं चोपलभ्यते "स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं न जरया बिभेति । उभे तीर्त्वाऽशनायापिपासे शोकातिगो मोदते स्वर्गलोके" (कठ० १ । १३ ) इति । सत्यकामत्वं सत्यसङ्कल्पत्वं च न जातु मात्रयाऽपि लोचामहे । नह्यसौ यद् यत् कामयते सङ्कल्पयते च तत्सर्वं तस्य यथाकामं यथासङ्कल्पं च सम्पद्यते । परब्रह्म परमेश्वरस्तु न तथा । स न कर्हिचित् पाप्मना संसृज्यते न जीर्य्यते न म्रियते न शोचति न विजिघत्सति न पिपासति सत्यं कामयते तथ्यं च सङ्कल्पयते । यत्रेदमाम्नातम् "शुद्धमपापविद्धम्" (यजु० ४० । ८ ) "व्यावृत्तः स पाप्मना"

( अथ० १० । ४ । ७ । ४० ) "**स एष सर्वेभ्यः पाप्मभ्य उदितः**" ( छां० १ । ६ । ७ ) "**तं मा भगवान् शोकस्य पारं तारयतु**" ( छां० ७ । १ । ३ ) "**स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म**" ( बृ० ४ । ४ । २५ ) "**वेदाहमेतमजरं पुराणम्**" ( श्वे० ३ । २१ ) "**न तदश्नाति किञ्चन न तदश्नाति कश्चन**" ( बृ० ३ । ८ । ८ ) "**कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्**" ( ऋ० ८ । ७ । १७ । ४ ) "**स ईक्षत लोकान्नु सृजा इति । १ । स इमाँल्लोकानसृजत**" ( ऐत० १ । १–२ ) इति । तस्मात् स एवेह दहराकाश इति विज्ञायते । "**तद् यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते**" ( छां० ८ । १ । ६ ) इति फलबुद्ध्याऽनुष्ठितानां कर्मणामन्तवत् फलमुक्त्वा "**अथ य इहात्मानमनुविद्य व्रजन्त्येताँश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति**" ( छां० ८ । १ । ६ ) इत्यादिना "**यं यमन्तमभिकामो भवति यं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते**" ( छां० ८ । २ । १० ) इत्यन्तेन च प्रकृतदहराकाशविदो भगवतो योगिनः सर्वलोकेषु कामचारः फलमाख्यायते । तच्च दहराकाशस्य परमेश्वरत्वे सङ्गच्छते न जीवात्मत्वे । नहि केवलं जीवात्मानमनुविद्य कश्चित् सर्वलोकेषु कामचारं लभते । **यच्चोक्तं** परब्रह्मणः परमेश्वरस्य दहरत्वं नोपपद्यते, विभुत्वादिति । **तदग्रे** स्वयमाचार्य्यः प्रतिविधास्यते । **ब्रह्म**पुरव्यपदेशश्चासाधारणत्वेऽपि न जीवात्मनिबन्धनः प्रवर्तते, येन जीवात्मा दहराकाशः परिकल्प्येत, **किं तर्हि**? परब्रह्मोपलब्धिनिबन्धनः । शरीरे ह्यस्मिन् मुमुक्षूणां परब्रह्म परमेश्वरस्तावदुपलभ्यते नान्यत्रेति तदुपलब्धि प्रत्यसाधारणमेतत् । अतो ब्रह्मपुरमिति व्यपदिश्यते । **अस्तु** वा जीवात्मनिबन्धनो ब्रह्मपुरमिति व्यपदेशः, तथापि न दहराकाशो जीवात्मा भवितुमर्हति । राजपुरे मूलराजगेहवदुपपत्तेः । **यथा हि**

पुण्ये खलु पुण्यधवले रणजिद्राजराजपुरे **लवपुरे** मूलराजस्य गेहमुपपद्यते तथा जीवात्मपुरे शरीरे परब्रह्मणः परमेश्वरस्यापि सद्म हृदयपुण्डरीमुपपद्यते नास्ति कश्चिद् विरोधः। **एतेन** स्वस्वामिभावसम्बन्धोऽपि व्याख्यातो द्रष्टव्यः। सर्वाधारस्यापि तस्याधेयत्वं च हृदयपुण्डरीकोपाध्यपेक्षया सेत्स्यति नास्ति तदनुपपत्तिः। द्यावापृथिव्यादीनां वासनारूपेणान्तःसमाहितत्वोपपादनं चातिक्लिष्टम्। नह्यसति बलीयसि बाधके मुख्यं तत्समाधावमुपेक्षितुं शक्यते। न च तादृक्षो बाधकः कश्चिदिह लक्ष्यते। दहराकाशस्य जीवात्मत्वे चास्त्याकाशेनोपमानोपमेयभावो बाधको बलीयान्। न च सति तस्मिन् तस्य तत्त्वमाश्रयितुं शक्यते। न च वासनारूपेण द्यावापृथिव्यादीनामन्तःसमाहितत्वमुपपाद्य यथाकथञ्चित् साम्यं परिकल्प्य तदुपमानोपमेयभावसमर्थनमपि विद्याचुञ्चुभ्यो विद्वद्रूपेभ्यो रोचते। जघन्यत्वात्। **अथोच्येत** दहराकाशस्य परमेश्वरत्वेऽपि बाह्याकाशेनोपमानोपमेयभावो न घटते **"ज्यायानाकाशात्"** (शत० १०। ६। ३। २) **"ज्यायान् पृथिव्या ज्यायानन्तरिक्षात्"** (छां० ३। १४। ३) इत्यादिश्रुतिभ्यस्तस्याकाशतो ज्यायस्त्वावधारणादिति। **नैतद् वक्तव्यम्।** उपाधिप्राप्तपरिच्छिन्नत्वनिवृत्त्यर्थत्वेनोपपत्तेः। यथा हि लोके खलु वेगेन गच्छन् सूर्य इषुवद्गच्छतीति गतिमान्द्यनिवृत्त्यर्थमिषुणा तावदुपमीयते तथा हृदयपुण्डरीकोपाधिप्राप्तपरिच्छिन्नत्वनिवृत्त्यर्थं परब्रह्म परमेश्वरोऽपि बाह्याकाशेनोपमीयते **"यावान् वा अयमकाशस्तावानेषोऽन्तर्हृदय आकाशः"** (छां० ८। १। ३) इति, न परमार्थतस्तत्साम्यावबोधनार्थम्। अतस्तेन तस्योपमानोपमेयभावो घटते नास्ति कश्चिद्दोषः। **अथोच्येत**—भवतु दहराकाश इह परब्रह्म परमेश्वरः, तथापि न सोऽत्रान्वेष्टव्यो वा विजिज्ञासितव्यो वा भवितुमर्हति। तदन्तर्वर्तिनः पदार्थान्तरस्य तथात्वानुशासनात् **"तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्"** (छां० ८। १। १) इति। **नैतद् वक्तव्यम्।** अन्तर्वर्तिना सह तस्यैव तथात्वोपदेशात्। अयः खलु पदार्था-

अभ्युपगम्यन्ते प्रकृतिर्जीवात्मा परमात्मा च । **तत्र** परमात्मा तावद-न्याधारत्वात् स्वमहिम्नि विराज्यते, सविकारा प्रकृतिर्जीवात्मा च तदा-धारतया तत्रावतिष्ठेते । त्रयाणां चामीषां यावत्सविकारा प्रकृतिर्न विज्ञा-यते तावज्जीवात्मा न विज्ञातुं शक्यते । यावच्च जीवात्मा न विज्ञायते तावत् परमात्माऽपि न विज्ञातुं पार्य्यते । स हि तदन्तरात्मतया पिहित-स्वरूप इत्यभ्युदयनिःश्रेयसकामानां मुमुक्षूणामन्तर्वर्तिना तेन सार्धमन्वे-ष्टव्यो विजिज्ञासितव्यश्चोपदिश्यते । यदि ह्यसौ न तथोपदिश्येत तदन्त-र्वर्तिमात्रं चानुशिष्येत तदा **"यावान् वा अयमाकाशस्तावाने-षोऽन्तर्हृदय आकाशः"** ( छां० ८ । १ । ३ ) इति दहराकाशस्य बाह्याकाशेनोपमानोपमेयभावप्रदर्शनं नोपयुज्येत । नह्यन्यस्योपदेशे क्रिय-माणेऽन्यस्योपमानोपमेयभावप्रदर्शनमुपयुज्यते । **वाक्यशेषानुपपत्तिश्च** । **"अस्मिन्**=दहराकाशे **कामाः**=काम्यमानाः प्रकृतितद्विकाराः सर्वे द्यावापृथिव्यादयो लोकाः **समाहिताः**=प्रतिष्ठिताः, **एष आत्माऽ-पहतपाप्मा"** ( छां० ८ । १ । ५ ) इत्यादिना प्रकृतं द्यावापृथिव्या-दिसर्वलोकसमाधानाश्रयं दहराकाशं परामृश्याधीयते हि वाक्यशेषः **"अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामाँ-स्तेषां सर्वेषु लोकेषु कामचारो भवति"** ( छां० ८ । १ । ६ ) इति । न चोपक्रमे तदन्तर्वर्तिमात्रमन्वेष्टव्यमुपदिष्टमिति पक्षे वाक्य-शेषोऽयं कथञ्चिदुपपद्यते । नहि तत्र समुच्चयार्थकस्य चशब्दस्योपादाना-दन्तर्वर्तिना सह दहराकाशोऽन्वेष्टव्य उक्त इति स्फुटं नाधिगम्यते । तत्र तथाऽनुशासने चोपक्रमेऽपि तथोपदेशो मन्तव्यः । उपक्रमोपसंहारयोरेक-वाक्यतायाः सर्वसिद्धत्वात् । नह्युपक्रमेण वाक्यशेषस्य, तस्य च तेन, वि-रोधो युज्यते । तस्मादुपक्रमेऽपि हृदयपुण्डरीकवेश्माधारो दहराकाशोऽन्त-र्वर्तिना सहान्वेष्टव्य उपदिष्ट इति प्रतिपद्यते । **तथा** चास्योपक्रम-वाक्यस्यैषोऽर्थो निष्पन्नः "यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म तस्मिन् यो दहराकाशो यच्च तदन्तर्वर्ति चिदचिदात्मकं विश्वं जगत् तदु-भयमन्वेष्टव्यं तदुभयं वाव विजिज्ञासितव्यम्" इति । तत्रान्तर्वर्ति सवि-

कारा प्रकृतिर्जीवात्मा चेति द्वयम् । तदाधारो दहराकाशश्चोत्तरेभ्यो हेतुभ्यः परब्रह्म परमेश्वर इत्यध्यवसीयते ॥ १४ ॥

यदुक्तमुत्तरेभ्य इति । तदेव प्रपञ्चयिष्यन्नाह —

**"गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च" ॥ १५ ॥**

ब्रह्मेत्यधिक्रियते । दहर इत्यनुवर्तते । **गतिशब्दाभ्यां**=गतिर्गमनं प्राप्तिः, शब्दो ब्रह्मलोकशब्दः, ताभ्याम्—अहरहः सुषुप्तौ जीवात्मनामभिहितायामस्मिन् गतेः, प्रयुक्ताद् ब्रह्मलोकशब्दाच्च दहराकाशः परब्रह्म परमेश्वरोऽवगम्यते । **तथा हि**=यथा दहराकाशे तथैव परब्रह्मणि परमेश्वरे **दृष्टं**=श्रुत्यन्तरेऽभिहितं प्रयुक्तं चैतदुभयं दृष्टं **लिङ्गं च**=तस्य तत्त्वे भवति लिङ्गं चेत्यर्थः ।

अस्ति खलु वाक्यशेषः "**तद् यथाऽपि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः, एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति, अनृतेन हि प्रत्यूढाः**" ( छां० ८ । ३ । २ ) इति । तत्र "**एतम्**" इति प्रकृतं दहराकाशं परामृश्य यस्तावत् तद्गोचरः "**ब्रह्मलोकम्**" इति ब्रह्मलोकशब्दः प्रयुज्यते, या च "**अहरहर्गच्छन्त्यः**" इति प्रत्यहं तद्गोचरा सुषुप्तौ गतिः प्रजाशब्दानां जीवात्मनामभिधीयते तावेतौ दहराकाशस्य परमेश्वरत्वं स्फुटमवगमयतः, जीवात्मत्वं च वारयतः । नहि जीवात्मानः प्रजा अहरहर्जीवात्मानं गच्छन्तीति कथञ्चित् सङ्गच्छते । **श्रुत्यन्तरदर्शनाच्च** । श्रुत्यन्तरे खलु सुषुप्त्यवस्थायां जीवात्मनामहरहः परब्रह्मपरमेश्वरगोचरा गतिरभिधीयमाना दृश्यते "**स एनं यजमानमहरहर्ब्रह्म गमयति**" ( प्र० ४ । ४ ) इति । "**यत्रैतत् पुरुषः स्वपिति नाम सता सोम्य! तदा सम्पन्नो भवति**" ( छां० ६ । ८ । १ ) इति च । **तथा** तद्गोचरो ब्रह्मलोकशब्दोऽपि प्रयुज्यमानो निरीक्ष्यते "**ब्रह्मलोकमभिसम्पद्यते**" ( छां० ८ । १५ । १ ) "**एष ब्रह्मलोकः सम्राडिति हैनम-**

**नुशशास याज्ञवल्क्यः**" (बृ० ४ । ३ । ३२) इति । चेदिह दहराकाशः परब्रह्म परमेश्वरो न भवेत् तदा न जातु समानविषये श्रुत्यन्तरे तद्गोचरा गतिरभिधीयमाना दृश्येत, नापि ब्रह्मलोकशब्दस्तत्र प्रयुज्यमानो निरीक्ष्येत । नहि समानविषयाणां श्रुतीनां परस्परं विरोधो युज्यते । नाप्येकत्र दृष्टस्यान्यत्रानाश्रयणम् । तदेतदपि तस्य परमेश्वरत्वेऽस्ति सुदृढं लिङ्गम् । ब्रह्मलोकशब्दश्चेह निषादस्थपतिन्यायेन सामानाधिकरण्यवृत्त्या प्रवर्तते ब्रह्म च तल्लोकश्चेति, न षष्ठीतत्पुरुषवृत्त्या ब्रह्मणो लोक इति । गौरवपराहतत्वेन निर्बलत्वात् । परब्रह्म परमेश्वरस्तु हृदयपुण्डरीकस्थो लोक्यते योगिभिः समाध्यवस्थायां चैतन्यात्मना स्वेनेति भवत्येष ब्रह्मलोकः । निषादस्थपतिन्यायश्च पूर्वमीमांसायां षष्ठाध्याये वर्तते "**स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात्**" (मी० ६ । १ । ५१) इति । तं वयं तत्रैव यथावसरं व्याख्यास्याम इति सर्वमनवद्यम् ॥ १५ ॥

**गति**शब्दाभ्यां दहराकाशः परब्रह्म परमेश्वर इति साधितम् । अत्रैव हेत्वन्तरं समुच्चिनोति—

**"धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः" ॥ १६ ॥**

ब्रह्मेत्यधिक्रियते । दहर इत्यनुवर्तते । पूर्वत्रैवायं हेतुरिति चकारेणोच्यते । **धृतेः**=भावे क्तिन्-प्रत्ययः, जगतो धारणाद् दहराकाशः परब्रह्म परमेश्वरोऽध्यवसातव्यः, कुतः ? **अस्य**=जगद्धारणलक्षणस्यास्य **महिम्नः**= प्रभावस्या**स्मिन्**=जगज्जन्मादिहेतौ भगवति परब्रह्मण्येवास्मि**न्नुपलब्धेः**= श्रुत्यन्तरत उपलम्भादित्यर्थः ।

प्रक्रियते खलु दहराकाशः "**दहरोऽस्मिन्नन्तराकाशः**" (छां० ८ । १ । १) इति । तत्र बाह्याकाशोपमापूर्वकं द्यावापृथिव्यादिसर्वलोकसमाधानमुक्त्वाऽऽत्मशब्दं प्रयुज्यापहतपाप्मत्वादिधर्मसम्बन्धः प्रतिपादितः । तमेव पुनरनतिवृत्तप्रकरणमिहात्मशब्देन निर्दिश्य पठ्यते "**अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय**" (छां० ८ । ४ । १) इति । तत्र विधृतिरिति

कर्तरि क्तिच्—प्रत्ययः, विधारयितेति तदर्थः। तदिदं पठ्यमानं सर्वलोकात्मनो जगतो विधारणं दहराकाशस्य परमेश्वरत्वे भवति हेतुः। नहि जीवात्मा सर्वमिदं जगद् विधारयितुमर्हति। तस्याऽदृष्टद्वारा तत्कल्पनं त्वतिक्लिष्टं न बुद्धिसोपानमधिरोहति। न वा कचिच्छ्रुतिष्वन्यत्र पठ्यमानमीक्ष्यते। भगवतः परमेश्वरस्य चैष सर्वजगद्धारणलक्षणो महिमा वेदोपनिषत्सु सर्वत्र पठ्यमान उपलभ्यते **"यदध्यतिष्ठद् भुवनानि धारयन्"** (ऋ० ८। ३। १६। ४) **"स दाधार पृथिवीं द्यामुतेमाम्"** (ऋ० ८।७।३।१) **"स्कम्भो दाधार द्यावापृथिवी उभे इमे"** (अथ० १०। ४। ७।३५) **"एतस्य वा अक्षरस्य प्रशासने गार्गि! सूर्य्याचन्द्रमसौ विधृतौ तिष्ठतः"** (बृ० ३। ८। ९) **"एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय"** (बृ० ४। ४। २२) इति। न च दहराकाशस्य परमेश्वरत्वाभावे तन्महिमाऽयं तत्र पठितुं शक्यते। पठ्यते च। **तस्माद्गम्यते** नूनं परब्रह्म परमेश्वरो दहरः॥ १६॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"प्रसिद्धेश्च"** ॥ १७॥

ब्रह्मेत्यधिक्रियते। दहर इत्यनुवर्तते। हेत्वन्तरपरश्चकारः। **प्रसिद्धेः**=आकाशशब्दस्य परब्रह्मणि परमेश्वरे प्रसिद्धेरिह दहराकाशः परब्रह्म परमेश्वरो गम्यत इत्यर्थः।

अस्ति तावदाकाशशब्दस्य परब्रह्मणि परमेश्वरे प्रसिद्धिः **"को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्"** (तै० २। ७) **"आकाशो वै नाम नामरूपयोर्निर्वहिता"** (छां० ८। १४। १) इति। **तथा** तत्पर्य्यायप्रसिद्धिरपि **"ऋचो अक्षरे परमे व्योमन्"** (ऋ० २। ३। २१। ३९) **"सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रति-**

**ष्ठिता**" (तै० ३ । ६) इति । न च तदतिक्रमोऽसति बाधके युज्यते । जीवात्मनि च न तत्प्रसिद्धिमीक्षामहे । भूताकाशस्तूपमानोपमेयभावाद्यसम्भवात् सत्यामपि प्रसिद्धौ न परिगृह्यते । **तस्मा**दिह परब्रह्म परमेश्वरो दहराकाश इति निश्चयः ॥ १७ ॥

उपपादितः सिद्धान्तः । पूर्वः पक्षः सम्प्रत्याशङ्क्य व्युदस्यते—

**"इतरपरामर्शात् स इति चेन्नासम्भवात्"** ॥ १८ ॥

दहर इत्यनुवर्तते **इतरपरामर्शात्**=परामर्शोऽत्र सम्बन्धः, परब्रह्मणः परमेश्वरादितरस्य जीवात्मनो वाक्यशेषे सम्बन्धात् **सः**=इतरो दहराकाशः स्यादिति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः? **असम्भवात्**=पूर्वोक्तापहतपाप्मत्वादिदहरधर्माणामितरस्मिन् तस्मिन्नसम्भवादित्यर्थः ।

**अथोच्येत**—न खलु वाक्यशेषगतेभ्यो गत्यादिभ्यो हेतुभ्यो दहराकाशः परब्रह्म परमेश्वरः सेद्धुमर्हति । मध्ये जीवात्मनः परामर्शात् । अस्ति तावद् विधृतेः पूर्वमुत्तरत्राभिहितस्य जीवात्मन इह परामर्शः **"अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच"** (छां० ८ । ३ । ४) इति । यदि दहराकाशः परब्रह्म परमेश्वरोऽभविष्यत् तदा न जातूत्तरस्मात् प्रजापतिवाक्यादत्र वाक्यशेषे जीवात्मानं परामृक्ष्यत् । नहि तस्य परमेश्वरत्वे तत्परामर्शो युज्यते । **न** च सम्प्रसादशब्द इह परब्रह्म परमेश्वरं तावदुपस्थापयितुमर्हति । तत्र तत्प्रयोगानुपलब्धेः । नहि यस्य शब्दस्य यस्मिन्नर्थे कुत्रापि प्रयोगो नोपलभ्यते । स तमर्थं कर्हिचिदुपस्थापयितुं कल्पते । **नन्वेवमेष** जीवात्मानमपि नोपस्थापयिष्यति । तत्रापि तत्प्रयोगानुपलम्भादिति चेत् । **न** । तत्र तत्प्रयोगानुपलम्भेऽपि तदवस्थायामुपलम्भात् । सत्यं जीवात्मनि सम्प्रसादशब्दप्रयोगो नोपलभ्यते तथापि तदवस्थायां सुषुप्तावुपलभ्यते **"स वा एष एतस्मिन् सम्प्रसादे रत्वा**

**चरित्वा"** ( बृ० ४ । ३ । १५ ) इति । तत्रोपलभ्यमानश्च स्थानोपाधेर्मश्च इव मञ्चस्थं शक्नोति तद्वन्तं तमुपस्थापयितुं नास्ति कश्चिद् विरोधः । शरीरात् समुत्थानं च सम्प्रसादशब्दस्य जीवात्मपरत्वे सुदृढं लिङ्गम् । नहि जीवात्मनोऽन्यस्य शरीरात् समुत्थानं सम्भवति । न च तत्परामर्शोऽन्यप्रयोजन इति वचनं युक्तम् । तस्य वर्णयितुमशक्यत्वात् । मा नाम कश्चिद् दहराकाशशब्देन परब्रह्म परमेश्वरं ग्राहीत् जीवात्मानं च गृह्णीतेति तु प्रत्यक्षं तत्परामर्शप्रयोजनं को न नाम न पश्यति । तस्मादत्र जीवात्मैव दहराकाशो न परब्रह्म परमेश्वर इति । **नैतद्वक्तव्यम्** । तत्र तद्धर्मासम्भवात् । नहि दहराकाशस्यापहतपाप्मत्वादयो ये धर्मा अभिधीयन्ते ते जीवात्मनि कथञ्चित् सम्भवन्ति । यथा च तत्र तदसम्भवस्तथा स उपवर्णितोऽस्माभिरधस्तात् । न च तदसम्भवे तद्ग्रहणं युज्यते । परामर्शप्रयोजनं तु स्वयं भगवान् सूत्रकृदुपरिष्टादुपवर्णयिष्यति । **तस्मात्** परब्रह्म परमेश्वर एवात्र दहराकाशो न जीवात्मा ॥ १८ ॥

पुनराशङ्क्य समाधत्ते —

**"उत्तराच्चेदाविर्भूतस्वरूपस्तु"** ॥ १९ ॥

दहरः स इति न, इति पदचतुष्टयं पूर्वसूत्राभ्यामनुवर्तते । तुनाऽनाविर्भूतस्वरूपो व्यावर्त्यते । यत इति शेषः । **उत्तरात्**=उत्तरस्मात् प्रजापतिवचनादुक्तधर्मप्रतिपत्तेः स इतरो दहराकाशः स्यादिति **चेत्**= यद्युच्यते तदा न वाच्यम्, कुतः ? यत **आविर्भूतस्वरूपः**=आविर्भूतमभिनिष्पन्नं स्वरूपं यस्य स इतरस्तत्र तद्धर्मको निगद्यते नानाविर्भूतस्वरूप इत्यर्थः ।

**अथोच्येत**–न खलु दहरधर्मा अपहतपाप्मत्वादयो जीवात्मनि न सम्भवन्तीति युक्तमाख्यायते । प्रजापतिवचनतस्तेषां तत्र प्रतिपत्तेः । अस्ति तावदुत्तरत्र प्रजापतिवचनम् **"य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः"** ( छां० ८ ।

७ । १ ) इति । ततस्ते जीवात्मधर्मा इत्युल्वणं प्रतिपद्यते । न चैवं तत्प्रतिपत्तौ तत्र तदसम्भवो वक्तुं शक्यते । न च परमात्मपरमेतद् वचनं न जीवात्मपरमिति शङ्कितव्यम् । जाग्रत्स्वप्नसुषुप्त्यवस्थानां परस्परं व्यतिरेकं जीवात्मनश्च तत्रान्वयमुपदिश्यान्ते परमात्मोपसम्पत्तेरभिहितत्वात् एवं हि श्रूयते—पूर्वं खलु प्रजापतिस्तद्वचनमैतिह्यरूपेणाकर्ण्यात्मजिज्ञासया विरोचनेन साकमुपसन्नायेन्द्राय पर्य्यवसिते ब्रह्मचर्य्ये जाग्रदवस्थासम्बन्धेनात्मानमुपदिदेश **"य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मा"** ( छां० ८ । ७ । ४ ) इति । तं चेन्द्रोऽप्रक्षीणकल्मषावरणतया छायापुरुषं परिजग्राह । तत्र च शरीरधर्मानुपातित्वादात्मलक्षणमपश्यन् न सुखमनुबभूव । विरोचनं परित्यज्य च पुनरागत्य जिज्ञासाञ्चक्रे । तदा **"एतं त्वेव ते भूयोऽनुव्याख्यास्यामि"** ( छां० ८ । ९ । ३ ) इति तमेव पूर्वोपदिष्टमात्मानं परामृश्य स्वप्नावस्थासम्बन्धेन भूयश्चरितब्रह्मचर्य्याय तस्मै निर्दिदेश **"य एष स्वप्ने महीयमानश्चरत्येष आत्मा"** ( छां० ८ । १० । १ ) इति । य एष अपहतपाप्मत्वादिलक्षण आत्मा पूर्वमक्षिण्युपदिष्टः स एष यः स्वप्ने महीयमानो महाराष्ट्रादिजनपदाभिर्वनितादिभिरनेकधा स्वाप्नोपभोगान् भुञ्जानो विहरतीति तदर्थः सुव्यक्तः । यदा च स तत्रापि शोकभयादिविविधबाधानुभवान्न मात्रयाऽपि तुष्टाव, तदा **"एतं त्वेव ते भूयोऽनुव्याख्यास्यामि"** ( छां० ८ । १० । ४ ) इति तमेव पूर्वनिर्दिष्टमात्मानं परामृश्य सुषुप्त्यवस्थासम्बन्धेन भूयश्चरितब्रह्मचर्य्यं तमनुशशास **"तद् यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मा"** ( छां० ८ । ११ । १ ) इति । य एषोऽपहतपाप्मत्वादिलक्षण आत्मा पूर्वमक्षिणि स्वप्ने चोपदिष्टो निर्दिष्टः स एष यः सर्वथा विषयेन्द्रियसंयोगाभावेन सुषुप्त्यवस्थायां सम्प्रसन्न आस्त इत्यर्थः । यदा च स यथा जाग्रद्वा स्वप्नगतो वाऽयमहमस्मीतीमानि भूतानि चेति विजानाति नैवं सुषुप्तः किञ्चिद् वेदयते तदानीं खल्वयमचेतयमानोऽभावं प्राप्त इव भवति तदिह का निर्वृतिरिति तत्रापि न निर्ववार तदा

**"एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्मात्"** (छां० ८। ११। ३) इत्युपक्रम्य **"मघवन्! मर्त्यं वा इदं शरीरमात्तं मृत्युना। तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठातुरधिष्ठानम्। आत्तो वै सशरीरः प्रियाप्रियाभ्याम्। न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः"** (छां० ८। १२। १) इति शरीरसम्बन्धकृतमात्मनो ज्ञानमज्ञानं सुखं दुःखं च सर्वमनर्थजातं न स्वरूपत इति प्रदर्शयन् शरीरसम्बन्धविनिर्मुक्तं परिशुद्धं मुक्तलक्षणलक्ष्यमात्मस्वरूपं ब्रह्मचर्य्यसम्पदुन्मृदितनिखिलकल्मषाय तस्मै प्रोवाच **"एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः"** (छां० ८। १२। ३) इति। यावत् खल्वेष आत्मा शरीरमिदमनाद्यविद्यावासनावशादात्मत्वेनाभिमन्यते तावत् प्रकृतिस्थत्वात् पाप्मादिभिः संसृज्यते तज्जनितेन सुखदुःखादिना चात्मानं तद्वन्तमनुमन्यमानोऽहर्निशमनुतातप्यते। यदा चाचार्य्योपदेशेनात्मानं ततो विविच्य परब्रह्मणः परमेश्वरस्य साक्षाद्दर्शनमापद्यते तदा तन्माहात्म्येन शरीरात्माभिमाने नष्टे प्रकृत्यवस्थानाभावात्स्वेन रूपेणाभिनिष्पन्नः शुद्धः केवलो भूत्वा भगवति तस्मिन्नवतिष्ठते। सोऽयमस्य स्वरूपाविर्भावो, या किल स्वरूपाभिनिष्पत्तिरित्युच्यते। तत्र च पाप्मादिभिरनर्थहेतुभिः संसर्गाभावाद् भवत्यपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प इति प्रजापतिवचनाकूतम्। चेद् **"य आत्माऽपहतपाप्मा"** (छां० ८। ७। १) इत्येतत्प्रजापतिवचनं परमात्मपरं भवेत्, तदोत्तरत्रोपदिश्यमानोऽयं जाग्रदाद्यवस्थायोगो न सङ्गच्छेत नाप्युच्यमानं शरीरात्समुत्थानमुपपद्येत। नहि परमात्मनः शरीरयोगोऽभ्युपगम्यते, येनैतदुभयमपि तस्य परिकल्प्येत। **माण्डूक्योपनिषदि** च जीवात्मनस्तत्पादत्वानुपपत्तेः प्रणवस्य च तद्वाचकत्वाप्रसिद्धेरगत्या तस्यैव भगवतो जाग्रदाद्यवस्थासम्बन्धः पुरुष-

सूक्तवदौपचारिकमास्थीयते । प्राजापत्ये चास्मिन् वचसि शरीरात्समुत्थानं परज्योतिःपरमात्मोपसम्पत्तिश्च जीवात्मलिङ्गं प्रबलत्वात् तथाऽऽस्थानं निरुणद्धीति न तथाऽऽस्थातुमुत्सहते । जीवात्मनश्चास्ति तद्योगः प्रत्यक्षः, घटते च शरीरात्समुत्थानमिति तत्परमेवैतत् प्रजापतिवचनं न परमात्मपरमिति गम्यते । **"स सर्वाँश्च लोकानाप्नोति सर्वाँश्च कामान् यस्तमात्मानमनुविद्य विजानाति"** (छां० ८ । ७ । १) इति फलाभिधानं च तद्विज्ञाने परमात्मविज्ञानस्यावश्यम्भावान्मैत्रेयीब्राह्मणोक्तफलवदुपपद्यते न किञ्चिद् विरुध्यते । प्रतिपर्य्यायम् **"एतद्मृतमभयमेतद् ब्रह्म"** (छां० ८ । ७ । ४) इति वदता चापहतपाप्मत्वादयो धर्मास्तत्रान्वीयन्ते । **तस्मा**न्नास्ति तत्र तदसम्भव इति । **नैतद् वक्तव्यम् ।** आविर्भूतस्वरूपधर्मत्वेऽपि तेषां जीवात्मधर्मत्वासिद्धेः । यः खलु सर्वथा प्रकृतिसम्बन्धं हित्वा स्वेन रूपेणाभिनिष्पन्नः स्वरूपमात्रज्योतिरात्मना स्वेन परब्रह्म परमेश्वरं साक्षात्पश्यन्निव तत्स्वरूपानन्दमुपभुञ्जानो ब्रह्मभूतः शुद्धः केवलो मुक्तस्तत्रैव जगतः पितरि निरन्तरमवतिष्ठते स आविर्भूतस्वरूप इह व्यपदिश्यते । न च तस्य प्रजापतिवचनतः प्रतिपद्यमाना अपहतपाप्मत्वादयो धर्मा जीवात्मधर्माः कथञ्चित् सिध्यन्ति । नैमित्तिकत्वात् । स्वाभाविका हि धर्माः पदार्थमनुवर्तन्ते न नैमित्तिकाः । चेन्नैमित्तिका अपि पदार्थमनुवर्तेरन् तदा वह्निनिमित्ता दग्धृत्वादयोऽपि लोहधर्माः सम्पद्येरन् । न च ते तद्धर्माः सम्पद्यमाना दृश्यन्ते । व्यवहारमात्रं तु न कस्यचित् पदार्थधर्मतामावहति । सर्वोऽपि स्यादन्यथा सत्यकामः सत्यसङ्कल्पः । दहरवाक्ये चैते स्वाभाविका विवक्ष्यन्ते न नैमित्तिकाः । तादृक्षाश्च ते परमात्मन एव धर्माः सम्भवन्ति न जीवात्मनः । धर्ममात्रविवक्षायामपि च न जातु जीवात्मभेदोऽत्र कश्चिद् दहरः परिग्रहीतुं शक्यते । तस्य तद्धर्मत्वसम्भवेऽपि जगद्विधरणादिधर्मान्तरासम्भवात् । **तस्मा**दिह परब्रह्म परमात्मैव दहरः ॥ १९ ॥

**ननु** किमर्थं तर्हि दहरवाक्यशेषे जीवात्मा परामृश्यते? तत्राह—

**"अन्यार्थश्च परामर्शः"** ॥ २० ॥

चस्त्वर्थो जीवात्मनो दहरात्मत्वं व्यवच्छिनत्ति। **परामर्शः**=दहरवाक्यशेषे जीवात्मपरामर्शो**ऽन्यार्थः**=जीवात्मनोऽन्यः परमात्मा, तत्प्रतिपादनार्थं इत्यर्थः।

यद्धि परं ज्योतिरुपसम्पद्य जीवात्मा स्वेन रूपेणाभिनिष्पद्यते स एष परज्योतिरात्माऽत्र दहरः प्रतिपाद्यते नेतरः। तदिदं दहरवाक्यशेषे जीवात्मपरामर्शप्रयोजनं न जीवात्मा दहर इत्येतत्॥ २०॥

पुनराशङ्क्य समाधत्ते—

**"अल्पश्रुतेरिति चेत्तदुक्तम्"**॥ २१॥

दहरः स न, इति पदत्रयमनुवर्तते। यत इति शेषः। **अल्पश्रुतेः**=अल्पत्वश्रुतेर्जीवात्मा दहरः स्यादिति चेदुच्यते, तदा न वाच्यम्, कुतः? यत**स्तदुक्तम्**=अस्माभिस्तदुत्तरमुक्तमित्यर्थः।

**अथोच्येत**—न खलु **"दहरोऽस्मिन्नन्तराकाशः"** (छां० ८। १। १) इति श्रूयमाणं दहरत्वं परिच्छिन्नत्वमल्पत्वं परब्रह्मणः परमेश्वरस्य कथञ्चिदुपपद्यते। तस्य परममहत्त्वेन सर्वतो ज्यायस्त्वात्। जीवात्मा चाणुरिति तस्य सुखेन तदवकल्पते। **तस्मात्** स एवेह दहरः स्यान्न परब्रह्म परमेश्वर इति। **नैतद्युक्तव्यम्**। उक्तोत्तरत्वात्। हृदयपुण्डरीकोपाध्यपेक्षं हि भगवतस्तस्य दहरत्वं श्राव्यते न स्वरूपमात्रप्रयोज्यं निरपेक्षं जीवात्मवत्। सापेक्षं च तत् सर्वतो ज्यायसोऽपि तस्य घटते नास्ति कश्चिद् विरोधः। **तदेतच्चोक्तम्** **"अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न, निचाय्यत्वादेवं व्योमवच्च"** (वे० १। २। ७) इत्यत्राधस्तात्॥ २१॥

**यस्तु** तत्रोक्तेऽपि धार्ष्ट्यान्न परितुष्यति तं प्रत्याह—

**"अनुकृतेस्तस्य च"**॥ २२॥

अल्पश्रुतिरिति विपरिणम्यानुवर्तते। चस्त्वर्थः परब्रह्मणः स्वरूपतोऽल्पत्वं व्यावर्तयति। **तस्य**=परब्रह्मणः परमेश्वरस्या**नुकृतेः**=हृदयपुण्डरीकोपाध्यनुकरणादल्पश्रुतिरुपपद्यत इत्यर्थः।

**यथा** हि घटशरावोदञ्चनादिषु वर्तमानः खलु भूताकाशो घटशरावोदञ्चनादिकमनुकुरुते। तदनुकरणाच्चापरिच्छिन्नोऽपि परिच्छिन्न इव सम्पद्यमानो घटाकाशः शरावाकाश उदञ्चनाकाश इति व्यपदिश्यते **तथा** परब्रह्म परमेश्वरोऽपि हृदयपुण्डरीके वर्तमानो हृदयपुण्डरीकमनुकरुते। तदनुकरणाच्चापरिच्छिन्नोऽपि परिच्छिन्न इव सम्पद्यते। अथ च तथा व्यपदिश्यते। न चैतावता भवति तस्य किञ्चित्स्वरूपहानिः। असङ्गत्वात्। **अतो**ऽनल्पेऽपि तस्मिन्नल्पश्रुतिरुपपद्यते नास्ति कश्चिद् विरोधः ॥ २२ ॥

**तत्र** स्मृतिं प्रमाणयति—

**"अपि च स्मर्य्यते"** ॥ २३ ॥

**अपि च**=न केवलं श्रुतावेव परब्रह्म परमेश्वरोऽल्पः श्रूयतेऽपि च **स्मर्य्यते**=स्मृतावप्यधीयत इत्यर्थः।

**यथा** हि परब्रह्म परमेश्वरः खलु हृदयपुण्डरीकोपाध्यनुकरणाच्छ्रुतौ यत्र तत्राल्पः शोश्रूयते तथा स्मृतावपि सास्मर्य्यते **"प्रशासितारं सर्वेषामणीयाँसमणोरपि। रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम्"** (मनु० १२। १२२) इत्यादौ। न च श्रुतिस्मृत्युक्तेऽर्थे संशेरते सूक्ष्मधियो विद्वांसः। **तस्मा**दत्र परब्रह्म परमेश्वर एव दहर इति निश्चयः॥ २३ ॥

**पूर्व**तो विशेषं कञ्चिदभिधित्सुः समानविषयमधिकरणान्तरमारचयन्नाह—

**"शब्दादेव प्रमितः"** ॥ २४ ॥

**ब्रह्मे**त्यधिक्रियते। अवधारणेन लिङ्गं व्यवच्छिद्यते। **प्रमितः**=कठोपनिषदि श्रुतोऽङ्गुल्यन्तरापेक्षया प्रकृष्टेनाङ्गुष्ठेन **मितः** परिमितः पुरुषः परब्रह्म परमेश्वरोऽवगन्तव्यः, कुतः? **शब्दात्**=श्रुतेरित्यर्थः।

**कठो**पनिषदि श्रूयते **"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य न ततो विजुगुप्सते, एतद्वै तत्"** (कठ० ४। १२) इति। शरीरमात्मा, तस्मिन्।

**"अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य स एवाद्य स उ श्वः, एतद्वै तद्"** (कठ० ४। १३) इति च। तत्र संशयः किमिह श्रुतोऽङ्गुष्ठमात्रः पुरुषो जीवात्मा स्यादाहोस्वित् परब्रह्म परमेश्वर इति। कुतः संशयः? अङ्गुष्ठमात्रः, ईशानो भूतभव्यस्य, इति चोभयश्रवणात्। अङ्गुष्ठमात्रत्वं हि परब्रह्मणि परमेश्वरे भूतभव्येशानत्वं च जीवात्मनि नाञ्जसा घटते। तस्माद् युक्तः संशयः। **जी**वात्मेति पूर्वः पक्षः, परब्रह्म परमेश्वर इति सिद्धान्तः। **किं** तावत् प्राप्तम्? जीवात्मेति ब्रूमः। **परिमाणविशेषोपादानात्।** परिमाणविशेषवचनः खल्वङ्गुष्ठमात्रशब्द इहोपादीयते। परिमाणविशेषश्च जीवात्मनः सम्भवति परिच्छिन्नत्वान्न भगवतः परब्रह्मणः परमेश्वरस्य। स ह्यतिमात्रत्वादपरिच्छिन्नः। नहि यः सर्वथा परिमाणसीमानमुल्लङ्घ्य सर्वमभिव्याप्य वर्तते न यस्यायामो विद्यते न विस्तारस्तस्याङ्गुष्ठपरिमाणमुपपद्यते। सापेक्षमिति चेत्? तदा प्रथमोपस्थितस्य जीवात्मन एव तदभ्युपगन्तव्यं कृतं परब्रह्मणः परमेश्वरस्य तदभ्युपगमेन। **श्रुत्यन्तरोपलम्भाच्च।** श्रुत्यन्तरे तावदङ्गुष्ठमात्रशब्दो जीवात्मनि प्रयुज्यमानः प्रत्यक्षमुपलभ्यते **"अङ्गुष्ठमात्रो रवितुल्यरूपः"** (श्वे० ५। ८) इति। तत्सामान्यादिहापि स तत्रैव प्रयुक्त इति विज्ञायते। अन्यथा मिथो विरोधापत्तेः। ईशानश्रुतिश्च शरीरेन्द्रियभोग्यभोगोपकरणापेक्षया सङ्गंस्यते नास्ति काचिदनुपपत्तिः। **तस्मा**दत्र जीवात्मैवाङ्गुष्ठमात्रः पुरुषो न परब्रह्म परमेश्वर इति। **एवं** प्राप्तेऽभिधीयते— **शब्दादेव तत्प्रतिपत्तेः।** अस्ति तावदुदाहृतश्रुतौ पश्चादार्धे **"ईशानो भूतभव्यस्य"** इति शब्दः। तेन हि भूतं भव्यं भवच्च सर्वं यो निरङ्कुशमीष्टे सोऽङ्गुष्ठमात्रः पुरुष इति प्रतिपाद्यते। न च तत्प्रतिपाद्यमानमेतत् सर्वेशितृत्वं जीवात्मन्युपपद्यते। तस्य यत्किञ्चिदीशितृत्वेऽपि सर्वेशितृत्वाभावात्। नहि स केषाञ्चित् पदार्थानामीशिता भवन्नपि कालत्रयवर्त्तिनां सर्वेषां पदार्थानामीशिता विद्यते। दृष्टविरुद्धकल्पनं चान्याय्यम्। न च तत्सङ्कोचोऽपि सम्भवति। सङ्कोचकानुपलम्भात्। सङ्को-

चकाधीनो हि सङ्कोचः । न च तत्सङ्कोचकमिह कञ्चिदुपलभामहे । अङ्गुष्ठमात्रत्वं च न तत् सङ्कोचयितुमर्हति । तस्य जीवात्मन्यप्यमुख्यत्वात् । अणुमात्रः खलु जीवात्माऽभ्युपगम्यते नाङ्गुष्ठमात्रः । हृदयसम्बन्धात्तस्य तथात्वे चामुख्यं तत्राङ्गुष्ठमात्रत्वमित्यागतम् । न चामुख्येन तेन मुख्यस्य सङ्कोचो युज्यते । मुख्यं च निरङ्कुशसर्वेशितृत्वं परब्रह्मणि परमेश्वरे वरीवर्तीति वेदोपनिषच्छ्रुतिभ्योऽध्यवसीयते । सन्ति खलु बह्व्यस्तत्प्रतिपादिका वेदोपनिषच्छ्रुतयः **"यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः"** (ऋ० ८ । ७ । ३ । ३) **"यो भूतं च भव्यं च सर्वं यश्चाधितिष्ठति"** (अथ० १० । ८ । ४ । १) **"प्राणाय नमो यस्य सर्वमिदं वशे । यो भूतः सर्वस्येश्वरः"** (अथ० ११ । २ । ४ । १) **"एष सर्वेश्वरः"** (मां० ६) **"स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा"** (बृ० २ । ५ । १५) **"एष सर्वेश्वर एष भूताधिपतिः"** (बृ० ४ । ४ । २२) **"सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च"** (बृ० ५ । ६ । १) इत्याद्याः । न च तदध्यवसितेऽर्थे मात्रयाऽपि केनचित् संशयितुं पार्य्यते । तथा च वरं भगवति तस्मिन्नेवामुख्यस्याङ्गुष्ठमात्रत्वस्य परिकल्पनम् । **लाघवात् ।** जीवात्मनि तत्कल्पने हि द्वयममुख्यं कल्प्यमासज्यते सर्वेशितृत्वमङ्गुष्ठमात्रत्वं च । परब्रह्मणि परमेश्वरे त्वेकमङ्गुष्ठमात्रत्वमिति लाघवम् । लाघवपक्षपातिनश्च महाधियो विद्वांसः । अत एवाहुः शाब्दिकाः **"अर्द्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः"** इति । **प्रकृतानुसन्धानाच्च ।** "एतद्वै तद्" इति हि प्रकृतमनुसन्दधाति । प्रकृतं चेह परब्रह्म परमेश्वरः । पृष्टत्वात् । **"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद् वद"** (कठ० २ । १४) इति । तत्परित्यज्य जीवात्मकल्पनायां च प्रकृतं हीयेतामकृतं च

कल्प्येतेति महदनिष्टं प्रसज्येत । **तस्मा**दिह परब्रह्म परमेश्वर एवाङ्गुष्ठ-मात्रः पुरुष इति प्रतिपद्यते ।

एतेन **"अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरात् प्रवहेन्मुञ्जादिवेषीकां धैर्य्येण । तं विद्याच्छुक्रममृतम्"** (कठ० ६ । १७) इत्यादि श्रुतिवाक्यमपि व्याख्यातं वेदितव्यम् । **प्रवृहेत्**=उद्यच्छेत् पृथक्कुर्य्यात् । **धैर्य्येण**=अप्रमादेन । **शुक्रं**=शुद्धम् । **अमृतं**=ब्रह्म ॥ २४ ॥

**ननु** कस्यापेक्षया व्यापकः सन् परब्रह्म परमेश्वरोऽङ्गुष्ठमात्र उच्यते ? तत्राह—

**"हृद्यपेक्षया तु मनुष्याधिकारत्वात्"** ॥ २५ ॥

ब्रह्मेत्यधिक्रियते । प्रमित इत्यनुवर्तते । तुना निरपेक्षमङ्गुष्ठमात्रत्वं व्यावर्त्यते । **हृदि**=हृत्पद्मकोषे**ऽपेक्षया**=अवस्थानापेक्षया परब्रह्म परमेश्वरोऽङ्गुष्ठमात्र उच्यते । अन्यूनानधिकोक्तौ हेतुः—**मनुष्याधिकारत्वात्**=शास्त्रस्य मनुष्याधिकारत्वान्मनुष्याणां च प्रायेणाङ्गुष्ठमात्रहृदयत्वादङ्गुष्ठमात्र उच्यते न न्यूनो नाधिक इत्यर्थः ।

**मनुष्याधिकारं** हि शास्त्रम् । मनुष्याणां च प्रायेणाङ्गुष्ठमात्रं भवति हृदयमिति स्थितिः । कायानां नियतपरिमाणत्वेन तदन्तर्वर्तिहृदयस्यापि नियतपरिमाणत्वौचित्यात् । हृदये चास्ति भगवतः परब्रह्मणः परमेश्वरस्यावस्थानमित्यसकृदुपपादितम् । तदेवावस्थानमपेक्ष्य व्यापकः सन्नपि परब्रह्म परमेश्वरोऽङ्गुष्ठमात्र उच्यत इति द्रष्टव्यम् ॥ २५ ॥

**ननु** न व्यापकः सन् परब्रह्म परमेश्वरोऽत्र हृदयान्तरवस्थानादङ्गुष्ठमात्र उच्यते, व्यापकस्याङ्गुष्ठमात्रत्वासम्भवात्, **किन्तु** हृदयमात्रः सन् हृदयान्तरवस्थानात् । नहि स हृदयतो बहिरपि वर्तत इति पार्श्वस्थाशङ्कायां प्रत्याह—

**"तदुपर्य्यपि बादरायणः सम्भवात्"**

ब्रह्मेत्यधिक्रियते । तदा हृत् परामृशति । स्वरूपतो हृदयमात्रत्वस्या-

वैदिकत्वद्योतनार्थं बादरायण इति स्वनामग्रहणम्। **तदुपर्य्यपि**=तस्माद् हृदो हृदयादुपरि बहिरपि परब्रह्म परमेश्वरो वर्तते, **सम्भवात्**=व्यापकस्य सतस्तस्य हृदयान्तरवस्थानेनाङ्गुष्ठमात्रत्वसम्भवाद्, **बादरायणः**=इति बादरायणाचार्य्यो मन्यत इत्यर्थः।

मनुष्याणां हृदयं हि प्रायेणाङ्गुष्ठमात्रत्वात् परिच्छिद्यते। परब्रह्म परमेश्वरोऽपि चेद् हृदयमात्रोऽभ्युपगम्येत तदाऽवश्यं स परिच्छिद्येत। न च परिच्छिन्नस्य जगज्जन्मादिहेतुत्वमवकल्पते। जगज्जन्मादिहेतुश्च परब्रह्म परमेश्वर इति सर्वतन्त्रसिद्धान्तः। अतोऽकामेनाप्यपरिच्छिन्नो व्यापकः स आस्थातव्यः। **नानात्वप्रसङ्गाच्च**। नाना खलु हृदयानि। मनुष्यकायानां नानात्वात्। तन्मात्रत्वे च परमेश्वरा अपि नाना प्रसज्येरन्। न च ते नाना युज्यन्ते। विरुद्धाभिप्रायत्वे युगपत् कामिते वस्तुनि नवमिदमस्तु पुराणमिदमस्त्वित्येकस्य सिद्धावितरेषां प्राकाम्यविघातेनापरमेश्वरत्वापत्तेः। नहि सर्वैरेकं वस्तु युगपद् यथाकामं प्राप्तुं शक्यते। वस्तुनि विकल्पासम्भवात्। क्रिया हि सर्वत्र विकल्प्यते न वस्तु क्वचित्। अविरुद्धाभिप्रायत्वे च प्रत्येकं परमेश्वरत्वे पर्य्याप्तस्तावदेकः कृतमन्यैस्तेनैवैकेनेशनायाः कृतत्वात्। सम्भूयकारित्वे च परिषद्वन्न कश्चित् परमेश्वरः सिध्येत्। पर्य्यायश्च नित्येशनायोगिनां नोपपद्यते। गौरवं च विस्पष्टम्। लाघवादेक एवापरिच्छिन्नो व्यापकस्तावत्परमेश्वरोऽङ्गीकर्तव्यः। प्रतिषेधति च तन्नानात्वं श्रुतिरपि "**मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति**" (कठ० ४। १०) इत्याद्या। न च व्यापकस्य हृदयान्तरवस्थानादङ्गुष्ठमात्रत्वासम्भव इति शङ्कितव्यम्। आकाशवत्सम्भवात्। यथा खल्वाकाशो व्यापकोऽपि वंशपर्वान्तरेऽवस्थानादरत्निमात्रः सम्भवति तथा परमेश्वरोऽपि हृदयान्तरवस्थानादङ्गुष्ठमात्रः सम्भवति नास्ति काचिदनुपपत्तिः।

**केचित्तु** तच्छब्देन मनुष्यपरामर्शं विधाय **तदुपर्य्यपि**=मनुष्याणामुपरिष्टाद् वर्तमानानामिन्द्रप्रभृतिदेवतानामप्यस्ति ब्रह्मविद्यायामधिकारः, **सम्भवात्**=मनुष्यवदर्थित्वादिसम्भवात्, **बादरायणः**=इति

बादरायणाचार्य्यो मन्यत इति सूत्रमिदं व्याचक्षते। **तन्न** युक्तमीक्षामहे। एकदेशपरामर्शस्य जघन्यत्वात्। सति हि बाधके क्वचिदेकदेशः परामृश्यते नासति बाधके। न चेह बाधकं कश्चिदुपलभामहे। तदुपलम्भाभावे च को नु नामैकदेशपरामर्शमिमं जघन्यं नानुमन्येत। प्रकृतहानाप्रकृतकल्पनाप्रसङ्गाच्च। शास्त्राधिकारो ह्यत्र प्रक्रियते। शास्त्रस्य मनुष्याधिकारत्वादिति हेतूक्तेः। तं परित्यज्य ब्रह्मविद्याधिकारचिन्तने चावश्यं प्रकृतं हीयेत, अप्रकृतकल्पना च प्रसज्येत। सोऽयं महान् दोषः। निष्फलत्वाच्च। ब्रह्मविद्यायामधिकारचिन्तनेऽपि चेन्मनुष्याणां चिन्त्यते तदा किञ्चित् फलं दृश्यते यस्यास्त्यधिकारस्तेन तदर्थं यतितव्यं यस्य नास्ति तेन न प्रयतितव्यमिति। देवतानामधिकारचिन्तने तु न किञ्चित् फलमुपलभ्यते भवेयुस्तत्र देवता अधिकारिण्यो न वा भवेयुः किमस्माकम्। नह्येतद्बुद्ध्वा कश्चित् प्रवर्तितुं निवर्तितुं वाऽर्हति। फलं च प्रवृत्तिनिवृत्ती प्रसिद्धम्। तच्चेन्न भवति किं तच्चिन्तनेन काकदन्तचिन्तनकल्पेनेति विमृशन्तु विद्वांसोऽनुभवपरायणाः।

यस्य तु "**तत्**=ब्रह्मोपासनम्, **उपर्य्यपि**=देवादिष्वपि सम्भवति, कुतः? **सम्भवात्**=तेषामर्थित्वसामर्थ्ययोः सम्भवात्, **बादरायणः**=इति बादरायणाचार्य्यो मन्यत इत्येष सूत्रार्थः, तेन परपादरजोऽवलम्बनादृते किमपूर्वमन्यदाचरितमिति न विज्ञायते। निरीक्षन्तां,बत चिरेण तदपूर्वं सूक्ष्मधियो विवेकिनः सावकाशा इति निरवकाशा वयमुदास्महे निष्फलात्तन्निरीक्षणात्॥ २६॥

व्यापकः सन् परमेश्वरो हृदयान्तरवस्थानादङ्गुष्ठमात्र उच्यत इत्युक्तम्। तत्राशङ्क्य व्यासेधति—

**"कर्मणि विरोध इति चेन्नानेकप्रतिपत्तेर्दर्शनात्"**॥२७॥

**कर्मणि**=परमेश्वरस्य व्यापकत्वे जगद्रचनाकर्मणि **विरोधः**=तदनुपपत्तिलक्षणो विरोधः प्रसज्येतेति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः? **अनेकप्रतिपत्तेः**=तत्रानेकशाख्यवगतेः। कुतस्तदवगतिः? **दर्शनात्**=प्रत्यक्षान्मन्त्रवर्णादित्यर्थः।

**अथोच्येत**—न खलु व्यापके परब्रह्मणि परमेश्वरेऽभ्युपगम्यमाने जगद्रचनेयमुपपद्यते । तस्य निष्क्रियत्वेन क्रियाहेतुत्वानुपपत्त्या प्रकृतिपरिणामासम्भवात् । एष हि भावत्को राद्धान्तः—प्रकृतिपरिणामस्तावदखिलं जगत् । प्रकृतिश्च तदुत्पत्तितः प्राक् प्रलयवेलायां साम्यावस्थामापन्ना समास्ते । यत्रेदमुक्तं दर्शनान्तरे **"सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः"** ( सां० १ । ६१ ) इति । तदानीं च भवति तस्याः सरूपपरिणामः । सा न तावन्महदाद्याकारेण परिणम्य जगदिदं रचयितुं क्षमते यावत् साम्यावस्थातो न प्रच्यवते विषमावस्थां च न प्रपद्यते । न च साम्यावस्थातः प्रच्युतिर्विषमावस्थायाः प्राप्तिश्च तस्याः क्रियामन्तरेण सम्भवति । नहि क्रियातोऽन्यत् किञ्चिदेतद् विधातुमीष्टे । क्रिया हि साऽतुलप्रभावा, या किलैनां साम्यावस्थातः प्रच्याव्य विषमावस्थां नयति यत्रैषा सरूपपरिणामं हित्वा तत्प्रत्यनीकं विषमपरिणाममनुभवति । क्रियाहेतुश्च परब्रह्म परमेश्वरोऽभ्युपगम्यते । **निमित्तत्वात्** । यथा हि जगतः खलु प्रकृतिरुपादानं तथा परब्रह्म परमेश्वरस्तन्निमित्तमिष्यते । स च कुलाल इव मृत्स्नां तां यथाऽदृष्टं परिस्पन्दयति । परिस्पन्दमाना च सा कदाचिद् विषमावस्थातः साम्यावस्थामनुभवन्ती जगदिदं प्रतिसृजति । साम्यावस्थातो विषमावस्थां समाश्रयन्ती च जगदिदं विरचयति । न च तद्धेतुः स्वभावो वक्तुं शक्यते । **नियतक्रमभङ्गप्रसङ्गात्** । अस्ति तावत् सृष्टिप्रलययोरेष नियतः क्रमः सृष्ट्यनन्तरं प्रलयः, प्रलयानन्तरं सृष्टिरिति । स्वभावश्चेत्तद्धेतुराश्रीयेत तदाऽवश्यं तद्भङ्गः प्रसज्येत । नहि जड़स्य स्वभावश्चेतनवत् कार्य्यं किञ्चिन्निर्वर्तयितुमर्हति । मा नामैष भाङ्क्षीदिति स्वभावे तन्नियामकस्वभावान्तरास्थानं तु न युक्तमालोचामहे । अनवस्थानात् । न च परब्रह्म परमेश्वरोऽपि तद्धेतुरुपपद्यते । **निष्क्रियस्य क्रियोत्पादकत्वादर्शनात्** । क्रियावद्धि निष्क्रिये क्रियामुत्पादयद् दृश्यते यथाऽश्वो रथे, न निष्क्रियम् । नहि निष्क्रियेण रथेन कदाचिद् रथान्तरे क्रियोत्पाद्यते । निष्क्रियश्च परब्रह्म परमेश्वरः । **"अनेजदेकम्"**

(यजु० ४०।४) "**तदेजति तन्नैजति**" (यजु० ४०। ५) एजति=एजयति। "**निष्कलं निष्क्रियं शान्तम्**" (श्वे० ६। १९) इत्यादिश्रुतिभ्यः। न च तस्य क्रियाहेतुत्वानुपपत्त्या प्रकृतेः परिणामः सम्भवति। तत्सम्भवाभावे चानुपपन्नं जगत्कर्मेति किमु वक्तव्यम्। तस्मान्न व्यापकः सन् परब्रह्म परमेश्वरो हृदयान्तरवस्थानादङ्गुष्ठमात्रो युज्यत इति। **नैतद्वक्तव्यम्।** अनेकशक्तिसम्पन्नत्वेन जीवात्मवदुपपत्तेः। यदि हि परब्रह्म परमेश्वरः खलु व्यापकः सन् शक्तिरहितोऽभ्युपगम्येत तदाऽवश्यं प्रकृतिक्रियाहेतुर्नोपपद्येत। न च स तथाऽभ्युपगम्यते। किन्तु नानाशक्तिसम्पन्नः। ताश्च भगवतस्तस्य मन्त्रवर्णात् सुव्यक्तमवगम्यन्ते "**विष्णोर्नु कं वीर्य्याणि प्रवोचम्**" (ऋ० २।२।२४।१) "**इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश**" (ऋ० ४। ७।३३।१८) "**यस्यामितानि वीर्य्या**" (ऋ० ६।२।१९।२१) इति। न च तत्सम्पन्नस्य तस्य भवति नाम किञ्चिदनुपपन्नम्। **यथा** खलु ज्ञानक्रियाशक्तिसम्पन्नो जीवात्मा निष्क्रियोऽपि सन्निधिमात्राच्छरीरक्रियाहेतुः सम्पद्यते तथा परमेश्वरोऽपि ज्ञानक्रियाशक्तिसम्पन्नः सन्निधिमात्रात् प्रकृतिक्रियाहेतुरुपपद्यते। प्रकृतिश्चास्ति शरीरमिव भगवतस्तस्येत्यग्रिमे पादे स्वयमेवाभिधास्यते। जीवात्मनो निष्क्रियत्वं स्वरूपतः सक्रियत्वं च लिङ्गशरीरोपाधित इति द्वितीये व्युत्पादयिष्यते। सन्निधिमात्रेण प्रकृतिप्रेरकत्वं च परब्रह्मणः परमेश्वरस्य स्मर्य्यते दर्शनान्तरे "**तत्सन्निधानादधिष्ठातृत्वं मणिवत्**" (सां० १।९। ६) इति। यथा अयस्कान्तो मणिः स्वसन्निहितेऽयसि खलु क्रियामभिनिर्वर्तयते, अयश्चाभिनिर्वर्तितक्रियं शल्यनिष्कर्षणादिकं स्वीयं कार्य्यं निष्पादयते तथा परमेश्वरोऽपि स्वसन्निहितायां प्रकृतौ क्रियां तावदुत्पादयते प्रकृतिश्चोत्पन्नक्रिया महदादिरूपेण परिणम्य नानाविधं जगदिदं निर्मिमीते। अस्ति चायस्कान्तमणिवत् परमेश्वरेऽपि स्वसन्निहितक्रियाहेतुः काचन निरतिशया शक्तिः। एवैतत्र "**य इमं च लोकं परं च लोकं सर्वाणि च भूता-**

**न्यन्तरो यमयति**" (बृ० ३ । ७ । १) इत्याद्यन्तर्य्यामिब्राह्मणश्रुतिभ्यो विस्पष्टमधिगम्यते । नहि तादृक् शक्त्यभावे कदाचिदन्तर्य्यमणकार्य्यमुपपद्यते भगवतस्तस्य । तदुपपत्तौ च प्रकृतिपरिणामसम्भवान्न जगद्रचनाकर्मणि विरोधः कश्चित् प्रसज्यत इत्यपरोक्षम् । **तस्माद्** व्यापकः सन् परब्रह्म परमेश्वरो हृदयान्तरवस्थानाद् भवत्यङ्गुष्ठमात्र इति युज्यते ॥ २७ ॥

पुनराशङ्क्य प्रतिषेधति—

**"शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्" ॥ २८ ॥**

विरोध इत्यनुवर्तते । **शब्दो** वेदः **"धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात्"** (मी० १ । ३ । १) इत्यादिस्मृतेः । **शब्दे**=वेदे **विरोधः**=तदुत्पादानुपपत्तिलक्षणो विरोधः प्रसज्येतेति **चेत्**=यद्युच्यते तदा **न**=न वक्तव्यम्, कुतः? **अतः**=अस्माद् व्यापकादेव परमेश्वरात् **प्रभवात्**=प्रभव उत्पादः, तदुत्पादात्, कुतोऽवगम्यते? **प्रत्यक्षानुमानाभ्यां**=प्रत्यक्षं वैदिकी श्रुतिः, स्वार्थे प्रत्यनपेक्षत्वात्, अनुमानमृषिमुनिगणप्रोक्तः शब्दः, ताभ्यामित्यर्थः ।

**अथोच्येत**—मा नाम परब्रह्मणः परमेश्वरस्य व्यापकत्वे जगद्रचनाकर्मणि खलु तदुत्पादानुपपत्तिलक्षणो विरोधः प्रसाङ्क्षीद् वेदे तु प्रसज्जेत् । अस्ति तावत् सार्थकः शब्दराशिर्वेदः, स च सर्गादौ सर्वजनोपचिकीर्षया भगवतः परब्रह्मणः परमेश्वरात् प्रादुर्बोभूयत इति सिद्धान्तः । सोऽयमनुपपत्तिपराहतः । नहि भगवतस्तस्य व्यापकत्वे तदानीं तत्प्रादुर्भावः कथञ्चिदुपपद्यते । **लोके सर्वस्य सार्थकस्य शब्दराशेः कण्ठताल्वाद्यभिघातजन्यत्वदर्शनात्** । शब्दोच्चिचीर्षयामात्मप्रयत्नतो जातकर्मा खलु कोष्ठ्यो वायुर्यदा तदुच्चारणस्थानानि कण्ठतालुप्रभृतीनि वेगेनाभिहन्ति तदा सार्थकः शब्दराशिरुत्पद्यत इति लोके दृश्यते । न च तानि नाभिहन्यन्ते सार्थकः शब्दराशिश्चोपजायत

इति स्वप्नेऽपि क्वचिदुपलभामहे। लोकदृष्टोल्लङ्घनं च न न्याय इति वैदिकशब्दराशिनाऽपि तज्जन्येनावश्यभवितव्यमिति प्रतिपद्यते। **अविशेषात्**। यथा ह्येष लौकिकः खलु शब्दस्तथैव वैदिकः, न च तत्रास्ति कश्चिद् विशेषो येनैकस्तदभिघातेन जन्यते नापर इति कल्प्येत। कार्य्याविशेषे कारणाविशेषस्याप्यौचित्यात्। **न** च कण्ठतालुप्रभृतीनि स्थानानि परब्रह्मणः परमेश्वरस्य सम्भवन्ति। **शरीराभावात्**। यस्तावच्चेतनः सन् परिच्छिद्यते स एव यथाऽदृष्टं रमणीयमरमणीयं वा शरीरं लभते। जीवात्मा च तथा न परब्रह्म परमेश्वरः। स हि सर्वमभिव्याप्य परिच्छिनत्ति न स्वयं परिच्छिद्यते। **अदृष्टाभावाच्च**। अस्ति तावच्छरीरस्य निमित्तमदृष्टम्। तच्च जीवात्मनो विद्यते न परब्रह्मणः परमेश्वरस्य। यत्रेदं स्मर्य्यते "**क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः**" (यो० १। २४) इति। न चादृष्टाभावे शरीरं तदभावे च तस्य कण्ठताल्वादिस्थानयोगोऽवकल्पते। न च तदयोगे तदभिघातजन्यो वेद इत्येतत् सङ्गच्छते। प्रकारान्तरं च तदुत्पादे न किञ्चिदीक्षामहे। **तस्मात्** परब्रह्मणः परमेश्वरस्य व्यापकत्वेऽनुपपन्नो वेदोत्पाद इति। **नैतद्वक्तव्यम्**। व्यापकादेव तस्मात्तदुत्पादात्। यथा हि व्यापकः खलु परब्रह्म परमेश्वरः सर्वत्रान्तर्य्यामिरूपेण वर्तमानो जगद्रचनार्थं तत्कारणं प्रकृतिमन्तरो यमयति, प्रकृतिश्च तद्यमनान्महदाद्याकारेण परिणममाना विविधमिदं जगद् विरचयति, तथा मनुष्याणामभ्युदयनिःश्रेयससाधके कर्मणि प्रवृत्त्यर्थं तद्बाधके च तस्मिन् निवृत्त्यर्थं सर्गादिभुवामृषीणां हृत्पद्मेषु पूर्वकल्पानुपूर्वीसमानानुपूर्वीकान् सार्थान् सस्वराँश्च वैदिकमन्त्रान् परिस्फोरयति। परिस्फोरिताँश्च तानृषयः पूर्वेद्युरभ्यस्तानिवोत्तरेद्युर्यथावदुच्चारयन्ति। **न** च ते तद्रचयितार **एव किं** न भवेयुरिति शङ्कितव्यम्। **सर्वथाऽविद्यत्वेन रचनाऽसमर्थत्वात्**। अधीतविद्यो वा श्रुतविद्यो वा पुरुषः कश्चिच्छब्दरचनां कर्तुं पारयते नानधीतविद्यो नाप्यश्रुतविद्यः। ऋषयश्च तथा। ते हि पुण्यजन्मानः केवलमतप्यं तपस्तन्वानाः परब्रह्मणा परमेश्वरेण दयालुना हृदयारविन्देषु

परिस्फोरितानां मन्त्राणां यथावदुच्चारणे द्वारमात्रं भवन्ति न जातु व्यास इव भारतं तान् विरचयन्ति। विरचयिता च तत्र परब्रह्म परमेश्वर एवेष्यते नान्यः कश्चित् । तदेतच्च प्रत्यक्षानुमाने तावद् विस्पष्टमवगमयतः **"यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन्नृषिषु प्रविष्टाम्"** ( ऋ० ८ । २ । २३ । ३ ) **"तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत"** ( ऋ० ८ । ४ । १८ । ९ ) **"प्रजापतिरिदं शास्त्रं तपसैवासृजत् प्रभुः । तथैव वेदानृषयस्तपसा प्रतिपेदिरे"** ( मनु० ११ । २४३ ) इति । न च प्रत्यक्षानुमानाभ्यामवगतोऽर्थः केनचिन्निह्नोतुं शक्यते । **तस्मात्** परब्रह्मणः परमेश्वरस्य व्यापकत्वेऽपि भगवति वेदे कालत्रयेऽपि न प्रसज्जति तदुत्पादानुपपत्तिलक्षणो विरोध इति निर्धारयितव्यम् ॥ २८ ॥

**वेदे** विरोधः पर्य्यहारि । सम्प्रति तत्रात्मसम्मतं नित्यत्वमुच्यते—

**"अत एव च नित्यत्वम्"** ॥ २९ ॥

शब्द इत्यनुवर्तते । परिहृतविरोधस्यैवैतन्नित्यत्वाख्यानमिति चार्थः । **अतएव**=परब्रह्मणः परमेश्वरात् प्रभवादेव **नित्यत्वं**=वेदे नित्यत्वमित्यर्थः ।

स्वामी खलु परब्रह्म परमेश्वरः । स च नित्यः । तस्य नित्यत्वे च स्वेनापि नित्येन भवितव्यम् । अन्यथा कस्यायं स्वामी स्यात् । नहि स्वाभावे कश्चित् स्वामी सम्पद्यते । स्वं च जीवात्मानः प्रकृतिश्चेत्युभयम् । तत्र भोक्तारो जीवात्मानः, भोग्या च सपरिवारा प्रकृतिः । उभयस्य तस्य नित्यत्वे च भोक्तृणां जीवात्मनां हिताहितोपायेषु प्रवृत्तिनिवृत्त्यर्थं किञ्चिदनुशासनमपि नित्यमपेक्ष्यते । अन्यथा कथमिमे हितोपायेषु प्रवर्तेरन्, अहितोपायेभ्यश्च निवर्तेरन् । नहि ते यावत् पुरस्तान्नानुशिष्यन्ते कर्तव्यमेतदकर्तव्यं चैतदिति, तावद् यथाकर्तव्यमुच्चावचयोनिप्राप्त्या क्रीडयितुं वा पीडयितुं वा हर्षयितुं वा धर्षयितुं वा शक्यन्ते । अन्याव-

प्रसङ्गात् । न चान्यायः परमेश्वरं पश्यति मानुषे स्वामिन्यपि कदाचित् सम्भाव्यते, परमेश्वरे स्वामिनि साक्षादिति तु किमु वक्तव्यम् । अनुशासनं च भगवतस्तस्य वेदः । **तस्मा**दस्ति सोऽपि नित्यः । **नित्यत्वं** च जगदिव प्रवाहतो न तु स्वरूपतो जीवात्मादिवदित्यनन्तरं विस्पष्टयिष्यते ॥ २९ ॥

**ननु** वेदस्य नित्यत्वमिति विरुद्धमुच्यते, तस्योत्पत्तिमत्त्वेन विनाशावश्यम्भावात् । विनष्टस्य प्रतिसर्गमावृत्तौ च पूर्ववदुत्पत्त्यसम्भवात् । नहि विनष्टोत्पन्नं वस्तु कदाचित् समाननामरूपमुत्पद्यते? तत्राह—

**"समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च"** ॥ ३० ॥

शब्दस्य, नित्यत्वे, इति पदद्वयं षष्ठ्या सप्तम्या च विपरिणम्यानुवर्तते । तदुपपादकं हेत्वन्तरमेतदिति चार्थः । **आवृत्तावपि**=शब्दस्य वेदस्य प्रतिसर्गमुत्पत्तावप्य**विरोधः**=नित्यत्वे विरोधो नास्ति, कुतः? **समाननामरूपत्वात्**="ऋग्, यजुः" इत्यादिकं नाम, "**अग्निमीळे पुरोहितम्**" इत्याद्यानुपूर्वीविशेषो रूपम्, ते नामरूपे प्रतिसर्गं समाने यस्य, तस्य भावस्तत्त्वं, **तस्मात्**—प्रतिसर्गसमाननामरूपत्वात् । ईदृक् तस्य नित्यत्वं कुतोऽवगम्यते यत्रोत्पत्तावपि विरोधो न प्रसज्यते? **दर्शनात्**=मन्त्रवर्णात्, **स्मृतेश्च**=ऋषीणां स्मरणाच्चेत्यर्थः ।

**यन्नामा** यदानुपूर्वीकः खलु भगवान् वेदोऽस्मिन् सर्गे परब्रह्मणा परमेश्वरेणर्षिभिः प्रादुरभावि सर्गान्तरेष्वपि तन्नामा तदानुपूर्वीक एव प्रादुर्भाव्यते । न तत्र नाम भिद्यते, नाप्यानुपूर्वी, केवलमृषिव्यक्तयो भिद्यन्ते । **न** चेदृशस्तस्य प्रादुर्भावः सर्वज्ञसर्वशक्तौ भगवति तस्मिन् कस्मैचिदायासाय कल्पते, येन पर्य्यनुयुज्येत । स हि सर्वज्ञः सर्वशक्तिः । अचलं च तदनुशासनम् । न च प्रलयव्यवधानमात्रेण नाम्ना वाऽऽनुपूर्व्या वा विच्छेदमापद्यते । विच्छेदे तस्याचलत्वभङ्गापत्त्या परमेश्वरानुशासनत्वं हीयेत । तदनुशासितुः परमेश्वरस्य च भूतभविष्यद्वर्तमानसर्वार्थज्ञातृत्वं पीड्येत । नहि यस्य ज्ञानमात्मनि नावतिष्ठते

प्रतिसर्गे च विपरिवर्तते तस्य कालत्रयवर्तिनिखिलार्थज्ञातृत्वं कथञ्चिदुपपद्यते, ज्ञानं च यथार्थं घटते। अस्ति च परमेश्वरः सर्वदा सर्वथा सर्वार्थज्ञाता। यत्रेदमाम्नायते **"अतो विश्वान्यद्भुता चिकित्वाँ अभिपश्यति। कृतानि या च कर्त्वा"** (ऋ० १। २। १८। ११) **"यः सर्वज्ञः सर्ववित्"** (मुं० १। १। ९) **"स विश्वकृद् विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद् यः"** (श्वे० ६। १६) इति। यदा खलु सूर्य्यादयो विज्ञेयाः पदार्था अपि भगवतस्तस्माद् यथापूर्वमुत्पद्यन्ते, यत्रेदमाम्नातम् **"सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो स्वः"** (ऋ० ८। ८। ४८। ३) इति, तदा तद्विज्ञानलक्षणो वेदो भगवतस्तस्माद् नाम्ना रूपेण च यथापूर्वं प्रादुर्बोभूयत इति किमु वक्तव्यम्। **सोऽयं** प्रतिसर्गे नामरूपप्रवाहाविच्छेदस्तावद् भगवतो वेदस्य नित्यभावः। न च स प्रतिसर्गमुत्पत्तावपि विरुध्यते। नहि प्रतिसर्गं प्रादुर्भवतो यस्यार्थस्य नाम च रूपं च न जातु मात्रयाऽपि विशिष्यते स नित्यो नाख्यातुं शक्यते। नानाविधं हि पदार्थेषु नित्यत्वं क्वचिदुत्पत्तिविनाशशून्यत्वं क्वचिच्चिरस्थायित्वं क्वचिच्च नामरूपप्रवाहविच्छेदरहितत्वम्। किमिह चित्रमिव लोकसे। **पदार्थस्वभावनानात्वेन तन्नित्यत्वनानात्वस्याप्यौचित्यात्।** पदार्थाः खलु निसर्गतो नानाविधा विद्यन्ते। तेषां नानाविधत्वे च तन्नित्यत्वेनापि नानाविधेन भवितव्यम्। अन्यथा कथमिमे सर्वासु कक्षासु नानाविधा आख्यायेरन्। तत्राद्यं प्रकृतिपुरुषेश्वराणां, द्वितीयं वाय्वाकाशप्रभृतीनां, तृतीयं च भगवतो वेदस्येति विज्ञातव्यम्। तदिदं वेदनित्यत्वं च मन्त्रस्मरणे व्यक्तमवगमयतः। अस्ति तावन्मन्त्रः **"तस्मै नूनमभिद्यवे वाचा विरूप! नित्यया। वृष्णे चोदस्व सुष्टुतिम्"** (ऋ० ६। ५। २५। ६) इति। **विरूप**=हे विशिष्टस्वरूप विद्वन्! त्वं **नूनं**=निश्चयेना**भिद्यवे**=सर्वतो व्यापकाय **वृष्णे**=कर्मफलवर्षकाय **तस्मै**=प्रसिद्धाय प्रकाश-

स्वरूपाय परमेश्वराय **नित्यया**=नामरूपप्रवाहविच्छेदरहितयाऽनादिनिधनया **वाचा**=वेदवाण्या **सुष्टुतिं**=प्रियां स्तुतिं **चोदस्व**=विधत्स्वेत्यर्थः । "**अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् । दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम्**" ( मनु० १ । २३ ) इति । ब्रह्म=वेदः । सनातनं=नित्यम् । महाभारतं च "**अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः**" ( महाभा० १२ । २३३ । २४ ) इति । **तस्माद्** वेदस्य प्रतिसर्गमुत्पत्तावपि नास्ति नित्यत्वे कश्चिद् विरोधः ॥ ३० ॥

**शास्त्रस्य** मनुष्याधिकारत्वादित्युक्तम् । तत्र मनुष्यशब्दो मनुष्यमात्रपरः प्रयुज्यते न त्रैवर्णिकपर इति विज्ञापयितुं पूर्वं तावदधिकारचिन्तनदक्षस्य शास्त्रे शूद्राधिकारं व्यासेधतः स्वशिष्यस्य जैमिनेः पूर्वः पक्ष उपन्यस्यते—

**"मध्वादिष्वसम्भवादनधिकारं जैमिनिः" ॥ ३१ ॥**

**मध्वादिषु**=मधुच्छन्दःप्रभृतिषु वेदप्रकाशकर्षिष्व**सम्भवात्**=कस्यापि शूद्रयोनौ सम्भवाभावाद**नधिकारं**=शास्त्रे शूद्राधिकाराभावं **जैमिनिः**=जैमिनिराचार्य्यो मन्यत इत्यर्थः ।

**यावन्तः** खलु मनुष्याः क्षोणीतलमधिशेरते ते सर्वे पूर्वं द्वेधा विभज्यन्त आर्य्या दस्यवश्चेति । यत्रेदमाम्नातम् "**विजानीह्यार्य्यान् ये च दस्यवः**" ( ऋ० १ । ४ । १० । ८ ) इति । "**त्वं दस्यूँरोकसो अग्न आज उरु ज्योतिर्जनयन्नार्य्याय**" ( ऋ० ५ । २ । ८ । ६ ) इति च । **ये** शब्दप्रमाणं दस्यन्ति=शब्दः प्रमाणं येषां न विद्यते, ते **दस्यवः**, तद्विपरीता**आर्य्याः** । ते च प्रधानतश्चतुर्भिर्वर्णैर्विभज्यन्ते ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति । यत्रेदमाम्नायते—
"**ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत**" ( ऋ० ८ । ४ । १९ । १२ ) इति । **पद्भ्यां**=पादौ । प्रथमार्थे पञ्चमी । तत्राद्यास्त्रयो वै-

वर्णिका इत्याख्यायन्ते, चतुर्थः शूद्रस्त्वेकवर्ण इति । तेषां कस्य शास्त्रेऽधिकारो विद्यते कस्य न विद्यत इति शास्त्रसाहाय्येनैव प्रतिपत्तुं शक्यते नान्यथा । नहि शास्त्राधिकारचिन्तायां तदनपेक्षितप्रमाणान्तरावलम्बनं कथञ्चिद् युज्यते । शास्त्रदर्शनाच्च—त्रैवर्णिकानामेव तत्राधिकारो गम्यते न शूद्रस्य । स्मर्य्यन्ते खलु मधुच्छन्दःप्रभृतयस्तत्प्रकाशकाः केचिदृषयः । न च तेषां ब्राह्मणक्षत्रियवैश्ययोनिसम्भववच्छूद्रयोनिसम्भवोऽपि कश्चिदधिगम्यते । शास्त्रं चेच्छूद्रमप्यधिकुर्य्यादवश्यं तत्प्रकाशकेषु तेषु शूद्रयोनिसम्भवोऽपि कश्चिदधिगम्येत । नहि तदधिगमाभावे तत्र तदधिकारः कल्पयितुं शक्यते । स्पष्टं ह्येतद्—अस्ति चेच्छास्त्रे शूद्रस्याप्यधिकारः कुतो न त्रैवर्णिकवत् स तत्प्रकाशक उपलभ्यते । यथा खलु मानुषाधिकारस्य सूचको मानुषैर्ऋषिभिः सर्गादौ शास्त्रप्रादुर्भाव इष्यते तथा शूद्राधिकारस्य सूचकः शूद्रेणापि तत्प्रकाशस्त्रैवर्णिकवद्दृष्टव्य इति युक्तं विज्ञायते । यस्य यस्य तत्राधिकारोऽस्ति तेन तेन तत्प्रकाशस्यौचित्यात् । वयं तु प्रायेण ब्राह्मणक्षत्रियवैश्ययोनिसम्भवानेव मधुच्छन्दःप्रभृतीनृषीन् तत्प्रकाशकान् पश्यामो न शूद्रयोनिसम्भवान् काँश्चिदृषीन् । किमत्र कारणम्? इदमेव कारणं ब्राह्मणादयस्त्रयो वर्णास्तत्राधिक्रियन्ते न शूद्रश्चतुर्थो वर्ण इति । तस्माच्छास्त्रे त्रैवर्णिकानामेवाधिकारोऽस्ति न चतुर्थवर्णस्य शूद्रस्येति जैमिनिराचार्य्यो मन्यते ॥ ३१ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"ज्योतिषि भावाच्च" ॥ ३२ ॥**

अनधिकारं जैमिनिरित्यनुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । **ज्योतिषि**=ज्योतिष्पदयुक्ते मन्त्रे **भावात्**=त्रयाणां ब्राह्मणक्षत्रियवैश्यानामाम्नानस्य सत्त्वाच्चतुर्थस्य शूद्रस्य शास्त्रेऽनधिकारं जैमिनिराचार्य्यो मन्यत इत्यर्थः ।

यथा हि **"पवमानः सो अद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु नः"** (ऋ० ७ । २ । १७ । २२) इति

पवमानपदयुक्तः खलु मन्त्रः "**पवमानः**" इति व्यपदिश्यते, यथा वा लोके "**महिम्नः पारं ते**" इति महिम्नपदयुक्तं स्तोत्रं "महिम्नः" इति संशब्द्यते, तथाऽत्रापि ज्योतिष्पदयुक्तो मन्त्रो लाघवाज्ज्योतिरित्युपनिबध्यते, यथा "**अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात् तत्क्रतुश्च**" (वे० ४ । ३ । १५) इत्यत्र तत्क्रतुपदयुक्ता श्रुतिः "**तत्क्रतुः**" इति । विद्यते च स एष मन्त्रः "**यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया संरराणस्त्रीणि ज्योतींँषि सचते स षोड़शी**" (यजु० ८ । ३६) इति । **यस्मात्**=प्रजापतेः परमात्मनः सकाशात् **परः**=उत्तमोऽ**न्यः**=द्वितीयो **जातः**=प्रसिद्धो **नास्ति**=न विद्यते, यः प्रजापति**र्विश्वा**=विश्वानि **भुवनानि**= भूतजातान्या**विवेश**=व्याप्याधितिष्ठति, स **षोड़शी**=महदादिक्रमेण सर्वलोकरचयिता प्रभुः **प्रजया**=चतुर्थ्यर्थे तृतीया, स्वीयायै प्रजायै **संरराणः**=कर्मफलं प्रददान**स्त्रीणि**=ब्राह्मणः क्षत्रियो वैश्य इति त्रीणि, विधेयापेक्षया नपुंसकम्, **ज्योतींषि**=वेदलक्षणा वाग् ज्योतिः "**वाचैवायं ज्योतिषाऽऽस्ते**" (बृ० ४ । ३ । ५) इति वाचो ज्योतिष्ट्वश्रुतेः, तदाश्रयत्वाज्ज्योतींषि **सचते**=समवैति कुरुते विधत्ते निर्मिमीत इत्यर्थः । यथा खलु तेजोमयेन ज्योतिषा सततं प्रकाशनात् सूर्य्यादयो ज्योतींँषि व्याख्यायन्ते तथा शास्त्रमयेन ज्योतिषा प्रकाशनाद् ब्राह्मणादयस्त्रैवर्णिका अपि ज्योतींँषि व्यवह्रियन्ते । समानं ह्युभयत्र ज्योतिष्ट्वं तेजोभेदः । अत्र त्रीणीति वचनात् त्रैवर्णिकानामेव शास्त्रेऽधिकारो न शूद्रस्येति स्फुटमवगम्यते । नहि शूद्रस्याप्यधिकारे "त्रीणि ज्योतींँषि" इति वचनं कथञ्चित् सङ्गच्छते । शूद्रोऽपि चेच्छास्त्रेऽधिक्रियेत तदाऽवश्यं चत्वारि ज्योतींँषीत्युच्येत न त्रीणि । शूद्रो हि चतुर्थः । सोऽपि शास्त्रेऽधिक्रियमाणो ब्राह्मणादिवज्ज्योतिष्मान् भवितुमर्हति । न च तथोच्यते । **मन्त्रान्तराच्च** । अस्ति तावदाथर्वणो मन्त्रः "**स्तुता मया वरदा वेदमाता प्रचोदयन्तां पावमानी**

**द्विजानाम्। आयुः प्राणं प्रजां पशुं द्रविणं ब्रह्मवर्चसं मह्यं दत्त्वा व्रजत ब्रह्मलोकम्**" (अथ० १९। ७। ७१। १) इति। तत्र द्विजानामित्युपादानात् त्रैवर्णिका एव शास्त्रेऽधिक्रियन्ते न शूद्र इति गम्यते। त्रैवर्णिका हि द्विजा भवन्ति न शूद्रः। **तस्मात्** त्रवैर्णिकानामेव शास्त्रेऽधिकारो न शूद्रस्येति जैमिनिराचार्य्यो मन्यते ॥ ३२ ॥

**जातः** पूर्वः पक्षः। सम्प्रति सिद्धान्त उच्यते—

**"भावं तु बादरायणोऽस्ति हि"** ॥ ३३ ॥

मध्वादिष्वित्यनुवर्तते। तुशब्देन पूर्वः पक्षो व्यावर्त्यते। **भावं**=शास्त्रे शूद्राधिकारसद्भावं **बादरायणः**=बादरायणाचार्य्यो मन्यते, कुतः? **हि**=यतो**ऽस्ति**=वेदप्रकाशकर्षिषु मधुच्छन्दःप्रभृतिषु शूद्रयोनिसम्भवोऽपि विद्यत इत्यर्थः।

**न** खलु वेदप्रकाशकर्षिषु मधुच्छन्दःप्रभृतिषु कस्यापि शूद्रयोनौ सम्भवाभावाच्छास्त्रे शूद्राधिकाराभावो वक्तुं शक्यते। तत्र तद्योनिसम्भवस्यापि सद्भावात्। अस्ति तावदिलूषपुत्रः **कवष** ऐलूषो नाम कश्चिद् ऋषिर्यः शूद्रयोनिसम्भवोऽपि मधुच्छन्दःप्रभृतिवद् **"अपोनप्त्रीयं"** नाम दाशतय्यां दशमे मण्डले त्रिंशं सूक्तं प्राकाशिष्ट। यत्रेदं श्रूयते **"ऋषयो वै सरस्वत्यां सत्रमासत। ते कवषमैलूषं सोमादनयन्, दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्ये दीक्षिष्टेति। तं बहिर्धन्वोदवहन्, अत्रैनं पिपासा हन्तु, सरस्वत्या उदकं मा पादिति। स बहिर्धन्वोदूढः पिपासया वित्त एतदपोनप्त्रीयमपश्यत्**" (ऐ० ब्रा० २। ३। १) इति। न च श्रूयमाणमिदं ब्राह्मणवचोऽसति बाधके कर्हिचिदपवदितुं शक्यते। नहि ब्राह्मणवचसां मन्त्रेभ्योऽन्यः कश्चन बाधको विद्यते। प्रबलानि हि तद्वचनानि वचनान्तरेभ्यः। तद्व्याख्यानत्वेन सन्निहितत्वात्। मन्त्राश्च ततोऽपि प्रबलाः। परमेश्वरवचस्त्वेन स्वतःप्रमाणत्वात्। न च मन्त्रेषु कश्चनापि वर्णं प्रति कस्मिन्नपि विषये पक्ष-

पातः समाम्नातो दृश्यते। ते हि मनुष्यमात्रोपकारायावतीर्णा यद्यदामनन्ति तत्सर्वमविशिष्टमेवामनन्ति न विशिष्टम्। पश्यतु भवान् तदाम्नानपद्धतिम्। इह तत्प्रदर्शकाः द्वित्रा मन्त्रा उदाह्रियन्ते "**रुचं नो धेहि ब्राह्मणेषु रुचं राजसु नस्कृधि। रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम्**" (यजु० १८। ४८) "**प्रियं मा दर्भ कृणु ब्रह्मराजन्याभ्यां शूद्राय चार्य्याय च। यस्मै च कामयामहे सर्वस्मै च विपश्यते**" (अथ० १९। ४। ३२। ८) "**प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु। प्रियं सर्वस्य पश्यत उत शूद्र उतार्य्ये**" (अथ० १९। ७। ६२। १) इति। न चात्रास्ति मात्रयाऽपि वैशिष्ट्यगन्धः। यथा चेह तथा शास्त्राधिकारविषयेऽप्यवैशिष्ट्यं वेदितव्यम्। एष हि तत्प्रतिपादको मन्त्रः "**यथेमां वाचं कल्याणीमावदानि जनेभ्यः। ब्रह्मराजन्याभ्यां शूद्राय चार्य्याय च, स्वाय चारणाय च। प्रियो देवानां, दक्षिणायै दातुरिह भूयासम्। अयं मे कामः समृध्यताम्, उप माऽदो नमतु**" (यजु० २६। २) इति। अत्र वेदविदो ब्रह्मदण्डिन उपदिश्यन्ते-**यथा**=येन प्रकारेणाहमि**मां**=प्रत्यक्षभूतां **कल्याणीं**=कल्याणसाधिकां **वाचं**=वेदवाचं **जनेभ्यः**=सर्वमनुष्येभ्य **आवदानि**=समन्तादुपदिशानि, तथा यूयमप्युपदिशत। जनेभ्य इत्युक्तं विभजते-**ब्रह्मराजन्याभ्यां**=ब्राह्मणक्षत्रियाभ्याम्, **अर्य्याय**=वैश्याय, **शूद्राय**=चतुर्थवर्णाय। विशेषतो विभज्य सामान्यतो विभजते-**स्वाय**=स्वीयायार्य्याय, परब्रह्म-परमेश्वरोऽर्य्यः, तस्यायमिति तद्व्युत्पत्तेः। निराहुश्चैवमेव नैरुक्ताः "**आर्य्यः ईश्वरपुत्रः**" (नि० ६। ५। ४) इति। **च**=तथा**ऽरणाय**=दस्यवे, न **रणः** शब्दः प्रमाणं विद्यते यस्येति तद्व्युत्पत्तेः। "**अरणोऽपार्णो भवति**" (नि० ३। १। २) इति निरुक्तवचनात् "अपगतः पानीयसम्बन्धो यस्यावैदिकत्वात्" इति वा तद्व्युत्पत्तेः। किञ्च **प्रियः**=यथाऽहं प्रियो **देवानां**=विद्यावतां, **दक्षि**-

**णायै**=दक्षिणायाश्च **दातुः**=प्रदातुः कार्मणश्च, **इह**=अस्मिन् जगति **भूयासं**=स्याम्, **अयम्**=एष **मे**=मम **कामः**=अभिलाषः **समृध्यतां**=सम्यग् वर्धताम्, **अदः**=असौ वेदलक्षणा वाक् च **मा उपनमतु**=न व्यर्थतां प्राप्नोतु, तथा सततं प्रयतध्वमित्यर्थः। **यदा** ह्युपदेशकाः खलु स्वयं नानुतिष्ठन्ति केवलं परेभ्यश्चोपदिशन्ति तदा तदुपदिष्टं पारमेश्वरं वचोऽपि किं न स्यात्र परे श्रवणमात्रेणाप्याद्रियन्ते, तदनुष्ठानं तु दूरेणास्ताम्। साधारणजनानामेषा गाथा, विद्वांसः कर्मठाश्च तन्मुख्यवक्तारमपि न प्रियं मन्यन्ते। तदिदं विद्वदविद्वत्कर्तृकाप्रियत्वमात्मनि मनुष्यमात्रकल्याणायोपदिष्टायां वेदवाचि तदानुष्ठानाभावाद् व्यर्थत्वं च मन्त्रस्यान्तिमभागेन व्यावर्त्यते, वेदोपदेशकानां **ब्रह्मदण्डिनां** च पूर्वं स्वयं तदनुष्ठानं नियमेनोपदिश्यते। **न** च सत्यस्मिन् मन्त्रे शास्त्राधिकारविषयः संशयः कश्चित् कस्यचिदवशिष्यते। स्पष्टो ह्यस्मान्मन्त्रवर्णात् सर्वेषां शास्त्रेऽधिकारोऽविशिष्टः। **कर्तव्यगोचरं** वैशिष्ट्यं तु वयमप्यनुमन्यामहे। यत्रेदमाम्नायते **"ब्रह्मणे ब्राह्मणं क्षत्राय राजन्यं मरुद्भ्यो वैश्यं तपसे शूद्रम्"** (यजु० ३०।५) इति। न च कर्तव्यवैशिष्ट्येनाधिकारवैशिष्ट्यं स्यादिति वक्तुं शक्यते। तस्य निर्बलत्वेन तत्प्रयोजकत्वासम्भवात्। शास्त्रेऽधिक्रियमाणो हि कर्तव्यभेदे विनियुज्यते नतु कर्तव्यभेदे विनियुज्यमानः शास्त्रेऽधिक्रियते। पुरस्तात् खलु शास्त्राधिकारः प्रवर्तते तमुपजीव्य च कर्तव्यविशेषः पश्चात्। तत्रोपजीव्यत्वात् प्रबलः शास्त्राधिकारः, तमुपजीव्य प्रवर्तमानत्वाच्च निर्बलः कर्तव्यविशेषः। प्रबलं च निर्बलमन्यथा प्रयोजयतीति दृश्यते न निर्बलं प्रबलमिति न स तत्प्रयोजक उपपद्यते। **ज्योतिष्मन्त्रे** च न ब्राह्मणक्षत्रियवैश्यानां त्रयाणां शास्त्राधिकारनिबन्धनं ज्योतिष्ट्वमुच्यते **किं तर्हि?** रमणीययोनित्वनिबन्धनम्। सन्ति खलु ब्राह्मणप्रभृतयस्त्रयो वर्णा रमणीययोनयः। यत्रेदं श्रूयते **"तद् य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा"**

( छां० ५ । १० । ७ ) इति । लोके हिरण्यादिषु रमणीययोनित्वनिबन्धनो ज्योतिःशब्दः प्रयुज्यमानो निरीक्ष्यते, ब्राह्मणप्रभृतिवर्णेष्वपि तन्निबन्धनः स प्रयुज्यत इत्यवगन्तव्यम् । योनेरमणीयत्वं चेह संस्कारविशेषः । **"शूद्रो यज्ञेऽनवक्लृप्तः"** ( तै० सं० ७ । १ । १ । ६ ) इति यज्ञगोचरः प्रतिषेधस्तु शूद्रस्यात्मकर्मणि तपस्यवक्लृप्तत्वादुपपद्यते । **न** चैतेन शास्त्राधिकारो बाधितुं शक्यते । अप्रयोजकत्वात् । नहि यः कर्तव्यान्तरवशेन यज्ञमभिनिर्वर्तयितुं न कल्पते स शास्त्रमप्यभ्यसितुं न पारयते । पूर्वावस्थायां हि शास्त्रमभ्यस्यते तदुत्तरावस्थायां च यथानियोगं स्वं स्वं कर्मानुष्ठीयते । न च पूर्वोत्तरयोस्तयोः परस्परं प्रयोज्यप्रयोजकभावो घटते । व्यवधानात् । एतेन **"स्तुता मया"** ( अथ० १९ । ७ । ७१ । १ ) इति मन्त्रोऽपि समाहितो वेदितव्यः । नहि तत्र द्विजानामित्यस्य त्रैवर्णिकानामित्यर्थः, कस्तर्हि ? कृतोपनयनानामिति । गुरूपसत्त्या चोपनयनं व्याप्तं न वर्णविशेषेण, गुरुं च यथा त्रैवर्णिका उपसीदितुमर्हन्ति तथा शूद्रोऽपि । नास्ति तत्र कश्चित् प्रतिबन्धः । **तस्मा**च्छास्त्रस्य मनुष्याधिकारत्वादिति युक्तमुच्यते ।

**पूर्वं** किल सर्वाधिकारं शास्त्रमासीत् । पश्चात् तत्राधिकारगोचरो मतभेदोऽजायत । जघन्याः खलु कालगत्या शास्त्रे शूद्रानधिकारं युक्तममन्यन्त । मूर्धन्यास्तु यथापूर्वं तदधिकारमित्युभयत्राचार्य्यान्तेवासिनामग्रहणेन द्योत्यते । **एतेन** स्त्रीणामपि शास्त्रेऽधिकारो व्याख्यातो विज्ञातव्यः । **तासामपि शूद्रवत् केषां चित् सूक्तानां द्रष्ट्रीत्वस्य स्मर्य्यमाणत्वात्** । सन्ति खलु शूद्रवत् स्त्रियोऽपि केषाञ्चित् सूक्तानां द्रष्ट्र्य इति न वेदविदां परोक्षम् । नहि याः सूक्तानां द्रष्ट्र्यो विद्यन्ते तास्तदात्मके शास्त्रे नाधिक्रियन्त इति संश्लिष्यते । **तस्माद्** यथा मनुष्यास्तत्राधिक्रियन्ते तथा स्त्रियोऽप्यधिक्रियन्त इति सम्यगन्वीक्षामहे ॥ ३३ ॥

**अस्ति त्रैवर्णिकवच्छूद्रस्यापि शास्त्रेऽधिकार इति प्रतिपादितम् । क-**

म्प्रति तत्रौपनिषदमुदाहरणं प्रदर्शयन् ब्राह्मणादिशब्दवच्छूद्रशब्दस्य गुणशब्दत्वं प्रतिपादयति—

**"शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि"॥३४॥**

**तदनादरश्रवणात्**=तस्माद् हंसाद् ब्रह्मविद्याऽभावप्रयुक्तः स्वात्मापकर्षोऽनादरः, तस्याकर्णनादस्य=जानश्रुतेः पौत्रायणस्य **शुक्**=शोकः समजायत, **तदाद्रवणात्**=तया शुचा ब्रह्मविद्योपदेशार्थमागमनाद् रैक्वस्तं शूद्र इत्यामन्त्र्य ब्रह्मविद्यामुपदिदेश **हि**=यतः, अतः **सूच्यते**= शूद्रशब्दो ब्राह्मणादिशब्दवद् गुणशब्दो विज्ञाप्यत इत्यर्थः।

छन्दोग्योपनिषदि हि **"जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस"** (छां० ४। १। १) इत्युपक्रम्य पठ्यते **"तदु ह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे** (छां० ४। २। १) **"तमु ह परः प्रत्युवाच अहहारे त्वा शूद्र! तवैव सह गोभिरस्त्विति। तदु ह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे** (छां० ४। २। ३) **"तस्या ह मुखमुपोद्गृह्णन्नुवाच आजहारेमाः शूद्र! अनेनैव मुखेनालापयिष्यथा इति। ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास। तस्मै होवाच"** (छां० ४। २। ५) इति। तस्यैष संक्षिप्तोऽर्थः–जानश्रुतिः किल पौत्रायणः शूद्रकुलोत्पन्नः कश्चित् प्रजाधिपो बभूव। स च यथाविधि क्षात्रधर्मेण प्रजां पालयन् क्षत्रियत्वमुपलेभे। तस्य धर्मात्मनो दानशौण्डस्य राज्ञः सर्वगुणसम्पन्नत्वेऽपि कदाचिन्निशायामतिपततो हंसाद् ब्रह्मविद्याऽभावप्रयुक्तं **"कं वर! एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थ"** (छां० ४। १। ३) इत्यादिकं स्वात्मनोऽत्यन्तमपकर्षमुपशृण्वतो भूरि शोकः सञ्जज्ञे। तच्छोकाविष्टचेतस्कश्च स द्रागित्येव ब्रह्मविद्याग्रहणाय बहुदक्षिणया भगवन्तं सयुग्वानं रैक्वमापेदे। तमेष

रैक्वः **शूद्र!** इत्यामन्त्र्य गृहीताखिलदक्षिणो ब्रह्मविद्यामनुशशासेति । **तत्र** शूद्रकुलोत्पन्नाय जानश्रुतये पौत्रायणाय सयुग्वा रैक्वो ब्रह्मविद्यामुपदिदेशेति शूद्रस्य शास्त्राधिकारे तावदुदाहरणम् । यदि हि शास्त्रे शूद्रो नाध्यकरिष्यत् सयुग्वा रैक्वस्तत्प्रतिपाद्यां ब्रह्मविद्यां न जातु तमुपादेक्ष्यत् । नहि तत्राधिकाराभावे तत्प्रतिपाद्या ब्रह्मविद्या कस्मैचिदुपदेष्टुं शक्यते । जानश्रुतिः पौत्रायणश्च शूद्रकुले सञ्जात इत्युत्तरसूत्रात् सुव्यक्तं प्रतिपद्यते । तद् वयं तत्रैव व्याकरिष्यामः । यच्चैनं शोकेन ब्रह्मविद्याग्रहणाय समागतं खलु सयुग्वा रैक्वः शूद्र! इत्यामन्त्रयाञ्चक्रे तेन शूद्रशब्दो ब्राह्मणादिशब्दवद् गुणशब्द इति सूच्यते । स्वस्य वा परस्य वा शोकनिवृत्त्यर्थं यो द्रवति गच्छति स शूद्र इति तद्व्युत्पत्तेः प्रदर्शनात् । सेवकस्य चैष धर्मः । सेवावृत्तिश्च शूद्रः । यत्रेदं श्रूयते "**तपसे शूद्रम्**" (यजु० ३० । ५) इति । ब्रह्मक्षत्रियविशां सेवनं तपः । स्मर्य्यते च "**एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् । एतेषामेव वर्णानां शुश्रूषामनसूयया**" (मनु० १।९१) इति । शुश्रूषां-सेवाम् । एकमेवेति तु प्राधान्यं प्रदर्श्यते । कर्मान्तरस्यापि विहितत्वात् । **पाणिनीयास्तु "शुचेर्दश्च"** (उ० १८६) इति शोचतेरप्रत्यये धातोर्दीर्घे चकारस्य दकारे च शूद्र इति व्युत्पादयन्ते । योऽहर्निशं परेषां दुःखमसहमानस्तन्निवृत्तिं शोचति चिन्तयति स शूद्र इति तद्व्युत्पत्तिं चाचक्षते । **न** चैवमपि शूद्रशब्दो गुणशब्दतां विजहाति । यस्य प्राधान्येन सेवाधर्मः स शूद्र इत्युपपन्नोऽभिप्रायः । **ब्राह्मणप्रभृतिशब्दाश्च** गुणशब्दा इति निर्विवादः । अत एव च "**तेन तुल्यं क्रिया चेद् वतिः**" (अष्टा० ५ । १ । ११५) इति सूत्रे भाष्ये ब्राह्मण्यं निरूपयन्तो महाभाष्यकृद् भगवान् पतञ्जलिरभिधत्ते "**सर्वे एते शब्दा गुणसमुदायेषु वर्तन्ते ब्राह्मणः क्षत्रियो वैश्यः शूद्रः**" इति । नहि तेषां गुणशब्दत्वाभावे भाष्यकृता तेनैवमभिधातुं शक्यते । **जात्यन्तरे प्रयुज्यमानत्वाच्च** । यदि **एते** खलु जातिशब्दा विधेरन् तदा न जातु जात्यन्तरे प्रयुज्येरन् । **नच-**

श्वशब्दो गवि, गोशब्दश्चाश्वे कदाचित् प्रयुज्यते । प्रयुज्यन्ते चैते जात्यन्तरेऽपि "**ब्रह्म वा अजः**" (शत० ६ । ४ । ४ । १५) "**क्षत्रं वा अश्वः**" (शत० १३ । २ । २ । १७) "**वैश्यं च शूद्रं चानु रासभः**" (शत० ६ । ४ । ४ । १२) "**ब्रह्म वै पलाशः**" (शत० १ । ३ । ६ । १९) "**क्षत्रं वा एतदोषधीनां यद् दूर्वा**" (ऐ० ८ । २ । ४) इति । तस्मान्नूनमेते गुणशब्दा इति विज्ञायते । तथा च गुणोत्कर्षापकर्षाभ्यामिहैव तेषां परिवर्तनमपि युक्तमिति मनसि धर्तव्यम् ॥ ३४ ॥

तदाद्रवणाच्छूद्रशब्दो गुणशब्द इत्युक्तम् । तत्रैव हेत्वन्तरं समुच्चिनोति—

"**क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्**" ॥ ३५ ॥

हेत्वन्तरमेतदिति चार्थः । **उत्तरत्र**=राज्यप्राप्तेरुत्तरत्र **क्षत्रियत्वगतेः**=जानश्रुतेः क्षत्रियत्वमापणात् प्रयुक्तस्तत्र शूद्रशब्दो गुणशब्दः प्रतिपत्तव्यः । कुतोऽस्योत्तरत्र क्षत्रियत्वप्राप्तिरवगम्यते ? **चैत्ररथेन लिङ्गात्**=चित्रेण मिश्रितेन वीर्य्येण जाताभ्यामश्वतरीभ्यां युक्तो रथश्चित्ररथः, चित्ररथ एव चैत्ररथः, स्वार्थे तद्धितः, तेनागमनाल्लिङ्गाद् हेतोरित्यर्थः ।

जानश्रुतिः पौत्रायणः खलु शूद्रकुलोत्पन्नश्चेन्न भवेत् तदा तस्योत्तरत्र क्षत्रियत्वप्राप्तिर्नावगम्येत । नहि क्षत्रियत्वे भवति कस्यचित् क्षत्रियत्वप्राप्तिरवकल्पते । यो हि पूर्वं क्षत्रियो न भवति क्षात्रकर्मचानुतिष्ठति, तद्गुणाँश्च सम्पादयति स नूनं क्षात्रेण गुणकर्मणा विभूषितः पश्चात् क्षत्रियत्वं प्राप्नोति । जानश्रुतिः पौत्रायणश्च तथा । स हि पूर्वं शूद्रकुले सञ्जातः, पश्चाद् राज्येऽभिषिक्तः क्षात्रधर्मेण प्रजां समपीपलत्, ततश्च योग्यत्वात् क्षत्रियत्वमवापीपिसत् । अत एव स्मर्य्यते महाभारते "**न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् । ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम्**" (महा० शां० १८८ । १०) इति । तत्कस्योत्तरत्र क्षत्रियत्वप्राप्तिः कुतोऽवगम्यते ? **चैत्ररथे-**

**नागमनाल्लिङ्गादिति** ब्रूमः। अश्वतरीरथो हि **चित्ररथ** इति व्यपदिश्यते। "**रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते**" इत्यभियुक्तोक्तेः। स्वार्थेऽणि च चित्ररथ एव **चैत्ररथः** सम्पद्यते। स चान्यत्र क्षत्रियेणावगतसम्बन्ध इह जानश्रुतेः पौत्रायणस्य क्षत्रियत्वप्राप्तिमवगमयति। **महाभारते** खलु वनपर्वणि क्षत्रियेणाश्वतरीरथस्य सम्बन्धोऽवगम्यते "**चत्वारस्त्वां गर्दभाः संवहन्तु श्रेष्ठाश्वतर्यो हरयो वातरंहाः। तैस्त्वं याहि क्षत्रियस्यैष वाहो, ममैव वाम्यौ न तवैनौ हि विद्धि**" ( महा० वन० १२। ९३ ) इति। तत्रावगतसम्बन्धेन च तेन जानश्रुतेः पौत्रायणस्य क्षत्रियत्वप्राप्तिः सुखेनावगन्तुं शक्यते। नहि तत्प्राप्त्यभावे तस्याश्वतरीरथः सम्बोभूयते। परकीयस्य वा प्रदानमुपपद्यते। न च क्षत्रियत्वे तस्य शूद्र! इत्यामन्त्रणं गुणमनपेक्ष्य कथञ्चिद् युज्यते। **तस्मादस्ति** ब्राह्मणादिशब्दवदेष शूद्रशब्दोऽपि गुणशब्द इति सम्यगध्यवसीयते। **तथा** चोपपन्नः शास्त्रे शूद्रस्याप्यधिकारः" ॥ ३५ ॥

**ननु** कथं तर्हि सयुग्वा रैक्वो जानश्रुतिं नोपनिन्ये? **तत्राह**—

**"संस्कारपरामर्शात् तदभावाभिलापाच्च"** ॥ ३६ ॥

**संस्कारपरामर्शात्**=उपनयनसंस्कारस्य शास्त्राध्ययने सम्बन्धात्, **तदभावाभिलापाच्च**=विद्याग्रहणे तदभावस्याभिधानाच्च नोपनिन्य इत्यर्थः।

**द्विविधस्तावदुपनयनसंस्कारोऽभ्युपगम्यते** शास्त्राध्ययनाङ्गमेकः, विद्याग्रहणाङ्गं द्वितीयः। तत्राद्ये नियमो न द्वितीये। **तदभावस्यापि क्वचिदभिलापात्**। यथा ह्येकत्र खलु "**तं होपनिन्ये**" ( शत० ११।५।३।१३ ) इति विद्याग्रहणाङ्गमुपनयनमभिगद्यते तथाऽपरत्र तदभावोऽप्यभिलप्यते "**तान् हानुपनीयैवतदुवाच**" ( छां० ५।११।७ ) इति। यदि शास्त्राध्ययनाङ्गोपनयनवदेतदपि नियमेनाभविष्यत् तदा न जातु क्वचित् तद्भावः क्वचित् तदभावश्चाभ्यलपि-

ष्यत । नहि नियतस्य भावाभावौ कर्हिचिदभिलपितुं शक्येते । **किं बहुना,** यथा हि शास्त्राध्ययने नियमेनोपनयनं तावदपेक्ष्यते तथा विद्या-ग्रहणे श्रद्धादिकं नियमेनापेक्ष्यते नोपनयनम् । श्रद्धादिकं च जानश्रुतौ पौत्रायणे प्रभूतमासीत् । अत एव सयुग्वा रैक्वो न तमुपनिन्ये न शास्त्रा-नधिकारीति मन्वानः । मनुष्यमात्रस्य तदधिकारित्वात् ॥ ३६ ॥

**अस्ति** शास्त्रे शूद्रस्याप्यधिकार इत्यत्र शूद्रकुलजः पौत्रायणो जान-श्रुतिरुदाहारि । प्रसङ्गाच्च शूद्रादिशब्दानां गुणशब्दत्वं च प्रत्यपादि । **सम्प्रति** तत्राज्ञातकुलजः सत्यकामो जाबालस्तावदुदाह्रियते—

**"तदभावनिर्धारणे च प्रवृत्तेः"** ॥ ३७ ॥

पूर्वं यत्रोदाहरणं प्रादर्शि तत्रैवोदाहरणान्तरमेतदिति चार्थः । **तद-भावनिर्धारणे**=शास्त्राध्ययनेऽनृतभाषणानार्जवादीनि यानि प्रतिबन्ध-कानि तदभावस्य सत्यकामे जाबाले निश्चये **प्रवृत्तेः**=हारिद्रुमतस्य गौतमस्य तदध्ययनार्थं प्रवृत्तेरवगम्यतेऽस्ति शास्त्रे शूद्रस्याप्यधिकार इत्यर्थः ।

छान्दोग्ये हि चतुर्थप्रपाठके चतुर्थे खण्डे श्रूयते **"सत्यकामो ह जाबालो जबालां मातरमामन्त्रयाञ्चक्रे ब्रह्मचर्यं भवति! विवत्स्यामि किं गोत्रोऽहमस्मीति । १ । सा हैनमुवाच नाहमेतद् वेद तात! यद्गोत्रस्त्वमसि । बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे । साऽहमेतन्न वेद यद्गोत्र-स्त्वमसि । जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि । स सत्यकाम एव जाबालो ब्रवीथा इति । २ । स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति । ३ । स होवाच किं गोत्रो नु सोम्य! असीति । स होवाच नाहमेतद् वेद भो य-द्गोत्रोऽहमस्मि । अपृच्छं मातरं सा मा प्रत्यब्रवीद् "ब-ह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतद्**

**न वेद यद्गोत्रस्त्वमसि । जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति" । सोऽहं सत्यकामो जाबालोऽस्मि भो! इति । ४ । तं होवाच नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्य! आहरोप त्वा नेष्ये न सत्यादगाः ।** ४ ।" इति । तस्यैष निष्कर्षः—**सत्यकामो** जाबालो यदाऽऽत्मनो गोत्रं नाहं वेदेत्युक्त्वा मात्रोक्तं सर्वं हारिद्रुमताय गौतमाय सत्यं सत्यं प्रोवाच तदा स मनसि विचारयाम्बभूव न खल्वीदृशं सत्यं वचनम**ब्राह्मणः**=ब्राह्मणो वेदस्यागमधिकारी ब्राह्मणः, तद्भिन्नोऽब्राह्मणो वेदविद्यानधिकारी कर्हिचिद् वक्तुमर्हति । देवव्रतं ह्येतत् सत्यं यदनेनाचरितम् । "**एतद्ध वै देवा व्रतं चरन्ति यत् सत्यम्**" (शत० १ । १ । १ । ५) इत्यादिश्रुतेः । नहि सत्यं ब्रुवाणः क्वचिद् वेदविद्यास्वनधिकारित्वं वाभज्यते । यदा खलु सत्यं भाषमाणोऽपि न तदधिकारी सम्पद्यते तदा को नु नामान्यस्तदधिकारी सम्पत्स्यते । सत्ये हि पक्षपातो भगवतः परमेश्वरस्य नासत्ये । यत्रेदमाम्नायते—"**सुविज्ञानं चिकितुषे जनाय सच्चासच्च वचसी पस्पृधाते । तयोर्यत् सत्यं यतरदृजीयस्तदित् सोमोऽवति हन्त्यासत्**" (ऋ० ५ । ७ । ७ । १२) इति । **सुविज्ञानं**=सुविज्ञातव्यम् । **चिकितुषे**=विदुषे । **सोमः**=परमेश्वरः । तच्च सत्यं मनुष्येषु दुर्लभतरम् । यत्रेदं श्रूयते "**कोऽर्हति मनुष्यः, सर्वं सत्यं वदितुम् । सत्यसंहिता वै देवा अनृतसंहिता वै मनुष्याः**" (ऐत० ब्रा० १ । १ । ६) इति । सत्यकामे जाबाले ह्यविज्ञातगोत्रजेऽपि नैतद् दुर्लभं **किन्तु** नितान्तं सुलभम् । अहो निःसंकोचोऽयमदृष्टपूर्वो बालः । विचार्य्य चैवं मनसि निर्दध्रे नूनमेष वेदविद्याधिकारी । **सत्यादिभिस्तत्साधनैः समन्वितत्वात्** । सत्यार्जवादीनि हि साधनानि मनुष्याणां वेदविद्यास्वधिकारं निर्हरन्ति न खलु कस्मिंश्चिद्वर्णविशेषे जन्म । गुणभूतत्वात् । तानि चास्मिन् जाबाले विद्यन्त इति कथं न तत्राधिक्रियेत । निर्धार्य्य चैवमुदारधीर्भगवान् हारिद्रुमतो

गौतमस्तदध्यापनाय निःशङ्कं प्रववृते **"समिधं सोम्य! आहर त्वामहमुपनेष्ये न त्वं सत्यादगाः"** इत्युच्चैरभिदधान इति । यस्य खलु मनुपुत्रस्य सत्यार्जवब्रह्मचर्य्यादयो गुणा विद्यन्ते स सर्वोऽधिक्रियते शास्त्रे, यस्य चैते न वर्तन्ते स ब्राह्मणो वा क्षत्रियो वा वैश्यो वा शूद्रो वा किं न स्यान्नाधिक्रियते तत्रेति विस्पष्टमनेन प्रतिपद्यते । **वर्णवदधिकारस्यापि गुणनिबन्धनत्वात्** । यथा हि वर्णविभागः खलु गुणनिबन्धनो वर्तते तथा शास्त्राधिकारोऽपि गुणनिबन्धनो वेदितव्यः । नहि तस्य जन्मनिबन्धनत्वे जाबालादीनामुपनयने गुणो हेतुरुपादातुं शक्यते **"न सत्यादगाः"** इति । जन्मनिबन्धनत्वे हि जन्म हेतुरुपादीयेत न गुणः । उपादीयते च गुण इति गुणनिबन्धनोऽधिकारो न जन्मनिबन्धन इति सुव्यक्तं विज्ञायते । किमिह चित्रमिव लोकसे विचार्य्यतां किञ्चिदायुष्मन्! यदा पूर्वत्र शूद्रः किल **कवष ऐलूषो** वैदिकान् मन्त्रान् ददर्श दासीपुत्रो **महीदास**श्चैतरेयो ब्राह्मणमैतरेयं निर्ममे तदा किमपराद्धं तद्बन्धुभिरद्य यत्ते दुर्भगास्तदध्ययनेऽपि नाधिक्रियेरन् । **तस्माद्** युक्तो ब्राह्मणादिवच्छूद्रस्यापि शास्त्रेऽधिकारः ॥२७॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च"** ॥ ३८ ॥

**श्रवणाध्ययनार्थप्रतिषेधात्**=अन्येन पठ्यमानस्यान्येनाकर्णनं **श्रवणं**, स्वयं गुरुमुखात् पठन**मध्ययनं**, तद्विहितयज्ञादिकर्मानुष्ठान**मर्थः**, अधिकारप्रयोजकानां सत्यार्जवब्रह्मचर्य्यप्रभृतिगुणानामसत्त्वे शास्त्रश्रवणाध्ययनार्थानां प्रतिषिद्धत्वात् **स्मृतेश्च**=तत्प्रतिषेधस्मरणाच्च तत्सत्त्वे ब्राह्मणादिवदस्ति शास्त्रे शूद्रस्याप्यधिकार इत्यर्थः ।

शास्त्राधिकारप्रयोजका हि सत्यार्जवब्रह्मचर्य्यप्रभृतयो गुणाः । ते यत्र न विद्यन्ते स न कालत्रयेऽपि शास्त्राधिकारं लभते । **तं प्रति तच्छ्रवणाध्ययनार्थानां प्रतिषेधात्** । श्रूयते खलु प्रतिषेधः **"नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वा पुनः"** ( श्वे० ६।

२२) **"नैतदचीर्णव्रतोऽधीते"** (मुं० ३।२।११) **"न पापः पुरुषो याज्यः"** (ऐ० आ० ४।४।३) इति। यस्याधिकारप्रयोजका उक्ता गुणा न वर्तन्ते स न शृणुयान्नाधीयीत नापि यजेतेति तदभ्युच्चयार्थः। स्मर्य्यतेऽपि च **"विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि, असूयकायानृजवेऽयताय न मा ब्रूया वीर्य्यवती तथा स्याम्"** (नि० २।१।४) इति। न च श्रुतिस्मृतिप्रतिषेधे विद्यमाने गुणाभावेऽपि कश्चिद् ब्राह्मणो वा क्षत्रियो वा वैश्यो वा शूद्रो वा शास्त्राधिकारं लब्धुमीष्टे। गुणसद्भावे च न शूद्रोऽपि वारयितुं शक्यते। गुणविशेषनिबन्धनो ह्येषोऽधिकारो न वर्णविशेषनिबन्धन इति श्रुतिस्मृतिप्रतिषेधबलाद् विस्पष्टमवगम्यते। नहि श्रुतिस्मृतिभिर्वर्णविशेषनिबन्धनः स प्रतिषिध्यत इति कथञ्चिदवगमयितुं शक्यते। व्यर्थं हि तदा गुणोपादानं प्रसज्येत। गुणाश्चापर्य्यनुयोज्या इति न केन चिद् वर्णविशेषेण नियम्यन्ते। ते नूनं यथा त्रैवर्णिके कर्मगत्या यथासमयं प्रतिव्यक्ति सम्भवन्ति तथा शूद्रेऽपि यथाकालं प्रतिव्यक्ति प्रादुर्भवन्ति। **परमेश्वरानुग्रहस्य सर्वोपरि समानत्वात्**। समानो हि सर्वोपरि परमेश्वरानुग्रहः। शास्त्रं च परमेश्वरीयम्। तेनापि सर्वान् प्रति समानेन भवितव्यम्। न च गुणसद्भावेऽपि शूद्रस्य तत्रानधिकारे कल्प्यमाने तत्तथोपपद्यते। युक्ता च तथा तदुपपत्तिः। तस्मादस्ति ब्राह्मणादेरिव शूद्रस्यापि शास्त्रेऽधिकार इति सिद्धम्॥ ३८॥

प्रासङ्गिकोऽधिकारविचारः पर्य्यवसितः। सम्प्रति परब्रह्मणि परमेश्वरे प्रवृत्तानां पूर्वोदाहृताकाशादिशब्दानां दिङ्मात्रेण प्रवृत्तिनिमित्तमाचिख्यासुः पूर्वं तावत् प्राणशब्दप्रवृत्तौ निमित्तमाचष्टे—

**"प्राणः कम्पनात्"** ॥ ३९॥

**ब्रह्मे**त्यधिक्रियते। **कम्पनात्**=कम्पनमिति प्राणनमुच्यते, प्राणन् हि कम्पते, प्राणनं जीवनं, हेतुत्वं पञ्चम्यर्थः, प्राणनक्रियाहेतुत्वात् **प्राणः**=ब्रह्म प्राणोऽभिधीयत इत्यर्थः।

यावन्तः खलु पदार्थाश्चेतनाः स्युरचेतना वा भवेयुः सर्वे ते प्राणनक्रियां कुर्वाणा उपलभ्यन्ते । नहि विद्यते च प्राणनक्रियां न कुरुते चेति कश्चिदपि कदाचित् सम्भाव्यते । तेषां प्राणनक्रियोपलब्धौ च स्वस्वव्यापारे नियमेन प्रवर्तनं हेतुः । यथा हि धूमध्वजोपलब्धौ तावद् धूमो हेतुरभ्युपगम्यते तथा पदार्थानां प्राणनक्रियोपलब्धावपि स्वस्वव्यापारे नियमेन प्रवर्तनं हेतुरभ्युपगन्तव्यः । तत्र चेतनानां स्वस्वव्यापारे नियमेन प्रवर्तनं प्रत्यक्षम् । को नु नाम न पश्यति यावान् चेतनस्तावान् सर्वः प्रातरुत्थाय स्वस्वव्यापारे नियमेन प्रवर्तते, सायं च परिश्रान्तस्तस्मादुपरमते, व्यापारान्तरं च समारभत इति । अग्निवायुसूर्यादयोऽचेतना अपि तथाप्रकृतयः । यत्रेदं श्रूयते "**भयादस्याग्निस्तपति भयात्तपति सूर्य्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः**" (कठ० ६ । ३ ) इति । "**भीषाऽस्माद् वातः पवते भीषोदेति सूर्य्यः भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः**" ( तै० २ । ८ ) इति च । यथा हि प्रजाधिपात् बिभ्यत् खलु प्रजावर्गो यथाशासनं नियमेन स्वस्वव्यापारे रमते मा नामान्यथा शिरसि दण्डो न्यपप्तत्, एवमग्न्यादयोऽपि जगतां पतेः परमेश्वराद् बिभ्यतो यथाशासनं नियमेन स्वस्वव्यापारं कुर्वते । अप्रतिहतशासनो ह्यसौ जगतां पतिः परमेश्वरः । नहि तच्छासनमुल्लङ्घ्य जडो वा स्याच्चेतनो वा भवेत् कश्चिदपि वर्तितुमीष्टे । स हि यथा प्रकृतितः प्रेष्ठस्तथा भीमोऽपि वर्तते । कथमन्यथा हस्ते वज्रं बिभृयात्, ब्रह्मद्विषं हन्तुं च धनुरातनुयात् । बिभर्त्ति वज्रम्, आतनोति च धनुः । यत्रेदमाम्नायते "**यस्मादिन्द्राद् बृहतः किञ्चनेमृते विश्वान्यस्मिन् सम्भृताधि वीर्य्या । जठरे सोमं तन्वी सहो महो हस्ते वज्रं भरति शीर्षणि क्रतुम्**" ( ऋ० २ । ६ । १७ । २ ) "**अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ**" ( ऋ० ८ । ७।१२ । ६ ) इति । न चैतावन्मात्रमाम्नायते, **किं तर्हि?** साक्षाद् भीमोऽपि समाम्नायते "**स वज्रभृद दस्युहा भीम उग्रः**

**सहस्रचेताः शतनीथ ऋभ्वा**" ( ऋ० १ । ७ । १० । १२ ) इति । तदिदमवलम्ब्यैव चोपनिषदि स उद्यतवज्रेणोपमीयते "**यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतम् । महद् भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति**" ( कठ० ६ । २ ) इति । तथा च युक्तं तस्य भीत्या चेतनानामिवाचेतनानामपि नियमेन स्वस्वव्यापारे प्रवर्तनम् । तदेतदुभयेषां तेषां प्राणनक्रियोपलब्धौ दृढं लिङ्गम् । तत्क्रियाहेतुत्वं च भगवतः परब्रह्मणः परमेश्वरस्य वेदोपनिषत्सु स्फुटमनुशिष्यते "**यस्मात् प्राणन्ति भुवनानि विश्वा**" ( अथ० १३ । ३ । ३ । ३ ) "**स उ प्राणस्य प्राणः**" (के० १।२) "**न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ**" ( कठ० ५ । ५ ) "**को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्**" ( तै० २ । ७ ) "**प्राणस्य प्राणम्**" ( बृ० ४ । ४ । १८ ) इति । न च तदनुशिष्टं कर्हिचिदपह्नोतुं शक्यते । **तस्मात्** प्राणनक्रियानिमित्तः प्राणशब्दः परब्रह्मणि परमेश्वरे प्रवर्तत इति राद्धान्तः ॥ ३८ ॥

ज्योतिःशब्दप्रवृत्तौ निमित्तं दर्शयति—

"**ज्योतिर्दर्शनात्**" ॥ ४० ॥

ब्रह्मेत्यधिक्रियते । **दर्शनात्**=दर्शनं प्रकाशनं, तस्माद् **ज्योतिः**=ब्रह्म ज्योतिरुच्यत इत्यर्थः ।

यथा हि प्रकाशनात् खलु सूर्य्यादयो ज्योतिरित्याख्यायन्ते तथा ब्रह्मापि प्रकाशनाज्ज्योतिरित्याम्नायते । **तत्र** ब्रह्म मुख्यं ज्योतिः, सूर्य्यादयो गौणम् । ते हि ब्रह्मप्रकाशेन प्रकाशन्ते, ब्रह्म च स्वतः । यत्रेदं श्रूयते "**हिरण्मये परे कोषे विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः । ९ । न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्व-**

**मिदं विभाति"** ( मुं० २ । २ । ९=१० ) इति । **ज्योतिषां**=सूर्य्यादीनाम् । **"एष उ एव भामनीः, एष हि सर्वेषु लोकेषु भाति"** ( छां० ४ । १५ । ४ ) **"तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्"** ( बृ० ४ । ४ । १६ ) **"येन सूर्य्यस्तपति तेजसेद्धः"** ( तै० ब्रा० ३ । १२ । ९ ) इति च । तथा स्मर्य्यतेऽपि भगवद्गीतायाम् **"यदादित्यगतं तेजो जगद् भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्"** ( गी० १५ । १२ इति । **तेजः**=प्रकाशः । प्रलयावस्थायां चात्रेभागेन प्रकाश्यसद्भावाभ्युपगमान्नास्ति परब्रह्मणः परमेश्वरस्य प्रकाशकत्वानुपपत्तिः । प्रकाशवचनश्च ज्योतिःशब्दः । **तस्माद्** युक्ता तस्य प्रकाशननिमित्ता परब्रह्मणि परमेश्वरे प्रवृत्तिः ॥ ४० ॥

**आ**काशशब्दप्रवृत्तौ निमित्तमाह—

**"आकाशोऽर्थान्तरत्वादिव्यपदेशात्" ॥ ४१ ॥**

ब्रह्मेत्यधिक्रियते । **अर्थान्तरत्वादिव्यपदेशात्**=सर्वार्थोऽन्तर्भवत्व**मर्थान्तरत्वं** सर्वगतत्वम, आदिनाऽसङ्गत्वसूक्ष्मत्वे गृह्येते, तस्य व्यपदेश उपदेशः, तस्मा**दाकाशः**=ब्रह्माकाशोऽभिधीयत इत्यर्थः ।

**यथा** हि लोके खल्वाकाशे सर्वगतत्वादियोगेनाकाशशब्दः प्रवरीवृत्यते तथा परब्रह्मणि परमेश्वरेऽपि सर्वगतत्वादियोगेनाकाशशब्दः प्रवर्तेत इति द्रष्टव्यम् । **तत्र** भूताकाशे सर्वगतत्वादिकं सापेक्षं, परब्रह्मणि परमेश्वरे च निरपेक्षमिति विशेषः । **तच्च** भगवतस्तस्य वेदोपनिषत्सु साक्षादुपदिश्यते **"स ओतश्च प्रोतश्च विभूः प्रजासु"** ( यजु० ३२ । ८ ) **"सर्वात्मानं सर्वगतं विभुत्वात्"** ( श्वे० ३ । २१ ) **"असङ्गो नहि सज्यते"** ( बृ० ४ । ४ । २२ ) **सूक्ष्माच्च तत्सूक्ष्मतरं विभाति"** ( मुं० ३ । १ । ७ ) इति । **तदुपदिष्टं च सर्वं नः प्रमाणं निःसंशयम् । अतोऽर्थान्तरत्वादिव्यपदेशादाकाशशब्दः परब्रह्मणि परमेश्वरे प्रवर्तेत इति सिद्धान्तः ॥ ४१ ॥**

**प्राणा**दिशब्दानां परब्रह्मणि परमेश्वरे प्रवृत्तौ निमित्तं समन्वयोपयोगित्वाद् दिङ्मात्रेण व्याख्यातम् । **सम्प्रति** तदुपयुक्तो जीवब्रह्मणोर्भेदोऽपि व्याख्यातव्यः । विप्रतिपत्तेः । **त**त्राह—

**"सुषुप्त्युत्क्रान्त्योर्भेदेन"** ॥ ४२ ॥

ब्रह्मेत्यधिक्रियते । व्यपदेशादिति छेदेनानुवर्तते । क्वचिदेकदेशानुवृत्तेरप्यङ्गीकारात् । **सुषुप्त्युत्क्रान्त्योः**=प्रसिद्धभेदत्वान्निर्देशः, गाढनिद्रा **सुषुप्तिः**, शरीरादपसृतिरुत्**क्रान्तिः**, सुषुप्तौ चोत्क्रान्तौ च **भेदेन**=जीवात्मनो भेदेन व्यपदेशाद् भिन्नं ब्रह्म प्रतिपत्तव्यमित्यर्थः ।

बृहदारण्यके हि सुषुप्त्यधिकारे श्रूयते **"तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्, एवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्"** (बृ० ४ । ३ । २१ ) इति । **पुरुषः**=जीवात्मा । वेदितृत्वात् । **प्राज्ञः**=परब्रह्म परमेश्वरः । सार्वज्ञ्यलक्षणया प्रज्ञया नित्यमवियोगात् । एवमुत्क्रान्त्यधिकारेऽपि श्रूयते **"तद् यथाऽनः सुसमाहितमुत्सर्जद् यायाद् एवमेवायं शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन् याति"** ( बृ० ४ । ३ । ३५ ) इति । शारीर **आत्मा**=जीवात्मा । **अन्वारूढः**=अधिष्ठितः । **उत्सर्जन्**=वेदनातः शब्दं कुर्वन् । **तत्रो**भयत्र जीवात्मनः परब्रह्मणः परमेश्वरस्य च भेदेन व्यपदेशात् सर्वदा तद्भेदो विज्ञायते । अभेदे भेदेन व्यपदेशानुपपत्तेः । **यदि** हि जीवात्मा परमात्मा चोभौ परस्परं न भिद्येयातां तदा न जातु भेदेन व्यपदिश्येयाताम् । नह्यभेदे भेदेन व्यपदेश उपपद्यते । व्यपदिशति च तथा श्रुतिः । **जी**वात्मा ह्यत्र प्रथमया विभक्त्या व्यपदिश्यते परब्रह्म परमात्मा च तृतीयया विभक्त्येति स्फुटस्तदुभयभेदः । **सु**षुप्त्युत्क्रान्ती चोभे प्रसिद्धभेदत्वान्निर्दिश्येते न जाग्रति स्वप्ने प्रलये मोक्षे च तद्भेदोऽनेन व्यावर्त्यते, **किं तर्हि?** यथा तत्र तथाऽन्यत्रापि प्रतिपत्तुं शक्यत इति ध्वन्यते । **पृ**थग्भावो हि

भेदः । न च परब्रह्मव्यतिरेकेण जीवात्मसद्भावे स व्यासेद्धुं शक्यते । तद्व्यतिरेकेण जीवात्मसद्भावश्चास्ति प्रत्यक्षः । को नु नामात्मानमहमस्मीति ब्रह्मव्यतिरेकेण प्रत्यक्षं नावगाहते । येन रूपेण तस्य सद्भावः प्रत्यक्षमवगाह्यते न तत् तात्त्विकं रूपमिति चेत्? किं तर्हि तस्य तात्त्विकं रूपमिति वक्तव्यम् । परब्रह्मेति चेत्? कथं तर्हि तात्त्विके तस्मिन्नतात्त्विकमेतत् प्रतिभासते । अविद्ययेति चेत्? न युक्तमुच्यते । विद्यास्वभावे तस्मिन्नविद्यावस्थानानुपपत्तेः । यथा हि प्रततप्रकाशे सवितरि खलु तमोऽवस्थानं न युज्यते तथा विद्यास्वभावे भगवति तस्मिन्नविद्यावस्थानमपि नोपपद्यते । परदृष्ट्योपपद्यत इति चेत्? तर्हि कोऽसौ परः । जीवात्मेति चेत्? तदागतं तत्सद्भावेनेति सिद्धो भेदः । अथोच्येत **"ब्रह्म वा इदमग्र आसीत्, तदात्मानमेवावेदहं ब्रह्मास्मीति । तस्मात् तत् सर्वमभवत् । तद् यो यो देवानां प्रत्यबुध्यत स तदभवत् । तथर्षीणां तथा मनुष्याणाम्"** (बृ० १ । ४ । १०) इति श्रुत्या साक्षाद् ब्रह्मात्मैकत्वाभिधानान्न तद्भेदोऽस्ति सिद्ध इति । **नैतद् वक्तव्यम्** । श्रुतेस्तदभिधानपरत्वाभावात् । यदि हि श्रुतिरियं ब्रह्मात्मैकत्वाभिधानपरा स्यात् तदाऽवश्यं यथाभवत्पद्धति किञ्चिदभिदध्यात् । एषा किल विद्यते भावत्की पद्धतिः—यदा खल्वस्य जीवात्मनो **"अहं ब्रह्मास्मि"** इत्यात्मनि ब्रह्मभावावगतिरुपजायते तदा सर्वमिदं जगदविद्याकार्य्यत्वात् कारणेन सह विनिवर्तते । नह्यद्वैतब्रह्मावगतौ निवृत्तायामविद्यायां तत्कार्य्यं द्वैतं जगत् पुनः क्षणमप्यवस्थातुं क्षम्यते । विद्या चावगतिः साक्षात्कार इति यावत् । सा चाविद्याविरोधिनी । विरोधश्चैककालावच्छेदेनैकदेशावृत्तित्वमित्युच्यन्त्यां तस्यां घटते तदत्यन्तनिवृत्तिरिति । न चैषा श्रुतिर्यथाभवत्पद्धति तादृग्ज्ञानानन्तरं सर्वस्य द्वैतस्यात्यन्तनिवृत्तिमभिधत्ते, किं तर्हि? तत्रभवतो वेदितुः सर्वभावम् । न चैतेनाद्वैतं ब्रह्म सेद्धुमर्हति । ततो व्यतिरेकेण सकारणस्य सर्वस्य द्वैतस्य तत्रभवतो वेदितुश्च स्पष्टप्रतिपत्तेः । नह्यनया ब्रह्मव्यतिरेकेण यद् भवति यश्च तद्वेत्ति

तदुभयं स्पष्टं न प्रतिपद्यते। प्रतिपत्तौ च दूरेण भवदिष्टसिद्धिः। यस्य हि ब्रह्मव्यतिरिक्तं सर्वमाविद्यकम्, अविद्या च ब्रह्मात्मैकत्वविद्या-निवर्त्या, तस्य **"अहं ब्रह्मास्मि"** इत्युद्यन्त्यां विद्यायां न तदवस्थातुं कल्पते। श्रुत्या चैतया तदवस्थानं विस्पष्टमवबोध्यते। तथा च कथं वयं ब्रह्मात्मैकत्वाभिधानपरामिमामवबुध्येमहि, कथं चानया ब्रह्मात्मभेदा-सिद्धिं प्रतिपद्येमहि। न च **"अहं ब्रह्मास्मि"** इत्यत्र ब्रह्मशब्दः परमात्मवचनोऽपि घटते। जीवात्मवद् भगवतो ब्रह्मणोऽपि **"अहं ब्रह्मास्मि"** इति वेदनेन सर्वभावस्योपदेशात्। यथा हि **"तद्**=तदेवं **यो यो देवानां**=मध्ये षष्ठीयं, **प्रत्यबुध्यत**=आत्मानम् "अहं ब्रह्मास्मि' इत्यवेत् **स तदभवत्**=सर्वमभवत्, **तथर्षीणां तथा मनुष्याणाम्"** इति देवर्षिमनुष्यसंज्ञां बिभ्रतो जीवात्मनः पुरुषस्य **"अहं ब्रह्मास्मि"** इति वेदनेन सर्वभाव उपदिश्यते तथा **"ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेदहं ब्रह्मास्मीति। तस्मात् तत् सर्वमभवत्"** इति भगवतो ब्रह्मणोऽप्यनुशिष्यते। तत्र ब्रह्म-शब्दस्य परमात्मवचनत्वे जीवात्मनः पुरुषस्य **"अहं ब्रह्मास्मि"** इति ज्ञानेन कथञ्चित् सर्वभावप्राप्त्युपदेशसम्भवेऽपि भगवतो ब्रह्मणस्तद्भाव-प्राप्त्युपदेशो न सम्भवति। नहि जीवात्मवद् ब्रह्म कदाचिदात्मानमजा-नदवतिष्ठते येन तस्यापि तद्भावप्राप्तिः **"अहं ब्रह्मास्मि"** इत्यात्मवे-दनप्रयोज्या कल्प्येत। तद्धि नित्यं सर्वज्ञं नित्यं सर्वशक्ति नित्यं च सर्वाधारत्वात् सर्वम्। यत्रेदमाम्नायते **"यो विश्वा अभि विपश्यति भुवना सं च पश्यति"** (ऋ० ३।४।१०।९) **"यः सर्वज्ञः सर्ववित्"** (मुं० १।१।९) **"स विश्वकृद् विश्ववित्"** (श्वे० ६।१५) **"यस्यामितानि वीर्या"** (ऋ० ६।२।१९।२१) **"पराऽस्य शक्तिर्विविधैव श्रूयते"** (श्वे० ६।८) **"पुरुष एवेदं सर्वम्"** (ऋ० ८।४।१७।२) **"ब्रह्मैवेदं विश्वम्"** (मुं० २।२।११) **"सर्वं खल्विदं ब्रह्म"** (छां० ३।१४।१) इति। न च नित्यसर्वज्ञसर्वशक्ति-

सर्वात्मकस्य भगवतस्तस्य सर्वभावप्राप्तिर्जीवात्मवद् **"अहं ब्रह्मास्मि"** इति ज्ञानप्रयोज्या कल्पयितुं शक्यते । **"तस्मात् तत् सर्वमभवत्"** इति पञ्चम्युपादानात्तु तस्य तद्भावप्राप्तिर्जीवात्मवदुक्तज्ञानप्रयोज्येति व्यक्तमधिगम्यते । तदिदमघटमानं नूनमत्रार्थान्तरवचनो ब्रह्मशब्द इत्यवगमयति । **किं**वचनस्तर्ह्यत्र ब्रह्मशब्दः स्यादिति चेत्? **सर्व**वचन इति निगदामः । **स्वस्मिन्निव स्वाविभक्ते परस्मिन्नपि स्वशब्दस्य प्रयोक्तुं शक्यत्वात्** । यथा हि स्वस्मिन् खलु स्वशब्दः प्रयुज्यते तथा स्वाविभक्ते परस्मिन्नपि प्रयोक्तुं शक्यते । नहि क्षीरेणाविभक्ते नीरे क्षीरशब्दो न प्रयुज्यते । जगज्जन्मादिहेतौ ब्रह्मणि चेदं सर्वमविभागेन वरिवृत्त्यत इति **"ब्रह्म वा इदमग्र आसीत्"** ( बृ० १। ४। १० ) इत्युपक्रमादेव पोस्फुट्यते । न चात्रास्ति कस्यचित् किञ्चिद् विप्रतिपत्तव्यम् । अन्यथा **"आत्मानमेव"** इत्यवधारणानुपपत्तेः । नहि तदानीमविभागानङ्गीकारेऽवधारणमिदं कथञ्चिदुपपद्यते । अत्यन्तासद्वादस्तु **"कथमसतः सज्जायेत"** ( छां० ६ ।२ । २ ) इति श्रुत्यैव प्रतिक्षिप्तत्वान्नाभ्युपगन्तुमीश्यते । **तस्मात्** सर्ववचनोऽयं ब्रह्मशब्द इति साधु निगद्यते । श्रुत्यन्तरदर्शनाच्च । **"तदक्षरं वेदयते यस्तु सोम्य ! स सर्वज्ञः सर्वमेवाविवेश"** (प्र० ४ । ११ ) **"सर्वमाप्नोति सर्वशः"** ( छां० ७ । २६ । २ ) इत्यादौ श्रुत्यन्तरे तावद् ब्रह्मशब्दस्थाने सर्वशब्दः प्रयुज्यमानो दृश्यते, तद्बलादिहापि सर्वशब्दस्थाने ब्रह्मशब्दः प्रयुक्त इत्यवगन्तुं शक्यते । समानत्वात् । समानं हि सर्वत्र पर्य्यायशब्दप्रयोगविषयं तत्रभवतामुपनिषत्कृतां शीलं, को नु नाम पर्य्यनुयोक्तुमर्हति । तदेवं ब्रह्मशब्दस्य सर्वार्थत्वे **"तद् यो यो देवानां प्रत्यबुध्यत स तदभवत्, तथर्षीणां तथा मनुष्याणाम्"** ( बृ० १ । ४ । १० ) इति देवर्षिमनुष्याणामुद्दिश्यमानो **"अहं ब्रह्मास्मि"** इति ज्ञाननिमित्तः सर्वभावोऽपि गौणो विज्ञातव्यो न मुख्यः । व्यस्तस्य मुख्यसमस्तभावानुपपत्तेः । नहि व्यस्तस्य मुख्यः समस्तभावः कदाचिदुपपद्यते । न चैकाकी देवदत्तो यज्ञदत्तो

विष्णुमित्रश्चैत्रो मैत्रो वा सर्वं ज्ञानसहस्रेणापि सम्पद्यते। न चानुपपद्यमानमर्थं श्रुतिः कर्हिचिदुपदेष्टुमर्हति। गौणस्तु स उपपद्यते। **तस्माद्गौण आस्थेयः। दृष्टत्वात्।** दृश्यते हि लोके यदा कश्चिदुदारधीः सर्वान् मनुपुत्रान् स्वात्मेत्यवबुध्यते तदा सर्वे ते तदात्मैव सम्पद्यन्ते। यत्र यथा च कामयते तत्र तथा समुदाचरन्तस्तूर्णमुपतिष्ठन्ते। **को नु** नामास्ति लोके यः सर्वमात्मेति पश्यन् सर्वात्मा भवन्न दृश्यते, लौकिकाश्चैनमेवम्भूतं सर्वोऽयमिति सहर्षं न ब्रुवते। न च दृष्टचरार्थेऽस्मिन् युक्ता विप्रतिपत्तिः। एतच्च श्रुत्यक्षरपर्य्यालोचनयाऽपि प्रव्यक्तमवगम्यते। श्रुतिर्हि **"तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च"** (बृ० १। ४। १०) इति वामदेवस्यैर्द्दर्शनमुदाहृत्य **"तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति, तस्य ह न देवाश्चनाभूत्या ईशते। आत्मा ह्येषां स भवति"** (बृ० १। ४। १०) इत्युपदिशति। यथा प्राक्तनो देव ऋषिर्मनुष्यो वा यः कश्चन महाभागः सर्वमहमस्मीत्यपश्यत् स सर्वमभवत्। यथर्षिर्वामदेवः। एवमधुनाऽपि यः कश्चित् सर्वमहमस्मीति पश्यति स नूनं सर्वं भवति। तथाभूतस्य च तस्य देवा अपि नाभूत्यै कल्पन्ते। देवा अत्राधिकारिकमण्डलस्था अभिप्रेयन्ते। यत्रेद वक्ष्यति **"प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः"** (वे० ४। ४। १२) इति। **किं** कारणं ते तस्य नाभूत्यै कल्पन्ते? यतः स तेषामप्यात्मा—देहस्यात्मेव नियामको जायत इत्यर्थः। न चैतस्माच्छ्रुत्यर्थात् सर्वमहमस्मीति पश्यतो मुख्यः सर्वभावः प्रतिपत्तुं शक्यते। **ननु** सर्वभावो मुख्यो न प्रतिपद्येत ब्रह्मभावो मुख्यः प्रतिपत्तुं शक्यते। जीवात्मब्रह्मणोरभेदस्याभ्युपगमादिति चेत्। **न। "यो यो देवानां प्रत्यबुध्यत"** इत्यादिभेदबोधकवाक्यानुपपत्तेः। नहि जीवब्रह्मणोरभेदे तान्येतानि भेदबोधकवाक्यानि कथञ्चिदुपपद्यन्ते। न चेमानि श्रुतिवाक्यानि तादृग्वेदनतः पुरस्ताद् वर्तमानमौपाधिकं भेदं गोचरयन्ति ततश्च पश्चिमोऽभेदावगम इति नास्ति काचनानुपपत्तिरिति युक्तं भाषणम्। उपाधेर्दुर्भणत्वेनौपाधिकभेदस्यापि दुर्भणत्वात्।

अविद्या ह्यायुष्मता तदुपाधिरभ्युपेयते, सा च स्वरूपाश्रयाभ्यां दुर्भणेति न तदुपाधिर्युज्यते । न चोपाध्यन्तरं स्यादिति वक्तुं शक्यते । अनभ्युपगमात् । अथोच्येत **"योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद । यथा पशुरेवं स देवानाम् । यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युः, एवमेकैकः पुरुषो देवान् भुनक्ति । एकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु । तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः"** (बृ० १ । ४ । १०) इत्युत्तरस्मिन् वाक्ये जीवात्मनो भगवतो ब्रह्मणश्च भेदज्ञानस्य निन्दितत्वाद् दृश्यमानो भेदोऽयमौपाधिको गम्यते । तदुपाधिश्च स्यादविद्या । तस्याः स्वरूपाश्रयाभ्यां दुर्भणत्वं च भूषणं न दूषणम् । अनिर्वाच्यत्वाभ्युपगमादिति । **नैतद् वक्तव्यम् ।** अन्यथा विज्ञानात् । यथा खल्वस्मादुत्तरवाक्याद् विज्ञातव्यं तथा न विज्ञायते । नह्यनेन जीवात्मनो भगवतो ब्रह्मणश्च भेदज्ञानं निन्द्यते येनौपाधिकस्तद्भेदो गम्येत, स्वरूपाश्रयाभ्यां दुर्भणा चाविद्या तदुपाधिरभ्युपेयेत । **किं तर्हि ?** यत् पूर्वं सर्वतोऽभ्युदयकारणम् **"अहं ब्रह्मास्मि"** इति वेदनमुपदिष्टं तदभावो मनुष्याणां कल्याणस्य हेतोर्बीभत्स्यते । नहि भवति तस्मिँस्तीव्रप्रयत्ना अपि ते कदाचित्कल्याणमवाप्तुं पारयन्ति । जीवात्मनो भगवतो ब्रह्मणश्च भेदज्ञानस्य निन्दायामभ्युपगतायामुपास्तिक्रियाकर्मतया स्त्रीलिङ्गेनोपात्तायाः परब्रह्मलक्षणायाः परदेवतायाः **"अन्योऽसौ"** इति पुँल्लिङ्गेन परामर्शो न घटते । स्वाभिन्नायास्तस्याः **"अथ योऽन्याम्"** इत्यन्यत्वेन निर्देशश्च नोपपद्यते । नचाभेदेन ब्रह्मोपासनं देवानामधिकारमपि विरुणद्धि येनैतदेषामप्रियं प्रतीयात् । ब्रह्मोपासनाङ्गभूतं मनुष्याणां परस्परसम्भेदलक्षणम् **"अहं ब्रह्मास्मि"** इति ज्ञानं हि तेषामधिकारप्रच्युतिहेतुत्वाद् भृशमप्रियत्वस्य कारणम् । अत एव च यत्रैष महामहिमा तावत् सम्भेदो विराजते तत एव ते देवा बिभ्यतो दृश्यन्ते । समानं हि लौकिकानां पारलौकिकानां च देवानामस्मिन् विषये मानसं वृत्तम् । किं न लोक्यते यदैवात्महितसाधनाय मनुष्याः

केचन कचित् परस्परं सम्भेत्तुमारभन्ते तत्साधनं च **"अहं ब्रह्मास्मि"** इति महामन्त्रं वक्तुमुपक्रमन्ते तदैव देवाः "नूनमेते मनुपुत्राः सम्भेदनाद् बलीयांसो भूत्वा यथाकामाधिकारान्नस्त्वरया प्रच्यावयिष्यन्ति द्रागित्येव च पशुभावं हित्वाऽस्मत्कल्पं देवभावं प्राप्स्यन्ति पुनश्च न कर्हिचिद-स्माकं भारं वक्ष्यन्तीति मा नामैते सम्भैत्सुः, मा नाम चाहं ब्रह्मा-स्मीति महामन्त्रं वेदिषुरिति महतीं चिन्तामापद्यन्ते । तत्सम्भेदविध्वं-सनाय च सूक्ष्मादपि सूक्ष्मेणोपायशतेन रात्रिदिवमीहन्ते । तदिदम-नुवदद्देवैतच्छ्रुतिवाक्यमुपदिशति भो मनुपुत्राः! यूयं चेदैहिकामु-ष्मिकमभ्युदयं सुखं कामयध्वे तदा नियमेन "अहं ब्रह्मास्मि" इति ज्ञानपूर्वकं जगतां पतिं परमात्मानं समुपासीध्वम् । नह्यतत्पूर्वकं परमा-त्मोपासनं कस्याप्यभ्युदयायावकल्पते । ते नूनमत्र सर्वथाऽज्ञातवेदोपनिष-त्तत्त्वाः स्वाभ्युदयपथस्य च दूरेण विज्ञातव्याः, ये तावदात्माभ्युदय-मभिकांक्षन्तोऽपि परस्परं न सम्भिद्यन्ते गिरिगुहानदनदीपुलिनादिषु निर्जनप्रदेशेषु चैकाकी भूत्वा जगतां पतिं परमात्मानं सततमूर्ध्वबाहु सम्भजमानाः काष्ठवदात्मनो भिदुरत्वं स्फुटं प्रकाशयन्ते । यूयं हि जगतीतलेऽभ्युदयसुखमनुभवितुमुदयध्वं न देवानां पशूभूत्वा दिवानिशं भारं वोढुम् । अतो यथाश्रुतिवाक्यं साङ्गं ब्रह्मोपासनं विधातव्यं स्वाभ्यु-दयाय च बुद्धिपूर्वकं प्रतिपलं प्रयतितव्यमिति । श्रुतिवाक्यस्य चैषोऽक्षरार्थः— यः कश्चि**दन्याम्**=आत्मतो भिन्नां परमात्मलक्षणां देवता**मुपास्ते**=प्रीति-पूर्वकं भजते, **अन्योऽसौ** यज्ञदत्तो**ऽन्यो**ऽहमस्मि देवदत्त इति च प्रत्येति स नूनं परस्परभेदप्रत्ययः परमात्मोपासको **न वेद**=न वेदतत्त्वं जानाति । परस्परसम्भेदप्रत्ययो हि परमात्मोपासनस्य प्रधानमङ्गमिति वेद-तत्त्वविदां परामर्शः । **"सङ्गच्छध्वम्"** ( ऋ० ८ । ८ । ४९ । २ ) **"समानो मन्त्रः"** ( ऋ० ८ । ८ । ४९ । ३ ) **"समानी व आकूतिः"** ( ऋ० ८ । ८ । ४९ । ४ ) **"समानी प्रपा सह वो अन्नभागः"** ( अथ० ३ । ६ । ३ । ४ ) इत्यादिमन्त्रवर्णेभ्यः । यश्चैतमनुपास्य परमात्मानमुपास्ते स न किञ्चित् फलं लभते । विगुणो-

पासनात् । तदेव हि विहितं कर्म शास्त्रदेशितं फलमुपजनयति यत् किल सगुणमनुष्ठीयते। फले जनयितव्ये कर्मणा वैगुण्याभावस्य नियमेनापेक्षितत्वात् । परस्परसम्भेदप्रत्ययाभावे च विगुणं परमात्मोपासनं कर्मेति कथं फलमुपजनयेत् । अत एवासौ परमात्मानमुपासीनोऽपि यथाकामं फलमलभमानो देवानां पशुभावान्न जातु विमुच्यते । अपि च! यथा गोप्रभृतिः पशुर्मनुष्याणामेवं स देवानामा मरणात् पशुर्भवत्येव। पशुत्वं सम्पादयति—यथा ह वै बहवो गोऽश्वादयः पशवो **मनुष्यं**=स्वस्वामिनं भुञ्ज्युः=पालयेयुः, एवं परस्परभेदधीरेकैकः पुरुषो देवान् **भुनक्ति**=कायेन वाचा मनसा पालयति । न चेत् तथा भुञ्ज्यात् तदैव पशुरिव शिरसि दैवं दण्डमाप्नुयात् । बहुपशुस्थानीयत्वं चास्यैकैकस्य पशुतमत्वद्योतनार्थम् । एकस्मिन्नेव पशावादीयमानेऽप्रियं स्वामिनो भवति किमु बहुषु । तत्रापीदृक्षेषु पशुतमेषु । तस्मादेषां देवानां तन्न प्रियं, किं तत्, यदेतत् परस्परसम्भेदात्मकं भगवदुपासनप्रधानान्नमैहिकामुष्मिकाभ्युदयसाधनम् **"अहं ब्रह्मास्मि"** इति महामन्त्रं **विद्युः**=विजानीयुरिति । **तदेवं** भेदस्यौपाधिकत्वासिद्धेरहं ब्रह्मास्मीति वेदितुरुपदिश्यमानो वेदननिमित्तः सर्वभावोऽपि न मुख्य इति निष्पन्नम् । न चामुख्ये तस्मिन् "अहं ब्रह्मास्मि" इति श्रुतिर्जीवात्मनः पुरुषस्य साक्षाद् ब्रह्मात्मकत्वमभिदधातीति वक्तुं पार्य्यते । तस्याः परमात्मोपासनाङ्गाभिधायकत्वस्य स्पष्टीकरणात् । एतेन **"यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषः । अयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्"** (बृ० २ । ५ । १) **"स यश्चायं पुरुषे यश्चासावादित्ये स एकः"** (तै० २ । ८) **"य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मि"** (छां० ४ । ११ । १) इत्यादिश्रुतिवाक्यान्यप्यन्तर्य्यामिपरब्रह्मपरमेश्वराभेदाभिधायकानि व्याख्यातानि वेदितव्यानि । तत्र जीवात्मनः पुरुषस्य परब्रह्मणः परमेश्वरस्य चाभेदस्याप्रसक्तत्वेनाभिधानानुपपत्तेः । **"अयमात्मा ब्रह्म"** (मां० २) **"प्रज्ञानं ब्रह्म"**

(ऐत० ३।५।३) इत्यादिश्रुतिवचनं तु भगवतः परब्रह्मणो नामान्तरमभिधत्ते न तेन जीवात्मनोऽभेदमिति नाव्यक्तमुपनिषच्छ्रमजुषां मतिमताम्।

अथोच्येत **"स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति"** (मुं० ३।२।९) इति श्रुत्या ब्रह्मविदो जीवात्मनो ब्रह्मभावोपदेशाद् गम्यते नास्ति तयोस्तात्त्विको भेद इति। **नैतद् वक्तव्यम्**। तद्भावोपदेशस्याविभागनिबन्धनत्वात्। न खल्वत्यन्ताभेदनिबन्धनोऽत्र ब्रह्मविदो ब्रह्मभाव उपदिश्यते येन तात्त्विको भेदो न स्यात्, **किं तर्हि?** अविभागनिबन्धनः। यदा ह्येष जीवात्मा पुरुषोऽभ्यासवैराग्याभ्यां निरुद्धाखिलवृत्तिः सम्प्रज्ञातसमाधेर्वैशारद्यादात्मानं पश्यन्नन्तरात्मानं परब्रह्म परमेश्वरं वेत्ति पश्यति साक्षात्कुरुते तदा तन्माहात्म्यात् प्रारब्धकर्मोपभोगे सर्वतो निवृत्तप्रकृतितत्कार्य्यसम्बन्धः केवलः शुद्धो भूत्वा तद् ब्रह्मोपसम्पद्याविभागेनावतिष्ठते। यत्रेदं श्रूयते **"तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"** (मुं० ३।१।३) इति। परमं साम्यम्=अविभागम्, उपैति=प्राप्नोति। तदेतदविभागेनावस्थानं च **"परेऽव्यये सर्व एकीभवन्ति"** (मुं० ३।२।७) इति पूर्वोपन्यस्तस्यैकीभावस्यार्थमभिव्यक्तुमवतरन्त्या श्रुत्या स्वयमेव नदीसमुद्रदृष्टान्तोपन्यासमुखेन प्रतिपाद्यते **"यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान् नामरूपाद् विमुक्तः परात् परं पुरुषमुपैति दिव्यम्"** (मुं० ३।२।८) इति। पूर्वोपन्यस्त एकीभावो नाविभागतोऽर्थान्तरमित्यस्याः श्रुतेरभिप्रायो विस्पष्टः। अत एव फलाधिकारे चतुर्थे सूत्रकारोऽपि सिद्धान्तयिष्यति **"अविभागेन दृष्टत्वात्"** (वे० ४।४।४) इति। यस्य चाविभागः स्यात्तदानीं स्वरूपतो विद्यमानमपि न पृथग् व्यपदेशं भजते किन्तु येनाविभागस्तदेवेति व्यपदिश्यते। नहि क्षीरेणाविभक्तं नीरं कदाचित् पृथग् व्यपदेशं भजमानमुपलभ्यते। क्षीरमेवेति तद्व्यवहारो व्यपदेशश्च

सर्वेषां नः प्रत्यक्षः । न च नद्योऽपि समुद्राविभक्ताः सत्यः कदाचित् पृथग् व्यपदिश्यमाना निरीक्ष्यन्ते, समुद्र एवेति तद्गोचरव्यपदेशो तु नास्ति कस्यचित् किञ्चिद् वैमत्यम् । यथा च तदानीं स्वरूपतो विद्यमानमपि नीरमविभागोपाधेः क्षीरमेव, नदीवृन्दं च तथाभूतं समुद्र एवेति व्यपदिश्यते तथा मुक्त्यवस्थायां स्वरूपतो विद्यमानोऽपि तत्रभवान् ब्रह्मविदविभागोपाधेः श्रुत्या ब्रह्मैवेत्युपदिश्यते इति मन्तव्यम् । अन्यथैवकारवैयर्थ्यप्रसङ्गात् । यस्य हि जीवात्मा न जातु ब्रह्मणो व्यतिरिच्यते तस्य ब्रह्मैवेति प्रयुज्यमानस्यैवकारस्य वैयर्थ्यं प्रसज्यते । को ह्यत्रैवकारस्यार्थ इति वक्तव्यम् । अब्रह्मभावस्य व्यावृत्तिरिति चेत् । न । तस्य ब्रह्मवेदनतः पुरस्तादप्रसक्तत्वेन व्यावर्त्यत्वासम्भवात् । प्रसक्तं हि व्यावर्त्यते नाप्रसक्तम् । न च ते ब्रह्मवेदनतः पूर्वं जीवात्मनि पुरुषेऽस्त्यब्रह्मभावप्रसक्तिः । तत्र ब्रह्मभावस्य सर्वदा सद्भावाभ्युपगमात् । अविद्यया तस्य तिरोधानादस्ति तत्प्रसक्तिरिति चेत् । न । विद्यास्वभावे ब्रह्मणि तदनुपपत्त्या तिरोधानासिद्धेः । विद्यास्वभावं हि ब्रह्म । "**आदित्यवर्णं तमसः परस्तात्**" (यजु० ३१ । १८) "**सत्यं ज्ञानमनन्तं ब्रह्म**" (तै० २ । १७) "**विज्ञानमानन्दं ब्रह्म**" (बृ० ३ । ९ । २८) इत्यादिश्रुतिशतेभ्यः । न च तत्स्वभावे तस्मिन् सवितरि तम इवाविद्या कथञ्चिदुपपद्यते । विरोधात् । न च तत्रानुपपद्यमानया तया तत्तिरोधानं कर्हिचित् सेद्धुमर्हति । निमित्तासिद्ध्या नैमित्तिकासिद्धेरप्यावश्यकत्वात् । किञ्चेदं तिरोधानम् । ब्रह्मभावज्ञानस्य प्रतिबन्ध इति चेत् ! स नोपपद्यते । स्वस्य स्वभावाज्ञानायोगात् । आत्मभावो हि ब्रह्मभावः । ब्रह्मात्मनोरैक्याभ्युपगमात् । न चात्मभावस्याज्ञानमात्मनो युज्यते । न ह्यात्मानमन्यथा जानन्नप्यविद्यया कश्चिदजानन्नुपलभ्यते । को नु नामास्ति पुमाँल्लोके यः स्वस्यात्मानं नाहमस्मीति मनुते । यदि किलात्मभावमविद्या तिरोदधीत तदाऽवश्यं सर्वो नाहमस्मीत्यात्मानं मन्वीत । न चैवं कश्चिन्मन्वानो दृश्यते । तस्मादात्मनो ब्रह्मभावतिरोधानमसिद्धम् । तदसिद्ध्या च व्यावर्त्याभावादेवकारवैयर्थ्यप्रसङ्गः सुव्यक्तः । यस्य तु

वैदिकस्य ब्रह्मात्मनोरनैक्यं तस्य ब्रह्मवेदनेन ब्रह्मप्राप्तौ ग्रामप्राप्तिवत् प्रसक्तस्य विभागस्य व्यावृत्तिरेवकारस्यार्थो विद्यते, नास्ति तद्वैयर्थ्यप्रसक्तिः। किञ्च यस्य ब्रह्मवेदनतः पूर्वमपि जीवात्मनि ब्रह्मभावाव्यतिरेको विद्यते तस्य"**ब्रह्म वेद ब्रह्मैव भवति**" इति श्रुत्युपदेशोऽपि न घटते। ततोऽब्रह्मविदो ब्रह्मभावाप्रतिपत्तेः स्पष्टत्वात्। नहि यो ब्रह्म वेद स ब्रह्मैव भवतीत्यतो यो ब्रह्म न वेद स ब्रह्म नैव भवतीति स्पष्टं न प्रतिपद्यते। भवतीति प्रयोगप्रातिकूल्यं च नाप्रत्यक्षम्। को ह्यत्र भवतेरर्थः—पूर्वसिद्धस्य सत्त्वाख्यानमाहोस्विदपूर्वस्य प्रादुर्भावः। **नाद्यः**। निमित्तोपादानानुपपत्तेः। नहि यत् पूर्वं सिध्यति तस्य सत्त्वाख्याने निमित्तोपादानं कथञ्चिदुपपद्यते। निमित्तं चेह साक्षादुपादीयते ब्रह्मवेदनम्। **नान्त्यः**। ब्रह्मभावस्यापूर्वत्वानभ्युपगमात्। न खलु जीवात्मनि ब्रह्मवेदनेनापूर्वो ब्रह्मभावः प्रादुर्भूयत इत्यभ्युपगम्यते। भवतीति प्रयोगोपपत्त्यर्थं चेदभ्युपगम्येत तदाऽपसिद्धान्तः प्रसज्येत। वर्तते हि पश्चादिव पुरस्तादपि ब्रह्मवेदनतस्ते ब्रह्मैव जीवात्मेति सिद्धान्तः। **अथोच्येत** ब्रह्मवेदनेनाविद्याकृताब्रह्मभावनिवृत्त्या ब्रह्मभावो जायत इत्युपचारादुपदेष्टुं शक्यते नास्ति तत्रापसिद्धान्तप्रसङ्गः कश्चिदिति। **नैतद्वक्तव्यम्**। मुक्तिप्रतिपादकसर्वश्रुतिविरोधप्रसङ्गात्। "**यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते**" (कठ० ६। १४) "**परमेवाक्षरं प्रतिपद्यते स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते**" (प्र० ४। १०) "**जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः**" (मुं० ३। १। २) "**तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति**" (मुं० ३। १। ३) "**यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान् नामरूपाद् विमुक्तः परात्परं पुरुषमुपैति दिव्यम्**" (मुं० ३। २। ८) "**संविशत्यात्मनाऽऽत्मानम्**" (मां० १२) "**ब्रह्म-**

**विदाप्नोति परम्**" (तै० २ । १) "**तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये**" (छां० ६ । १४ । २) इत्याद्या यावत्यः खलु मोक्षप्रतिपादिन्यः श्रुतयो वर्तन्ते तासु सर्वत्र तत्रभवतो ब्रह्मविदो वास्तवी ब्रह्मप्राप्तिरुपादिश्यते, तद्विस्पष्टप्रतिपत्त्यर्थं च नदीसमुद्रदृष्टान्तस्तावदुपन्यस्यते । चेद् "**ब्रह्म वेद ब्रह्मैव भवति**" (मुं० ३ । २ । ९) इत्यत्राविद्याकृताब्रह्मभावनिवृत्त्या कण्ठचामीकरप्राप्तिवदौपचारिकी ब्रह्मप्राप्तिरुपदिश्यत इत्यास्थीयेत तदा सर्वाभिस्ताभिर्विरोधः प्रसज्येत, तद्विस्पष्टप्रतिपत्त्यर्थमुपन्यस्तो नदीसमुद्रदृष्टान्तश्चोपरुध्येत । नह्यौपचारिक्यां तत्प्राप्तावभ्युपगतायां नदीसमुद्रदृष्टान्तः कर्हिचिदुपपादयितुं शक्यते । नदीस्थानापन्नो हि तत्रभवान् ब्रह्मविज्जीवात्मा, समुद्रस्थानापन्नं च जगज्जन्मादिकारणं ब्रह्म । तदुभयप्राप्तिश्च मोक्षः । न चैतत् त्रितयमेकब्रह्मवादे कथञ्चिदुपपद्यते । नचौपचारिकब्रह्मप्राप्त्युपपादकः कण्ठचामीकर इव कश्चिद् दृष्टान्तोऽप्युपन्यस्यमान उपलभ्यते येन तदानुगुण्येन सर्वश्रुतिषु तत्रभवतो ब्रह्मविदो ब्रह्मप्राप्तिरौपचारिकी नदीसमुद्रदृष्टान्तश्च तथाविधप्राप्त्युपपादकः कल्प्येत । न च दृष्टान्तोपन्यासाभावे तथाकल्पनं न्याय्यमीक्षामहे । न च वास्तवब्रह्मप्राप्तिपक्षे श्रुतिविरोधो वा दृष्टान्तोपरोधो वा कश्चिदासज्यते । यत्र चैतदुभयं न जातु प्रसज्यते स एव पक्षो भवद्भिरप्याश्रयितव्यः किं दोषबहुलया कुसृष्टकल्पनया । श्रुत्यन्तराच्च । "**योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति**" (बृ० ४ । ४ । ६) इत्यत्र श्रुत्यन्तरे तावद् भगवतो ब्रह्मविदो मोक्षावस्थायां ब्रह्मण्यप्ययः समाम्नायते । अप्ययश्च लयः । अपिपूर्वस्यैतेः प्रायेण तत्रैव प्रयोगोपलब्धेः । स च "**ब्रह्म वेद ब्रह्मैव भवति**" (मुं० ३ । २ । ९) इत्यत्राविद्याकृताब्रह्मभावनिवृत्त्यौपचारिकब्रह्मप्राप्तिकल्पनायां स्वस्य स्वस्मिन्नेवाभ्युपगम्येत । न च स स्वस्य स्वस्मिन्नभ्युपगन्तुमीश्यते । अनुभवपराहतत्वात् । अन्यस्य ह्यन्यस्मिन्नप्ययो लोके सर्वत्रानुभूयते न स्वस्य स्वस्मिन् । नहि समुद्रः समुद्रमप्ये-

तीति केनचित् कदाचिदवलोक्यते। गङ्गाद्या नद्यः समुद्रमपियन्तीति तु सर्वानुभवसिद्धम्। उदाह्रियते चोपनिषत्स्वपि **"स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति"** (प्र० ६।५) **"इमाः सोम्य! नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते पश्चात् प्रतीच्यः। ताः समुद्रात् समुद्रमेवापियन्ति"** (छां० ६।१०।१) इति। न चानुभवपराहतस्याभ्युपगमो युज्यते। अनेकत्रोपचारकल्पनापेक्षया च वरमेकत्रोपचारकल्पनम्। **"ब्रह्मैव सन्"** (बृ० ४।४।६) इत्यत्रैवकारेण च ब्रह्मणो जीवात्मनः पुरुषस्य प्रकृतितत्कार्य्यसम्बन्धो निःशेषेण व्यावर्त्यते। अप्ययो लयः। स चाविभागविशेषो न स्वरूपतो नाशः। उच्छेदवादप्रसङ्गात्। अभ्युपेयते च शाश्वतवादः। **"अभयं वै ब्रह्म। अभयं ह वै ब्रह्म भवति य एवं वेद"** (बृ० ४।४।२५) इत्यत्र च प्राप्तिकर्मा भवतिर्न भावकर्मेति सर्वं चतुरस्रम्। तथा चास्ति जीवब्रह्मणोस्तात्त्विको भेद इति निश्चयः॥ ४२॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"पत्यादिशब्देभ्यश्च"** ॥ ४३॥

ब्रह्मेत्यधिक्रियते। यत्र पूर्वं हेतुरुक्तस्तत्रैव हेत्वन्तरमेतदिति चार्थः। **पत्यादिशब्देभ्यः**=वेदोपनिषत्सु प्रयुक्तेभ्यः परब्रह्मविषयेभ्यः सर्वाधिपत्यादिशब्देभ्यो जीवात्मनो भिन्नं ब्रह्म गम्यत इत्यर्थः।

यदि हि जीवात्मनो ब्रह्म न तावद् विशिष्येत जीवात्मा च ततो न विभिद्येत तदा ब्रह्मवज्जीवात्मन्यपि सर्वाधिपत्यादयः शब्दाः प्रयुज्येरन्। द्वयोरभेदेनैकत्र प्रयुक्तानामपरत्रापि प्रयोक्तुं शक्यत्वात्। नहि पृथिवीभेदेषु पृथिवीशब्दो जलभेदेषु जलशब्दोऽग्निभेदेषु चाग्निशब्दो न प्रयोक्तुं शक्यते। ते च न जातु जीवात्मनि ब्रह्मवत् प्रयुज्यन्ते। ब्रह्मणि चास्ति तेषां प्रयोगः प्रत्यक्षः **"यो विश्वस्य जगतः प्राणतस्पतिः"** (ऋ० १।७।१२।५) **"स वा अयमात्मा सर्वेषां**

भूतानामधिपतिः सर्वेषां भूतानां राजा" (बृ० २ । ५ । १५) "एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः" (बृ० ४ । ४ । २२) "सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च (बृ० ५ । ६ । १) इत्यादिः । न च प्रत्यक्षमिमं शक्यते कथञ्चिदन्यथयितुम् । तस्माद् ब्रह्मणो भिन्नो जीवात्मा, जीवात्मनो भिन्नं ब्रह्म, द्वयोश्च तात्त्विको भेद इति स्फुटं विज्ञायते ॥ ४३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादवैदिकमुनिविरचितायां वेदान्तसूत्रवैदिकवृत्तौ प्रथमाध्यायस्य तृतीयः पादः ॥





# प्रथमोऽध्यायः

## चतुर्थः पादः

“**अथातो ब्रह्मजिज्ञासा**” (वे० १ । १ । १) इति ब्रह्मणो जिज्ञासामवतार्य्य तस्य जिज्ञास्यत्वोपपत्त्यर्थं त्रिषु पादेषु कानिचित्सन्दिह्यमानानि स्पष्टास्पष्टब्रह्मलिङ्गकानि श्रुतिवाक्यानि विचारितानि । सम्प्रति तस्य “**जन्माद्यस्य यतः**” (वे० १ । १ । २) इत्युक्तं जगज्जन्मादिकारणत्वलक्षणं लक्षणमुपपादयितुं कानिचित् कारणपराणि श्रुतिवाक्यानि विचारणीयान्यवशिष्यन्ते । तदर्थमिमं चतुर्थं पादमारभमाणः पूर्वं तावत् तत्कारणत्वनिर्वाहिकां प्रकृतिमाशङ्क्य यथासिद्धान्तं व्यवस्थापयति—

**“आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च” ॥ १ ॥**

**एकेषाम्**=आथर्वणिकानामा**नुमानिकमपि**=ब्रह्मवदित्यपेरर्थः, आर्षसरणमनुमानं, तेन विशेषतो विस्तरेण च निरूपितं प्रकृत्याख्यं प्रधानमपि स्वातन्त्र्येण जगज्जन्मादिकारणं परिगृह्यत इति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः? **शरीररूपकविन्यस्तगृहीतेः**=रूपको दृष्टान्तः, स हि दार्ष्टान्तिकं निरूपयति, गृहीतिर्ग्रहणं, शरीरस्य रूपकेण दृष्टान्तेन विन्यस्तमुपन्यस्तं प्रतिपादितं यत् प्रकृत्याख्यं प्रधानं, तस्य गृहीतेर्ग्रहणादुपादानात् । **दर्शयति च**=प्रतिपादयति च श्रुतिरित्यर्थः ।

**अथोच्येत**-यदुक्तं खलु जगज्जन्मादिकारणं ब्रह्म, तन्नोपपद्यते । अथर्वशाखिनां प्रकृत्याद्व्यस्य प्रधानस्यापि स्वातन्त्र्येण जगज्जन्मादिकारणतया परिग्रहणात् । अस्ति तावदाथर्वणिकानामुपनिषदि मुण्डके श्रुतिः

**"यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षराद् विविधाः सोम्य! भावाः प्रजायन्ते तत्र चैवापियन्ति"** (मुं० २ । १ । १) इति । **यथा**=येन प्रकारेण **सुदीप्तात्**=सुप्रज्वलितात् **पावकात्**=अग्नेः **सहस्रशः**=अनेकशः **सरूपाः**=समानरूपा ज्योतिष्ट्वेन सदृशा **विस्फुलिङ्गाः**=कणाः **प्रभवन्ते**=प्रजायन्ते, तथा**ऽक्षरात्**=प्रकृत्याख्यात् प्रधानाद् **विविधाः**=नानाविधा अनेकशो **भावाः**=स्वसमानरूपाः पदार्थाः **सोम्य**= हे सोमपानार्ह! **प्रजायन्ते**=सर्गादावुत्पद्यन्ते । **तत्रैव च**=संहारवेलायां तस्मिन्नेवाक्षरे प्रधाने **चापियन्ति**=प्रलीयन्त इत्यर्थः । तत्र प्रत्यक्षं प्रकृत्याख्यं प्रधानं स्वातन्त्र्येण जगज्जन्मादिकारणं परिगृह्यते । चेदिदं स्वातन्त्र्येण तत्कारणं न भवेत् न ततो भावानां प्रभवः प्रलयश्चाख्यायेत ! नहि स्वातन्त्र्येण कारणत्वाभावे ततो भावानां प्रभवः प्रलयश्चाख्यातुं शक्यते । प्रभवप्रलयाख्यानेन स्थित्याख्यानमर्थाद् गम्यते । त्रयं चैतत् कारणत्वस्य सम्पादकमिति प्रतिपद्यन्ते युक्ताः । तच्चेह प्रकृतौ प्रधाने सम्पद्यमानमुपलभामहे न जातु ब्रह्मणि । न चात्र **"यया तदक्षरमधिगम्यते"** (मुं० १ । १ । ५) **"तथाऽक्षरात् सम्भवतीह विश्वम्"** (मुं० १ । १ । ७) इत्यादिवदक्षरशब्दो ब्रह्मवचन एव स्यान्न प्रकृतिवचन इति वक्तुमीश्यते । विशेषणानुपपत्तेः । इह **"सरूपा"** इति विशेषणं खलु भावानामुपादीयते । तच्चाक्षरशब्दस्य प्रकृतिवचनतायामुपपद्यते न ब्रह्मवचनतायाम् । नहि प्रजायमानास्ते ते भावाः कीर्हचिद् ब्रह्मसरूपाः प्रजायन्ते । चेतनं हि ब्रह्म, भावाश्चाचेतनाः । न चाचेतनानां तेषां चेतनब्रह्मसारूप्यं कथञ्चिदवकल्पते । प्रकृतिसारूप्यं तु तेषां सुव्यक्तम् । अचेतनत्वसामान्यात् । अचेतना किल प्रकृतिः, अचेतनाश्चामी प्रजायमानाः सर्वे भावा इति व्यज्यतेतरामुभयोस्तयोः सारूप्यम् । **"अक्षरात् परतः परः"** (मुं० २ । १ । २) इत्युत्तरस्मिन् वाक्ये च पूर्ववाक्याभिहितादक्षरात् परत्वं ब्रह्मणोऽभिधीयते । चेदत्राक्षरशब्दो ब्रह्मवचनो भवेत् तदा न जातु तत्र

तस्य तत्परत्वमभिधीयेत। नहि स्वस्य स्वपरत्वमभिधातुं शक्यते। प्रकृतिवचनत्वे चास्ति प्रकृतेः परो जीवात्मा ततश्च परः परब्रह्म परमेश्वर इति तस्य तत्परत्वाभिधानं युज्यते। तथाच प्रकृतिवचन एवात्राक्षरशब्दो न ब्रह्मवचन इत्यपरोक्षम्। प्रकृतिः प्रधानमिति चानर्थान्तरम्। तस्य जगज्जन्मादिकारणत्वेन परिग्रहे चानुपपन्नं ब्रह्मणो **"जन्माद्यस्य यतः"** (वे० १।१।२) इत्युक्तं तत्कारणत्वमिति। **नैतद् वक्तव्यम्।** अत्र शरीरदृष्टान्तेनोपन्यस्तस्य प्रधानस्य परिग्रहणाद् ब्रह्मणो जगज्जन्मादिकारणत्वोपपत्तेः। यदि ह्युपाहृतश्रुतौ खलु स्वतन्त्रं किञ्चिदक्षरशब्दवाच्यं प्रकृत्याख्यं प्रधानं जगज्जन्मादिकारणं परिगृह्येत तदाऽवश्यं ब्रह्म तत्कारणं नोपपद्येत। न चात्र तादृशं तत् परिगृह्यते। किन्तु शरीरदृष्टान्तेनोपन्यस्तम्। यत् किल प्रधानमन्यत्र श्रुत्यन्तरे शरीरदृष्टान्तेनोपन्यस्यते तदेवात्रोपादीयते न परपरिकल्पितं स्वतन्त्रं किञ्चित्तत्त्वम्। तच्च स्वयं जगज्जन्मादिकारणं भवद् ब्रह्मणस्तत्कारणत्वं निर्हरति न जातु परिहरति। शरीरस्थानापन्नं हि तत्। यथाऽऽत्माधिष्ठितं तन्तुनाभिशरीरं खलु तन्तुकारणमस्मदादिशरीरं वा केशलोमादिकारणं भवदात्मनस्तत्कारणत्वं निर्वर्तयति तथा ब्रह्मशरीरत्वाद् ब्रह्माधिष्ठितं प्रधानमपि जगज्जन्मादिकारणं सम्पद्यमानं ब्रह्मणस्तत्कारणत्वं निष्पादयति। नहि यद् यदधिष्ठितं कारणं सम्पद्यते तेन तत्कारणता निष्पादयितुं न शक्यते। प्रधानं चात्मना शरीरमिव ब्रह्मणाऽधिष्ठितमिति कथं न तस्य तत्कारणतां निष्पादयेत्। यथा खल्वात्मनः केशलोमादिकारणत्वे द्वारं शरीरं, तद्विना तस्य तत्कारणत्वानुपपत्तेः, तथा शरीरकल्पत्वात् प्रकृतिलक्षणं प्रधानमपि ब्रह्मणो जगज्जन्मादिकारणत्वे द्वारं वेदितव्यम्। तद्विना तस्यापि तत्कारणत्वानुपपत्तेः। द्वारेण च द्वारिणः कारणत्वं निर्वाह्यते नत्वपोद्यते। प्रधानस्य तस्य शरीरकल्पत्वं चोदाहरणपुरस्सरं ब्रह्मणो जगज्जन्मादिकारणत्वं प्रतिपादयन्ती श्रुतिर्दर्शयति **"यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति। यथा सतः पुरुषात् केशलोमानि, तथाऽक्षरात् सम्भवतीह विश्वम्"**

( मुं० १ । १ । ७ ) इति । यथा खलु शरीरिणो लूताकीटाज्जालतन्तवः, स्वस्वबीजाधारभूतायाः पृथिव्या व्रीहियवाद्योषधयः, सशरीरात् पुरुषात्मनः केशलोमानि च यथाकालं प्रजायन्ते तथा प्रकृतिशरीरादक्षराद् ब्रह्मणः सर्वमिदं जगदुत्पद्यत इति विस्पष्टमनेन प्रतिपद्यते । न चैवं प्रतिपत्तौ सत्यां स्वतन्त्रं जगज्जन्मादिकारणं प्रकृत्याख्यं प्रधानं कल्पयितुं शक्यते । ब्रह्मशरीरतया कारणं भवच्चैतन्न ब्रह्मणो जगज्जन्मादिहेतुतां विरुणद्धि । समानविषये हि विरोध आपतति नासमानविषये । प्रधानब्रह्मणोश्चोपादाननिमित्तकारणत्वेन भिन्नविषयत्वान्नास्ति समानो विषय इति कथं विरोध आपतेत् । न चाविरोधे जगज्जन्मादिकारणं ब्रह्म नोपपद्यत इति वक्तुं पार्य्यते । तस्मादुपपन्नं ब्रह्मणो **"जन्माद्यस्य यतः"** ( वे० १ । १२ ) इति लक्षणम् ॥ २ ॥

ननु शरीरकल्पं चेत् प्रकृत्याख्यं प्रधानमभ्युपगम्येत तदाऽस्मदादिशरीरवत् स्थूलं प्रसज्येत । तथा च कार्य्यं भवेन्न कारणम् । स्थूलस्य कार्य्यत्वनियमात् । तत्राह—

**"सूक्ष्मं तु तदर्हत्वात्" ॥ २ ॥**

आनुमानिकमित्यनुवर्तते । तुना स्थूलमिति व्यावर्त्यते । **तत्**=आनुमानिकं तत् प्रधानं **सूक्ष्मं**=निरवयवमभ्युपगम्यते, कुतः ? **अर्हत्वात्**=कार्य्यमात्रकारणतायोग्यत्वादित्यर्थः ।

न तावदेष नियमो यद् यत्कल्पं विधेत तत् सर्वथा तत्तुल्यं भवेत् । नहि रमणीनां चन्द्रकल्पं मुखं कदाचित् सर्वथा चन्द्रेण तुल्यं भवति । यत्किञ्चित्सादृश्यनिबन्धनो ह्येष व्यपदेशः । यथा स्वस्वात्माधिष्ठितं शरीरं केशलोमादिकारणं वर्तते तथा ब्रह्माधिष्ठितं प्रधानमप्यस्ति महदादिकार्य्यमात्रकारणमिति शरीरकल्पं व्यपदिश्यते । न च व्यपदेशः क्वचिद् धर्मान्तरं प्रसञ्जयन् दृश्यते येनात्रापि तथा कल्प्येत । न चादृष्टस्य कल्पनं न्याय्यम् । महदादिकार्य्यमात्रस्य च तदेव कारणं भवितुमर्हति यत् तदपेक्षया सूक्ष्मं स्यात् । स्थूलस्य तन्मध्यपति-

त्वेन कारणत्वानुपपत्तेः सावयवं हि स्थूलमित्युच्यते यथा निरवयवं सूक्ष्मम् । तच्च कार्य्यम् । यत् सावयवं तत्कार्य्यं यत्कार्य्यं तत्सावयवमिति समव्याप्तेः । महदादिकार्य्यमात्रस्य कारणप्रतिपित्सायां चाकार्य्यं किञ्चिदुपतिष्ठते न कार्य्यमिति न स्थूलं तत्कारणमुपपद्यते । प्रकृत्याख्यं प्रधानं च सूक्ष्मम् । अकार्य्यत्वात् । तदेव खलु प्रधानमस्माभिरभ्युपगम्यते यत्रावयवावयविधारा विश्राम्यते । यदि तत्कारणमपि किञ्चिदास्थीयते तदा नूनमिदं कार्य्यं भवेत् । अवयवावयविधारां च न तत्र विश्राम्येत । न च तत्कारणं किञ्चिदास्थीयते । अनवस्थाप्रसङ्गात् । अत एवोक्तं दर्शनान्तरे **"मूले मूलाभावादमूलं मूलम्"** ( सां० १ । ६७ ) इति । यच्च न कार्य्यं तन्निरवयवम् । यच्च निरवयवं तत् सूक्ष्मम् । प्रधानस्य प्रकृतेः सूक्ष्मत्वं च श्रुतिस्मृतिभिः साक्षादुपदिश्यते **"सूक्ष्माच्च तत्सूक्ष्मतरं विभाति"** ( मुं० ३ । १ । ७ ) **"तद्धेदं तर्ह्यव्याकृतमासीत्"** ( बृ० १ । ४ । ७ ) **"सौक्ष्म्यात् तदनुपलब्धिः"** ( सां० १ । १०९ ) **"सूक्ष्मविषयत्वं चालिङ्गपर्य्यवसानम्"** ( यो० १ । ४५ ) इति । **ननु** प्रधानात् प्रकृतेरप्यस्ति सूक्ष्मो जीवात्मा, ततश्च सूक्ष्मः परब्रह्म परमेश्वर इति । **सत्यम्** । उपादानत्वेन सौक्ष्म्यस्य तत्रैव पर्य्यवसानात् । उपादानत्वेन हि सौक्ष्म्यमिह विवक्ष्यते न हेतुत्वेन । तच्च जगज्जन्मादिकारणे प्रकृतौ प्रधाने पर्य्यवस्यति न जीवात्मनि न वा परब्रह्मणि परमेश्वरे । तयोरुभयोर्हेतुत्वेनोपादानत्वाभावात् । यत्र च तत्पर्य्यवसानं तत् कार्य्यमात्रकारणं घटते नास्ति तत्र संशयलवावकाशः । तस्माच्छरीररूपं सूक्ष्मं प्रधानं जगज्जन्मादिकारणमिति युक्तमभ्युपगम्यते ॥२॥

**ननु** जगज्जन्मादिकारणं प्रकृत्याख्यं प्रधानं चेदभ्युपेयते तदा स्वाधीनमभ्युपेतव्यं न शरीररूपं पराधीनम् । नहि यत् पराधीनं यमर्थं निष्पादयते न तं स्वाधीनं निष्पादयितुं पारयते । तन्निष्पादकशक्तेस्तत्र सर्वदा विद्यमानत्वात् । अन्यथा पराधीनमपि न तन्निष्पादयेत् । **तत्राह—**

"तदधीनत्वादर्थवत्" ॥ ३ ॥

आनुमानिकमित्यनुवर्तते । **तदधीनत्वात्**=तदाऽधिक्रियमाणं ब्रह्म परामृश्यते, ब्रह्माधीनत्वाद**र्थवत्**=आनुमानिकं प्रधानमर्थवद् भवतीत्यर्थः ।

प्राणिनां भोगापवर्गसाधनं जगदिदमुत्पादयद्धि प्रधानमर्थवत् सम्पद्यते । जगच्च प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयत्वान्मनसाऽप्यचिन्त्यरचनारूपम् । न च तदुत्पादनमचेतनेन तेन सर्वज्ञसर्वशक्तिब्रह्माधिष्ठानाभावे कथञ्चिदुपपद्यते । **यथा** खलु घटशरावोदञ्चनादिशक्तिरपि मृत्सा न तावद् घटशरावोदञ्चनादिकमुत्पादयितुमीष्टे यावज्ज्ञानक्रियाशक्तिपूर्णेन कुम्भकारेण नाधिष्ठीयते **तथा** विश्वशक्तिप्रधानमपि न तावद् विश्वमिदं जगदुत्पादयितुं कल्पते यावन्निरतिशयज्ञानक्रियाशक्तिना परब्रह्मणा परमेश्वरेण नाधिष्ठीयते । अचेतनत्वसामान्यात् । नहि मृत्सावत् प्रधानमपि किञ्चिच्चेतयते । यच्च न चेतयते न ततो यथादेशं यथाकालं यथानिमित्तं जायमानं नानाविधं भोग्यजातमाश्रित्य वर्तमानस्यास्य लोकत्रयस्योत्पादो युज्यते । न च तदुत्पादाभावे भोगापवर्गौ प्राणिनां सम्भवतः । तदसम्भवे च न प्रधानस्यार्थवत्त्वं स्वप्नेऽपि सम्भावयितुं शक्यते । निरर्थकस्य च नोपादानमिष्यते । **तस्माद्** ब्रह्माधीनमेव प्रधानं जगज्जन्मादिकारणं युक्तमभ्युपेतुं न स्वाधीनम् ॥ ३ ॥

प्रधानस्य ब्रह्माधीनकारणत्वे हेत्वन्तरं समुच्चिनोति—

"ज्ञेयत्वावचनाच्च" ॥ ४ ॥

आनुमानिकं तदधीनमिति च विपरिणम्य पदद्वयमनुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । **ज्ञेयत्वावचनात्**=ज्ञेयत्वानभिधानादानुमानिकं प्रधानं तदधीनं कारणमभ्युपगन्तव्यमित्यर्थः ।

यदि हि प्रधानं स्वातन्त्र्येण जगज्जन्मादिकारणं विधेत तदा ज्ञेयत्वेनावश्यमुच्येत । नहि स्वातन्त्र्येण जगज्जन्मादिकारणं वोभूयते ज्ञेयत्वेन च नोच्यत इति सम्भवति । यत्स्वातन्त्र्येण जगज्जन्मादिकारणं

तज्ज्ञेयं परमपुरुषार्थहेतुत्वाद् ब्रह्मवदिति व्याप्तेः। अस्ति तावत् स्वातन्त्र्येण जगज्जन्मादिकारणं ब्रह्म, तच्च ज्ञेयमुच्यते **"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद् ब्रह्म"** (तै० ३। १) इत्याद्यासु श्रुतिषु। न चैवं प्रधानं ज्ञेयत्वेनोच्यमानं क्वचिदुपलभामहे। न चोपलम्भाभावे तस्य स्वातन्त्र्येण तत्त्वमभ्युपगन्तुमुत्सहते। **"ज्ञाज्ञौ द्वावजावीशानीशावजा ह्येका भोक्तृभोगार्थयुक्ता। अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत्"** (श्वे० १। ९) **"एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित्। भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्"** (श्वे० १। १२) इत्याद्यासु श्रुतिषु च प्रेर्य्यत्वेन ब्रह्माधीनतया कारणं प्रधानं ज्ञेयमुच्यते न स्वातन्त्र्येणेति न ता उदाहर्तुं शक्यन्ते। ब्रह्मप्रेर्यत्वेन तस्य ज्ञेयत्वाभिधाने च कारणत्वमपि तदधीनमेवोक्तं विज्ञातव्यमिति युक्तं प्रतिपद्यामहे। **तस्माद्** ब्रह्माधीनं भवदेव प्रधानं जगज्जन्मादिकारणं न जातु स्वाधीनमिति निश्चयः॥ ४॥

**अत्राशङ्क्य** निराचष्टे—

**"वदतीति चेन्न प्राज्ञो हि प्रकरणात्"**॥ ५॥

आनुमानिकमित्यनुवर्तते। **वदति**=आनुमानिकं प्रधानं ज्ञेयत्वेनाख्याति श्रुतिरिति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः? **हि**=यतः **प्राज्ञः**=परमेश्वरस्तत्र ज्ञेयत्वेनाख्यायते। कुतोऽवगम्यते? **प्रकरणात्**=प्रक्रियात इत्यर्थः।

**अथोच्येत** न खलु ज्ञेयत्वावचनात् प्रधानं स्वातन्त्र्येण जगज्जन्मादिकारणं न भवतीति युक्तमभिधीयते। तस्य काठके ज्ञेयत्वस्याप्याख्यानात्। अस्ति तावत् काठकोपनिषदि श्रुतिः **"अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं**

**महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते**" (कठ० ३ । १५) इति । **निचाय्य**=ज्ञात्वा । सा च शब्दादिगुणतो हीनस्याभूतभौतिकस्य महतः परस्य नित्यस्य निचाय्यत्वमभिदधती नूनं जगतः कारणस्य प्रधानस्य ज्ञेयत्वमाख्यातीति गम्यते । नहि शब्दादिगुणतो हीनं महतः परं नित्यं किञ्चित् प्रधानतोऽन्यत् सम्भवति । **महच्छब्दो ह्यत्र** महत्तत्वमाह । यत्किलौपनिषदाः पुरुषार्थक्रियाक्षमत्वाद् भोग्यत्वादस्मं योगाश्च विश्वस्य जगतो बीजरूपत्वाल्लिङ्गमात्रमित्याचक्षते । महत्तत्वात् परं च प्रधानं प्रसिद्धम् । यत्रेदं श्रूयते "**महतः परमव्यक्तम्**" (कठ० ३ । ११) इति । प्रधानमव्यक्तमव्याकृतं माया प्रकृतिरिति समानार्थम् । न च प्रसिद्धस्यातिक्रमो युज्यते । **तस्मादस्ति ब्रह्मवत्** प्रधानमपि स्वातन्त्र्येण जगज्जन्मादिकारणमित्यध्यवसातव्यमिति । **नैतद् वक्तव्यम्** । तत्र परब्रह्मणः परमेश्वरस्य ज्ञेयत्वेनाभिधानात् । यदि ह्युदाहृतश्रुतौ खलु प्रधानं ज्ञेयत्वेनाभिधीयेत तदाऽवश्यं तत् स्वातन्त्र्येण जगज्जन्मादिकारणमध्यवसीयेत । न च तत् तत्र ज्ञेयत्वेनाभिधीयते । यत्कारणं प्रकरणमिदं परब्रह्मणः परमेश्वरस्य वर्तते न प्रधानस्य । न चान्यस्य प्रकरणेऽन्यज्ज्ञेयत्वेनाभिधातुं शक्यते । परमेश्वरप्रकरणं च बहुनिरूपणानन्तरं भगवतस्तस्य सकार्यायाः प्रकृतेस्तद्भोक्तुर्जीवात्मनः पुरुषाच्च परत्वमुक्त्वा "**यच्छेद् वाङ्मनसी प्राज्ञस्तद् यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि महति नियच्छेत् तद् यच्छेच्छान्त आत्मनि**" (कठ० ३ । १३) इति तज्ज्ञानसाधनं योगं चाख्याय तदभ्यासप्रकर्षेण जातज्ञानस्य "**निचाय्य तं मृत्युमुखात् प्रमुच्यते**" (कठ० ३ । १५) इति मृत्युमुखप्रमोक्षणफलाभिधानादवगम्यते । नहि मृत्युमुखात् प्रमोक्षणं नाम फलं परमेश्वरज्ञानतोऽन्यस्य कस्यचिदवकल्पते, वेदोपनिषत्सु वा समाम्नातमुपलभ्यते, येन तं परित्यज्य प्रधानस्य प्रकरणमिदं परिकल्प्येत । न च यस्येह प्रकरणं न विद्यते तस्य ज्ञेयत्वेनाभिधानं कथञ्चित् प्रतिपत्तुं शक्यते । महच्छब्दश्च महत्तत्ववचनोऽप्यत्र कारणे प्रधाने प्रयुक्तो वेदि-

तव्यः । **यथा** हि कारणशब्दः खलु कार्य्ये प्रयुज्यते "**गोभिः श्रीणीत मत्सरम्**" ( ऋ० ७ । १ । ३ । ४ ) इत्यादौ, **तथा** कार्य्यशब्दोऽपि कारणे प्रयोक्तुं शक्यते । "**तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात् प्राणो मनः सत्यम्**" ( मुं० १ । १ । ८ ) इत्यादौ तत्रापि तत्प्रयोगस्य दृष्टत्वात् । अत्र "**प्राणः**" इति कार्य्यशब्दः कारणेऽहङ्कारे प्रयुक्तः, **सत्यं**=स्थूलसूक्ष्मभूतजातमित्यर्थः । तदेवं महतः परत्वं परब्रह्मणः परमेश्वरस्यापि सूपपद्यते । प्रधानं च प्रधानात् परं न भवतीति विस्पष्टम् । तथा च कथमिह प्रधानं ज्ञेयत्वेनोच्यत इति प्रतिपद्येमहि । परब्रह्मणः परमेश्वरस्य ज्ञेयत्ववचने च प्रधानं स्वातन्त्र्येण जगज्जन्मादिकारणं न वर्तत इति युक्तमभिधीयते नायुक्तम् ॥ ५ ॥

परब्रह्मणः परमेश्वरस्य तत्र ज्ञेयत्ववचने युक्त्यन्तरमाह—

"**त्रयाणामेव चैवमुपन्यासः प्रश्नश्च**" ॥ ६ ॥

**एवं च**=प्राज्ञस्य परब्रह्मणः परमेश्वरस्य ज्ञेयत्ववचने च **त्रयाणामेव**=चतुर्थव्यवच्छेदोऽवधारणार्थः, अग्निजीवपरमात्मनामेवो**पन्यासः**=प्रश्नोत्तरत्वेनोपवर्णनं प्रतिवचनमिति यावत्, **प्रश्नश्च**=पृच्छा च सङ्गच्छेते इत्यर्थः !

**कठ**वल्लीषु हि सर्वासु समाप्तिपर्य्यन्तमन्वेषणादग्निजीवपरमात्मनामेव त्रयाणां प्रश्नप्रतिवचने उपलभ्येते । तद् यथा "**स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो ! प्रब्रूहि तं श्रद्दधानाय मह्यम् । स्वर्गलोका अमृतत्वं भजन्त एतद् द्वितीयेन वृणे वरेण**" ( कठ० १ । १३ ) इत्यग्निविषयः प्रश्नः, "**येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः**" ( कठ० १ । २० ) इति जीवात्मविषयः, "**अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत**

**त्पश्यसि तद् वद**" ( कठ० २ । १४ ) इति च परमात्मविषयः, तथा "**लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा**" ( कठ० १ । १५ ) इत्यादिकमग्निविषयं प्रतिवचनम्, "**न सांपरायः प्रतिभाति बालम्**" ( कठ० २।६ ) इत्यादिकं पारोक्ष्येण, "**हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् । यथा च मरणं प्राप्य आत्मा भवति गौतम**" ( कठ० ५।६ ) इत्यादिकं चापरोक्ष्येण जीवात्मविषयम्, "**अणोरणीयान् महतो महीयानात्माऽस्य जन्तोर्निहितो गुहायाम् । तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः**"(कठ० २।२०) इत्यादिकं च परमात्मविषयम् । न चैभ्यस्त्रिभ्योऽन्यस्य चतुर्थस्य कस्यचित् प्रश्नो नापि तद्विषयं प्रतिवचनमुपलभ्यते । "**अशब्दमस्पर्श-मरूपमव्ययम्**" ( कठ० ३ । १५ ) इत्यादौ चेत् प्रधानस्य निचाय्यत्वमुच्यत इति मन्येत तदा तद्विषयः प्रश्नोऽपि कल्प्येत । प्रतिवचनस्य प्रश्नापेक्षत्वात् । तथासोपलभ्यमाने अग्निजीवात्मपरमात्मविषये प्रश्नप्रतिवचने न सङ्गच्छेयाताम् । नहि चतुर्थस्य प्रधानस्य कल्प्यमाने प्रश्ने प्रतिवचने चाग्न्यादित्रितयस्य ते कथञ्चित् सङ्गच्छेते । तत्साङ्गत्यं चावश्यकम् । उपलभ्यमानस्य कल्प्यमानेन निह्नोतुमशक्यत्वात् । नह्यु-पलभ्यमानं किञ्चित् कल्प्यमानेन निह्नोतुं शक्यते । प्रबलं ह्युपलभ्यमानं भवति, निर्बलं च कल्प्यमानम् । निह्नवश्च प्रबलेन निर्बलस्य दृश्यते न निर्बलेन प्रबलस्य । सूक्ष्मधियः पण्डिताश्च प्रायशो दृष्टिमाद्रियन्ते न कल्पनाम् । तदेतच्चोदाहृतश्रुतौ प्राज्ञस्य परमात्मनो निचाय्यत्ववचनेऽ-भ्युपगम्यमाने सम्पद्यते न प्रधानस्य प्रकृतेः । **अथोच्येत** न खलु प्राज्ञस्य तत्र निचाय्यत्ववचनमभ्युपगन्तुं शक्यते । वरप्रदानाभावेन प्रश्नोत्थानासम्भवात् । यदा किल नचिकेताः कुपितेन पित्रा प्रहितो मृत्युसदनमुपगम्य तिस्रो रात्रीरभुञ्जानोऽवात्सीत् तदा तुष्टो मृत्युस्तस्मै त्रीन् वरान् प्रददौ "**तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन् ब्रह्मन्नतिथिर्नमस्यः । नमस्तेऽस्तु ब्रह्मन्! स्वस्ति मेऽस्तु**

**तस्मात् प्रति त्रीन् वरान् वृणीष्व**" (कठ० १।९) इति। तेषां नचिकेताः प्रथमेन वरेण पितृसौमनस्यं द्वितीयेनाग्निविद्यां तृतीयेन चात्मविद्यां वव्रे "**येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके। एतद् विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः**" (कठ० १।२०) इति। न च तद्व्यतिरेकेणास्ति चतुर्थं वरप्रदानं येन प्राज्ञगोचरोऽपि प्रश्न उत्तिष्ठेत्। न च तदभावे तदुत्थानं सम्भवति। तदसम्भवे च न तद्गोचरं प्रतिवचनलक्षणं ज्ञेयत्ववचनमुपपद्यते। वरप्रदानाभावेऽपि चेदुक्तप्रतिवचनोपपत्त्यै प्राज्ञगोचरोऽपूर्वोऽयं प्रश्न उत्थाप्यते "**अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद् वद**" (कठ० २।१४) इति, तदा प्रश्नाभावेऽपि प्रधानविषयमपूर्वमिदं प्रतिवचनलक्षणं ज्ञेयत्ववचनं कल्पयितुमुत्सहते "**अशब्दमस्पर्शमरूपमव्ययम्**" (कठ० ३।१५) इत्यादि। समानत्वात्। यथा हि प्राज्ञगोचरोऽपूर्वोऽयं प्रश्नस्तथाऽस्ति प्रधानविषयमपूर्वमिदं प्रतिवचनमिति समानमुभयम्। **अथ** योऽयमात्मविषयः प्रश्नः "**येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके**" (कठ० १।२०) इति, स एव "**अन्यत्रधर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्**" (कठ० २।१४) इति पुनरनुकृष्यते। जीवात्मपरमात्मनोरैक्यात्। **तदा** द्वावेव प्रश्नौ स्यातां न त्रयः प्रश्नाः। तथा च "**त्रयाणामेव चैवमुपन्यासः प्रश्नश्च**" (वे० १।४।६) इत्यसङ्गतं प्रसज्येत। न चासङ्गतं सूत्रयते भगवान् सूत्रकारः। तस्मात् प्रधानस्यैव तत्र ज्ञेयत्ववचनं युक्तमुत्पश्यामो न प्राज्ञस्य परमात्मन इति। **नैतद् वक्तव्यम्।** वरप्रदानाभावेऽपि प्रश्नोत्थानसम्भवात्। सत्यं नास्ति चतुर्थं वरप्रदानम्। नापि पूर्वोपन्यस्तस्य जीवात्मविषयस्य प्रश्नस्योत्तरत्रानुकर्षो मन्यते, तथापि प्राज्ञगोचरप्रश्नोत्थानं सम्भवति। स्वरूपतो भेदे सत्यपि जीवात्मपरमात्मनोरात्मत्वाविशेषात्। अस्ति धर्मादिगोचरः खलु जीवात्मा, तदगोचरश्च प्राज्ञः परमात्मा।

न चैवमुभयोर्भेदे सत्यपि कश्चिदात्मत्वमतिवर्तते । यथा हि जीवात्मा भवत्यात्मा तथा भवति प्राज्ञोऽप्यात्मा । तत्र यथावरं जीवात्मगोचरे प्रश्ने प्रवृत्ते प्राज्ञगोचरोऽपि स स्वत एव प्रवर्तितुमर्हति । नहि धर्मादिगोचरो जीवात्मा विज्ञात इति तदगोचरस्तदन्तरात्मा प्राज्ञोऽपि विज्ञातव्य इति केन चिन्नाभ्यर्थ्यते । अतो न तद्गोचरोऽपूर्वः कश्चित् प्रश्न उत्थाप्यते येन समानन्यायतः प्रधानविषयं प्रतिवचनमप्यपूर्वं कल्प्येत । स्वयमेव प्रवर्तमाने च प्राज्ञगोचरे तस्मिन् यथोत्तरत्र तत्स्वरूपोपवर्णनं युक्तमभ्युपेयते तथा ज्ञेयत्ववचनमपि युक्तमभ्युपगन्तव्यं नास्ति कश्चिद्दोषः । न च तत्र प्राज्ञस्य ज्ञेयत्ववचनेऽभ्युपगम्यमाने प्रधानस्य ज्ञेयत्ववचनमभ्युपगममर्हति । तत्साधकलिङ्गानुपलब्धेः । **तस्माद्** ब्रह्माधीनमेव जगतःकारणं प्रधानं न स्वाधीनमिति सम्यगालोचामहे ॥ ६ ॥

प्रधानस्य ब्रह्माधीनकारणत्वे निदर्शनमाह—

"**महद्वच्च**" ॥ ७ ॥

आनुमानिकमित्यनुवर्तते । चकारेणोभयमिन्द्रियं समुच्चीयते । **महद्वत्**=कार्ये कारणप्रयोगः, मनोवदुभयेन्द्रियवच्चानुमानिकं प्रधानं जगतः कारणं वेदितव्यमित्यर्थः ।

प्रधानस्यादिमः परिणामो हि महदित्याख्यायते । तेन चात्र तत्कार्यमाहङ्कारिकं मनो गृह्यते । तद् **यथा** पुरुषाधीनं प्रमाणादिवृत्तीनां तदधीनं चोभयविधमिन्द्रियं दर्शनादिक्रियाणां कारणं न स्वाधीनं **तथा** प्रधानमपि ब्रह्माधीनं जगज्जन्मादिकारणं न स्वाधीनमिति प्रतिपत्तव्यम् । यच्च यदधीनं कारणं भवति तत्तस्य कारणतां निर्वहति न त्वपोहति । तस्मादुपपन्नं ब्रह्मणो "**जन्माद्यस्य यतः**" (वे० १ । १ । २) इति लक्षणम् ॥ ७ ॥

उक्तमर्थं वार्त्तेन माहयितुकामः पूर्वश्रुतिसमानार्थकं श्रुत्यन्तरं विचारयिष्यन् पूर्वं तावत् पूर्वपक्षमाह—

"**चमसवदविशेषात्**" ॥ ८ ॥

आनुमानिकमित्यनुवर्तते । **चमसवत्**=यथा विशेषतोऽप्रतिपादनात् सोमपात्रं चमसो गम्यते तथाऽ**विशेषात्**=विशेषतोऽप्रतिपादनादानुमानिकं प्रधानं स्वतन्त्रं जगतः कारणं गम्यत इत्यर्थः ।

श्वेताश्वतराणामुपनिषदि हि समाम्नायते "**अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः**" (श्वे० ४ । ५) इति । न जायते न जनिविकारं भजत इत्य**जा**=प्रकृतिः, **एका**=सजातीयद्वितीयरहिता, **लोहितशुक्लकृष्णा**=कर्मधारयद्वयं, रञ्जनात्मकत्वाल्लोहितं रजः, प्रकाशात्मकत्वाच्छुक्लं सत्त्वम्, आवरणात्मकत्वात्कृष्णं तमः, तेषां साम्यावस्था कार्य्यासंहितावस्था, यां किल योगिनोऽपि दुर्लक्ष्यां मन्यन्ते, **सरूपाः**=द्वितीयाबहुवशनं, जात्येन समानरूपाः, **बह्वीः**=प्रकृतिविकृतिरूपेणानेकविधाः, **प्रजाः**=महदादिलक्षणाः प्रजाः, **प्र**कर्षेण व्यक्तरूपेण जायन्ते प्रादुर्भवन्तीति तद्व्युत्पत्तेः, **सृजमाना**=प्रादुर्भावयन्ती महदादिनानाविधविकाराकारेण परिणममानेति यावत्, एवम्भूतां तां **ह्येकः**=शरीरादिप्रकृत्यन्तेभ्यस्तत्त्वेभ्योऽन्यतामात्मनोऽनवबुध्यमानः कश्चिदेकोऽ**जः**=सनातनो जीवात्मा पुरुषो **जुषमाणः**=प्रीयमाणः सेवमानो वाऽ**नुशेते**=स्त्रैण इव प्रमदामालिङ्ग्य वर्तते, अविद्यया तामात्मत्वेनोपगम्य सांसारिकं सुखं दुःखमुपभुञ्जानो जञ्जन्यते, **अन्यः**=ततोऽन्यो जातसत्त्वपुरुषान्यताप्रत्ययोऽ**जः**=पुमान् **भुक्तभोगां**=कृतभोगापवर्गामे**नां**=पूर्वोक्तामजां **जहाति**=परित्यजति मुच्यत इत्यर्थः । **तत्र** संशयः किमिह स्वतन्त्रा काचिदजा प्रकृतिर्जगतः कारणमुपदिश्यते किं वा ब्रह्मतन्त्रा तच्छक्तिरिति । स्वतन्त्रेति पूर्वः पक्षः, ब्रह्मतन्त्रेति सिद्धान्तः । किं तावद् युक्तम्? । स्वतन्त्रेति ब्रूमः । **स्वतन्त्रप्रत्ययेन निर्देशात्** । कर्तृप्रत्ययः खलु स्वतन्त्रप्रत्ययः । प्रकृतिरजा चेह कर्तृप्रत्ययेन शानचा निर्दिश्यते "**बह्वीः प्रजाः सृजमानाम्**" इति । चेदियं स्वातन्त्र्येण कारणं न भवेत् तदा नासौ कर्तृप्रत्ययेन तेन निर्दिश्येत । नहि यत् स्वातन्त्र्येण कारणं न भवति तत् कर्तृप्रत्ययेन

कन्निर्दिश्यते । कर्तरि चात्र शानच्प्रत्यय इति सुव्यक्तम् । कर्ता च स्वतन्त्रः प्रसिद्धः । यत्रेदं स्मर्य्यते "**स्वतन्त्रः कर्ता**" (अष्टा० १ । ४ । ५४) इति । नचैवं स्वतन्त्रप्रत्ययेन निर्दिष्टायाः प्रकृतेः पारतन्त्र्येण कारणत्वकल्पनं न्याय्यं प्रतीयते । **हेतुनिर्देशानुपलब्धेश्च ।** यः खलु कर्मनिष्पत्त्यै तन्निष्पादकं प्रयोजयति स प्रयोजको हेतुरिति परिभाष्यते । यत्रेदं स्मर्य्यते "**तत्प्रयोजको हेतुश्च**" (अष्टा० १ । ४ । ५५) इति । न च सृष्टिक्रियानिष्पत्त्यै तन्निष्पादिकायाः प्रकृतेरिह हेतुः कश्चिन्निर्दिश्यमान उपलभ्यते । न चोपलम्भाभावेऽकस्मात् तत्पारतन्त्र्यं कल्पयितुं शक्यते । अनुपादेयत्वप्रसङ्गात् । नह्याकस्मिकं किञ्चित् कल्प्यमानं प्रेक्षावद्भिरुपादीयते । **चमसवच्चाविशेषात् ।** यथा हि "**अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम् । तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदाना**" (बृ० २ । २ । ३) इत्यत्र विशेषाप्रतिपादनाद् "चम्यते भक्ष्यतेऽनेन" इति व्युत्पत्त्या सोमपात्रभेदश्चमसोऽभिप्रेत इति गम्यते, अर्वाग्बिलत्वादेराञ्जस्येन तत्रोपपत्तेः, तथा "**अजामेकाम्**" (श्वे० ४ । ५) इत्यत्रापि "न जायते" इति व्युत्पत्त्या सदातनी प्रकृतिः स्वातन्त्र्येण जगतः कारणमभिप्रेतेति गन्तुं पार्य्यते । विशेषाप्रतिपत्तेरुभयत्र समानत्वात् । नह्यत्र ब्रह्मतन्त्रा सती प्रकृतिर्महदादिजगदाकारेण परिणमत इति कश्चिद् विशेषः प्रतिपाद्यते, येन वयं पारतन्त्र्येण तस्या जगद्धेतुत्वं प्रतिपद्येमहि । न च विशेषोपलम्भाभावे तत् प्रतिपत्तुं शक्यते । तस्मात् स्वतन्त्रैव सा जगतः कारणमिति युक्तम् । तथा चानुपपन्नं ब्रह्मणो "**जन्माद्यस्य यतः**" (वे० १ । १ । २) इति लक्षणम् ॥ ८ ॥

जातः पूर्वः पक्षः । सम्प्रति सिद्धान्त उच्यते—

**"ज्योतिरुपक्रमा तु तथा ह्यधीयत एके" ॥ ९ ॥**

तुशब्देन पूर्वः पक्षो व्यावर्त्यते । **ज्योतिरुपक्रमा**=ज्योतिः प्रकाशः सत्त्वमिति यावत्, तत्प्रमुखा सत्त्वरजस्तमसां साम्यावस्थात्मिका

ब्राह्मी शक्तिरजा प्रकृतिस्तत्र जगतः कारणमुपदिश्यते, कुतोऽवगम्यते? **हि**=यतस्**तथा**=यथोक्तं तथा**ऽधीयते**=पठन्ति वाक्यशेषे वाजसनेयिन **इवैके**=एके त इत्यर्थः।

**यथा** हि वाजसनेयिनः खलु काण्वाः **"अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः"** (बृ० २। २। ३) इत्यत्र "एतन्नामाऽसौ चमसोऽभिधीयते" इति विशेषतः प्रतिपत्त्यर्थं तत्प्रतिपादकं वाक्यशेषं पठन्ति **"इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः"** (बृ० २। २। ३) इति, **तथा** श्वेताश्वतरशाखिनोऽपि **"अजामेकाम्"** (श्वे० ४। ५) इत्यत्र "एतादृगजा प्रकृतिर्जगतः कारणमुपदिश्यते" इति विशेषतः प्रतिपत्त्यर्थं तत्प्रतिपादकं वाक्यशेषमधीयते **"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति"** (श्वे० ४। ६) **"समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः"** (श्वे० ४। ७) इति। **अनीशया**=प्रकृत्या। अत्र ह्येतद् विस्पष्टं प्रतिपाद्यते या खलु प्रकृतिनाम्नी काचिदजा पूर्वस्मिन् मन्त्रेऽभिहिता, तत्परिणामेऽस्मिन्नुच्छेदार्हे शरीरशाखिनि कर्मफलं सुखं दुःखमुपभुञ्जानो जीवात्मा पुरुषो **यदा** तत्र रागातिशयेन प्रकृत्या मोमुह्यते, मोमुह्यमानश्च प्रतिपलं हर्षशोकादिषु निमग्नोऽन्यत्त्राणमात्मनोऽपश्यन् तत्प्रभुं परमेश्वरं शरणं प्रपद्यते, साक्षाच्चिकीर्षया च तत्साधनेषु यमनियमादिषु कायेन वाचा मनसाऽहर्निशं प्रयतमानः प्राप्तसमाधिप्रकर्षो हस्तामलकमिवात्मना तं साक्षात्कुरुते **तदा** सर्वथा प्रकृतिनिवृत्त्या पादोदर इव जीर्णत्वचं सर्वान् तत्कार्य्यभूतान् हर्षशोकादिकण्टकान् दूरतः परित्यज्य शरीरत्यागतः पूर्वं जगद्व्यापारवर्जं सर्वं पारमेश्वरमैश्वर्य्यं समवाप्य जीवन्मुक्तो वशी विहरति। तदूर्ध्वं च निखिलदुःखनिवृत्तिपूर्विकां ब्रह्मानन्दावाप्तिलक्षणां मुक्तिमनुभवति। न च स्वतन्त्रप्रकृतिकारणवादे विषयेषु रागातिशयेन प्रकृत्या

शोचमानस्य जीवात्मनः पुरुषस्य तत्प्रभुपरमेश्वरसाक्षात्कारेण सर्वथ तन्निवृत्त्या हर्षशोकादिनिवृत्तिपूर्विका मुक्तिः प्रतिपादयितुं शक्यते । नहि तत्र प्रकृतेः प्रभुः कश्चित् परमेश्वरोऽभ्युपगम्यते येनैतदुपपद्येत । **"जुष्टं यदा पश्यत्यन्यमीशम्"** इति प्रतिपादयन् वाक्यशेषस्तु विस्पष्टं प्रकृतिस्वामिनमन्यमीश्वरं दर्शयति । स्वामित्वं हीशत्वम् । न च प्रकृतेः स्वत्वाभावेऽन्यमीशमिति वक्तुं पार्य्यते । नहि स्वाभावे कश्चित् स्वामी सम्भवति । न चैतावन्मात्रं दर्शयति वाक्यशेषः, अपि च ? अग्रे तामेव प्रकृतामजां विषयेषु रागातिशयेन जीवात्ममोहहेतुत्वान्मायानाम्ना परामृश्य परब्रह्मपरमेश्वराधिष्ठानेन व्यक्तं तस्याः सर्वजगदुपादानत्वमपि श्रावयति **"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्"** ( श्वे० ४ । १० ) इति । यथा हि जगतो मूलकारणं प्रधानं खलु जीवात्मनो मोहस्य हेतुत्वान्मायेति व्यपदिश्यते तथा जगदुपादानहेतुत्वात् प्रकृतिरित्युपदिश्यते । अक्षरमव्यक्तमाकाशमिति च तत्तद्गुणप्रयुक्तं तस्यैव नामान्तरम् **"अक्षरात् परतः परः"** ( मुं० २ । १ । २ ) **"महतः परमव्यक्तम्"** ( कठ० ३ । ११ ) **"एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च"** ( बृ० ३ । ८ । ११ ) इत्यादिश्रुतिभ्यः । अत्र प्रकृताया अजाया मायानाम्ना परामृश्य प्रकृतित्वाभिधानात् तत्स्वामिनः परब्रह्मणः परमेश्वरस्य च मायित्वप्रतिपादनान्नूनं पारमेश्वरी शक्तिरजा प्रकृतिरिति स्फुटमवगम्यते । अन्यथा भगवतस्तस्य **"मायिनम्"** इति निर्देशानुपपत्तेः । नहि तस्याः पारमेश्वरीत्वाभावे भगवतः परब्रह्मणो महेश्वरस्य **"मायिनम्"** इति निर्देशः कथञ्चिदुपपद्यते । मायासम्बन्धाद्धि भगवान् महेश्वरो मायीति निर्दिश्यते । सम्बन्धश्च महेश्वरस्य मायया स्वस्वामिभावः प्रसिद्धः । कथमन्यथा **"इन्द्रो मायाभिः पुरुरूप ईयते"** ( ऋ० ४ । ७ । ३३ । १८ ) इति तद्द्वारा तस्य जगद्धेतुत्वमाम्नायेत । श्वेताश्वतरशाखिनश्च प्रव्यक्तं पारमेश्वरी शक्तिर्मायेत्युक्त्वा तस्याः सत्त्वादिरूपतामाचक्षते **"न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्यधि-**

**कश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"** ( श्वे० ६ । ८ ) इति । **ज्ञानं** सत्त्वं, **बलं** तमः, **क्रिया** रजः, तेषां साम्यावस्थेत्यर्थः । तदिदमालक्ष्यैव भगवता सूत्रकृता **"ज्योतिरुपक्रमा"** प्रकृतिरिति सूच्यते । न चैवंविधाख्याने विद्यमाने स्वतन्त्रा सा जगतः कारणमिति केनाप्यभ्युपगन्तुमुत्सह्यते । कर्तृप्रत्ययेन निर्देशस्तु प्रयोज्यप्रयोजकभावाङ्गीकारादुपपद्यते । अस्ति खलु प्रयोज्या प्रकृतिः शक्तित्वात् प्रयोजकश्च परमेश्वरः शक्तिमत्त्वात् । कर्तृप्रत्ययश्च यथा प्रयोजकात् प्रवर्तते तथा प्रयोज्यादपि प्रवर्तितुमर्हति । कर्तृत्वाविशेषात् । न चात्र प्रयोजकनिर्देशानुपलम्भ इति वक्तुं शक्यते । तन्निर्देशस्य दर्शितत्वात् । नहि शक्तिमान् स्याच्छक्तिं च न प्रयोजयेदिति संक्षिप्यते । **"भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्"** ( श्वे० १ । १२ ) इति चापरोक्षं भगवतस्तस्य तत्प्रयोजकत्वं निर्दिश्यमानमुपलभ्यते । तत्कथमिह तन्निर्देशानुपलम्भमनुमन्येमहि । कथं च स्वतन्त्रा सा जगतः कारणमिति प्रतिपद्येमहि । पारतन्त्र्येण तस्यास्तत्कारणत्वं चास्माभिरप्यास्थीयते । साधकत्वात् । एवं हि सा कारणं भवन्ती जगज्जन्मादिहेतुतां ब्रह्मणः साधयति न तु बाधयति । तस्मादत्र ब्रह्मतन्त्रैवाजा प्रकृतिर्जगतः कारणमुपदिश्यते न स्वतन्त्रेति निश्चेतव्यम् । तथा चोपपन्नं ब्रह्मणो **"जन्माद्यस्य यतः"** ( वे० १ । १ । २ ) इति लक्षणम् ॥ ९ ॥

**अथोच्येत**—न खलु ब्रह्माधीना जगतः कारणं प्रकृतिरत्राजापदार्थो घटते । तस्या अव्यक्ततया लोहितादिव्यक्तरूपेणोपदेशे विरोधप्रसङ्गादिति । अस्योत्तरं पठति—

**"कल्पनोपदेशाच्च मध्वादिवदविरोधः" ॥ १० ॥**

**ज्योतिरुपक्रमाया इति षष्ठ्या** विपरिणम्यानुवर्तते । अध्यर्थश्च । **अविरोधः**—ज्योतिरुपक्रमायाः प्रकृतेर्लोहितादिव्यक्तरूपेणोपदेशेऽपि

विरोधो न प्रसज्यते, कुतः? **कल्पनोपदेशात्**=सादृश्यकल्पनयोपदेशात्, **मध्वादिवत्**=यथाऽमधु सूर्य्यो मधु, वाक् चाधेनुर्धेनुरुपदिश्यत इत्यर्थः ।

**यथा** ह्यादित्यः खलु देवमधुत्वाभावेऽपि देवानां मोदनात् प्रसिद्धमधुसादृश्यं परिकल्प्य देवमधु, वाक् च धेनुत्वाभावेऽपि नानाविधभोग्यपदार्थदात्रीत्वात् प्रसिद्धधेनुसादृश्यं परिकल्प्य धेनुरित्युपदिश्यते **"असौ वा आदित्यो देवमधु"** (छां० ३ । १ । १) **"वाचं धेनुमुपासीत"** (बृ० ५ । ८ । १) इति, **तथा**ऽव्यक्तत्वेऽपि जगतः कारणं प्रकृतिरनुशयनादेरविशेषात् प्रसिद्धाजासादृश्यं परिकल्प्य लोहितशुक्लकृष्णेति व्यक्तरूपेणोपदिश्यते । भवति किल यदृच्छया लोके काचिदजा लोहितशुक्लकृष्णा भूरिसरूपप्रजा च, तामेकः कश्चिदजो जुषमाणोऽनुशेते भुक्तभोगां च तां कश्चित् परित्यजति, जगतः कारणं प्रकृतिरपि सत्त्वरजस्तमोरूपा महदादिभूरिसरूपप्रजा च कदाचिदेकेनाजेनोपभुज्यते भुक्तभोगा च परेण तेन परित्यज्यते, तदिदं सादृश्यमुभयत्र । तन्निबन्धन एव चैष उपदेशो न स्वरूपनिबन्धनः । काल्पनिकोपदेशे च न वस्तु तत्त्वं परिजहाति । नहि माणवकोऽग्निरित्युपदिश्यमानो माणवकत्वं कदाचित् परिमुञ्चति । प्रकृतेरव्यक्तत्वं च तात्त्विकं न काल्पनिकम् । तस्मात् तस्याः सादृश्यकल्पनया व्यक्तरूपेणोपदेशेऽपि न भवति कश्चिद् विरोधप्रसङ्गः । तथा चोपपन्नं ब्रह्मणो **"जन्माद्यस्य यतः"** (वे० १ । १ । २) इति लक्षणम् ॥ १० ॥

**स्यादेतत्**—मा नाम भूदव्यक्तायाः प्रकृतेः सादृश्यकल्पनया लोहितादिव्यक्तरूपेणोपदेशे विरोधप्रसङ्गः । तथापि ब्रह्मणो नेदं लक्षणं कथञ्चिदुपपद्यते । तत्र **"अजामेकाम्"** (श्वे० ४ । ५) इत्येकत्वसंख्योपादानात् प्रकृतेः स्वातन्त्र्येण कारणत्वप्रतिपत्तेः । नहि यत् स्वातन्त्र्येण कारणं न भवति तद्गोचरा कदाचिदेकत्वसंख्योपादातुं शक्यते । सा हि यद्गोचरोपादीयते तस्य स्वातन्त्र्येण कारणत्वमवगमयति

कारणान्तरं च तद्व्यतिरिक्तं व्यावर्तयतीति नियम इति । अस्योत्तरं पठति—

**"न संख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च"** ॥ ११ ॥

आनुमानिकमित्यनुवर्तते । पूर्वहेत्वपेक्षयाऽपिः । **"संख्योपसङ्ग्रहादपि**=एकत्वसंख्योपादानादपि **न**=आनुमानिकं प्रधानं प्रकृतिः स्वातन्त्र्येण जगतः कारणं न सिध्यति, कुतः? **नानाभावात्**=उत्तरत्र कारणनानात्वप्रतिपादनात्, **अतिरेकाच्च**=बृहदारण्यके सकार्यायास्तस्यास्तदधिष्ठातुः परब्रह्मणः परमेश्वरस्यातिरेचनाच्चेत्यर्थः ।

**तदा** हि प्रकृतिः **"अजामेकाम्"** (श्वे० ४ । ५) इत्येकत्वसंख्योपादानात् स्वातन्त्र्येण जगतः कारणं सिध्येत् यद्युत्तरत्र कारणनानात्वं न प्रतिपाद्येत । नहि तत्र कारणनानात्वे प्रतिपाद्यमाने सा स्वातन्त्र्येण जगतः कारणं कर्हिचित् सेद्धुमर्हति । प्रतिपादयति च तत् साक्षाच्छ्रुतिः **"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्"** (श्वे० ४ । १०) इति । मोहनात् प्रधानं माया, तद्धि जगदाकारेण परिणममानं मोहयति पुंसः । माया विद्यते यस्य स मायी=मायापतिः परब्रह्म परमेश्वरः । तं महेश्वरं=जगतो निमित्तकारणं मायां च प्रकृतिम्=उपादानकारणं "प्रक्रियते निर्मीयते महदादिकं सर्वं जगदनया" इति तद्व्युत्पत्तेः, विद्यात्=जानीयादित्यर्थः । न चात्र प्रधानस्य प्रकृतेः स्वातन्त्र्येण महदादिजगतः कारणत्वे तत्प्रभुः परमेश्वरो निमित्तकारणं स्वयं चोपादानकारणमिति प्रतिपादयितुं शक्यते । **"मायिनम्"** इति श्रुत्या परब्रह्मणः परमेश्वरस्य तत्प्रभुत्वं चापरोक्षमेव नास्ति तत्र तिरोहितं नाम किञ्चित् । वाजसनेयिनश्च सकार्य्यायाः प्रकृतेस्तदधिष्ठातुः परब्रह्मणः परमेश्वरस्यातिरेचनात्तस्याः पारतन्त्र्येण जगतो हेतुत्वं न जातु स्वातन्त्र्येणेति व्यक्तमवबोधयन्ति **"यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्"** (बृ० ४ । ४ । १७) इति । यस्मि-

न्निति सप्तम्या आधारोऽर्थः । स च परब्रह्म परमेश्वरोऽत्र विज्ञायते । **यस्मिन्निति** यच्छब्देन निर्दिष्टस्य तस्य **"तमेव मन्य आत्मानम्"** इत्युत्तरत्र ब्रह्मात्मत्वेन परामर्शात् । **आकाशः**=प्रकृतिः **"एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च"** ( बृ० ३ । ८ । ११ ) इति श्रुतेः । पञ्च पञ्चजनाँश्चानन्तरं वक्ष्यति । न च यदाधारा प्रकृतिर्महदादिजगदाकारेण परिणमते तत् कारणं न भवतीति वक्तुं पार्य्यते । निराधारायास्तस्याः कारणत्वानुपपत्तेः । साधारायाः कारणत्वे चाधारस्यापि कारणत्वावर्जनात् । आधारकारणमधिष्ठानकारणं निमित्त-कारणमिति चानर्थान्तरमित्युक्तप्रायम् । न च तदनङ्गीकारे सकार्य्याया-स्तस्यास्तदतिरेचनं युज्यते । अङ्गीकारे च पारतन्त्र्येण जगतो हेतुःप्रकृति रित्युपपद्यतेतराम् । तस्मादुपपन्नं ब्रह्मणो **"जन्माद्यस्य यतः"** ( ब्रे० १ । १ । २ ) इति लक्षणम् ॥ ११ ॥

**सम्प्रति** के ते पञ्च पञ्चजना अत्राभिप्रेयन्त इति प्रसङ्गादाह—

**"प्राणादयो वाक्यशेषात्"** ॥ १२ ॥

**प्राणादयः**=**"यस्मिन् पञ्च पञ्चजनाः"** (बृ० ४ । ४ । १७) इत्यत्र पञ्चजनशब्देन प्राणादयः पञ्च विवक्ष्यन्ते, कुतोऽवगम्यते? **वाक्यशेषात्**=उत्तरस्माद् वाक्यादित्यर्थः ।

**यद्यपि** पञ्चजनशब्दोऽयं मनुजेषु निरूढः । तत्रैव तत्प्रयोगो-पलब्धेः **"एकं नु त्वा सत्पतिं पाञ्चजन्यम्"** ( ऋ० ४ । २ । १ । ११ ) **"यत् पाञ्चजन्यया विशा"** ( ऋ० ६ । ४ । ४३ । ७ ) **"अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः"** ( ऋ० ७ । २ । १० । २० ) इति, **तथापि** वाक्यशेषबलेनात्र तत्सम्ब-न्धिषु प्राणादिषु पञ्चसु प्रयुक्त इत्याचार्य्यो मन्यते । **यथा** हि "गङ्गायां घोषः' इत्यत्र गङ्गाप्रवाहे निरूढोऽपि गङ्गाशब्दो घोषपदसन्निधानेन तत्सम्बन्धिनि तीरे लक्षणया प्रयुज्यत इति प्रतिपद्यते तथा **"यस्मिन् पञ्च पञ्चजनाः"** ( बृ० ४ । ४ । १७ ) इत्यत्र मनुजेषु निरूढोऽपि

पञ्चजनशब्दो वाक्यशेषसन्निधानेन तत्सम्बन्धिषु प्राणादिषु लक्षणया प्रयुज्यत इति प्रतिपत्तुं शक्यते । मनुजशरीरापेक्षया च सूक्ष्मत्वात् सन्निधीयन्ते प्राणादयः प्रकृतेरिति त एवात्र पञ्चजनशब्देन विवक्ष्यन्त इति युक्तमीक्षामहे । सोऽयं वाक्यशेषो माध्यन्दिनानां तावदेवं पठ्यते **"प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः । ते निचिक्युर्ब्रह्म पुराणमग्र्यम्"** (बृ० ४ । ४ । १५) इति । तत्र षष्ठ्यन्तैः पदैर्ये प्राणादयो निर्दिश्यन्ते त एव पञ्चजनशब्देनात्राभिप्रेयन्त इति वेदितव्यम् । द्वितीयान्ताश्च सर्वे ते परमेश्वरपराः प्रयुज्यन्ते । अस्ति प्राणनादिक्रियाहेतुत्वात् प्राणादिशब्दाभिधेयः परमेश्वरः खलु प्रसिद्धः **"प्राणाय नमो यस्य सर्वमिदं वशे । यो भूतः सर्वस्येश्वरो यस्मिन् सर्वं प्रतिष्ठितम्"** (अथर्व० ११ । २ । ४ । १) **"श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणश्चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति"** (के० १ । २) इत्याद्यासु श्रुतिषु । न च प्रसिद्धे तस्मिन् युज्यते विप्रतिपत्तिः । षष्ठ्यन्तानां च तेषां प्राणशब्देन स्पर्शनेन्द्रियं गृह्यते । वायुसम्बन्धात् । अन्नशब्देन च घ्राणेन्द्रियं रसनेन्द्रियं चोभयम् । अद्यतेऽनेनेति तद्व्युत्पत्तेः । उभयोरेकेनोपादानाच्च न भवति पञ्चत्वविरोधः । पञ्चशब्दस्य जनशब्देन च संज्ञाविशेषविषयः समासो न समाहारविषयः । **"दिक्संख्ये संज्ञायाम्"** (अष्टा० २ । १ । ५०) इति विशेषस्मरणात् । ते च पञ्च पञ्चजनाः **"गन्धर्वाः पितरो देवा असुरा रक्षांसि"** (नि० ३ । २ । २) इति नैरुक्ता निर्ब्रुवते । **"आर्य्या मङ्गोलीना न्यग्रसा अमरकणा मलयाः"** इति चार्वाकः पौरुषमूर्त्तयो विद्वांसः । सर्वथाऽपि वाक्यशेषबलेन तत्सम्बन्धिनः प्राणादयः पञ्चेह लक्षयितुं शक्यन्ते नास्ति काचिदनुपपत्तिः । तस्मात् पञ्च पञ्चजना अत्र प्राणादयः पञ्चाभिप्रेयन्त इति विज्ञातव्यम् ॥ १२ ॥

ननु माध्यन्दिनानां पञ्च पञ्चजनाः प्राणादयः पञ्च विवक्ष्यन्ताम् .

काण्वानां तु कथं विवक्ष्येरन्। नहि ते माध्यन्दिना इव प्राणादिष्वन्नस्यान्नमिति पठन्ति। न चापठ्यमाने तस्मिन् तद्गता पञ्चसंख्या कथञ्चित् पूरयितुं शक्यत इति। अस्योत्तरं पठति—

**"ज्योतिषैकेषामसत्यन्ने"** ॥ १३ ॥

**एकेषां**=काण्वानामन्ने=प्राणादिष्वन्नेऽसति=अपठ्यमाने सति **ज्योतिषा**=पूर्ववाक्यपठितेन ज्योतिषा पञ्चसंख्या पूरयितव्येत्यर्थः।

**यद्यपि** माध्यन्दिना इव काण्वाः खलु वाक्यशेषे प्राणादिषु **"अन्नस्यान्नम्"** इति नाधीयते, **तथापि** पूर्ववाक्यपठितेन ज्योतिषा तद्गता संख्या सुखेन पूरयितुं शक्यते। अस्ति तेषामुदाहृतवाक्यतः पूर्वस्मिन् वाक्ये ज्योतिषः पाठः **"तद् देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्"** (बृ० ४।४।१६) इति। **ज्योतिषाम्**=इन्द्रियाणाम्। **दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु"** (यजु० ३४।१) इति मन्त्रवर्णात्। अत्रेन्द्रियमात्रार्थकत्वेऽपि षष्ठ्यन्तज्योतिःशब्देनान्नशब्दार्थभूतमिन्द्रियमेवोपस्थाप्यते नेन्द्रियमात्रम्। अनपेक्षितत्वात्। न चानपेक्षितमर्थं शब्दः कचिदुपस्थापयति। नहि भोजनवेलायां प्रयुज्यमानः सैन्धवशब्दः कदाचिदश्वमुपस्थापयन्नवलोक्यते येनेहापि कल्प्येत। **न च** कथमिदं ज्योतिर्माध्यन्दिनानां काण्वानां चोभयेषां तुल्यवत् पठ्यमानं सत् समानमन्त्रगतया पञ्चसंख्यया केषाञ्चिद्गृह्यते केषाञ्चिन्न गृह्यत इति पर्य्यनुयोक्तव्यम्। अपेक्षाभेदादुपपत्तेः। माध्यन्दिनानां हि वाक्यशेषपठितैः प्राणादिभिः पञ्चभिः पञ्चजनसंख्यालाभेन न तत्पूर्त्त्यर्थं पूर्ववाक्यपठिते ज्योतिष्यपेक्षा विद्यते, काण्वानां तु तैस्तदलाभेन विद्यते। अपेक्षाभेदाच्च समानेऽपि मन्त्रे ज्योतिषो ग्रहणाग्रहणे उपपद्येते यथा समानेऽप्यतिरात्रे षोडशिनो ग्रहणाग्रहणे वचनभेदात्। तथा चोभयेषां तेषां प्राणादयः पञ्च पञ्च पञ्चजना इति निष्प्रत्यूहम्। प्राणादिभिश्चात्र प्राकृतं कार्य्यमात्रमुपलक्ष्यते। तत्सहितायाः प्रकृतेः प्रतिष्ठाश्रयत्वे च

भगवतो ब्रह्मणः समुपपन्नं "**जन्माद्यस्य यतः**" (वे० १ । १ । २) इति लक्षणम् ॥ १३ ॥

**सम्प्र**त्युक्तार्थदार्ढ्याय पूर्वश्रुतिसमानार्थाऽन्या श्रुतिर्विचार्य्यते—

**"कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः"** ॥ १४ ॥

त्वर्थश्चः प्रधानस्वातन्त्र्यं व्यासेधति । **आकाशादिषु**=प्रकृतिराकाशः, तेनात्र महत्तत्त्वमुपलक्ष्यते, कार्य्ये कारणप्रयोगात्, तदादिषु नामरूपात्मकेषु सर्वेषु कार्य्येषु कारणत्वेनोपादानकारणत्वेन **यथाव्यपदिष्टोक्तेः**=पूर्वत्र यादृक्षा जगतः कारणं व्यपदिष्टा प्रतिपादिता प्रकृतिः, तादृक्षाया उक्तेर्वचनान्न सा स्वतन्त्रा कारणं सिध्यतीत्यर्थः ।

बृहदारण्यके हि श्रूयते "**तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत**" (बृ० १ । ४ । ७) इति । तदिदं जगत् **तर्हि**=सृष्टेः प्राग**व्याकृतं**=प्रधानात्मकं ह=किलासीत्, **तत्**=अव्याकृतं **नामरूपाभ्यां**=नाम्ना रूपेण च **व्याक्रियत**=पर्य्यणमतेत्यर्थः । **तत्र** संशयः **कि**मिह स्वतन्त्रं प्रधानं जगतः कारणमुच्यते **किंवा** ब्रह्मतन्त्रमिति । **स्वतन्त्र**मिति पूर्वः पक्षः, ब्रह्मतन्त्रमिति सिद्धान्तः । **किं** तावत् प्राप्तम् ? **स्वतन्त्र**मिति वच्मः । कर्मकर्तृप्रयोगात् । "**व्याक्रियत**" इति हि कर्मकर्तरि लकारः खलु प्रयुज्यते । प्रधानं चेदत्र स्वतन्त्रं कारणं नोच्येत, न कर्मकर्तरि लकारः प्रयुज्येत । नहि स जगद्रचनायां प्रधानस्य स्वातन्त्र्याभावे कर्हिचित् प्रयोक्तुं शक्यते । स्वयमेव प्रधानं महदादिविक्रियां भजते न परेण केनचित् प्रयुक्तमिति च स्पष्टस्तत्र तत्प्रयोगस्यार्थः । नचैवंरूपे स्पष्टेऽर्थे विद्यमाने पुनस्तद्गोचरः स्वातन्त्र्यपारतन्त्र्यसंशयः कथञ्चिदुत्पत्तुमर्हति । यथा हि "**तण्डुलाः पच्यन्ते**" इति कर्मकर्तृप्रयोगः खलु तण्डुलानां पाके स्वातन्त्र्यं गमयति पारतन्त्र्यं च वारयति, तथा "**नामरूपाभ्यां व्याक्रियत**" इति प्रयोगोऽपि प्रधानस्य महदादिपरिणामे स्वातन्त्र्यमवबोधयति पारतन्त्र्यं च व्यावर्तयति । न चाचेतनं प्रधानं कथं विचि-

त्राभ्यां महदादिलक्षणाभ्यां नामरूपाभ्यां स्वयमेव व्याक्रियत इति पर्य्यनुयोगो युज्यते । श्रौतत्वात् । श्रौतं हि प्रधानस्य नामरूपाभ्यां व्याकरणम् । न च तदनाशङ्कनीयदोषत्वादर्हति पर्य्यनुयोगम् । अन्यथा सर्वत्राविश्वासापत्तेः । **तस्मा**दत्र स्वतन्त्रं प्रधानं नामरूपात्मनो जगतः कारणमुच्यत इति सम्यगुत्पश्याम इति । **एवं** प्राप्तेऽभिधीयते—**यथाव्यपदिष्टवचनात् स्वातन्त्र्येण कारणत्वासिद्धेः** । तदा हि स्वातन्त्र्येण नामरूपात्मनो जगतः कारणं प्रधानमत्रोक्तं सिध्येच्चेन्निरध्यक्षस्य तस्य नामरूपाभ्यां व्याकरणमुच्येत । न चेह निरध्यक्षस्य तस्य नामरूपाभ्यां व्याकरणमुच्यते । कस्य तर्ह्युच्यते ? साध्यक्षस्य । कुतोऽवगम्यते ? वाक्यशेषात् । अस्ति तावद् वाक्यशेषः "**स एष इह प्रविष्टः**" (बृ० १ । ४ । ७) इति । तत्र "**स**" इति सर्वनाम्ना प्रसिद्धं तदध्यक्षं परब्रह्म परमेश्वरं परामृश्य तस्य व्याकृतकार्य्यानुप्रवेशः स्फुटमाम्नायते । नच स निरध्यक्षस्य प्रधानस्य नामरूपाभ्यां व्याकरणेऽभ्युपगम्यमाने कथञ्चिदाम्नातुं शक्यते । साध्यक्षस्य तस्य नामरूपाभ्यां व्याकरणे च परतन्त्रं तत्र प्रधानमित्यागतम् । न च तत्र जीवात्मनः प्रवेशः कथ्यते न तदधिष्ठातुः परब्रह्मणः परमेश्वरस्येति युक्तं भाष्यते । प्रयोजनासिद्धेः । सर्वस्य जगतो नामरूपाभ्यां व्याकरणं हि प्रवेशप्रयोजनम् । **तच्च** सर्वज्ञसर्वशक्तिपरब्रह्मपरमेश्वरानुप्रवेशोऽभ्युपगम्यमाने सिध्यति न जीवात्मप्रवेशे । तस्याल्पत्वेनाल्पशक्तितया सर्वनामरूपव्याकरणहेतुत्वानुपपत्तेः । न च परब्रह्मणः परमेश्वरस्यापि व्यापकत्वेन प्रवेशो नोपपद्यत इति सम्यगभ्यूह्यते । तस्यौपचारिकत्वात् । औपचारिकः खलु परब्रह्मणः परमेश्वरस्य तत्र प्रवेश उच्यते न तात्त्विकः । **यथा** हि जीवात्मा खलु तत्त्वतो जन्मरहितोऽप्यन्तरात्मत्वाच्छरीरजन्मना जन्यत इत्युपचर्य्यते **तथा** व्यापकतया तत्त्वतः प्रवेशरहितोऽपि परब्रह्म परमेश्वरोऽन्तरात्मत्वात् प्रविष्टेन जीवात्मना प्रविश्यत इत्युपचर्य्यते । अणुर्हि जीवात्मा । तस्य तात्त्विकः प्रवेशः सम्भवति । तदन्तरात्मा परब्रह्म परमेश्वरस्तु विभुः । न च तस्य तात्त्विकः प्रवेशो घटते । अत एव च श्रुत्या

जीवात्मनः प्रवेशो निगद्यते तद्द्वारकः परब्रह्मणःपरमेश्वरस्य चानुप्रवेशः "**तत्सृष्ट्वा तदेवानुप्राविशत्**" (तै० २। ६) इति। स च प्रवेशपश्चाद्भावी तदुपचारमात्रम्। तदेतच्च भगवतस्तस्य व्यापकत्वेऽपि युज्यते यथा घटप्रवेशेन घटाकाशस्यानुप्रवेशः। तदिदं परिस्फोरयति च स्वयं श्रुत्यन्तरम् "**अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि**" (छां० ६। ३। २) इति। परमात्मप्रवेशे जीवात्मा द्वारमिति तस्य निष्कर्षः। **तद्व्याकृतमासीत्**" इत्यस्य चोत्पत्तेः प्राक् तदधिष्ठात्रा परब्रह्मणा परमेश्वरेण शरीरकल्पत्वाज्जीवात्मना शरीरमिवाविभक्तमव्याकृतमासीदित्यर्थः। तादृक् प्रधानमेवात्र यथाव्यपदिष्टशब्देनाख्यायते। न च तत् स्वातन्त्र्येण जगतः कारणं सिध्यति। परेणाधिष्ठितत्वात्। एतेन "**श्रौतत्वात्**" इत्यपि व्याख्यातं द्रष्टव्यम्। श्रुत्यैव तस्य ब्रह्मतन्त्रत्वसिद्धेः। "**व्याक्रियत**" इति च कर्मण्येव लकारः प्रयुज्यते न कर्मकर्तरि। कर्ता च परब्रह्म परमेश्वरोऽर्थादाक्षिप्यते यथा "**गम्यते ग्रामः**" इत्यत्र कर्ता देवदत्तः। **भवतु** वा कर्मकर्तर्य्येवैष लकारः। न चैतावताऽपि प्रधानं स्वातन्त्र्येण जगतः कारणं सेद्धुमर्हति। कस्मिँश्चित् कर्तरि सत्येव कर्मकर्तरि लकारस्य प्रयोक्तुं शक्यत्वात्। **यथा** हि "**तण्डुलाः पच्यन्ते**" इत्यत्र पाचके खलु विष्णुमित्रे "**लूयते केदारः**" इत्यत्र च लवितरि पुष्पमित्रे सत्येव सौकर्य्यमपेक्ष्य कर्मकर्तरि लकारः प्रयुज्यते **तथा** सत्येव भगवति परब्रह्मणि परमेश्वरेऽपि व्याकर्तरि सौकर्य्यमपेक्ष्य "**व्याक्रियत**" इति कर्मकर्तरि लकारः प्रयुज्यत इति बोद्धव्यम्। तथा च ब्रह्मतन्त्रमेव प्रधानमिह नामरूपात्मनो जगतः कारणमुच्यते न स्वतन्त्रमिति निष्पन्नम्। न चैवं कारणं भवत्प्रधानं ब्रह्मणो जगज्जन्मादिकारणतां विरुणद्धि। तस्मादुपपन्नं तस्य "**जन्माद्यस्य यतः**" (वे० १। १। २) इति लक्षणम्॥ १४॥

**स्यादेतत्**—भवतु ब्रह्मतन्त्रं प्रधानं जगतः कारणं तथापि ब्रह्मणो लक्षणमिदं नोपपद्यते। सर्वत्र ब्रह्मपूर्विकायाः सृष्टेरनभिधानात्। यथा

हि कचिच्छ्रुतिषु ब्रह्मपूर्विका सृष्टिस्तावदभिधीयते तथा तद्वैपरीत्येनासत्पूर्विकाऽपि कचित् परिकीत्यते **"असद्वा इदमग्र आसीत् ततो वै सदजायत"** (तै० २ । ७) इति । **"असदेवेदमग्र आसीत् तत् सदासीत् तत् सम्भवत्"** (छां० ३ । १९ । १) इति च । न चैवं सृष्टिकारणविषये श्रुतिविगाने विद्यमाने ब्रह्मैव जगतः कारणमिति निश्चेतुं शक्यते । तन्निश्चयाभावे चानुपपन्नं ब्रह्मणो **"जन्माद्यस्य यतः"** (वे० १ । १ । २) इति लक्षणम् । अस्योत्तरं पठति—

**"समाकर्षात्"** ॥ १९ ॥

ब्रह्मण इति षष्ठ्या विपरिणम्याधिक्रियते । **समाकर्षात्**=तैत्तिरीयश्रुतौ छान्दोग्यश्रुतौ चासच्छब्देन पूर्वनिर्दिष्टस्य ब्रह्मणः समाकर्षणात् तत्पूर्विकैव सृष्टिरभिहिता वेदितव्येत्यर्थः ।

यदि हि **"असद्वा इदमग्र आसीत् ततो वै सदजायत"** (तै० २ । ७) इत्यत्रासन्निरात्मकं किञ्चित् सृष्टिकारणं परिकीर्त्येत तदाऽवश्यं ब्रह्मणो **"जन्माद्यस्य यतः"** (वे० १ । १ । २) इति लक्षणं नोपपद्येत । न च तत्र तत् सृष्टिकारणं परिकीर्त्यते । किं तर्हि ? पूर्वनिर्दिष्टं ब्रह्म । समाकर्षात् । यत् खलु पूर्वत्र **"ब्रह्मविदाप्नोति परम्"** (तै० २ । १) इत्युपक्रमे ब्रह्म निर्दिश्यते तदेव **"तस्माद्वा एतस्माद् विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः"** (तै० २ । ५) इति प्रकृतिपुरुषान्तरात्मत्वेनानन्दरूपत्वेन चाभिधाय **"असन्नेव स भवति असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः"** (तै० २ । ६) इत्यसद्वादापवादेन सद्रूपं च निर्धार्य्य **"सोऽकामयत बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किञ्च"** (तै० २ । ६) इति समस्तजगदुत्पत्तिकारणत्वेन च श्रावयित्वा **"तत् सत्यमित्याचक्षते"** (तै० २ ।

६ ) इति चोपसंहृत्य "**तदप्येष श्लोको भवति**" (तै० २ । ६ ) इति तत्रैव प्रमाणत्वेनोदाह्रियमाणे "**असद्वा इदमग्र आसीत् ततो वै सदजायत**" (तै० २ । ७ ) इति श्लोकात्मकेऽस्मिन् श्रुतिवाक्येऽसच्छब्देन समाकृष्यते । यदि च धार्ष्ट्यात् कश्चिदिह ब्रह्मसमाकर्षं न मन्येत तदा तस्यान्यस्मिन्नन्योदाहरणं "**ततो वै सदजायत**" (तै० २ । ७ ) इति सदुत्पादसङ्कीर्तनं "**तदात्मानं स्वयमकुरुत**" (तै० २ । ७ ) इति सृष्टौ स्वातन्त्र्याभिधानं च बहुसंश्लिष्टमापद्येत । नहि ब्रह्मण्यसदुदाहरणमसतः सदुत्पादसङ्कीर्तनं तस्य सृष्टौ स्वातन्त्र्याभिधानं च कथञ्चित् संश्लिष्यते । ब्रह्मसमाकर्षे च भवति सर्वमेतत् सुसंश्लिष्टम् । तस्य सर्वाधारत्वेन सर्वज्ञसर्वशक्तित्वाद् । यच्चोत्तरत्र "**रसो वै सः**" (तै० २ । ७ ) इति रसात्मकत्वं "**भीषाऽस्माद् वातः पवते भीषोदेति सूर्य्यः भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः**" (तै० २ । ८ ) इति वाय्वादिचेतनाचेतननिखिलजगत्प्रशासितृत्वं च निःसन्दिग्धो ब्रह्मधर्मः समाम्नायते तदपि पूर्वत्र ब्रह्मसमाकर्षे सुदृढं लिङ्गं सम्पद्यते । अन्यथा प्रकरणवैरूप्यप्रसङ्गात् । ब्रह्म च प्रागुत्पत्तेः प्रविलीनाखिलनामरूपजगत्परिणामगर्भया प्रकृत्या समुद्र इव गङ्गाद्यया नद्या वर्तमानं तन्नामरूपपरिणामाभावमपेक्ष्य स्वरूपतः सदप्यसदित्युपचरितुं शक्यते नास्ति तदनुपपत्तिः । एतेन "**असदेवेदमग्र आसीत् तत् सदासीत्**" (छां० ३ । १९ । १ ) इत्यपि व्याख्यातं द्रष्टव्यम् । तत्राप्यसच्छब्देन "**आदित्यो ब्रह्म**" (छां० ३ । १९ । १ ) इति पूर्वनिर्दिष्टस्य ब्रह्मणः समाकर्षात् । नहि समाकर्षाभावे "**तत् सदासीत्**" (छां० ३ । १९ । १ ) इत्यसतः सत्त्वं कथञ्चिदभिधातुं शक्यते । विरोधात् । ब्रह्मण्यसद्व्यपदेशश्च प्रागुत्पत्तेरविभागेन वर्तमानायास्तच्छरीरकल्पायाः प्रकृतेर्नामरूपपरिणामाभावमपेक्ष्योपपद्यते नास्ति तत्र कश्चिद् विरोधः । तथा च कुत्रापि सृष्टिकारणविषये श्रुतिविगानाभावादुपपन्नं ब्रह्मणो "**जन्माद्यस्य यतः**" (वे० १ । १ । २ ) इति लक्षणम् ॥ १५ ॥

**सम्प्रति** ब्रह्मणो जगत्कारणत्वप्रतिपादिकाऽन्या श्रुतिर्विचार्य्यते—

**"जगद्वाचित्वात्"** ॥ १६ ॥

ब्रह्मेत्यधिक्रियते **"कर्ता जगद्वाचित्वात्"** इति युक्तः सूत्रपाठः । **जगद्वाचित्वात्**=कौषीतकिब्राह्मणोपनिषदि बालाक्यजातशत्रुसंवादे प्रयुक्तस्य कर्मपदस्य जगद्वाचित्वाद् वेदितव्यत्वेन श्रुतस्तत्कर्ता परब्रह्म परमेश्वरोऽवगन्तव्य इत्यर्थः ।

कौषीतकिब्राह्मणोपनिषदि बालाक्यजातशत्रुसंवादे श्रूयते **"यो वै बालाके! एतेषां पुरुषाणां कर्ता यस्य वैतत् कर्म स वै वेदितव्यः"** ( कौ० ४ । १९ ) इति । पुरुषाणां=पुरुषाधिष्ठितत्वादादित्यादयः पुरुषास्तेषामेतेषां=प्रत्यक्षादिसिद्धानां कर्ता=जनयिता । **तत्र** संशयः किमिह वेदितव्यत्वेन श्रुतः कर्ता मुख्यः प्राणः स्यादाहोस्विज्जीवात्मा किंवा परब्रह्म परमेश्वर इति । कुतः संशयः? उपक्रमाद् वाक्यशेषाच्च । उपक्रमे हि परब्रह्म परमेश्वरो निर्दिश्यमान उपलभ्यते वाक्यशेषे च मुख्यः प्राणो जीवात्मा च । तस्माद् युक्तः संशयः । मुख्यः प्राणो जीवात्मा चेति पूर्वः पक्षः, परब्रह्म परमेश्वर इति सिद्धान्तः । **किं** तावत् प्राप्तम्? मुख्यः प्राण इति ब्रूमः । **यस्य वैतत् कर्मेति तल्लिङ्गोपलम्भात्** । कर्मशब्दो हि व्यापारे निरूढः । स च सर्वः प्राणाश्रयः । सत्येव प्राणे भावादसति च तस्मिन्नभावात् । नहि कश्चिद् यथा सति प्राणे व्याप्रियते तथा तदभावे व्यापर्त्तुं क्षमते । यच्च नियमेन यदाश्रयते तत् तस्य लिङ्गमित्यसंशयं यथा धूमो धूमध्वजस्य । **वाक्यशेषाच्च** । वाक्यशेषे हि प्राणः साक्षान्निर्दिश्यते **"यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति"** ( कौ० ४ । १९ ) इति । यद्यत्र वेदितव्यः कर्ता प्राणो नाभिप्रेयेत न जातु वाक्यशेषे स निर्दिश्येत् । नह्यनभिप्रेतः प्राणो वाक्यशेषे निर्देष्टुं शक्यते । **"यो वै बालाके! एतेषां पुरुषाणां कर्ता"** ( कौ० ४ । १९ ) इत्यादित्यादिपुरुषकर्तृत्वं च प्राणस्य

प्राणिमात्रोपभोगसाधनत्वादादित्यादिपुरुषाणामौपचारिकमुपपद्यते। मुख्यवदमुख्यार्थस्यापि क्वचिदङ्गीकारात् **"ब्रह्म ते ब्रवाणि"** (कौ० ४। १) इत्युपक्रमगतो ब्रह्मशब्दश्च बृहत्त्वात् प्राणेऽपि सङ्गच्छते। **"कतम एको देव इति? प्राण इति। स ब्रह्म त्यदित्याचक्षते"** (बृ० ३। ९। ९) इत्यादिश्रुत्यन्तरप्रसिद्धेश्च। यथोपक्रमं चोपसंहारोऽपि नयितुं शक्यते **"सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्य्येति य एवं वेद"** (कौ० ४। २०) इति। अत्र सर्वशब्द आपेक्षिकवृत्तिर्बहून् पाप्मनो बहूनां भूतानामित्येवं परः प्रयुक्तो द्रष्टव्यः। यः खलु प्राणस्वरूपं याथातथ्यतो जानाति तत्स्वास्थ्याय च सर्वदा हितमाचरति स नूनं बहून् पाप्मनः समूलघातमपहन्ति बहूनां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं च विन्दतीति सर्वजनीनं नायुक्तं किञ्चिदुच्यते। तस्मादिह वेदितव्यत्वेन श्रुतः कर्ता प्राण एवेति सम्यगालोचामहे। जीवात्मा वा कर्ता स्यात्। धर्माधर्मलक्षणे तद्व्यापारेऽपि कर्मशब्दप्रसिद्धेः। यथा हि कर्मशब्दः खलु परिस्पन्दनलक्षणे व्यापारे प्रसिद्धस्तथा धर्माधर्मलक्षणे व्यापारेऽपि प्रसिध्यति। प्राणाधिपः किल जीवात्मा रागादिवशगो देहेन्द्रियाणि विहितनिषिद्धकर्मसु प्रयोजयति तत्प्रयुक्तानि च तानि तत्र यथाकामं व्याप्रियन्ते। सोऽयं धर्माधर्मलक्षणो व्यापारो, जीवात्मकर्मनाम्ना शास्त्रे प्रसेधेद्धि **"कुर्वन्नेवेह कर्माणि"** (यजु० ४०। २) **"यथाकर्म यथाश्रुतम्"** (कठ० ५। ७) **"क्षीयन्ते चास्य कर्माणि"** (मुं० २। २। ८) **"एवमेवंविदि पापं कर्म न श्लिष्यते"** (छां० ४। १४। ३) **"पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन"** (बृ० ३। २। १३) **"प्राणाधिपः सञ्चरति स्वकर्मभिः"** (श्वे० ५। ७) **"ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्"** (न्या० ४। १। १९) **"कर्मवैचित्र्यात् सृष्टिवैचित्र्यम्"** (सां० ६। ४१) **"कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम्"** (यो० ४। ७) इति। कर्मविशे-

पणं च "एतत्" इति । तेन तस्य सर्वजनीना प्रसिद्धिर्द्योत्यते । यत्फलं सुखं दुःखं च प्रतिक्षणं प्राणिभिरुपभुज्यते तदेतद्वा यस्य कर्मेति तदभिप्रायः । न च जीवात्मनोऽन्यस्यैवंविधं कर्म सम्भवति । वाक्यशेषलिङ्गाच्च । अस्ति तावद् वाक्यशेषः **"तौ ह सुप्तं पुरुषमाजग्मतुः, तं हाजातशत्रुरामन्त्रयाञ्चक्रे बृहन् पाण्डुरवासः सोम राजन्निति। स उ ह तूष्णीं शिश्ये । तत उ हैनं यष्ट्याऽऽविचिक्षेप, स तत एव समुत्तस्थौ"** ( कौ० ४ । १९ ) इति । काश्यः किलाजातशत्रुर्वेदितव्यत्वेनोपन्यस्तस्यादित्यादिपुरुषाणां कर्तुर्वेदनाय शिष्यभावेनोपसन्नं बालाकिं प्रतिबुबोधयिषुः सुप्तं पुरुषमागत्य हे **बृहन्**=स्थावरजङ्गमेषु सर्वत्र वर्तमान! हे **पाण्डुरवासः**=पाण्डुरा आपः, ताः शरीरे निवासकारणमूर्ध्वाधोवस्त्रं वा यस्य, हे **सोम**=निखिलप्राणसार! हे **राजन्**=सर्वासु जाग्रदाद्यास्ववस्थासु देदीप्यमान! इति प्राणनाम्ना सम्बोधयामास । स च न तच्छुश्राव यथापूर्वं च सुष्वाप । अथ यष्ट्या तमाजघान, स तदाघातेन तूर्णं समुदस्थादित्यर्थः । तत्र प्राणनाम्ना सम्बोधनस्याश्रवणेन प्राणादीनामभोक्तृत्वं यष्ट्याघातात्समुत्थानेन च जीवात्मनस्तद्व्यतिरिक्तत्वं भोक्तृत्वं च व्यक्तमवगम्यते । नहि प्राणादीनां भोक्तृत्वे तदामन्त्रणाकर्णनं जाग्रत्सु तेषु कथञ्चिद् घटते, जीवात्मनो वा भोक्तृत्वाभावे यष्ट्याघातेन समुत्थानं सङ्गच्छते । तदिदं भोक्तृत्वं जीवात्मनो लिङ्गं परस्तादपि वाक्यशेषात् प्रतिपद्यामहे **"तद् यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्ति, एवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते, एवमेवैत आत्मान एतमात्मानं भुञ्जन्ति"** ( कौ० ४ । २० ) इति । यथा **श्रेष्ठी**=प्रधानः पुरुषः **स्वैः**=भृत्यैः करणभूतैर्विषयान् शब्दादीन् भुङ्क्ते यथा वा **स्वाः**=भृत्या अशनाच्छादनादिग्रहणेन श्रेष्ठिनं भुञ्जन्ति तथैवैष **प्रज्ञात्मा**=जीवात्मा, **एतैः**=आलोकवृष्ट्यादिना सततं साचिव्यमाचरद्भिरादित्यादिभिः पुरुषैर्विषयानुपभुङ्क्ते, ते च तदुत्सृष्टहविराद्यादानेन यजमानं सन्तमेनं जीवात्मानं भुञ्जन्तीत्यर्थः । न च तत्प्रतिपत्तौ सत्यां

वेदितव्यत्वेन श्रुत इह कर्ता परब्रह्म परमेश्वर इति कल्पयितुं शक्यते। लिङ्गबाधापत्तेः। न चैतद् भगवतस्तस्य लिङ्गं कथञ्चिद् युज्यते। **"अनश्नन्यो अभिचाकशीति"** (ऋ० २ । ३ । १७ । २०) इत्यभोक्तृत्वश्रवणात्। **"यो वै बालाके! एतेषां पुरुषाणां कर्ता"** (कौ० ४ । १९) इत्यादित्यादिपुरुषकर्तृत्वं च जीवात्मनो भोक्तृत्वादेवोपपद्यते। भोक्ता हि जीवात्मा। **"तयोरन्यः पिप्पलं स्वाद्वत्ति"** (ऋ० २ । ३ । १७ । २०) **"आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः"** (कठ० ३ । ४) **"कृतस्य तस्यैव स चोपभोक्ता"** (श्वे० ५ । ७) **"भोक्तृभावात्"** (सां० १ । १४३) इत्यादिश्रुतिस्मृतिभ्यः। भोक्रर्थं च भोग्यस्य जन्म। **"आत्मार्थत्वात् सृष्टेः"** (सां० २ । ११) इति स्मृतेः। अन्यथा वैयर्थ्यापत्तेः। भोग्याश्चादित्यादयः सर्वेऽमी पुरुषा इति नास्ति तस्य तत्कर्तृत्वानुपपत्तिः। **"अथास्मिन् प्राण एवैकधा भवति"** (कौ० ४ । १९) इति वाक्यशेषाभिहितं प्राणत्वं न जीवात्मनः प्राणभृत्त्वात् सङ्गमयितुं शक्यते। **"ब्रह्म ते ब्रवाणि"** (कौ० ४ । १) इत्युपक्रमस्तु ब्रह्मशब्दस्य जीवब्रह्मोभयसाधारणत्वात् सङ्गच्छते। यथोपक्रमं चोपसंहारोऽप्यापादयितुं पार्य्यते। ब्रह्मवेदनस्य जीवात्मवेदनायत्ततया तत्फलस्य जीवात्मवेदनफलत्वेनाभिधानोपपत्तेः। तस्माद् वेदितव्यत्वेन श्रुतोऽत्र कर्ता जीवात्मैव भवितुमर्हति न परब्रह्म परमेश्वर इति। एवं प्राप्त उच्यते—**संवादवाक्यसन्दर्भस्य ब्रह्मपरत्वावधारणेन कर्मशब्दस्य जगद्वाचित्वनिश्चयात्।** एवं हि बालाक्यजातशत्रुसंवादस्तावच्छ्रूयते—दृप्तः किल बालाकिरजातशत्रुं राजानमेत्य **"ब्रह्म ते ब्रवाणि"** (कौ० ४ । १) इति प्रोवाच। राजा च सहर्षमस्यां वाचि गवां सहस्रं ते दद्म इति प्रत्युवाच। स तु तस्मै **"य एवैष आदित्ये पुरुषः"** (कौ० ४ । ३) इत्यादिना षोडश पुरुषान् ब्रह्मत्वेनाभिदधे। तत्रादित्य इति विकल्पाभिप्राया सप्तमी, प्रथमार्थे वा। राजा च तान् प्रत्येकं यथाक्रमं परिच्छिन्नत्वादब्रह्मेति

मत्यमिदधे। तदिदं पश्यन् गार्ग्यो बालाकिस्तूष्णीम्बभूव। तदानी-मजातशत्रुः **"मृषा वै खलु मा संवदिष्ठा ब्रह्म ते ब्रवाणि"** इत्यब्रह्मवादित्वेनापोह्य बालाकिमभ्यधित **"यो वै बालाके! एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः"** (कौ० ४। १९) इति। संवदिष्ठाः=अडभावश्छान्दसः। यस्य खलु देशकालाभ्यामपरिच्छिन्नस्य जगत्पितुर्ब्रह्मणोऽभिधानं प्रति-ज्ञाय बालाकिना गार्ग्येणादित्यादयः षोडश पुरुषा अभ्यधायिषत, राज्ञा चाजातशत्रुणा परिच्छिन्नत्वादब्रह्मत्वेन प्रत्याख्यायिषत, न त्वं ब्रह्मविदसि मृषा मा ब्रह्म ते ब्रवाणीत्यवोचथा इत्यब्रह्मवित्त्वेन स तूष्णीं चक्रे, तदेव ब्रह्मात्र वेदितव्यत्वेन राज्ञा तेनाभिधीयत इति वक्त-व्यम्। अन्यथा तस्यापि बालाकिवन्मृषाभिधानं प्रसज्येत। नहि ब्रह्मा-भिधाने प्रवृत्तादब्रह्मवादिनो बालाकेस्तदभिधानलक्षणं विशेषमात्मनो दर्शयतो राज्ञस्तदनभिधाने मृषाभिधानं न प्रसज्यते, तदभिधानलक्षणो विशेषो वा स्वस्य दर्शयितुं शक्यते। बालाकिना गार्ग्येण च **"ब्रह्म ते ब्रवाणि"** (कौ० ४। १) इति जीवात्मनो वा मुख्यप्राणस्य वाऽभिधानं चेद् विवक्ष्येत तदा न जातु ब्रह्माभिधाननिरतो ब्रह्मविद-जातशत्रुः **"सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्य्येति य एवं वेद"** (कौ० ४। २०) इति तेद्वदनं निरतिशयफलेनोपसंहरेत्। नहि जीवात्मवेदनस्य मुख्यप्राण-वेदनस्य वा साक्षादीदृशं निरतिशयफलं कचित् प्रसिध्यति येन तथा तदु-पसंहरणमुपपद्येत। न च सति मुख्यार्थसम्भवे तद्गोचरा सर्वश्रुतिरियं गौणयितुं सङ्कोचयितुं वा पार्य्यते। परमेश्वरवेदनस्य चेदृशं निरतिशयफलं सर्वत्र वेदान्तेषु सुप्रसिध्यति। तत्सामान्यादिहापि तद्वेदनस्यैवैतत् फलमु-पसंह्रियत इति युक्तं समाश्रयितुम्। तदेवमुपक्रमोपसंहारयोर्ब्रह्मपरत्वे संवादवाक्यसन्दर्भस्यापि तत्परत्वमवधारयितुं शक्यते। सर्वत्र तस्य तदु-भयानुरूपताया दृष्टत्वात्। नहि कुत्राप्युपक्रमोपसंहाराननुरूपो वाक्य-सन्दर्भः कश्चिद् दृश्यते। संवादवाक्यसन्दर्भस्य ब्रह्मपरत्वे च **"यो वै**

**बालाके! एतेषां पुरुषाणां कर्ता यस्य वैतत् कर्म स वै वेदितव्यः**" (कौ० ४ । १९) इत्यत्रापि ब्रह्मैव वेदितव्यत्वेनाभिधीयत इत्यवसीयते। तत्रैव मुख्यस्यादित्यादिपुरुषकर्तृत्वस्योपपत्तेः। मुख्यं ह्यादित्यादिपुरुषकर्तृत्वमिह विवक्षितम्। मुख्यत्वं च स्वतन्त्रत्वम्। न च तत् परब्रह्मणः परमेश्वरादन्यत्र क्वचिदुपपद्यते। नहि जीवात्मा वा मुख्यः प्राणो वाऽऽदित्यादिपुरुषाणामुत्पादे कर्हिचित् स्वतन्त्रो विद्यते। परब्रह्मणः परमेश्वरस्य तत्र स्वातन्त्र्ये च नास्ति कस्यापि किञ्चिद् वैमत्यम्। अतः स एव तेषां कर्ता मान्य इत्यवध्रियते। "**यस्य वैतत् कर्म**" (कौ० ४ । १९) इति कर्मशब्दोऽपि ब्रह्मणः प्रकरणित्वात् क्रियत इति कर्मव्युत्पत्त्या तत्कार्य्यं जगदभिधत्ते न निरूढवृत्त्या परिस्पन्दनलक्षणं धर्माधर्मलक्षणं वा व्यापारमिति वेदितव्यम्। **सत्य**मस्ति कर्मशब्दो व्यापारे निरूढः, **तथापि** न स इह व्यापारमभिधातुमर्हति। तस्य विशेषणेनार्थान्तरे नयनात्। यदि हि केवलः खलु कर्मशब्दोऽत्र प्रयुज्येत तदाऽवश्यं व्यापारमभिदधीत। न च स केवलः प्रयुज्यते किन्त्वेतच्छब्देन सर्वनाम्ना विशेषितः। स चैनं निरूढार्थात् प्रच्याव्य व्युत्पत्तिसिद्धमन्यमर्थं नयति। सन्निहितपरामर्शित्वात्। सर्वनामा तावदेतच्छब्दो नियमेन सन्निहितमर्थं परामृशति। न च द्विविधोऽपि व्यापारस्तेन सन्निधीयते। अशब्दत्वादप्रत्यक्षत्वाच्च। द्वेधा ह्यर्थः सर्वनाम्नः सन्निहितो भवति शब्दोक्तः प्रत्यक्षसिद्धश्च। न च द्विविधोऽपि व्यापारः पूर्वत्र केनचिच्छब्देनोच्यते प्रत्यक्षेण वा प्रमाणेन सेत्स्यते। तत्कथं सन्निहितो मन्येत। न च सन्निहितत्वाभावे स सर्वनाम्ना तेन परामष्टुं शक्यते। जगदिदं चास्ति सन्निहितम्। तस्य साक्षाच्छब्दोक्तत्वाभावेऽपि तदेकदेशभूतानामादित्यादिपुरुषाणां शब्देनोक्तत्वात्। न च तर्हि त एव परामष्टव्या न जगदिति युक्तं भाषणम्। तेषां पुँल्लिङ्गत्वेन बहुत्वेन च परामर्शानर्हत्वात्। एतदिति हि नपुंसकमेकवचनं चोपादीयते। पुरुषाश्च पुँल्लिङ्गा बहुवचनाश्चेति न ते परामर्शमर्हन्ति। गतार्थत्वाच्च। पुरुषाः खलु कर्तेत्यनेन सम्बध्यमाना गतार्थायन्ते। न च गता-

र्थास्ते पुनः सम्बन्धुमर्हन्ति येन परामृश्येरन् । जगच्च साक्षादशब्दोक्तमप्येकदेशेनास्ति यथा शब्दोक्तं तथा प्रत्यक्षसिद्धमपि विद्यते । नहि तस्य प्रत्यक्षसिद्धत्वे पांसुलपादा हालिका अपि विप्रतिपद्यन्ते, शास्त्रसंस्कृतशेमुषीकाः पण्डिता इति तु किमु वक्तव्यम् । तस्मात् तदेवात्र सर्वनाम्ना तेन परामृष्टव्यमिति युक्तमालोचामहे । न च सर्वनाम्ना तेन तत्परामर्शे कर्मशब्दोऽपि रूढ्या व्यापारमभिधातुमुत्सहते । असम्बद्धप्रलापप्रसङ्गात् । अतः सोऽपि क्रियत इति कर्मव्युत्पत्त्या जगद्वचन एवेति गम्यते । सर्वनाम्ना हि सामान्यतो जगदुच्यते कर्मशब्देन च विशेषत इत्येनयोर्विशेषः । तथा चैतेनैतदुक्तं भवति यो वै बालाके ! एतेषामादित्यादिपुरुषाणां कर्ता, न्यूनमिदमुच्यते विश्वं वा जगद् यस्य कर्म=कार्य्यं स वै वेदितव्य इति । तत्र वाशब्देनैकदेशावच्छिन्नकर्तृत्वं व्यावर्त्यते नतु वेदितव्यस्तत्कर्ता विकल्प्यते । न चैवं कर्मशब्दो जगद्वचनो भवन् परब्रह्मणः परमेश्वरादन्यस्य जीवात्मनो वा मुख्यप्राणस्य वा लिङ्गमुपपद्यते । प्रदर्शितानि लिङ्गान्तराणि चोभयोराशङ्क्य निराकरिष्यन्ते । तस्मादिह वेदितव्यत्वेन श्रुतः कर्ता परब्रह्म परमेश्वर एव भवितुमर्हति न जीवात्मा न वा मुख्यः प्राणः ॥ १६ ॥

अत्राशङ्क्य निरस्यति—

**"जीवमुख्यप्राणलिङ्गान्नेति चेत्तद् व्याख्यातम्" ॥ १७ ॥**

**जीवमुख्यप्राणलिङ्गात्**=जीवात्मलिङ्गान्मुख्यप्राणलिङ्गाच्च **न**=वेदितव्यत्वेन श्रुतः कर्ता परब्रह्म परमेश्वरो नेति **चेत्**=यद्युच्यते तदा न वक्तव्यम्, कुतः ? यतस्**तत्**=जीवात्मलिङ्गं मुख्यप्राणलिङ्गं चोभयं **व्याख्यातं**=पूर्ववद् व्याख्यातं भवतीत्यर्थः ।

**अथोच्येत**—न खल्वत्र वेदितव्यत्वेन श्रुतः कर्ता परब्रह्म परमेश्वर एव भवितुमर्हति । जीवमुख्यप्राणलिङ्गस्याप्युपलम्भात् । अस्ति तावज्जीवात्मनो लिङ्गम् **"तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते, एवमेवैत आत्मान एतमात्मानं भुञ्जन्ति"** (कौ० ४ । २० ) इति ।

तथा मुख्यप्राणस्य **"यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति"** (कौ० ४। १९) इति। न च तदुभयलिङ्गोपलम्भे ब्रह्मण एवैकाकिनः कर्तृत्वेन ग्रहणमुचितं न जीवात्मनो न वा मुख्यप्राणस्येति। **नैतद् वक्तव्यम्।** पूर्ववदुक्तोत्तरत्वात्। यथा हि पूर्वत्रेन्द्रप्रतर्दनसंवादे खलु जीवमुख्यप्राणलिङ्गोपलम्भस्योत्तरमुक्तम् **"जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्"** (वे० १। १। ३१) इति, तथेहाप्युक्तं वेदितव्यम्। यदि हि लिङ्गानुरोधेन ब्रह्मवज्जीवात्मा मुख्यः प्राणश्चापि कर्तृत्वेन परिगृह्येत तदा कर्तृत्रैविध्यं प्रसज्येत जीवात्मा मुख्यः प्राणो ब्रह्म चेति। न चैतन्न्याय्यम्। वैदिकानामेकस्य भगवतो ब्रह्मण एवोपास्यत्ववज्जगत्कर्तृत्वाभ्युपगमात्। यथा हि वैदिकाः खलु परब्रह्म परमेश्वरं विहाय नान्यत् किञ्चिदुपास्यं मन्यन्ते, परब्रह्मैव चैकं सर्वथा सर्वदा सर्वत्रोपास्यमातिष्ठन्ते, यत्रेदं श्रूयते **"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद् विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः"** (ऋ० २। ३। २२। ४६) **"युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः। विहोत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः"** (ऋ० ४। ४। २४। १) **"यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव। य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम"** (ऋ० ८। ७। ३। ३) इति, तथा परब्रह्मणः परमेश्वरादन्यं कञ्चन जगत्कर्तारमपि नाभ्युपयन्ति, परब्रह्म परमेश्वरमेव चैकं सर्वदा सर्वत्र लोकत्रयस्यास्य कर्तारमभ्युपगच्छन्ति। यत्रेदं श्रूयते **"विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्। सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः"** (ऋ० ८। ३। १६। ३) **"यो नः पिता जनिता यो विधाता"** (ऋ० ८। ३। १७। ३) **"न तं विदाथ य**

**इमा जजान**" ( ऋ० ८ । ३ । १७ । ७ ) इति । न च प्रमाणपुरस्सरमभ्युपगतोऽयमर्थः सहसा परित्यक्तुं शक्यते । न ह्युपक्रमोपसंहाराभ्यां संवादवाक्यसन्दर्भस्य ब्रह्मपरत्वेऽवधारिते मध्ये कथञ्चिदुपलभ्यमानेन लिङ्गेन जीवात्मा वा मुख्यः प्राणो वा ग्रहणमर्हतः । नच जीवात्मनो लिङ्गस्य कथञ्चिदुपलम्भेऽपि मुख्यप्राणस्य लिङ्गमत्रोपलभ्यते । "**यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति**" ( कौ० ४ । १९ ) इति प्राणशब्दश्च परब्रह्मविषयः प्रयुज्यते न मुख्यप्राणविषयः । नहि सुषुप्तौ परब्रह्मणः परमेश्वरादन्यत्र मुख्ये प्राणे वागादिसर्वपदार्थाप्ययः क्वचिच्छ्रूयते येनात्रापि परिकल्प्येत । परब्रह्मणि परमेश्वरे चास्ति तच्छ्रवणम् "**स यथा सोम्य! वयांसि वासोवृक्षं सम्प्रतिष्ठन्त एवं ह वै तत्सर्वं पर आत्मनि सम्प्रतिष्ठते**" ( प्र० ४ । ७ ) "**इमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पद्यामहे**" ( छां० ६ । ९ । २ ) इति । प्राणशब्दोऽपि चान्यत्र परब्रह्मणि परमेश्वरे प्रयुज्यमानो दृश्यते "**प्राणाय नमो यस्य सर्वमिदं वशे**" ( अथ० ११ । २ । ४ । १ ) "**यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतम्**" ( कठ० ६।२ ) "**प्राणबन्धनं हि सोम्य! मनः**" ( छां० ६।८।२ ) इति । **मनः**=मनःप्रधानो जीवात्मा । "**यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्, एवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवाः, देवेभ्यो लोकाः**" ( कौ० ४ । १९ ) इति पूर्वनिर्दिष्टस्य सर्वाप्ययाधारस्य प्राणस्यात्मशब्देन परामर्शान्नूनमिहापि परब्रह्मविषय एव प्राणशब्दः प्रयुज्यते न मुख्यप्राणविषय इति गम्यते । "**तौ ह सुप्तं पुरुषमाजग्मतुः**" ( कौ० ४ । १९ ) इत्यत्र जीवात्मनो भोक्तृत्वप्रतिबोधनेऽपि न जगत्कर्तृत्वं प्रतिबोध्यते । प्राकृतेभ्यः प्राणादिभ्यो व्यतिरिक्तः खलु जीवात्मा ततश्च व्यतिरिक्तस्तदन्तरात्मा परब्रह्म परमेश्वरो य इह जगत्कर्तृत्वेन वेदितव्य उपदि-

श्यत इत्येतावद्धि सुप्तपुरुषसमीपागमनप्रयोजनम् । उत्तरत्र **"क्वैष एतद् बालाके! पुरुषोऽशयिष्ट क्वैतदभूत् कुत एतदागात्"** (कौ० ४ । १९ ) इति प्रश्नोत्थानात् । अन्यथा तदुत्थानानुपपत्तेः । नहि जीवात्मनो जगत्कर्तृत्वेन वेदितव्यत्वेऽभिप्रेयमाणे भोक्तृत्वप्रतिबोधनानन्तरं तदुत्थानं कथञ्चिदुपपद्यते । स्पष्टो ह्यस्याभिप्रायः—यस्तावद् वेदितव्यो जगत्कर्ताऽत्राभिहितः स एष एव निश्चेतव्यो यं किल भोक्ता पुरुषोऽयं सुषुप्त्यवस्थायामधिशेत इति । न चैतावतैतज्जीवात्मनो जगत्कर्तृत्वेन वेदितव्यत्वप्रत्यायने भवति लिङ्गम् । **"तद् यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनम्"** (कौ० ४ । १९ ) इति च जीवात्मवेदनेऽवश्यं परब्रह्म परमेश्वरोऽपि वेद्यत इत्याशयादुपपद्यते । जीवात्मनोऽन्तरात्मा हि परब्रह्म परमेश्वरः । **"एकस्तथा सर्वभूतान्तरात्मा"** ( कठ० ५ । ११ ) **"परं विज्ञानात्"** ( मुं० २ । २ । १ ) **"यो विज्ञानमन्तरो यमयति"** ( बृ० ३ । ७ । २२ ) **"सर्वव्यापी सर्वभूतान्तरात्मा"** ( श्वे० ६ । ११ ) इत्यादिश्रुतिभ्यः । न च स तावद् वेदितुमीश्यते यावत् तच्छरीरकल्पो जीवात्मा न वेद्यते । यथा हि सपरिवारप्रकृतिवेदनायत्तं खलु जीवात्मवेदनं तथाऽस्ति जीवात्मवेदनायत्तं परब्रह्मवेदनम् । पूर्वं पूर्वं विदित्वैवोत्तरस्योत्तरस्य वेदितुं शक्यत्वात् । तत्र जीवात्मवेदने साधनं योगसचिवं मनः, परब्रह्मवेदने च प्रकृतितत्कार्य्येभ्यः प्रविविक्तो जीवात्मा स्वयम् । **"यदाऽऽत्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् । अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः"** (श्वे० २ । ५ ) इत्यादिश्रुतेः । यद्वेदनं च यद्वेदनायत्तं तत् तन्निर्देष्टुं शक्यते यथा वेदार्थज्ञानस्य मुख्यत्वेन व्याकरणायत्तत्वाद् व्याकरणं वेदः । यत्रेदं श्रूयते **"स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणमितिहासपुराणं पञ्चमं, वेदानां वेदम्"** ( छां० ७ । १ । २ ) इति । **इतिहासपुराणम्**=ऐतरेयादिब्राह्मणचतुष्टयम् । **वेदानां वेदः**=व्याकरणम् । तथा चैतज्जीवा-

त्मलिङ्गत्वेन भासमानमपि ब्रह्मण एव लिङ्गं सम्पद्यते न जीवात्मन इति विज्ञायते । **तस्मादत्र** वेदितव्यत्वेन श्रुतो जगत्कर्ता परब्रह्म परमेश्वर एव भवति न जीवात्मा न वा मुख्यः प्राण इति निश्चयः॥१७॥

**नास्त्यत्र** मुख्यप्राणलिङ्गम् । जीवात्मलिङ्गमपि वस्तुतो ब्रह्मण एव लिङ्गं भवति न जीवात्मन इत्यात्ममतं दर्शितम् । **सम्प्रति** तत्र मतान्तरं दर्शयति—

**"अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके"** ॥ १८ ॥

आत्ममतान्मतान्तरमेतदिति तुशब्देन सूच्यते । जीवलिङ्गमिति छेदेन विपरिणम्याभिसम्बध्यते । **जैमिनिः**=जैमिनिराचार्योऽ**न्यार्थं**= अन्यस्य परब्रह्मणः परमेश्वरस्य प्रतिपत्त्यर्थं जीवलिङ्गं मन्यते, कुतः? **प्रश्नव्याख्यानाभ्यां**=प्रश्नप्रतिवचनाभ्याम्, **अपि च**=न केवलमाभ्यामपि**चैके**=वाजसनेयिन **एवं**=यथा मन्यते तथा प्रतिपादयन्तीत्यर्थः ।

**यदिदं** मध्ये जीवात्मा खलु सङ्कीर्त्यते तद् ब्रह्मप्रतिपत्त्यर्थं सङ्कीर्त्यते न जीवात्मप्रतिपत्त्यर्थम् । प्रश्नप्रतिवचनाभ्यां तथैवावगतेः । अस्ति तावत् **"तौ ह सुप्तं पुरुषमाजग्मतुः"** (कौ० ४ । १९) इति सुप्तपुरुषसमीपमागत्य **"बृहन् पाण्डुरवासः सोम राजन्"** (कौ० ४। १९) इति प्राणनामभिरामन्त्रणेऽपि तदश्रवणे **"तत उ हैनं यष्ट्याऽऽविचिक्षेप, स तत एव समुत्तस्थौ"** (कौ० ४ । १९) इति यष्टिघातोत्थानाभ्यां प्राणतो व्यतिरिक्तं भोक्तारं जीवात्मानं प्रतिबोध्य तदन्यगोचरः **"क्वैष एतद् बालाके! पुरुषोऽशयिष्ट, क्व वा एतदभूत्, कुत एतदगात्"** (कौ० ४ । १९) इति प्रश्नः, **"यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति, तदैनं वाक् सर्वैर्नामभिः सहाप्येति, चक्षुः सर्वैः रूपैः सहाप्येति, श्रोत्रं सर्वैः शब्दैः सहाप्येति, मनः**

**सर्वैर्ध्यानैः सहाप्येति, स यदा प्रबुध्यते यथाऽग्नेः प्रज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्, एवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते, प्राणेभ्यो देवाः, देवेभ्यो लोकाः"** ( कौ० ४ । १९ ) इति च प्रतिवचनम् । स्पष्टश्च तत्प्रतिपाद्योऽर्थः—सुषुप्त्यवस्थायां जीवात्माऽयमविभागेन यत्रावतिष्ठते प्रबोधे च प्रज्वलतोऽग्नेर्विस्फुलिङ्ग इव यस्माद् विप्रतिष्ठते स एव कर्ता वेदितव्योऽत्रोपदिश्यत इति । सुषुप्त्यवस्थायां च जीवात्मा परब्रह्मण्येवाविभागेनावतिष्ठते नान्यत्रेति सर्वत्र श्रूयते **"स एनं यजमानमहरहर्ब्रह्म गमयति"** ( प्र० ४ । ४ ) **"स परेऽक्षर आत्मनि सम्प्रतिष्ठते"** ( प्र० ४ । ९ ) **"सता सोम्य ! तदा सम्पन्नो भवति"** ( छां० ६ । ८ । १ ) **"एवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्"** ( बृ० ४ । ३ । २१ ) इत्याद्यासु श्रुतिषु । प्राणशब्दश्चात्र परमेश्वरवचनः प्रयुज्यते न मुख्यप्राणवचन इत्युक्तमधस्तात् । तथाच प्रश्नप्रतिवचनाभ्यां तत्प्रतिपत्तिर्युज्यते । स्पष्टं चैतमर्थं वाजसनेयिनोऽस्मिन्नेव बालाक्यजातशत्रुसंवादे प्रश्नप्रतिवचनाभ्यां प्रतिपादयन्ति । तत्र **"य एष विज्ञानमयः पुरुषः क्वैष तदाऽभूत्, कुत एतदागात्"** ( बृ० २ । १ । १६ ) इति प्रश्नः । **"य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते"** ( बृ० २ । १ । १७ ) इति प्रतिवचनम् । उभे चैते परब्रह्मप्रतिपत्त्यर्थमेवात्रापन्यस्येते न जीवात्मप्रतिपत्त्यर्थमित्यतिरोहितम् । एतेन **"यथोर्णनाभिस्तन्तुनोच्चरेत्, यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति, एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति"** ( बृ० २ । १ । २० ) इति वाक्यशेषोपन्यासोऽपि तत्प्रतिपत्त्यर्थो व्याख्यातो द्रष्टव्यः । तस्मादिह वेदितव्यत्वेन श्रुतः कर्ता परब्रह्म परमेश्वर एव भवति नान्यः कश्चनेति जैमिनिराचार्यो मन्यते ॥ १८ ॥

पूर्वश्रुतिसमानविषयं श्रुत्यन्तरं विचारयति—

**"वाक्यान्वयात्" ॥ १९ ॥**

ब्रह्मेत्यधिक्रियते । **"आत्मा वाक्यान्वयात्"** इति युक्तः सूत्रपाठः । **वाक्यान्वयात्**=पूर्वापरवाक्यस्य ब्रह्मण्येवान्वयादैतरेयके जगत्स्रष्टृत्वेन श्रुत आत्मा परब्रह्म परमेश्वरोऽवगन्तव्य इत्यर्थः ।

ऐतरेयके हि श्रूयते **"आत्मा वा इदमेक एवाग्र आसीत्, नान्यत् किञ्चन मिषत् । स ईक्षत लोकान्नु सृजा इति । स इमाँल्लोकानसृजत"** ( ऐ० १ । १ ) इति । तत्र संशयः—किमिह जगत्स्रष्टृत्वेन श्रूयमाण आत्मा जीवात्मा स्यात् किंवा परब्रह्म परमेश्वर इति । कुतः संशयः? साधारणशब्दप्रयोगात् । अस्ति खल्वात्मशब्दो जीवब्रह्मोभयसाधारणः, स यथा जीवात्मनि प्रयुज्यते तथा परब्रह्मणि परमेश्वरेऽपि प्रयुज्यते । अतो युक्तः संशयः । **तत्र** जीवात्मेति पूर्वः पक्षः, परब्रह्म परमेश्वर इति सिद्धान्तः । **किं** तावत् प्राप्तम्? जीवात्मेति निगदामः । तल्लिङ्गोपलम्भात् । अस्ति तावच्छरीरप्रवेशो जीवात्मनो लिङ्गम् । स च व्यक्तमिह श्रूयमाण उपलभ्यते **"स एतमेव सीमानं विदार्य्यैतया द्वारा प्रापद्यत"** ( ऐ० १ । ३ ) इति । **सः**=जगत्स्रष्टृत्वेन पूर्वोपक्रान्त आत्मा मूर्धमध्यभागमेवैतं **सीमानं**=कपालत्रयसन्धिरूपं स्थानविशेषं यत्र केशविभागोऽवसीयते तत्र **विदार्य्य**=छिद्रं कृत्वा **एतया द्वारा**=छिद्ररूपेणैतेन मार्गेण **प्रापद्यत**=शरीरं प्राविशदित्यर्थः । न च स जीवात्मनोऽन्यस्य परब्रह्मणः परमेश्वरस्य कर्हिचिदवकल्पते । तस्यापरिच्छिन्नत्वेन प्रवेशासम्भवात् । प्रवेशो ह्यन्तर्गमनम् । तच्च परिच्छिन्नस्य सम्भवति नत्वपरिच्छिन्नस्य । नह्यपरिच्छिन्नं भवत् किञ्चिदन्तर्गन्तुं बहिर्वा निष्क्रामितुं शक्नोति । तस्य पूर्वत एवान्तर्बहिः सर्वत्र विद्यमानत्वात् । अन्यथाऽपरिच्छिन्नत्वानुपपत्तेः । परिच्छिद्यते च जीवात्मा । अणुत्वात् । न परमेश्वरः । विभुत्वात् । **"स ओतः प्रोतश्च विभूः प्रजासु"** ( यजु० ३२ । ८ ) इति श्रुतेः । स्वान-

वचनाच्च। यथा ह्युपक्रान्तस्यात्मनः खलु शरीरेऽस्मिन् प्रवेश उच्यते तथा तत्र प्रविष्टस्य तस्य क्रीडास्थानान्यपि त्रीण्युच्यन्ते **"तस्य त्रय आवसथास्त्रयः स्वप्नाः, अयमावसथोऽयमावसथोऽयमावसथः"** (ऐ० १।३) इति। **तस्य**=शरीरान्तःप्रविष्टस्यात्मन**स्त्रय अवसथाः**=त्रीणि क्रीडास्थानानि विद्यन्ते। तानि चाचिरावस्थायित्वात् **स्वप्नाः**=स्वप्नतुल्यानि भवन्ति। **"अयमावसथः"** इति त्रिरुच्चारणेन स्थानानि तानि यथाक्रमं प्रदर्श्यन्ते चक्षुः कण्ठो हृदयाकाशमित्यर्थः। न च जगत्स्रष्टृत्वेन श्रुतस्यात्मनः परमेश्वरत्वे त्रीणीमानि क्रीडास्थानान्युच्यमानानि कथञ्चित् सङ्गच्छन्ते। तस्य व्यापकत्वेन सर्वस्थानतया स्थानविशेषवचनानुपपत्तेः। न चैवं जीवात्मत्वे तस्यास्ति तदनुपपत्तिः। प्रजाधिपवदाञ्जस्येनोपपत्तेः। यथा हि प्रासादान्तःप्रविष्टस्य खलु कस्यचित् प्रजाधिपस्य तदुपर्य्यधोभागेषु वर्तमानानि कानिचित् क्रीडास्थानानि कल्प्यन्ते यत्रासौ यथाकालं गत्वा क्रीडति तथा शरीरान्तःप्रविष्टस्य जीवात्मनोऽपि कानिचिन्नेत्रकण्ठप्रभृतीनि क्रीडास्थानानि यथाकालं क्रीडितुं कल्प्यमानान्युपपद्यन्ते। अस्ति प्रजाधिप इवैषोऽपि करणग्रामाधिपः। स यथा कदाचित् प्रजाव्यापारान् नेत्राभ्यां पश्यति, कदाचिद् दृष्टान् तान् मनोमात्रेणाकलयति, कदाचित् परिश्रान्तश्च गाढं स्वपिति, तथा जीवात्माऽपि पश्यत्याकलयति गाढं स्वपिति चेति विज्ञातव्यम्। जाग्रदवस्थायां हि करणव्यापारान् पश्यति स्वप्नावस्थायामाकलयति सुषुप्त्यवस्थायां च परिश्रान्तो गाढं स्वपितीति कार्य्यक्रमेणापि तस्यैवास्य स्थानत्रयं युज्यते जाग्रति चक्षुः स्वप्ने कण्ठः सुषुप्तौ च हृदयाकाशमिति। जन्मोपवर्णनाच्च। यथा ह्युपक्रमे जगत्स्रष्टृत्वेन श्रुतस्यात्मनः खलु शरीरान्तःप्रवेशः, प्रविष्टस्य च नेत्रप्रभृतिः स्थानविशेषः कीर्त्यते तथा जन्माप्युपवर्ण्यते **"पुरुषे ह वा अयमादितो गर्भो भवति यदेतद् रेतः, तदेतत् सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतमात्मन्येवात्मानं बिभर्ति, तद् यदा स्त्रियां सिञ्चति, अथैनज्जनयति, तदस्य प्रथमं जन्म"** (ऐ० २।१)

इत्युपक्रम्य "**सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते, अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति, स इतः प्रयन्नेव पुनर्जायते, तदस्य तृतीयं जन्म**" (ऐ० २ । १ ) इति । जन्म च लोकशास्त्रयोर्जीवात्मनो दृश्यते न परब्रह्मणः । न च यस्य यन्न दृश्यते तस्य तत् कल्पयितुं शक्यते । कर्माधीनं हि जन्म । न च परब्रह्मणः परमेश्वरस्य कर्म विद्यते । "**क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः**" (यो० १ । २४) इति स्मृतेः । तथा च कथं तस्य तत् कल्प्येत । न चान्यस्य कर्मणाऽन्यस्य जन्म विधातुं पार्य्यते । अतिप्रसङ्गात् । अत एवोक्तं दर्शनान्तरे "**आत्मान्तरगुणानामात्मान्तरेऽकारणत्वात्**" ( वै० ६ । १। ५ ) इति । जीवात्मन इह जन्मोपवर्ण्यते न परब्रह्मण इति मन्त्रोदाहरणेनापि विस्पष्टयति "**तदुक्तमृषिणा 'गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा । शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयम्'** (ऋ० ३ । ६ । १६ । १ ) इति" (ऐ० २ । १ ) इति । **तत्**=पूर्वोक्तं जन्मजात**मृषिणा**=वामदेवमुखेनेश्वरेणो**क्तं**=कथितम् । **गर्भे**=मातुर्गर्भे **नु**=एव **सन्**=वर्तमानोऽहं=प्राप्तब्रह्मदर्शनो वामदेवोऽहं **देवानामेषां**=विदुषामविदुषां च सर्वेषामेषां प्राणभृतां **विश्वा**=विश्वानि सर्वाणि **जनिमानि**=जन्मान्य**न्ववेदं**=परमात्मदर्शनमाहात्म्यादानुपूर्व्येणाज्ञासिषम् । **मा**=परमात्मदर्शनात् पूर्वं मामा**यसीः**=अयोमयानि लोहवदभेद्यानि **शतम्**=अनेकानि **पुरः**=शरीराण्य**रक्षन्**=यथाऽहं शरीरादितो व्यतिरिक्तमात्मानं साक्षात्कृत्य परब्रह्म परमात्मानं न साक्षात्कुर्य्यां तथा तस्करमिव बद्धमरक्षन् । **अधः**=अधुना परमेश्वरकृपया प्राप्ततद्दर्शनोऽहं **श्येनः**=श्येन इव **जवसा**=वेगेन **निरदीयं**=जालमिव प्रभिद्य निरगममित्यर्थः । न चेदृक्षे विस्पष्टेऽर्थे युक्ता विप्रतिपत्तिः । प्रश्नोत्तराभ्यां च । अत ऊर्ध्वं प्रश्नोत्तरे तावत् प्रवर्तेते । ताभ्यामपि जगत्स्रष्टृत्वेन श्रूयमाण आत्मा जीवात्मेति प्रतिपद्यते । अस्ति "**कोऽयमा-**

**त्मेति वयमुपास्महे, कतरः स आत्मा"** (ऐ० ३ । १) इति प्रश्नः । **"येन वा रूपं पश्यति येन वा शब्दं शृणोति"** (ऐ० ३ । १) इत्यादिकं चोत्तरम् । तत्र पृष्टस्यात्मनोऽवबोधनाय दर्शनश्रवणादयो ये धर्मास्तावत् प्रतिपाद्यन्ते ते जीवात्मन एव प्रसिध्यन्ति न परब्रह्मणः परमेश्वरस्य । नचासति बाधके प्रसिद्धातिक्रमः कथञ्चिद् युज्यते । **तस्मा**दिह श्रूयमाणो जगत्स्रष्टाऽऽत्मा जीवात्मैव भवितुमर्हति न परब्रह्म परमेश्वर इति । एवं प्राप्त उच्यते—**पूर्वोत्तरवाक्यस्य ब्रह्मण्येवान्वयात् तत्प्रतिपत्तेर्विस्पष्टत्वात् ।** अस्ति खलु पूर्वं वाक्यम् **"आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चन मिषत्, स ईक्षत लोकान्नु सृजा इति । स इमाँल्लोकानसृजत"** (ऐ० १ । १) इति । तत्रेदंशब्दवाच्यस्य चिदचिदात्मनोऽस्य जगद्रूपस्य पदार्थजातस्यात्मना सामानाधिकरण्येन निर्देशादुत्पत्तेः प्राक् प्रलयवेलायामभेदो विवक्ष्यत इति विज्ञायते । अन्यथा **"आत्मा वा इदमेक एवाग्र आसीत्"** इत्यवधारणानुपपत्तेः । **"नान्यत् किञ्चन मिषत्"** इति पुनः प्रतिषेधायासवैयर्थ्यापत्तेश्च । न चाभेदोऽत्र शाङ्कराणामिवाखण्डैकरसात्मकोऽभिप्रेयते । चेतनाचेतनयोस्तदसम्भवात् । अचेतनं खलु सर्वमिदं जगदात्मा च चेतनः । न चोभयोस्तयोस्तादृगभेदः कथञ्चित् सम्भवति । विजातीयत्वात् । अविभागलक्षणे च तस्मिन् नास्ति काचनानुपपत्तिः । श्रुतिस्मृतीनां तत्रैव पर्यवसानदर्शनात् । ताश्चास्माभिः सविस्तरमस्मादुदाहारिषत । वक्ष्यति च स्वयं सूत्रकारोऽपि **"अविभागो वचनात्"** (वे० ४ ; २ । १६) इति । यत्रात्मनि चेदं सर्वं जगदुत्पत्तेः प्राक् प्रलयवेलायामविभागेनावृतत्, यतश्च तदानीं न किमपि वस्तु विभक्तमभवत् सोऽयमात्मा प्रलयावसानसमये प्राणिनां भोगापवर्गसिद्ध्यै पुनः पृथिव्यादिकं सर्वं जगत् सिसृक्षुर्यथापूर्वमी**क्षत**=अडभावश्छान्दसः, पर्य्यालोचत । तदाकारमाह—**पृथिव्यादीन् लोकान्नु सृजा** इति । स एवं पर्य्यालोच्य सर्वानिमान् पृथिव्यादीन् लोकानसृजत । न चेदं वाक्यं

परब्रह्मणः परमेश्वरादन्यत्र जीवात्मनि कर्हिचिदन्वयमर्हति । यदि ह्येकाकी जीवात्मैव सृष्टेः प्राक् प्रलयवेलायामवतिष्ठेत तस्मिँश्च सर्वमन्यदविभागमापद्येत तदाऽवश्यं वाक्यमिदं तत्रान्वीयेत । न चैकाकी जीवात्मा तदानीमवस्थातुमर्हति । तस्य जगद्वदधिष्ठेयत्वेनाविभागावश्यम्भावात् । अधिष्ठानस्य हि तदानीमवस्थानमवकल्पते नाधिष्ठेयस्य । जीवात्मा चाधिष्ठेयो वर्तते नाधिष्ठानं यथा प्राकृतं सर्वं जगदिति कथं तदानीमवतिष्ठेत । परब्रह्म परमेश्वरस्तु विद्यते जगत इव जीवात्मनोऽप्यधिष्ठानम् । "**स्कम्भेनेमे विष्टभिते द्यौश्च भूमिश्च तिष्ठतः । स्कम्भ इदं सर्वमात्मन्वद् यत् प्राणन्निमिषच्च यत्**" ( अथ० १० । ४ । ८ । २ ) इत्यादिमन्त्रवर्णात् । अतो जगत इव तस्यापि तदानीमविभागो युज्यते । तदवस्थानं च सुतराम् । यस्य परब्रह्मणः परमेश्वरस्य तदानीमवस्थानं सुतरां युज्यते तत्रैव वाक्यान्वयोऽपि युक्तो नान्यत्रेति साधु निभालयामहे । ईक्षणश्रवणाच्च । अत्र हि स्रष्टव्यसर्जनानुकूलं तद्गोचरमीक्षणं तावदात्मनः श्रूयते "**स ईक्षत लोकान्नु सृजै**" ( ऐ० १ । १ ) इति । स्रष्टव्यं च चिदचिदात्मकं विश्वमिदं पृथिव्यादिकं जगत् । तत्सर्जनानुकूलं तद्गोचरमीक्षणं चात्मनः परमात्मत्वे सङ्गच्छते न जीवात्मत्वे । जीवात्मनः स्रष्टव्यान्तर्गतत्वेनेक्षितृत्वासिद्धेः । परब्रह्मणः परमेश्वरस्य तु तत्सर्जनानुकूलं तद्गोचरमीक्षणं श्रुत्यन्तरेषु व्यक्तमाम्नातमुपलभ्यते "**स ईक्षाञ्चक्रे स प्राणमसृजत**" ( प्र० ६ । ३ ) "**सोऽकामयत बहु स्यां प्रजायेय**" ( तै० २ । ६ ) "**तदैक्षत बहु स्यां प्रजायेय**" ( छां० ६ । २ । ३ ) इति तत्सामान्यादिहापि तस्यैव तत् प्रतिपत्तुं शक्यते । अन्यथा मिथो विरोधप्रसङ्गात् । यस्य च स्रष्टव्यगोचरमीक्षणं स एव तत्स्रष्टेत्यध्यवसीयते "**स इमाँल्लोकानसृजत**" ( ऐ० १ । १ ) इति तच्छब्देन तस्यै परामर्शदर्शनात् । स्रष्टा च सर्वस्यास्य चिदचिदात्मनो जगतः परब्र परमेश्वरः । "**यतो वा इमानि भूतानि जायन्ते येन ज तानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद् ब्रह्म**" ( तै

३।१) इत्यादिश्रुतेः। स एवात्राप्यात्मशब्देन निर्दिश्यते **"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः"** (तै० २।१) इत्यादिवदिति द्रष्टव्यम्। ईक्षणपूर्वकस्रष्टृत्वस्य तत्रैवाञ्जस्येनोपपत्तेः। तस्मात् तद्विषय एवैतद्वाक्यान्वय इति सम्यगीक्षामहे। यथा चोपक्रमवाक्यमिदं परब्रह्मणि परमेश्वरेऽन्वयमृच्छति तथोपसंहारवाक्यमपि तत्रैवान्वयं गच्छति। अस्ति तावदुपसंहारवाक्यम् **"एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपोज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत् प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म"** (ऐ० ३।३) इत्यादि। **ब्रह्मा**=महत्तत्वम् **"मनो महान् मतिर्ब्रह्मा"** (महाभा० १३। १०११) इति स्मृतेः। **इन्द्रः**=अहङ्कारः। ईश्वरो ह्यहङ्कुरुते। **प्रजापतिः**=पञ्च तन्मात्राणि। प्रजापालकत्वात्। **देवाः**=इन्द्रियाणि। तत्र जडचेतनस्य सर्वस्य जगतः प्रज्ञानेत्रत्वं प्रज्ञानप्रतिष्ठितत्वं च प्रतिपाद्य प्रज्ञानं ब्रह्मेति प्रतिपाद्यते। जीवात्मा च ज्ञानस्वरूपत्वाद् यद्यपि प्रज्ञानं विद्यते तथापि नासौ सर्वस्य जगतो नेत्रं सम्भवति। नहि तेन चिदचिदात्मकं सर्वं जगत् स्वस्व[illegible] नयितुं शक्यते येन तस्य तन्नेत्रत्वं परिकल्प्येत। स्पष्टं चेह प्रज्ञानेत्रत्वं विश्वस्य जगतोऽभिधीयते। प्रज्ञानं प्रज्ञा, नीयते स्वस्वव्यापारेषु प्रवर्त्यतेऽनेनेति नेत्रं, प्रज्ञा नेत्रं यस्य तत् प्रज्ञानेत्रमिति तद्व्युत्पत्तेः। यथा च जीवात्मनि प्रज्ञानेत्रत्वासम्भवस्तथा सर्वप्रतिष्ठानासम्भवोऽपि विज्ञातव्यः। यदाश्रया सती प्रकृतिः खलु चराचरं जगदिदं यथाकालं प्रसूते जीवात्मा च यदाश्रयो भवन् भोग्यमिदं सर्वं जगदुपभुङ्क्ते सा प्रतिष्ठेति व्यपदिश्यते। न च जीवात्माश्रया सती प्रकृतिश्चराचरं विश्वमिदं जगत् प्रसोतुं जीवात्मा

च जीवात्माश्रयो भवन् भोग्यमिदं सर्वं जगदुपभोक्तुमर्हति । नहि प्रकृति-कुक्षौ शाशय्यमानो जीवात्मा तदाश्रयः कर्हिचिदाञ्जस्येनोपपद्यते । स्वस्य स्वाश्रयत्वं चात्माश्रयत्वप्रसक्तेः सुतरामनुपपन्नम् । पारतन्त्र्याच्च । यथा हि प्रकृतिः स्वस्वात्माश्रयार्थं ब्रह्मापेक्षते तथा जीवात्माऽप्यात्माश्र-यार्थं तदपेक्षते । समानं हि द्वयोः सत्तांशे पारतन्त्र्याभावेऽप्याश्रयांशे पारतन्त्र्यम् । नचैवं परतन्त्रस्य सतस्तस्य प्रकृत्याश्रयत्वं स्वाश्रयत्वं वा मुख्यं सङ्गच्छते । ब्रह्म चास्ति द्वयोस्तयोराश्रयः साक्षादिति युक्ता सैव प्रतिष्ठा सर्वस्य । प्रकृष्टज्ञानस्वरूपत्वाच्च प्रज्ञा । प्रज्ञानं प्रज्ञेति चानर्था-न्तरम् । मा नाम कश्चित् प्रज्ञानस्वरूपत्वाद् भ्रमतोऽपि जीवात्मानं सर्वस्यास्य जगतो नेत्रं प्रतिष्ठानं च विज्ञासीदिति विशेषणाभ्यां तद्भ्रमो निवार्य्यते । प्रज्ञानं ब्रह्मेति चान्ते निर्देशात् सर्वस्यास्य वाक्यस्य ब्रह्मगो-चरोऽन्वयः स्पष्टीयते । तदेवमुपक्रमोपसंहारवाक्ययोर्ब्रह्मगोचरेऽन्वये प्र-व्यक्ते जगत्स्रष्टृत्वेन श्रुत आत्माऽपि परब्रह्म परमेश्वर एवेति सुखेन निश्चेतुं शक्यते । नहि पूर्वापरवाक्यस्य ब्रह्मविषयत्वे निश्चिते तत्र श्रूयमाण आत्मशब्दो जीवात्मविषय इति कर्हिचित् सम्भावनापथमा-रोहति । यत्तु तस्य तद्विषयत्वसाधकं लिङ्गमुपन्यस्यते **"स एतमेव सीमानं विदार्य्यैतया द्वारा प्रापद्यत"** (ऐ० १ । ३) इति । तदपि न युक्तं मन्यामहे । जीवात्मनः सङ्कल्पपूर्वकप्रवेशासिद्धेः । अत्र हि सङ्कल्पपूर्वकः प्रवेशः खलु श्रूयते **"स ईक्षत कथं न्विदं मदृते स्यादिति । स ईक्षत कतरेण प्रपद्या इति"** (ऐ० १ । ३) इति । नहि जीवात्मा निर्मितेऽस्मिन् शरीरे कदाचित् सङ्क-ल्पपूर्वकं प्रविशति । तत्पूर्वकश्चेत् प्रविशेद् रमणीययोनिक एव तस्मिन् प्रविशेन्नारमणीययोनिके कर्हि चित् । स तु यथा रमणीययोनिके शरीरे प्रविशन् लक्ष्यते तथाऽरमणीययोनिकेऽपि तस्मिन् प्रविशन्नुपलभ्यते । तत्रोभयत्र प्रवेशोपलम्भाच्च नूनमेष प्रवेशो परतन्त्रो न स्वतन्त्र इति गम्यते । सङ्कल्पपूर्वकः प्रवेशस्तु कस्यचित् स्वतन्त्रस्य घटते न पर-तन्त्रस्य । स्वतन्त्रश्च तत्र परब्रह्म परमेश्वरो नान्यः कश्चित् । अतस्तस्यै-

वैष प्रवेश उपचर्य्यत इति प्रतिपद्यते। **तथा च** प्रवेशवाक्यस्यैषोऽर्थः सम्पन्नः—स पूर्वोक्तः परब्रह्म परमेश्वरः कपालत्रयसन्धिरूपे स्थानविशेषे यत्र केशा विभज्यन्ते तत्र छिद्रं कृत्वा तेनैव छिद्ररूपेण ब्रह्मरन्ध्रेण मार्गेण यथाकर्मोपासनं शरीराभ्यन्तरं प्रविशता जीवात्मना प्राविशदिति। जीवात्मा हि निर्मितेऽस्मिञ्छरीरे प्रविशति, तं प्रविशन्तमनु तत्र व्यापकत्वात् प्रविष्टोऽपि परब्रह्म परमेश्वरस्तदन्तरात्मतया प्रविशन्निव भवतीति प्रविशतीत्युपचर्य्यते। सोऽयं प्रवेश इव प्रवेशः "प्रापद्यत" इति क्रियापदार्थः। श्रुत्यन्तरानुगमात्। अस्ति तत्र श्रुत्यन्तरम् **"सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि"** (छां० ६। ३। २) इति। तत्र जीवात्मनो मुख्यः प्रवेशः, परदेवतायाः परमेश्वरस्य च तद्द्वारकं प्रवेशोपचारमात्रमिति निगदेनैवोक्तत्वादुक्तोऽर्थोऽनुगम्यते। तस्मान्नेदं जगत्स्रष्टृत्वेन श्रावितस्यात्मनो जीवात्मत्वे लिङ्गमुपपद्यते। स्थानवचनं जन्मोपवर्णनं च जीवात्मन एव न परब्रह्मणः परमेश्वरस्येति वयमप्यनुमन्यामहे। न चैतावताऽध्यात्मशब्दो जीवात्मपरो व्याख्यातुं शक्यते। तस्य ब्रह्मावबोधनार्थत्वेन तल्लिङ्गत्वानुपपत्तेः। जगत्स्रष्ट्रा खलु परब्रह्मणा परमेश्वरेण रचितेऽस्मिन् संसारमण्डले हीनमध्यमोत्तमेषु नानाविधयोनिकेषु शरीरेषु तन्नियत्या यथाकर्मोपासनं प्रविष्टो जीवात्मा तस्कर इव कारागारेषु यदाऽऽत्मनस्त्राणमन्यतोऽनवलोकमानो जगत्पतिं परब्रह्म परमात्मानं यथाशास्त्रमुपास्य साक्षात् तद्दर्शनमापद्यते तदा ततो विमुच्यतेऽमृतत्वं चोपसम्पद्यत इत्येतत् प्रतिपादनायैव शरीरे प्रविष्टस्य तस्य विविधं स्थानं ततो वैराग्यायैव च नानाविधं जन्मोपवर्ण्यते नोपक्रान्तस्यात्मनो जीवात्मत्वावबोधनार्थमिति न तत्र लिङ्गमुपपद्यते। यत्परः शब्दः स शब्दार्थ इति हि शब्दार्थतत्त्वविदां स्थितिः। न च तामुल्लङ्घ्य वर्तनं शब्दार्थचिन्तायां प्रवर्तमानस्य कस्यचिच्छ्रेयसेऽवकल्पते। यदि च तत्र प्रवर्तमाना वयमपि तामुल्लङ्घ्य वर्तेमहि हन्त श्रेयसः पथो दूरेणावतिष्ठेमहि। तदिदं मूलमसत्यम्। मा

नामैतदकस्मादस्मासु पप्तदिति सर्वदा तदनुसरणमेव युक्तमवलोक्यते । वामदेवमन्त्रे च जन्ममरणप्रबन्धलक्षणस्य संसारस्य लोहमय्यः पुर इव बन्धनत्वं प्रतिपाद्य परमात्मदर्शनेन ततो मोक्षापरपर्य्यायस्य निर्गमस्य प्रतिपादनादेतदर्थप्रतिपादनपर एव नूनमेष शब्दो नात्मशब्दस्य जीवात्मवचनत्वसमर्थनपर इति स्फुटमवगम्यते । नहि तस्यैतदर्थपरत्वाभावे **"स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः सम्भवत्"** (ऐ० २ । १) इति मन्त्रब्राह्मणेनापि शरीरनिर्गमपूर्विकाऽमृतप्राप्तिर्व्याख्यातुं शक्यते । ब्रह्मदर्शनं चास्ति पूर्वमुपक्रान्तम् **"स जातो भूतान्यभिव्यैख्यत् किमिहान्यं वावदिषदिति । स एतमेव पुरुषं ब्रह्मततमपश्यदिदमदर्शमिति"** (ऐ० १ । ३) इति । ये चात्मशब्दस्य जीवात्मवचनतोपपादनाय प्रश्नोत्तरे प्रदर्श्येते **"कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा"** (ऐ० ३ । १) इत्यादिके, ते अपीममेवार्थमुपोद्बलयतो नात्मशब्दस्य जीवात्मवचनतामुपपादयतः । **स्पष्टो** ह्यत्र परमात्मगोचरः प्रश्नो न जीवात्मगोचरः । **"उपास्महे"** इत्युपास्यत्वेन तद्गोचरस्य परामर्शात् । यद्गोचरः खलु प्रश्नः स उपास्यत्वेनेह परामृश्यते । न च जीवात्माऽस्त्युपास्य इति न स तद्गोचरः कल्पयितुं शक्यते । न चात्र स तथा विवक्ष्यत इति युक्तमुच्यते । तस्य **"वयम्"** इति कर्तृपदेनोपन्यासात् । जीवात्मा ह्यत्र कर्तृपदेनोपन्यस्यते । न च तदुपन्यस्तस्य तस्योपास्यत्वं सेद्धुमर्हति । नह्युपासनायाः कर्ता भवति कदाचिदुपास्यः । तत्कर्मण एवोपास्यत्वनियमात् । न च जीवात्मवद् भगवतः परब्रह्मणः परमेश्वरस्याप्यस्त्युपास्यत्वासिद्धिरिति वक्तुं पार्य्यते । सर्वतन्त्रसिद्धत्वात् । वर्तते खलु भगवतस्तस्योपास्यत्वं सर्वतन्त्रसिद्धम् । यत्रेदं श्रूयते **"उप त्वाऽग्ने दिवे दिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसि"** (ऋ० १ । १ । २ । ७) इति । **अग्ने**=हे प्रकाशस्वरूप परमात्मन् ! **दिवे दिवे**=प्रतिदिनं **दोषावस्तः**=रात्रावहनि च यथावकाशं **नमो भरन्तः**=नमोवचनपुरस्सराः

सन्तो **वयं**=त्वत्पुत्राः सर्वे वयं **धिया**=मनसा **त्वा**=त्वामु**पैमसि**=उपासह इत्यर्थः । **"यत्र देवा ब्रह्मविदो ब्रह्म ज्येष्ठमुपासते"** (अथ० १० । ४ । ७ । २४) **"अम्भो अमो महः सह इति त्वोपास्महे वयम्"** (अथ० १३ । ४ । ४ । ५०) **"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत"** (छां० ३ । १४ । १) **"आत्मेत्येवोपासीत"** (बृ० १ । ४ । ७) **"आत्मानमेव लोकमुपासीत"** (बृ० १ । ४ । १५) इति च । तन्त्रान्तराणि च स्वयमेवोहितव्यानि । न चैवं भगवतस्तस्य सर्वतन्त्रसिद्धमुपास्यत्वमुदाहरणमात्रेणापह्नोतुं शक्यते । यश्चोपास्यः खलु सर्वतन्त्रसिद्धः स एव प्रश्नगोचरो विद्यत इति नास्ति किञ्चिदवद्यम् । डतरप्रयोगाच्च । अस्ति खल्वत्र डतरचः प्रयोगः **"कतरः स आत्मा"** (ऐ० ३ । १) इति । स च तत्र प्रवर्तते यत्र द्वयोरेकं किञ्चिन्निर्धार्य्यते । **"किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच्"** (अष्टा० ५ । ३ । ९२) इति पाणिनिस्मरणात् । इह चात्मेति विशेषणोपादानाद् द्वावात्मानौ प्रष्टृणां बुद्धिनलमधिवसत इति विज्ञायते जीवात्मा परमात्मा च । तत्र जीवात्मनः प्रष्टृत्वेन निर्धारितत्वात् परमात्मैव निर्धारणीयः परिशिष्यते । तथा च युक्तस्तद्गोचर एव प्रश्नः । यथा च प्रश्नस्तद्गोचरस्तथा तदुत्तरमपि तद्गोचरमेव द्रष्टव्यम् । प्रश्नोत्तरयोः समानविषयत्वौचित्यात् । **"येन वा रूपं पश्यति येन वा शब्दं शृणोमि"** (ऐ० ३ । १) इत्यादौ हि परब्रह्म परमेश्वरो यच्छब्देनाभिधीयते जीवात्मा च पश्यत्यादिकर्तृत्वेन । तथा चोत्तरवाक्यस्यैषोऽर्थो निष्पन्नः—"यत्प्रयुक्ता दर्शनश्रवणादयो धर्मा जीवात्माश्रया उत्पद्यन्ते स एवोपास्य आत्मा" इति । न चैतेन दर्शनश्रवणादिधर्माणां जीवात्माश्रयत्वप्रसिद्धिरतिक्रम्यते नाप्युत्तरं प्रश्नवैरूप्यमश्नुते । श्रुत्यन्तरेषु च परब्रह्मणः परमेश्वरस्य दर्शनश्रवणादिक्रियाहेतुत्वं व्यक्तमाम्नायते **"यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते** (के० १ । ६) **यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रु-**

**तम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते"** ( के० १ । ७ ) **"येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान् । एतेनैव विजानाति किमत्र परिशिष्यते, एतद्वै तत्"** ( कठ० ४ । ३ ) इति । न चैकत्राम्नातमपरत्र नाश्रयणमर्हति । व्याम्नाने श्रुतीनामप्रामाण्यप्रसङ्गात् । न च स इष्यत इति प्रश्नवदुत्तरमपि परब्रह्मविषयमेवेति मनसि धर्तव्यम् । **"स एतेन प्रज्ञेनाऽऽत्मनाऽस्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत्"** ( ऐ० ३ । १ ) इत्युपसंहारे च प्रज्ञे**नात्मना**=परब्रह्मणा परमेश्वरेण प्राप्तदर्शनस्य वामदेवस्य जीवात्मनः प्रारब्धभोगावसाने शरीरत्यागानन्तरं सर्वकामावाप्तिपूर्वकाविभागलक्षणमोक्षाभिधानादुपनिषद्वाक्यानां तत्रैवान्वयो जीवात्मनश्च तत्प्रतिपादनायैव मध्ये निर्देश इति विशदमवबोध्यते । **तस्मा**दत्र जगत्स्रष्टृत्वेन श्रुत आत्मा परब्रह्म परमेश्वर एव भवितुमर्हति न जीवात्मेति निर्णयः ॥ १९ ॥

**शरीरे** परब्रह्मणः परमेश्वरस्य प्रवेशः सङ्कल्पपूर्वकत्वश्रुतेरौपचारिक उपदिश्यत इत्युक्तम् । **सम्प्रति** किमर्थमेवं स उपदिश्यत इत्यत्र मतान्तराणि प्रदिदर्शयिषुरादावाश्मरथ्याचार्य्यमतं प्रदर्शयति—

**"प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः" ॥ २० ॥**

**प्रतिज्ञासिद्धेः**=एकात्मप्रतिज्ञोपपत्ते**र्लिङ्गं**=ज्ञापकं परब्रह्मणः परमेश्वरस्य स्वाविभक्तेन जीवात्मना शरीरान्तःप्रवेशवचनमित्या**श्मरथ्यः**= आश्मरथ्याचार्य्यो मन्यत इत्यर्थः ।

**अस्ति** तावदुपक्रमे प्रतिज्ञा **"आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चन मिषत्"** ( ऐ० १ । १ ) इति । न च सा तावदुपपत्तुमर्हति यावत् स्वाविभक्तेन जीवात्मना जगत्पितुः परब्रह्मणः परमेश्वरस्य शरीरान्तःप्रवेशो नोपदिश्यते । यदि हि खलु चिदचिदात्मकस्य विश्वस्य जगतोऽविभागेनैकस्य परब्रह्मणः परमेश्वरस्यैवास्तित्वं प्रतिज्ञाय मध्ये तत्सङ्कल्पप्रसमेऽस्मिँल्लोकत्रयात्मके जगन्मण्डले

प्रादुर्भूतेषु प्राणिशरीरेषु ततो विभक्तस्यैकाकिनो जीवात्मनः एव प्रवेश उपदिश्येत जगत्पिता परब्रह्म परमेश्वरश्च परिशेष्येत तदा नूनमियं प्रतिज्ञा हीयेत न कर्हिचिदुपपद्येत । नहि पूर्वमेकं प्रतिज्ञाय पश्चादनेकमुपदिशतः प्रतिज्ञेयं कथञ्चिदुपपद्यते । जीवात्मनः शरीरान्तःप्रवेशोपदेशे ततो विभागेन भगवतस्तस्य परिशेषे च स्वयमेवापद्यतेऽनेकोपदेशो नास्ति तत्र तिरोहितं नाम किञ्चित् । अभीष्टं च नः प्रतिज्ञोपपादनं न तद्धानम् । अन्यथोन्मत्तगीतप्रसङ्गात् । न चास्त्येतदुन्मत्तगीतम् । **तस्मा**त्तदुपपत्त्यर्थमेव भगवतः परब्रह्मणः परमेश्वरस्य स्वाविभक्तेन जीवात्मना शरीरान्तःप्रवेशोऽत्रोपदिश्यत इत्याश्मरथ्याचार्य्यो मन्यते ॥ २० ॥

अन्याचार्य्यमतं प्रदर्श्यते—

**"उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः"** ॥ २१ ॥

**उत्क्रमिष्यतः**=शरीरं परित्यज्य मोक्षपदं प्रविशतो जीवात्मन **एवम्भावात्**=परब्रह्मणि परमेश्वरेऽविभागेनावस्थानात् तेन तस्य शरीरान्तःप्रवेश उपदिश्यत **इत्यौडुलोमिः**=औडलोमिराचार्य्यो मन्यत इत्यर्थः ।

**यथा** हि प्रलयावस्थायां जीवात्मा खलु परब्रह्मणि परमेश्वरेऽविभागेन सन्तिष्ठते तथा मोक्षावस्थायामप्यविभागेनावतिष्ठते । **"यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान् नामरूपाद् विमुक्तः परात् परं पुरुषमुपैति दिव्यम्"** (मुं० ३ । २ । ८) इत्यादिश्रुतेः । वक्ष्यति चाचार्य्यः **"अविभागेन दृष्टत्वात्"** ( वे० ४ । ४ । ४ ) इति । तमिमं मोक्षकालीनमविभागमभिलक्ष्यैव भगवतो जगत्पितुः परब्रह्मणः परमेश्वरस्य जीवात्मना शरीरे प्रवेश उपदिश्यत इत्यौडलोमिराचार्य्यो मन्यते ॥ २१ ॥

अपराचार्य्यमतमुपन्यस्यति—

**"अवस्थितेरिति काशकृत्स्नः"** ॥ २२ ॥

**अवस्थितेः**=परब्रह्मणः परमेश्वरस्यान्तरवस्थानात् प्रविशता जीवात्मना शरीरान्तःप्रवेश उपदिश्यत **इति काशकृत्स्नः**=काशकृत्स्नाचार्य्यो मन्यत इत्यर्थः ।

चिदचिदात्मकं हि सर्वमिदं जगत् परब्रह्मणः परमेश्वरस्य शरीरकल्पत्वाच्छरीरं तावदभ्युपगम्यते । यत्रेदमाम्नातम् **"यस्य भूमिः प्रमाऽन्तरिक्षमुतोदरम् । दिवं यश्चक्रे मूर्द्धानं तस्मै ज्येष्ठाय ब्रह्मणे नमः"** ( अथ० १० । ४ । ७ । ३२ ) **"अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्य्यौ दिशः श्रोत्रे वाग विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा"** ( मुं० २ । १ । ४ ) **"यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरः, यं सर्वाणि भूतानि न विदुः, यस्य सर्वाणि भूतानि शरीरम्"** ( बृ० ३ । ७ । १५ ) **"यो विज्ञाने तिष्ठन् विज्ञानादन्तरः, यं विज्ञानं न वेद यस्य विज्ञानं शरीरम्"** ( बृ० ३ । ७ । २२ ) इति । शरीरशरीरिणोश्च वस्तुतोऽन्यत्वेऽप्यग्निलोहपिण्डयोरिव परस्परमविभागो युज्यते । अन्यथा तद्विवेकोपदेशानुपपत्तेः । **तस्माद्** यथा शरीरेण तदन्तरवस्थितस्य शरीरिणो लोके सदनान्तःप्रवेशो निर्दिश्यते तथाऽत्रापि शरीरकल्पेन जीवात्मना तदन्तरवस्थितस्य शरीरिकल्पस्य भगवतः परब्रह्मणः परमेश्वरस्य शरीरान्तःप्रवेश उपदिश्यत इति काशकृत्स्नाचार्य्यो मन्यते । **तथा** च प्रवेशो यत्किञ्चिन्मतभेदेऽपि जगत्स्रष्टृत्वेन श्रूयमाणस्यात्मनः परमेश्वरत्वे मतभेदाभावादुपपन्नं **"जन्माद्यस्य यतः"** ( वे० १ । १ । २ ) इति ब्रह्मलक्षणम् ।

शङ्कराचार्य्यप्रभृतयो भाष्यकारास्तु बृहदारण्यके मैत्रेयीब्राह्मणे पठितम् **"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"** ( बृ० ४ । ५ । ६ ) इति वाक्यमत्रोदाहरन्ति । तन्न युक्तं मन्यामहे । सृष्टिकारणश्रुतिविचारपादे श्रुत्यन्तरविचारस्याकाण्डताण्डवकल्पत्वात् । सृष्टिकारणश्रुतयो ह्यस्मिन् पादे विचार्य्यन्ते न

ज्ञानादिश्रुतयः । न चात्रत्यात्मशब्दे संशयोऽप्युपपद्यते जीवात्मवचनः स्यात् किंवा परमात्मवचन इति । तस्य जीवात्मवचनताया विस्पष्टत्वात् । पतिजायापुत्रवित्तपश्वादिप्रियत्वप्रभृतितल्लिङ्गानां च प्रबलत्वेनान्यथयितुमशक्यत्वात् । **यत्तु** परमात्मलिङ्गमिव किञ्चित् कथञ्चित् प्रतिभासते तत् परमात्मज्ञानस्य जीवात्मज्ञानाविनाभूतत्वाज्जीवात्मन्यपि सङ्गमयितुं शक्यते नास्ति तत्र तदनुपपत्तिः ॥ २२ ॥

"**जन्माद्यस्य यतः**" ( वे० १ । १ । २ ) इति ब्रह्मलक्षणोपपत्त्यै कानि चित् सन्दिह्यमानानि कारणपराणि श्रुतिवाक्यानि विचारितानि । सम्प्रतीदं विचारणीयमवशिष्यते किं ब्रह्म प्रकृतिसहायं जगतो जन्मादिकारणं स्यात् किंवा तदसहायं केवलमिति । **तत्र** तदसहायस्य केवलस्य कारणत्वे परिणामित्वप्रसक्तेस्तत्सहायमेव कारणं भवेदिति व्यवस्थापयिष्यन्नाह—

"**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्**" ॥ २३ ॥

चोऽप्यर्थः । **प्रकृतिश्च**=ब्रह्मणो जगज्जन्मादिकारणत्वे साहाय्यमाचरन्ती प्रकृतिरपि कारणमभ्युपगम्यते, कुतः? **प्रतिज्ञादृष्टान्तानुपरोधात्**=ज्ञातव्यार्थगोचरो निर्देशः **प्रतिज्ञा,** लौकिकपरीक्षिकाणां बुद्धिसाम्यस्याश्रयोऽर्थो **दृष्टान्तः,** प्रतिज्ञा च दृष्टान्तश्च तयोरुपरोधो **बाधः,** तदभावोऽनुपरोधोऽबाधः, तस्मात् प्रतिज्ञादृष्टान्तानुसारादित्यर्थः ।

श्रूयते तावत् काठकानां प्रतिज्ञा "**य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः । तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन, एतद्वै तत्**" ( कठ० ५ । ८ ) इति । यः **सुप्तेषु**=सुप्तिं गतेषु सर्वेषु चेतनाचेतनात्मकेषु पदार्थेषु **जागर्ति**=न स्वपिति, यः **कामं कामं**=णमुलन्तमेतत्, सङ्कल्प्य सङ्कल्प्य चिदचिदात्मकं विविधं जगन्निर्मिमीते, यश्च तत्र निर्मितानां पदार्थानामधिष्ठानमाश्रयः सोऽयममृतः पुरुषो ब्रह्मेति संक्षेपेण प्रतिज्ञाशब्दार्थः । **यदि ब्रह्मैवैकं** सर्व-

स्यास्य जगतो जन्मादिकारणं मन्येत तदाश्रया शरीरकल्पा प्रकृतिश्च तत्कारणं नाभ्युपगम्येत तदा श्रूयमाणा प्रतिज्ञेयमुपरुध्येत । नहि प्रकृत्यनभ्युपगमे भगवतस्तस्य सङ्कल्पपूर्वकं सर्वपदार्थनिर्मातृत्वं निर्मितानां तेषामाश्रयत्वं च कथञ्चिदुपपद्यते । अभिलाषविशेषो हि सङ्कल्पः । यं किल वैदिकाः काम इति व्याकुर्वते । स च भवति सर्वदा ज्ञानेन समकक्षः । यथा हि ज्ञानं खल्वाश्रयं विषयं चोभयं नियमेनाभिलषते तथा सङ्कल्पोऽप्येतदुभयं कामयते । न च यस्तस्याश्रयः स एव विषय इति सम्भवति । मिथो विरोधेन समवायानर्हत्वात् । सङ्कल्पयितृभावो ह्याश्रयत्वं सङ्कल्प्यभावश्च विषयत्वम् । ते चोभे गन्तृगन्तव्यवत् परस्परं विरुद्धे नैकत्र समवेतुमर्हतः । नहि गन्त्रेव क्वचिद् गन्तव्यं गन्तव्यमेव वा क्वचिद् गन्तृ सम्पद्यते । भिन्नाश्रयविषयत्वे च तस्य यस्तावदाश्रयस्तद् ब्रह्म यश्च विषयः सा प्रकृतिरिति मुखेनापद्यते । तत्र ब्रह्म निमित्तकारणविशेषोऽधिष्ठानकारणम् प्रकृतिरुपादानकारणम् । सेयं भगवतस्तस्य सङ्कल्पेन गर्भिणीव गर्भेणोपचीयमाना यथावेलं विविधमिदं जगत् सम्प्रसूते, जीवात्मानश्चाग्नेर्विस्फुलिङ्गा इव तस्माद् व्युच्चरन्तो विश्वं जगद् यथाऽऽयमुपभुञ्जते । भोग्यानां प्रकृतितत्कार्य्याणां भोक्तॄणां जीवात्मनां च लोकशब्दवाच्यानामधिष्ठानं ब्रह्मैवैकं तदेव शुक्रं तदेवामृतं तदेवेतरैः सर्वैरधिष्ठेयत्वादत्येतुमशक्यमित्युपपद्यते प्रतिज्ञा । दृष्टान्तश्च

**"अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च"**

( कठ० ५ । ९ ) इति । तत्राग्निर्दृष्टान्तः, ब्रह्म दार्ष्टान्तिकम् । यथा हि सर्वस्य जीवनहेतुरग्निः खलु विश्वं भुवनमनुप्रविष्टः प्रतिपदार्थं बाह्यः सन्नपि तदन्तरानुप्रविष्टत्वात् तदाकारोऽवतिष्ठते तथा जगज्जन्मादिकारणं ब्रह्मापि जीवनहेतुत्वात् प्रतिपदार्थमन्तर्य्यामिरूपेणानुप्रविष्टं तदाकारमास्ते, तत्त्वतस्तेभ्योऽग्निवद् बाह्यं च वरीवृत्यते । चेद् ब्रह्मैवैकं जगज्जन्मादिकारणमभ्युपगम्येत प्रकृतिश्च तत्कारणं नाभ्युपेयेत तदा दृष्टान्तोऽयमुपरुध्येत । नहि प्रकृत्यभ्युपायाभावे प्रवेष्टव्यत्वेनाभिहिताः सर्वेऽमी

पदार्थाः कथञ्चिदुत्पत्तुमर्हन्ति । ब्रह्मणो बाह्यत्वाभिधानेन निमित्तकारणत्वस्य विस्पष्टमवगमितत्वात् । अत्र खलु ब्रह्म प्रतिपदार्थममिवदनुप्रविष्टमपि बाह्यमित्युच्यते । तच्च तस्य निमित्तकारणतामवगमयति नोपादानकारणताम् । नह्युपादानकारणं किञ्चिदग्निवत् पदार्थेष्वनुप्रविष्टं सद् बाह्यमपि तेष्ठीयते । तटस्थो हि तटस्थेषु प्रविशति ततो बाह्यं च तिष्ठति यथा सर्वपदार्थेष्वग्निः सौधेषु चाकाशम् । उपादानकारणं च पदार्थाकारेण परिणतत्वान्न बाह्यमवस्थातुमर्हति दूरेण हि तस्य तत्रानुप्रवेशः । व्यपदेशमात्रं च नार्थसाधनाय कल्पते यावत् प्रमाणेन न प्रमीयेत । न च निमित्तकारणे भगवति ब्रह्मणि सत्यपि पदार्थास्तावदुत्पत्तुमर्हन्ति यावदुपादानकारणं किञ्चिन्नास्थीयते । न च ब्रह्मैवैकं निमित्तकारणमुपादानकारणं चोभयं स्यादिति चारु वचो मन्यामहे । परिणामित्वप्रसङ्गात् । कूटस्थनित्यं हि ब्रह्म समाश्रीयते न परिणामिनित्यम् । वैरूप्याच्च । मलिना जडाश्च पदार्थाः, निर्मलं चेतनं च ब्रह्म । कार्यकारणभावश्च सारूप्यनिबन्धन इष्यते न वैरूप्यनिबन्धनः । न च तेषां सरूपं कारणं प्रकृतितोऽन्यत् किञ्चिदुपपद्यते । तदभ्युपाये च प्रवेष्टव्याखिलपदार्थोत्पत्तिसम्भवादुपपन्नः प्रतिज्ञावद् दृष्टान्तः । **यथा** चैतौ प्रतिज्ञादृष्टान्तौ खलु प्रकृत्युपपादकौ काठके श्राव्येते तथा मुण्डकेऽपि पठ्येते । "**यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः**" (मुं० १। १। ६) इति प्रतिज्ञा, "**यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम्**" (मुं० १ । १ । ७) इति च दृष्टान्तः । प्रतिज्ञादृष्टान्तयोश्चानयोरर्थः सविस्तरमस्माभिरधस्ताद् व्याकारि । यदि च ब्रह्मातिरिक्तं तच्छरीरकल्पं प्रकृत्याख्यं कारणं किञ्चिन्नाश्रीयेत तदाऽमू प्रतिज्ञादृष्टान्तौ नूनमुपरुध्येयाताम् । प्रकृत्याश्रयणे हि तदन्तःप्रविष्टं ब्रह्म यथासमयं जगदाकारेण तां परिणामयति, प्रकृतिश्च तन्नियम्यत्वाद्

द्रागित्येव जगदाकारेण परिणमते यथोर्णनाभिनियम्यं तन्त्वाकारेणोर्णनाभिशरीरम् । यच्च परिणमते तत्रैव परिणामस्थितिरिति नियमाज्जगत्परिणामोऽपि प्रकृतावेव वरीवर्ति न तन्नियामके भगवति ब्रह्मणि । तथा च जगदाकारेण परिणामयदपि प्रकृतिं ब्रह्म सेषिध्यतेऽद्रेश्यमग्राह्यमगोत्रमवर्णमित्यादि । प्रकृत्यनाश्रयणे च ब्रह्मैव जगदाकारेण परिणमत इति वक्तव्यम् । अन्यथाऽऽकस्मिकत्वं जगतः प्रसज्येत । न च तदिष्यते । **"कथमसतः सज्जायेत"** ( छां० ६ । २ । २ ) इति तत्प्रतिषेधावगमात् । न च जगदाकारेण परिणममानं ब्रह्म पुनर्यथाप्रतिज्ञं सेद्धुमर्हति । तदा हि दृश्यं स्यान्नादृश्यं ग्राह्यं स्यान्नाग्राह्यं सगोत्रं स्यान्नागोत्रं सवर्णं स्यान्नावर्णं सव्ययं स्यान्नाव्ययम् । नहि परिणमते च न दृश्यते न गृह्यते न गोत्रेणाख्यायते न रूपेण वर्ण्यते न व्ययमापद्यते चेति कथञ्चित् संश्लिष्यते । तथा चोपरुध्येत प्रतिज्ञा सुतरां च दृष्टान्तः । न च श्रौतयोस्तयोरुपरोधो युक्तः समाश्रयितुम् । श्रुतिप्रामाण्याभावप्रसङ्गात् । प्रमाणं च नः श्रुतिः । न च ब्रह्मणो जगदाकारेण परिणामोऽप्युपपद्यते । अपरिणामित्वात् । यथा हि लूताकीटः खलु शरीरं विना तन्तुजन्मादिकारणं न घटते तथा ब्रह्मापि प्रकृतिं विना जगज्जन्मादिकारणं नोपपद्यते । नह्यपरिणामिनः परिणामः कदाचित् सम्भवति । विद्यते च जगज्जन्मादिकारणं ब्रह्म । **तस्मात्** तदुपपत्त्यर्थं शरीरमिव लूताकीटस्य तस्य साहाय्यमाचरन्ती तच्छरीरकल्पा प्रकृतिरपि कारणमभ्युपगन्तव्या । तदभ्युपगमे च न प्रतिज्ञोपरुध्यते न दृष्टान्तः । प्रकृत्यंशे परिणामस्य ब्रह्मांशे च तद्धेतुत्वस्यापरोक्षत्वात् ।

**"उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्"** ( छां० ६ । १ । २ ) इति प्रतिज्ञां छन्दोगास्तावदामनन्ति । **"यथा सोम्य ! एकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्"** ( छां० ६ । १ । ४ ) इत्यादिकं च दृष्टान्तम् । तत्र ब्रह्मणा खल्वेकेन विज्ञातेन सर्वमन्यदविज्ञातमपि विज्ञातं

सम्पद्यत इति प्रतिज्ञार्थः । यथोपादानकारणे विज्ञाते सर्वं तदुपादेयं कार्य्यं विज्ञातं भवति तथा भगवति ब्रह्मणि विज्ञाते सर्वमन्यद् विज्ञातं बोभूयत इति च दृष्टान्तार्थः । अत्र केचिदाचक्षते—दृष्टान्तः किलोपादानकारणविषयो विस्पष्टः, प्रतिज्ञाऽपि तदनुरोधादुपादानकारणगोचरैवेति विज्ञायते । तस्याः सर्वत्र दृष्टान्तानुरूपत्वस्यौचित्यात् । अन्यथा तदुपन्यासवैयर्थ्यापत्तेः । प्रतिज्ञादृष्टान्तयोरुपादानकारणविषयत्वे च जगतो निमित्तकारणवदुपादानकारणमपि ब्रह्म सेत्स्यतीति निःसंशयम् । यत्कारणं तत्सिद्ध्यर्थमेव तदुभयमत्राम्नायते । तदसिद्धौ न व्यक्तं तदुपरोधः प्रसज्येत । नच स श्रौतयोस्तयोरिष्यते । निमित्तकारणवद्भवत्युपादानकारणमपि ब्रह्मेति साधनस्य फलं च तद्विज्ञानेन तद्व्यतिरिक्तस्य सर्वस्य विज्ञानं यथा मृत्तिकाविज्ञानेन सर्वस्य मृन्मयस्य लोहविज्ञानेन च सर्वस्य लोहमयस्य । न्याय्यं च फलवतः समाश्रयणम् । तस्मादस्ति निमित्तकारणवदुपादानकारणमपि ब्रह्मेति । नैतद् युक्तं पश्यामः । उपादानकारणविज्ञानेन कार्य्यविज्ञानसम्भवेऽप्यकार्य्यविज्ञानासम्भवात् । उपादानकारणविज्ञाने हि कार्य्यस्य विज्ञानं सम्भवति नाकार्य्यस्य । व्यतिरेकात् । नहि कार्य्यं यथोपादानकारणतो न व्यतिरिच्यते तथाऽकार्य्यमपि ततो न व्यतिरिच्यते । न च ब्रह्मणोऽन्यद् यावदर्थजातं विद्यते तावत् तस्य कार्य्यं विद्यते । प्रकृतेर्जीवात्मनां चाकार्य्यत्वात् । सत्यपि ब्रह्मविज्ञाने तदविज्ञानाभ्युपगमे चोपादानकारणं ब्रह्मेति स्वीकारो व्यर्थः । **"उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्"** (छां० ६ । १ । २) इति प्रतिज्ञोपरोधात् । नह्यश्रुतामताविज्ञातेषु प्रकृतिजीवात्मानोऽन्तर्न भवन्ति । तस्मान्निमित्तकारणविशेषोऽधिष्ठानकारणमेव ब्रह्म नोपादानकारणमित्यास्थातव्यम् । न चैवमास्थाने प्रतिज्ञोपरुध्यते नापि दृष्टान्तः । अधिष्ठानकारणविज्ञानेन तदन्यस्याधिष्ठेयस्य सर्वस्य विज्ञानसम्भवात् । अधिष्ठानकारणविज्ञाने हि कार्य्यं स्यादकार्य्यं वा स्यात् सर्वस्यान्यस्याधिष्ठेयस्य विज्ञानं सम्भवति, नास्ति तदनुपपत्तिः । अधिष्ठेयं च कार्य्यमेव भवति नाकार्य्य-

मिति ने नियन्तुं शक्यते । कार्य्यवदकार्य्याणां प्रकृतिजीवात्मानामप्यधिष्ठेयत्वाङ्गीकारात् । **अथा**धिष्ठानकारणं ब्रह्म नोपादानकारणं तर्हि कथमुपादानकारणगोचरो दृष्टान्त इहोपादीयते नाधिष्ठानकारणगोचर इति । **अत्रोच्यते** । अधिष्ठानकारणविज्ञानेनाधिष्ठेयविज्ञाने सार्वांशिको दृष्टान्तः कश्चिन्न विद्यत इत्यगत्या तद्गोचर एव स उपादीयते । **प्रलय**वेलायां सकार्य्यायाः प्रकृतेर्जीवात्मनां च ब्रह्मण्यविभागेनावस्थानात् सृष्टिवेलायां च तस्मादग्नेर्विस्फुलिङ्गवन्निःसरणादधिष्ठानकारणं सदपि ब्रह्म भवत्युपादानकारणकल्पमित्यभिप्रायेण वा स तद्गोचर आम्नायते । **दृ**ष्टान्तश्च सर्वः सर्वत्रोपादेयांश एव प्रवर्तते नानुपादेयांशोऽपि क्वचित् । नहि लोके वा शास्त्रे वा सार्वांशिको दृष्टान्तः कश्चिदुदाहर्तुं शक्यते । यस्मिन्नंशे च नास्ति तत्प्रवृत्तिर्न स कर्हिचित् परिगृह्यते । अन्यथा तदुपादानवैयर्थ्यप्रसङ्गात् । अत्र चाश्रयविज्ञानेन सर्वाश्रितविज्ञानमेवोपादेयोंऽशः । स चास्त्युपादानकारणगोचरदृष्टान्तेऽप्यव्याहत इति न तदुपादानेऽपि किञ्चिद् हीयते । श्वेतकेतुं पुत्रं प्रत्युद्दालकः पिता ब्रह्मावबोधनार्थं खलु प्रववृते न कार्य्यकारणभावावबोधनार्थमित्यपरोक्षम् । ब्रह्म चास्ति सत्यानां सत्यं यथा कार्य्याणां कारणम् । "**वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्**" (छां० ६ । १ । ४) इत्यभिदधता तत्रैव तत्पर्य्यवासनस्य दर्शितत्वात् । ब्रह्मावबोधे च कार्य्यलिङ्गतोऽन्यः कश्चित् सुकरोपायो न तद्दृष्टौ विद्यते, स तेनैव नूनं तदवबोधं सुकरं मन्यते । अत एव दृष्टान्तमपि तदनुकूलत्वादुपादानकारणगोचरमेवोपाददे नाधिष्ठानकारणगोचरमिति विज्ञायते । न चैतावतोपादानकारणं ब्रह्म तेनाभिप्रेयत इति वक्तुं पार्य्यते । कार्य्यलिङ्गेनावबोध्य स्वयमेव भगवतस्तस्याधिष्ठानकारणताया अभिहितत्वात् "**एवमेव खलु सोम्य! अन्नेन शुङ्गेनापो मूलमन्विच्छ, अद्भिः सोम्य! शुङ्गेन तेजोमूलमन्विच्छ, तेजसा सोम्य! शुङ्गेन सन्मूलमन्विच्छ । सन्मूलाः सोम्य! इमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः**" (छां० ६ । ८ । ४) इति ।

यदि ह्युपादानकारणं ब्रह्माभिप्रेयेत न जातु सदायतनाः सत्प्रतिष्ठाः सर्वा इमाः प्रजा इत्यभिधीयेत। नह्युपादानकारणत्वे ब्रह्मणश्चिदचिदात्मिका इमाः सर्वाः प्रजास्तदायतनास्तत्प्रतिष्ठा इत्यभिधातुं शक्यते। कार्य्यात्मिकाया-स्तस्यास्तदायतनत्वतत्प्रतिष्ठत्वसम्भवेऽप्यकार्य्यात्मिकायास्तदसम्भवात् । कार्य्ये ह्युपादानकारणमाश्रयते नाकार्य्यम्। इह च प्रजाशब्दः कार्य्या-कार्य्यचिदचिदात्मकनिखिलपदार्थपरः प्रयुज्यते न कार्य्यमात्रपरः। "**एवमेव सोम्य! इमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पद्यामहे**" (छां० ६।९।२) इत्युत्तरत्र तत्रैव तत्प्रयोगोपलब्धेः। अधिष्ठानकारणं ब्रह्मेत्यभ्युपगमे चास्ति जगतः प्रकृतिरप्युपादानकारणमिति हसताऽऽस्थेयम्। प्रतिज्ञादृष्टान्तानुपरोधात्। तदास्थायां ह्येतौ नोपरुध्येते, अन्यथा तूपरुध्येयाताम्।

एतेन "**कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति**" (मुं० १।१।२) इति प्रतिज्ञा "**यथा पृथिव्यामोषधयः सम्भवन्ति**" (मुं० १।१।७) इति दृष्टान्तश्चापि व्याख्यातौ द्रष्टव्यौ। ब्रह्मणोऽधिष्ठानकारणत्वे सत्येव तद्विज्ञानेन सर्वविज्ञानस्य प्रतिज्ञानात्। दृष्टान्तोऽपि च यथाऽधिष्ठानकारणतायामेव समन्वीयते नोपादानकारणतायां तथा सविस्तरमुपापीपदामपरस्तात्। अधिष्ठानकारणं निमित्तकारणं चेत्यनर्थान्तरम्।

"**आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्**" (बृ० ४।५।६) इति प्रतिज्ञा चात्मज्ञानानन्तरं ब्रह्मज्ञानस्यावश्यम्भावात् प्रवर्तमानाऽपि ब्रह्मणो निमित्तकारणतामेव समर्थयति नोपादानकारणताम्। निमित्तकारणत्वे च जगतः प्रकृतिरप्युपादानकारणमभ्युपेयते प्रतिज्ञादृष्टान्तानुपरोधादिति स्वयमेवोपपन्नम्॥ २३॥

ब्रह्मवत् प्रकृतिरपि जगतः कारणमभ्युपगम्यते प्रतिज्ञादृष्टान्तानुपरोधादित्यभिहितम्। **सम्प्रति** तत्रैव हेत्वन्तरं समुच्चिनोति—

"**अभिध्योपदेशाच्च**"॥ २४॥

प्रकृतिश्चेत्यनुवर्तते। पूर्ववत्रैवायं हेतुरिति चार्थः। **अभिध्योपदेशात्**=सङ्कल्पोऽभिध्या, तदुपदेशात् प्रतिपद्यते प्रकृतिरपि कारणमभ्युपगम्यत इत्यर्थः।

उपदिश्यते तावदभिध्या "**सोऽकामयत बहु स्यां प्रजायेय**" (तै० २। ६) "**तदैक्षत बहु स्यां प्रजायेय**" (छां० ६। २। ३) इत्याद्या। सा चेच्छाविशेषात्मकतया यथाऽभिध्यातारमपेक्षते तथाऽभिध्यातव्यमप्यपेक्षते। तत्राभिध्यातृत्वं कर्तृत्वमभिध्यातव्यत्वं च कर्मत्वम्। ते चोभे परस्परं विरुद्धे नैकस्य कर्हिचिदुपपद्येते। तेनाभिध्यातृ ब्रह्म तदाश्रया तच्छरीरकल्पा च प्रकृतिरभिध्यातव्येति वक्तव्यम्। तत्र ब्रह्माभिध्यातृत्वान्निमित्तकारणं प्रकृतिश्चाभिध्यातव्यत्वादुपादानकारणम्। यथा हि लोके खलु पुरुषः स्वशरीरकल्पायां स्त्रियां सत्यां प्रजारूपेणात्मनो बहुभवनं कामयते नासत्यां तथा ब्रह्मणोऽपि स्वशरीरकल्पायां प्रकृतौ सत्यामेव प्रजात्मना बहुभवनसङ्कल्पो वेदितव्यो नासत्याम्। अन्यथा स्वरूपहानप्रसङ्गात्। नित्यशुद्धबुद्धमुक्तस्वरूपं हि ब्रह्म। तस्य तावदेव तदवतिष्ठते यावद् बहुभवनाश्रया प्रकृतिराश्रीयते। नो चेदाश्रीयेत निश्चितमेतद् हीयेत। नहि बहुभवनात्मके परिणामेऽभ्युपगम्यमाने ब्रह्म यथापूर्वमवस्थातुमर्हति। तदवस्थानं चेष्टम्। तस्माद् ब्रह्मवत् तदभिध्यया बहु भवन्ती तदाश्रया तच्छरीरकल्पा प्रकृतिरपि कारणमभ्युपगम्यत इति विज्ञायते॥ २४॥

अत्रैवापरं हेतुमाह—

"**साक्षाच्चोभयाम्नानात्**"॥ ५५॥

प्रकृतिश्चेत्यनुवर्तते। पूर्ववत्रैवैष हेतुरिति चार्थः। **साक्षात्**=प्रत्यक्षम् **उभयाम्नानात्**=प्रकृतेर्ब्रह्मणश्चोभयस्य जगत्कारणत्वेनाभिधानाद् विज्ञायते प्रकृतिरपि कारणमभ्युपगम्यत इत्यर्थः।

*श्वेताश्वतरा हि प्रकृतिं ब्रह्म चोभयं जगत्कारणत्वेन साक्षादामनन्ति* "***मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्***" (श्वे०

४ । १० ) इति । प्रक्रियतेऽनयेति प्रकृतिरुपादानकारणम् । मायेति प्रकृतेर्नामान्तरम् । तन्नियामकत्वाच्च परब्रह्म परमेश्वरो मायी । माया-प्रकृतिः, सा नियम्यत्वेनास्त्यस्येति तद्व्युत्पत्तेः । ईश्वराणामीश्वरत्वाच्चैष महेश्वरः । स प्रकृतिभूतामिमां मायां जगद्रचनायै यथासमयं विनि-युङ्क्ते सा च तदर्थं विनियुज्यमाना विविधमिदं जगन्महदादिक्रमेण निर्मिमीते । तत्रोपादानकारणं प्रकृतिर्निमित्तकारणं च महेश्वर इति तदाम्नानाभिप्रायः । न च तेषामेतदाम्नानं भवति कदाचिदप्रमाणम् । वेदमूलकत्वात् । अस्ति खल्वस्याम्नानस्य मूलं भगवान् वेदो यत्र महे-श्वरस्य मायया प्रकृत्या बहुविधजगन्निर्माणं साक्षादाम्नायते **"इन्द्रो मायाभिः पुरुरूप ईयते"** ( ऋ० ४ । ७ । १३ । १८ ) इति । मायाभिरिति तद्गतशक्तिनानात्वाभिप्रायेण बहुवचनम् । **इन्द्रः**=महे-श्वरः । न चैवम्भूते प्रामाणिकेऽर्थे विवदन्ते विद्याचुञ्चवो विज्ञाः । **तस्माद्** यथा जगज्जन्मादिकारणं ब्रह्म तथाऽस्ति तदाश्रया तच्छरीर-कल्पा प्रकृतिरपि जगतः कारणमित्यभ्युपगन्तव्यम् ॥ २५ ॥

उभयाम्नानादुभयं कारणमित्युक्तम् । तत्र कतरन्निमित्तमध्यवसातव्यं कतरदुपादानमित्याकांक्षायामाह—

**"आत्मकृतेः परिणामात्"** ॥ २६ ॥

**आत्मकृतेः**—आत्मा ब्रह्म, कृतिः प्रयत्नः, स इह सङ्कल्पलक्षणो गृह्यते, अन्यादृशस्य तत्रानुपपत्तेः, आत्मनो ब्रह्मणः कृतेः परिणामात्= प्रकृतेर्जगदाकारेण परिणामान्निमित्तं ब्रह्माध्यवसातव्यमुपादानं प्रकृति-रित्यर्थः ।

तैत्तिरीयके पठ्यते **"सोऽकामयत बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा इदं सर्वमसृजत"** ( तै० २ । ६ ) इति । तत्र सङ्कल्पगर्भं प्रकृतिपर्य्यालोचनात्मकं ज्ञानं तपः, तत्पूर्वकसृष्टिकर्तृत्वस्य ब्रह्मणोऽभिधानात् सर्वस्यास्य जगतो निमित्तकारणं ब्रह्मेति स्फुटं विज्ञायते । निमित्तकारणं हि सङ्कल्पयति सृजति चेति

लोके प्रसिद्धम् । यथा हि लोके खलु कुम्भकारो मृत्स्नां पश्यन् घटशरावोदञ्चनादिकं कुर्य्यामिति पूर्वं कामयते कामयित्वा च घटशरावोदञ्चनादिकं कुरुते, तथा ब्रह्मापि प्रलयवेलायामविभागेनात्मभूयावस्थितां प्रकृतिं सर्गारम्भे पश्यद् बहु स्यां प्रजायेयेति सङ्कल्पते सङ्कल्प्य चेतरनिरपेक्षं सर्वमिदं जगद् यथापूर्वमुत्पादयते । यत्रेदं श्रूयते **"सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्"** ( ऋ० ८ । ८ । ४८ । ३ ) इति । सोऽयं निमित्तकारणस्य चेतनस्य स्वभावो भगवति ब्रह्मण्यवगमात् प्रतिपद्यते नूनं निमित्तकारणं ब्रह्म ।

**यथा** च तैत्तिरीयके भगवतो ब्रह्मणः सङ्कल्पपूर्वकं जगत्कर्तृत्वं पठ्यते तथा तत्सङ्कल्पपूर्वकः प्रकृतेर्जगदाकारेण परिणामोऽप्यधीयते **"असद्वा इदमग्र आसीत् ततो वै सदजायत । तदात्मानं स्वयमकुरुत । तस्मात् तत् सुकृतमुच्यते"** ( तै० २ । ७ ) इति । नामरूपाभ्यामभिव्यक्तमिदं जगदुत्पत्तेः पूर्वमसदेवानभिव्यक्तनामरूपमेवासीदभवत् । पश्चाद् भगवतो ब्रह्मणः सङ्कल्पादभिव्यक्तनामरूपमजायत । तद् ब्रह्मात्मानं=प्रलयवेलायां समुद्रेण गङ्गादिनदीवदविभागादात्मभावं प्राप्तं प्रकृत्याख्यं जगतो मूलकारणं स्वयं=कर्त्रन्तरनिरपेक्षं सङ्कल्पमात्रादकुरुत=जगदाकारेण पर्य्यणामयत् । यस्मात् कर्त्रन्तरनिरपेक्षं सङ्कल्पमात्रात् प्रकृतिमेनां जगदाकारेण पर्य्यणामयत् तस्मात् सुकृतं=स्वयंकर्तृ ब्रह्मेत्येवमुच्यते=शास्त्रविद्भिः कथ्यत इत्यर्थः । यस्य परिणामस्तदुपादानकारणं प्रसिद्धम् । न च भगवतो ब्रह्मणः परिणामः कथञ्चिदुपपद्यते । तस्य कूटस्थनित्यत्वेन परिणामासम्भवात् । प्रकृतेश्चैष साक्षादाख्यायते । **तस्मा**दुपादानकारणं प्रकृतिरिति निश्चेतव्यम् ॥ २६ ॥

**अत्रैव** हेत्वन्तरं समुच्चिनोति—

**"योनिश्च हि गीयते"** ॥ २७ ॥

पूर्वत्रैवायं हेतुरिति चार्थः । **हि**=यस्माद् **योनिः**=ब्रह्म जगतो योनि**र्गीयते**=वेदान्तेषु कीयते तस्मात् तन्निमित्तमुपादानं च प्रकृतिरित्यर्थः ।

ब्रह्म हि वेदान्तेषु जगद्योनिर्गीयते **"यद् भूतयोनिं परिपश्यन्ति धीराः"** ( मुं० १ । १ । ६ ) **"कर्तारमीशं पुरुषं ब्रह्मयोनिम्"** ( मुं० ३ । १ । ३ ) इति । योनिश्च स्थानविशेषो **"योनिष्टे इन्द्र! निषदे अकारि"** ( ऋ० १ । ७ । १८ । १ ) इत्यादिमन्त्रवर्णादवगम्यते । लोकेऽपि च यत्र स्थीयते स्थित्वा च निष्क्रम्यते स योनिरिति प्रसिद्धं यथा स्त्रीयोनिरिति । स्थानविशेषश्च निमित्तकारणभेदोऽधिष्ठानकारणमेवोपपद्यते नोपादानकारणम् । नहि तत्र यथा कार्य्याणि लीयमानान्यवतिष्ठन्ते तथाऽकार्य्याण्यपि लीयमानान्यवस्थातुं पारयन्ते । कार्य्याकार्य्यपदार्थमात्रस्य स्थानविशेषमभिप्रेत्यैव चात्र ब्रह्म जगद्योनिरित्यभिधीयते न कार्य्यमात्रस्य । ब्रह्मणि च प्रलयवेलायां कार्य्याकार्य्यं सर्वमिदं जगल्लेलीयमानं यथाकालं तेष्ठीयते सर्गवेलायां च यथासङ्कल्पमग्नेर्विस्फुलिङ्ग इव निश्चङ्क्रम्यत इति प्रव्यक्तं शास्त्रतः प्रतिपद्यते **"अस्य लोकस्य का गतिरिति? आकाश इति होवाच। सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति, आकाशो ह्येवैभ्यो ज्यायान्, आकाशः परायणम्"** ( छां० १ । ९ । १ ) इति । आकाशो ब्रह्मेति **"आकाशस्तल्लिङ्गात्"** ( वे० १ । १ । २२ ) इत्यधस्तान्निरणायि । शास्त्रतः प्रतिपद्यमानेऽर्थे चायुक्ता विप्रतिपत्तिः । **तस्मा**न्निमित्तकारणं ब्रह्म तच्छरीरकल्पा तच्छक्तिः प्रकृतिश्चोपादानकारणमित्यचलोऽयं वैदिको राद्धान्तः ॥ २७ ॥

प्रथमद्वितीयतृतीयपादेषु ब्रह्मणो जिज्ञास्यत्वोपपत्त्यै कानिचित् स्पष्टास्पष्टब्रह्मलिङ्गकानि वेदान्तवाक्यानि, चतुर्थे पादे चास्मिन् भगवतस्तस्य जगज्जन्मादिकारणत्वोपपत्तये कारणपराणि कानि चिद् वेदान्तवाक्यानि तत्परत्वेन व्याख्यातानि । शिष्यन्ते चान्यान्यपि तादृशानि कानि चिद् वेदान्तवाक्यानि । तद्व्याख्यानमध्यायमुपसंहरन्नन्ते ग्रन्थविस्तरभियाऽतिदिश्यते—

**“एतेन सर्वे व्याख्याता व्याख्याताः”** ॥ २८ ॥

पदाभ्यासेनाध्यायपरिसमाप्तिर्द्योत्यते । **एतेन**=चतुर्षु पादेषु कृतेन वेदान्तवाक्यविशेषव्याख्यानेन **सर्वे**=शिष्टा वेदान्तवाक्यविशेषाः सर्वे **व्याख्याताः**=ब्रह्मपरत्वेन व्याख्याता द्रष्टव्या इत्यर्थः ।

**यो** हि वेदान्तवाक्यानां ब्रह्मपरो व्याख्यानप्रकारः खलु चतुर्षु-पादेषु प्रादर्शि स एवावशिष्टेषु तेष्वधिगन्तव्यो विस्तरभिया न पुनः प्रदर्श्यते ॥ २८ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्माराम-भगवत्पादशिष्यहरिप्रसादवैदिकमुनिविरचितायां वेदान्तसूत्रवैदिकवृत्तौ प्रथमाध्यायस्य चतुर्थः पादः ॥**





# द्वितीयोऽध्यायः

## प्रथमः पादः

प्रथमेऽध्याये ब्रह्मणो जिज्ञास्यत्वमभिधाय तत्प्रतिपत्तये तत्र केषाञ्चिद् वेदान्तवाक्यानां जगज्जन्मादिकारणत्वोपपादनमुखः समन्वयः प्रतिपादितः। सम्प्रति स स्मृतिभिस्तर्कैश्चापि न विरुध्यत इत्येतत्प्रतिपादनाय द्वितीयोऽध्याय आरभ्यते। तत्र तर्कापेक्षया स्मृतेरभ्यर्हितत्वेनोपस्थितत्वात् पूर्वं तावदापाततोऽवभासमानं सांख्यस्मृत्या विरोधमाशङ्क्य गूढाभिसन्धिराचार्यो निराकुरुते—

**"स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्"** ॥ १ ॥

ब्रह्मण इति षष्ठ्या विपरिणम्याधिक्रियते। पादसङ्गत्या जगज्जन्मादिकारणत्वमुपतिष्ठते। **स्मृत्यनवकाशदोषप्रसङ्गः**=ब्रह्मणो जगज्जन्मादिकारणत्वे प्रकृतेस्तत्कारणतामभिवदन्त्याः सांख्यस्मृतेरनवकाशलक्षणदोषप्रसक्तिः स्यादिति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः? **अन्यस्मृत्यनवकाशदोषप्रसङ्गात्**=ब्रह्मणस्तत्कारणतामभिवदन्त्यास्ततोऽन्यस्या मानवस्मृतेरनवकाशलक्षणदोषप्रसक्तेरित्यर्थः।

**अथोच्येत** यत् खलु वेदान्तवाक्यसमन्वयप्रतिपादनेन जगज्जन्मादिकारणं ब्रह्म निर्धार्य्यते तत् सांख्यस्मृत्या विरुध्यते। तत्र प्रकृतेस्तत्कारणत्वेनाभिधानात्। अस्ति परमर्षिकपिलप्रणीता षडध्यायी सूत्रात्मिका तावदेका वैदिकी सांख्यस्मृतिः। सा मुमुक्षूणां मोक्षसाधनं पदार्थतत्त्वज्ञानमुपदिशन्ती पूर्वं ज्ञातव्यस्य जगज्जन्मादिकारणस्य पदार्थस्याभिधानवेलायां सत्त्वरजस्तमसां साम्यावस्थां प्रकृतिं तत्कारणत्वेनाभिदधाति। तद्यथा तस्यास्तदभिधायकं सूत्रम् **"सत्त्वरजस्तमसां सा-**

**म्यावस्था प्रकृतिः, प्रकृतेर्महान्, महतोऽहङ्कारः, अहङ्कारात् पञ्चतन्मात्राण्युभयमिन्द्रियं, तन्मात्रेभ्यः स्थूलभूतानि पुरुष इति पञ्चविंशतिर्गणः"** ( सां० १ । ६१ ) इति । न च साऽप्रमाणमित्युपेक्षितुं शक्यते । तस्या आप्तप्रणीतत्वेन निरस्तसमस्तदूषणतया परमप्रमाणत्वात् । आप्तोपदेशो हि शब्दः प्रमाणं मन्यते । शब्दस्याप्तोपदेशत्वं चार्थाव्यभिचारित्वं साक्षात्कृतार्थैर्वा पुरुषधौरेयैः प्रणीतत्वम् । तच्चोभयं परमर्षिकपिलप्रणीतत्वात् सांख्यस्मृतेरप्यव्याहतं विद्यत इति कथं सा प्रमाणं न स्यात् । हन्तेदं किं न पश्यति भवान् यस्यादिविदुषो भगवतः परमर्षिकपिलस्य माहात्म्यं प्रख्यापयन्ती श्रुतिरद्यापि न तृप्यति तत्प्रणीता स्मृतिरप्रमाणमिति कथं सेत्स्यति । भवति चैषा तन्माहात्म्यप्रख्यापिका श्रुतिः **"ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्त्ति जायमानं च पश्येत्"** ( श्वे० ५ । २ ) इति । तथा स्मरति चास्याः सांख्यस्मृतेरादिमो भाष्यकृन्मुनिवरः पञ्चशिखाचार्य्योऽपि **"आदिविद्वान् निर्माणचित्तमधिष्ठाय कारुण्याद् भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच"** इति । तन्त्र्यते व्युत्पाद्यते मोक्षसाधनमनेनेति तन्त्रं=षडध्यायात्मकं सांख्यस्मृत्यपरपर्य्यायं सांख्यशास्त्रमित्यर्थः । न च प्रमाणभूतया तया वेदान्तवाक्यसमन्वयस्य तेन वा तस्याः कथञ्चिद् विरोधो युज्यते । अविशेषात् । कर्तृविशेषकृतो हि शब्दे विशेषो मन्यते । न च वेदान्तस्य स्मृतेश्च कर्तारोंऽशतोऽपि विशिष्यन्ते । यथा हि वेदान्तस्य कर्तारः खलु वेदार्थानुष्ठानेन प्राप्तदिव्यचक्षुषो निःस्वार्थाः परानुजिघृक्षामात्रेण वर्तमानास्तलवकारप्रभृतयो याज्ञवल्क्यान्ताः परमाप्ताः समाकर्ण्यन्ते तथा स्मृतिकर्ताऽसौ भगवान् कपिलोऽपि समाकर्ण्यते, समाने च समाकर्णने द्वयोः कथमेकस्यापरेणांशिकोऽपि प्रतिभासमानो विरोधो युक्तो मन्येत । शिष्टपरिगृहीतत्वाच्च । न केवलमाप्तप्रणीतत्वादनया प्रतिभासमानो विरोधो युक्तो न मन्यते किन्तु शिष्टानां परिग्रहणादपि युक्तो नावबुध्यते । सन्ति खलु लोके तादृश्यो

बह्व्यः स्मृतयो याः किलाप्तप्रणीता अपि शिष्टैर्न परिगृह्यन्ते यथा बुद्धादिस्मृतयः। सांख्यस्मृतिश्च न तथा। सा हि सादरं शिष्टैः परिगृह्यते। तदुपदिष्टज्ञानेन मोक्षप्राप्तेर्व्यक्तमाम्नानात्। यदि ह्येषा सादरं न परिगृह्येत न तदुपदिष्टज्ञानेन मोक्षप्राप्तिराम्नायेत। व्यक्तं चाम्नायते **"तत्कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः"** (श्वे० ६। १३) इति। न च शिष्टानामेष परिग्रहस्तस्या अप्रामाणिकत्वे कथञ्चिदुपपद्यते। प्रामाणिकं हि शिष्टाः परिगृह्णन्ति नाप्रामाणिकम्। प्रामाणिकत्वे च युक्तस्तदनुरोधेन वेदान्तवाक्यसमन्वयो न तु विरोधेन। न च स्मृत्यन्तरवदेषा कचिदन्यत्रावकाशं लभते येनात्रानवकाशाऽप्यभ्युपगम्येत। यथा हि मानवी स्मृतिर्नानाविधान् वर्णाश्रमधर्मान् चोदनालक्षणेनाग्निहोत्रादिना धर्मजातेनापेक्षितमनुष्ठेयमर्थजातं च यथाशास्त्रं विदधती जगज्जन्मादिकारणविषयादन्यत्र भवति सावकाशा नैवमियं कापिली स्मृतिरस्त्यन्यत्र कचित् सावकाशा। मोक्षसाधनमेव हि पदार्थतत्त्वज्ञानमधिकृत्य सा प्रणीयते न मानवस्मृतिवद् वर्णाश्रमिभिरनुष्ठेयमर्थजातम्। यदि तत्राप्यवकाशं न लभेत नूनमस्या आनर्थक्यं प्रसज्येत। प्रसक्तानर्थक्या च स्यादप्रमाणमिति महत्कष्टम्। तस्मात् तदनुरोधेनैव वेदान्तवाक्यसमन्वयप्रतिपादनं युक्तमीक्ष्यते न तद्विरोधेनेति। **नैतद् वक्तव्यम्।** स्मृत्यन्तरानवकाशदोषप्रसङ्गेन विरोधानुपपत्तेः। न खल्वस्माकमस्त्येकैव कापिली स्मृतिः, ततोऽन्या मानवी स्मृतिरपि विद्यते। सा च भवति कापिलस्मृतिवत् प्रमाणम्। यथा हि कापिली स्मृतिस्तावदाप्तेन भगवता कपिलेन प्रणीयते तथा मानवी स्मृतिराप्तेन भगवता मनुना निर्मीयते। मनुश्च कपिलतो न न्यूनः श्रुतिसामान्योपलम्भादिति गम्यते। कपिलस्य हि माहात्म्यं प्रख्यापयन्ती श्रुतिर्यथा पुरस्तादुदाहारि तथा मनोरपि माहात्म्यप्रख्यापने तृप्तिमनश्नुवाना तैत्तिरीयकश्रुतिरुपलभ्यते **"यद् वै किञ्च मनुरवदत् तद् भेषजम्"** (तै० सं० २। २। १०। २) इति। तथा स्मृतिरपि **"यः कश्चित् कस्यचिद् धर्मो मनुना परि-**

**कीर्तितः । स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः"** ( मनु० २ । ७ ) इति । न्यूनत्वाभावे च तत्प्रणीता स्मृतिः प्रमाणमिति किमु वक्तव्यम् । शिष्टपरिग्रहश्चास्त्युभयत्र समानः । नहि यथा कापिली स्मृतिः शिष्टैः परिगृह्यते तथा मानवी स्मृतिर्न परिगृह्यते । द्वयोः परिग्रहे समाने चास्माकमादरेणाप्युभयत्र समानेन भवितव्यम् । अन्यथैकत्रादरेऽनादरे चापरत्र निर्निमित्तमर्द्धजरतीयमनुष्ठियेत । तदिदमसुन्दरम् । मानवस्मृतौ च जगज्जन्मादिकारणं ब्रह्म प्रथमाध्याये स्फुटमुदीर्य्यते **"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः । ५ । ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् । महाभूतादि वृत्तौजाः प्रादुरासीत् तमोनुदः । ६ । योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः । सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ । ७ । सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु बीजमवासृजत् । ८ ।"** इति । सर्वस्य प्रत्यक्षेण प्रतिभासमानत्वादिदमाऽत्र जगन्निर्दिश्यते । **तमः**=प्रकृतिः **"तम आसीत् तमसा गूढमग्रेऽप्रकेतम्"** ( ऋ० ८ । ७ । १७ । ३ ) इति मन्त्रवर्णात् । यथा हि तमस्यवस्थिताः खलु पदार्थाः प्रत्यक्षेण नावभासन्ते तथा प्रलयवेलायां प्रकृत्यवस्थिताः भावा अपि न प्रतिभासन्त इति तमः प्रकृतिरुच्यते । तमोऽपि तदानीं ब्रह्मण्यविभागेनावस्थानादासीद**प्रज्ञातं**=प्रकृष्टं ज्ञानं प्रत्यक्षज्ञानं तद्विषयताशून्यम् । **अलक्षणम्**=अननुमेयम्, **अप्रतर्क्यं**=तर्कयितुमशक्यम्, **अविज्ञेयं**=परस्माद् ब्रह्मणः पृथग्व्यपदेशानर्हत्वाच्छब्दतोऽपि विज्ञातुमशक्यम् । तदानीं ब्रह्मणा स्वरूपैक्यशङ्कापरिहारार्थमाह—**प्रसुप्तमिव सर्वतः**=प्रथमार्थे तसिः, यथा सुषुप्तौ जीवात्मा ब्रह्मणाऽविभागमापद्यते न तेन स्वरूपैक्यमापद्यते तथाभूतश्च न कस्मैचित् कार्य्याय क्षमते तथा प्रलयवेलायां तमोभूतं चिदचिदात्मकं जगदपि क्षीरे नीरमिव ब्रह्मण्यविभागेनावतिष्ठते न स्वरूपै-

कतां भजते। तथाऽवस्थानाच्च भवति स्वकार्य्याक्षमम्। ५। **ततः**=प्रलयावसानानन्तरं **स्वयम्भूः**=परब्रह्म परमेश्वरः, **अव्यक्तः**=केनापि करणेन गोचरीकर्तुमशक्यः, **वृत्तौजाः**—अप्रतिहतसृष्टिसामर्थ्यः, निरतिशयज्ञानक्रियाशक्तिरिति यावत्, **तमोनुदः**=प्रकृतिप्रेरकः, **इदं महाभूतादि**=पृथिवीप्रभृति महदन्तमिदं सर्वं जगद् **व्यञ्जयन्**="**लक्षणहेत्वोः क्रियायाः**" (अष्टा० ३। २। १२६) इति हेतौ शतृप्रत्ययः, व्यञ्जनं प्रादुर्भावः, तदर्थं प्रादुर्भावयितुं **प्रादुरासीत्**="बहु स्यां प्रजायेय" इति तद्गोचरसङ्कल्पात्मना प्रादुरभवत् समकल्पत। ६। तदेव स्पष्टयति—**योऽसाविति। अतीन्द्रियग्राह्यः**=इन्द्रियमतीत्य वर्तमानेनात्मना साक्षात्कर्तव्यः, **सूक्ष्मः**=प्रकृतिपुरुषेभ्यः सूक्ष्मः, **अव्यक्तः**=व्यक्तिरवयवस्तद्रहितः। **सनातनः**=नित्यः, **सर्वभूतमयः**=सर्वभूतान्तरात्मा, **अचिन्त्यः**=इयत्तया परिच्छेत्तुमशक्यः। **उद्बभौ**=अभिदध्यौ। ७। **स्वात्**=स्वीयाच्छ**रीरात्**=शरीरभूतान्मूलकारणात् प्रकृतेः, **अपः**=महदहङ्कारपूर्वकाणि भूतसूक्ष्माणि, **बीजं**=स्थूलभूतोत्पादपूर्वकाण्डोत्पादनसामर्थ्यम्। ८। इति स्मृतिपदानामर्थः। न च स्मृत्यभिधानमेतद् भवति वेदान्तवाक्यसमन्वयप्रतिकूलम्। यद्धि ब्रह्म वेदान्ताः खलु जगज्जन्मादिकारणमभिदधते तदेव स्मृतिरपि तत्कारणमभिधत्ते। न चाभिधानप्रकारोऽपि किञ्चित्परस्परं विशिष्यते। यथा हि वेदान्तैर्ब्रह्मणः सङ्कल्पेन स्वशरीरभूतायाः प्रकृतेर्महदादिक्रमेण परिणामो जगदभिधीयते तथा स्मृत्याऽपि सङ्कीर्त्यते। सर्वथाऽपि वेदान्तवाक्यसमन्वयानुकूलाऽसौ मानवी स्मृतिरित्यतिरोहितम्। यदि सांख्यस्मृतिवदेषाऽप्यत्र प्रमाणं नेष्येत तदाऽवश्यमनवकाशा सत्यानर्थक्यमनुभवेत्। ननूक्तमस्ति साऽनुष्ठेयार्थविधाने सावकाशेति। सत्यं तादृगर्थविधाने सा सावकाशा विद्यते तथापि स्मृत्या कयाचित् प्रतिभासमानस्य विरोधस्य स्मृत्या परिहारो वक्तव्यः समानत्वादिति गूढाभिसन्धिनाऽऽचार्य्येण तदनवकाशदोषप्रसङ्ग उपन्यस्यत इति द्रष्टव्यम्। कथं स एवं परिह्रियत इति चेत्? उच्यते। यथा हि प्रख्याततमा-

हात्म्यो वेदवेदान्तविद् भगवान् मनुर्जगत्कल्याणस्य हेतोः स्मृतिं निर्मिमाणो न वेदान्तवाक्यसमन्वयविरुद्धं किञ्चिदभिदधाति तथा भगवान् कपिलोऽपि न तद्विरुद्धं किञ्चिदभिधातुमर्हति । नहि वेदवेदान्तार्थविज्ञानाविशेषे परमर्षिरेकस्तद्विरुद्धं किञ्चिन्नाभिधत्ते परश्चाभिधत्त इति संश्लिष्यते । समानश्चोभयोर्वेदवेदान्तार्थगोचरः समादरोऽपि दरीदृश्यते तथा च कथमेकस्य तदविरुद्धाभिधानं परस्य च तद्विरुद्धाभिधानमिति कर्णाभ्यामाकर्णयितुमपि मृष्येमहि । **कथं** तर्हि विरोधः प्रतिभासते ? **आ**पातत इति ब्रूमः । सांख्यस्मृत्या हि वेदान्तसमन्वयविरोधः खलु वस्तुतो न विद्यते केवलमापाततः प्रतिभासते । नहि वस्तुतो विरोधे **"अन्यस्मृत्यनवकाशदोषप्रसङ्गात्"** इत्याचार्य्यसमाधिः कथञ्चित् सङ्गच्छते । स हि वस्तुतो विरोधं मन्यमानो **"अप्रामाणिकत्वात्"** इत्यवश्यं समादधीत । न चासौ तथा समाधत्ते । अन्यस्मृतिसमानत्वसमाधिना च नूनं स यथा मानवस्मृत्या वेदान्तसमन्वयविरोधं न मन्यते तथा कापिलस्मृत्याऽपि न मन्यत इति व्यक्तं तदभिसन्धिं प्रतिपद्यामहे । **ननु** नास्ति चेद् वस्तुतो विरोधः किमर्थं तद्याशङ्क्य निराक्रियते ? **स्वभावो ह्येष** तत्रभवतां शास्त्रकृतां यत्ते भगवन्त आपाततः प्रतिभासमानमपि किञ्चिदाशङ्कितव्यं पश्यन्तो न तावदुपरमन्ते यावदाशङ्क्य न तन्निराकुर्वते । तदिदं यथास्वभावं भगवता बादरायणाचार्य्येणाप्याचरितमिति सन्तोष्टव्यं नाश्चर्य्यवन्मन्तव्यम् । सांख्यस्मृतौ च मानवस्मृतिवन्न वेदान्तसमन्वयविरुद्धं किञ्चित् प्रतिपाद्यते । यथा हि वेदान्ते मानवस्मृतौ च ब्रह्माधीनायाः प्रकृतेः खलु महदाद्याकारेण परिणामो जगदाख्यायते तथा सांख्यस्मृतावपि व्याख्यायते । नहि सांख्यस्मृतौ तादृशं किञ्चित् सूत्रमुदाहर्तुं पार्य्यते यत्र स्वतन्त्रा प्रकृतिर्जगतः कारणं प्रतिपाद्येत । ब्रह्माधीनत्वेन तत्कारणताप्रतिपादकानि सूत्राणि च भूरिश उपलभ्यन्ते । **ननू**दाहृतं स्वातन्त्र्येण तत्कारणताप्रतिपादकमपि सूत्रमिति चेत् । **न** । तस्य सांख्याभिमतपदार्थसंख्यापरत्वेन तदप्रतिपादकत्वात् । यत् खलु सूत्रं पुरस्तादुदाहारि तत्र सांख्याभिमताः

पदार्थाः संख्यायन्ते न तु स्वतन्त्रा प्रकृतिर्जगतः कारणं प्रतिपाद्यते । चतुर्विधान् हि पदार्थांस्तावत् सांख्या मन्यन्ते कश्चित् प्रकृतिः १ कश्चित् प्रकृतिविकृतिः २ कश्चिद् विकृतिः ३ कश्चिन्न प्रकृतिर्न विकृतिः ४ इति । तत्र सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, सैव मूलप्रकृतिरित्युच्यते । सर्वाणि कार्य्याणि प्रक्रियन्तेऽनया स्वयं च न प्रक्रियते कथाचिदिति भवति मूलप्रकृतिः । यत्रैतदुक्तं भवति **"मूले मूलाभावादमूलं मूलम्"** ( सां० १ । ६७ ) इति । महान्, अहङ्कारः, शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रमिति सप्त प्रकृतिविकृतयः । महान् महत्तत्वमहङ्कारस्य प्रकृतिर्विकृतिर्मूलप्रकृतेः । अहङ्कारः पञ्चतन्मात्राणामुभयेषामिन्द्रियाणां च प्रकृतिर्विकृतिर्महतः, पञ्चतन्मात्राणि प्रकृतिः पञ्चमहाभूतानां विकृतिरहङ्कारस्य । एकादशेन्द्रियाणि पञ्च महाभूतानि चेति षोडश विकृतयः । न चामी केनचित् तत्त्वान्तराकारेण विक्रियन्ते येन प्रकृतयोऽपि भवेयुः । पृथिव्यादीनां गोघटवृक्षादयस्तद्भेदानां पयोबीजादीनां न दध्यङ्कुरादयो विकाराः पृथिव्यादिभ्यस्तत्त्वान्तराणि न भवन्तीति न ते तत्प्रकृतयो मन्यन्ते । तत्त्वान्तरोपादानत्वं हि प्रकृतित्वमिहाभिप्रेयते नान्यत् किञ्चिदित्यदोषः । पुरुषो न प्रकृतिर्नापि विकृतिः । कूटस्थनित्यत्वात् । स च जीवात्मा परमात्मा चेति द्विविधः सन्नपि पुरुषत्वसामान्यादत्रैक उपन्यस्यते यथा **"पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि"** ( वैशे० १ । १ । ५ ) इत्यत्रात्मा । तेऽमी पञ्चविंशतिसंख्याकाः पदार्थाः सांख्यानामिति सूत्रार्थः । न चानेन स्वतन्त्रा प्रकृतिर्जगतः कारणमिति कथञ्चिद्गम्यते । ब्रह्मतन्त्रतया तस्यास्तत्कारणत्वे चास्ति पारमर्षं सूत्रम् **"अकार्य्यत्वेऽपि तद्योगः पारवश्यात्"** ( सां० ३ । ५५ ) इति । यद्यपि प्रकृतिः कस्यचित् परस्य कार्य्यं न विद्यते तथापि सा परवशवर्त्तिनी सती संसारमारभते पुरुषश्च प्रातरिव सर्गवेलायां यथानियममुत्थाय पुनस्तद्योगं लभते । ननु कोऽसौ परो विद्यते यस्य वशवर्त्तिनी सती प्रकृतिः संसारमारभमाणा पुरुषं तेन संयु-

नक्कि ? तत्राह "**स हि सर्ववित् सर्वकर्ता**" ( सां० ३ । ५६ ) इति । यः खलु सामान्यविशेषरूपाभ्यां सर्वदा सर्वं जानाति यतश्चास्य सर्वस्य जगतो जन्मस्थितिप्रलयं चक्रनेमिक्रमेण सततं प्रवर्तते स एव परः परब्रह्म परमेश्वरो विज्ञातव्यः । **ननु** जगदिदं दृष्ट्वाऽस्ति कश्चित् पर इति सिध्यति न सर्ववित् सर्वकर्ता ? तस्य समाधिसूत्रम् "**ईदृशेश्वरसिद्धिः सिद्धा**" ( सां० ३ । ५७ ) इति । श्रुत्या तादृगीश्वरः सिध्यति नानुमानतः । भवति चात्र श्रुतिः "**स विश्वकृद् विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद् यः । प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः**" ( श्वे० ६ । १६ ) इति । न चैषु सूत्रेषु सत्सु सांख्यस्मृतौ स्वतन्त्रा प्रकृतिर्जगतः कारणमाख्यायत इति वक्तुं शक्यते । तत्र तस्याः पारतन्त्र्येण तत्कारणत्वस्य स्पष्टमुक्तत्वात् । एतदेव च वेदान्तवाक्यसमन्वयप्रतिपादनेन वेदान्तेऽपि प्रतिपाद्यते । तस्मान्नास्ति तस्य सांख्यस्मृत्याऽणुमात्रेणापि विरोधः ॥ १ ॥

**सांख्यस्मृत्या** विरोधो निराकारि । योगस्मृत्या निराकरिष्यते । मध्ये गोतमादिस्मृत्याऽपि नास्ति विरोध इत्यभिधीयते—

"**इतरेषां चानुपलब्धेः**" ॥ २ ॥

**इतरेषां च**=पूजायां बहुवचनम्, गोतमाचार्य्याणां वैशेषिकाचार्य्याणां चानुपलब्धेः=स्वातन्त्र्येण प्रकृतेर्जगज्जन्मादिकारणताभिधानानुपलब्धेर्नास्ति तत्स्मृत्याऽपि वेदान्तविरोध इत्यर्थः ।

अस्ति तावद् भगवद्गोतमप्रणीता पञ्चाध्यायी सूत्रात्मिका वैदिकी गोतमस्मृतिः, यां किल दार्शनिका न्यायदर्शनमिति सङ्गिरन्ते । भगवत्कणादप्रणीता च दशाध्यायी सूत्रात्मिका वैदिकी वैशेषिकस्मृतिः, यां किल पदार्थतत्त्वविदो वैशेषिकदर्शनमिति परिभाषन्ते । न च ताभ्यामपि सांख्यस्मृतिवद् वेदान्तविरोधो विद्यते । तत्रेश्वरस्य जगज्जन्मादिकारणतायाः स्फुटप्रदीर्णात । यथा हि वेदान्ते खलु सर्वज्ञः सर्वशक्तिरी-

श्वरो जगज्जन्मादिहेतुः स्फुटमुदीर्य्यते तथा गोतमादिस्मृतावपि सङ्की-र्त्यते । भवति च तत्रत्यं सूत्रम् **"ईश्वरः कारणं पुरुषकर्माफल्य-दर्शनात्"** (न्या० ४ । १ । १९) इति । न तावदीश्वराभावे केव-लमिदं जगदुत्पत्तुं स्थातुं प्रलेतुं च न कल्पते किन्तु पुरुषाणां शुभाशुभ-कर्मापि प्रियाप्रियफलमुपजनयितुं न पार्य्यते । दृश्यते हि लोके बहुत्र जनपदेषु कस्यचिदीश्वरस्याभावे पुरुषाणां कर्मफलानिष्पत्तिः । तस्मात् सर्वज्ञः सर्वशक्तिरीश्वरो जगज्जन्मादिहेतुरभ्युपगन्तव्य इत्यर्थः । न च सूत्रेऽस्मिन् विद्यमाने तत्र तद्विरोधगन्धोऽप्याघ्रातुं शक्यते दूरेण आपा-ततस्तत्प्रतिभासः । **तथा च** सांख्यस्मृत्या यथा वेदान्तविरोधो न विद्यते तथा गोतमादिस्मृत्याऽपि न स विद्यतइति निश्चेतव्यम् ॥ २ ॥

**सम्प्र**ति योगस्मृत्या विरोधं निराकरिष्यमाणोऽतिदिशति—

**"एतेन योगः प्रत्युक्तः"** ॥ ३ ॥

**एतेन**=सांख्यस्मृतिविरोधप्रत्याख्यानेन **योगः**=योगस्मृतिविरोधः **प्रत्युक्तः**=प्रत्याख्यातो वेदितव्य इत्यर्थः ।

यथा हि भगवत्कपिलप्रणीतायां सांख्यस्मृतौ खलु विरोधप्रतिभास-कारणं सूत्रमेकमुपलभ्यते तथा भगवत्पतञ्जलिप्रणीतायां पादचतुष्टया-त्मिकायां सूत्रमय्यां योगस्मृतावप्युपलभ्यते । तदुपलम्भान्मा नाम कश्चिच्छ्रद्धाजडो मन्दधीर्योगस्मृत्याऽपि वेदान्तविरोधं शङ्किष्ट, शङ्कया च वेदान्तप्रतिपाद्यब्रह्मात्मसाक्षात्कारैकसाधने योगे प्रवर्तिष्टेति तन्नि-वृत्त्यर्थं पुनरतिदिश्यते । योगपदं च स्थानलक्षणया योगविरोधपरं व्याख्यायते । अविरोधाध्याये स्मृतिपादेऽस्मिन् स्मृतिविरोधस्यैव प्रत्या-ख्येयत्वात् । योगस्मृतिप्रत्याख्याने च बहु व्याकुलं प्रसज्येत । शास्त्रे हि सर्वत्र मुक्तिहेतुब्रह्मात्मसाक्षात्कारोपायत्वाद् योगस्तावदुपदिश्यते **"यच्छेद्वाङ्मनसी प्राज्ञस्तद् यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि"** (कठ० ३ । १३) **"सूक्ष्मतां चान्वेवक्षेत योगेन पर-**

**मात्मनः**" (मनु० ६ । ६५) इत्यादिना । श्वेताश्वतरोपनिषदि द्वितीयाध्याये चासनादिकल्पनापुरस्सरं बहुप्रपञ्चं तद्विधानं दृश्यते "**त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा सन्निवेश्य । ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानि । ८ । प्राणान् प्रपीड्येह संयुक्तचेष्टः क्षीणे प्राणे नासिकयोच्छ्वसीत । दुष्टाश्वयुक्तमिव वाहमेनं विद्वान् मनो धारयेदप्रमत्तः । ९ । समे शुचौ शर्कराविह्नि-वालुकाविवर्जिते शब्दजलाश्रयादिभिः । मनोऽनुकूले न तु चक्षुःपीडने गुहानिवाताश्रयणे प्रयोजयेत् । १० ।**" इत्यादि । श्रौतानि तद्विषयाणि लिङ्गानि च सहस्रश उपलभ्यन्ते "**युञ्जते मन उत युञ्जते धियः**" (ऋ० ४ । ४ । २४ । १) "**युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः**" (यजु० ११ । १) "**अध्यात्मयोगाधिगमेन देवम्**" (कठ० २ । १२) "**तां योगमिति मन्यन्ते**" (कठ० ६ । ११) "**विद्यामेतां योगविधिं च कृत्स्नम्**" (कठ० ६ । १८) "**ते ध्यानयोगानुगता अपश्यन्**" (श्वे० १ । ३) इत्यादीनि । वक्ष्यति च स्वयमाचार्य्योऽपि तस्य ब्रह्मात्मसाक्षात्कारोपायत्वम् "**अपि संराधने प्रत्यक्षानुमानाभ्याम्**" (वे० ३ । २ । २४) इति । न चैवं यस्य विधानं तज्ज्ञापकानि वैदिकान्यौपनिषत्कानि च लिङ्गानि साक्षादुपलभ्यन्ते तस्य योगस्य प्रत्याख्यानं कर्हिचिदुपपद्यते । तद्युक्तमिह स्थानलक्षणया "योगः" इत्यस्य "योगविरोधः" इति व्याख्यानम् । **यत्तु** योगस्मृत्या वेदान्तविरोधस्य प्रख्यापकं सूत्रमुदाह्रियते "**निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत्**" (यो० ४ । ३) इति । तद् विभ्रममात्रम् । तत्र निमित्तपदस्य धर्मादिवाचकत्वेनेश्वरवाचकत्वाभावात् । यदि ह्यत्र निमित्तपदमीश्वरवाचकं भवेत् तदा "**निमित्तं**=निमित्तकारणत्वेनाभिमतमीश्वरं **प्रकृतीनां**=मूलप्रकृतिप्रभृतीनाम**प्रयोजकं**=जगद्रचनायां प्रेरकं न मन्यन्ते योगाः" इति

सूत्रार्थे योगस्मृत्या वेदान्तविरोधः प्रसज्येत। न चात्रेश्वरवाचकं निमित्त-पदं विद्यते। नूनं भवान् पौर्वापर्य्यमनवलोकयन्नस्थाने बम्भ्रन्ति। नहि नि-मित्तकारणमीश्वर इति सर्वत्रासौ निमित्तपदेनाभिधीयत इति सम्बोभवीति। नानार्थोपस्थापकं हि निमित्तपदम्। क्वचिदीश्वरमुपस्थापयति क्वचिद् धर्मा-दिकम्। अत्रेदं कस्योपस्थापकमिति पौर्वापर्य्ये पर्य्यालोच्य निर्धारयितव्यं न तु तद्दर्शनमात्रेण भ्रमितव्यम्। नहीह पूर्वत्र वा परत्र वा क्वचिदी-श्वरः प्रक्रियते येनेदं तदुपस्थापकं निर्धार्य्येत। धर्मादिकं चास्ति कायेन्द्रि-यप्रकृतीनां जात्यन्तरपरिणामहेतुतया पूर्वत्र प्रकृतम्। यच्च प्रकृतं तदुप-स्थापकत्वमेव तस्य न्याय्यं नाप्रकृतेश्वरोपस्थापकत्वम्। अन्यथा प्रकृतहा-नाप्रकृतप्रक्रिये प्रसज्येयाताम्। न च धर्माद्युपस्थापकत्वे कश्चिद्दोषः प्रस-ज्यते। चेतनो हि प्रकृतीः प्रयोजयितुं क्षमते नाचेतनः। न च धर्मा-दिकमस्ति चेतनमिति न तस्य तदप्रयोजकत्वाभिधानं दुष्यति। भगवतः परब्रह्मणः परमेश्वरस्य प्रकृतिप्रयोजकत्वं तु यथा सांख्या गौतमा वैशे-षिकाश्चातिष्ठन्ते तथा योगा अपि सहर्षमनुमन्यन्ते। तस्मान्नास्ति सांख्य-स्मृतिवद् योगस्मृत्याऽपि वेदान्तविरोधः।

भगवज्जैमिनिप्रणीता द्वादशाध्यायी पूर्वमीमांसानाम्नी वैदिकी स्मृ-तिस्तु सृष्टिवैचित्र्यहेतुकर्ममात्रप्रतिपादने सँलग्ना प्रकृतिपुरुषेश्वरेषु गौत-मादिपथमेवात्मपथं मन्यते। तत्र चेश्वरकारणतायाः साक्षादभिहितत्वा-न्नास्ति विरोध इत्युक्तम्। तत्सामान्यादिहापि तत्प्रतिषेधं प्रतिपत्स्यत इति न पृथगवोचत्। तथा च वैदिकस्मृतिभिर्विरोधाभावेनोपपन्नः समस्त-स्यास्य जगतो जन्मादिनिमित्तं ब्रह्म तदाश्रया प्रकृतिश्चोपादानमिति वैदिको राद्धान्तः॥ ३॥

स्मृतिनिमित्तो विरोधः पर्य्यहारि। सम्प्रति तर्कनिमित्तः परिहर्तव्यः। वेदान्ते चास्ति जगज्जन्मादिकारणेऽशद्वयं ब्रह्म प्रकृतिश्च। तत्र पूर्वं तावत् प्रकृत्यंशे तर्कनिमित्तं तं परिहरिष्यन् पूर्वपक्षयति—

**"न विलक्षणत्वादस्य तथात्वं च शब्दात्" ॥ ४ ॥**

**न**=प्रकृतिर्जगदुपादानं नोपपद्यते, कुतः? **अस्य**=दृश्यमानस्यास्य पृथिवीप्रभृतिजगतो **विलक्षणत्वात्**=लक्षणं धर्मः, विरुद्धधर्मकत्वात्, **तथात्वं च**=पृथिवीप्रभृतिजगतः प्रकृतिविलक्षणत्वं च **शब्दात्**= श्रुतिवचनादवगम्यत इत्यर्थः ।

यदुक्तं खलु पृथिवीप्रभृतिजगतोऽस्योपादानकारणं प्रकृतिरिति । तन्नोपपद्यते । तस्य ततो विलक्षणत्वात् । कार्य्यं हि कारणसलक्षणं सर्वत्र निरीक्ष्यते न तद्विलक्षणम् । नहि मृत्कार्य्यभेदा घटघटिकोदञ्चनादयः सुवर्णकार्य्यभेदाश्च कटककुण्डलरुचकादयः क्वचिन्मृत्सुवर्णाभ्यां विलक्षणा अनुभूयन्ते । चेदिदं जगदपि प्रकृतिकार्य्यं भवेत् तदा न तद्विलक्षणं कर्हिचिदवगम्येत । प्रकृतिस्तावदचेतना प्रसिद्धा । ततो विलक्षणं चेदं पृथिव्यादिकं जगच्चेतनं **"मृदब्रवीत्"** (शत० ६ । १ । ३ । ४) **"आपोऽब्रुवन्"** (शत० ६ । १ । ३ । २) **"तत्तेज ऐक्षत"** (छां० ६ । २ । ३) **"ता आप ऐक्षन्त"** (छां० ६ । २ । ४) **"ते ह वाचमूचुस्त्वं न उद्गाय"** (बृ० १ । ३ । २) **"ते हेमे प्राणा अहंश्रेयसे विवदमाना ब्रह्म जग्मुः"** (बृ० ६ । १ । ७) इत्यादिश्रुतिवचनेभ्यः स्फुटमवगम्यते । वदनादिक्रियायाश्चैतन्यनिबन्धनत्वनिश्चयात् । प्रमाणं च नः श्रुतिवचनानि । न च तदवगते चैतन्याचैतन्यलक्षणे वैलक्षण्ये पृथिव्यादिजगतः प्रकृतेश्च परस्परं प्रकृतिविकारभावोऽभ्युपगन्तुं शक्यते । तद्ध्यवगम्यमानं पदार्थानां प्रकृतिविकारभावं परिहरति न तु निर्हरति । तस्मादनुपपन्नं पृथिवीप्रभृतिजगतो ब्रह्माश्रया प्रकृतिरुपादानकारणमिति वैदिकं मतम् ॥ ४ ॥

सिद्धान्तयति—

**"अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्"** ॥५॥

तुना पूर्वः पक्षो व्यवच्छिद्यते । **अभिमानिव्यपदेशः**="मृदब्रवीत्" इत्यादौ सर्वत्र पृथिव्यादिशब्दैस्तदभिमानिनस्तच्छरीरकस्य परब्रह्म · परमेश्वरस्य ब्रवीत्यादिक्रियाकर्तृत्वेन व्यपदेशो मन्तव्यः, कुतः?

**विशेषानुगतिभ्यां**=शरीरविशेषो विशेषः, अनुप्रवेशोऽनुगतिः, तच्छरीरविशेषात् तदनुप्रवेशाच्चेत्यर्थः।

यदि हि **"मृदब्रवीत्"** (शत० ६।१।३।४) **"आपोऽब्रुवन्"** (शत० ६।१।३।२) इत्यादिषु श्रुतिवचनेषु पृथिव्यादयो ब्रवीत्यादिक्रियाकर्तृत्वेन व्यपदिश्येरन् तदाऽवश्यं पृथिवीप्रभृतिजगतः प्रकृतेश्च परस्परं चैतन्याचैतन्यलक्षणं वैलक्षण्यमवगम्येत। न च तत्र पृथिव्यादयस्तत्कर्तृत्वेन व्यपदिश्यन्ते किन्तु तच्छरीरी परब्रह्म परमेश्वरः। यथा खलु "देवदत्तो गच्छति, यज्ञदत्त आगच्छति, चैत्रो हसति विष्णुमित्रो रोदिति" इत्यादौ देवदत्तादिशब्दैर्देवदत्तादिशरीराश्रयतया प्रतीयमानानां गमनागमनादिक्रियाणां कर्तृत्वेन तच्छरीरकश्चेतनः प्रत्यगात्मा सङ्कीर्त्यते न शरीरं तथा "मृदब्रवीत्" इत्यादावप्युपलभ्यमानानां वदनादिक्रियाणां कर्तृत्वेन पृथिव्यादिशब्दैः पृथिव्यादिशरीरकः परब्रह्म परमेश्वर एव व्यपदिश्यते न पृथिव्यादिकमित्यध्यवसातव्यम्। पृथिव्यादिकं च भगवतस्तस्य शरीरविशेषत्वेनाम्नायते बृहदारण्यकेऽन्तर्यामिब्राह्मणे **"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरम्। ३। योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरम्। ४। यस्तेजसि तिष्ठन् तेजसोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरम्। १४। यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरम्"** (बृ० ३।७।३-४-१४-१६) इति। शरीरशरीरिणोश्च तादात्म्यमुरसिकृत्य शक्यते "पृथिव्यब्रवीत्, आपोऽब्रुवन्" इत्यादिकं शरीरमुखं व्यपदेष्टुम्। यथा वा यज्ञशालामनुप्रविष्टः खलु सामगो यथाविधानं साम गायति श्रोतृभिश्चोपचाराद् अहो नु किमिदं चित्तापकर्षकं साम गायति शालेति व्यपदिश्यते तथा पृथिव्यादीन् सर्वान् कार्यभेदाननुप्रविष्टं ब्रह्म ब्रवतीक्षते वक्ति च, तदुपदिशद्भिर्ऋषिभिरुपचारात् "पृथिव्यब्रवीदापोऽब्रुवन्, तेज ऐक्षताप ऐक्षन्त, ते ह वाचमूचुस्ते हेमे प्राणा ब्रह्म जग्मुः" इत्युपदिश्यत इति

द्रष्टव्यम् । अनुप्रवेशश्च पृथिव्यादिषु कार्य्यभेदेषु भगवतस्तस्य बहुधा श्रुतिस्मृतिभिराम्नायमान उपलभ्यते "**तत् सृष्ट्वा तदेवानुप्राविशत्**" (तै० २ । ६) "**हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि**" (छां० ६ । ३ । २) "**गामाविश्य च भूतानि धारयाम्यहमोजसा**" (गी० १५ । १३) इति । न चैवं परब्रह्मणः परमेश्वरस्य ब्रवीत्यादिक्रियाकर्तृत्वेन व्यपदेशे पृथिव्यादयश्चेतनाः कथञ्चित् सिध्यन्ति । प्रत्यक्षं च तेषामचेतनत्वं न शक्यते स्वप्नेऽपि केनचिदपवदितुम् । तस्मात् प्रकृतिसलक्षणमेवेदं पृथिव्यादिकं जगद् विद्यते न तद्विलक्षणमिति निर्बाधम् । **तथा चोपपन्नं** तस्य ब्रह्माश्रया प्रकृतिरुपादानकारणमिति वैदिकं मतम् ॥ ५ ॥

**स्यादेतत्**—मा भूवन् चेतनाः खलु पृथिव्यादयः, तथापि ते प्रकृतेर्विकारा नोपपद्यन्ते । स्थूलत्वेन विलक्षणत्वात् । सूक्ष्मा हि प्रकृतिः, तदपेक्षया स्थूलाश्चामी पृथिव्यादयः । तदिदं महद्वैलक्षण्यम् । तेन च परिह्रियते प्रकृतिविकारभावो न निर्ह्रियत इत्युक्तम् । तस्मात् पुनरप्यनुपपन्नं पृथिव्यादिजगतो ब्रह्माश्रया प्रकृतिरुपादानकारणमिति वैदिकं मतमिति । अस्योत्तरं पठति—

"**दृश्यते तु**" ॥ ६ ॥

**तुशब्देनोक्ताशङ्का** व्युदस्यते । **दृश्यते**=सूक्ष्मात्कारणात् स्थूलस्य कार्य्यस्योत्पत्तिर्लोके दृश्यते, अतो नास्ति तदनुपपत्तिरित्यर्थः ।

**यथाशास्त्रं** हि प्रकृतिविकारभावः खलु कल्पयितव्यो भवति किंवा यथालोकं न तु यथामति । शास्त्रं च प्रत्यक्षमस्य पृथिव्यादिजगतो ब्रह्माश्रया प्रकृतिरुपादानकारणमभिधत्ते "**इन्द्रो मायाभिः पुरुरूप ईयते**" (ऋ० ४ । ७ । ३३ । १८) "**एकं बीजं बहुधा यः करोति**" (श्वे० ६ । १२) "**मायां तु प्रकृतिं विद्यात्**" (श्वे० ४ । १०) इति । लोकेऽपि च सूक्ष्मेभ्यो वटबीजेभ्योऽतिस्थूलानां वटवृक्षाणामुत्पत्तिर्दृश्यते । तत्रापि च पृथिव्यादिजगतः कारणं

सूक्ष्ममेव किञ्चिदेषितव्यम् । स्थूलस्य जगदन्तःपातित्वेन कार्य्यत्वाव-श्यम्भावात् । न चैतत् तर्केणापि विरुध्यते । तस्यापि यथालोकप्रवृत्ते-रौचित्यात् । सर्वो हि तर्को यथालोकं प्रवर्तते । नहि सोऽर्थो लोके न विद्यते यं किल तर्को गोचरयत इति क्वचिदनुभूयते । यथा लोक-प्रवृत्तौ च तस्य यद् यादृशं लोके दृश्यते तत् तादृशं मन्तव्यं न ततो विपरीतं किञ्चिदुत्प्रेक्षितव्यमिति युक्तं मन्यामहे । किञ्चेदं प्रकृतिविकारयोः सालक्षण्यमभिप्रेयते यदभावात् प्रकृतिजगतोः परस्परं प्रकृतिविकारभावो नोपपद्यत इति बाभाष्यते, साधारणासाधारणधर्मजातेन किंवा केनचिद-साधारणेन धर्मेण? । धर्मजातेनेति चेन्न युक्तमुच्यते । प्रकृतिविकार-भावोच्छेदप्रसङ्गात् । प्रकृतौ हि विकारापेक्षया कश्चिदतिशयोऽपेक्षते । स चेद् विकारेऽपि विद्येत तदा नासौ तद्विकार उपपद्येत नाप्येषा तत्प्र-कृतिः सङ्गच्छेत । तथा चावश्यं तद्भावोच्छेदः प्रसज्येत । न च प्रसिद्ध-प्रकृतिविकारभावेष्वपि सर्वथा सालक्षण्यं क्वचिदीक्ष्यते । नहि मृत्पि-ण्डविकारेषु घटघटिकोदञ्चनादिषु पिण्डत्वादयो मृद्धर्माः केनचिदनुवर्तमाना लक्ष्यन्ते । कुत्राप्यलक्ष्यमाणस्य कल्पनं चान्याय्यम् । असाधारणधर्मेण चेत्? ओमिति ब्रूमः । जड़त्वलक्षणस्य तस्य प्रकृतिजगतोरुभयत्रापि सद्भा-वात् । सत्तालक्षणो धर्मस्तु चेतनाचेतनसाधारण इति न तेन प्रकृतिविका-रयोः सालक्षण्यं मन्यन्ते प्रकृतिविकारभावविदो वैदिका इत्युपेक्षिष्महि । कार्य्यं हि कारणमपिगच्छत् तावन्नोपरमते यावन्निरतिशयं सौक्ष्म्यं नाव-लम्बते । तच्च तस्य प्रकृतिभावं गतस्य प्राप्यते नान्यथा । प्रकृतिवि-कारभावाभिषिक्तेषु द्रव्येषु मूलकारणस्य प्रकृतेरेव निरतिशयसौक्ष्म्याभ्यु-पगमात् । एष हि वैदिकानामभ्युपगमः—स्थूलानि तावदिमानि पृथिव्या-दीनि पञ्च महाभूतानि, ततः सूक्ष्माणि तत्कारणानि पञ्च तन्मात्राणि भूतसूक्ष्माणि, तेभ्यः सूक्ष्मस्तद्धेतुरहङ्कारः, ततः सूक्ष्मस्तत्कारणं महान्, यं किल सांख्या योगाश्च लिङ्गमात्रमिति परिभाषन्ते । ततश्च सूक्ष्मा तत्कारणं जगज्जननी भगवती प्रकृतिः, या किल सांख्यानां योगानां चालिङ्गमात्रमिति संज्ञायते । नचातः परमस्ति किञ्चित् सूक्ष्मं नाम

द्रव्यम् । अतो वैदिकानामुपादानकारणाश्रयतया विवक्षितं निरतिशयं सौक्ष्म्यं तत्रैव व्याख्यायते । यत्रेदमुक्तं दर्शनान्तरे **"सूक्ष्मविषयत्वं चालिङ्गपर्य्यवसानम्"** (यो० १ । ४५) इति । **"सौक्ष्म्यात् तदनुपलब्धिः"** (सां० १ । १०९) इति च । तदनेन प्रकृतावेव सर्वकार्य्याणामप्यय इति सिद्धं भवति । यत्र चाप्ययस्तत एवोद्गम इति नियमः । न च नियतेष्वर्थेषु पर्य्यनुयोगोऽवकाशं लभते । तस्मात् प्रकृतेः सौक्ष्म्येण पृथिव्यादिजगद्वैलक्षण्येऽपि जड़त्वेन सालक्षण्यादुपपद्यते तदुपादानत्वमिति नानुपपन्नं पृथिव्यादिजगतो ब्रह्माश्रया प्रकृतिरुपादानकारणमिति वैदिकं मतम् ॥ ६ ॥

**ननु** सूक्ष्मा चेत् प्रकृतिः स्थूलस्यास्य पृथिव्यादिजगतः कारणमुपपद्यते तदाऽसदपि तत्कारणमुपपद्यतामविशेषादिति सूत्रार्द्धेनाशङ्क्य परिहरति—

**"असदिति चेन्न प्रतिषेधमात्रत्वात्"** ॥ ७ ॥

**असत्**=अस्य पृथिव्यादिजगतः कारणमसत् स्यादिति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः? **प्रतिषेधमात्रत्वात्**=अभावमात्रत्वादित्यर्थः ।

**अथोच्येत**=सौक्ष्म्यस्थौल्यलक्षणे वैलक्षण्ये सत्यपि चेत् प्रकृतिजगतोः प्रकृतिविकारभाव उपपद्यते तदा किमपराद्धमसता, तेनापि जगतः स उपपद्यताम् । अस्ति प्रकृतिवदसदपि सूक्ष्ममिति । **नैतद्वक्तव्यम्** । तस्याभावत्वेन भावकारणत्वानुपपत्तेः । भाववचनो हि सच्छब्द इह प्रयुज्यते । तत्प्रतिषेधमात्रत्वादभावोऽसदिति पर्य्यवस्यति । भावात्मकं च पृथिव्यादिजगत् प्रत्यक्षम् । तथा च कथं तस्यासत् कारणमुपपद्येत । नहि परस्परविरोधे सत्यपि क्वचित् कार्य्यकारणभावोऽवकल्पते । विरोधो हि कार्य्यकारणभावसम्बन्धं विघटयति नतु सुघटयति । न चासतः प्रतिकार्य्यमन्वयोऽपि निरीक्ष्यते । अन्वयिकारणस्य च प्रतिकार्य्यमन्वय इति ध्रुवो नियमः । नहि मृत्तिका घटघटिकोदञ्चनादीनामन्वयि-

कारणं भवन्ती तत्र नान्वीयत इति क्वचिदुपलभ्यते। अन्वयिकारणमुपादानकारणमिति चानर्थान्तरम्। असदपि चेदन्वयिकारणं भवेदवश्यं प्रतिकार्य्यं मृत्तिकावदन्वीयेत। नो चेदन्वीयते कथं तत्कारणं परिकल्प्येत। लोके हि सूक्ष्मात् कारणात् स्थूलस्य कार्य्यस्योत्पत्तिर्दृश्यते नत्वभावाद्भावस्य। कल्पना च यथादृष्टं प्रवर्तते नायथादृष्टम्। न च सूक्ष्मत्वमपि प्रकृतिवदसतः सम्भवति। निरुपाख्यत्वाश्रयणात्। अभावो हि निरुपाख्यस्तावदाश्रीयते। धर्म उपाख्या, तद्रहित इत्यर्थः। स चेदधुना सूक्ष्मोऽपि परिकल्प्येत सोपाख्यः प्रसज्येत। निरुपाख्याच्च सोपाख्यस्योत्पादो व्याहत इति नासत् सतः पृथिव्यादिजगतः कारणमुपपद्यते। तस्मादुपपन्नं तस्य ब्रह्माश्रया प्रकृतिरेव कारणम्॥ ७॥

अत्रासद्वादी पुनर्बाधकमाशङ्कते—

**"अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्"** ॥ ८॥

**अपीतौ**=प्रलये **तद्वत्प्रसङ्गात्**=कारणस्य प्रकृतेः कार्य्यवत् स्थूलत्वादिप्रसङ्गाद**समञ्जसं**=वैदिकं मतमसमञ्जसमित्यर्थः।

अपीतौ हि कार्य्यमात्रं प्रतिसंसृज्यमानं कारणे प्रविलीयत इत्यभ्युपगम्यते। कार्य्यं चेदं पृथिव्यादिजगत् स्थूलमशुद्धं दुःखादिप्रदं च प्रसिद्धम्। तस्य प्रविलयनात् कारणं प्रकृतिरपि स्थूलाऽशुद्धा दुःखादिप्रदा च प्रसज्येत। न च सा तथा मन्यते। अथ पृथिव्यादिजगदपीतावपि कारणे तस्मिन् न प्रविलीयत इति मन्येत तदा नेदं प्राकृतिकं सिध्येत्। नहि यत् कदाऽपि प्रकृतिभावं न गच्छति तत् प्राकृतिकं सेद्धुमर्हति। प्राकृतिकं चाभ्युपेयते। तस्मात् पृथिव्यादिजगतो ब्रह्माश्रया प्रकृतिरुपादानकारणमित्यसमञ्जसं वैदिकं मतम्॥ ८॥

उक्ताशङ्कामपाकुरुते—

**"न तु दृष्टान्तभावात्"** ॥ ९॥

असमञ्जसमित्यनुवर्तते। तुना शङ्का व्यावर्त्यते। न वैदिकं मतमसमञ्जसं न, कुतः? **दृष्टान्तभावात्**=अनेकदृष्टान्तसद्भावादित्यर्थः।

सत्यमपीतौ कार्य्यमात्रं कारणे प्रविलीयते तथापि न तद्धर्माः कारणे प्रसज्यन्ते । न च वयं निराधारमेतद् ब्रूमः । सन्त्यत्राधाराः सहस्रशो दृष्टान्ताः, यत्र किल कार्य्याणि स्वस्वकारणे प्रविलीयन्ते कारणानि च तद्धर्मैर्मात्रयाऽपि न संस्पृश्यन्ते । पश्य भो! मृत्प्रकृतिका उच्चावचप्रभेदा घटघटिकोदञ्चनादयो विकारा मृत्प्रकृतिमपियन्ति तद्धर्माश्च लेशेनापि न तां संस्पृशन्ति । सुवर्णप्रकृतिका नानाकाराः कटककुण्डलरुचकप्रभृतयो विकाराः सुवर्णप्रकृतिमपिगच्छन्ति तद्धर्माश्च न तामंशेनापि परामृशन्ति । पृथिवीविकारश्च चतुर्विधभूतग्रामः पृथिवीमप्ययते तद्धर्मश्च तत्र स्पर्शमपि न लभते । यथामति चेदृशं दृष्टान्तान्तरमप्यूहितव्यम् । न चैवंविधदृष्टान्तसहस्रैरुपबृंहितं खलु वैदिकं मतमसमञ्जसमिति वक्तुं पार्य्यते । मन्त्रवर्णाच्च । अस्ति तावन्मन्त्रवर्णो यत्र प्रलयवेलायां कार्य्यमात्रस्य प्रविलयस्तद्धर्मैरसंसृष्टायाश्च प्रकृतेः परब्रह्मणि परमेश्वरेऽवस्थानं स्पष्टमाम्नायते **"न मृत्युरासीदमृतं न तर्हि न राज्या अह्न आसीत् प्रकेतः । आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास"** ( ऋ० ८ । ७ । १७ । २ ) इति । **स्वधा**=प्रकृतिः । सा हि धारयत्यात्मनि कार्य्यजातम् । तस्यास्तद्धर्मासंसर्गश्च तदानीं वस्तुमात्रप्रतिषेधात् प्रतिपद्यते । यथा चास्य वैदिकमतस्य साधकं दृष्टान्तसहस्रं मन्त्रवर्णं चोपलभामहे न तथा बाधकं किञ्चिदालोचामहे । न च भवताऽपि किञ्चिदुदाहर्तुं शक्यते । **तस्मात्** समञ्जसमेवेदं वैदिकं मतं न जात्वसमञ्जसम् ॥ ९ ॥

अत्रैव परोपालम्भभूतं हेत्वन्तरं समुच्चिनोति—

**"स्वपक्षदोषाच्च"** ॥ १० ॥

असमञ्जसं नेति पदद्वयमनुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । **स्वपक्षदोषात्**=असद्वादी स्वशब्दार्थः, तस्य पक्षोऽसद्वादः, तत्रोक्तदोषान्नासमञ्जसं वैदिकं मतमित्यर्थः ।

यादृशो ह्यसामञ्जस्यलक्षणो दोषः खल्वसत्पक्षेऽसद्वादिना प्रसञ्ज्यते

तादृशो दोषस्तस्य स्वपक्षेऽपि प्रसज्यते। तेनाप्यसति कार्य्यमात्राप्ययस्याभ्युपगमात्। यथा हि प्रलयवेलायामस्माभिः कार्य्यमात्रस्याप्ययस्तत्कारणे प्रकृतौ तावदभ्युपेयते तथाऽसद्वादिनाऽपि कार्य्यमात्रस्याप्ययस्तदानीं तत्कारणेऽसत्यभ्युपगम्यते। तस्य तत्र कार्य्यधर्माश्चेन्न प्रसज्यन्ते तदाऽस्माकमपि न प्रसज्यन्त इति समानमेतत् किं पक्षपातेन निरर्थकेन। प्रसज्यन्ते चेत्? तदा न तदसत् स्यात्। धर्माश्रयस्यासत्त्वासिद्धेः। नहि धर्मान् काँश्चिदाश्रयते भवति चासदिति संश्लिष्यते। परिभाषामात्रं चेदसदित्यास्थीयते? तदा कृतमस्मासु दुराग्रहग्रहावेशविशेषप्रयुक्तेनोपालम्भेन। यथैव तावकः पक्षस्तथैव मामक इति सन्तोष्टव्यम्। लोकविरोधादपत्रपसे चेत्? तदा वैदिकं मतमाश्रयितव्यं नास्ति तत्रासामञ्जस्यं नाम किञ्चिद्दूषणम्॥ १०॥

ननु वैदिकं मतमपि तर्कं न सहत, इति कथं नासमञ्जसं स्यात्? तत्राह—

**"तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः"** ॥ ११॥

असमञ्जसं नेति पदद्वयमनुवर्तते। **तर्काप्रतिष्ठानात्**=तर्कस्याप्रतिष्ठितत्वात्, अपि=तद्बलेनापि नासमञ्जसं वैदिकं मतं मन्तव्यम्। **अन्यथा**=प्रकारान्तरेण, **अनुमेयं**=तर्कस्य प्रतिष्ठितत्वमनुमातव्यमिति **चेत्**=यद्युच्यते तदा मा वोचः, कुतः? **एवमपि**=अन्यथाऽनुमानेऽ**प्यविमोक्षप्रसङ्गः**=तर्कस्याप्रतिष्ठितत्वदोषाद् विमोक्षो न प्रसज्यत इत्यर्थः।

न खलु वैदिकं मतं तर्कं न सहत इत्यसमञ्जसं निश्चेतव्यम्। तर्कस्य स्वयमप्रतिष्ठितत्वेन तदसामञ्जस्यसाधने सामर्थ्याभावात्। स्वमत्योत्प्रेक्षिता युक्तिर्हि तर्क इत्युच्यते। न च लोके पुरुषमतीनामस्त्यैकरूप्यं येन तदुत्प्रेक्षितः स प्रतितिष्ठेत्। नहि तासां वैश्वरूप्ये तदुत्प्रेक्षितोऽसौ कथञ्चित् प्रतिष्ठातुमवकल्पते। दृश्यते खलु कश्चिदभियुक्तः प्रयत्नतः

किञ्चिदुत्प्रेक्षते ततोऽन्योऽभियुक्ततरस्तूर्णं तदन्तरेण प्रयत्नमाभासयते । तदुत्प्रेक्षितं च ततोऽप्यन्यः कश्चिदभियुक्ततमो द्रागित्येवाभासीकुरुते । न चैवं दृश्यमाने पुरुषमतिवैश्वरूप्ये शक्यं तदुत्प्रेक्षितस्य कस्यापि तर्कस्य प्रतिष्ठितत्वमाश्रयितुम् । यदा खलु तर्क एव न प्रतितिष्ठति तदा कथं तद्बलेन वैदिकं मतमसमञ्जसमिति मन्येत । नहि स्वयमप्रतिष्ठितः कश्चिदन्यस्य कस्यचित् प्रतिष्ठापने भवति क्षमः । न च भगवान् वेदोऽपि तर्क इव पुरुषमतिप्रभवो विद्यते येन सोऽपि स्वार्थेऽप्रतिष्ठितः कल्प्येत भवेच्च तेन वैदिकं मतमसमञ्जसम् । स हि सर्वज्ञबुद्धिप्रभवः **"बुद्धिपूर्वा वाकृतिर्वेदे"** (वैशे० ६ । १ । १) इति स्मृतेः । अत एव चास्ति तस्य रवेरिव रूपविषये स्वार्थे निरपेक्षं प्रामाण्यमिति वैदिकमात्रसिद्धान्तः । तस्मान्न तत्प्रतिपाद्यं किञ्चित् प्रमाणान्तरैरप्यन्यथयितुं शक्यते किं पुनर्वराकेण तर्केणेति दृढं मनसि कर्तव्यम् । **अथोच्येत** मा नाम कश्चिदेकस्तर्कः प्रतिष्ठात्, न चैतावता सर्वस्तर्को न प्रतितिष्ठतीत्यापद्यते । तर्काप्रतिष्ठाया अपि तर्केणैव प्रतिष्ठापनात् । यदिदं तर्कस्याप्रतिष्ठितत्वं खलु प्रतिष्ठाप्यते तत् किं प्रमाणेन केनचित् प्रतिष्ठाप्यते किंवा तर्केण? प्रमाणेन चेत्? तदा वक्तव्यं किं तत् प्रमाणं प्रत्यक्षं स्यादनुमानं वा शब्दो वा । **न** तावत् प्रत्यक्षमिति वक्तुं पार्य्यते । तस्य रूपवद्वस्तुविषयत्वेन तर्काविषयत्वात् । प्रत्यक्षं हि तदेव वस्तु विषययति यत् किल महत्त्वं नातिक्राम्यति भूयोऽवयवेषु समवैति रूपं चोद्भूतमाश्रयति । यत्रेदमुक्तं दर्शनान्तरे **"महत्यनेकद्रव्यवत्त्वाद् रूपाच्चोपलब्धिः"** (वैशे० ४ । १ । ६) इति । न च तथा तर्कः । क्षीणव्यापारत्वाच्च । प्रत्यक्षस्य हि तावद् व्यापारो जायते यावदुत्पन्नेन तेन वस्तुसत्ता न प्रत्याय्यते । वस्तुसत्तां प्रत्याय्य च क्षीणव्यापारं सम्पद्यते । न च तथा सम्पद्यमानं पुनर्वस्तुनः प्रतिष्ठितत्वाप्रतिष्ठितत्वप्रतिष्ठापने भवति क्षमम् । अन्यथा न जातु रजतार्थी शुक्तिरजते सहसा प्रवर्तेत । यस्य च वस्तुसत्तामात्रप्रत्यायने व्यापारः परिसमाप्यते तेन तदगोचरस्य तर्कस्याप्रतिष्ठितत्वप्रतिष्ठानाशाऽपि दुराशैवेति किं न विभा-

श्यते। अथानुमानमिति चेत्? न युक्तमुच्यते। तदनुग्राह्यस्य तस्य तदप्रतिष्ठितत्वप्रतिष्ठापकत्वानुपपत्तेः। तर्को ह्यनुमानविषयविवेचनेनानुमानं तावदनुगृह्णाति तदनुगृहीतं चानुमानं स्वविषयमवभासयति। न च यस्य यदनुग्रहादात्मविषयावभासकत्वं तस्य तदप्रतिष्ठितत्वप्रतिष्ठापकत्वमुपपद्यते। नहि यद् यदुपजीव्यात्मानं लभते तत् तस्याप्रतिष्ठितत्वप्रतिष्ठापने कर्हिचिदलं सम्पद्यते। चेत् सम्पद्येत न जीवेत्। अनुग्राहकाधीनं ह्यनुग्राह्यस्य जीवनम्। यथा हि भूमिसलिलाद्यनुग्राह्यः खलु यवशालिप्रभृत्यङ्कुरस्तदप्रतिष्ठायां क्षणार्द्धमपि श्वसितुं न क्षमते तथा तर्कानुग्राह्यमनुमानमपि तर्काप्रतिष्ठायां क्षणार्द्धमपि जीवितुं न सहते। यस्य च यदप्रतिष्ठायां जीवनमपि न घटते तत् तस्याप्रतिष्ठितत्वप्रतिष्ठापनेऽलं सम्पद्यत इति मनोरथमात्रम्। अथानुमानमेव तर्कं मन्यते न तदनुग्राहक इति चेत्? तदाऽपि न तेन तस्याप्रतिष्ठितत्वं प्रतिष्ठापयितुं शक्यते। स्वस्य स्वाप्रतिष्ठितत्वप्रतिष्ठापनासम्भवात्। यथा हि स्वस्य खलु पुरुषस्य स्वस्कन्धारोहणं न समस्ति तथा तर्कस्यापि स्वाप्रतिष्ठितत्वप्रतिष्ठापनं न सम्भवति। नहि स्वमेव स्वाप्रतिष्ठितत्वप्रतिष्ठापनाय कदाचिदीष्टे। परेण केन चिदिति चेत्? तदा वक्तव्यं सोऽप्यप्रतिष्ठितः स्यादाहोस्वित् प्रतिष्ठित इति। अप्रतिष्ठितश्चेत्? न परस्याप्रतिष्ठितत्वं प्रतिष्ठापयिष्यति। प्रतिष्ठितस्यैव पराप्रतिष्ठितत्वप्रतिष्ठापनसामर्थ्यात्। प्रतिष्ठितश्चेत्? तर्ह्यागतः प्रतिष्ठितस्तर्कस्तेनैवासमञ्जसं वैदिकं मतं तर्कयामः। अथ शब्द इति चेत्? कोऽसौ शब्दः श्रुतिर्वा स्मृतिर्वा। श्रुतिरिति चेत्? न। तत्र तर्कस्य स्वयमेवादरणीयत्वस्य दर्शितत्वात्। अस्ति तावच्छ्रुतिः **"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"** (बृ० ४।५।६) इति। सा प्रत्यगात्मनो द्रष्टव्यत्वं विधाय तत्साधनं श्रवणव्यतिरेकेण मननं विदधती स्वयमेव तर्कमप्यत्रादरणीयं दर्शयति। नहि तस्यादरणीयत्वाभावे दर्शनसाधनेषु विधानं कथञ्चिदुपपद्यते। स्मृतिरिति तु रिक्तं वचः। सर्वस्मृतिमूर्धन्यायां मानवस्मृतौ धर्मशुद्धितद्वेदनहेतुत्वेन तर्कस्यादर्तव्यत्वोपलम्भात्। विधत्ते

खलु सर्वासां स्मृतीनां मूर्धन्या नाम मानवी स्मृतिः । तत्र च तर्को धर्मशुद्धितद्वेदनहेतुत्वेनाद्रियमाणः स्पष्टमुपलभ्यते **"प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् । त्रयं सुविदितं कार्य्यं धर्मशुद्धिमभीप्सता"** (मनु० १२ । १०५) **"आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः"** (मनु० १२ । १०६) इति । यथा चेह धर्मशुद्धितद्वेदनहेतुतया तर्कस्तावदाद्रियमाण उपलभ्यते तथा वेदार्थनिर्णयहेतुतया निरुक्तपरिशिष्टेऽपि सत्क्रियमाणोऽवलोक्यते **"मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् को न ऋषिर्भविष्यति ? इति । ते तेभ्य एतं तर्कमृषिं प्रायच्छन्"** (नि० परि० १ । १ । १२) इति । युक्तं चैतत् पश्यामः । लौकिकव्यवहारवद् वेदार्थयुक्तायुक्तत्वनिर्णयस्यापि तर्कनिबन्धनत्वात् । यथा हि लौकिकः खलु कश्चिदपि व्यवहारस्तर्कं विना न प्रवर्तते न च पृथग्जनोऽप्यतीतवर्तमानाध्वसामान्यमतर्कयन्ननागतेऽध्वनि सुखदुःखप्राप्तिपरिहारस्य हेतोः प्रवर्तितुमुत्सहते तथा वेदार्थस्य युक्तायुक्तत्वनिर्णयोऽपि सर्वस्तर्कनिबन्धनो द्रष्टव्यः । नह्येषोऽपि तर्कं विना युक्तोऽयुक्तो वेति निर्णेतुं शक्यते । तर्क एव ह्येकस्तद्युक्तायुक्तत्वनिर्णायकः । स चेन्नास्ति कश्चित् प्रतिष्ठितः कथमसौ निर्णीयेत । यस्य खलु विवदमानस्य तन्निर्णायकेषु वैदिकसाम्प्रदायिकेषु तन्निबन्धेषु च चिरन्तनेषु संशयो जागर्य्यते न स तर्कमन्तरेण तद्यौक्त्यायौक्त्यं कर्हिचिन्निर्णेतुमीष्टे । निर्णयाभावे च लौकिकव्यवहारवदवश्यं वैदिकव्यवहारोऽपि लुप्येत । मा नामैष लोपीदिति विद्यते तन्निर्णायकः कश्चित् प्रतिष्ठितोऽपि तर्क इति मन्तव्यम् । तथा चोपपन्नं तेनैवासमञ्जसं वैदिकं मतमिति । **नैतद्वक्तव्यम् ।** उक्तदोषाविमुक्तिप्रसङ्गस्य तावदस्थ्यात् । द्विविधो हि तर्को मन्यते शास्त्राश्रयप्रवृत्तिः स्वतन्त्रप्रवृत्तिश्च । तत्र यस्तावच्छास्त्राश्रयप्रवृत्तिः स एव श्रुतिस्मृतिभिराद्रियते तदन्यश्च निराक्रियते **"नैषा तर्केण मतिरापनेया"** (कठ० २ । ९) इति । तस्य शास्त्राश्रयप्रतिष्ठितत्वादस्ति प्रतिष्ठितत्वं न स्वरूपत इति तदभ्युपायेऽपि न

तर्कः कश्चिदप्रतिष्ठादोषाद् विमुच्यते । यस्तु स्वतन्त्रप्रवृत्तिः स पुरुषमतिप्रभवतया न कर्हिचित् प्रतिष्ठातुमर्हति । विचित्रा हि पुरुषमतयः । न यदेकेन किञ्चित् तर्क्यते तदपरेणानुमन्यते । तेन वा तर्कितं परेण नान्यथाप्यते । न च सर्वे पुरुषाः क्वचिदेकत्र समाहर्तुं शक्यन्ते येन तेषामेकरूपा मतिः कथञ्चित् सम्पद्येत तत्तर्कितं च सम्यगिति बुद्ध्वा न केनचिदन्यथाप्येत । न चासद्वादी तर्कविदामुत्तम इति सर्वैः परिगृह्यते येन तदुत्प्रेक्षितस्तर्कोऽप्यप्रतिष्ठादोषाद् विमुच्येत । यदा च पुरुषमतिवैश्वरूप्यात् तदुत्प्रेक्षितानां तर्काणां कोऽपि तर्कस्तादृशो नोपलभ्यते यत्राप्रतिष्ठादोषाविमोक्षप्रसङ्गस्तदवस्थो न विज्ञायेत तदा सर्वज्ञबुद्धिपूर्वकतया यथार्थज्ञानजननसामर्थ्येन परमप्रतिष्ठितेन भगवता वेदेन प्रतिपादितं मतं तर्के न सहत इति कथं ते वचः श्रद्दधीमहि, कथं च तदाश्रयाद् वैदिकं मतमसमञ्जसमिति प्रतिपद्येमहि । **तस्मात्** परित्यज्यतामसद्वादः, तदाश्रयः सर्वोऽप्रतिष्ठितस्तर्कश्च, यदवलम्बनात् सरलधीः पुरुषः खलु परमार्थतो श्रेयसोऽनर्थे चर्च्छेत्, भजतां च श्रद्धाभक्तिभ्यां वेदशास्त्राविरोधितर्कोपबृंहितमिदं प्रत्यहं वैदिकं मतम् । परमनिःश्रेयससाधनत्वात् । नास्ति तत्र लेशतोऽप्यसामञ्जस्यलक्षणो दोषः ॥ ११ ॥

**अतिदिशति—**

**"एतेन शिष्टापरिग्रहा अपि व्याख्याताः" ॥ १२ ॥**

**एतेन**=तर्काप्रतिष्ठानेन दोषेण **शिष्टापरिग्रहा अपि**=मनसा वाचा कर्मणा यथाविधानं वेदानुशासने निरताः शिष्टाः, तैर्न परिगृह्यन्ते प्रतिक्षेप्यतयाऽपि क्वचिन्नोपादीयन्ते ये शून्यादिवादाः, तेऽपि व्याख्याताः= वैदिकैरसद्वादवद् दूरतः परित्यक्तव्या व्याख्याता व्युत्पादिता वेदितव्या इत्यर्थः ।

यथा हि तर्काप्रतिष्ठादोषेण तन्मात्रोपाश्रयोऽसद्वादः खलु वैदिकैः परित्यज्यते तथा शून्यादिवादा अपि दूरतः परित्यक्तव्याः । समानयोगक्षेमत्वात् । असद्वादस्तावत् प्रतिक्षेप्यतया शिष्टैः परिगृह्यते **"कथमसतः**

**सञ्जायेत**" (छां० ६ । २ । २) इत्यादौ, शून्यादिवादास्तु प्रतिक्षेप्यतयाऽपि न तैः क्वचित् परिगृह्यन्त इति ते "**शिष्टापरिग्रहाः**" उच्यन्ते ॥ १२ ॥

पुनरसद्वादिनोत्प्रेक्षितमनिष्टान्तरप्रसङ्गमाशङ्क्य समाधत्ते—

**"भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्"** ॥ १३ ॥

**भोक्त्रापत्तेः**=भोक्तृप्रसक्तेर्भोग्यायाः प्रकृतेर्मूलकारणस्य भोक्तृरूपताप्राप्तेर**विभागः**=तत्र प्रलयवेलायामभ्युपगतो जीवात्मनामविभागो न युक्त इति **चेत्**=यदि शङ्क्यते तदा प्रतिब्रूमः **स्याल्लोकवत्**=भवेदयं लोकवददोष इत्यर्थः ।

वैदिके राद्धान्ते हि द्विविधास्तावज्जीवात्मानः स्वीक्रियन्ते मुक्तिभाजो बन्धभाजश्च । तत्र मुक्तिभाजः परमात्मदर्शनमाहात्म्यान्निवृत्ताखिलप्रकृतितत्कार्य्यपरिष्वङ्गाः सरित इव सरित्पतौ विकसितोर्मिमालिनि भगवति तस्मिन्नविभागमापद्यमानाः स्वेनात्मना चिता प्रतिक्षणं नवं नवमुपभुज्यमानमिव साम्यातिशयविनिर्मुक्तं तत्स्वरूपानन्दमुपभुञ्जते । तदुपभुञ्जानाश्च न ते तावदुपरमन्ते यावज्जगतः पित्रा भगवता तेन कस्मिँश्चिदधिकारविशेषे न नियुज्यन्ते । बन्धभाजश्च संसारवेलायां निकायविशिष्टाभिरपूर्वाभिः शरीरेन्द्रियमनोवेदनाभिः सम्बन्धं लभमानाः प्राकृतिकं सुखं दुःखं यथा कर्मानुभवन्ति, प्रलयवेलायां च स्थूलशरीरस्य पातादुपसंहृतसर्वेन्द्रियवृत्तयः कूर्मावयवा इव कूर्मवर्ष्मणि प्रकृतावविभागेन तिष्ठन्ति । प्रकृतिश्च परब्रह्मणि परमेश्वर इति विशेषः । न च तदानीं तत्र सूक्ष्मधियोऽपि विवेक्तुं शक्नुवन्ति के ते जीवात्मानः केयं प्रकृतिरिति । प्रधानभूता हि तदा प्रकृतिर्भवति गुणभूताश्च जीवात्मानः । प्रकृतिः सूक्ष्मा जीवात्मानश्च सूक्ष्मतरा इति कथं ते तत्राविभागमापद्यमानाः शास्त्राश्रयादृते केवलाभिर्बौद्धोत्प्रेक्षिताभिर्युक्तिभिर्विविच्येरन् । यथाशास्त्रं हि योगमभ्यस्यतां खलु शिष्टानामेष बुद्धिगम्यो विवेको न केवलं तर्कमुपजीव्य प्रत्यवतिष्ठमानानां बालानाम् । अत एवात्र निरस्तेनाप्य-

सद्भाविना बुद्धिमान्द्यात् पुनरनिष्टमिदमाशङ्क्यते। भोग्या किल प्रकृतिः। तत्र चेद् भोक्तारोऽमी जीवात्मानः प्रलयवेलायामविभागमापद्यन्त इत्यभ्युपगम्येत तदा नूनमियं भोग्या सती भोक्त्री प्रसज्येत यथा क्षीराविभागान्नीरं क्षीरम्। नहि नीरं क्षीरेऽविभागमापद्यते क्षीरं च न सम्पद्यत इति लोके क्वचिद् दृश्यते। यथालोकदृष्टं च भवति सर्वत्र कल्पनाप्रवृत्तिः। भोक्तारश्च जीवात्मानः प्रसिद्धाः। ते चेत्प्रकृतौ प्रलयवेलायामविभागमापद्यन्ते तदाऽवश्यं प्रकृतिरपि भोक्त्री प्रसज्यत इति मन्तव्यम्। सोऽयं प्रकृतिवादे महाननिष्टप्रसङ्गः। तस्य समाधिः **स्यादयं लोकवददोषः**। यथा हि लोके खलु वर्षाभुवो वर्षातिपाते भूमावौषधादिवदविभागं प्रपद्यन्ते पुनरम्भोदवारिधारावसेके च यथापूर्वमुत्पद्यन्ते भोग्या च भूमिर्भोक्तॄणां तेषामविभागाद् भोक्त्री न प्रसज्यते तथा भोग्या प्रकृतिरपि भोक्तॄणां जीवात्मनामविभागाद् भोक्त्री न प्रसज्यते। जड़ानां ह्येष स्वभावः यत्र ते जडेष्वविभज्य वर्तन्ते तानात्मधर्मेण रूषयन्ते यथा हिङ्गुसैंधवप्रभृतयो यूषादीन्। न च जडेषु दृष्टोऽयं स्वभावो जडचेतनेषु तेषु सहसा प्रसञ्जयितुं शक्यते। तत्र बलिनो धर्मविपर्य्ययस्य तत्प्रतिबन्धकस्य सद्भावात्। जड़ा प्रकृतिश्चेतनाश्च जीवात्मान इति सर्वजनीनम्। न चाविभागमात्रसामान्येन शक्यते कस्यचित् स्वभावो विपर्य्ययितुम्। अविभागश्चास्माकं भेदगर्भोऽभेदावभासो नात्यन्ताभेद, इत्यसकृदवोचाम। **तस्मात्** प्रकृतौ प्रलयवेलायां जीवात्मनामविभागाभ्युपगमेऽपि नास्ति कश्चिद् दोषप्रसङ्गः॥ १३॥

**स्यादेतत्**—यदिदं कार्य्यं खलु पृथिव्यादिजगदाख्यायते तत् किं प्रागुत्पत्तेः कारणात् प्रकृतेरन्यदभ्युपगम्यते किंवाऽनन्यत्। अन्यच्चेत्? तर्ह्यलं प्रकृत्या। असतोऽपि तदुत्पत्त्युपपत्तेः। अनन्यच्चेत्? तदा जगत इव प्रकृतेरा. कारणान्तरं किञ्चिदन्वेष्टव्यम्। तथा च दुष्परिहरोऽनवस्थाप्रसङ्गः। सर्वदा वा सद्भावात् कृतं तत्र कारणव्यापारेणेति। अस्योत्तरं पठति—

**"तदनन्यत्वमारम्भणशब्दादिभ्यः"॥ १४।**

**तदनन्यत्वं**=तदा बुद्धिस्थं मूलकारणं प्रकृतिः परामृश्यते, कार्य्यस्य तदनन्यत्वमभ्युपगम्यते, कुतः? **आरम्भणशब्दादिभ्यः**="वाचारम्भणं विकारो नामधेयम्" ( छां० ६ । १ । ४ ) इत्यादिश्रुतिवाक्येभ्य इत्यर्थः ।

न खल्वस्माभिरुत्पत्तेः प्राक् कार्य्यं सर्वथा कारणतोऽन्यदनन्यद्वाऽभ्युपगम्यते येन तत्र भवदुत्प्रेक्षिता दोषाः प्रसज्येरन्, किं तर्हि? कार्य्यात्मना कारणतोऽन्यत् सत् कारणात्मनाऽनन्यत् । तत्र कार्य्यात्मनाऽन्यदित्यभ्युपगमेन कारणव्यापारचारितार्थ्यं सम्पाद्यते । कारणात्मनाऽनन्यदित्यभ्युपगमेन चासद्वादो व्यापाद्यते । तदेतद् वयं श्रुतिवाक्यावष्टम्भेनाभ्युपगच्छामो न तर्कावष्टम्भेन । श्रुतिवाक्यानि च सर्वस्यास्य कार्य्यवर्गस्य प्रागुत्पत्तेः कार्य्यात्मना कारणतोऽन्यत्वं कारणात्मना चानन्यत्वं व्यक्तमवगमयन्ति **"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्"** (छां० ६ । १ । ४ ) **"असदेवेदमग्र आसीत् तत् सदासीत्"** ( छां० ३ । १९ । १ ) **"तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियत"** ( बृ० १ । ४ । ७ ) इत्यादीनि । न चेहास्ति कश्चित् सन्दिग्धोंऽशः । न च "मृत्तिकेत्येव सत्यम्" इति प्रतिपादयच्छ्रुतिवाक्यं कारणव्यतिरेकेण नास्ति कार्य्यं किञ्चिदन्यदिति प्रतिपादयति । तथा प्रतिपादने **"वाचारम्भणं विकारो नामधेयम्"** इति न प्रतिपादयेत् । तत्प्रतिपादनेन मृत्तिकायां कारणे याविमौ नामरूपात्मकावंशौ तावत् सम्प्रतीयेते तदेवोभयं कारणव्यापारनिष्पाद्यत्वात् कार्य्यम्, यच्च कार्य्यं तदनित्यमिति न तत् सत् किन्तु तत्कारणं मृत्तिकेत्येव सत्यमिति तदभिप्रायो व्यक्तमवगम्यते । घटपटादिकं नाम, पृथुबुध्नोदराद्याकारो रूपम् । तदिदमुभयं प्रागुत्पत्तेः कारणात्मना विद्यमानमपि कारणव्यापारात् पूर्वं न व्यवहारगोचरतां कर्हिचिदापद्यते । येयं खलु तस्य कारणव्यापारेण व्यवहारगोचरतापत्तिः सैव तदुत्पत्तिः, तदेव च कारणव्यापारकृत्यमिति कार्य्यतत्त्वविदां वरिष्ठास्तावद् वैदिकाः सङ्गिरन्ते । शिष्टश्रुतिवाक्यद्वये चोत्पत्तेः पूर्वं कार्य्यस्य

कारणात्मना सत्त्वं कार्य्यात्मना चासत्त्वं विस्पष्टं, न व्याख्यानं किञ्चि-दपेक्षते । सोऽयं वैदिको राद्धान्तः । एवं हि वैदिकाः पश्यन्ति—कार्य्यं चेदुत्पत्तेः प्रागत्यन्तमसद् भवेत् तदा कारणव्यापारेणापि नोत्पद्येत । नह्यत्यन्तासच्छशशृङ्गादयः कारणव्यापारेण कथञ्चिदुत्पत्तुं पारयन्ते । स्याच्चेत् कृतं तत्र कारणव्यापारेण । नहि सति कार्य्ये कारणव्यापारस्य कृत्यं किञ्चिद् विद्यते । तस्य पूर्वमेव सत्त्वात् । पुरस्तात् सतश्च परस्ता-दपि सत्त्वनियमेन विनाशोऽपि न स्यादित्यतः प्रागुत्पत्तेः कारणात्मना सद्भवदपि कार्य्यं कार्य्यात्मना भवत्यसदित्यभ्युपगन्तव्यम् । अनेना-सद्वादो नापत्स्यते कारणव्यापारोऽपि च सप्रयोजन उपपत्स्यते । तदेव हि लोके कारणव्यापारेण नोत्पद्यते यत् केनापि रूपेणोत्पत्तेः पूर्वं न वर्तते यथा सिकतासु तैलम् । न चैवमिदं कार्य्यमभ्युपेयते येनासद्वाद आपद्येत । तद्धि प्रागुत्पत्तेः कार्य्यरूपेणासद् भवदपि कारणरूपेण सद-भ्युपेयते । तस्य च कारणव्यापारेणोत्पत्तिर्युज्यते नास्ति कश्चिद् विरोधः । कारणव्यापारो हि न किञ्चिदपूर्वं कुरुते । तत्र तत्सामर्थ्याभावात् । अन्यथा सिकतासु तैलमपि कुर्वीत । न च तत् कुर्वाणो लोक्यते । तर्हि किं तेन क्रियते? कारणरूपेण सद्भवत् कार्य्यं येन कार्य्येण रूपेण सन्न विद्यते तेन रूपेण तस्य सत्त्वमापाद्यते । शक्यत्वात् । शक्यं हि तस्य तत् । शक्यगोचरा च दृष्टा सर्वत्र नियमेन शक्तस्य शक्तिरिति सप्रयोजनोऽयं कारणव्यापारः । तदेतच्चोपपादितं विस्तरेण दर्शनान्तरेषु **"सदसत्"** (वैशे० ९ । १ । २) **"असतः क्रियागुणव्यप-देशाभावादर्थान्तरम्"** (वैशे० ९ । १ । ३) **"नासन्न सन्न सदसत् सदसतोर्वैधर्म्यात्"** (न्या० ४ । १ । ४८) **"उ-त्पादव्ययदर्शनात्"** (न्या० ४ । १ । ४९) **"बुद्धिसिद्धं तु तदसत्"** (न्या० ४ । १ । ५०) इति । वैशेषिकसूत्रवैदिकवृत्तौ न्यायसूत्रवैदिकवृत्तौ चामीषां सूत्राणामर्थोऽस्माभिः सम्यग् व्युत्पादित-स्तदभिजिगमिषुभिस्ताभ्यामेव सोऽधिगन्तव्यः । यद्येवं घटपटादिकार्य्यं कार्य्यात्मनाऽसद् भवत् कारणात्मना सदित्यभ्युपेते तदेव कार्य्यात्मना

कारणादन्यद् भवत्कारणात्मना ततोऽनन्यदिति प्रणिगद्यते । कार्य्यमात्रे चैष समानश्चर्चः । तथा च वैदिकानामस्माकं कार्य्यात्मना कारणतोऽन्यद् भवदप्यस्ति प्रागुत्पत्तेः कारणात्मना तदनन्यदिदं पृथिव्यादिकं कार्य्यं जगदिति विज्ञातव्यम् ॥ १४ ॥

कार्य्यस्य प्रागुत्पत्तेः कारणानन्यत्वे हेत्वन्तरं समुच्चिनोति—

**"भावे चोपलब्धेः" ॥ १५ ॥**

तदनन्यत्वमित्यनुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । **भावे**=कारणे सत्युपलब्धेः=कार्य्यस्योपलम्भात् कारणानन्यत्वमभ्युपगम्यत इत्यर्थः ।

यस्य खलु कार्य्यस्य यत् कारण नियतं यथा मृत्तिका घटस्य तन्तवश्च पटस्य, तत् सत्येव तस्मिन्नुपलभ्यते नासति । यदि कार्य्यं प्रागुत्पत्तेः कारणतोऽनन्यन्न भवेत् तदा न तस्मिन् सत्येवोपलभ्येत । नहि मृत्तिकातोऽन्यः पटस्तन्तुभ्योऽन्यो वा घटः सत्यामेव मृत्तिकायां सत्स्वेव वा तन्तुषु कर्हिचिदुपलभ्यते । अन्यत्वे चावश्यमुपलभ्येत । यथाऽस्ति मृत्तिकातोऽन्यो घटस्तथाऽस्ति पटोऽप्यन्यः । एवं तन्तुभ्यो यथाऽस्त्यन्यः पटस्तथाऽस्ति घटोऽप्यन्यः । उपलभ्यते च सर्वत्र मृत्तिकायां भवन्त्यां घटः, तन्तुषु भवत्सु च पटः । यद्भावे च यन्नियमेनोपलभ्यते तस्मादस्ति तस्यानन्यत्वं प्रागुत्पत्तेरिति निश्चयः । अन्वयव्यतिरेकौ ह्युपलब्धिपथमारोहन्तौ कार्य्यस्य कारणान्यत्वानन्यत्वे तावदवगमयतः । तौ च यथा मृद्घटयोस्तन्तुपटयोश्च दृष्टिपथमारोहतो न तथा मृत्पटयोस्तन्तुघटयोश्च प्राग्भुतः । किं कारणम्? प्रागुत्पत्तेर्मृदनन्यो घटस्तन्त्वनन्यश्च पटो वर्तते नातो विपरीतमिति विस्पष्टं तत्कारणमवगन्तुं शक्यते नास्त्यत्र कश्चित् संशयावकाशः । यथा चैवमन्वयव्यतिरेकाभ्यां कार्य्यस्य कारणानन्यत्वं प्रागुत्पत्तेरवगम्यते तथा दर्शनान्तरादपि प्रतिपद्यते । अस्ति दर्शनान्तरे सूत्रम् **"कारणभावात् कार्य्यभावः"** ( वैशे० ४ । १ । ३ ) इति । तस्य च मृद्भावाद् घटभावस्तन्तुभावात् पटभावः प्रकृतिभावाच्च

जगद्भाव इति प्रव्यक्तोऽर्थः । न चान्यस्य भावादन्यो भवितुमर्हति । भवेदन्यथा सर्वस्मात् सर्वमन्यत्वाविशेषात् । भवति च नियमेन कारणादेव कार्य्यम् । तस्मादस्ति तस्य प्रागुत्पत्तेः कारणानन्यत्वम् ॥ १५ ॥

अत्रैव हेत्वन्तरमवतारयति—

**"सत्त्वाच्चावरस्य"** ॥ १६ ॥

तदनन्यत्वमित्यनुवर्तते । यत्र पूर्वो हेतुरुक्तस्तत्रैव हेत्वन्तरमेतदिति चार्थः । **अवरस्य**=कार्य्यस्य **सत्त्वात्**=प्रागुत्पत्तेः कारणात्मना सत्त्वव्यपदेशात् तदनन्यत्वं गम्यत इत्यर्थः ।

समस्तं खलु जगत् प्रागुत्पत्तेः कारणात्मना सद् व्यपदिश्यते **"सदेव सोम्येदमग्र आसीत्"** (छां० ६ । २ । १) इति । चेदिदं कारणतोऽनन्यन्न भवेत् न जातु कारणात्मना तदानीं सद् व्यपदिश्येत । नहि कारणतोऽन्यद् भवत् कार्य्यं कदाचित् कारणात्मना सद् व्यपदेष्टुं शक्यते । पटोऽप्यन्यथा प्रागुत्पत्तेर्मृदात्मना सन् व्यपदिश्येत । न च स तथा व्यपदिश्यमानः क्वचिदुपलभ्यते । घटे चास्ति प्रागुत्पत्तेर्मृदेवासीदिति मृदात्मना सद्व्यपदेशः प्रत्यक्षः । पटेऽप्येवं तन्त्वात्मना स प्रत्यक्षोऽवगन्तव्यः । यच्च यदात्मना कदाचित् सदिति व्यपदिश्यते तत् तदानीमस्ति ततोऽनन्यदिति निःशङ्कं वक्तुं शक्यते । गत्यन्तराभावात् । सच्छब्दो यद्यपि श्रुतौ ब्रह्मपरः प्रयुज्यते न प्रकृतिपरः, तथापि नास्ति कश्चिद् विरोधः । सपरिवारायाः प्रकृतेर्जगदुत्पत्तेः प्राक् परब्रह्मणि परमेश्वरेऽविभागेनावस्थानस्याभ्युपगमात् तत्रापि तच्छब्दप्रयोगोपपत्तेः । तस्मादस्ति कार्य्यस्य प्रागुत्पत्तेः कारणानन्यत्वम् ॥ १६ ॥

अत्राशङ्क्य निराकरोति—

**"असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्"** १७

तदनन्यत्वमित्यनुवर्तते । यत इति शेषः । **असद्व्यपदेशात्**=असदिति भावप्रधानो निर्देशः, कार्य्यस्य प्रागुत्पत्तेरसत्त्वव्यपदेशात्=तदनन्यत्वं नेति **चेत्**=यदुच्यते तदा **न**=न वाच्यम्, कुतः? यतो धर्मा-

न्तरेण=व्यक्तत्वधर्मतोऽन्येनाव्यक्तत्वधर्मेणैष व्यपदेशः, कुतोऽवगम्यते? वाक्यशेषात्=उत्तरवाक्यादित्यर्थः ।

अथोच्येत—न खल्वेकत्र प्रागुत्पत्तेः कार्य्यस्य कारणात्मना सत्त्वव्यपदेशात् कारणानन्यत्वमभ्युपगन्तुं शक्यते यत्कारणमन्यत्र तदानीं तस्यासत्त्वमपि व्यपदिश्यते "असदेवेदमग्र आसीत्" (छां० ३ । १९ । १) इति । चेदिदं प्रागुत्पत्तेः कारणानन्यद् भवेत् अवश्यं तदानीं सदिति व्यपदिश्येत । व्यपदिश्यते चासत् । तस्मात् तस्य न तदानीं तदनन्यत्वं विज्ञायत इति । नैतद् वक्तव्यम् । धर्मान्तरेणासत्त्वव्यपदेशात् । यदिदं प्रागुत्पत्तेः खलु कार्य्यजातमसदिति व्यपदिश्यते तन्न स्वरूपाभिप्रायेण व्यपदिश्यत इति मन्तव्यम् । केनाभिप्रायेण तर्हि? यदस्य व्यक्तं कार्य्यं रूपं तेन तदानीं न भवतीत्यभिप्रायेण तदा तदसदित्युपदिश्यत इति निश्चेतव्यम् । इदानीं ह्यस्य रूपं व्यक्तम्, प्रागुत्पत्तेश्च कारणस्याव्यक्तत्वेन तदनन्यत्वाद् भवत्यव्यक्तम् । व्यक्तपर्य्यायश्च प्रायो विकारेषु सच्छब्दः प्रयुज्यतेऽव्यक्तपर्य्यायश्चासच्छब्द इति प्रागुत्पत्तेस्तस्यासच्छब्देन व्यपदेशोऽपि न स्वरूपेणासत्त्वमापद्यते । धर्मान्तरप्रयुक्तो ह्येष व्यपदेशो न स्वरूपासत्त्वप्रयुक्तः । सतश्च प्रागुत्पत्तेः कारणानन्यत्वं सिध्यतितरां नास्ति कश्चिद्दोषः । प्रागुत्पत्तेः कार्य्यमव्यक्तत्वाद् धर्मान्तरादसदिति व्यपदिश्यते न स्वरूपहानादिति तदानीमपि तस्य सत्त्वं प्रतिपादयतो वाक्यशेषात् व्यक्तमवगम्यते । भवति खलु तदानीमपि तस्य सत्त्वप्रतिपादको वाक्यशेषः "तत् सदासीत्" (छां० ३ । १९ । १) इति । चेदिदं कार्य्यं प्रागुत्पत्तेः स्वरूपहानादसदिति श्रुत्या निर्दिश्येत तदा न जातु तदुत्तरस्मिन्नेव वाक्ये पुनः सदिति प्रतिपाद्येत । नहि श्रुतिभिः परस्परं विरुद्धं किञ्चित् प्रतिपाद्यते । पूर्वमसदिति प्रतिपादनानन्तरमेव सदिति प्रतिपादयतश्च श्रुतिवाक्यस्य नूनमस्ति कश्चिदभिप्राय इति चिन्तयितव्यम् । कोऽसौ तदभिप्रायः स्यात्? वयं तु 'पूर्वमसदिति प्रतिपादनेन मा नाम कश्चित् स्वरूपहाननिमित्तं कार्य्यस्यास्य प्रागुत्पत्तेरसत्त्वमुपदिश्यत इति निश्चैष्ट किन्तु कारणस्याव्यक्तत्वेन तदनन्यत्वनिमित्त-

मादिश्यत इति निश्चिन्वीत तदर्थं पूर्वं निर्दिष्टमेवासदुत्तरत्र तच्छब्देन परामृश्य सदिति निगद्यत इति स्फुटमवगच्छामः। कथमन्यथा श्रुत्यन्तरे प्रागुत्पत्तेः कार्य्यवर्गस्यासात्यन्तासत्त्वमाशङ्क्य प्रतिषिध्यते सतश्च सदुत्पत्तिरनुज्ञायते "**तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं, तस्मादसतः सज्जायत ।१। कुतस्तु खलु सोम्य! एवं स्यादिति होवाच, कथमसतः सज्जायेतेति। सत् त्वेव सोम्य! इदमग्र आसीदेकमेवाद्वितीयम्**" (छां ६ । २ । १–२ ) इति। न चैतत् तावत् सङ्गन्तुमर्हति यावदुत्पत्तेः प्राक्कार्य्यमिदं कारणादनन्यत्वेनाभ्युपगम्येत। नह्यन्यथा तदानीमिदं सदिति कर्हिचिच्छक्यते प्रतिपादयितुम्। एतेन "**असद्वा इदमग्र आसीत्**" (तै० २ । ७ ) इति तैत्तिरीयश्रुतिरपि व्याख्याता द्रष्टव्या। तत्रापि "**तदात्मानं स्वयमकुरुत**" (तै० २ । ७ ) इति वाक्यशेषात् पूर्वोक्तधर्मान्तरेण कार्य्यस्य प्रागुत्पत्तेरसत्त्वाभिधानप्रतिपत्तेः । अत्यन्तासद्विवक्षायां तु "**ततो वै सदजायत**" (तै० २ । ७ ) इत्यसतस्तस्मात् सदुत्पत्तिर्नाभिधीयेत। नह्यत्यन्तासतः कदाचित् सदुत्पद्यते। सतः सदुत्पत्तिश्चास्ति प्रत्यक्षा। सत्त्वं च कार्य्यस्य प्रागुत्पत्तेः कारणानन्यत्वादुपपद्यते न प्रकारान्तरेण। तस्माद् विद्यते तस्य तदानीं तदनन्यत्वम्॥ १७॥

अत्रैव हेत्वन्तरं प्रदर्शयति—

"**युक्तेः शब्दान्तराच्च**" ॥ १८ ॥

तदनन्यत्वमित्यनुवर्तते। हेत्वन्तरप्रदर्शनपरश्चकारः। **युक्तेः**=प्रतिनियतकारणोपादानादिरूपाया युक्तेः **शब्दान्तरात्**=शब्दः श्रुतिः, ततोऽन्यः शब्दः शब्दान्तरं स्मृतिः, तस्मात् स्मृतिरूपाच्छब्दान्तराच्च प्रागुत्पत्तेः कार्य्यस्य कारणानन्यत्वं गम्यत इत्यर्थः।

लोके खलु दध्यर्थिभिर्नियमेन क्षीरमेवोपादीयमानं दृश्यते घटार्थिभिश्च मृत्तिका। कार्य्यं चेत् प्रागुत्पत्तेः कारणानन्यन्न भवेत् तदा तत्तत्कार्य्यार्थिनां तत्तत्कारणोपादाननियमोऽयं न दृश्येत, किन्तु ततो

विपरीतमप्यनुभूयेत। न च दध्यर्थिभिर्मृत्तिकोपादीयमाना क्वचिदनुभूयते घटार्थिभिश्च क्षीरम्। किमत्र कारणम्? इदमेव कारणं न ते प्रागुत्पत्ते-र्मृत्तिकातोऽनन्यद् दधि पश्यन्ति नापि क्षीरादनन्यं घटं लोचयन्ति। यस्य तु प्रागुत्पत्तेरसत् कार्य्यं तस्य सर्वस्य सर्वत्रासत्त्वाविशेषेण कस्मात् क्षीरमेव दध्यर्थमुपादीयते न मृत्तिका, मृत्तिकैव घटार्थमुपादीयते न क्षीरमित्य-स्यास्ति किञ्चित् सदुत्तरम्? असत्त्वाविशेषेऽपि तत्तत्कारणे तत्तत्कार्य्यो-त्पादहेतुरतिशयः कश्चिदभ्युपगम्यत इति चेदुत्तरं दीयेत? तदा सगर्वं वदामः प्रकारान्तरेणासद्वादः परित्यज्यते परिगृह्यते च सद्वादः। कार्य्यस्य कारणेऽनन्यत्वेनावस्थानस्यैवातिशयपदार्थत्वात्। न चैतदसत्का-र्य्यवादे कथञ्चिदुपपद्यते। किञ्चेदमपि चिन्तयितव्यं यत्र यस्य सर्वथाऽ-भावोऽस्ति तत्र तत् कथमुत्पत्स्यते। न ह्यभावाद् भावः कदाचिदुत्पत्तु-मर्हति। चेदुत्पद्येत तदा पीडनेन सिकतासु तैलमप्युत्पद्येत दण्डादि-व्यापारेण च तन्तुषु घटोऽप्युपजायेत। न च तत्र तैलमुत्पद्यते घटो वा तत्रोपजायते। तदभावे च कथमसद्वादोऽयमनुमन्येत। यत् खलु कार्य्यं यस्मात् कारणादुपजायते तत्तदन्वितमेवोपजायते। असतश्चेत् सदुपजायेत तदा तदन्वितमेवोपजायेत। सदन्वितमेव च सर्वमुपजायमा-नमुपलभ्यते घटः सन् पटः सन्निति, नासदन्वितम्। न च यद् यद-न्वितं नोत्पद्यते तस्य तत् कारणं सम्भावयितुमपि शक्यते किं पुनरभ्यु-पगन्तुम्। असतः सदुत्पत्तौ च न किञ्चिन्निदर्शनं लोक्यते येन तद्ब-लेनाप्यसद्वादः स्वीक्रियेत सद्वादश्च परित्यज्येत। सतः सदुत्पत्तौ चास्ति-निदर्शनबाहुल्यमिति नासौ परित्यक्तुं शक्यते। स्मृतेश्च। यथा हि युक्तेः खलु सद्वादो गम्यते तथा सांख्यस्मृतेरप्यवगम्यते। सा ह्यसद्वादं प्रत्यक्षं प्रतिक्षिपति सद्वादं च प्रतिपादयति **"नासदुत्पादो नृशृङ्गवत्"** (सां० १।११४) इत्युपक्रम्य **"कारणभावाच्च"** (सां० १। ११८) इत्यन्तेन सूत्रजातेन। न च यं युक्तिरवगमयति स्मृतिश्च तदुपष्टम्भेन प्रतिपादयति तदभ्युपायो दुष्यति। तदभ्युपाये च सिद्धं कार्य्यस्य प्रागुत्पत्तेः कारणानन्यत्वम्॥ १८॥

प्रागुत्पत्तेः कार्य्यस्य कारणानन्यत्वमुक्तम् । सम्प्रति तत्रोदाहरणं किञ्चिद् वक्तव्यम् । तदेव वक्तुकामस्तदभिधायकं सूत्रं पठति—

**"पटवच्च"** ॥ १९ ॥

तदनन्यत्वमित्यनुवर्तते । पूर्वत्रैवोदाहरणमेतदिति चार्थः । **पटवत्**=पटस्य प्रागुत्पत्तेस्तन्त्वनन्यत्ववत् कार्य्यमात्रस्य प्रागुत्पत्तेः कारणानन्यत्वं वेदितव्यमित्यर्थः ।

यथा हि पटः खलु प्रागुत्पत्तेः स्वकारणेभ्यस्तन्तुभ्यो न विशिष्यते तथा पृथिव्यादिकार्य्यमात्रं जगदपि स्वकारणात् प्रकृतेर्न विशिष्यते । तद्धि तदवस्थाविशेषो यथा तन्तूनां पटः । अवस्थावस्थावतोश्चाभेदः सर्वसम्मत इति युक्तं प्रागुत्पत्तेः कार्य्यस्य कारणानन्यत्वम् ॥ १९ ॥

उदाहरणान्तरमाह—

**"यथा च प्राणादि"** ॥ २० ॥

तदनन्यमिति विपरिणम्यानुवर्तते । पूर्वत्रैवोदाहरणान्तरमेतदिति चार्थः । **यथा**=येन प्रकारेण प्राणादि=प्राणादिपञ्चकं प्रागुत्पत्तेः स्वकारणान्मुख्यप्राणादनन्यं विद्यते तथा पृथिव्यादिकार्य्यं जगदपि प्रागुत्पत्तेः स्वकारणात् प्रकृतेरनन्यं वेदितव्यमित्यर्थः ।

यथा हि प्राणोऽपानो व्यान उदानः समान इति प्राणादिपञ्चकं मुख्यप्राणकारणकत्वादुत्पत्तेः प्राङ् मुख्यप्राणतो न भिद्यते तथा पृथिव्यादिकार्य्यं जगदपि प्रकृतिकारणकत्वादुत्पत्तेः प्राक् कारणात्प्रकृतेर्न भिद्यते । प्राणादिपञ्चकं च मुख्यप्राणस्य कार्य्यमिति प्रश्नोपनिषदि स्पष्टमाम्नायते **"तान् वरिष्ठः प्राण उवाच मा मोहमापद्यथ अहमेवैतत् पञ्चधाऽऽत्मानं प्रविभज्यैतद् बाणमवष्टभ्य विधारयामि"** (प्र० २ । ३) इति । यथा खलु मुख्यः प्राणः प्राणापानादिरूपेणात्मानं पञ्चधा प्रविभज्य शरीरस्यास्य विधारणायावकल्पते तथा प्रकृतिरपि पृथिव्यादिजगद्रूपेणात्मानमनेकधा प्रविभज्य प्राणिजातस्यास्य भोगापवर्गाय चङ्क्रम्यते । प्राणापानादयश्चोत्पत्तेः प्राग् यथा मुख्य-

प्राणादन्या न भवन्ति तथेदं पृथिव्यादिकार्य्यं जगदपि प्रागुत्पत्तेः कारणात् प्रकृतेरन्यन्न विद्यत इति विज्ञायते । समानत्वात् । **तस्मात्** सिद्धं कार्य्यमात्रस्यास्य जगतः प्रागुत्पत्तेः कारणानन्यत्वम् ॥ २० ॥

**तदेवं** प्रकृत्यंशे तर्कनिमित्तो विरोधः परिहृतः । ब्रह्मांशे स सम्प्रति परिहरिष्यते । तत्र स्वयूथ्य एव कश्चिदनधिगतवेदोपनिषत्तत्व इव पूर्वं तावत् पूर्वपक्षयति—

**"इतरव्यपदेशाद् हिताकरणादिदोषप्रसक्तिः"** ॥२१॥

ब्रह्मण इति षष्ठ्या विपरिणम्याधिक्रियते । **हिताकरणादिदोषप्रसक्तिः**=अहितकरणमादिपदार्थः, ब्रह्मणो जगज्जन्मादिकारणत्वे स्वहिताकरणादिदोषप्राप्तिः स्यात्, कुतः? **इतरव्यपदेशात्**=इतरो जीवात्मा, तद्रूपत्वनिर्देशादित्यर्थः ।

ननु मा प्रसाङ्क्षीत् प्रकृतेर्जगदुपादानत्वे कश्चिद् विरोधः, ब्रह्मणो जगज्जन्मादिकारणत्वे तु प्रसङ्क्ष्यति । तद्धि श्रुतिषु जीवात्मरूपं व्यपदिश्यते **"तत्सृष्ट्वा तदेवानुप्राविशत्"** (तै० २ । ६) **"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि"** (छां० ६ । ३ । २) **"त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी । त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः"** (श्वे० ४ । ३) इति । जीवात्मनश्च जायमानं सर्वमिदं जगद् दुःखावहत्वादहितमेव वर्तते न हितम् । नह्यसौ कदाचित् कुत्रचित् कस्यापि पदार्थस्यानुषङ्गात् सुखमुपलभते, यदैव यत्रैव जागतेष्वर्थेषु सुखबुद्ध्या प्रवर्तते तदैव तत्रैवात्मानं रागद्वेषप्रकम्पनेन देदीप्यमानस्य जगद्दावानलस्येन्धनीभूय दन्दह्यमानमिव सभयं न निरीक्षते । योऽप्यस्य कदाचित् कुत्रचित् कस्यचित् पदार्थस्यानुषङ्गात् सुखानुभवः, स दुःखविकल्पे सुखप्रत्ययो न परमार्थतोऽस्ति तत्रापि सुखलवः । अत एवाहुस्तत्रभवन्तो दर्शनकाराः **"विविधबाधनायोगाद् दुःखमेव जन्मोत्पत्तिः"** (न्या० ४ । १ । ५५)

**"दुःखविकल्पे सुखाभिमानाच्च"** (न्या० ४ । १ । ५८) **"तदपि दुःखशबलमिति दुःखपक्षे निःक्षपन्ते विवेचकाः"** (सां० ६ । ८) **"परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः"** (यो० २ । १५) इति । सूत्राणां चैषामर्थस्तत्तत्सूत्रवैदिकवृत्तौ विस्पष्टः । ब्रह्म चेदस्य भोग्यस्य नानाविधस्य जगतः कर्तृ विद्येत तदाऽवश्यमात्मभूतायास्मै जीवात्मने हितमेव कुर्वीत नाहितम् । नहि स्वतन्त्रं भूत्वा चेतनं ब्रह्म कर्हिचिदहितमिदं जगदात्मने कर्तुमर्हति । यथा खलु सम्राडात्मने नैवासिकं सदनं किञ्चिन्निर्मिमाणो नियमेन सौमनस्यकरमेव निर्मिमीते न वैमनस्यकरं तथा ब्रह्मापि जगदिदं विरचयदात्मार्थत्वाज्जन्ममरणाद्यनेकानर्थविकलं सुखकरमेव नियमेन विरचयेन्न जातु विपरीतं जन्ममरणाद्यनेकानर्थसङ्कुलं दुःखकरम् । जगच्चेदमीदृक्षं प्रसिद्धम् । तत्र यदात्मरूपाय जीवात्मने दुःखकरस्यास्य जगतो निर्माणं तदेवात्माहितकरणं, यच्च सुखकरस्य तस्यानिर्माणं तदेवात्महिताकरणम् । सोऽयं हिताकरणादिलक्षणो दोषो भगवतो ब्रह्मणो जगज्जन्मादिकर्तृत्वेऽभ्युपगम्यमाने प्रसज्येत । न च वयं सर्वज्ञे सर्वशक्तौ भगवति तस्मिन् स्वप्नेऽप्येतं सम्भावयितुमुत्सहामहे । यदा खलु साधारणोऽपि पुमान् कदाचित् कुत्रचिदात्मनो गेहमारभमाणः सर्वथा हितमेव=आत्मनः सुखकरमेवारभते नाहितं तदाऽऽत्मनो गेहं जगदिदमारभमाणं सर्वज्ञं सर्वशक्ति ब्रह्माहितमारभत इति न बुद्धितलमध्यास्ते । तस्मान्नास्ति ब्रह्म जगज्जन्मादिकारणमिति विज्ञायते ॥ २१ ॥

अस्योत्तरसूत्रं पठति—

**"अधिकं तु भेदनिर्देशात्"** ॥ २२ ॥

ब्रह्मेत्यधिक्रियते । इतरस्मादिति छेदेन पञ्चम्या विपरिणम्यानुवर्तते । तुशब्देन पूर्वः पक्षो व्यावर्त्यते । **अधिकम्**=इतरस्माज्जीवात्मनो जन्मजन्मादिकारणं ब्रह्म गुणतः कर्मतः स्वरूपतोऽधिकमन्यद् भिन्नमिति

यावद् विज्ञातव्यम्, कुतः? **भेदनिर्देशात्**=भेदेनान्यत्वेन निर्दिश्यमानत्वादित्यर्थः।

सत्यं जायमानं जगदिदं जीवात्मनः प्रायशोऽनिष्टहेतुत्वाद् हितं न वर्तते तथापि तज्जन्मादिकारणे भगवति ब्रह्मणि हिताकरणादिलक्षणो दोषो न प्रसज्यते। स हि तदा प्रसज्येत चेद् ब्रह्म जीवात्मरूपं भवेत्। न च ब्रह्म जीवात्मरूपं विद्यते। नहि यद् यतोऽधिकं भवति तत् तद्रूपं कर्हिचित् सम्पद्यते। ब्रह्म च जीवात्मनो बह्वधिकं विद्यते गुणतः कर्मतः स्वरूपतश्च। जीवात्मा ह्यल्पज्ञः। न स सर्वं सर्वतो विज्ञातुं पारयते। यदप्यनेन कथञ्चित् किञ्चिद् विज्ञायते तदप्यपूर्णम्। नह्ययं सञ्जानीते किमस्य वस्तुनोऽस्ति वास्तवं तत्त्वम्। अत एव च वस्तुविज्ञानेऽसौ पदे पदे स्रंसते। यदद्य विचारं विचारं निश्चिनुते तच्छ्वः सदोषं दर्शं दर्शमुपोहते स्मारं स्मारं चानुतातप्यते। यथा चास्य वस्तुविज्ञानं पूर्णं न विद्यते तथा कालविज्ञानमपि पूर्णं न दृश्यते। त्रेधा खलु कालं कालविदो विभजन्ते भूतं भवद् भविष्यदिति। जीवात्मा न भूतं सम्यक् पश्यति न भविष्यत्। नह्यसौ किं ह्योऽभूत् किं श्वो भविष्यति चेति जानाति। भवदपि यत्किञ्चित् पश्यन् न सर्वं पश्यति। कथमन्यथा किममुत्र जातं किमिह जायत इति पृच्छेत्। यथा चास्य ज्ञानमल्पं तथा शक्तिरप्यल्पीयसी वर्तते। नह्ययं यद्यत् कर्तुमीहते तत्तत्कर्तुमीष्टे। का नु नाम साधारणजनशक्तेः कथा, महाशक्ति**र्दिल्लीशः सिंहान्** पराजेतुं **मद्रेषु** घोरं युद्धमारभते तैस्तत्र युध्यमानश्च सबलमात्मानं पराजयते। न च तथाऽस्ति ब्रह्म। तद्धि सर्वज्ञं सर्वशक्ति सर्वं जानाति सर्वं कर्तुं च पारयति। न हि लोकत्रये व्यवहितं विप्रकृष्टं व्यक्तमव्यक्तं निरुक्तमनिरुक्तं भूतं भविष्यद् वर्तमानं च किञ्चिद् वस्तु विद्यते यद्यस्य ज्ञानं याथातथ्यतो न गोचरयते। यद्यद् विधातुमभिलषते तत्तद्विधातुं च न कल्पते। न च तस्यास्ति कश्चित् समो येन युध्येत न चास्ति कश्चिदधिको यतः पराजीयेत। किं बहुना न तस्य भगवतो ज्ञानं कस्यचिज्ज्ञानेनातिवर्त्यते न वा शक्तिः कस्यचिच्छक्त्या कदाचिदतिशय्यते।

यस्य खलु ज्ञानं न केनचिदतिवर्त्यते शक्तिश्च न कयाचिदतिशय्यते तज्जीवात्मनो गुणतोऽधिकं वरीवृत्यत इति किमु वक्तव्यम् । अपरिसंख्येयानन्तकल्याणगुणगणागारं खलु ब्रह्म । न च तस्य सर्वे गुणा ऐकैकश्येनोपवर्णयितुं शक्यन्ते सहस्रेणापि पुरुषायुषैरिति द्वावेवात्र प्राधान्यात् प्रदर्श्येते दिङ्मात्रेण । यथा हि जीवात्मनस्तावज्ज्ञानक्रियाशक्ती न पूर्णे तथा कर्मापि न पूर्णं विज्ञायते । नह्यनेन यद्यत् कर्म क्रियते तत्र किमपि कर्मानूनं प्रदर्शयितुं शक्यते । ज्ञानक्रियाशक्तिप्रभवं हि सर्वं कर्म । यस्य ज्ञानक्रियाशक्ती द्वे अप्यपूर्णे विद्येते तस्य तत्प्रभवं कर्म कथं पूर्णं स्यात् । भगवतो ब्रह्मणश्च यथा ज्ञानक्रियाशक्ती पूर्णे तथा तत्प्रभवं सर्वं कर्मापि पूर्णं विद्यते । नह्यस्ति कश्चित् पुमाँल्लोके येन जीवात्मकर्मवद् भगवतस्तस्य कर्मापि कस्मिंश्चिदंशे त्रुट्यते न पूर्यत इति दर्शयितुं पार्य्यते । यथा खलु बाह्ये जगति भगवतस्तस्य सूर्य्यादिदेवतारचनाकर्म पूर्णं महदाश्चर्य्यं चावलोक्यते तथाऽध्यात्मं सप्तर्षिरचनाकर्मापि चित्रमनूनं चालोच्यते । प्राणापानादिगतिकर्म चेह सर्वथा त्रुटिवर्जं विस्मयकरं च प्रत्यक्षम् । न च सूक्ष्मधियोऽपि यावदायुषं ध्यायं ध्यायं कथमिदं नेमिचक्रक्रमेण दिवानिशमूर्ध्वाधश्चङ्क्रम्यते तत्र किं पुनरूनत्वमिति तत्त्वं तस्याधिगन्तुं शक्नुवन्ति, स्थूलधिय इति तु किमु वक्तव्यम् । अणुः किल जीवात्मा । सोऽविद्यया मोमुह्यमानो बध्यते, बध्यमानश्च क्लेशकर्मविपाकाशयैः परामृश्यते, तृष्णैषणावायुना च दोधूयमानो यत्र तत्र विषयारण्यानीषु सुखबुद्ध्या बम्भ्रम्यते, बम्भ्रम्यमाणश्च यदा तत्र न किञ्चित् सुखमुपलभतेऽथ पश्चात्तातप्यते, क्रोधद्वेषेर्ष्याकृशानुना च दंदह्यते । अपरिसंल्येयव्यक्तिरनीशः कर्मफलभुगसुख इति च प्रसिद्धम् । न चैवमस्ति जगतः पितृचरणं ब्रह्म । नहि तन्मायया कदाचिद्विमुह्यते संसारपाशेन वा कर्हिचिद् विनह्यते । क्लेशकर्मविपाकाशयैर्वा परामृश्यते । न च तस्य नित्याप्तकामत्वादस्ति जागतेषु विषयेषु तृष्णासन्तानः । न वा सर्वैश्वर्य्यसम्पदा सम्पन्नत्वादस्ति तस्य पुत्रवित्तलोकैषणाजालः । न च तत् कस्मैचित् क्रुध्यति न वा कञ्चिद् द्वेष्टि । न चेर्ष्यया कदा-

चित् संयुज्यते न वा मात्सर्य्येण कदाचित् सम्बध्यते । यत् खल्वेवंस्वभावं तस्य क्वानुतापः क्व वा दाहः । तद्ध्येकमद्वितीयं परमानन्दैकमूर्त्ति सर्वस्यास्य जगतो निरङ्कुशः पतिरितरान् कर्मफलं नित्यमुपभोजयति न स्वयमुपभुङ्क्ते, तेन हि जड़चेतनाः सर्वे शिष्यन्ते न च तस्यास्ति शास्ता कश्चित्, न च तद्दर्शनं सुखेनावाप्तुं शक्यते, दुर्गमं हि तदग्रगं प्रकृतिजालम् । यस्तु वीरपुङ्गवः कश्चित् कदाचित् पुण्यौघपरिपाकादेकपदे जगद्वासनां परिमुच्य तद्दर्शनेप्सया नित्यमतप्यं तपस्तनुतेऽक्षय्यं कर्म च सञ्चिनुते श्येन इव च तीव्रसंवेगेनाष्टधा प्रसार्य्यमाणमिदं प्रकृतिजालं विदार्य्य स्वमहिम्नि यथासुखं विराजमानं करुणावरुणालयं भगवन्तं परब्रह्म परमात्मानं तं चिरविरहिणी योषिदिव भर्तारं परमप्रेम्णा गाढं परिष्वजते प्रेमभारेण गद्गदया वाचा चात्मानं यथाऽस्मि तवास्मीति तत्पुरतो निवेदयते नूनं तस्मै स भक्तवत्सलोऽचिन्तनीयगुणगरिमा तद्भक्तियोगेनार्द्रहृदयस्तत्पुरुषकारमनुगृह्णन्नात्मानं दर्शयितुकामः स्वां तनुं विवृणुते । तेन चासौ क्षणे क्षणे नवं नवमिव तद्दर्शनानन्दं यथाकाममुपभुञ्जानः प्रारब्धकर्मावसाने शाश्वतिकं मोक्षपदं विन्दते । भगवतो ब्रह्मणश्च स्वयं मोक्षस्वरूपत्वान्नास्ति तद्गोचरोऽभिलाषः । तदेवं गुणकर्मस्वरूपतोऽधिकतया जीवात्मनोऽन्यद् ब्रह्मेति निश्चीयते न तद्रूपम् । न्यूनत्वाधिकत्वयोःसहावस्थानानुपपत्तेः । यथा हि भावत्वाभावत्वयोः खलु प्रतिद्वन्द्वित्वात् सहावस्थानं न युज्यते तथा न्यूनत्वाधिकत्वयोरपि प्रतिद्वन्द्वित्वात् सहावस्थानं नोपपद्यते । तदनुपपत्त्या चान्यो जीवो न्यूनत्वादन्यद् ब्रह्माधिकत्वादिति शक्यते निश्चेतुम् । न केवलं गुणकर्मस्वरूपाधिक्याज्जीवात्मनोऽन्यद् ब्रह्मेति प्रतिपद्यते किन्तु वेदोपनिषच्छ्रुतिभ्योऽपि ब्रह्म जीवात्मनोन्यदवबुध्यते । ता ह्येमज्जीवात्मनोऽन्यत्वेन व्यक्तं निर्दिशन्ति **"तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति"** (ऋ० २ । ३ । १७ । २०) **"जुष्टं यदा पश्यत्यन्यमीशम्"** (मुं० ३ । १ । २) **"यो विज्ञाने तिष्ठन् विज्ञानादन्तरः"** (बृ० ३ । ७ । २२) **"पृथगात्मानं प्रेरि-**

**तारं च मत्वा**" (श्वे० १ । ६) इति । चेद् ब्रह्म जीवात्मनोऽन्यद् न भवेत् तदा नान्यत्वेन निर्दिश्येत । नहि जीवात्मनोऽन्यत्वाभावे ब्रह्म श्रुतिभिस्तथानिर्देष्टुं शक्यते । न चान्यद् भवद् ब्रह्म यथाप्राणिकर्म भोग्यमिदं जगन्निर्मिमाणं हिताकरणादिदोषेण दुष्यति । जीवात्मानो हि यथाकर्म तदुत्पादिते भोक्तव्येऽस्मिन् जगन्मण्डले धृतशरीराः कदाचित् सुखमनुभवन्ति कदाचिद् दुःखम्, तत्र ब्रह्मणा किमपराद्धं येन भगवति तस्मिन् कश्चिद्दोषः प्रसज्येत । नह्येनेन विना कर्म कस्मैचित् सुखं वा दुःखं वा प्रदीयते येन दोषेण केनचिद्दुष्येत् । कर्मफलं चानिवार्य्यं जीवात्मनां न शक्यते विना भोगमपह्नोतुं यावद् ब्रह्मदर्शनं न प्राप्यते । न चापि ब्रह्मणो जीवात्मरूपताप्रतिपादकं किञ्चित् प्रमाणमुपलभामहे येन तत्र हिताकरणादिदोषप्रसक्तिमनुमन्यामहे । याश्चात्र तत्प्रतिपादनपराः श्रुतयस्तावदुदाह्रियन्ते न ता भगवतस्तस्य जीवात्मरूपतां प्रतिपादयन्ति । द्वेधा हि तत्प्रतिपादनं सम्भाव्यते साक्षाल्लक्षणया च । न च तत्र साक्षाल्लक्षणया वा तत्प्रतिपादकः शब्दः कश्चिदुपलभ्यते येन तस्य तद्रूपत्वं गम्येत । "**तत्सृष्ट्वा तदेवानुप्राविशत्**" (तै० २ । ६) "**अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि**" (छां० ६ । ३ । २) इति श्रुतिभ्यां चास्मिन् कार्य्यवर्गे जीवात्मद्वारको ब्रह्मप्रवेश उपचर्य्यते न जीवात्मरूपं ब्रह्मेति निगद्यते । व्युत्पादितं चैतदस्माभिर्विस्तरेणाधस्तात् । "**त्वं स्त्री त्वं पुमान्**" (श्वे० ४ । ३) इति श्रुतिरपि न ब्रह्मणो जीवात्मरूपतामाचष्टे किन्तु भगवतस्तस्य सर्वान्तरात्मत्वात् सर्वाश्रयत्वमभिधत्ते । यथा हि "**एषोऽग्निस्तपति**" (प्र० २ । ५) इत्यादिना सर्वाश्रयत्वात् प्राणस्तावदग्न्यादिरूपेणेड्यते तथाऽत्र ब्रह्मापि सर्वाश्रयत्वात् स्त्र्यादिरूपेण तोष्टूय्यत इति द्रष्टव्यम् । स्तुतिपरया चानया न शक्यते जीवात्मरूपं ब्रह्मेति प्रतिपादयितुम् । यत्परः शब्दः स शब्दार्थ इति न्यायात् । तत्प्रतिबन्धकस्याधिक्यस्य च प्रबलत्वात् । अतो जगज्जन्मादिकारणत्वेऽपि ब्रह्मणि नास्ति हिताकरणादिदोषप्रसक्तिः ॥ २२ ॥

**ननु** मा भूदधिकत्वाद् ब्रह्म जीवात्मरूपं, जीवात्मा ब्रह्मरूपो भविष्यति । चित्त्वात् । अस्ति चित्त्वं ब्रह्मजीवात्मोभयसाधारणमिति । अस्योत्तरं पठति—

**"अश्मादिवच्च तदनुपपत्तिः" ॥ २३ ॥**

इतरस्येति छेदेन षष्ठ्या विपरिणम्यानुवर्तते । पूर्वत्रैवैष हेतुरिति चार्थः । ब्रह्मरूपत्वमिति तच्छब्दार्थः । **अश्मादिवत्**=अश्मादेर्ब्रह्मरूपत्वानुपपत्तिवदितरस्य जीवात्मन**स्तदनुपपत्तिः**=ब्रह्मरूपत्वानुपपत्तिर्वेदितव्येत्यर्थः ।

यथा हि सत्त्वाविशेषेऽपि पाषाणादयः खलु ब्रह्मरूपा नोपपद्यन्ते तथा चित्त्वाविशेषेऽपि जीवात्मा ब्रह्मरूपो नोपपद्यते । नहि केनचिदेकेन सामान्यधर्मेण किञ्चिदेकं वस्तु वस्त्वन्तररूपं सम्पद्यते । अन्यथा मनुष्यत्वसामान्यान्निर्धनोऽपि धनिकः सम्पद्येत । न च स मनुष्यत्वसामान्ये सत्यपि धनिकः सम्पद्यमानः क्वचिदुपलभ्यते । किं कारणम्? इदमेव कारणं धनिकवत् सन्नपि मनुष्यो धनेन हीयते । जीवात्माऽप्येवमनुसन्धातव्यः । सोऽपि चेतनः सन्नपि ब्रह्मवत् सर्वज्ञत्वादिभिर्ब्रह्मधर्मैर्हीयते तद्विपरीतैरल्पज्ञत्वादिभिश्चात्मधर्मैः समाश्रीयते । न चैकस्य सतो विरुद्धधर्मद्वयाश्रयत्वं कथञ्चिद् घटते । **स्यादाकाशवदौपाधिकमिति चेत्?** । **न** । उपाधेर्दुर्निरूपतया असकृदुपपादितत्वात् । न च जीवात्मनो ब्रह्मरूपत्वं प्रतिपादयन्त्यः श्रुतयोऽपि काश्चिदुपलभ्यन्ते यद्बलादपि तस्य तद्रूपत्वमभ्युपेयेत । **"योऽसावसौ पुरुषः सोऽहमस्मि"** (यजु० ४० । १६) इति मन्त्रवर्णेन च प्रार्थयितुर्जीवात्मनः स्वरूपं परिचाय्यते न तस्य ब्रह्मरूपत्वं प्रतिपाद्यते । प्रार्थनामन्त्रस्य शेषोऽन्तिमोंऽशः । न चात्र यत् प्रार्थ्यते यश्च प्रार्थयते तयोरैक्यं कथञ्चित् प्रतिपादयितुं शक्यते । प्रार्थ्यप्रार्थयितृभावविरोधात् । किं तर्ह्यत्र प्रतिपाद्यते? "कस्त्वमेवं प्रार्थयसे" इति प्रश्नस्योत्तरमिति वदामः । तत्र "असावसौ" इति वीप्सया स्नेहातिशयः प्रदर्श्यते । प्रश्नोत्तरवेलायां च स्नेहिनः

स्नेहातिशयाद् वाचोऽस्वास्थ्यं प्रसिद्धम्। शिष्टं पदजातं लोकव्यवहारवत् स्वरूपाख्यानपरत्वात् स्पष्टार्थम्। **"स आत्मा तत्त्वमसि श्वेतकेतो!** (छां० ६ । ८ । ७) इत्यादीनि श्रुतिवाक्यानि च यथा जीवात्मनो मुमुक्षोर्मोक्षैकसाधनभूतां ब्रह्मनिष्ठामुपदिशन्ति न ब्रह्मरूपतां तथा वयं विस्तरेणाधस्ताद् व्युदपीपदाम। न च जीवात्मनो ब्रह्मरूपत्वानुपपत्तौ जगज्जन्मादिकारणे भगवति ब्रह्मणि भवति हिताकरणादिदोषप्रसक्तिरिति सुव्यक्तम्। **तथा च** ब्रह्म जगज्जन्मादिकारणमिति निरवद्यम्॥ २३॥

**वि**धान्तरेण ब्रह्मकारणवाद आशङ्क्य समर्थ्यते—

**"उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि"** ॥ २४॥

ब्रह्मेत्यधिक्रियते। **उपसंहारदर्शनात्**=घटादिनिर्माणे कुलालादीनां मृदादिव्यतिरेकेण दण्डचक्रचीवराद्यनेकसाधनोपसङ्ग्रहदर्शनाद् **न**=प्रकृतिव्यतिरेकेण तदुपसङ्ग्रहरहितमेकाकि ब्रह्म जगज्जन्मादिकारणं न युज्यत इति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः? **हि**=यतः **क्षीरवत्**=एकाकिन्या धेनोः सङ्कल्पमात्रेण क्षीरप्रस्रवणवदेकाकिनो ब्रह्मणोऽपि सङ्कल्पमात्रेण जगतो जन्मादिकमुपपद्यत इत्यर्थः।

**अथोच्येत**—यदुक्तं जगज्जन्मादिकारणं ब्रह्म, तन्न युज्यते। निःसाधनत्वात्। एकं हि ब्रह्माभ्युपगम्यते। नास्ति तस्य प्रकृतिव्यतिरेकेण कश्चित् साधनसङ्ग्रहः। लोके च कुलालादयो मृदादिव्यतिरेकेण दण्डचक्रचीवरादीन्यनेकानि साधनान्युपसङ्गृह्य घटादिकारणं दृश्यन्ते, तद्विपरीतं च ब्रह्म कथं जगज्जन्मादिकारणमभ्युपेयेत। नहि दृष्टविपरीतं किञ्चिदभ्युपगन्तुं शक्यते। तस्मादनुपपन्नं ब्रह्म जगज्जन्मादिकारणमिति। **नैतद्वक्तव्यम्**। धेनुवदुपपत्तेः। यथा ह्येकाकिनी धेनुः खलु वत्सानामुपभोगार्थं सङ्कल्पमात्रात् क्षीरमुपभोग्याकारेण प्रस्नावयति तथा ब्रह्मापि जीवात्मनामुपभोगार्थं सङ्कल्पमात्रात् प्रकृतिं जगदाकारेण परिणामयति। क्षीरस्थानापन्ना ह्येषा भगवती प्रकृतिः। तत्र क्षीरं धेनुसङ्कल्पाद् वत्साना-

मुपभोगार्थमुपभोग्याकारेण परिस्पन्दते प्रकृतिश्च ब्रह्मसङ्कल्पाज्जीवात्मनामुपभोगाय जगदाकारेण परिणमते । धेनुः सङ्कल्पमात्रादुपभोग्याकारेण क्षीरपरिस्पन्दने कारणं ब्रह्म च सङ्कल्पमात्राज्जगदाकारेण प्रकृतिपरिणामे कारणमिति न किञ्चिद् दृष्टविरुद्धमापद्यते । न च यद् दृष्टेन न विरुध्यते तदभ्युपगमो दुष्यति । कुलालादयश्च परिमितशक्तयः, तेषां घटादिनिर्माणे मृदादिव्यतिरेकेण दण्डचक्रचीवराद्यनेकविधसाधनोपसङ्ग्रहापेक्षायामपि न भगवतो ब्रह्मणः प्रकृतिव्यतिरेकेण तदुपसङ्ग्रहापेक्षा विद्यते । अपरिमितशक्तित्वात् । अपरिमितशक्ति हि ब्रह्म "यस्या-[illegible]तानि वीर्य्या" ( ऋ० ६ । २ । १९ । २१ ) इत्यादिश्रुतिभ्यः । न च त[illegible]स्य परिमितशक्तिना साम्यं सम्भावयितुमपि शक्यते किं पुनः सम्पादयितुम् । श्रुतिश्च स्वयमेव भगवतस्तस्यापरिमितशक्तित्वाज्जगन्निर्माणे प्रकृतिव्यतिर[illegible]ेण साधनान्तरोपसङ्ग्रहापेक्षां वारयति "**न तस्य कार्य्यं करण[illegible]ं च विद्य[illegible]े न तत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्य शक्[illegible]िर्विविधैव श्र[illegible]यते स्वाभाविकी ज्ञानबलक्रिया च**" ( श्वे० ६ । ८ ) इति । य[illegible]स्य भगवतोऽपरिमितशक्तेरघटनघटनापटीयसी प्रकृति[illegible] नाम्नी शक्तिर्निखिलकार्य्यकर्त्री नित्यं विजेजी-[illegible]यते न तस्य किञ्चित् क[illegible]ार्य्यं=सङ्कल्पमन्तरा किञ्चित् कर्तव्यं कारणं च=साधनान्तरोपसङ्ग्रहक्रिय[illegible]ा च काचिद् विद्यते, सङ्कल्पमात्रादेव प्रकृत्यैव शक्त्या सर्वकार्य्याणां नि[illegible]र्वर्तनात् । अत एव लोकत्रयेऽपि न तत्समश्चाभ्यधिकश्च कश्चिद् दृश्यते । ज[illegible]ीवाजीवभे[illegible]स्येदृक्शक्त्यभावेनानीदृक्त्वात् । सेयं सर्वोत्कृष्टा प्रकृतिलक्षणा श[illegible]क्तिरस्य सर्वज्ञस्य सर्वशक्तेर्भगवतो ब्रह्मणो वेदेषु शोश्रूय्यते स्वाभाविक्येव [illegible] न नैमित्तिकी । महदादिविविधकार्य्यकर्त्रीत्वाच्च विविधा । ज्ञानं=सत्त्वं, [illegible] प्रकाशकत्वात्, क्रिया=रजः, चालकत्वात्, बलं=तमः, उपष्टम्भकत्वात्, [illegible] तेषां साम्यावस्थेति श्रुतिपदार्थः । श्रुतिस्तु नः सर्वेष्वर्थेषु सुदृढं प्रमाणम् [illegible]। सा च सङ्कल्पमात्रेणैकाकिन एव भगवतस्तस्य जगज्जन्मादिकारणतां द[illegible] [illegible]यति "**सोऽकामयत बहुस्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वेदं**

**सर्वमसृजत यदिदं किञ्च**" (तै० २।६) इति। तस्मात् कुलालादिवत् साधनान्तरोपसङ्ग्रहाभावेऽपि नास्ति ब्रह्मणो जगज्जन्मादिकारणत्वानुपपत्तिः॥ २४॥

ब्रह्मणः सङ्कल्पमात्रेण कारणत्वे निदर्शनान्तरमाह—

**"देवादिवदपि लोके"** ॥ २५॥

ब्रह्मेत्यधिक्रियते। पूर्वत्रैवोदाहरणान्तरमेतदिति चार्थेनापिना प्रदर्श्यते। **लोके**=जगति **देवादिवत्**=देवपित्रादिवद् ब्रह्म सङ्कल्पमात्रेण जगज्जन्मादिकारणं विज्ञातव्यमित्यर्थः।

ब्रह्मोपासनेन प्राप्ताधिकारसम्पदो देवाः, वेदोक्तकर्मानुष्ठानेनावाप्तातिशयाः पितरः, सूक्ष्मार्थदर्शिनो योगिन ऋषयः। ते यथा सङ्कल्पमात्रेणात्माश्रितैर्जनैस्तत्तत्कार्य्यं विदधानास्तत्तत्कार्य्यहेतवो लोके लोक्यन्ते तथा ब्रह्माप्यात्माश्रयया प्रकृत्या सङ्कल्पमात्रेण जगदिदं कार्य्यं निर्मिमाणं जगज्जन्मादिकारणमुपपद्यते नास्ति कश्चिद् विरोधः॥ २५॥

अत्रानिष्टमाशङ्कते—

**"कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा"** ॥ २६॥

**कृत्स्नप्रसक्तिः**=ब्रह्मसङ्कल्पेन परिणममानस्य मूलकारणस्य प्रकृतेर्निरवयवत्वे कृत्स्नपरिणामप्रसक्तिः कात्स्न्येन परिणामापत्तिः, **वा**=सावयवत्वे वा **निरवयवत्वशब्दकोपः**=निरवयवत्वप्रतिपादकश्रुतिवचनविरोधः स्यादित्यर्थः।

येयं ब्रह्मसङ्कल्पेन मूलकारणं प्रकृतिः मनु जगदाकारेण परिणमते सा किं निरवयवा स्यादाहोस्विन् सावयवा। निरवयवा चेत्? कात्स्न्येन परिणमेत न किञ्चिदवशिष्येत। सावयवत्वे हि भूम्यादिवदेकदेशेन परिणन्तुं देशान्तरेण चावस्थातुमर्हति। निरवयवत्वे च देशाभावात् कथङ्कारमेकेन देशेन परिणाममनुभवेद् देशान्तरेण चावतिष्ठेत। कात्स्न्येन परिणामे च विकृतिरेव स्यान्न प्रकृतिः। सावयवा चेत्? तदाऽप्येष दोषस्तदवस्थो विकृतिरेव स्यान्न प्रकृ[illegible] [illegible]यवस्य विकृति-

त्वनियमात्। अपि चायमपरो दोषः—निरवयवत्वप्रतिपादिका श्रुति र्व्याकुप्येत। श्रुतिर्हि प्रकृतेरव्याकृतत्वमजत्वं चाभिदधती निरवयवत्वं प्रतिपादयति **"तद्धेदं तर्ह्यव्याकृतमासीत्"** (बृ० १ । ४ । ७) **"अजामेकां लोहितशुक्लकृष्णाम्"** (श्वे० ४ । ५) इति। नहि सा सावयवा भवन्ती श्रुत्याऽजाव्याकृतशब्दाभ्यां कर्हिचिदभिधातुं शक्यते। सावयवस्य जन्मव्याकृत्योरवश्यम्भावेनाजत्वाव्याकृतत्वानुपपत्तेः। **तस्माद**नुपपन्नं सङ्कल्पमात्रेण प्रकृतिं परिणामयद् ब्रह्म जगज्जन्मादिकारणम् ॥ २६ ॥

**स**माधत्ते—

**"श्रुतेस्तु शब्दमूलत्वात्"** ॥ २७ ॥

**तु**शब्देनाशङ्का व्यावर्त्यते। **श्रुतेः**=ब्रह्मसङ्कल्पेन प्रकृतेर्जगदाकारपरिणामः श्रुतेरवसातव्यः, कुतः? **शब्दमूलत्वात्**=मूलमाश्रयः, सर्वस्य वैदिकाभ्युपगमस्य श्रुत्याश्रयत्वादित्यर्थः।

न वयं बाह्या इव तर्काश्रयं किञ्चिदभ्युपगच्छामो येनास्माकं कश्चिदभ्युपगमो नोपपद्येत। किमाश्रयं तर्हि? श्रुत्याश्रयं सर्वम्। यद् यद्धि श्रुत्या प्रतिपाद्यते तत्तदस्माभिरभ्युपगम्यते। ब्रह्मसङ्कल्पात् प्रकृतिः खलु जगदाकारेण परिणमत इति श्रुत्या प्रत्यक्षमाम्नायते **"तपसा चीयते ब्रह्म ततोऽन्नमभिजायते। अन्नात् प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्"** (मुं० १ । १ । ८) इति। सङ्कल्पगर्भं पर्य्यालोचनं ज्ञानं तपः, ब्रह्म=प्रकृतिरिति व्याख्यातम्। न च तदनुपपन्नमिति वक्तुं शक्यते। श्रौतार्थस्य तर्केण गोचरयितुमशक्यत्वात्। अल्पज्ञः खलु पुरुषः। तद्बुद्धिप्रभवश्च तर्कः। स यथा दृष्टं कञ्चनार्थं गोचरयितुं शक्नुवन्नपि नात्यन्तसूक्ष्मं श्रुतिमात्रगम्यं कञ्चनार्थं गोचरयितुं शक्नोति। निरवयवा सती प्रकृतिर्ब्रह्मसिसृक्षासङ्कल्पान्महदादिजगदाकारेण परिणमतेऽवशिष्यते चेत्ययमत्यन्तसूक्ष्मः श्रुतिमात्रगम्योऽर्थः। स कथमनेन गोचर्य्येत कथं च विकल्पासहत्वान्नोपपद्यत इत्यवधार्य्येत। अनेकस्याशेषताभिधानं

हि कार्त्स्न्यम्, अनेकत्वे सति कस्यचिदेकस्याख्यानं चैकदेशः। न च तदुभयमेकस्यां प्रकृतौ सम्भावयितुमपि शक्यते किं पुनरभिधातुम्। सम्भावनाभावे च तत्परिणामानुपपत्तिरिति रिक्तं वचः। महदादिजगदाकारेण परिणामस्ततोऽवशेषश्च मूलकारणस्य प्रकृतेः **"इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम्। सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम्"** (कठ० ६ । ७) इत्यादिश्रुतेर्महदादिविकारव्यतिरेकेणाव्यक्तस्य तस्यास्तित्वाम्नानात् स्फुटमवगम्यते **"यथाऽक्षराद् विविधाः सोम्य! भावाः प्रजायन्ते तत्र चैवापियन्ति"** (मुं० २ । १ । १) इत्यक्षरशब्दवाच्यायाः प्रकृतेर्महदादिसर्वभावानामुत्पत्तिमभिधाय पुनस्तत्रैवाप्ययस्याभिधानान्निःसन्दिग्धोऽयमर्थ इति विज्ञायते। नहि प्रकृतेरभावे "तत्र चैवापियन्ति" इति सर्वपदार्थाप्ययाधारत्वेनाभिधानं युज्यते। निरवयवा सती प्रकृतिः कथं ब्रह्मसिसृक्षया महदादिजगदाकारेण परिणमते कथं चावशिष्यत इति नायमर्थोऽज्ञानामस्माकं बुद्धिगोचरतामापद्यते न वा कैश्चिदवगम्यते। नह्यचिन्तनीयेष्वर्थेषु श्रुत्यवष्टम्भाभावे स्वातन्त्र्येणास्मद्बुद्धयः कदाचित् प्रवेष्टुमप्युत्सहन्ते किं पुनस्तेषां तत्त्वमवधारयितुम्। वयं त्वचिन्तनीयगुणगणमहिम्नोऽपरिमितशक्तेर्जगत्पितुर्भगवतो ब्रह्मणः सृष्टिसङ्कल्पस्यैवैष विचित्रः प्रभावो येनासौ तथा परिणमतेऽवशिष्यते चेति ब्रूमः। युक्तं चैतदेव श्रौतार्थोपपत्त्यै समाश्रयणम्। प्रकारान्तरासिद्धेः। श्रुतिश्च ब्रह्मसङ्कल्पमात्रेण प्रकृतेः परिणामं सर्वमिदं जगद् दर्शयतीत्युदाहृतं पुरस्तात्। **तस्मा**दुपपन्नं सङ्कल्पमात्रेण प्रकृतिं परिणमय्य जगज्जन्मादिकारणं ब्रह्म ॥ २७ ॥

**ननु** श्रौतः सन्नपि योऽर्थो बुद्धिं न सहते कथं लोकोत्तरं तं सङ्कल्पप्रभाववैचित्र्यादेवानुमन्यामहे? तत्राह—

**"आत्मनि चैवं विचित्राश्च हि"** ॥ २८ ॥

प्रथमश्चस्त्वर्थः, तेन सङ्कल्पप्रभाववैचित्र्यासम्भावना व्यावर्त्यते। द्वितीयेन सङ्कल्पप्रभाववैचित्र्यादेवैतदेवं मन्तव्यमिति प्रतिज्ञावाक्यं समुच्चीयते। मन्तव्ये हेतुः—हि=यस्मादात्मनि=परमात्मन्येवम्=एवंविधाः

यादृशः सङ्कल्पस्तादृश्यो विचित्राः=विचित्रप्रभावाः सहस्रशः शक्तयो विद्यन्त इत्यर्थः।

किममुं जगज्जन्मादिकारणं सङ्कल्पमेवैकं विचित्रप्रभावं जानन्नाश्चर्य्यमिव मन्यसे। जगतो मातापितरि भगवति परब्रह्मणि परमेश्वरे तु सङ्कल्पानुरूपाः सहस्रशो विचित्रप्रभावाः शक्तयो विद्यन्ते। को हि नाम ताः सहस्रेणापि पुरुषायुषैः परिगणयितुं पर्य्याप्तः। यस्य खलु भगवतोऽपरिमितशक्तेः शक्तीनामन्तो न विद्यते सर्वाश्च ताः प्रत्येकमचिन्त्यप्रभावाः वर्तन्ते तस्य सङ्कल्पमात्रेणायथालोकदृष्टमप्येतत् कार्य्यं सुखेन निष्पद्यत इति किमत्रास्ति चित्रम्। किमिदं न लोकसे। यस्य सङ्कल्पमात्रेण जायमाना अमी मन्त्रमण्यौषधिप्रभृतयः पदार्था देशकालादिनिमित्तानां सन्निधिवशादयथालोकदृष्टान्याश्चर्य्यमयानि कार्य्याणि कर्तुं पारयन्ते तस्य सङ्कल्पेन सम्भाव्यते किञ्चिदघटमानं यन्न घटयितुं शक्यते। नहि महाप्रभावोऽसौ निरवयवामिमां जगदाकारेण परिणामयितुमवशेष्टुं च किञ्चिद्भारं मन्यते। सांसिद्धिकी ह्यस्यैषाऽयथालोकदृष्टा कृतिः। न च तत्र विवदन्ते महाधियो विवेचकाः। तस्मान्निरवयवा सत्यपि प्रकृतिर्ब्रह्मसङ्कल्पाज्जगदाकारेण परिणमतेऽवशिष्यते चेत्येतद् यथाश्रुति मन्तव्यम्। न तर्केणातर्क्यमेतद् योजयितव्यम्॥ २८॥

स्वपक्षे परप्रसञ्जितं दोषं पर्य्यहृत। सम्प्रति स्वपक्षस्य युक्तत्वं प्रत्याययितुं परपक्षेऽप्येतमवतारयति—

"स्वपक्षदोषाच्च"॥ २९॥

स्वपक्षे दोषप्रसङ्गादप्यसत्पक्षो युक्त इत्यर्थः।

येन ह्यसत्पक्षे कृत्स्नप्रसक्त्यादिलक्षणो दोषः खलु प्रसज्यते तस्य स्वपक्षेऽपि स एव दोषः प्रसज्यते। कथं? तेनाप्यस्य दृश्यमानस्य जगतः किञ्चित् कारणमभ्युपगन्तव्यं प्रकृतिर्वा परमाणवो वा शून्यं वा विज्ञानं वा। तच्चेन्निरवयवमभ्युपगम्यते तदा स एव कृत्स्नप्रसक्तिदोषः। सावयवं चेदभ्युपेयते तदा कारणत्वानुपपत्तिः। सावयवस्य विकारत्वनिय-

मात् । अथ दोषोऽयमसद्रीत्या परिह्रियते तदाऽऽस्माकीनो भवान् न परः । आगच्छतादाद्रियामहे त्वाम् । नो चेत् परिहर्तुं शक्यते तदा परिहातव्यः स्वपक्षोऽयुक्तत्वात्, उपादातव्यश्चास्मत्पक्षो युक्तत्वात्, कृतं तत्राग्रहेण मुधा क्लेशकारिणा । को हि विवेकधियां सुज्ञानां मुधा क्लेशकारिणि तस्मिन्नाग्रहः । **तस्मा**दुपपन्नं जगज्जन्मादिकारणं ब्रह्म ॥ २९ ॥

**"आत्मनि चैवं विचित्राश्च हि"** (वे० २ । १ । २८) इत्युक्तम् । तदेवोपपादयिष्यन्नाह—

**"सर्वोपेता च तद्दर्शनात्"** ॥ ३० ॥

ब्रह्मेत्यधिक्रियते । पूर्वाभिहितस्यैवोपपादकमेतदिति चकारेणोच्यते । **सर्वोपेता**=सर्वशब्दोऽत्रानेकपर्य्यायो यथा सर्वैर्व्यञ्जनैर्भुक्तमित्यत्र, अनेकशक्तियुक्ता परब्रह्मलक्षणा परदेवता निश्चेतव्या, कुतः? **तद्दर्शनात्**= तत्प्रतिपादकमन्त्रवर्णादित्यर्थः ।

मन्त्रवर्णो हि नः सर्वेष्वर्थेषु स्वतः प्रमाणम् । स च परदेवतायाः परब्रह्मणोऽनेकशक्तियोगं सुव्यक्तं प्रतिपादयति **"विश्वान्यस्मिन् सम्भृताऽधिवीर्य्या"** (ऋ० २ । ६ । १७ । २) **"युक्ता ह्यस्य हरयः शता दश"** (ऋ० ४ । ७ । ३३ । १८) **"यस्यामितानि वीर्य्या"** (ऋ० ६ । २ । १९ । २१) इति । न च यस्यानेकशक्तियोगो वेविद्यते तस्य भवति नाम किञ्चिदनुपपन्नम् ॥ ३० ॥

अत्राशङ्क्य निराचष्टे—

**"विकारणत्वान्नेति चेत् तदुक्तम्"** ॥ ३१ ॥

ब्रह्मेत्यधिक्रियते । सर्वोपेतेत्यनुवर्तते । **विकरणत्वात्**=करणमिन्द्रियं, विगतकरणत्वात् सर्वशक्त्युपेता सत्यपि परदेवता **ब्रह्म न**= जगज्जन्मादिकारणं नेति **चेत्**=यदि शङ्कसे तदा मा शङ्किष्ठाः, कुतः? **यतस्तदुक्तं**=तत्समाधानमुक्तमित्यर्थः ।

**अथोच्येत**—भवतु सर्वशक्त्युपेतं ब्रह्म तथापि न तज्जगज्जन्मादिकारणमुपपद्यते । विकरणत्वात् । यद् यद्धि चेतनं किञ्चिद् यस्य कस्य

चित् कार्य्यस्य कर्तृ तावदवलोक्यते तत् सर्वं शक्त्युपेतं सदपि चक्षुरादिभिर्हस्तपादादिभिश्च करणैः सहितमवलोक्यते न विरहितम् । ब्रह्म चास्ति तद्विरहितम् **"अचक्षुष्कमश्रोत्रमवागमनः"** (बृ० ३ । ८ । ८) **"अपाणिपादः"** (श्वे० ३ । १९) इत्यादिश्रुतिभ्यः । तस्माद् विज्ञायते न तज्जगज्जन्मादिकारणमिति । **नैतद् वक्तव्यम्** । उक्तोत्तरत्वात् । उक्तं खल्वस्माभिरस्योत्तरम् **"श्रुतेस्तु शब्दमूलत्वात्"** (वे० २ । १ । २७) इति । यथा हि श्रुतिः सर्वज्ञसर्वशक्तेः परब्रह्मणः परमेश्वरस्य करणाभावमाकर्णयति तथा जगज्जन्मादिकारणभावमपि प्रतिपादयति **"स पर्य्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् । कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः"** (यजु० ४० । ८) इति । सः=आत्मैकत्वदर्शी । **अर्थान्**=पदार्थान् । यथाश्रुति चाश्रयणं युक्तम् । **तस्माद्** विकरणत्वेऽपि सर्वशक्त्युपेतत्वादुपपद्यते जगज्जन्मादिकारणं ब्रह्म ॥ ३१ ॥

प्रकारान्तरेण ब्रह्मकारणवादः पुनराक्षिप्यते –

**"न प्रयोजनवत्त्वात्"** ॥ ३२ ॥

ब्रह्मेत्यधिक्रियते । **न**=ब्रह्म जगज्जन्मादिकारणं नोपपद्यते । कुतः ? **प्रयोजनवत्त्वात्**=चेतनप्रवृत्तेः प्रयोजनवत्त्वनियमादित्यर्थः ।

लोके हि सर्वा चेतनप्रवृत्तिः सप्रयोजना दृश्यते । नह्यस्ति मन्दोऽपि चेतनः कश्चिद् यः प्रयोजनमनुद्दिश्य क्वचित् प्रवर्तमानो निरीक्ष्येत किं पुनः प्रेक्षापूर्वकारी । प्रयोजनं च द्वेधा विभज्यते स्वप्रयोजनं परप्रयोजनं चेति । न च भगवतो ब्रह्मणः स्वप्रयोजनं किञ्चिद् वक्तुं शक्यते । तस्य स्वरूपानन्देन नित्यं परितृप्तत्वात् प्रयोजनासिद्धेः । आनन्दस्वरूपं हि ब्रह्म । **"आनन्दरूपममृतं यद्विभाति"** (मुं० २ । २ । ७) **"एतमानन्दमयमात्मानमुपसङ्क्रामति"** (तै० २ । ८) **"विज्ञानमानन्दं ब्रह्म"** (बृ० ३ । ९ । २८) इत्यादिश्रुतिभ्यः ।

तेन तस्य नित्यं परितृप्तत्वं च मन्त्रवर्णो व्यक्तमुपदिशति **"अकामो धीरो अमृतः स्वयम्भूरसेन तृप्तो न कुतश्चनोनः"** ( अथर्व० १० । ४ । ८ । ४४ ) इति । **रसेन**=स्वरूपानन्देन । न च स्वरूपानन्देन नित्यं परितृप्तस्यात्मप्रयोजनं किञ्चित् सिध्यति । परप्रयोजनमपि भगवतस्तस्य परानुजिघृक्षया घटते नान्यथा । सृष्टेः प्राक् च परा एव न सन्ति कस्यानुजिघृक्षया प्रवर्तिष्यते । वर्त्स्यन्तीति चेत् प्रवर्तते ? तदा सुखमयं जगन्निर्मिमीत न दुःखमयम् । चेतनस्य परानुजिघृक्षया प्रवृत्तौ सुखमयनिर्माणस्यैवौचित्यात् । नहि चेतनः कश्चन परानुजिघृक्षया प्रवर्तमानस्तत्कृते दुःखमयं किञ्चिन्निर्मातुमर्हति । दुःखमयं च निर्मायिमाणं जगदिदं प्रत्यक्षम् । अथ विनैव प्रयोजनं प्रवर्तते यथा भ्रान्त इति चेन्मन्यते ? तदा सर्वज्ञं न स्यात् । सर्वज्ञस्य भ्रमानुपपत्तेः । ब्रह्म चास्ति सर्वज्ञम् । **"यः सर्वज्ञः सर्ववित्"** ( मुं० १ । २ । ९ ) इत्यादिश्रुतेः । **तस्मा**दनुपपन्नं जगज्जन्मादिकारणं ब्रह्म ॥ ३२ ॥

प्रत्याक्षिप्यते —

**"लोकवत्तु लीलाकैवल्यम्"** ॥ ३३ ॥

ब्रह्मण इति षष्ठ्या विपरिणम्याधिक्रियते । तुराक्षेपप्रत्याक्षेपार्थः । **लीलाकैवल्यं**=केवलमेव कैवल्यं, जगज्जन्मादिकं ब्रह्मणो लीलामात्रमवगन्तव्यं, **लोकवत्**=महात्मानो राजानश्च लोकाः, तेषां नृत्यगानादिवदित्यर्थः ।

न खलु चेतनस्य सर्वा प्रवृत्तिः प्रयोजनेन व्याप्ता विद्यते येन जगज्जन्मादिषु ब्रह्मप्रवृत्तेरपि स्वीयं वा परकीयं वा प्रयोजनं किञ्चिन्मृग्येत । दृश्यते हि हर्षविशेषेण मत्तानां महात्मनां राज्ञां च केषां चिद् विनैव प्रयोजनं सुखोद्रेकमात्रान्नृत्यगानादिषु प्रवृत्तिः । न च तत्र भवति तेषां प्रयोजनं किञ्चित् । यथा चैषा प्रयोजनान्तरमनपेक्ष्य जायमानत्वाल्लीलामात्रं तेषामवगम्यते तथा परमपितुर्भगवतः परब्रह्मणः परमेश्वरस्यापि

जगज्जन्मादिषु प्रवृत्तिर्लीलामात्रमित्यवगन्तव्यम् । तेषामिव तस्यापि प्रयोजनान्तरस्य निरूपयितुमशक्यत्वात् । नह्यवाप्तसमस्तकामस्य नित्यानन्दतृप्तस्य भगवतस्तस्य जगज्जन्मादिषु प्रवृत्तेः केवललीलारूपतामन्तरेण प्रयोजनान्तरं किञ्चिन्निरूपयितुं शक्यते । निरूप्यमाणं वा न्यायतः श्रुतितो वा सङ्गच्छते । द्रष्टॄणां तत्र हर्षविशेषमिव चात्रापि जीवात्मनां भोगापवर्गलक्षणं फलं नाशक्यनिरूपणं मन्यामहे । अत एव च योगतत्त्वविदस्तस्यात्मानुग्रहाभावेऽपि भूतानुग्रहः प्रयोजनमिति व्याचक्षते । वयं च नैतेनाक्षिप्यामहे । प्रकृतिपुरुषेश्वराणामनादित्वाभ्युपगमात् । येषां ह्याकस्मिकोऽयं लोकसर्गस्ते नूनमेवमाक्षेप्तुं शक्यन्ते । येषां च सततमिदमनाद्यनन्तं संसारचक्रमनुवर्तते न तेषु कर्हिचिदाक्षेपोऽयं स्थानं लभते । सूत्रकृता च दृष्टिसामान्यादाक्षिप्य समाधीयत इत्यदोषः । **तस्मात्** प्रयोजनाभावेऽप्युपपद्यते जगज्जन्मादिकारणं ब्रह्म ॥ ३३ ॥

**अथोच्येत**—न खलु लीलयाऽपि जगदिदं निर्मिमाणं ब्रह्म तत्कारणमुपपद्यते । वैषम्यनैर्घृण्यदोषप्रसक्तेरवर्जनात् । दृश्यन्ते ह्यस्मिन् जगति केचिदत्यन्तसुखभाजः, केचिदत्यन्तदुःखभाजः, सुखदुःखोभयभाजश्च केचित् । न चेदृशं विषममिदं जगन्निर्मिमाणस्य विनाऽपराधं द्रष्टुमप्यशक्यं दुःखं केषाञ्चिद् विदधानस्यान्ते सर्वमेतदेकपदे संहरतश्च वैषम्यनैर्घृण्यदोषप्रसक्तिः कथञ्चिद् वारयितुं शक्यते । लोके च रागद्वेषाभ्यां युक्तश्चेतनः पुरुषस्तादृशानि विषमाणि निर्घृणानि च कर्माणि कुर्वाणस्तावदुपलभ्यते । ब्रह्म चेदस्य सर्वस्य कारणमभ्युपगम्येत तदा तदपि रागद्वेषाभ्यां युक्तं मन्येत । न च ब्रह्म कालत्रयेऽपि रागद्वेषाभ्यां युक्तं मन्तुं शक्यते । तस्य श्रुतिस्मृतिषु सर्वत्र तद्योगाभावस्योक्तत्वात् । कथञ्चित् तद्योगे च स्यादसौ कश्चित् साधारणः पुमान् न परब्रह्म परमेश्वरः । तस्मादनुपपन्नं जगज्जन्मादिकारणं ब्रह्मेति । अस्योत्तरं पठति—

**"वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति" ॥ ३४ ॥**

**ब्रह्मण इति षष्ठ्या विपरिणम्याधिक्रियते । वैषम्यनैर्घृण्ये**—वैषम्यं

विषमत्वं समताभावः, नैर्घृण्यं निर्दयत्वं दयाभावः, ते उभे **न**=उच्चावचं जगदिदं निर्मिमाणस्य भगवतो ब्रह्मणो न प्रसज्येते, कुतः? **सापेक्षत्वात्**=सापेक्षकारणत्वात्, कुतोऽवगम्यते? **हि**=यतस्**तथा**=सापेक्षकारणत्वं **दर्शयति**=प्रतिपादयति श्रुतिरित्यर्थः ।

यदि हि ब्रह्म निरपेक्षं सदुच्चावचं जगदिदं निर्मिमीत तदाऽवश्यं तस्य वैषम्यं च नैर्घृण्यं च प्रसज्येयाताम् । न च ब्रह्म निरपेक्षं सदुच्चावचं जगदिदं निर्मिमीते । किं तर्हि? सृज्यमानप्राणिकर्मापेक्षम् । सृज्यमानप्राणिकर्माणि च सर्वाणि पुण्यपापाभ्यां द्वेधा विभिद्यन्ते । तत्र येषां पुण्यमेव केवलं विद्यते तेऽत्यन्तसुखभाजः क्रियन्ते, येषां पापमेव केवलं विद्यते तेऽत्यन्तदुःखभाजो विधीयन्ते, येषां च पुण्यं पापं चोभयविधं कर्म ते मिश्रकर्माणः सुखदुःखोभयभाजो निर्मीयन्ते । न च तथाविधनिर्माणे भवति ब्रह्मणः कश्चिदपराधः । तत्तत्कर्मवशेन तथा निर्माणात् । यथा हि पर्जन्यः खलु व्रीहियवादिनिर्माणे कारणं भवन्नपि तद्वैषम्यदोषेण न लिप्यते, तस्य तत्तद्बीजासाधारणकारणकत्वात्, तथा ब्रह्माप्युच्चावचं जगदिदं निर्मिमाणं वैषम्यनैर्घृण्याभ्यां न श्लिप्यते । तत्र प्राणिकर्मणामसाधारणकारणत्वेन तदपराधाभावात् । बीजस्थानापन्नं हि विश्वं प्राणिकर्म, पर्जन्यस्थानापन्नं च ब्रह्म । तथा चोच्चावचजगज्जन्मादिकारणे भवत्यपि तस्मिन् कथं वैषम्यं दोषः प्रसज्येत कथं च नैर्घृण्यम् । असाधारणकारणस्य प्राणिकर्मणो ह्येषोऽपराधो न साधारणकारणस्य भगवतो ब्रह्मणः । नहि ब्रह्म स्वेच्छया विषममिदं जगत् सृजति । प्रयोजनाभावात् । प्राणिकर्मानुगुण्येन सृजत् संहरच्च कथं वैषम्यनैर्घृण्याभ्यां दुष्येत् । सृष्टिर्हि यथा प्राणिनां भोगापवर्गार्थमुपयुज्यते तथा संहृतिरपि विश्रामार्थमुपयुज्यते नास्ति तत्रापि किञ्चिद्दोषावकाशः । सृज्यमानप्राणिकर्मापेक्षत्वं चैवंविधजगन्निर्माणे भगवतो ब्रह्मणः स्वयं दर्शयति श्रुतिः "**पुण्येन पुण्यं लोकं नयति पापेन पापम्, उभाभ्यां मनुष्यलोकम्**" **(प्र० ३ । ७)** इति । "**पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन**" **(बृ० ३ । २ । १३)** इति च । न च तत्र कर्मा-

पेक्षायां भगवतस्तस्यैश्वर्यं किञ्चिद्धीयते । स्वामित्वेनात्मकर्तव्यस्य परिपालनात् । स्वामिनो ह्येतत् कर्तव्यं यः कश्चित् स्वानां तस्य पुण्यं वा पापं वा कर्माचरेत् स तं यथाकालं तत्फलेन योजयेत् । यश्च स्वामी भूत्वा तथा न कुरुते न तेनात्मनः स्वाम्यं परिपाल्यते । यथा खलु प्रजापालने निरतः प्रजापतिः कल्याणकारिणमनुगृह्णन्नकल्याणकारिणं च निगृह्णन्नैश्वर्येण हीनो न मन्यते तथोच्चावचजगन्निर्माणेऽपि प्राणिकर्मापेक्षमाणं ब्रह्म न तावदैश्वर्येण हीनं मन्तव्यम् ॥ ३४ ॥

अत्राशङ्क्य समाधत्ते—

**"न कर्माविभागादिति चेन्नानादित्वात्"** ॥ ३५ ॥

**न**=प्रागुत्पत्तेः प्राणिकर्म न विद्यते, कुतः? **अविभागात्**= ब्रह्मण्यविभक्तत्वात् प्रलयादिति यावदिति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः? **अनादित्वात्**=तस्य जगद्वदनादित्वादित्यर्थः ।

**अथोच्येत**—न खलु प्राणिकर्मापेक्षं ब्रह्म जगज्जन्मादिकारणमुपपद्यते । जगदुत्पत्तेः प्राक् कर्मणोऽभावेन तदपेक्षस्य तस्य तत्कारणत्वासम्भवात् । यदा हि प्रलयवेलायां भगवति ब्रह्मणि भोक्तृभोग्यात्मकं विश्वमिदं जगदविभागं प्रपद्यते तदा कर्मापि तत्राविभागमापद्यते । सत्याश्रयाविभागे तदाश्रयिणोऽविभागस्यापि युक्तत्वात् । नह्याश्रयोऽविभागमापद्यते नाश्रयीति संश्लिष्यते । प्रलयवेलायां भोक्तृभोग्यात्मनो विश्वस्य जगतोऽविभागं न तदुत्पत्तेः प्रागेकस्य ब्रह्मणोऽवशेषं प्रतिपादयन्ती श्रुतिरवधारयति **"आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चन मिषत्"** (ऐ० १ । १) इति । **"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"** (छां० ६ । २ । १) इति च । न च प्रलयवेलायामविभागमापद्यमानस्यास्ति जगदुत्पत्तेः प्राक् स्वरूपतः सद्भावो येन तदपेक्षं ब्रह्म जगज्जन्मादिकारणं सम्भवेत् । द्विविधं हि कर्मोच्चावचजगन्निर्माणे ब्रह्मणस्तावदपेक्षितव्यं विज्ञायते सृष्टिपूर्वकालकं तदुत्तरकालकं वा । सृष्टिपूर्वकालकमविभागात् सृष्ट्युत्तरकालं

चानुत्पादान्नास्ति किमपेक्ष्य ब्रह्म विचित्रमिदं जगन्निर्मिमीत । तदनपेक्ष्य निर्माणे च तस्य वैषम्यनैर्घृण्यदोषप्रसङ्गस्तदवस्थः । तस्मादनुपपन्नं जगज्जन्मादिकारणं ब्रह्मेति । **नैतद्वक्तव्यम्** । अनादित्वात् । यथा ह्यस्माकं खलु भोक्तृभोग्यात्मकं विश्वमिदं जगदनादि वेविद्यते तथा तद्वैचित्र्यहेतुकर्माप्यनादि वरीवृत्यते । नहि प्रलयवेलायां प्रलीयमानं तदत्यन्तं प्रलीयते येनानादि न भवेत् । किं तर्हि? यथा भोक्तृभोग्यात्मकं विश्वमिदं जगत् प्रलीयमानं सूक्ष्मरूपेण निगूढमिव तदानीमवतिष्ठते तथा कर्मापि प्रलीयमानं सूक्ष्मरूपेणावतिष्ठते । अत एव चाचार्य्यपादानां तस्याविभागमेवाभिधत्ते नात्यन्तं प्रविलयम् । अविभागे च वस्तु स्वरूपेण वर्तते नात्यन्तं प्रध्वंसत इति सर्वजनीनम् । श्रुतिश्च सर्वनाम्ना विश्वमिदं जगत् परामृश्य तस्यात्मना ब्रह्मणा सामानाधिकरण्यं दर्शयन्ती स्पष्टमेव तदवस्थानं प्रलये व्यवस्थापयति । किमत्राश्चर्य्यवर्त्मभाल्ययम् । ब्रह्मदर्शनस्य ह्येतल्लोकोत्तरं माहात्म्यं यदुत्पन्नेन तेनैकपदे कर्मजालं समूलघातं विहत्य तत्प्रवाहोऽपि चेच्छिद्यते न वराकस्य प्रलयस्य । तत्र हि प्रालेयाच्छन्नबीजवद् विश्वं कर्म यथापूर्वमाम्ने नांशेनापि तत्प्रजननशक्तिरुदास्ते । सुषुप्तिवत् किल प्रलयोऽभ्युपगम्यते जाग्रदिव च सृष्टिः । तत्र सुषुप्तौ यथा पूर्वेद्युरनुष्ठितानि कर्माणि सूक्ष्मीभूय यथावत् प्रतितिष्ठन्ति तथा प्रलयेऽपि प्रतिपत्तव्यम् । **तस्मा**दुत्पत्तेः प्रागपि कर्मणः सद्भावादुपपद्यते तदपेक्षं ब्रह्म जगज्जन्मादिकारणं नास्ति कश्चिद्दोषः ॥ ३५ ॥

**ननु** प्रकृतिपुरुषेश्वराणामनादित्वेऽपि कर्मणो जन्यत्वेनानादित्वं नोपपद्यते, नापि क्वचिदभिधीयमानमुपलभ्यते? तत्राह—

**"उपपद्यते चाप्युपलभ्यते च"** ॥ ३६ ॥

कर्मणोऽनादित्वमिति पदद्वयं विपरिणम्यानुवर्तते । पूर्वसूत्रोक्ते कर्मानादित्वे प्रथमेन चकारेणोपपत्तिः समुच्चीयते, द्वितीयेन चोपलब्धिः । उपपत्त्युपलब्ध्योरुभयोस्तत्रैवैकत्र समुच्चय इत्यपिना गीयते । **उपपद्यते**= कर्मणोऽनादित्वमुपपद्यते, **उपलभ्यते**=श्रुतिस्मृतिष्वभिधीयमानं चोपलभ्यत इत्यर्थः ।

यदि हि कर्मानादि न विद्येत तदा दृश्यमानमिदं जगद्वैचित्र्यमाकस्मिकमापद्येत । न चाकस्मिकं तदभ्युपगन्तुं शक्यते । अकृताभ्यागमप्रसङ्गात् । ब्रह्मणस्तद्धेतुत्वे च स एव वैषम्यनैर्घृण्यदोषप्रसङ्गः । कर्मणस्तद्धेतुत्वे चागतं तदनादित्वं किमधुना मुधा विवादेन । न च सति जगति कर्म, सति कर्मणि च जगदित्यन्योऽन्याश्रयः । बीजाङ्कुरवदुभयोरनादित्वेन दोषाभावात् । प्रकृतिपुरुषेश्वराः स्वरूपतोऽनादयः कर्म जगच्च प्रवाहत इति विशेषः । न चानादित्वे निवृत्त्यनुपपत्तिः । वासनावदुपपत्तेः । यथा हि वासनाः खल्वनादित्वेऽपि निवर्तन्ते तथा जगत्कर्मणी अपि निवर्त्स्येतः । अविशेषात् । वासनानामनादित्वं निवृत्तिश्चोभे स्मर्य्येते योगदर्शने **"तासामनादित्वं चाशिषो नित्यत्वात्"** ( यो० ४ । १० ) इत्यनादित्वम्, **"हेतुफलाश्रयालम्बनैः सङ्गृहीतत्वादेषामभावे तदभावः"** ( यो० ४ । ११ ) इति च निवृत्तिः । यथोपपत्त्या कर्मानादित्वं तावदुपपद्यते तथा श्रुतिस्मृतिष्वभिधीयमानमप्युपलभ्यते **"तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च"** ( बृ० ४ । ४ । २ ) **"तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य"** ( बृ० ४ । ४ । ६ ) **"प्राणाधिपः सञ्चरति स्वकर्मभिः"** ( श्वे० ५ । ७ ) **"कर्मवैचित्र्यात् सृष्टिवैचित्र्यम्"** ( सां० ६ । ४१ ) इति । यदारभ्य जीवात्मा तदारभ्य कर्म तदारभ्य च विचित्रमिदं जगदिति स्फुटमाभिरभिहितं गम्यते । **"सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्"** ( ऋ० ८ । ८ । ४८ । ३ ) इति मन्त्रवर्णोऽपि च पूर्वकल्पसद्भावं प्रदर्शयन् कर्महेतुसंसारस्यानादित्वमुल्वणं प्रतिपादयति । वैदिकाश्च यदुपपत्त्या सम्यगुपपद्यते श्रुतिस्मृतिषु चाभिहितमुपलभ्यते तदेव बहु मन्यन्ते नास्ति तेषां स्वतन्त्रः कुत्रापि पक्षपातः । **तस्मा**ज्जगद्धेतुकर्मणोऽप्यनादित्वादुपपन्नं तज्जन्मादिकारणं ब्रह्म ॥ ३६ ॥

**ननु** न केवलं कर्मैवैकं विचित्रजगद्रचनाया ब्रह्मणोऽपेक्षितव्यं वर्तते, सन्ति तद्वासनाप्रभृतयोऽन्येऽपि जीवात्मधर्माः केचन, ये तत्र

**कर्मवदपेक्षन्ते । तेऽपि यावदनादयो नोपपद्येरन् तदवस्थां तावद् ब्रह्मणो** जगज्जन्मादिकारणत्वानुपपत्तिं मन्यामहे? **तत्राह—**

**"सर्वधर्मोपपत्तेश्च"** ॥ ३७ ॥

ब्रह्मेत्यधिक्रियते । अनादित्वस्येति षष्ठ्या विपरिणम्यानुवर्तते । **ब्रह्मणो** जगज्जन्मादिकारणत्वोपपत्तौ हेत्वन्तरमेतदिति चार्थः । **सर्वधर्मोपपत्तेः**=अनादित्वस्य सर्वेषु जीवात्मधर्मेषु सिद्धेर्ब्रह्म जगज्जन्मादिकारणमुपपद्यत इत्यर्थः ।

यथा हि प्रवाहतोऽनादि तावत् कर्मोपपद्यते तथा कर्मवज्जगद्रचनायामपेक्षितव्यास्तद्वासनाप्रभृतयोऽन्येऽपि सर्वे जीवात्मधर्माः प्रवाहतोऽनादय उपपद्यन्ते । नहि तेषामनादित्वाभावे सर्वज्ञसर्वशक्तिना सताऽपि भगवता ब्रह्मणा विचित्रमिदं जगत् कथञ्चिदुत्पादयितुं शक्यते । सहकारिकारणानि हि तत्र ते भवन्ति यथा कर्म । कार्य्यं जगदपि चास्ति प्रवाहतोऽनादि । न च कारणानादित्वाभावे तदनादित्वं घटते । कार्य्यकारणयोः समानकालकत्वनियमात् । **परब्रह्मणः** परमेश्वरस्य च सर्वशक्त्युपेतत्वात् कारणत्वोपपादका ये धर्मा अपेक्षन्ते ते सर्वे तत्र सांसिद्धिका वर्तन्त इति न तदुपपादनपरं सूत्रमिदं लापयितुमुत्सहते मनः । **"सर्वोपेता च तद्दर्शनात्"** ( वे० २ । १ । ३० ) इति साधितत्वात् पौनरुक्त्यमपि सुव्यक्तम् । वैषम्यनैर्घृण्यदोषप्रसक्तिवारणाय यथा सहकारिकारणं कर्मापेक्ष्यते तथा तद्वासनाप्रभृतयोऽपि सर्वे जीवात्मधर्मा अपेक्ष्यन्त इति युक्तमेतद् व्याख्यानम् । **तस्मात्** सिद्धं सर्वज्ञं सर्वशक्ति ब्रह्म जगज्जन्मादिकारणम् ॥ ३७ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादवैदिकमुनिविरचितायां वेदान्तसूत्रवैदिकवृत्तौ द्वितीयाध्यायस्य प्रथमः पादः ॥**



# द्वितीयोऽध्यायः

## द्वितीयः पादः

प्रथमे स्मृतिपादे वेदान्तवाक्यावधारिते स्वपक्षे स्मृतिविरोधं तर्कविरोधं चापाततः प्रतिभासमानं सुविविच्य निराकृत । सम्प्रति तद्दार्ढ्याय तत्परिपन्थिनः केचित् स्वतन्त्रप्रधानाण्वादिकारणपक्षा निराक्रियन्ते । ते च तर्कबलेनोपबृंहितास्तर्कबलेनैव निराकर्तव्याः । यथा यक्षस्तथा बलिरिति न्यायात् । तदर्थमिमं द्वितीयं तर्कपादमारभमाणः पूर्वं तावत् स्वतन्त्रप्रधानकारणपक्षं निराकुरुते—

**"रचनानुपपत्तेश्च नानुमानम्"** ॥ १ ॥

अनुपलब्धेरिति चार्थः । **आनुमानम्**=उभयपक्षेऽभ्युपगमसामान्यसूचनाय स्वशब्देन निर्देशः, अभ्युपगममात्रे सामान्यं स्वातन्त्र्यपारतन्त्र्यांशे च विशेषः, अनुमानेन गम्यं प्रधानं **न**=स्वतन्त्रं जगतः कारणं न सम्भवति, कुतः? **रचनानुपपत्तेः**=जगद्रचनानुपपत्तेरित्यर्थः ।

**एवं** हि परे मन्यन्ते ब्रह्मवत् स्वतन्त्रं प्रधानं जगतः कारणमिति । तत्रैषा तेषामुपपत्तिः । यथा स्वतन्त्रं खलु ब्रह्म स्वभावविशेषाज्जगज्जन्मादिकारणमभ्युपेयते तथा प्रधानमपि स्वभावभेदाज्जगज्जन्मादिकारणमभ्युपगम्यते । न च जगद्रचनास्वभावं ब्रह्मैवैकं भवितुमर्हति न प्रधानमिति केनचिन्नियन्तुं शक्यते । नियमकारणानुपलब्धेः । नहि नियमकारणमिह किञ्चिदुपलभ्यते यत्किल जगद्रचनास्वभावं ब्रह्मैव नास्माकं प्रधानमिति नियच्छेत् । जगद्रचनास्वभावं ब्रह्म स्वशक्तेः प्रकृतेर्विचित्रमिदं जगद् विरचयति, प्रधानं च तत्स्वभावं स्वस्मादिति नास्ति कश्चिद्विशेषः । प्रधानमिति चास्माकं जगज्जन्मादिकारणे तान्त्रिकी संज्ञा यथा वैदिका-

नाम्। प्रधीयते विधीयते सर्गवेलायां जगदनेन, प्रधीयते निधीयते प्रलयवेलायां जगदस्मिन्निति तद्व्युत्पत्तेः। नैतद्युक्तं पश्यामः। चेतनाधिष्ठानमन्तरेण स्वतन्त्रात्प्रधानाद् दृश्यमानैतज्जगद्रचनानुपपत्तेः। प्रयोजनं किञ्चिदुद्दिश्य पदार्थानां विन्यासविशेषो हि रचनेति व्यपदिश्यते। न चोद्देशो जडे प्रधाने कथञ्चित् कश्चिद् घटते। चेतनधर्मत्वात्। चेतनधर्मः खल्वसौ भवति न जडधर्मः। नहि जडेन कदाचित् किञ्चिदनुसन्धातुं शक्यते। न च सप्रयोजनः पदार्थानां विन्यासविशेषोऽपि जडे तस्मिन् सम्भाव्यते। चेतनो ह्यत्रेदं विन्यस्तव्यमिह विन्यस्तेनानेनेदं भविष्यतीति जानाति नाचेतनः। प्रधानं चाचेतनम्। नहि तेन पदार्थविन्यासविशेषस्तत्प्रयोजनं च किञ्चित् कर्हिचिद् विज्ञातुं शक्यते। विज्ञाय च पूर्वं सर्वो विरचयति नाविज्ञायेति नियमः। बाह्याध्यात्मिकजगद्रचना चेयमतिशयेन महती यां बत पश्यतां प्रज्ञावतां सम्भावितनमानां शिल्पिशिरोरत्नानामपि शेमुषी बम्भ्रन्ति सा कथमविज्ञाय प्रधानेनाचेतनेन विधास्यत इति न विज्ञायते। स्वभावविशेषोऽपि लोकोपलम्भानुगुण एव भवति सर्वदा कल्पयितव्यः। न च लोके चेतनानधिष्ठितं स्वतन्त्रं किञ्चिदचेतनं स्वभावविशेषात् पुरुषार्थविशेषनिर्वर्तनक्षमान् काँश्चित् पदार्थभेदान् विरचयदुपलभ्यते येन चेतनाधिष्ठानमन्तरेण स्वतन्त्रं प्रधानमपि स्वभावविशेषाद् बाह्याध्यात्मिकभेदभिन्नं जगदिदं विरचयिष्यतीति मन्येत। न चायथालोकोपलम्भं परिकल्प्यमानं कदाचित् प्रतिष्ठां विन्दते। विद्वद्भ्यो वा स्वतन्त्रधिषणेभ्यो रोचते। चेतनाधिष्ठानाङ्गीकारे च स्यादायुष्मतामस्मन्मतमन्दिरे प्रवेशः। अस्माभिरपि चेतनाधिष्ठानेन प्रकृत्यपरनाम्नः प्रधानाद् बाह्याध्यात्मिकजगद्रचनाया अभ्युपगमात्। चेतनं ब्रह्म तत्र स्वातन्त्र्यप्रयोजिका स्वाभाविकी निरतिशया ज्ञानक्रियाशक्तिः सततं विजेजीयते, तया तत् स्वतन्त्रं कारणं भवत् स्वाधिष्ठानेन प्रकृत्याख्यात्प्रधानाद् विविधमिदं जगद् विरचयितुमीष्टे यथा कुम्भकारः स्वाधिष्ठानेन मृदः कुम्भादिकान् नानाविधान् विकारभेदान्, नास्ति काचनानुपपत्तिः। न चैवंलक्षणा शक्तिः स्वभा-

विकी वा नैमित्तिकी वा तावके प्रधाने विद्यते । तदभावे च कथमेतद् ब्रह्मवत् स्वतन्त्रं जगज्जन्मादिकारणं सम्भवेत् । न चासम्भवस्योद्धानं सूक्ष्मधियो विद्वांसः श्रवणमात्रेणाप्याद्रियन्ते किं पुनर्धारणेन । तस्माद् ब्रह्मवत् स्वतन्त्रं प्रधानं जगतः कारणमित्ययुक्तम् ॥ १ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

"प्रवृत्तेश्च" ॥ २ ॥

अनुपपत्तेर्नानुमानमिति छेदेनानुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । प्रवृत्तेः=षष्ठीयं, जगद्रचनार्थप्रवृत्तेरनुपपत्तेर्न स्वतन्त्रं प्रधानं जगतः कारणं सम्भवतीत्यर्थः ।

दूरेणास्तां तावज्जगद्रचना, तदर्थं प्रवृत्तिरपि स्वतन्त्रस्य सतः प्रधानस्य नोपपद्यते । कस्मैचित् कार्य्यविशेषाय क्रियाविशेषो हि प्रवृत्तिरिति व्यपदिश्यते । सा चाचेतने चेतनसम्बन्धादवकल्पते न स्वतः । अन्वयव्यतिरेकाभ्यां तस्याश्चेतनहेतुकत्वस्यैवावधारणात् । चेतनः खलु मयेदं कार्य्यमनेनेदं निष्पत्स्यत इति वेदितुमर्हति नाचेतनः । तत्र वेदनशक्तेरभावात् । अचेतनं च प्रधानम् । तत् कथं कार्य्याकार्य्यावेदितृ सत् प्रवर्तिष्यते । लोकेऽपि च चेतनानधिष्ठिते मृतशरीरे रथादौ वाचेतने स्वतः प्रवृत्तिर्न दृश्यते । न चादृष्टा सती सा प्रधानेऽपि कल्पयितुं शक्यते । अदृष्टकल्पनस्यान्याय्यत्वात् । नह्यदृष्टस्य कल्पनं कश्चित् साधारणोऽपि पुमान् न्याय्यं मन्यते किं पुनस्तर्कवारिधिपारावारीणस्त्वादृशो जनः । तस्माच्चेतनानधिष्ठितं स्वतन्त्रं प्रधानं जगतः कारणमिति यत्किञ्चिदेतत् प्रवृत्त्यनुपपत्तेः ॥ २ ॥

आशङ्क्य निरस्यति—

"पयोऽम्बुवच्चेत् तत्रापि" ॥ ३ ॥

आनुमानस्येति षष्ठ्या, प्रवृत्तिरिति च प्रथमया विपरिणम्यानुवर्तते । स्वत इति शेषः । पयोऽम्बुवत्=क्षीरनीरवत् प्रधानस्य प्रवृत्तिः स्यादि-

ति **चेत्**=यद्युच्यते तदा न वाच्यम्, कुतः? **यतस्तत्रापि**=पयोऽम्बुनोरपि चेतनाधिष्ठानादेव भवति प्रवृत्तिरित्यर्थः ।

**अथोच्येत**—यथा खलु पयश्चेतनाधिष्ठानमन्तरेण स्वभावादेव वत्सविवृद्ध्यर्थं प्रवर्तते, अम्बु च स्वभावादेव लोकोपकाराय परिस्यन्दते तथा प्रधानमपि स्वभावादेव जगद्रचनायै प्रवर्तिष्यते नास्ति तत्र किञ्चिन्नामानुपपन्नमिति । **नैतद् वक्तव्यम्** । पयोऽम्बुनोरपि चेतनाधिष्ठानेनैव प्रवर्तनात् । न खलु चेतनाधिष्ठानमन्तरेण पयः स्वभावादेव वत्सविवृद्ध्यर्थं प्रवर्तते किंतु धेन्वधिष्ठानात् । अस्ति तत्र पयःप्रवृत्तौ चेतनाया धेनोः सम्बन्धः कारणम् । धेनुर्हि वत्सं पश्यन्ती स्नेहेनात्यन्तं विह्वला पयः पाययितुं प्रयायत्यते । तत्प्रयत्नातिशयाच्च पयः स्तनेभ्यः सोस्रूयते न स्वभावात् । एवं भवन्त्यपि तत्प्रवृत्तिश्चेत् स्वभावादेव मन्येत तदाऽन्यत्रापि क्वचित् स्वभावाद् भवन्ती सा प्रदर्श्येत । न च शक्यते प्रदर्शयितुम् । उभयवादिप्रसिद्धेऽचेतने रथादौ स्वभावेन भवन्त्यास्तस्या अदर्शनात् । यथा चैकत्र तथाऽन्यत्रापि सा निश्चेतुमीश्यते । अविशेषात् । **"योऽप्सु तिष्ठन्नपोऽन्तरो यमयति"** ( बृ० ३ । ७ । ४ ) **"एतस्य वा अक्षरस्य प्रशासने गार्गि! प्राच्योऽन्या नद्यः स्यन्दन्ते"** ( बृ० ३ । ८ । ९ ) इत्यादिश्रुतिवचनैश्चापां प्रवृत्तिश्चेतनाधिष्ठानपूर्विका प्रत्यक्षं प्रतिपाद्यते । न च तान्यनभ्युपगच्छताऽपि तार्केकेणापह्नोतुमुत्सह्यते । यथातर्कं प्रतिपादनात् । अचेतनस्य स्वभावात् प्रवृत्तिं प्रतिजानानानां च नास्ति तादृशमन्यत् किञ्चिदुदाहरणं यत् खलु सन्दिग्धत्वात् पक्षकुक्षौ न विशेत् । पयोऽम्बुनी च व्यक्तं तत्र प्रविशत इत्यनुदाहरणम् । न चोदाहरणाभावे प्रवृत्त्यनुमानमुपपद्यते । तदनुपपत्त्या चानुपपन्ना जगद्रचनेति विस्पष्टम् । **तस्मात्** स्वतन्त्रं प्रधानं जगतः कारणमित्यप्रामाणिकं मतं न प्रामाणिकम् ॥ ३ ॥

**स्वतन्त्र**प्रधानकारणपक्षे रचनाप्रवृत्त्यनुपपत्तिभ्यां मूलसम्भवं दूषणं तावदुपन्यस्यत् । सम्प्रति तत्र प्रलयाव्यवस्थां दूषणान्तरमुपन्यस्यति—

**"व्यतिरेकानवस्थितेश्चानपेक्षत्वात्"** ॥ ४ ॥

नानुमानमित्यनुवर्तते । दूषणान्तरमेतदिति चकारेणोच्यते । **व्यतिरेकानवस्थितेः**=सृष्टिव्यतिरेकस्य प्रलयस्यानवस्थितेरनवस्थानाद् व्यवस्थानाभावादानुमानं प्रधानं जगतः कारणं न युज्यते । कुतोऽवगम्यते व्यतिरेकानवस्थितिः? **अनपेक्षत्वात्**=तद्व्यवस्थातृचेतनापेक्षाशून्यत्वात् स्वतन्त्रकारणत्वादित्यर्थः ।

यथा हि स्वतन्त्रप्रधानकारणपक्षे खलु सृष्टिर्न सम्भोभूयते तथा प्रलयोऽपि न व्यवतिष्ठते । सरूपपरिणामो हि प्रलयो यथा विरूपपरिणामः सृष्टिः । व्यवस्था च तन्मर्य्यादाकरणं विरूपपरिणामानन्तरमियन्तं कालं सरूपपरिणामेन भाव्यमियन्तं कालं पुनर्विरूपपरिणामेनेति । स च चेतनधर्मो नाचेतने प्रधाने कर्हिचिदवकल्पते । नहि यत् किञ्चिदपि न चेतयते तेन कस्यचिन्मर्य्यादा कर्तुं शक्यते प्रलयस्येति तु किमु वक्तव्यम् । सृष्टयनन्तरं प्रलयः प्रलयानन्तरं सृष्टिरिति च सुव्यवस्थितौ सृष्टिप्रलयौ शास्त्रतोऽवगम्येते, भवताऽपि च तर्कतो निपुणतरं सुव्यवस्थाप्येते । नच तौ चेतनस्य व्यवस्थापकस्य कस्यचिदनभ्युपगमे केवलादचेतनात् प्रधानाद् व्यवस्थानमर्हतः । स्वभावोऽपि प्रधानस्य विरूपपरिणामविषयो वा परिकल्प्येत सरूपपरिणामविषयो वा । नोभयविषयः परिकल्पयितुं शक्यते । विरोधात् । विरुध्यते हि सरूपपरिणामो विरूपपरिणामेन विरूपपरिणामश्च सरूपपरिणामेन । परस्परविरोधे च न प्रकारान्तरस्थितिरिति न्यायः । विरोधपरिहाराय स्वभावे स्वभावान्तराश्रयणं चानवस्थाहेतुत्वान्नाभियुक्तेभ्यो रोचते । सृज्यमानप्राणिकर्मसाहाय्येन प्रधानस्य तद्व्यवस्थापकत्वप्रार्थनं तु कुशकाशावलम्बनायितमात्रम् । कर्मणोऽपि प्रधानवदचेतनत्वेनाकिञ्चित्करत्वात् । यथा खलु षण्डकः षण्डकान्तरसाहाय्येनापि न प्रजननशक्तिं लभते तथा प्रधानमपि कर्मसाहाय्येन न तद्व्यवस्थाशक्तिं लब्धुमीष्टे । नहि साहाय्यमाचरताऽपि तेनातिशयं कञ्चिदाधातुं शक्यते । तस्मादसमीचीनः स्वतन्त्रं प्रधानं जगतः कारणमिति यौष्माकीणः पक्षः ॥ ४ ॥

**अथोच्येत**—न तावत् स्वतन्त्रप्रधानकारणपक्षे किञ्चिदसामञ्जस्यं

वर्तते । स्वतन्त्रस्य सतोऽपि प्रधानस्य तृणादिवत् सृष्टिप्रलयविपरिणामोपपत्तेः। यथा हि गोप्रभृतिभिरुपभुक्तं खलु तृणपल्लवोदकादिकं निमित्तान्तरापेक्षामन्तरेण स्वयमेव क्षीरात्मना यथासमयं परिणमते तथा प्रधानमपि निमित्तान्तरानपेक्षं स्वयमेव सृष्टिप्रलयरूपेण यथाकालं परिणंस्यते, नास्ति तत्र तदनुपपत्तिः । स्वभावस्यापर्य्यनुयोज्यत्वादिति । अस्योत्तरं पठति—

**"अन्यत्राभावाच्च न तृणादिवत्"** ॥ ५ ॥

आनुमानस्यानपेक्षस्येत्युभयं पष्ठ्या विपरिणम्यानुवर्तते । चस्त्वर्थः शङ्कां व्यावर्त्तयति । **अन्यत्र**=गोप्रभृतिभ्योऽन्यत्र बलीवर्दादिष्व**भावात्**= क्षीरात्मना परिणामाभावात् **तृणादिवत्**=तृणपल्लवोदकादिवन्न=अनपेक्षस्यानुमानस्य प्रधानस्य सृष्टिप्रलयात्मना परिणामो नोपपद्यत इत्यर्थः ।

यदि हि तृणपल्लवोदकादिकं सर्वत्रोपभुज्यमानं निमित्तान्तरापेक्षामन्तरेण स्वयमेव क्षीरात्मना यथासमयं परिणमेत तदा प्रधानमपि तृणपल्लवोदकादिवन्निमित्तान्तरानपेक्षं स्वयमेव सृष्टिप्रलयात्मना यथाकालं परिणंस्यत इति वक्तुं शक्येत । न च तृणपल्लवोदकादिकं सर्वत्रोपभुज्यमानं निमित्तान्तरापेक्षामन्तरेण स्वयमेव क्षीरात्मना यथाकालं परिणमते । बलीवर्दादिषु व्यभिचारात् । यथा हि तृणपल्लवोदकादिकं खलु गोप्रभृतिभिरुपभुज्यते तथा बलीवर्दादिभिरप्युपभुज्यते । गोप्रभृतिषूपभुज्यमानं क्षीरात्मना परिणममानमुपलभ्यते ततोऽन्यत्र बलीवर्दादिषु च नोपलभ्यते । निमित्तान्तरापेक्षामन्तरेण स्वयमेव तस्य क्षीरात्मना परिणामश्चेद् विद्येत तदा गोप्रभृतिवद् बलीवर्दादिष्वपि यथासमयं क्षीरात्मना परिणममानमुपलभ्येत । नहि यदेकत्र यदात्मना स्वयमेव परिणन्तुं पारयते तदन्यत्र तदात्मना परिणन्तुं न क्षमते । यश्च धीमान् निमित्तान्तरापेक्षामन्तरेण स्वयमेव यथासमयमुपभुज्यमानस्य तृणपल्लवोदकादेः क्षीरात्मना परिणामं प्रतिजानीते तेनास्य व्यभिचारोपलम्भस्यावश्यं कश्चिद् हेतुरन्वेष्टव्यः। कस्मादिदं गोप्रभृतिषु क्षीरीभवदवलोक्यते ततोऽन्यत्र बलीवर्दादिषु च नालोच्यते । शरीरस्वामिविशेषसम्बन्धस्तत्र हेतुरिति चेदभिधीयेत तदा निमित्तान्तरानपेक्षं स्वयमेवोपभुज्यमानं तृणपल्लवोदका-

दिकं क्षीरात्मना परिणमत इत्यनुपपन्नम् । तदनुपपत्त्या चानपेक्षं प्रधानं स्वयमेव सृष्टिप्रलयाभ्यां यथासमयं परिणमत इति सुतरामनुपपन्नम् । दृष्टान्तवद् दार्ष्टान्तिकेऽपि कस्यचिन्निमित्तान्तरस्यापेक्षाया अवश्यवक्तव्यत्वात् । अन्यथा तृणादेः क्षीरपरिणामवत् प्रधानस्यापि सृष्टिप्रलयपरिणामानुपपत्तेः । **तस्मात्** स्वतन्त्रं प्रधानं जगतः कारणमित्ययुक्तम् ॥ ५ ॥

तुष्यतु दुर्जनन्यायेनाह—

**"अभ्युपगमेऽप्यर्थाभावात्"** ॥ ६ ॥

आनुमानस्यानपेक्षस्येति पूर्ववद् विपरिणम्य नेति च पदत्रयमनुवर्तते । **अभ्युपगमेऽपि**=अनपेक्षस्यानुमानस्य प्रधानस्य कारणत्वाभ्युपगमेऽपि सृष्टिप्रलयपरिणामो न घटते, कुतः? **अर्थाभावात्**=प्रयोजनाभावादित्यर्थः ।

यद्यप्यनपेक्षस्य प्रधानस्य प्रवृत्तिरचनानुपपत्तिभ्यां जगत्कारणत्वं नाभ्युपगन्तुं शक्यते तथापि तुष्यतु दुर्जन इति न्यायेन तच्चेत् कथञ्चिदभ्युपगम्येत तदाऽपि तस्य सृष्टिप्रलयलक्षणः परिणामो न घटेत । प्रयोजनाभावात् । सर्वो हि स्वस्य वा परस्य वा प्रयोजनमुरसिकृत्य किञ्चित् सृजति प्रतिसृजति च किञ्चिदिति दृश्यते । न चाज्ञस्य सतः प्रधानस्य स्वस्य वा परस्य वा प्रयोजनं किञ्चिद् वक्तुं शक्यते । नहि यत् कस्य नाम प्रयोजनमित्यपि ज्ञातुं न शक्नोति तत् स्वस्य वा परस्य वा प्रयोजनं किञ्चिदुद्दिश्य विश्वमिदं जगत् स्रक्ष्यति प्रतिस्रक्ष्यति चेति सम्भवति । प्रयोजनाभावे चानुपपन्नस्तस्य सृष्टिप्रलयलक्षणः परिणाम इति सुव्यक्तम् ॥ ६ ॥

दृष्टान्तेन परार्थे परिणामोपपत्तिमाशङ्क्य व्युदस्यति—

**"पुरुषाश्मवदिति चेत् तथाऽपि"** ॥ ७ ॥

आनुमानस्यानपेक्षस्येति पूर्ववद् विपरिणम्य नेति च पदत्रयमनुवर्तते । **पुरुषाश्मवत्**=यथा पुरुषस्य जीवात्मनोऽर्थनिष्पत्तयेऽश्मनोऽयस्कान्तस्यानपेक्षस्य कृष्णायसपरिचालनं तथाऽनपेक्षस्य प्रधानस्य सृष्टिप्रलयाभ्या-

मात्मपरिणाममनुपपद्यत इति **चेत्**=यदि मन्यते तदा न **मन्तव्यम्**, कुतः? यत**स्तथाऽपि**=एवमपि वर्तते तदवस्था तदनुपपत्तिरित्यर्थः।

**अथ** मन्येत यथा खलु पुरुषस्य शल्यनिष्कर्षणाद्यर्थनिष्पत्तयेऽयस्कान्तो मणिरन्यानपेक्षः कृष्णायसं परिचालयति तथा प्रधानमपि पुरुषस्य भोगापवर्गार्थनिष्पत्तये निमित्तान्तरानपेक्षं सृष्टिप्रलयाभ्यामात्मानं परिणामयिष्यति। विद्यतेऽस्माकं प्रधानस्येव तदाश्रयभोगापवर्गभाजां पुरुषाणामप्यभ्युपगमः। तथा च नास्ति परिणामानुपपत्तिरिति। **नैतन्मन्तव्यम्**। तदनुपपत्तेस्तादवस्थ्यात्। अयस्कान्ते मणौ हि कृष्णायसपरिचालनशक्तिः सततमनुवर्तमाना सर्वदा सर्वत्रैकरूपाऽव्यभिचारेणोच्यते तद्वत् प्रधानेऽपि चेदात्मपरिणामशक्तिर्मन्यते तदा वक्तव्यं किं सा सृष्टिपरिणामशक्तिः स्यादाहोस्वित् प्रलयपरिणामशक्तिरिति। सृष्टिपरिणामशक्तौ प्रलयपरिणामानुपपत्तिः। प्रलयपरिणामशक्तौ सृष्टिपरिणामानुपपत्तिः। **अथ** द्वयी शक्तिस्तत्र मन्यते? **तदा** दृष्टान्तासिद्धिः। दृष्टान्ते मणौ शक्तिद्वयस्यानुपलम्भात्। नह्ययस्कान्तो मणिर्यथा कृष्णायसं परिचालयते तथा स्तम्भतेऽपि चेति क्वचिदुपलभ्यते। अथैका सत्यपि कार्य्यद्वयं कुरुत इति चेत्? **तदा** सुतरां परिणामानुपपत्तिः। हन्त सा यदा सृष्ट्या परिणंस्यते तदैव प्रलयेनापि परिणंस्यते। नहि तद्व्यवस्थापकः स्वामी कश्चिदभ्युपगम्यते येन व्यवस्थाप्यमाना सर्गवेलायां सृष्ट्या परिणमेत प्रलयवेलायां च प्रलयेन। द्वेधा परिणामे च न सृष्टिपरिणाम उपपद्येत न प्रलयपरिणामः। परस्परेण परस्परस्य प्रतिरोधात्। पुरुषाश्च प्रधानाश्रयत्वाद् धात्र्या बाला इव तत्स्वभूता विद्यन्ते न तत्स्वामिन इति न ते व्यवस्थायै कल्पन्ते। तस्मादनुपपन्नः परार्थमपि पुरुषाश्मवदनपेक्षस्य प्रधानस्य सृष्टिप्रलयपरिणामः॥ ७॥

**ननु** प्रधानस्यैषा शक्तिरिति स्वामित्वात् प्रधानमेव तद्व्यवस्थापकं भविष्यति। यस्य शक्तिस्तस्यैव तत्स्वामित्वौचित्यात् कृतमन्येन तद्व्यवस्थापकेन केनचित् स्वामिनाऽन्तर्गडुना। तथा चोपपद्यतेऽनपेक्षस्यापि प्रधानस्य सृष्टिप्रलयपरिणाम इति। तत्राह—

**"अङ्गित्वानुपपत्तेश्च" ॥ ८ ॥**

आनुमानस्यानपेक्षस्येति पूर्ववद् विपरिणम्य नेति च पदत्रयमनुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । **अङ्गित्वानुपपत्तेः**=स्वामित्वानुपपत्ते-रनपेक्षस्य प्रधानस्य सृष्टिप्रलयपरिणामो नोपपद्यत इत्यर्थः ।

सत्यं प्रधानस्यैषा परिणामशक्तिस्तथापि प्रधानं न तद्व्यवस्थापकं स्वामि भवितुमर्हति । अज्ञत्वात् । आत्मशक्तिर्भवेदनात्मशक्तिर्वा विद्येत ज्ञ एव तद्व्यवस्थां कर्तुं पारयते नाज्ञः । अज्ञं च ते प्रधानं, तत् कथं सृष्टिप्रलय-शक्तिं व्यवस्थापयिष्यति । नहि याथातथ्येन कालविज्ञानाभावे किञ्चिद् व्यवस्थापयितुं शक्यते । न च यत् किञ्चिदपि न जानाति तेन कालो याथातथ्यतो विज्ञायत इत्युपपद्यते । यथाकालं चेदं सर्वं सुव्यवस्थितं विधीयमानं दृष्ट्वा नूनं केनचित् सुव्यवस्थापकेन स्वामिना विज्ञात्रा व्यधा-यीति निश्चीयते । तस्मादनपेक्षं प्रधानं सृष्टिप्रलयाभ्यां यथाकालं परि-णमत इत्यनुपपन्नम् ॥ ८ ॥

**स्यादेतत्**—मा भूत् सृष्टिप्रलयव्यवस्थापकं प्रधानं, कालं वयं तद्व्य-वस्थापकमनुमिमीमहे । दृश्यते ह्येतत्वं वस्तुजातं कालेन सुव्यवस्थितं येन यदोत्पत्तव्यं तत्तदोत्पद्यते येन च यदा प्रलेतव्यं तत् तदा प्रलीयत इति । अस्योत्तरं पठति—

**"अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात्" ॥ ९ ॥**

आनुमानस्यानपेक्षस्येति पूर्ववद् विपरिणम्य नेति च पदत्रयमनुवर्तते । **अन्यथाऽनुमितौ च**=पूर्वप्रकारतोऽन्येन प्रकारेण व्यवस्थापककालानु-मानेऽपि प्रधानस्यानपेक्षस्य सृष्टिप्रलयपरिणामो न घटते, कुतः? **ज्ञश-क्तिवियोगात्**=कालस्य ज्ञातृत्वशक्तिविरहादित्यर्थः ।

अनुमीयतां तावत् प्राधानिकपरिणामद्वयव्यवस्थापकत्वेन कालो नाम यथाकामं न वयं वारयामः । परन्तु यत्कामास्तमनुमिमीध्वे न स तेन पूर्यत इत्यवश्यं निगदामः । प्रधानवत् कालस्यापि ज्ञशक्तिवियोगात् । यथा हि प्रधानं खलु ज्ञातृत्वशक्त्या वियुज्यते तथा कालोऽपि ज्ञातृत्व-

शक्त्या वियुज्यते । प्राधानिकत्वात् । क्रिया हि स इति भावत्क मतम् । अप्राधानिकत्वेऽपि चैतन्याभावेन तद्वियोगस्तस्य युज्यते । न च ज्ञातृत्व-शक्त्या वियुज्यमानेन नेन प्रधानपरिणामव्यवस्था कथञ्चिद् घटयितुं पार्य्यते । व्यवस्थाया ज्ञातृधर्मत्वनियमात् । आर्तवास्तत्तत्पदार्थास्तु भगवता परब्रह्मणा परमेश्वरेण व्यवस्थाप्यमाना यथाकालं प्रादुर्बोभूयन्ते प्रलेलीयन्ते चेति न तत्कारणं कालोऽध्यवसातुं शक्यते । परतन्त्रो ह्यसौ न स्वतन्त्रस्य कृत्यमर्हति । पारतन्त्र्यं च तस्य **"यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः"** (श्वे० १ । ३) इत्यादिश्रुतिवचनादधिगम्यते । **"कारणे कालाख्येति"** (वै० २ । २ । ९) इति च कारणत्वमात्राभिप्रायेण सूत्र्यते न स्वतन्त्रकारणत्वाभिप्रायेण । **"कालो अश्वो वहति"** (अथर्व० १९ । ६ । ५३ । १) इत्यादिमन्त्रवर्णैश्च कालस्य कालो भगवान् परब्रह्म परमेश्वर उपदिश्यते न तदधिष्ठितः कश्चिन् कालः । कालस्य कालत्वं च भगवतस्तस्य श्रूयते श्वेताश्वतरोपनिषदि **"स विश्वकृद् विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद् यः"** (श्वे० ६ । १६) इति । स्मर्य्यतेऽपि च गीतायाम् **"कालोऽस्मि लोकक्षयकृत् प्रवृद्धः"** (गी० ११ । ३२) इति । तथाचान्यथाऽनुमानेऽपि तदवस्था प्राधानिकपरिणामद्वयानुपपत्तिः । **तस्मात्** स्वतन्त्रं प्रधानं जगज्जन्मादिकारणमित्येतदयुक्तम् ॥ ८ ॥

**"विप्रतिषेधाच्चासमञ्जसम्"** ॥ १० ॥

हेत्वन्तरपरश्चकारः । **विप्रतिषेधात्**=विजुगुप्सया विशिष्टनिन्दयाऽवगतः प्रतिषेधोऽत्र विप्रतिषेधः, तस्मात् विशिष्टनिन्दावगतश्रुतिप्रतिषेधा-**दसमञ्जसं**=स्वतन्त्रं प्रधानं जगतः कारणमित्यसमञ्जसमयुक्तमित्यर्थः ।

**"असन्नेव स भवति असद् ब्रह्मेति वेद चेत्"** (तै०२ । ६) इत्यादिश्रुत्या **"असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्"** (गी० १८ । ८) इत्यादिस्मृत्या चानीश्वरवादस्य विशेषतो निन्दित-

त्वेन स्वतन्त्रप्रधानकारणवादस्य प्रतिषेधस्तावदवगम्यते । न च श्रुतिस्मृतिभ्यां प्रतिषेधो यस्यावगम्यते तस्य यत्नसहस्रेणापि युक्तत्वं प्रतिपादयितुं शक्यते । प्रबलत्वात् । प्रबलं प्रमाणं हि श्रुतिस्मृती भवतो विद्यावतां मनीषिणाम् । यत्रेदं स्मर्य्यते "**श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः । ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ**" (मनु० २ । १०) "**योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः । स साधुभिर्बहिष्कार्य्यो नास्तिको वेदनिन्दकः**" (मनु० २ । ११) इति । वेदनिन्दकः=श्रुतिस्मृतिनिन्दकः । श्रुतिर्वेदः, तदनुकूलत्वात् स्मृतिरपि वेदः । अतस्तर्कासहत्वाद् यथा स्वतन्त्रं प्रधानं जगतः कारणमित्यसमञ्जसं तथा श्रुतिस्मृतिप्रतिषिद्धत्वादप्यसमञ्जसमिति निश्चेतव्यम् ॥ १० ॥

**ननु** नास्माभिः श्रुतिस्मृती प्रमाणं मन्येते किं नस्तदवगतप्रतिषेधोपन्यासेनाकिञ्चित्करेणेति परोक्तिमिमां युक्तामनुमन्यमानः स्वतन्त्रप्रधानकारणवादानन्तरं निराकर्तव्यतयोपस्थितेन तत्समकक्षेण स्वतन्त्रपरमाणुकारणवादेन पुनस्तत्रासामञ्जस्यं तावदुपन्यस्यति—

"**महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्**" ॥ ११ ॥

असमञ्जसमित्यनुवर्तते । असामञ्जस्ये पक्षान्तरमेतदिति वाकारेणार्थ्यते । **महद्दीर्घवत्**=महदिति त्र्यणुकमुच्यते, दीर्घमिति द्व्यणुकम्, तस्य ह्रस्वत्वेऽप्येकपरमाण्वपेक्षया दीर्घत्वोपपत्तेः, यथा स्वतन्त्रपरमाणुकारणवादे त्र्यणुकस्य द्व्यणुकस्य च **ह्रस्वपरिमण्डलाभ्यां**=ह्रस्वाद् द्व्यणुकात् परिमण्डलात् परमाणोश्चोत्पादोऽसमञ्जसः, तथा स्वतन्त्रं प्रधानं जगतः कारणमित्यसमञ्जसमित्यर्थः ।

यथा हि स्वतन्त्राः खलु स्वतन्त्रप्रधानकारणवादिनः केचित् पुरुषाणां भोगापवर्गसिद्ध्यै परमेश्वरानधिष्ठितात् प्रधानाद् दृश्यमानस्यास्य पृथिव्यादिजगतः सृष्टिमातिष्ठन्ते तथा स्वतन्त्रपरमाणुकारणवादिनोऽपि केचित् पुरुषाणां भोगापवर्गसिद्ध्यै परमेश्वरानधिष्ठितेभ्यः परमाणुभ्यस्तदुत्पादं

सञ्चिरन्ते । तेषामुभयेषां प्रक्रियातः किञ्चिद्भेदेऽपि सिद्धान्ततो भेदो न वर्तते । अत एव पूर्वेषां तेषां निराकरणेनापरेषामेषां निराकरणप्रसङ्गोऽपि न विरुध्यते । द्वाभ्यां संयुक्ताभ्यां हि परमाणुभ्यां द्व्यणुकं, त्रिभ्यः संयुक्तेभ्यो द्व्यणुकेभ्यस्त्र्यणुकम्, एवं त्र्यणुकेभ्यश्चतुरणुकं चतुरणुकेभ्यश्च पञ्चाणुकादिक्रमेण पृथिव्यादिकं सर्वं जगदुपजायते । तत्र पूर्वं पूर्वं परमाण्वादिद्रव्यं कारणम्, उत्तरमुत्तरं द्व्यणुकादिद्रव्यं कार्य्यम् । यथा कारणद्रव्येभ्यः कार्य्यद्रव्याण्युत्पद्यन्ते तथा कारणद्रव्यगुणेभ्यः कार्य्यद्रव्यगुणाः प्रादुर्भोभूयन्ते । घटादिवद् रूपादिमन्तश्च परमाणवो जातकर्माणः प्रतिसर्गवेलायां परस्परं वियुज्य नभोमण्डले पृथक् पृथगवतिष्ठन्ते, सर्गवेलायां च परस्परं संयुज्य द्व्यणुकादिक्रमेण पृथिव्यादिकं जगदिदमारभन्ते । पुरुषाश्च स्वतन्त्रप्रधानकारणवादिनामिव नाना व्यापकाश्च शरीरावच्छेदेनैव मनःसम्बन्धात् तत्तत्पदार्थं चेतयन्ते नान्यत्र । मिथ्याज्ञाननिमित्तश्च तेषां मनःसम्बन्धो यावन्मिथ्याज्ञानमनुवर्तते तावत्ते शरीरं परिगृह्य तत्सम्बन्धाद् यथाकर्म सांसारिकं सुखं दुःखमुपभुञ्जते । तत्त्वज्ञानेन मिथ्याज्ञानापाये च निवृत्ततत्सम्बन्धाः सर्वतः सर्वथा परिमुच्यन्ते न पुनः कर्हिचित् संसारगर्भमापद्यन्ते । मिथ्याज्ञानापायकारणं तत्त्वज्ञानं च प्रयत्ननिष्पाद्यं न तत्रास्ति कस्यचित् साहाय्यमपेक्षितव्यमित्येषा किल स्वतन्त्रपरमाणुकारणवादिनां प्रक्रिया । सेयमुदाहरणमुद्रयाऽसमञ्जसेति प्रतिपाद्यते । स्वतन्त्रप्रधानकारणवादवत् स्वतन्त्रपरमाणुकारणवादोऽपि श्रुतिस्मृतिभ्यां तर्कैश्च प्रतिषिद्धत्वाद् दूरतः परित्यक्तव्यो वैदिकैरिति तत्प्रतिपादनाशयः । यथा हि स्वतन्त्रपरमाणुकारणवादे खलु परमाण्वादिभ्यो द्व्यणुकादीनामुत्पादोऽसम्भवादसमञ्जसस्तथा स्वतन्त्रं प्रधानं जगतः कारणमित्येतदप्यसमञ्जसमिति मन्तव्यम् ॥ ११ ॥

स्वतन्त्रप्रधानकारणवादो निराकारि । तत्समकक्षः स्वतन्त्रपरमाणुकारणवादः सम्प्रति निराक्रियते । स च पूर्वत्रोदाहरणमुद्रयोपस्थाप्य द्व्यणुकत्र्यणुकादिजगदुत्पादासम्भवादसमञ्जस इति निरूपितम् । तदेवो-

पपादयिष्यन् कस्मात् परमाण्वादिभ्यो द्व्यणुकत्र्यणुकादिजगदुत्पादसम्भवाभाव उच्यत इत्याकाङ्क्षायामाह—

**"उभयथाऽपि न कर्मातस्तदभावः"** ॥ १२ ॥

ह्रस्वपरिमण्डलाभ्यामित्यनुवर्तते । **उभयथाऽपि**=प्रकारद्वयेनापि **कर्म**=परमाणुषु परस्परसंयोगकारणं कर्म **न**=नोपपद्यते, **अतः**=अस्माद् हेतो**स्तदभावः**=तदुत्पादसम्भवाभावः, तदा महद्दीर्घे परामृश्यते, त्र्यणुकं महत्, द्व्यणुकं दीर्घमित्युक्तम्, ह्रस्वपरिमण्डलाभ्यां द्व्यणुकत्र्यणुकादिजगदुत्पादासम्भव उच्यत इत्यर्थः ।

यदा खलु परमाणुः परमाण्वन्तरेण द्व्यणुकं द्व्यणुकान्तरेण त्र्यणुकं त्र्यणुकान्तरेण चतुरणुकादिकं च चतुरणुकादिना संयुज्यते तदा द्व्यणुकत्र्यणुकादिक्रमेण पृथिवीपर्य्यन्तं सर्वं जगदुत्पद्यते । तत्संयोगश्च कर्मकार्य्यं न तावदुत्पत्तुमर्हति यावत् तत्कारणं कर्म नोपजायते । कर्म चाभिघातादिसंयोगादुपजायते किंवा प्रयत्नान्नास्ति तदुपजनने तृतीयः कश्चित् प्रकारः । अभिघातादिसंयोगोऽपि कर्मजन्यत्वात् सति कर्मण्युपजातुमर्हति नासति तस्मिन्निति प्रयत्न एवैकस्तज्जनकः परिशिष्यते । स च चेतनधर्मो न परमाणुषु कथञ्चिदुपपद्यते । चेतनं च तदधिष्ठातृ न किञ्चिदभ्युपगम्यते यस्य प्रयत्नेन तत्सम्बन्धिषु तेषु कर्मोपजायेत । जीवात्मानः पुरुषाश्च तदानीं शरीराभावेन तदवच्छिन्नमनःसंयोगाभावान्नोपजातप्रयत्ना विद्यन्ते येन तत्सम्बन्धादपि तेषु कर्मोपजननं परिकल्प्येत । तदेवं कर्मकारणानुपपत्त्याऽनुपपन्नं परमाणुषु कर्म । न च तस्मिन्ननुपपद्यमाने तन्निबन्धनः संयोगस्तत्र सम्भवति । तदसम्भवे च सुतरां द्व्यणुकत्र्यणुकादिजगदुत्पादासम्भवः । **तस्मात्** स्वतन्त्रपरमाणुकारणवादोऽपि स्वतन्त्रप्रधानकारणवादवदसमञ्जस इति द्रष्टव्यम् ॥ १२ ॥

**स्यादेतत्**—येषां खलु पुरुषाणां भोगापवर्गसिद्ध्यर्थं परमाणुभिर्द्व्यणुकत्र्यणुकादिक्रमेण पृथिवीपर्य्यन्तं सर्वमिदं जगदारभ्यते तेषाम-

**दृष्टेन** तत्र कर्मोत्पत्स्यते। सर्वत्र जीवात्मादृष्टस्यैव सृष्टिकारणत्वाभ्युपगमात्। नहि परतन्त्रपरमाणुकारणवादिनाऽपि तस्य तद्धेतुत्वं प्रत्याख्यातुं शक्यते। पुरुषादृष्टेन परमाणुषु कर्मोपपत्त्या च संयोगसम्भवाज्जगदुत्पादोऽपि सम्भवति नास्ति तदसम्भव इति। अस्योत्तरं पठति—

**"समवायाभ्युपगमाच्च साम्यादनवस्थितेः" ॥ १३॥**

न कर्म तदभाव इति पदत्रयमनुवर्तते। भिन्नक्रमश्चः। **समवायाभ्युपगमात्**=अदृष्टस्य पुरुषात्मनि समवायसम्बन्धाङ्गीकारात् परमाणुषु तत्सम्बन्धाभावेन तन्निबन्धनं कर्म नोपपद्यते। **साम्यात्**=अदृष्टवत्पुरुषात्मभिः सम्बन्धस्य सर्वदा समत्वादनवस्थितेः=सृष्टिप्रलयाव्यवस्थितेश्च तदवस्थस्तदुत्पादासम्भव इत्यर्थः।

**सत्य**मदृष्टस्य सर्वत्र सृष्टिकारणत्वमभ्युपगम्यते, तद्बिना सृष्टिवैचित्र्यानुपपत्तेः, अत एवाहुर्भगवन्तः सांख्याचार्य्याः **"कर्मवैचित्र्यात् सृष्टिवैचित्र्यम्"** ( सां० ६। ४६ ) इति, **तथापि** न तत् परमाणुषु कर्मकारणमुपपद्यते। तस्य पुरुषात्मसु समवायाभ्युपगमेन तत्र तत्समवायाभावात्। सामानाधिकरण्येन हि कार्य्यकारणभावोऽवकल्पते न वैयधिकरण्येन। नहि यत्र परमाणुषु कर्मापेक्ष्यते तत्रादृष्टं समवैति येनेदं तत्कारणमुपपद्येत। पुरुषात्मसु तत्समवायो युष्माभिरभ्युपगम्यते। तत्र समवेतस्य च तस्य सुव्यक्तः परमाणुषु सम्बन्धाभाव इति न तेन तत्र कर्मोपजनयितुं पार्य्यते। सामानाधिकरण्याभावात्। अथादृष्टवत्पुरुषात्मभिः सम्बन्धादस्ति सामानाधिकरण्यमिति चेत्?। न। सम्बन्धसाम्येन सृष्टिप्रलयाव्यवस्थाप्रसङ्गात्। अदृष्टवत्पुरुषात्मभिः परमाणूनां सम्बन्धो हि सृष्टिप्रलययोः समानो विद्यते। स यथा सृष्टिकारणं कर्मोत्पादयिष्यति तथा प्रलयकारणं कर्माप्युपजनयिष्यति। समाने चोभयकारणकर्मोत्पादे सृष्टिरेव वा सततं प्रवर्तेत प्रलय एव वा नित्यमनुवर्तेत। विरोधेन परस्परप्रतिबन्धादुभयं वा न भवेत्। नियामकाभावात्। नहि तन्नियामकं किञ्चिदभ्युपेयते। तदभावे चेयता

कालेन सृष्ट्या भवितव्यमियता कालेन च प्रलयेनेति न नियन्तुं शक्यते । तथा च महतीयं तदव्यवस्था प्रसज्येत । अथादृष्टमेवोभयं नियंस्यतीति तु मनोरथमात्रम् । अचेतनत्वात् । न चाचेतनं किञ्चिन्नियन्तुमर्हति । यत् किल कालमात्रामपि न चेतयति तत् किं नियंस्यतीति न विज्ञायते । **तस्मात्** पुरुषादृष्टनिमित्तं परमाणुषु कर्मेत्यनुपपन्नम् । तदनुपपत्त्या च संयोगासम्भवात् तदवस्थो द्व्यणुकत्र्यणुकादिजगदुत्पादासम्भवः ॥ १३ ॥

**अथोच्येत**—अस्माभिः परमाणवः खलु कर्मस्वभावा अभ्युपगम्यन्ते । तेषु पुरुषादृष्टेन यदा यथा कर्मापेक्ष्यते तदा तथा तदुत्पादाभावेऽपि स्वभावात् तत् तदा तथा चोत्पत्स्यते । नहि स्वभावस्य भवति नाम किञ्चिदनुपपन्नम् । कर्मोपपत्त्या च संयोगसम्भवाद् द्व्यणुकादिजगदुत्पादोऽपि सम्भवति नास्ति तदसम्भव इति । अस्योत्तरं पठति—

**"नित्यमेव च भावात्"** ॥ १४ ॥

कर्मण इति षष्ठ्या विपरिणम्य तदभावोऽनवस्थितेरिति च पदत्रयमनुवर्तते । अवधारणेन कर्माभावो व्यवच्छिद्यते । द्व्यणुकादिजगदुत्पादासम्भवे हेत्वन्तरमेतदिति चार्थः । **नित्यम्भावात्**=कर्मणः स्वाभाविकत्वे सततमुत्पादात् सृष्टिप्रलयानवस्थितेर्द्व्यणुकादिजगदुत्पादासम्भवस्तदवस्थ इत्यर्थः ।

नित्याः खलु परमाणवः । तत्र सृष्टिप्रलयकारणं कर्म स्वाभाविकं चेदभ्युपगम्येत तदा नूनमिदं नित्यं भवेत् । परमाणूनां नित्यत्वेन स्वभावनित्यत्वात् तद्धेतुककर्मणोऽपि नित्यभावोपपत्तेः । नहि स्वभावस्य नित्यत्वे तद्धेतुकं कर्म नित्यं न बोभोतीति कथञ्चिदुपपद्यते । कर्मणस्तत्र नित्यभावे च यदैव सृष्टिहेतुना केन चिदेकेन कर्मणा परमाणुः परमाण्वन्तरेण संयोक्ष्यते तदैव स्वभावप्रभवेन कर्मान्तरेण द्रागित्येव वियोक्ष्यते । सति कर्मणि संयोगवियोगयोरवश्यम्भावात् । कर्मवत् संयोगवियोगयोरप्यवस्थितत्वात् च न द्व्यणुकमुत्पद्येत न त्र्यणुकम् । नहि

यावदुत्पद्यमानं कर्म परमाणुं परमाण्वन्तरेण संयोज्य नोपरमते तावत् द्व्यणुकमुत्पत्तुमर्हति । तदनुत्पत्तौ च कुतस्तरां त्र्यणुकं कुतस्तमां च पृथिवीपर्य्यन्तं विश्वं जगत्। एवं यदैव प्रलयहेतुना केनचिदेकेन कर्मणा परमाणुः परमाण्वन्तरेण वियोक्ष्यते तदैव स्वभावप्रभवेन कर्मान्तरेण त्वरितं संयोक्ष्यते। सति कर्मणि संयोगानन्तरं विभागवद् विभागानन्तरं संयोगस्याप्यावश्यकत्वात्। कर्मवद् वियोगसंयोगयोरपि नित्यभावे च न द्व्यणुकं प्रलीयेत न त्र्यणुकं नापि पृथिवीपर्य्यन्तं सर्वं जगत् । सेयं कर्मणः स्वाभाविकत्वे दुर्धर्षा खलु सृष्टिप्रलययोरनवस्थितिः । **अथोच्येत**—यदा यत् कर्मापेक्ष्यते यथा सृष्टिवेलायां सृष्टिकर्म प्रलयवेलायां च प्रलयकर्म तदेव तदा भविष्यति स्वभावान्नेतरदिति। **नैतद् वक्तव्यम्**। नियामकाभावेनेदृग्व्यवस्थानुपपत्तेः । भवति हि नियामके कस्मिंश्चिदीदृशी व्यवस्थोपपद्यते न तदभावे। न च भवान् नियामकं किञ्चिदभ्युपगच्छति। स्वभावो नियंस्यतीति तु स्वशिष्यविमोहनमन्त्रमात्रम्। तस्य धर्ममात्रत्वेन नियमनशक्तेरयोगात् । तत्रापि नियमनस्वभावान्तरकल्पने चानवस्था प्रसज्येत । सा च मूलक्षयकरी प्रसिद्धेति कृतमनया कुसृष्टकल्पनया। न च विश्वजगन्नियन्तारं भगवन्तं परमेश्वरं परित्यज्य किञ्चिदुपायान्तरं विद्यते येन प्रसक्तेयं सृष्टिप्रलययोरनवस्थितिः सुखेनोपशाम्येत । नचायुष्मन्तो भगवन्तं तमभ्युपयन्ति । तदभ्युपायाभावे च सृष्टिप्रलययोरनवस्थितेस्तदवस्थो द्व्यणुकादिजगदुत्पादासम्भवः । **तस्मादयुक्तः** स्वतन्त्रपरमाणुकारणवादः ॥ १४ ॥

स्वतन्त्रपरमाणुकारणवादे जगदुत्पादासम्भवो दोषस्तावदुपन्यास्ति । सम्प्रति तत्र दोषान्तरमुपन्यस्यते—

**"रूपादिमत्त्वाच्च विपर्य्ययो दर्शनात्"** ॥ १५ ॥

स्वतन्त्रपरमाणुकारणवादे दूषणान्तरमेतदिति चार्थः । **रूपादिमत्त्वात्**=आदिना गन्धरसस्पर्शा गृह्यन्ते, ते चेह रूपेण सहिताः सर्वे

व्यक्ता अभिप्रेयन्ते नाव्यक्ताः, यथादर्शनमभ्युपगमात्, परमाणूनां व्यक्तरूपादिमत्त्वाद् **विपर्य्ययः**=नित्यत्वादिविपर्य्ययः प्रसज्येत, कुतः? **दर्शनात्**=लोके व्यक्तरूपादिमतां घटपटादीनां नित्यत्वादिविपर्य्ययोपलम्भादित्यर्थः ।

दृश्यमानस्यास्य व्यक्तरूपादिमतो भूतभौतिकस्य द्व्यणुकादिपृथिवीपर्य्यन्तस्य विश्वस्य जगतः कारणं किल व्यक्तरूपादिमन्तो नित्या निरवयवाश्च परमाणवोऽभ्युपगम्यन्ते । नैतद् वयं युक्तमीक्षामहे । व्यक्तरूपादिमत्त्वेन तेषां घटपटादिवन्नित्यत्वादिविपर्य्ययप्रसङ्गात् । लोके हि व्यक्तरूपादिमन्तो घटपटादयोऽर्था अनित्याः सावयवाश्चोपलभ्यन्ते । परमाणवोऽपि चेद् व्यक्तरूपादिमन्तोऽभ्युपगम्येरन् तदाऽवश्यं घटपटादिवदनित्याः सावयवाश्च प्रसज्येरन् । नह्ययथालोकोपलम्भं किञ्चित् कल्पयितुं शक्यते । अनित्याः सावयवाश्च प्रसज्यमानाः कार्य्यं सिध्येयुर्न कारणमिति महदनिष्टम् । अस्माकं तु पृथिव्यादिजगतः कारणभूताः परमाणवः प्रकृत्यवस्थाविशेषत्वादव्यक्तरूपादिगुणका आश्रीयन्त इति नायं दोषः प्रसज्यते । यस्य खलु सङ्कल्पमात्रेण सर्वमिदं जगत् सुखेनोत्पद्यते प्रलीयते च तं सर्वज्ञं सर्वशक्तिं भगवन्तं परमात्मानं जगज्जन्मादिकारणमभ्युपगच्छतां किं नामास्त्यनुपपन्नं यद् भवादृशाः परमात्मविमुखाः स्वतन्त्रा आशङ्केरन् । तस्मादयुक्तोऽयं स्वतन्त्रपरमाणुकारणवादः ॥ १५ ॥

दूषणान्तरमाह—

**"उभयथा च दोषात्" ॥ १६ ॥**

स्वतन्त्रपरमाणुकारणवादे दूषणान्तरमेतदिति चार्थः । **उभयथा**=यथालोकमभ्युपगमेऽनभ्युपगमे च **दोषात्**=दोषप्रसङ्गादयुक्तः स्वतन्त्रपरमाणुकारणवाद इत्यर्थः ।

लोके हि पृथिव्यादयश्चत्वारो द्रव्यभेदाः खलु गुणोत्कर्षापकर्षाभ्यां स्थूलसूक्ष्मसूक्ष्मतरसूक्ष्मतमा निरीक्ष्यन्ते । तत्कारणं परमाणवश्चेत् तदनुगुणा अभ्युपगम्येरन् तदा तेऽपि गुणोत्कर्षापकर्षाभ्यां स्थूलसूक्ष्मसूक्ष्म-

तरसूक्ष्मतमाः प्रसज्येरन्। तथा च न परमाणवः स्युः। अथ न ते तदनुगुणा अभ्युपगम्येरन्? तदा यथालोकमभ्युपगम्यत इति व्याहन्येत। अयथालोकस्याप्यभ्युपगमात्। सोऽयमुभयथा दोषप्रसङ्गः। अथ गुणोत्कर्षापकर्षौ स्थूलादिभावे तेषां न कारणमिति चेत्? **तदा** वक्तव्यं कुतः पृथिवी स्थूला प्रजायते, सूक्ष्मा आपः, सूक्ष्मतरं तेजः, सूक्ष्मतमो वायुरिति। नहि कार्य्यवैषम्यं कारणवैषम्यमन्तरा भवितुमर्हति। परमाणूनामेवैष स्वभावो यत्ते समानाः सन्तोऽपि कार्य्यं विषममारभन्त इति। हन्त स्वभाववैषम्यकारणमपि विवेचनीयं कस्मादेषां स्वरूपतो वैषम्याभावेऽपि स्वभावतो वैषम्यं जायते। वयं तु गुणोत्कर्षापकर्षाभ्यामतिरिक्तं नान्यत् किञ्चित् कारणं पश्यामो नापि कल्पयितुं पारयामः। यथालोकं कल्पनस्यैवौचित्यात्। लोके च गुणोत्कर्षापकर्षाभ्यामेव कारणानां कार्य्यवैषम्यमुपलभ्यते न स्वभावात्। नहि नानारूपास्तन्तवो नानारूपं पटं स्वभावादारभन्ते। भवन्तश्चेदलौकिकं किञ्चित् तद्वैषम्यकारणं पश्यन्ति पश्यन्तु नाम नास्ति स्वतन्त्राणां कुत्रापि कश्चिन्निर्बन्धः। कदाचिदयथालोककल्पनं कदाचिद् यथालोककल्पनं च युष्मभ्यमेव रोचते नास्मभ्यमित्यन्यदेतत्। न च यस्य स्वभावादेव कार्य्यवैषम्यं तस्य परमाणुषु गुणोत्कर्षापकर्षौ किमर्थमास्थीयेते इति विज्ञायते। दर्शनोपपत्त्यर्थं चेत्? तदा स्थूलादिभावोऽपि यथादर्शनमुपपादयितव्यः किं तत्र स्वभावाश्रयणेन। स च गुणोत्कर्षापकर्षाभ्यां प्रत्यक्ष इति स एव पुनरुभयथा दोषप्रसङ्गः। **तस्मा**दयुक्तः स्वतन्त्रपरमाणकारणवादः॥ १६॥

अन्यं दोषमाह—

**"अपरिग्रहाच्चात्यन्तमनपेक्षा"** ॥ १७॥

स्वतन्त्रपरमाणुकारणवादेऽन्योऽयं दोष इति चार्थः। **अपरिग्रहात्**=शिष्टानां परिग्रहाभावाद**त्यन्तं**=नितान्तम**नपेक्षा**=उपेक्षा स्वतन्त्रपरमाणुकारणवादे विधातव्येत्यर्थः।

यथा हि श्रुतिस्मृतिभ्यां तर्कैश्च प्रतिषिद्धत्वात् स्वतन्त्रप्रधानकारणवादः खलु शिष्टैर्न परिगृह्यते तथा स्वतन्त्रपरमाणुकारणवादोऽपि न परिगृह्यते। समानयोगक्षेमत्वात्। अतस्तद्देशोऽपि भृशमुपेक्षितव्यो वैदिकैः सततं श्रेयोऽर्थिभिः ॥ १७ ॥

द्वेधा किल स्वतन्त्रपरमाणुकारणवादिनो भवन्ति परमाणूनां कार्य्यमेतद् द्व्यणुकादिपृथिवीपर्य्यन्तं विश्वं जगदित्येके कार्य्यवादिनः। परमाणूनां पुञ्ज इत्यपरे पुञ्जवादिनः। पुञ्जः सङ्घातः समुदाय इत्यनर्थान्तरम्। एतेषां परमाणवः क्षणिकाः पृथिवीपर्य्यन्तस्तत्सङ्घातोऽपि क्षणिकः, तदनुभविता जीवात्माऽपि क्षणिकः, स च विज्ञानतो नातिरिच्यते, विज्ञानं चित्तं बुद्धिरिति च समानार्थमिति कार्य्यवादिभ्यो विशेषः। तत्र कार्य्यवादिनो निरासिषत। सम्प्रति पुञ्जवादिनो निरस्यन्ते। तन्निरासकं सूत्रं पठति—

**"समुदाय उभयहेतुकेऽपि तदप्राप्तिः" ॥ १८ ॥**

**समुदाये**=भूतभौतिकात्मके बाह्ये चित्तचैत्तात्मके चाध्यात्मिके समुदाय **उभयहेतुकेऽपि** समुदायस्येश्वरचेतनैकहेतुकत्वमपिना व्यावर्त्त्यते, परमाणुहेतुके स्कन्धहेतुके चाभ्युपगम्यमानेऽपि **तदप्राप्तिः**=तदा समुदायं परामृशति, प्राप्तिः सिद्धिः, समुदायासिद्धिर्वेदितव्येत्यर्थः। **भोग्य**-भोगसाधन-तद्भोक्त्रात्मकं खलु विश्वमिदं जगद् द्वाभ्यां समुदायाभ्यां विभज्यते। भोग्यलक्षणो भूतभौतिकात्मको बाह्यसमुदायः प्रथमः, भोक्तृभोगसाधनलक्षणश्चित्तचैत्तात्मकश्चाध्यात्मिकसमुदायो द्वितीयः। तत्र बाह्यसमुदायस्य हेतुः खरस्नेहोष्णेरणस्वभावा गन्धरसरूपस्पर्शपरमाणवः। ते चत्वारः परब्रह्मपरमेश्वरानधिष्ठिताः स्वयमेव पृथिव्यप्तेजोवायुरूपेण संहन्यन्ते। तत्सङ्घातभूताः पृथिव्यादयश्चौषध्यादिरूपेण स्वयमेव समुदीयन्ते। क्षणिकानां च तेषामेष भूतभौतिकः समुदायोऽपि क्षणिको न स्थिरः। आध्यात्मिकसमुदायस्य च हेतू रूपविज्ञानवेदनासंज्ञासंस्काराः पञ्च स्कन्धाः। रूप्यन्ते विषया एभिरिति व्युत्पत्त्या विषयप्रवणानि सशरीराणीन्द्रियाणि रूपस्कन्धः प्रथमः।

तदिदं भोगसाधनम् । तत्तद्विषयग्राहकमहमित्यभिमानास्पदमालयविज्ञानं विज्ञानस्कन्धो द्वितीयः । सोऽयं भोक्ता । प्रियाप्रियानुभयविषयस्पर्शे सुखदुःखोपेक्षात्मकचित्तावस्थाविशेषो वेदनास्कन्धस्तृतीयः । डित्थः कपित्थः कुण्डली कटकी कृष्णो गौरः शूद्रो ब्राह्मणश्चरति पठति चेत्येवञ्जातीयकं संज्ञासंसर्गादिप्रतिभासं प्रवृत्तिविज्ञानं संज्ञास्कन्धश्चतुर्थः । सोऽयं भोगः । रागादयः क्लेशाः, मदमानादय उपक्लेशाः, धर्माधर्मौ च संस्कारस्कन्धः पञ्चमः । तदेतद्भोगनिमित्तम् । तेषु चैषु पञ्चसु स्कन्धेषु विज्ञानस्कन्धश्चित्तम्, इतरे चत्वारश्चैत्ताः । तदेतत् समुदायद्वयाश्रयश्च सर्वो लोकव्यवहार इति समुदायवादिनोऽभ्युपयन्ति । तन्न युक्तं पश्यामः । समुदायिनां क्षणिकत्वेन समुदायासिद्धेः । क्षणिकाः खलु समुदायहेतवः परमाणवः स्कन्धाश्च, यावत् ते समुदायार्थं व्याप्रियन्ते तावत् स्वयमेव प्रध्वंसन्ते । न च प्रध्वस्तानां व्यापाराश्रयत्वमुपपद्यते येनामी तद्धेतवः सम्पद्येरन् । नहि ये स्वसत्ताक्षणादूर्ध्वं स्थातुमपि नोत्सहन्ते ते समुदेतुं कल्पन्त इति सम्भावयितुमपि शक्यते किं पुनरवधारयितुम् । नूनमेतत् सम्भावनामात्रं क्षणिकाः स्युः समुदायं च साधयेयुरिति सुदृढमीक्षामहे । समुदायं साधयन्तोऽपि किं मिलिताः साधयेयुरुतामिलिता इत्यपि भवति विचारणीयम् । मिलिताश्चेत्? तदाऽन्योऽन्याश्रयापत्त्या समुदायासिद्धिः । सति हि समुदाये तेषां मिलितत्वं सम्भाव्यते, मिलितत्वे च समुदायत्वमिति सुव्यक्तोऽन्योऽन्याश्रयः । न चामिलिता इति वक्तुमीश्यते । अमिलितानां सदातनत्वेन समुदायस्यापि सदातनत्वापत्त्या प्रलयाभावप्रसङ्गात् । अभ्युपेयते च प्रलयः । सन्तानश्च प्रत्येकं तेषां न समुदायिभ्यस्तेभ्यो विशिष्यते । विशिष्यमाणोऽपि क्षणिकः स्यादाहोस्विदक्षणिक इति विवेक्तव्यम् । अक्षणिकश्चेत्? तदा सर्वं क्षणिकमिति व्याहन्येत । क्षणिकश्चेत्? तदवस्था समुदायासिद्धिः । क्षणिकानां समुदायासम्भवात् । न च समुदायासिद्ध्या तदाश्रयो लोकव्यवहारोऽपि सेद्धुमर्हति । दृश्यते च सिध्यन्नेष सर्वो लोकव्यवहारः । तस्मादयुक्तः समुदायवादः ॥ १८ ॥

समुदायसिद्धिमाशङ्क्य निरस्यति—

**"इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात्" ॥ १९ ॥**

**इतरेतरप्रत्ययत्वात्**=स्वोत्तरस्यान्यस्यान्यस्य कारणत्वात् पूर्वस्य पूर्वस्य क्षणिकत्वेऽपि समुदायसिद्धिरिति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः? **उत्पत्तिमात्रनिमित्तत्वात्**=मात्रचा समुदाय-निमित्तत्वं व्यवच्छिद्यते, पूर्वपूर्वक्षणस्योत्तरोत्तरक्षणोत्पत्तिमात्रहेतुत्वात् समु-दायासिद्धेरित्यर्थः ।

**अथोच्येत**—तदा हि क्षणिकानां परमाणूनां स्कन्धानां च समुदायो न सिध्येत् चेदमी स्वसत्ताक्षणादूर्ध्वं प्रध्वंसमाना उत्तरमुत्तरं क्षणमनुत्पाद्य प्रध्वंसेरन् । न चैवं ते प्रध्वंसन्ते । स्वोत्तरोत्तरं क्षणमुत्पाद्य प्रध्वंसमानेषु च तेषु न कश्चित् कालः प्रदर्शयितुं शक्यते यस्मिन्नेते न विद्यन्ते । विद्यमानानां च तेषां सिध्यत्येव समुदायो नास्ति तदसिद्धिरिति । **नैतद्वक्तव्यम्** । तेषामुत्तरोत्तरोत्पत्तिनिमित्तत्वेऽपि समुदायोत्पत्त्यनि-मित्तत्वात् । सन्तु पूर्वे पूर्वे क्षणाः स्वोत्तरोत्तरक्षणोत्पत्तिहेतवः, न चैता-वता तेषां समुदायोत्पत्तिहेतुत्वमुपपद्यते । नहि ये स्वोत्तरोत्तरव्यक्ति-मुत्पादयितुं क्षमन्ते ते व्यक्तीनां तासां समुदायमपि निष्पादयितुं कल्पन्त इति युज्यते । अचेतनत्वात् । अचेतना हि ते सर्वे, न समु-दायोऽप्यस्माभिरुत्पादयितव्य इति चेतयन्ति । न चाचेतयन्तः शक्नु-वन्ति समुदायमुत्पादयितुम् । विद्यमानतामात्रं च न समुदायोत्पत्ति-कारणतामावहति । विद्यमानानामप्यचेतनानामन्तरेणाधिष्ठातारं चेतनं समुदायोत्पादकत्वाननुभवात् । नहि यथा चेतनः कुम्भकारो मृद्दण्ड-चक्रचीवरादिकं सर्वमुपसंहृत्य समुदायात्मकं कुम्भमुत्पादयन्नवलोक्य-ते कुविन्दो वा तन्तुतुरीवेमादिकं विश्वमुपसंहृत्य समुदायात्मकं पट-मारचयन्नालोच्यते तथा मृद्दण्डचक्रचीवरादयस्तन्तुतुरीवेमादयो वाऽ-चेतनाः स्वयमुपसंहृत्य कुम्भमुत्पादयन्तः पटमारचयन्तो वा कचिदनु-

भूयन्ते । न च यत् कुत्राप्यनुभवगोचरतां नापद्यते तदिह कल्पयितुं शक्यते । सर्वत्र यथानुभवं कल्पनस्यैव ज्यायस्त्वात् । अन्यथा सर्वं सर्वत्र कल्प्येत । सर्वज्ञं सर्वशक्ति चेतनं च तदधिष्ठातृ न किञ्चिदाश्रीयते यत् खलु कुम्भकारादिवदचेतनान् तान् सर्वानुपसंहृत्य बाह्यमाध्यात्मिकं च समुदायं निष्पादयेत् । चित्तं च समुदायसिद्ध्यनन्तरं चेतति न तत्सिद्धितः पुरस्तादिति न तदचेतयत् किञ्चित् समुदायितृ घटते । **तस्मात्** पूर्वपूर्वक्षणस्योत्तरोत्तरक्षणोत्पत्तिकारणत्वेऽपि तदवस्था समुदायासिद्धिः ॥ १९ ॥

पूर्वपूर्वक्षणस्योत्तरोत्तरक्षणोत्पत्तिकारणत्वमभ्युपगम्य समुदायासिद्धिमवोचत् । सम्प्रति पूर्वपूर्वक्षणस्योत्तरोत्तरक्षणोत्पत्तिकारणत्वं नोपपद्यत इति प्रतिपादयन् तदसिद्धिमाह—

**"उत्तरोत्पादे च पूर्वनिरोधात्" ॥ २० ॥**

नोत्पत्तिमात्रनिमित्तत्वमिति विपरिणम्यानुवर्तते । समुदायासिद्धौ हेत्वन्तरमेतदिति चार्थः । **उत्तरोत्पादे**=उत्तरक्षणस्योत्पत्तिवेलायां **पूर्वनिरोधात्**=पूर्वक्षणस्य प्रविलयादुत्पत्तिमात्रनिमित्तत्वं नोपपद्यत इत्यर्थः ।

यस्मिन् काले खलु पूर्वः क्षणः परमाणुः स्कन्धो वा वरीवृत्यते तस्मिन्नेव काले नोत्तरः क्षणः परमाणुः स्कन्धो वा कथञ्चिदुत्पत्तुमुत्सहते । द्वयोः समानकालत्वेन कार्य्यकारणभावानुपपत्तेः । कारणं हि पूर्वं भवति कार्य्यं च पश्चात् । अत एव यन्नियमेन कार्य्यात् पूर्वं वर्तते तत् कारणं यच्च ततोऽव्यवहितं पश्चात् तत् कार्य्यमिति लक्षणविदस्तल्लक्षणमाचक्षते । चेत्ते द्वे पूर्वोत्तरक्षणे समानकालके प्रतिज्ञायेयातां तदा किं तत्र कारणं किञ्च कार्य्यमिति न विविच्य निर्धार्य्येयाताम् । नहि पूर्वापरकालाभावेऽस्ति कश्चिदन्यस्तन्निर्धारणोपायः । न च ययोर्विवेकेन निर्धारणमपि न सम्पद्यते तयोः कार्य्यकारणभावः कथञ्चिदुपपद्यते । **अथ** तदुपपत्त्यर्थं पूर्वक्षणस्य योऽसौ स्वसत्ताक्षणस्तस्मात् समनन्तरक्षण

उत्तरक्षणस्योत्पत्तिरभ्युपगम्येत ? **तदा**ऽपि पूर्वोत्तरक्षणयोस्तयोर्हेतुफलभावो नोपपादयितुं शक्यते । तदानीं पूर्वक्षणस्य निरुद्धत्वेनोत्तरक्षणोत्पत्तिहेतुत्वासम्भवात् । उत्पद्यमाने ह्युत्तरस्मिन् क्षणे पूर्वः क्षणो निरुध्यत इत्यभ्युपेयते । न च निरुद्धस्याभावग्रस्तत्वादुत्तरक्षणोत्पत्तिहेतुत्वं सम्भवति । नहि निरुद्धा मृद् घटोत्पत्तिहेतुरवकल्पत इति क्वचिदस्ति दर्शनं येनेहापि निरुद्धस्य पूर्वक्षणस्योत्तरक्षणोत्पत्तिहेतुत्वं सम्भवतीति कल्प्येत । न चादृष्टस्य कल्पनं श्रेयः । **अथोच्येत**—कारणस्य कार्य्यात् पूर्वकाले सत्त्वमावश्यकं न कार्य्यकाले, तदानीं कार्य्यस्य सिद्धत्वेन कारणसत्त्वानुपयोगात् । उत्तरक्षणात् पूर्वस्मिन् काले चास्ति पूर्वक्षणस्य सत्त्वम् । अतो नास्ति तस्य तद्धेतुत्वासम्भव इति । **नैतद् वक्तव्यम्** । कार्य्यान्वयासिद्ध्या तस्य तद्धेतुत्वासंभवस्य तादवस्थ्यात् । न खलु कार्य्यात् पूर्वस्मिन् काले सत्तामात्रमश्नुवानं कारणं तत्कारणतां भजते यावत् तत्र नान्वीयते । नहि घटादिकारणं भवन्ती मृद् घटादिकं रुचकादिकारणं भवत् सुवर्णं च रुचकादिकं नान्वेति । चेन्नान्वियात् कथं तर्हि तन्मृत्सुवर्णात्मनाऽनुभवगोचरतामियात् । न च सादृश्यनिबन्धनस्तस्य तदात्मनाऽनुभवो नान्वयनिबन्धन इति युक्तं प्रतिपाद्यते । असत्यन्वये सादृश्यस्याप्यनुपपत्तेः । न चोत्तरक्षणस्य पूर्वः क्षणः कुम्भकारादिवत् कारणमिष्यते येन तत्र तदन्वयो नापेक्ष्येत । मृदादिवत्तु स तस्य कारणमास्थीयते । न चोत्पत्तेः प्राक् सत्त्वमश्नुवानस्यापि तस्य तदुत्पत्तिवेलायामसतस्तत्रान्वयः सिध्यति । तदसिद्ध्या च तदवस्थस्तस्य तद्धेतुत्वासम्भवः । अत एवोक्तं दर्शनान्तरेऽपि "**पूर्वापाय उत्तरायोगात्**" (सां० १ । ३९) इति । **तस्मात्** पूर्वः क्षणः कारणं तदुत्तरः क्षणः कार्य्यमित्यनुपपन्नम् ॥ २० ॥

अथोत्तरक्षणोत्पत्तिवेलायामसत्यपि पूर्वस्मिन् क्षणे कारणे बलात् तदुत्पत्तिमभ्युपगच्छतोऽनिष्टमाह—

**"असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा वा" ॥२१॥**

**असति**=पूर्वक्षणेऽसत्युत्तरक्षणस्योत्पत्तिमभ्युपगच्छतः **प्रतिज्ञोपरोधः**=पूर्वक्षणः कारणमुत्तरक्षणः कार्य्यमिति प्रतिज्ञाबाधः स्यात्, **अन्यथा**=पूर्वक्षणस्यासत्त्वानभ्युपगमे च **यौगपद्यं**=पूर्वोत्तरक्षणयोर्यौगपद्यं प्रसज्येत, तथा च क्षणिकत्वहानिरित्यर्थः ।

असत्यपि पूर्वस्मिन् क्षणे कारणे चेदुत्तरस्य क्षणस्योत्पत्तिरभ्युपगम्येत तदा पूर्वः क्षणः कारणं तदुत्तरः क्षणः कार्य्यमिति प्रतिज्ञोपरुध्येत । नहि मृदसत्त्वे घटोत्पत्तिमभ्युपगच्छतो "मृदो घट उत्पद्यते" इति प्रतिज्ञा नोपरुध्यते । अथात्मप्रतिज्ञानुपरोधाय यावदुत्तरः क्षण उत्पद्यते तावत् पूर्वः क्षणोऽवतिष्ठत इत्यभ्युपेयेत **तदा** द्वयोस्तयोर्यौगपद्यप्रसक्त्या पूर्वक्षणस्य क्षणद्वयावस्थानेन क्षणिकप्रतिज्ञा हीयेत । क्षणमात्रावस्थानं हि भावमात्रस्य क्षणिकत्वमभ्युपेयते । न च क्षणद्वयावस्थितः पूर्वः क्षणः कदाचित् क्षणिको भवितुमर्हति । नूनमेषोभयतः पाशारज्जुः पूर्वक्षणस्योत्तरक्षणोत्पत्तिकारणत्वे क्षणिकत्वं हीयते क्षणिकत्वे च कारणत्वं नोपपद्यते । न च कारणत्वानुपपत्तौ समुदायः सेद्धुमर्हति । तदसिद्धौ च सुतरां तदाश्रयः सर्वो लोकव्यवहारः । **तस्मा**दयुक्तः समुदायवादः ॥ २१ ॥

उत्पादासिद्ध्या समुदायवादोऽयुक्त इति न्यरूरूपत् । सम्प्रति विनाशासिद्ध्याऽपि न स युज्यत इति निरूपयिष्यन्नाह—

**"प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्" ॥ २२ ॥**

**प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिः**=प्रतिसंख्यानिरोधाप्रतिसंख्यानिरोधयोः प्राप्तिः सिद्धिर्न भवति, कुतः? **अविच्छेदात्**=निरन्वयविनाशो विच्छेदः, भावस्य विच्छेदाभावादित्यर्थः ।

प्रतिसंख्यानिरोधोऽप्रतिसंख्यानिरोध आकाशश्चेत्येतस्मात् त्रयादन्यद् यत् किल विज्ञानं विज्ञातव्यं चास्ति तत् सर्वमुत्पाद्यं क्षणिकं चेति समुदायवादिनो मन्यन्ते । त्रयमपि चैतदवस्तुभूतमभावमात्रं निरुपा-

ल्यमिति यथादर्शनं सङ्गिरन्ते । **प्रति**=प्रतीपा प्रतिकूला **संख्या**=सन्तमिमं भावमसन्तं करोमीत्येवमाकारा बुद्धिः **प्रतिसंख्या,** तया यो **निरोधः**=भावानां निरन्वयविनाशः स **प्रतिसंख्यानिरोधः** । स च बुद्धिपूर्वकत्वाद् बुद्धिमतां विदुषामेव प्रजायते नाविदुषामिति प्रब्रुवते । तद्विपरीतः स्वाभाविको भावानां निरन्वयविनाशोऽ**प्रतिसंख्यानिरोधः** । स च साधारणो न तु पूर्ववदसाधारण इति प्रतिजानते । तद्व्यतिरिक्त आकाशश्च तेषामावरणाभावमात्रं न तु वैदिकानामिवास्माकं तदभावव्यङ्ग्यं शब्दसमवायिकारणं द्रव्यम् । **तत्र** तदभिमत आकाशः परस्तात् प्रत्याख्यास्यते, निरोधौ तावदधुना प्रत्याख्यायेते । **न चैतौ** कथञ्चित् सिध्यतः । भावमात्रस्य निरन्वयविनाशाभावात् । न खलु कस्यचिद् भावस्य निरन्वयविनाशो भवति । स हि सर्वो विनश्यन् सर्वदा सर्वत्र सान्वय एव विनश्यति । न च तस्येदृशी काचिदप्यवस्था निरीक्ष्यते यत्रान्वीयमानं किमपि तद्रूपं नोपलभ्येत । नहि घटो विनश्यन् कस्यामप्यवस्थायां मृद्भावं जहाति । जह्याच्चेन्न स तत्र प्रत्यभिज्ञायेत । प्रत्यभिज्ञायते चा पांसुलपादकाद् हालिकादविशेषेण सर्वेषां सैवेयं मृदिति सर्वत्र । तत्कथं वयं कस्यापि भावस्य निरन्वयं विनाशं प्रतिपद्यामहे । तप्तोपलतलपतितनष्टोदबिन्दोश्च यद्यपि किमप्यन्वयिरूपं प्रत्यभिज्ञायमानं नावलोक्यते तथाप्यस्ति तेजसा मार्तण्डमण्डले नभस्यम्बुदत्वाय नीतं तत्तोयमिति तत्राप्यनुमातुं शक्यते । क्वचिदेकत्र दृष्टेनान्वयिरूपाविच्छेदेनान्यत्रापि तदनुमानसम्भवात् । न च निर्वाणस्य प्रदीपस्य निरन्वयविनाशदर्शनेनान्यत्रापि विनाशो निरन्वयोऽनुमीयत इति युक्तं भाषणम् । सूक्ष्मदशापत्त्या तत्रान्वयिरूपादर्शनोपपत्तौ तदनुमानप्रवृत्त्यनुपपत्तेः । **अथोच्येत** मा नामैतौ निरोधौ भावगोचरौ सैद्धां तत्सन्तानगोचरौ सेत्स्यतः । सन्तानस्य भावत्वाभावादिति । **नैतद्वक्तव्यम्** । भावभिन्नत्वेऽसत्त्वप्रसक्त्या निरोधोपदेशवैयर्थ्यप्रसङ्गात् । सन् खलु बुद्धिबौद्धात्मको निखिलो भाव इत्यभ्युपेयते । तद्भिन्नोऽसन्नभाव इति बलात् प्रसज्येत । न चासतो निरोधोपदेशः कस्मैचिदर्थाय कल्पते । **अथ** काार्य-

कारणभावेन व्यवस्थिताः सन्तानिनो भावा एवोदयव्ययधर्माणः सन्तानो नातिरिक्तः कश्चित् पदार्थ इति चेत्? **तदा** वक्तव्यं तत्र योऽसावन्त्यः सन्तानी भावः सोऽन्ये भावान्तरं कार्य्यं किञ्चिदारभते किंवा नारभते? चेदारभते तदा नासावन्त्यः स्यात् । ततः परस्य भावान्तरस्य सद्भावात् । तथाच सन्तानानिरोधस्तदवस्थः । अथ नारभते तदा नासौ सन् स्यात् । सत्ताविरहात् । अर्थक्रियाकारित्वं हि ते सत्त्वम् । तस्यासत्त्वे च तत्कारणमप्यसत्कारणत्वादसत् । एवं सर्वे सन्तानिनो भावाः । असत्कारणत्वाविशेषात् । तेषामसत्त्वे च नितरां तत्सन्तानोऽप्यसन्निति न तन्निरोधः सिध्यति । स्वतो निरोधरूपस्य तस्य निरोधासम्भवात् । **अतो** भावगोचरौ स्यातां सन्तानगोचरौ वा, सर्वथाऽपि समुदायवादिपरिकल्पितौ निरोधौ न सिध्यत इति सुध्रुवम् ॥ २२ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"उभयथा च दोषात्"** ॥ २३ ॥

प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरित्यनुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । **उभयथा**=सहेतुकत्वे निर्हेतुकत्वे च **दोषात्**=अपसिद्धान्तादिदोषापातात् प्रतिसंख्याऽप्रतिसंख्यानिरोधासिद्धिरित्यर्थः ।

योऽयमुभयविधो निरोधः खलु परिकल्प्यते स किं सहेतुकः स्यात् किंवा निर्हेतुकः । सहेतुकश्चेत्? अपसिद्धान्तः । निर्हेतुकत्वाभ्युपगमात् । हेतुरपि क्षणिकभावो भवेदक्षणिकभावो वा । क्षणिकभावत्वे तस्यापि सहेतुकनिरोधस्यावश्यम्भावादनवस्था । अक्षणिकभावत्वे च पूर्ववदपसिद्धान्तापत्तिः । भावमात्रस्य क्षणिकत्वाङ्गीकारात् । निर्हेतुकश्चेत्? सर्वं क्षणिकं सर्वं नैरात्म्यमित्यादिभावनोपदेशवैयर्थ्यप्रसङ्गः । नहि यद् विनैव हेतुं सिध्यति तत्सिध्यै हेतूपदेशो व्यर्थो न प्रसज्यते । तदेवमुभयथा दोषापातान्निरोधासिद्ध्याऽयुक्तं समुदायवादिनां तत्परिकल्पनम् ॥

**निरोधद्वयस्यासिद्धिरुक्ता । सम्प्रत्याकाशस्याप्यावरणाभावमात्रत्वं न सिध्यतीत्याह—**

**"आकाशे चाविशेषात्"** ॥ २४ ॥

अप्राप्तिरिति छेदेनानुवर्तते। असिद्धौ हेत्वन्तरमेतदिति चार्थः। **आकाशे**=अम्बरेऽ**विशेषात्**=वस्तुत्वप्रतिपत्तेः समानत्वादप्राप्तिः=आवरणाभावमात्रत्वस्यासिद्धिर्वेदितव्येत्यर्थः।

न खल्वावरणाभावमात्रमाकाशं कथञ्चित् सिध्यति। तस्य वस्तुत्वप्रतिपत्तेः पृथिव्यादिवदविशेषात्। यथा हि गन्धादिगुणाश्रयत्वात् पृथिव्यादीनां वस्तुत्वं तावत् प्रतिपद्यते तथा शब्दगुणाश्रयत्वादाकाशस्यापि वस्तुत्वं प्रतिपद्यामहे। नह्यावरणभावमात्रत्वे तस्य शब्दगुणाश्रयत्वं सङ्गच्छते। भ्रान्त्या नूनमाकाशमावरणाभावमात्रं भवन्तः प्रतिजानते। नहि स परमार्थादावरणाभावो विद्यते, किन्तु तदभिव्यङ्ग्यः शब्दगुणाश्रयो-वस्तुभूतो द्रव्यविशेषः। यं किल नव्याः "ईथरम्" इति परिभाषन्ते। स च गन्धादिवद् गुणस्य सतः शब्दस्याश्रयत्वात् सुखेन प्रतिपत्तुं शक्यते। जातिमतः शब्दस्य गन्धादिवद् विशेषगुणत्वं च बाह्यैकेन्द्रियमात्रग्राह्यत्वहेतुना प्रमितमेव न जातु प्रमाणमपेक्षते। अभावोऽपि च प्रतियोग्यनुयोगिनिरूपणाधीननिरूपणो नासत्यनुयोगिनि कथञ्चिन्निरूपयितुं क्षम्यते। यदेव तावदावरणाभावस्यानुयोगि तदेवाकाशमित्यपि नासुवचम्। **तस्माद्**वरणाभावमात्रमाकाशमित्ययुक्तं मतम्॥ २४ ॥

**यथा** समुदायवादिनां निरोधादित्रयं न सिध्यति तथा भावानां क्षणिकत्वमपि न सिध्यतीत्याह—

**"अनुस्मृतेश्च"** ॥ २५ ॥

अप्राप्तिरिति पूर्ववदनुवर्तते। असिद्धौ हेत्वन्तरमेतदिति चार्थः। **अनुस्मृतेः**=प्रत्यभिज्ञानाद् भावानां क्षणिकत्वासिद्धिर्वेदितव्येत्यर्थः।

यत् सत् तत् क्षणिकं यथा दीपशिखादि, सन्तश्चामी सर्वे भावा इति हि समुदायवादिनो मन्यन्ते। सत्त्वं चार्थक्रियाकारित्वमिति सङ्गिरन्ते। न वयमेतद् युक्तमातिष्ठामहे। प्रत्यभिज्ञानेन तेषां क्षणिकत्वस्य बाधात् स्थायित्वप्रतिपत्तेः। चेदमी सर्वे भावाः खलु क्षणिका विद्येरन्

तदा न जातु प्रत्यभिज्ञायेरन्। नहि क्षणिकानां तेषां प्रत्यभिज्ञानमुपपद्यते। तस्य पूर्वापरकालद्वयसम्बन्ध्येकार्थविषयत्वनियमात्। यत् तावज्ज्ञानं पूर्वापरकालाभ्यां सम्बध्यमानमेकमर्थं विषययते तत् प्रत्यभिज्ञानमिति समाख्यायते। अनुस्मृतिरनुस्मरणं च तस्यैव नामान्तरम्। न च क्षणिका भावाः पूर्वापरकालद्वयसम्बन्धेन कदाचित् प्रत्यभिज्ञातुं शक्यन्ते। तेषां पूर्वापरभागविकलकालकलामात्रावस्थायित्वेन पूर्वापरकालद्वयसम्बन्धानुपपत्तेः। प्रत्यभिज्ञायन्ते च "यमहं पूर्वमद्राक्षं तमेवेदानीं पश्यामि, यमहं पूर्वमस्प्राक्षं तमेवेदानीं स्पृशामि" इति। ततः सर्वेषां तेषां क्षणिकत्वबाधेन स्थायित्वं स्फुटं प्रतिपद्यते। स्थायिनां सतामेव पूर्वापरकालद्वयसम्बन्धोपपत्त्या प्रत्यभिज्ञानविषयत्वोपपत्तेः। न च सादृश्यनिबन्धनमेतत् प्रत्यभिज्ञानमुत्पद्यते न स्थायित्वनिबन्धनमिति न्याय्यमुदीर्य्यते। बाधादर्शनात्। यत् खलु सादृश्यनिबन्धनं किञ्चिद् भावविषयं प्रत्यभिज्ञानमुपजायते तत् स्थूलधियाऽदृष्टबाधमपि सूक्ष्मधिया बाध्यमानं दृश्यते। न चैवं सर्वभावविषयमुत्पद्यमानमेतत् प्रत्यभिज्ञानं सूक्ष्मधियाऽपि क्वचित् कदाचिद् बाध्यमानं दृश्यते। न चासति बाधदर्शने सादृश्यनिबन्धनमेतत् प्रत्यभिज्ञानमुपजायत इति कल्पयितुं शक्यते। कल्पनाया निरालम्बनताप्रसङ्गात्। अर्थक्रियाकारित्वं सत्त्वं च भावानां स्थायित्वमवगमयति न क्षणिकत्वम्। स्थायिनामेवार्थक्रियाकारित्वावधारणात्। नहि क्षणप्रध्वंसिनः सन्तो घटपटादयो भावा उदकाहरणाङ्गप्रावरणादिलक्षणां क्रिया कर्तुमर्हन्ति। ये खलु स्वसत्ताक्षणादूर्ध्वं क्षणार्द्धमप्यवस्थातुं नोत्सहन्ते कथं तेऽनेकक्षणोचितामर्थक्रियां करिष्यन्त इति न सम्भावयितुमपि पारयामहे निर्धारयितुमिति तु किमु वक्तव्यम्। न च दृष्टान्तेऽपि क्षणिकत्वं विद्यते। यत्तु तत्र क्षणिकमिति विज्ञानं तत् सूक्ष्मानेकक्षणस्थायितानाकलनमात्रेण भ्रममात्रं न यथार्थम्। अत एवाहुर्भगवन्तः कपिलाचार्य्याः **"स्थिरकार्य्यासिद्धेः क्षणिकत्वम्"** (सां० १। ३४) इति पूर्वपक्षं समादधानाः **"न प्रत्यभिज्ञाबाधात्"** (सां० १। ३५) **"श्रुतिन्यायविरोधाच्च"** (सां० १।

३६ ) "**दृष्टान्तासिद्धेश्च**" ( सां० १ । ३७ ) इति । प्रत्यक्षं तु वर्तमानक्षणारूढं भावं गोचरयत् तस्य वर्तमानक्षणयोगितामात्रं प्रतिपादयति न क्षणिकत्वम् । वर्तमानक्षणयोगवद् भूतभविष्यत्क्षणयोगस्यापि वक्तुं शक्यत्वात् । यस्य च प्रमातृप्रमेययोरुभयोः क्षणिकत्वं तस्य व्याप्तिस्मरणपूर्वकप्रतिज्ञोपन्यासोऽपि न घटते । व्याप्तिस्मरणवेलायामेव प्रमातुर्विनष्टत्वात् । विनष्टे तस्मिँश्चान्यस्य व्याप्तिस्मरणमन्यस्य प्रतिज्ञोपन्यास इति वक्तव्यम् । न चान्यस्य व्याप्तिस्मरणमन्यस्य च प्रतिज्ञोपन्यासः कस्यचिदर्थस्य प्रतिपत्त्यै कल्पते । व्याप्तिस्मरणप्रतिज्ञोपन्यासयोः सामानाधिकरण्येनैव फलजनकत्वनियमात् । न च विज्ञानस्यापि क्षणिकत्वमुपपद्यते । बाधात् । यथा हि विज्ञेयानां भावानां क्षणिकत्वं प्रत्यभिज्ञानेन बाध्यते तथा विज्ञानस्यापि क्षणिकत्वं प्रत्यभिज्ञानेन बाध्यते । भवति तावत् कदाचिदनुभूतेषु पुरुषविशेषेषु तस्य कालान्तरे प्रत्यभिज्ञानं नूनमयं स एव कायस्थकुलज्योतिषां ज्योतिर्ज्योतिस्स्वरूपे धीमान् यद्गेहारामं सुखेन चिरमन्ववात्समित्यादि । चेदिदं क्षणिकं स्यात् कथं पूर्वानुभूतान् तान् कालान्तरे निरीक्ष्य द्रागित्येव प्रत्यभिजानीयात् । नहि क्षणिकं सदतिक्रान्तबहुदर्शनकालाँस्तान् दृष्टिपातमात्रेण सपदि प्रत्यभिज्ञातुमीष्टे यावदिदं तावन्नावतिष्ठेत । अथावतिष्ठते ? तदा क्षणभङ्गभङ्गप्रसङ्गः । अथ नावतिष्ठते ? तदा प्रत्यभिज्ञानानुपपत्तिः । अनुभवितुः प्रत्यभिज्ञातुश्चैकत्वनियमात् । नह्यन्यदनुभवति प्रत्यभिजानाति चान्यदिति सम्भवति । **तस्माद्** विज्ञानं विज्ञेयं च सर्वं क्षणिकमिति समुदायवादिमतमयुक्तम् ॥ २५ ॥

**सम्प्रति** समुदायवादिमामभावाद् भावोत्पत्तिं प्रतिक्षिपति—

"**नासतोऽदृष्टत्वात्**" ॥ २६ ॥

**असतः**=अभावात्=भावोत्पत्तिर्न युज्यते, कुतः ? **अदृष्टत्वात्**=अदर्शनादित्यर्थः ।

**समुदायवादिनो ह्यभावाद्** भावोत्पत्तिं मन्यन्ते । नानुपमृद्य प्रादुर्भा-

वादित्यभ्युपगमात् । अन्ववादि नैवमेव भगवताऽक्षपादेनापि प्रतिक्षेप्तुम् **"अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात्"** (न्या० ४।१।१४) इति । **तन्न** युज्यते । प्रतिज्ञामात्रत्वात् । तदेव किलाभ्युपगन्तव्यं भवति यल्लोके क्वचिद् दृश्यते । नहि यल्लोके कुत्रापि न दृश्यते तदभ्युपगन्तुं शक्यते । प्रतिज्ञामात्रं हि तदा तत् स्यात् । अभावाद् भावोत्पत्तिश्चेत्क्वचिद् दृश्येत तदाऽवश्यमभ्युपगम्येत । न च लोके क्वचिदभावाद्भावोत्पत्तिर्दृश्यते । **नापि** तदुपपत्तिं पश्यामः । अभावाद्भावोत्पत्तौ हि यावन्तो भावास्तावन्तः सर्वेऽभावान्विताः प्रादुष्युः । कार्य्ये कारणान्वयस्यावश्यकत्वात् । न च कोऽपि भावोऽभावान्वितः प्रादुर्भवन्नुपलभ्यते । नहि कारणं भवति कार्य्यं च नान्वेतीति सङ्गच्छते । **तस्माद**भावाद् भावोत्पत्तिरित्येतत् फल्गु ॥ २६ ॥

दूषणान्तरमाह—

**"उदासीनानामपि चैवं सिद्धिः"** ॥ २७ ॥

अभावाद्भावोत्पत्तौ दूषणान्तरमेतदिति चार्थः । दृष्टान्तार्थोऽपिः । **एवं च**=अभावाद्भावोत्पत्तौ चो**दासीनानामपि**=प्रयतमानानामिवाप्रयतमानानामपि **सिद्धिः**=कार्य्यसिद्धिः स्यादित्यर्थः ।

अभावाच्चेद् भावस्तावदुत्पद्येत तदा क्षेत्रकर्मादौ प्रयतमानानामिवाप्रयतमानानामपि कृषीवलादीनां सस्यादिकार्य्यं निष्पद्येत । तद्धेतोरभावस्य सर्वदा सर्वत्र सुलभत्वात् । न च तत्र प्रयतमानानामिवाप्रयतमानानां तेषां सस्यादिकार्य्यं निष्पद्यमानं दृश्यते । दर्शनाभावे च कथमभावाद् भावोत्पत्तिं निश्चिन्वीमहि । **ननु** चेद् वयमभावमात्राद् भावोत्पत्तिं प्रतिजानीमहि तदाऽवश्यमेवमुपालभ्येमहि । न च वयमभावमात्राद् भावोत्पत्तिं प्रतिजानीमहे । किन्तु कारणाभावात् । योऽस्माभिः कारणोपमर्द इति परिभाष्यते । कारणोपमर्दः कारणविनाशः कारणाभाव इति नास्ति कश्चिदर्थभेदः । स च प्रयत्ननिष्पाद्यः । नहि यावत् कृषीवलैः क्षेत्रकर्मणि न प्रयत्यते गोधूमादिबीजं च क्षेत्रे यथासमयं नोप्यते तावद्

बीजोपमर्दो निष्पादयितुं शक्यते । तदनिष्पत्तौ च कस्मादङ्कुर उत्पद्येत कुतश्च सस्यं निष्पद्येत । यथा च बीजोपमर्दः खलु कृषीवलप्रयत्न-निष्पाद्यस्तथा मृत्पिण्डोपमर्दोऽपि कुम्भकारप्रयत्ननिष्पाद्यो वेदितव्यः । तदभावे तस्याप्यनिष्पत्तेः । बीजोपमर्दादिभ्यश्च नास्ति कार्य्योत्पत्तिर-दृष्टचरी । बीजोपमर्देऽङ्कुरस्य मृत्पिण्डोपमर्दे कुम्भस्य चोत्पत्तेः सर्वत्र दर्शनात् । अतोऽभावाद् भावोत्पत्तावपि प्रयतमानानामेव कार्य्यं सिध्यति नाप्रयतमानानामिति । **न** । उपमृदितेभ्यः कारणेभ्यः कार्य्यानुत्पत्तेः । स्वरूपेण भवन्ति खलु कारणानि कार्य्यमुत्पादयितुं शक्नुवन्ति नोपमृ-दितानि । चेदुपमृदितान्यपि तानि शक्नुयुस्तदा पित्रादयोऽप्युपमृदिताः पुत्रमुपजनयितुं प्रभवेयुः । न चोपमृदितास्ते पुत्रमुपजनयन्तो निरीक्ष्यन्ते । कारणोपमर्दश्चाविशिष्टः । स हि यथा शालिबीजस्य तथा यवबीजस्यापि । तत्कस्य हेतोः शालिबीजादेव शाल्यङ्कुरो जायते न यवबीजात् । न च शालिबीजोपमर्दे यवबीजोपमर्दादस्ति प्रतियोगिकृतं वैशिष्ट्यमिति वक्तुं शक्यते । भावत्वप्रसङ्गात् । भावस्य हि सर्वत्र विशेषणयोगाद् वैशिष्ट्य-मुपलभामहे यथोत्पलादीनां नीलत्वादिविशेषणयोगात् । उपमर्दस्यापि चेत् प्रतियोगिविशेषणयोगोऽभ्युपगम्येत तदाऽवश्यमुपमर्दोऽपि भावः प्रसज्येत यथोत्पलादिः, अभावश्चाभ्युपगम्यते । यत्रापि च बीजादिषु तदुपमर्दो लक्ष्यते तत्रापि भावभूतानां तदवयवानामेवाङ्कुरादिकारणत्वम-भ्युपेयते नोपमर्दस्य । ते च बीजादीनामवस्थाविशेषत्वान्न तेभ्यो विशि-ष्यन्त इति बीजादीन्येव तत्कारणानि व्यपदिश्यन्ते । तत्र बीजादीन्य-ङ्कुरादिकार्य्यमुपजनयन्ति पूर्वव्यूहं हित्वा व्यूहान्तरमापद्यन्ते । तेषा-मुत्तरो व्यूहोऽवयवनाम्ना परिकीर्त्यते पूर्वो व्यूहो बीजादिनाम्ना । पूर्वा-परीभावश्चोपमर्द इति विशेषः । भवाँश्च व्यामोहेन पूर्वापरीभावलक्षण-मुपमर्दं विनाशं मन्यते । सोऽयमस्थाने व्यामोहः । नहि कोऽपि भावः पूर्वव्यूहत्यागेनोत्तरं व्यूहमापद्यमानोऽभावः सम्पद्यते । नहि सङ्कोचवि-कासाभ्यां पटः कदाचिदपटो भवति । पूर्वापरीभावं चोपमर्दमभावाद्भावो-त्पत्तिं प्रतिक्षिपन्नाह भगवान् गोतमः "**क्रमनिर्देशादप्रतिषेधः**"

( न्या० ४ । १ । १५ ) इति । **क्रमः**=पूर्वापरीभावः । **तस्मादयुक्तं** सर्वथाऽपि समुदायवादिमतम् ॥ २७ ॥

**समुदायवादो** व्युदस्तः । सम्प्रति तज्ज्येष्ठसहोदरो विज्ञानवादो व्युद-सनीयः । तद्व्युदासपरं सूत्रं पठति—

**"नाभाव उपलब्धेः"** ॥ २८ ॥

**अभावः**=बाह्यार्थाभावो **न**=नोपपद्यते, कुतः? **उपलब्धेः**=प्रमाणेन तदुपलम्भादित्यर्थः ।

**विज्ञानवादिनस्तावदातिष्ठन्ते** क्षणिकविज्ञानमेवैकं परमार्थभूतमनादिवासनावशात् तत्तद्बाह्यार्थाकारेण निर्भासते नास्ति तद्व्यतिरिक्तः कश्चित् परमार्थभूतो बाह्योऽर्थ इति । तन्नोपपद्यते । प्रमाणेन बाह्यार्थोपलम्भात् । यदि हि विज्ञानव्यतिरेकेण कश्चित् परमार्थभूतो बाह्योऽर्थो न विद्येत तदा न जातु प्रमाणेनोपलभ्येत । नहि न विद्यते प्रमाणेनोपलभ्यते चेति सम्भवति । शशविषाणादयोऽप्यन्यथा प्रमाणेनोपलभ्येरन् । विद्यमानस्य प्रमाणेनोपलब्धेरवश्यम्भावात् । घटपटादिलक्षणो बाह्योऽर्थस्तु प्रमाणेनोपलभ्यते । न च यत् प्रमाणेनोपलभ्यते तत् कथञ्चिन्निह्नोतुं शक्यते । सर्वत्रानाश्वासप्रसङ्गात् । **अथोच्येत** प्रमाणमपि न मे विज्ञानतो व्यतिरिच्यते नाम किञ्चिदिति युज्यते तन्निह्नवो नास्ति काचिदनुपपत्तिरिति । **नैतद् वक्तव्यम्** । विज्ञानेनात्मनोपलब्धस्य सुतरां निह्नोतुमशक्यत्वात् । प्रमाणेन ह्युपलब्धमर्थं कदाचिद् बलीयसा प्रमाणान्तरेण विरोधान्निह्नुवीतापि, परमप्रमाणेन विज्ञानेनात्मना स्वेनोपलब्धं तु न कश्चिदपि निह्नोतुं पारयति । कदाचिद् धार्ष्ट्यान्निह्नुवानश्च निरङ्कुशतुण्डत्वान्नोपादेयवचनतामुपगच्छति । **ननु** न वयं बाह्यार्थस्योपलब्धिं निह्नुमहे, किं तर्हि? तस्य विज्ञानादुपलब्धुर्व्यतिरेकमिति चेत् । **न** । विज्ञानेनोपलब्धैव तद्व्यतिरेकस्यापि सिद्धेः । यावानुपलब्धा स सर्वः खलु बाह्यमर्थमुपलभमानो "बाह्यमर्थमुपलभे" इति पृष्टो व्याचष्टे न "विज्ञानमुपलभे" इति कश्चिदपि प्रत्याचष्टे । चेद् विज्ञानाद् बाह्योऽर्थो

न व्यतिरिच्येत तदाऽवश्यं स पृष्टस्तथा प्रत्याचक्षीत । तस्याप्रत्याख्यानादेव बाह्यार्थस्य विज्ञानस्य च सिध्यति मिथो व्यतिरेकः कृतं तत्र प्रमाणान्तरोपन्यासेन । अथ भ्रमेण तस्य तथा प्रत्याख्यानं न परमार्थतः । तर्हि वक्तव्यं कुतस्तस्यैष भ्रमो जायत इति । नियमेन सहोपलम्भादिति वच्मः । यत् खलु येन सह नियमेनोपलभ्यते तत् ततो न व्यतिरिच्यते यथैकेन चन्द्रमसा द्वितीयश्चन्द्रः । बाह्यार्थोऽपि नियमेन विज्ञानेन सहैवोपलभ्यते न तद्व्यतिरेकेण कदाचित् । व्यतिरिच्येत चेद् गवाश्वयोरिव व्यतिरेकेणापि कदाचिदुपलभ्येत । नहि व्यतिरेके सति व्यतिरेकेणोपलम्भो दुष्यति । नियमेन सहोपलम्भात्तु प्रतिपद्यते नास्ति विज्ञानाद् बाह्यार्थस्य व्यतिरेक इति । **मैवं वोचः** । व्यतिरेकाभावे साहित्यानुपपत्तेः । सहभावो हि साहित्यम् । स च नियमेन तयोरेवोपपद्यते ये द्वे परस्परं स्वरूपतो व्यतिरिच्येते यथाऽश्विनौ । यत्रेदं श्रूयते "**कुह स्विद्दोषा कुह वस्तोरश्विना कुहाभिपित्वं करतः कुहोषतुः । को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ**" ( ऋ० ७ । ८ । १८ । २ ) इति । यथा वा प्रकृतिब्रह्मणी । यत्रेदमाम्नायते "**न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः । आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास**" ( ऋ० ८ । ७ । १७ । २ ) इति । स्वधया=प्रकृत्या । द्वित्वेन व्याप्तत्वाच्च । द्वित्वेन व्याप्तः खलु सहभावः । न च स एकत्वे सति वक्तुमपि शक्यते किं पुनरुपपादयितुम् । बाह्यार्थविज्ञाने चापि परस्परं चेत् स्वरूपतो न व्यतिरिच्येयातां तदा तत्सहभावोऽपि नोपपद्येत दूरेण हि तदुपलम्भः । व्यतिरेके चोपायोपेयभावनिबन्धनस्तत्सहभावः सुखेनोपपत्तुमर्हति नास्ति कश्चिद्दोषः । तथा च नियमेन तदुपलम्भोऽपि युज्यते । भेदप्रत्ययाच्च । सर्वः खलु प्रत्येता घटमहं प्रत्येमि पटमहं प्रत्येमीति घटपटादीन् बाह्यार्थान् विज्ञानतो व्यतिरेकेण प्रत्येति । यदि ते विज्ञानतो न व्यतिरिच्येरन् न व्यतिरेकेण प्रतीयेरन् । न चैष प्रत्ययो भ्रम इति वक्तुं शक्यते । अबाधित-

स्यात्। नहि यथा भ्रमप्रत्ययो बाध्यते तथाऽयं कर्हिचिद् बाध्यते। किं च घटज्ञानं पटज्ञानमिति बाह्यार्थेन घटपटादिना विज्ञानं सर्वत्र विशेष्यते। विशेषणविशेष्यभावश्च भेदनिबन्धनः प्रवर्तते नाभेदनिबन्धन इति प्रत्यक्षम्। न चैवं प्रत्यक्षे भेदावगमे भवति शक्योपपादः कदाचिद् बाह्यार्थाभावः। तस्माद् विज्ञानतो व्यतिरेकेण नास्ति कश्चिद् बाह्योऽर्थ इत्येतदनुपपन्नम्। प्रमाणेनोपलब्धेः॥ २८॥

**अथोच्येत** येयं खलु बाह्यार्थोपलब्धिः प्रदर्श्यते सा स्वाप्नार्थोपलब्धितो न विशिष्यते। यथा हि स्वप्नावस्थायामर्था न विद्यन्ते तत्तद्वासनावासितं ज्ञानमेव तत्तदर्थाकारमादधानमध्यक्ष्यते, यथा वा मायाविना पुरुषेण प्रदर्शितास्तत्तत्पदार्थाः परमार्थतो न वर्तन्ते तत्तद्वासनावासितज्ञानमाहात्म्यादेव च परमार्थभूता इवोपलभ्यन्ते, तथा जागरितावस्थायामपि घटपटादिलक्षणः कोऽपि बाह्योऽर्थो न वर्तते तत्तद्वासनावासितं ज्ञानमेव तत्तदर्थाकारेण निर्भासते। तस्माद् युक्तस्तस्य विज्ञानव्यतिरेकेणाभाव इति।

अस्योत्तरं पठति—

**"वैधर्म्याच्च न स्वप्नादिवत्"** ॥ २९॥

चस्त्वर्थः, तेनोक्ताशङ्का व्यावर्त्यते। **स्वप्नादिवत्**=आदिना मायागन्धर्वनगरादयो गृह्यन्ते, स्वाप्नादिपदार्थवन्न=बाह्यार्थो न युज्यते, कुतः? **वैधर्म्यात्**=विरुद्धधर्मकत्वादित्यर्थः।

यथा हि स्वाप्नप्रभृतिपदार्था अभ्युपगम्यन्ते न तथा जागरितपदार्था अभ्युपगम्यन्ते। किं कारणं? यत्कारणं स्वाप्नप्रभृतिपदार्थाः प्रतीतिकालमात्रनिर्भासास्तत ऊर्ध्वं बलाद् बाध्यन्ते न जातु क्षणमप्यवस्थातुं पारयन्ते, जागरितपदार्थाश्चैतो बहुविप्रगीताः प्रतीत्यनन्तरं विबाधयिषिता अपि न बाध्यन्ते यथापूर्वं चा प्रलयादवभासन्ते। सर्वजनीनं खल्वेतत् उपलब्धा सर्वः स्वप्नप्रबुद्धो जागरिते स्वाप्नार्थोपलिप्साकुलचेतस्कोऽपि न तानुपलभते, जागरितार्थांश्च प्रतिदिवमनुपलिप्समानोऽप्युपलालभ्यते।

**किमत्र** कारणम्? इदमेव कारणं स्वाप्नपदार्थानां जागरिते बाधः प्रजायते जागरितपदार्थानां च कस्यामप्यवस्थायां बाधो नोपजायत इति । किं न पश्यसि सुप्तप्रबुद्धो निखिलो जनः स्वाप्नपदार्थ-बाधमाचष्टे न जागरितपदार्थबाधं जागरितो नापि सुप्तः । यथा चैते स्वाप्नपदार्थास्तथा मायादिपदार्था अपि द्रष्टव्याः । तेऽपि त्वरितं जायन्ते बाध्यन्ते चेति नास्ति कश्चिद्विशेषः । न चैवं बाधाबाधलक्षणे वैधर्म्ये विद्यमाने सर्वेऽमी जागरितपदार्थाः स्वप्नादिपदार्थकल्पाः कर्हिचित् परि-कल्पयितुं शक्यन्ते । अन्यथा विज्ञानस्यापि तत्कल्पत्वकल्पनाप्रसङ्गात् । न च स्वप्नादिपदार्था अपि विज्ञानतो नातिरिच्यन्ते । स्मृति-सङ्कल्पविषयवत् तेषामपि पृथक् सत्त्वाभ्युपगमात् । यथा हि स्मृति-सङ्कल्पविषयाः खलु स्मृतिसङ्कल्पाभ्यां पृथग् विद्यन्ते तथा स्वप्नादिप्रत्यय-विषयाः स्वाप्नादिपदार्था अपि पृथग् वर्तन्ते । यत्रेदमुक्तं दर्शनान्तरे **"स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः"** (न्या० ४ । २ । ३२ ) इति । स्मृतिभेदो हि स्वप्नः । केवलं संस्कारपाटवनिद्रादिदोष-वशेनोपजायमानत्वात् प्रत्यक्षवदवभासते न च तद्विषयो भवति कर्हि-चिदसन् । कथं तर्हि कदाचित् स्वप्ने निजशिरश्छेदनं पश्यति? । नायं दोषः । तस्य खण्डशो दृष्टत्वेन सद्भावात् । संसर्गप्रतीतिश्च निद्रादिदोषप्रभवेति यत्किञ्चिदेतत् । उपपादितं चैतदस्माभिः **"तथा स्वप्नः"** ( वै० ९ । २ । ७ ) इत्यत्र वैशेषिकसूत्रवैदिकवृत्तौ विस्तरेण । यथा चायं स्वप्नप्रत्ययः सद्विषयस्तथा मायादिप्रत्ययोऽपि सद्विषयो द्रष्टव्यः । प्रत्ययस्यासद्विषयत्वानुपपत्तेः । तस्य मिथ्यात्वं चान्यथाविषय-त्वान्नासद्विषयत्वादिति मन्तव्यम् । तदिदं वैधर्म्यान्तरं स्वप्नादिपदार्थेभ्यो जागरितपदार्थानां यदनन्यथा भानम् । तस्माद् विज्ञानमेव स्वप्नादिवद् बाह्यार्थाकारेण निर्भासत इति वार्त्तम् ॥ २९ ॥

**अथोच्येत** न खलु बाधाबाधादिलक्षणं वैधर्म्यं बाह्यार्थानां विज्ञा-नतो व्यतिरेकेण सद्भावे कथञ्चिद् हेतुरुपपद्यते । तस्य वासनादार्ढ्यादा-र्ढ्यहेतुकत्वेनान्यथासिद्धत्वात् । यदि दृढतरवासनावासितं विज्ञानं तद्

बाह्यार्थाकारेण प्रतिभासते, यथाद्दढतरवासनावासितं तत् स्वप्नादिपदार्थाकारेण निर्भासते। अत एव च तदाकाराः स्वप्नादिपदार्थाः क्षिप्रं बाध्यन्ते जागरितपदार्थाश्च चिरेण। विचित्रशक्तिका अनादयश्च संस्कारापरपर्य्यायास्तत्तत्पदार्थवासनास्त्वयाऽप्यभ्युपगम्यन्ते। यत्रेदमुक्तं योगदर्शने "तासामनादित्वं चाशिषो नित्यत्वात्" (यो० ४। १०) इति। ताश्च स्वप्नादौ तत्तदर्थप्रतीतिहेतव इति तावको राद्धान्तः। तद्वासितस्य विज्ञानस्य चाकारो विचित्रोऽनादिश्चैष घटपटादिलक्षणः संसारोऽस्माकमप्युपपत्स्यते नास्ति कश्चिद्दोष इति। अस्योत्तरं पठति—

"न भावोऽनुपलब्धेः" ॥ ३० ॥

**भावः**=भावना वासना **न**=तत्तदर्थप्रतीतिहेतुर्नोपपद्यते, कुतः? **अनुपलब्धेः**=असिद्धेरित्यर्थः।

सिद्धा खलु वासना तत्तदर्थप्रतीतिहेतुरुपपद्यते नासिद्धा। न च यस्य बाह्योऽर्थो न विद्यते तस्यैषा कथञ्चित् सेद्धुमर्हति। परस्पराश्रयप्रसङ्गात्। अर्थप्रतीत्याश्रया हि वासना तज्जन्यत्वात्। तदाश्रया चेदप्रतीतिराश्रीयेत तदाऽवश्यं परस्पराश्रयः प्रसज्येत। स च प्रसज्यमानः कार्य्यं विहन्ति न तु साधयति। बीजाङ्कुरवदनादित्वाददोष इति तु रिक्तं वचः। अप्रामाणिकत्वात्। अङ्कुराद् बीजं बीजादङ्कुर इत्येतत् खलु प्रामाणिकं विद्यते नार्थतो वासना वासनातोऽर्थ इति। वासनामन्तरेणाप्यर्थप्रतीतेः। नहि सर्वोऽर्थो वासनातो जायत इति वक्तुं शक्यते। अद्यापि तदसिद्धेः। न च यावद् वासना न सिध्यति तावदेवं कश्चिद् वक्तुं शक्नोति। किञ्चेदं वक्तव्यं तत्तदर्थप्रतीतिहेतुवासना विज्ञानतो व्यतिरिच्यते किंवा न व्यतिरिच्यत इति। व्यतिरिच्यते चेत्? तदा विज्ञानव्यतिरेकेण नास्ति कश्चिद् भाव इति व्याहन्येत। वासनाया एव सद्भावात्। न व्यतिरिच्यत इति चेत्? तदा तत्तत्पदार्थवासनावासितं विज्ञानमिति न सङ्गच्छेत। वासनायास्ततोऽनतिरेकस्य प्रतिज्ञानात्। तथा च विचित्रजगदनुपपत्तिः। अथास्ति विचित्रं विज्ञानमिति चेत्?

इत्थं सांवृतिकं स्यान्न सत्। वैभिन्न्यस्य ते सांवृतिकत्वात्। न च वासनाया अव्यतिरेकोऽपि सिध्यति। हेतुहेतुमद्भावाभ्युपगमात्। हेतुमती खलु तत्तत्पदार्थवासनाऽभ्युपगम्यते हेतुश्च विज्ञानमिति तदसिद्धिः। अपि च कस्येयं वासना स्यात्? न कस्यापीति चेत्? तदा वासनात्वानुपपत्तिः। नहि वासना च निर्विषया चेत्युपपद्यते। भावजातस्येति चेत्? तदा सुतरां तदनुपपत्तिः। विज्ञानव्यतिरेकेण कस्यापि भावस्यानङ्गीकारात् ॥ ३० ॥

वासनाऽसिद्धौ हेत्वन्तरं समुच्चिनोति—

"क्षणिकत्वाच्च" ॥ ३१ ॥

भावस्यानुपलब्धिरित्युभयं विपरिणम्यानुवर्तते। वासनाऽसिद्धौ हेत्वन्तरमेतदिति चार्थः। क्षणिकत्वात्=विज्ञानस्य क्षणिकत्वाद् भावस्य वासनायाः सिद्धिर्न भवतीत्यर्थः।

द्विविधं हि विज्ञानमास्थीयते प्रवृत्तिविज्ञानमालयविज्ञानं च। घटोऽयं पटोऽयमित्याकारकं विशेषविज्ञानं प्रवृत्तिविज्ञानम्, अहमहमित्याकारकं सामान्यविज्ञानमालयविज्ञानम्। तदेवात्मा चित्तमिति च व्याख्यायते। प्रथमो हेतुर्द्वितीय आश्रयः। क्षणिकं चोभयम्। तत्र प्रवृत्तिविज्ञानस्य कथञ्चिद्वासनाहेतुत्वोपपत्तावप्यालयविज्ञानस्य तदाश्रयत्वं नोपपद्यते। आश्रयस्य स्थिरत्वनियमात्। लोके आश्रयः सर्वः स्थिरत्वादुपलभ्यते। विज्ञानं चेद् वासनाश्रयः परिकल्प्येत स्थिरमापद्येत। नहि यत् स्वसत्ताक्षणादूर्ध्वं क्षणार्धमप्यवस्थातुं न कल्पते तत् कस्यचिदाश्रय उपपद्यते, देशकालनिमित्तापेक्षायास्तत्तत्पदार्थवासनाया इति नु किमु वक्तव्यम्। अस्ति स्थिरमिति चेत्? सिद्धान्तव्याकोपः। अथ तत्सन्तानो वासनाश्रय इति चेत्? तदा वक्तव्यं किमयं व्यतिरिच्यते विज्ञानादाहोस्विन्न व्यतिरिच्यत इति। व्यतिरिच्यते चेत्? तदा किं स वस्तुभूतः कश्चित् स्यात् किंवाऽवस्तुभूतः। आद्ये सन्तानिव्यतिरेकेण सन्तानानुपलब्धेर्वस्तुत्वानुपपत्तिः। क्रमविशेषो हि सन्तान

इत्युच्यते । न च स क्रमिव्यतिरेकेणोपपद्यते किञ्चिद् वस्तु । द्वितीये वासनाश्रयत्वानुपपत्तिः । नह्यवस्तु वस्त्वाश्रयः कथञ्चिदुपपद्यते । वस्तुत्वेऽपि स क्षणिकः स्यादाहोस्विदक्षणिकः । क्षणिकत्वे स एवाश्रयत्वानुपपत्तिदोषः । अक्षणिकत्वे सर्वं क्षणिकमिति सिद्धान्तव्याघातः । न व्यतिरिच्यते चेत्? तदा विज्ञानमात्रमाश्रयः, तच्च नोपपद्यत इत्युक्तम् । तथा च वासनाया असिद्धेस्तद्वासितक्षणिकविज्ञानमेव तत्तदर्थाकारेण निर्भासते नास्ति तद्व्यतिरेकेण कश्चिद् घटपटादिलक्षणोऽर्थ इत्ययुक्तम् ॥ ३१ ॥

अत्रैव हेत्वन्तरमाह—

"**सर्वथाऽनुपपत्तेश्च**" ॥ ३२ ॥

क्षणिकविज्ञानवादस्यायुक्तत्वे हेत्वन्तरमेतदिति चार्थः । **सर्वथा**=सर्वप्रकारेणा**नुपपत्तेः**=अनुपपन्नत्वादयुक्तः क्षणिकविज्ञानवाद इत्यर्थः ।

यथा हि खलु प्रत्यक्षेणोपलब्धेर्विज्ञानव्यतिरेकेण बाह्यार्थाभावो हेतुविषयाश्रयासिद्ध्या तत्तदर्थप्रतीतिहेतुत्वेन परिकल्पिता वासना च न सिध्यति तथाऽर्थाभावे विज्ञानमपि न सेद्धुमर्हति । तस्य सविषयत्वनियमात् । नहि ज्ञानं च निर्विषयं चेति कथञ्चिद् घटते । यथैव तावदिप्यमाणमन्तरा नात्मानमासादयति तथा ज्ञानमपि ज्ञेयमन्तरा नात्मानं लब्धुं पारयति । न च ते घटपटादिलक्षणं ज्ञेयं, किञ्चिदभ्युपेयते । तदभ्युपायाभावे चानुपपन्नो विज्ञानवादः । तस्माद् वैदिकैर्दूरतस्तिरस्कर्तव्यो न स्वप्नेऽप्यादर्तव्यः ॥ ३२ ॥

क्षणिकवादः पराकृतः । अनेकान्तवादः सम्प्रति पराक्रियते । तत्पराकरणपरं सूत्रं पठति—

"**नैकस्मिन्नसम्भवात्**" ॥ ३३ ॥

**एकस्मिन्**=एकरूपे पदार्थे **न**=परस्परविरुद्धास्तित्वनास्तित्वादिलक्षणमनैकरूप्यमनैकान्त्यं न युज्यते, कुतः? **असम्भवात्**=तत्र तत्सम्भवाभावादित्यर्थः ।

यथा हि समुदायवादिनो विनैव भगवन्तं स्रष्टारमीश्वरं क्रियाशक्तिमद्भ्यः परमाणुभ्यः पृथिव्यादिजगदुत्पत्तिमातिष्ठन्ते तथाऽनेकान्तवादिनोऽपि विनैव भगवन्तं तं क्रियाशक्तिमद्भ्यः परमाणुभ्यः पृथिव्यादिजगदुत्पत्तिमाश्रयन्ते । सङ्घातश्चोत्पत्तिरित्युभयेषामविशेषः । पदार्थौ चैते मुख्यतो द्वौ मन्यन्ते जीवोऽजीवश्च । शुभाशुभकर्मकर्ता तत्फलयोः सुखदुःखयोरुपभोक्ता शरीरमनुपरिणामशीलत्वाच्छरीरपरिमाणो ज्ञानादिधर्मेभ्यो भिन्नाभिन्नश्चेतनो जीवः । ततो विपरीतस्तदुपभोग्यो निखिलपदार्थोऽजीवः । तदेवं द्वेधाऽभिमतं पदार्थजातमेके तदुपजीविनः केचिद् विज्ञाः पञ्चधा विभजन्ते—जीवास्तिकायः, पुद्गलास्तिकायः, धर्मास्तिकायः, अधर्मास्तिकायः, आकाशास्तिकायश्चेति । तत्र भावपदार्थवचनो "अस्तिकाय"—शब्दः । अस्तीति कायते शब्द्यत इति तद्व्युत्पत्तेः । अनेकप्रदेशवद्द्रव्यवचन इत्यपि केचित् । जीवास्तिकायस्त्रिधा बद्धो मुक्तो नित्यसिद्धश्चेति । भवाद् भवान्तरप्राप्तिमान् संसारी जीवो बद्धः । तपश्चरणादिभिर्मुक्तिसाधनैर्मुक्तिं प्राप्तो मुक्तः । नित्ययोगसिद्धो नित्यसिद्धः, स एवेश्वरः । रूपरसगन्धस्पर्शवतां परमाणूनां सङ्घः पुद्गलः, पूर्यते गलति चेति तद्व्युत्पत्तेः । तदात्मकोऽस्तिकायः षोढा पृथिव्यादीनि चत्वारि भूतानि प्रसिद्धानि, स्थावरं वृक्षादिशरीरं जङ्गममस्मदादिशरीरं च । सोऽयं षोढा पुद्गलास्तिकायो द्रव्यविभागवेलायां "स्कन्धः" इति व्याख्यायते । स्कन्धाः परमाणवश्चेति द्वेधा द्रव्यपदार्थः । भोक्तृभिर्जीवैर्भोक्तुं शक्यत्वाद् द्व्यणुकादयः शरीरान्ताः स्कन्धाः, ततो भिन्नाः परमाणवः । स्कन्धभेदात् परमाणवो जायन्ते, तत्सङ्घाच्च स्कन्धाः । क्वचिद् भेदसङ्घाताभ्यामपि सङ्घोत्पत्तिरभ्युपेयते । सम्यक्शास्त्रीयबाह्यप्रवृत्त्यनुमेयो धर्मास्तिकायः । सम्यक्शास्त्रीयबाह्यप्रवृत्त्या ह्यान्तरोऽपूर्वाख्यो धर्मोऽनुमीयते । ऊर्ध्वगमनशीलस्य जीवात्मनो येयं शरीरे स्थितिस्तदनुमेयोऽधर्मास्तिकायः । धर्माधर्माभ्यां हि प्रतिरुद्धगतिको जीवात्मा शरीरे प्रतितिष्ठति । अन्यथोर्ध्वं गच्छेत् । आकाशास्तिकायो द्वेधा लोकाकाशोऽलोकाकाशश्च । उपर्युपरिस्थितानां लोकानामन्तर्वर्ती लोकाकाशः । तेषामु-

परि मोक्षस्थानमलोकाकाशः। तत्र हि न लोका विद्यन्ते। अभूद् भवति भविष्यतीति व्यवहारहेतुः कालस्तु द्रव्यत्वेऽप्यनेकप्रदेशत्वाभावान्नास्ति-कायशब्देनोच्यते। स द्रव्यलक्षणोपेतत्वाद् द्रव्यविशेषोऽणुश्चेति तेन सह षड् द्रव्याणि पूर्वोक्तानि वेदितव्यानि। कैश्चित् परैस्तु सर्वेऽमी पदार्थाः प्रकारान्तरेण मोक्षोपयोगितया सप्तधा विभज्यन्ते—जीवोऽजीव आस्रवः संवरो निर्जरो बन्धो मोक्षश्चेति। पूर्वोक्ताभ्यां धर्माधर्माभ्यां चैते नव तत्त्वानीति कीर्त्यन्ते। समग्राहिषत च तानि हरिभद्रसूरिणा षड्दर्शनसमुच्चये—

जीवाजीवौ तथा पुण्यं पापमास्रवसंवरौ।
बन्धश्च निर्जरो मोक्षो नव तत्त्वानि तन्मते ॥ ४७ ॥ इति।

तत्र जीवाजीवौ पुण्यपापनामानौ धर्माधर्मौ च विवृतौ। विषये-ष्विन्द्रियाणां प्रवृत्तिरास्रवः। स हि विषयेषु पुरुषमास्रावयति। नहि पौरुषं ज्योतिरिन्द्रियद्वारं हित्वा विषयान् संस्पृश्य रूपादिज्ञाना-त्मना परिणन्तुमर्हति। सेयं मिथ्या प्रवृत्तिरित्युच्यते। तन्निरोधिका यमनियमादिरूपा सम्यक्प्रवृत्तिः संवरः। संवृणोति द्वारमास्रवस्रोतस इति तद्व्युत्पत्तेः। अनादिकालप्रवृत्तकषायकल्मषपुण्यापुण्यप्रहाणहेतुस्तप्त-शिलारोहणादितपश्चरणध्यानजपादिर्निर्जरः। निःशेषेण पुण्यापुण्यं कर्मास्य सुखदुःखोपभोगेन निर्जरयति नाशयतीति तद्व्युत्पत्तेः। ज्ञाना-वरणीयं दर्शनावरणीयं मोहनीयमान्तर्य्यमिति चत्वारि घातिकर्माणि। वेदनीयं नामिकं गोत्रिकमायुष्कं चेति चत्वार्य्यघातिकर्माणि। तदेव-दष्टविधं कर्म बन्धहेतुत्वाद् बन्धः। बध्यते पुरुषोऽनेनेति तद्व्युत्पत्तेः। सम्यग् दर्शनं न मोक्षहेतुः, ततो वस्त्वसिद्धेः, नहि दर्शनाद् वस्तु किञ्चिदर्हति सेद्धुम्, अतिप्रसङ्गादिति विपर्य्ययज्ञानं ज्ञानावरणीयम्। नित्यसिद्धतन्त्राभ्यासान्न मोक्ष इति ज्ञानं दर्शनावरणीयम्। बहुषु विप्रति-षिद्धेषु तीर्थकरैरुपदिष्टेषु मोक्षमार्गेषु विशेषानवधारणं मोहनीयम्। मोक्षमार्गप्रवृत्तानां तत्प्रत्यूहकरं ज्ञानमान्तर्य्यम्। तान्येतान श्रेयोमार्ग-

प्रवृत्तिविघातकत्वाद् घातिकर्माण्युच्यन्ते । ममेदमस्ति ज्ञातव्यमित्यभिमानो वेदनीयम् । एतन्नामाऽहमित्यभिमानो नामिकम् । अस्य शिष्यवंशे प्रविष्टोऽस्मीत्यभिमानो गोत्रिकम् । शरीरयात्रानिमित्तं कर्मायुष्कम् । तानीमानि सम्यग्दर्शनाविघातकत्वादघातिकर्माण्याख्यायन्ते । सम्यग्दर्शनज्ञानचरित्रेभ्यो मोक्षासाधारणहेतुभ्यो विगलितसमस्तक्लेशतद्वासनस्यानावरणज्ञानस्य सुखैकतानस्य जीवात्मनोऽलोकाकाशेऽवस्थानं मोक्ष इत्येके । सततमूर्ध्वगमनशीलस्य जीवात्मनो धर्माधर्मास्तिकायेनेह बद्धस्य सम्यग्दर्शनादिना तदत्यन्तविमोक्षाद् यन्निरन्तरमूर्ध्वमलोकाकाशे गमनं स मोक्ष इत्यपरे । यत्रैष पठ्यते "**गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः । अद्यापि न निवर्तन्ते त्वलोकाकाशमागताः ॥ १ ॥**" इति । सर्वेषु चैषु पदार्थेषु सप्तभङ्गीनयं नाम न्यायमिमं योजयन्ति—स्यादस्ति १ स्यान्नास्ति २ स्यादस्ति च नास्ति च ३ स्यादवक्तव्यः ४ स्यादस्ति चावक्तव्यश्च ५ स्यान्नास्ति चावक्तव्यश्च ६ स्यादस्ति च नास्ति चावक्तव्यश्च ७ इति । तत्र स्याच्छब्दो निपातस्तिङन्तप्रतिरूपकः कथञ्चिद्वचनः । पदार्थस्यास्तित्वविवक्षायां प्रथमो भङ्गः प्रवर्तते । नास्तित्वविवक्षायां द्वितीयः । क्रमेण तदुभयविवक्षायां तृतीयः । युगपत्तदुभयविवक्षायां वक्तुमशक्यत्वाच्चतुर्थः । प्रथमचतुर्थभङ्गविवक्षायां पञ्चमः । द्वितीयचतुर्थभङ्गविवक्षायां षष्ठः, तृतीयचतुर्थभङ्गविवक्षायां तु सप्तमः । यस्तावत् पदार्थोऽस्त्येवैकान्ततः स सर्वथा सर्वदा सर्वत्र सर्वात्मनाऽस्त्येव नेप्साजिहासाभ्यां क्वचित् कदाचित् कथञ्चित् कश्चित् प्रवर्तयितुं निवर्तयितुं वाऽर्हति । प्राप्तप्रापणीयत्वस्य निवृत्तनिवर्तनीयत्वस्य चानुपपत्तेः । दृश्यते च पुरुषाणां तदीप्साजिहासाभ्यां कदाचित् प्रवृत्तिः कदाचिन्निवृत्तिः । न चैतदनेकान्तवादानाश्रयणे कथञ्चिदुपपादयितुं शक्यते । तदाश्रयणे तु पदार्थस्य सर्वथा सर्वदा सर्वत्र सर्वात्मना सत्त्वाभावेन क्वचित् कदाचित् कथञ्चित् सत्त्वात् तदीप्सया प्रवृत्तिस्तज्जिहासया निवृत्तिश्च सुखेनोपपद्यते । तत्सुखोपपत्त्यर्थमेवानेकान्तवादोऽयं समाश्रीयते । तत्साधकश्चैष एव सप्तभङ्गीन्यायः । सप्तानामेकान्तभङ्गानां

समाहारः सप्तभङ्गी, स एव न्याय इति तद्युत्पत्तेः । स यथा सत्तायां नियमेन प्रवर्तते तथाऽन्यत्रैकत्वनित्यत्वादावपि प्रवर्तत इति द्रष्टव्यम् । तदेतन्न युक्तमालोचामहे । एकस्मिन् पदार्थे परस्परविरुद्धास्तित्वनास्तित्वाद्यनेकरूपसमावेशासम्भवात् । यो हि पदार्थो यद्रूपः परमार्थतो वरीवृत्यते स न तदानीमेवान्यरूपः कथञ्चित् सम्पद्यते । नह्येकरूपवति परमार्थतः सति रूपिणि तस्मिन् तदानीमेव तद्विरुद्धस्य रूपान्तरस्य समावेशः सम्भोभूयते । यथा खलु घटत्ववति घटे तद्विरुद्धस्याघटत्वस्य समावेशो न सम्भवति तथाऽस्तित्वैकरूपवति पदार्थे तद्विरुद्धस्य नास्तित्वस्य रूपान्तरस्य समावेशोऽपि न सम्भवति । न च स यदा सन् भवति तदैवासन् कथञ्चिद् भवितुमर्हति । अविकल्प्यत्वात् । क्रिया हि विकल्प्यते न पदार्थः । न च घटत्वेन घटोऽस्ति नास्ति पटत्वेनेति वक्तुं शक्यते । यथापूर्वमुपलम्भात् । नहि यद् यदा न भवति तत् तदा यथापूर्वमुपलभ्यते । वचनमात्रं चैतद् घटत्वेन घटोऽस्ति नास्ति पटत्वेनेति विज्ञायते । कथमन्यथाऽसौ यथापूर्वमुपलभ्येत । न चास्यायमेवार्थो विद्यते यथाऽवबुध्यते । कस्तर्हि? घटे घटत्वयोगो वर्तते न पटत्वयोग इति । न चैतावता भवति कर्हिचिद् घटोऽसन् । हेयत्वोपादेयत्वे च तस्यात्मबुद्ध्यपेक्षे भवतो न स्वरूपापेक्षे । किं न लोकस्ते यमेवार्थमेको हातुमाशंसते परस्तमेवोपादातुमाकांक्षते । चेदेतदुभयं स्वरूपापेक्षं भवेत् तदा नायमेकेन यदा हातुमाशंस्येत परेण तदैवोपादातुमाकांक्ष्येत । किन्तु येन यदा जिहास्येत तेनैव तदोपादित्स्येत । न चैवं लोके कश्चिद् दृश्यते । बुद्ध्यपेक्षत्वे तु भवति सर्वमेतत् सूपपन्नम् । न च बुद्ध्या कस्यचिद् वास्तवत्वं व्यवस्थापयितुमीश्यते । अन्यथा शुक्तिमरुमरीचिकादिषु रजततोयादेरपि वास्तवत्वं व्यवस्थाप्येत । प्रवृत्तिनिवृत्ती चेप्साजिहासाभ्यामर्थस्य सर्वथा सर्वदा सर्वत्र सर्वात्मना सत्त्वेऽपि बुद्ध्यपेक्षत्वात् पुरुषाणामुपपद्येते नास्त्येनेकान्तवादाश्रयणावकाशः । एतेनास्ति घटत्वेन घटो नास्ति प्राप्यत्वेनेत्यपि भवति साधूपपादितम् । अप्राप्तिमात्रेण नास्तित्वासिद्धेः । नहि यदस्माभिरेकदा न प्राप्यते तन्ना-

स्तीति कथञ्चित् सिध्यति । तदैव परेषां तत्प्राप्तिदर्शनात् । न चासद्भवत् केनापि प्राप्तुं शक्यते । अन्यथा शशविषाणादयोऽपि कदाचित् प्राप्येरन् । न चास्तित्वनास्तित्वयोर्युगपदेकत्र समवाये किञ्चिदुदाहरणमपि पश्यामो येन विरोधादेकत्र समवेतुमशक्ये अप्येते बलादभ्युपगम्येयाताम् । **अथोच्येत** ह्रस्वत्वदीर्घत्ववदस्तित्वनास्तित्वयोर्युगपदेकत्र समवाय उपपद्यते नास्ति कश्चिद् विरोध इति । **नैतद्वक्तव्यम्** । सापेक्षत्वात् । प्रतियोग्यपेक्षे हि ह्रस्वत्वदीर्घत्वे सत्यपि विरोधे युगपदेकत्रोपपत्तुमर्हतः । अस्तित्वनास्तित्वे तु स्वरूपापेक्षे न ह्रस्वत्वदीर्घत्ववत् प्रतियोग्यपेक्षे स्त इति कथं ते युगपदेकत्रोपपद्येयाताम् । सत्त्वधर्मिण्यसत्त्वस्यासत्त्वधर्मिणि सत्त्वस्य च यथा समवायो नोपपद्यते तथा सत्त्वासत्त्वयोर्मिलितयोरपि क्वचिदेकत्र धर्मिणि शीतोष्णवद् युगपत् समवायो नोपपद्यते । विरोधहेतोरविशेषात् । अवक्तव्यत्वं च भावपदार्थस्य सम्भावयितुमपि न शक्यते किं पुनरवधारयितुम् । यदा खल्वत्यन्तासन्नपि शब्दवृत्त्या सुखेन वक्तुं शक्यते तदा सन्न शक्यत इति नूनमिदं लोकोत्तरं वचो न प्रेक्षावद्भिः श्रद्धातुमुत्सह्यते । भङ्गान्तरेषु चैष समानश्चर्चः । यथा ह्येते चत्वारो भङ्गाः पदार्थेषु न सम्भवन्ति तथा भङ्गान्तराण्यपि न सम्भवन्तीति यथामति स्वयमूहितव्यम् । **निरङ्कुशश्चैषोऽ**नेकान्तवादस्य प्रद्योतकः खलु सप्तभङ्गीन्यायः स यथा पदार्थे प्रवर्तते तथा तत्संख्यानिर्धारणेऽपि प्रवर्तिष्यते । पदार्थत्वाविशेषात् । तत्र प्रवर्तमाने च तस्मिन् तन्निर्धारणमप्यनिर्धारणं प्रसज्येत । तथा चानेकान्तवादिनामेत एव पदार्था इति न निर्धार्येत । नाप्यनेकात्मा निखिलः पदार्थ इति निश्चीयेत । नयोपनिपातस्य तत्राप्यनिवार्यत्वात् । सम्यग्दर्शनज्ञानचारित्राणि चेति त्रयोऽपि मोक्षमार्गाः स्युर्न वा स्युरिति सम्भावनया कोऽपि प्रेक्षावान् तत्र न प्रवर्तेत । कथञ्चित् प्रवर्तमानो वा मोक्षस्य भावाभावनित्यानित्यत्वानवधारणान्निवर्तेत । मार्गवन्मोक्षेऽपि न्यायावतारस्य वारयितुमशक्यत्वात् । **किञ्च** येनायमनेकान्तवादः साध्यते स सप्तभङ्गीन्यायोऽप्येकान्तोऽभ्युपगम्येत किं वाऽनेकान्तः । एकान्ते सर्व-

मनेकान्तमिति व्याहन्येत । तत्साधकन्यायस्यैवैकान्तत्वाभ्युपगमात् । अनेकान्ते कोऽपि पदार्थोऽनेकान्तो न सिध्येत् । स्वयमनेकान्तत्वेनासाधकत्वात् । सेयमुभयतः पाशारज्जुरनेकान्तवादिनः खलु समुपस्थिता न तेनैतया तावदात्मानं मोचयितुं शक्यते यावदेष वादो न परित्यज्यते । मुच्यतां वा बध्यतां वा सर्वथा स्वतन्त्रोऽत्रानेकान्तवादी धीमान्, वयं तु बन्धनहेतुत्वादयुक्तोऽयमनेकान्तवाद इत्यध्यक्षं निगदामः । स्वतन्त्रपरमाणुकारणवादस्तु निपुणतरं पुरस्तान्निराकारि तन्निराकरणेनैवानेकान्तवादिनः स्वतन्त्रपरमाणुकारणवादोऽपि भवति निराकृत इति न पृथक् पराक्रम्यते ॥ ३३ ॥

अनेकान्तवादे दूषणान्तरं समुच्चिनोति—

**"एवं चात्माकार्त्स्न्यम्"** ॥ ३४ ॥

अनेकान्तवादे दूषणान्तरमेतदिति चार्थः । **एवं**=यथैकस्मिन् पदार्थे सत्त्वासत्त्वादिसमावेशासम्भवोऽनेकान्तवादे दूषणमेवमात्माकार्त्स्न्यम्=आत्मनो जीवस्य शरीरपरिमाणत्वेऽपरिपूर्णत्वं दूषणमित्यर्थः ।

अनेकान्तवादिभिर्हि जीवात्मा शरीरपरिमाणोऽभ्युपेयते । शरीराणि च भिन्नपरिमाणानि नैकपरिमाणानि । स चेन्मनुष्यशरीरो भूत्वा केनचित् कर्मविपाकेन हस्तिशरीरमाप्नुयात् तदा न तत् कृत्स्नं व्याप्नुयात् । अल्पत्वात् । नह्यल्पो महत् कथञ्चिद् व्याप्तुमर्हति । सोऽयं कृत्स्नशरीराव्यापित्वादेकोऽकार्त्स्न्ये दोषः । स एव हस्तिशरीरं परित्यज्य चेत् कर्मवशात् पुत्तिकाशरीरं प्रविशेत् तदा महत्त्वान्न कृत्स्नं तत्र सम्मीयेत । नह्यल्पे महान् सम्मातुमर्हति । सोऽयमपरोऽकार्त्स्न्ये दोषः । पुत्तिकाशरीरात् प्रेत्य मनुष्यादिशरीरं परिगृह्णतश्च पुनः स एवाकार्त्स्न्यदोषप्रसङ्ग इति मन्तव्यम् ॥ ३४ ॥

अत्राशङ्क्य समाधत्ते—

**"न च पर्य्यायादप्यविरोधो विकारादिभ्यः"** ॥ ३५ ॥

पर्य्यायाङ्गीकारायुक्तत्वमपिना द्योत्यते । अवधारणे चः । पर्य्यो-

**यात्**=सङ्कोचविकासशक्तिरत्र पर्य्यायः, तस्माद**विरोधः**=जीवात्मनः सर्वशरीरेषु कार्त्स्न्योपपत्तौ नास्ति कश्चिद्विरोध इति **न च**=नैव वक्तव्यम्, कुतः? **विकारादिभ्यः**=भावप्रधानो निर्देशः, विकारः कार्य्यं, तेनेह सावयवत्वं लक्ष्यते, कार्य्यत्वमनित्यत्वं चादिना गृह्येते, सावयवत्वादि-दोषेभ्य इत्यर्थः ।

**अथोच्येत**—शरीरपरिमाणत्वेऽपि जीवः खल्वस्माभिः प्रदीप इव सङ्कोचविकासशक्तिरभ्युपेयते । स यदा मनुष्यशरीरात् प्रेत्य केन चित् कर्मविपाकेन हस्तिशरीरमापद्यते तदा विकासं भजमानः कृत्स्नं तच्छ-रीरं व्याश्नुते । यदा च हस्तिशरीरात् प्रेत्य पुत्तिकाशरीरं गृह्णाति तदा सङ्कोचं भजमानः कृत्स्नं तच्छरीरं व्याप्नोति । यस्य चैवं सङ्कोचाय विकासाय च शक्तिर्यथाकालं प्रदीपवद् व्याप्रियते तस्य न्यूनाधिकशरी-रावाप्तावपि कार्त्स्न्यमुपपद्यते नास्ति कश्चिद् विरोध इति । **नैतद् वक्त-व्यम्** । सावयवत्वादिदोषप्रसङ्गात् । सावयवः खलु प्रदीप इव यथा-वकाशं सङ्कोचाय विकासाय च पारयति न निरवयवः । सङ्कोचविका-सयोः संयोगविशेषात्मकत्वेन निरवयवेऽनुपपत्तेः । अवयवानां निबिड-संयोगो हि सङ्कोच इति व्यपदिश्यते विरलसंयोगश्च विकासः । न च निरवयवस्यावयवा भवन्ति येन सावयववदेतौ तत्राप्युपपद्येयाताम् । प्रदीपस्य सावयवत्वं च तत्प्रकाशनिबिडत्वविरलत्वाभ्यामनुमीयते । सङ्कु-चितप्रदेशे हि तत्प्रकाशो निबिडो दृश्यते विस्तृतप्रदेशे च विरलः । चेदसौ सावयवो न भवेन्न जातु तत्प्रकाशो निबिडो वा विरलो वा क्वचिद् दृश्येत । नहि निरवयवस्य सतस्तस्य तत्त्वं कथञ्चित् सङ्गच्छते । सावयवत्वे तु नास्ति तदसाङ्गत्यं किञ्चिदिति युक्तमनुमिमीमहे । जीवोऽ-पि चेत् सङ्कोचविकासशक्तिरभ्युपेयेत तदाऽवश्यं प्रदीप इव सावयवः प्रसज्येत । तस्मिन् सत्येव सङ्कोचविकासयोरुपपत्तेः । यश्च सावयवः स कृतक इति नियमः । अकृतकस्य सावयवत्वासिद्धेः । कृतकस्य चानि-त्यत्वध्रौव्यात् कृतकः सन्ननित्योऽपि प्रसज्येत । नित्यश्चाभ्युपेयते । **तस्माच्छरीरपरिमाणो जीव इत्ययुक्तम्** ॥ ३५ ॥

दूषणान्तरमाह—

"**अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः**" ॥ ३६ ॥

पूर्वत्रैव दूषणान्तरमेतदिति चार्थः। **अन्त्यावस्थितेः**=अन्तो मोक्षः, तदनु शरीरान्तरप्रवेशाभावात्, तत्र भवं जीवपरिमाणमन्त्यं, तस्यावस्थितिर्नित्यत्वं मोक्षावस्थाभाविनो जीवात्मपरिमाणस्य नित्यत्वाभ्युपगते-**रुभयनित्यत्वात्**=संसारे मोक्षे चोभयस्मिन् नित्यत्वप्रसङ्गाद**विशेषः**= विशेषोऽयुक्त इत्यर्थः।

अनेकान्तवादिनो हि संसारावस्थायां कर्मविपाकवैचित्र्यादुच्चावचशरीरप्रवेशावश्यम्भावेन कार्त्स्न्योपपत्त्यै जीवपरिमाणमनवस्थितमनित्यमभिमन्यमाना मोक्षावस्थायां कर्मविपाकासम्भवेनोच्चावचशरीरप्रवेशाभावादवस्थितं नित्यमभ्युपगच्छन्ति। सोऽयं विशेषो न युज्यते। मोक्षावस्थायामिव संसारावस्थायामपि तन्नित्यत्वप्रसक्तेरवर्जनात्। नहि यन्मोक्षे सर्वदैकरसमवस्थातुं कल्पते तदपरत्र तथाऽवस्थातुं न पारयते। यदि न पारयत इति मन्येत तदा मोक्षेऽपि तथाऽवस्थातुं न कल्पत इत्यभ्युपगम्येत। समानयोगक्षेमत्वात्। एकत्र कल्पते नापरत्रेति तु विनिगमकाभावान्नाभ्युपगन्तुं शक्यते। अस्ति कार्त्स्न्यानुपपत्तिरत्र विनिगमकमिति न वाच्यम्। मनःसम्बन्धादुपपत्तेः। उपपादयिष्यते चैतद्विस्तरेणोपरिष्टात्। न च जीवात्मनः शरीरपरिमाणत्वमभ्युपगच्छतां तन्नित्यत्वमपि कथञ्चिदुपपद्यते। मध्यमपरिमाणमात्रस्यानित्यत्वनियमात्। अन्यथा घटादेरपि नित्यत्वापत्तेः। नित्यश्चाभ्युपगम्यते। तस्मादयुक्तं सर्वमनेकान्तवादिमतं यत्नतो वैदिकैरुपेक्षितव्यं न विपद्यप्युपादातव्यम् ॥३६॥

निरीश्वरवादिनो निरासिषत। सम्प्रति तत्कल्पाः साकारेश्वरवादिनो निरस्यन्ते। तन्निरासपरं सूत्रं पठति—

"**पत्युरसामञ्जस्यात्**" ॥ ३७ ॥

नेति मण्डूकप्लुतिन्यायेन पूर्वाधिकरणसूत्रादनुषज्यते। **पत्युः**=प-

कृतिपुरुषाणां पत्युरीश्वरस्य शरीरित्वाभ्युपगमो न युज्यते, कुतः? **असामञ्जस्यात्**=जगत्स्रष्टृत्वासाञ्जस्यादित्यर्थः ।

साकारेश्वरवादिनस्तावत्केचिद्बाह्याः प्रकृतिं पुरुषांश्च वैदिका इवातिष्ठमानास्तत्पतिमीश्वरं शरीरिणमातिष्ठन्ते । तन्न युक्तं मन्यामहे । शरीरिणस्तस्य यत्किञ्चित्स्रष्टृत्वसामञ्जस्येऽपि सर्वजगत्स्रष्टृत्वासामञ्जस्यात् । शरीरिणो हि यत्किञ्चित्स्रष्टृत्वं समञ्जसं सम्पद्यते न सर्वजगत्स्रष्टृत्वम् । नहि कश्चिच्छरीरी यथा पुत्रादिकं यत्किञ्चिदर्थं सुखेन सृजन् लोके सर्वत्रोपलभ्यते तथा भूमिं तोयं तेजोऽनिलं सूर्य्यं चन्द्रमसं वा सृजन् कचिदुपलभ्यते । किं कारणम्? यत्कारणमल्पार्थसर्जनविषया तस्य निसर्गतः शक्तिर्विद्यते नानल्पार्थसर्जनविषया । चेत्तद्विषयाऽपि विद्येत तदाऽवश्यमल्पमर्थमिव महान्तमर्थमपि सृजन् कचिदुपलभ्येत । न च शक्तिर्विद्यते न सृजति चेति कस्यापि सुधियो धियमारोहति । यावान् खलु शक्तो लोके कचिद् दृश्यते स सर्वो विद्यमानानामेव पृथिव्यादितत्त्वानां संयोगवियोगाभ्यामपूर्वमिव किञ्चिदुत्पादयन्नवलोक्यते । न च तादृक्शक्तिरेकोऽपि कश्चन निरीक्ष्यते यो नाम विद्यमानतत्त्वेभ्योऽन्यत्र स्वीयमपूर्वं किञ्चित् तत्त्वान्तरमुत्पाद्य दर्शयेत् । किं बहुना यदाऽमी सर्वेऽपि शरीरिणो यथाशक्ति चेष्टमानाः पृथिव्यादितत्त्वानां याथातथ्यतस्तत्त्वं न वेदितुमद्ययावत् पारयन्ति तदा तानीमानि स्रक्ष्यन्तीति का प्रत्याशा । जीवन्मुक्तो भगवान् चरमदेहो योगी च ब्रह्मदर्शनमाहात्म्यात् प्राप्तशक्त्यतिशयोऽपि न जातु जगदिदं सर्वं स्रष्टुमीष्टे । तच्छक्त्यतिशयस्य तत्राकिञ्चित्करत्वात् । अत एव वक्ष्यति भगवान् सूत्रकारः "**जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च**" (वे० ४ । ४ । १७) इति । प्रकृतिपुरुषेश्वरोऽपि शरीरी चेदास्थीयेत तदा यत्किञ्चित्स्रष्टा सङ्गच्छमानोऽपि न सर्वजगत्स्रष्टा सङ्गच्छेत । शरीरिणामिवास्माकं तस्यापि तद्गोचरशक्त्यभावस्य वक्तुं शक्यत्वात् । न च तत्रास्मदादिभ्योऽस्ति शक्त्यतिशयः कश्चिदिति सम्यगुच्यते । स्वरूपतः परिच्छिन्नस्य शक्तिपरिच्छेदस्याप्यवश्यम्भावात् । यः खलु स्वरूपतः परिच्छिद्यते स शक्तितोऽपि

परिच्छिद्यते । नो चेत् स्वरूपतः परिच्छिन्नोऽपि शक्तितः परिच्छिद्येत तदा परिच्छिन्नोऽसावपरिच्छिन्नशक्तिभिः समाश्रीयत इति प्रसज्येत । तदिदं न चारु । परिच्छिन्नस्यापरिच्छिन्नाश्रयत्वानुपपत्तेः । तथा च यथाऽस्मदादिः परिच्छिन्नशक्तिस्तथा प्रकृतिपुरुषेश्वरोऽपि परिच्छिन्नशक्तिः शरीरित्वाविशेषादित्यसमञ्जसं तस्य सर्वजगत्स्रष्टृत्वम् । **तस्मात्** प्रकृतिपुरुषेश्वरः शरीरीत्ययुक्तम् ॥ ३७ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"सम्बन्धानुपपत्तेश्च"** ॥ ३८ ॥

न पत्युरिति पदद्वयमनुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । **सम्बन्धानुपपत्तेः**=आश्रयाश्रयिभावसम्बन्धानुपपत्तेः पत्युः शरीरित्वं न युज्यत इत्यर्थः ।

आश्रयाश्रयिभावः सम्बन्धो हि प्रकृतिपुरुषाणां तत्पतेरीश्वरस्य च परस्परं समाश्रीयते । तत्राश्रय ईश्वरः, आश्रयिणश्चोभये प्रकृतिपुरुषाः । तेषां स्वसत्तार्थमीश्वरापेक्षाया अभावेऽपि स्वाश्रयार्थं तदपेक्षाया भावात् । उपपादयिष्याम चैतत् सविस्तरमधस्तात् । प्रकृतिपुरुषेश्वराणां च प्रकृतिरीश्वराश्रया सती यथानियोगं सर्वमिदमुच्चावचं जगन्निर्मिमीते पुरुषाश्च तदाश्रयाः सन्तो यथाकर्म तदुपभुञ्जते । तत्पतिरीश्वरस्तु स्वे महिम्नि वर्तमानः साक्षादुभयान् तान् निरीक्षत एव न किञ्चिदुपभुङ्क्ते । यत्रेदमाम्नातम् **"अनश्नन्नन्यो अभिचाकशीति"** (ऋ० २ । ३ । १७ । २० ) इति । स चेच्छरीरी स्वीक्रियेत नाश्रय उपपद्येत । सर्वत्राश्रयिणामपेक्षयाऽऽश्रयस्याधिकत्वनियमात् । स एव खल्वाश्रय उपपद्यते यः स्वाश्रयिणामपेक्षया परिमाणतो गुणतश्चाधिको वर्तते । न च शरीरी भवन्नीश्वरः प्रकृतिपुरुषापेक्षया कथमप्यधिको भवितुमर्हति । प्रकृतिर्हि विभ्वी विद्यते पुरुषाश्चाणवः सन्तोऽप्यनन्ताः । न चैवम्भूतास्ते परिच्छिन्नाश्रयाः कथञ्चिदुपपद्यन्ते । तत्पतिरीश्वरश्च शरीरित्वादस्मदादिवत् परिच्छिन्नो विस्पष्टो न विवरणं किञ्चिदपेक्षते । तथा चानुपपन्नं तस्य

तदाश्रयत्वम् । तदनुपपत्तौ च सुतरामाश्रयाश्रयिभावः सम्बन्धः । **तस्मादी**श्वरः शरीरीति न सम्यग् ॥ ३८ ॥

अत्रैव हेत्वन्तरमाह—

**"अधिष्ठानानुपपत्तेश्च"** ॥ ३९ ॥

न पत्युरिति पदद्वयमनुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । **अधिष्ठानानुपपत्तेः**=अधिष्ठानमत्र शरीरं तदनुपपत्तेः पत्युः शरीरित्वं न युज्यत इत्यर्थः ।

शरीरे तावदुपपन्ने पत्युः शरीरित्वं सङ्गच्छते । न च वयं तच्छरीरोपपत्तिं पश्यामः । सर्गात् पूर्वं नास्ति तत्साधनं किञ्चिदिति कुत उपपद्येत । सर्गोत्तरकाले च तदुपपत्तावपि नास्ति शरीरी तत्कारणमिति तदुपपत्तिरप्यनुपपत्तिसमैव । किञ्च तच्छरीरं निरवयवं स्यादथवा सावयवम् । निरवयवत्वे शरीरत्वानुपपत्तिः । नहि शरीरं किञ्चिद् भवति निरवयवम् । **कथं** तर्हि प्रकृतिः शरीरं मन्यते? **हन्त** शरीरकल्पा सा मन्यते न शरीरम् । अस्ति माणवकेऽग्निसादृश्यमिव तत्रापि यत्किञ्चिच्छरीरसादृश्यम् । तन्निबन्धनश्चास्माकं तत्र शरीरव्यपदेशो गौणो न मुख्यः । न च गौणेन व्यपदेशसहस्रेणाप्यतद्वस्तु तद्वस्तु सम्पद्यते । अन्यथा माणवकोऽप्यग्निः सम्पद्येत । सावयवमिति चेत्? तदा नास्ति सर्गात्पूर्वमिति व्यर्थमुत्तरत्र तदाख्यानम् ॥ ३९ ॥

**पुन**र्विकल्प्य निरस्यति—

**"करणवच्चेन्न भोगादिभ्यः"** ॥ ४० ॥

पत्युरित्यनुवर्तते । **करणवत्**=इन्द्रियवचनः करणशब्दस्ततो मतुप्, प्रकृतिपुरुषाणां पत्युः शरीरं करणव**च्चेत्**=यदि मन्यते तदा **न**=न मन्तव्यम्, कुतः? **भोगादिभ्यः**=भोगहेतवः सवासनाः कर्मक्लेशा आदिना सङ्गृह्यन्ते, भोगादिप्रसङ्गादित्यर्थः ।

प्रकृतिपुरुषाणां पत्युः शरीरं करणवन्मन्यते किंवा न मन्यते । नेति चेत्? तदा शरीरत्वानुपपत्तिः । शरीरमात्रस्य करणवत्त्वनियमात् । नहि

यत्करणैर्नाश्रीयते तच्छरीरं कर्हिचिदुपपद्यते । शरीरस्य करणाश्रयत्वं च दर्शयति तल्लक्षणमाचक्षाणो भगवान् गोतमः साक्षात् **"चेष्टेन्द्रियार्थाश्रयः शरीरम्"** ( न्या० १ । १ । ११ ) इति । **करणवत्त्वे**-न्मन्यते? तदा न मन्तव्यम् । भोगादिप्रसङ्गात् । भोगसाधनानि खलु करणानि यस्य शरीरं तस्य भोगाय कल्पन्ते । अन्यथा वैयर्थ्यमापद्येरन् । सुखदुःखप्राप्तिश्च भोगः । न च सोऽन्तरेण शुभाशुभं कर्म निष्पद्यते । शुभाशुभं कर्म च नान्तरेण क्लेशादिकमिति भोगप्रसक्तौ सर्वं तत्र प्रसज्येत । न च भगवति तस्मिन् भोगादिकं किञ्चिदिष्यते । यत्रेदमुक्तं भवति **"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः"** ( यो० १ । २४ ) इति । तस्माच्छरीरी प्रकृतिपुरुषेश्वर इत्यसारम् ॥ ४० ॥

अपरं दोषमुपन्यस्यति—

**"अन्तवत्त्वमसर्वज्ञता वा"** ॥ ४१ ॥

पत्युर्नेति पदद्वयमनुवर्तते । चार्थे वाकारः **"अथापि समुच्चयार्थे भवति"** ( नि० १ । २ । ३ ) इति यास्कोक्तेः । **अन्तवत्त्वम्**=अन्तो विनाशस्तद्वत्त्वम्, **असर्वज्ञता वा**=असर्वज्ञत्वं च पत्युः शरीरित्वे प्रसज्येतेत्यर्थः ।

यस्तावच्छरीरं परिगृह्णाति स कदाचित् परित्यजति । नहि परिगृह्णाति न परित्यजति चेति सम्भवति । परिग्रहस्य सर्वत्र परित्यागान्ततोपलम्भात् । योऽयमस्य परिग्रहपूर्वकः परित्यागः स एव विनाशः । प्रकृतिपुरुषाणां पतिरपि चेच्छरीरी भवेत तदाऽवश्यमस्मदादिवद् विनश्येत् । तथा च जीवो भवेन्नेश्वरः । शरीरि च सर्वो लोकेऽल्पज्ञो दृश्यते न कोऽपि सर्वज्ञः । प्रकृतिपुरुषाणां पतिरपि चेच्छरीरी भवेदल्पज्ञः प्रसज्येत । शरीरित्वाविशेषात् । सर्वज्ञश्चाभ्युपेयते । तस्मादीश्वरः शरीरीति फल्गु मतं न वैदिकैः स्वप्नेऽप्युपादेयम् ॥ ४१ ॥

साकारेश्वरवादो निराकारि । सम्प्रति जीवात्मोत्पत्तिवादो निराकरणीयोऽवशिष्यते । बाधत्वाविशेषात् । तमेव निराकरिष्यन्नाह—

"**उत्पत्त्यसम्भवात्**" ॥ ४२ ॥

पत्युरिति पञ्चम्या विपरिणम्य नेति च पदद्वयमनुवर्तते । जगतां पत्युरीश्वराज्जीव उत्पद्यत इति न युक्तम्, कुतः ? **उत्पत्त्यसम्भवात्**= ततस्तदुत्पत्तेः सम्भवाभावादित्यर्थः ।

जीवोत्पत्तिवादिनो हि मन्यन्ते जगतां पत्युरीश्वराज्जीव उत्पद्यते । स चोत्पद्यमानोऽप्यनन्तो न घटादिवत् कदाचित् प्रध्वंसते । अत्र शुभाशुभं कर्म कुरुते परत्र तत्फलमुपभुङ्क्ते । यथाऽसौ शुभाशुभकर्मणां कर्ता स्वयमेव विद्यते न जन्मान्तरवासनावासितस्तथाऽऽन्तरज्ञानानां करणमपि स्वयमेव वर्तते । न च तस्य वैदिकानामिवास्ति किञ्चिदान्तरं करणं मनो नामेति । तन्न सम्यगीक्षामहे । जगतां पत्युरीश्वरतो जीवोत्पत्त्यसम्भवात् । ईश्वरो हि जीवोत्पत्तिकारणं मन्यमानो मृद्वदुपादानं स्यान्निमित्तं वा कुम्भकारवत् । कारणद्वैविध्यस्यैव सर्वत्रोपलब्धेः । तत्र मृद्वदुपादानकारणं जीवस्येश्वर इति न युक्तमुच्यते । अनित्यत्वापातात् । एष खलु नियमो यावदुपादानकारणं तावद् विक्रियमाणं कार्य्यभावमुपसम्पद्यते यथा विक्रियमाणा मृत् कुम्भभावं विक्रियमाणं वा क्षीरं दधिभावम् । न चोपादानकारणं भवेदविक्रियमाणं च कार्य्यभावमुपसम्पद्येतेति क्वचिदस्ति निदर्शनम् । जगतां पतिरीश्वरोऽपि चेज्जीवभावमुपसम्पद्येत तदाऽवश्यं मृदादिवद् विक्रियेत । विक्रियमाणश्च नित्यत्वं जह्यादनित्यत्वं चाप्नुयात् । विक्रियमाणस्यानित्यत्वध्रौव्यात् । प्रकृतिरिव जीवविकारं भजमानोऽपि तत्त्वविघातान्न हास्यति नित्यत्वमिति चेदुच्येत । तदा प्रकृतिविकारवदीश्वरविकारो जीवोऽपि तद्गुणकः प्रसज्येत । प्रकृतिविकारयोः स्वरूपतो वैलक्षण्येऽपि गुणतो वैलक्षण्याभावात् । यावान् खलु विकारः स सर्वः प्रकृतिगुणकोऽनुभूयते यथा मृद्विकारो घटादिर्मृद्गुणकः, सुवर्णविकारो वा रुचकादिः सुवर्णगुणकः । जीवोऽपि चेदीश्वरविकारो विद्येत तदेश्वरस्य क्लेशकर्मविपाकाशयैरपरामृष्टत्वेन दुःखाद्यनाश्रयतया तत्प्रकृतिजीवोऽपि तदनाश्रयः प्रसज्येत । तदा-

श्रयश्च दृश्यते । तत्कथं वयमीश्वरविकारो जीव इति प्रतिपद्येमहि ।
नहि गुणतो विलक्षणत्वे प्रकृतिविकारभावः क्वचिदुपपद्यते । किञ्चायं जीवप्रकृतिरीश्वरः सावयवः स्यादाहोस्विन्निरवयवः ? सावयवश्चेत् ? स्वयमेव जन्यो भवेत् । सावयवस्य जन्यत्वनियमात् । तथा चानवस्था । निरवयवश्चेत् ? सर्वं परिणमेत न किञ्चिदवशिष्येत । यस्तावत् सावयवः पदार्थः स एकदेशतः परिणन्तुं देशान्तरतश्चावस्थातुं पारयते, यः पुनर्निरवयवः स कुतः परिणमेत कुतो वाऽवशिष्येत । नहि सावयववदेष देशतो विभागमर्हति । तथा चेश्वराभावप्रसङ्गः । अथ कुम्भकारवन्निमित्तकारणं जीवस्येश्वर इति चेद् ? न चारु भाष्यते । रागादिदोषवत्त्वप्रसङ्गात् । द्वौ हि सृष्टिस्रष्टारौ खलु लोकशास्त्रतोऽवगम्येते जीव ईश्वरश्च । तत्र जीवो रागादिदोषाक्रान्तचेतस्त्वात् कथञ्चिद् विषमां सृष्टिं निर्मिमीतापि न नोपपद्यते । विस्मयाभावात् । दृश्यते तावद् द्विष्टश्चैत्रो मैत्रं दुःखाकरोति रक्तः स्त्रियं च सुखाकरोति । तत्किमाश्चर्य्यं रागादिदोषप्रयुक्तो निर्मिमाणोऽपि किञ्चिद् विषमीकुर्य्यात् । अकारणं वा द्विष्यात् । ईश्वरस्तु रागादिदोषनिर्मुक्तो नित्यं समदर्शनः करुणैकमूर्तिर्न जातु विषमां सृष्टिं निर्वर्तयितुं प्रविवर्तिषते । प्रयोजनाभावात् । नहि तस्य कश्चिद्द्वेष्योऽस्ति प्रेयान् वा विद्यते । स हि नित्यं समदर्शनो निखिलशक्तिसम्पन्नः कथञ्चित् स्वीयानात्मजान् निर्मातुकामः प्रवर्त्ततापि न काँश्चिद्दुःखबहुलान् निर्मिमीत, सुखबहुलान् वा काँश्चिन् । अपि च ? दुःखबहुलान् वा सुखबहुलान् वा सर्वानविशेषेण निर्मिमीत । लोक्यन्ते तु केचन जीवात्मानो दुःखबहुलाः केचन सुखबहुलास्तदुभयबहुला वा केचन । न चैते हीनोत्तममध्यमभोगभाजो जीवभेदाः कथञ्चिदनपेक्षेण तेन निर्मातुं शक्यन्ते । चेदिह तन्निर्मिता एव मन्येरन् तदा वक्तव्यं कथमिमां विषमां सृष्टिं निर्मिमाणस्य तस्य समदर्शित्वमुपपद्येत कथं वा पृथग्जनस्येव रागादिदोषवत्त्वं न प्रसज्येत । यत्कारणं रागादिदोषवशग एव विषमीकर्तुं समीहते न तद्रहितो धीमान् । यदीश्वरोऽपि रागादिवशगो भवन् जीववत् खलजनैरपि जुगुप्सितं विषमीभावं भावयितुं

समीहेत तदा भवतामेव स ईश्वरो भवेन्नास्माकं वैदिकानाम् । किञ्च जीवारम्भकारणमीश्वरः ससहायः स्यान्निःसहायो वा । नान्त्यः । प्रकृतिसहायस्यैव लोके कार्य्यारम्भकत्वदर्शनात् । नहि प्रकृतिमनपेक्षमाणो निःसहायः कश्चित् कार्य्यारम्भको दृश्यते । कुम्भकारोऽपि कुम्भमारभमाणो मृदमपेक्षत एव । ईश्वरोऽपि चेज्जीवमारिप्सेत तदाऽवश्यं तत्प्रकृतिं काञ्चनापेक्षेत । न चेश्वरतो व्यतिरिक्ता काचन तत्प्रकृतिरभ्युपेयते । तथा च कथमेकाकिनस्तस्माज्जीवोत्पत्तिः सम्भवेत् । **अथोच्येत**— शक्तिहीनत्वात् कुम्भकारः खलु कुम्भमारभमाणस्तत्प्रकृतिमपेक्षते । भगवतः परमेश्वरस्य तु कर्तुमकर्तुमन्यथा वा कर्तुं शक्तत्वाज्जीवारम्भणे प्रवर्तमानस्य नास्ति किञ्चिद् बाह्यमपेक्षितव्यम् । स हि सत्यसङ्कल्पो यदा सङ्कल्पयति भवताद् भवत्येव यदा सङ्कल्पयति नश्यतान्नश्यत्येव । यस्य खलु सङ्कल्पादेव सर्वसम्भवः स तस्मै तस्मै कार्य्याय प्रवर्तमानोऽपि किमपरं बाह्यमपेक्षेत । नहि तस्य किञ्चिदनुपपन्नं नाम । लोकोत्तरत्वात् । युक्तं चैतत् । अन्यथा कार्य्यारम्भणे जीववत् प्रकृतिमपेक्षमाणः कश्चिज्जीव एव प्रसज्येत नत्वीश्वरः । ईश्वरो विद्यते कार्य्यारम्भणे तत्प्रकृतिमपेक्षते चेति फल्गु भाषणम् । लोकसीमानुरोधस्य लोकोत्तरे तस्मिन्नकिञ्चित्करत्वादिति । **नैतद् वक्तव्यम्** । सङ्कल्पस्याश्रयवद् विषयापेक्षाया अवश्यम्भावेन तद्विषयस्य जीवस्य नित्यत्वप्रसङ्गात् । यथा हि सङ्कल्पः स्वस्वाश्रयमपेक्षते तथा विषयमप्यपेक्षते । न च जीवादन्यस्तद्विषयः कश्चिद् वक्तुं शक्यते । जीवो भवतादिति जीवस्यैव तद्विषयत्वेनाधिगतत्वात् । तस्य तद्विषयत्वे चास्ति सङ्कल्पादपि पूर्वं जीव इति नित्यः स प्रसज्येत । यश्च नित्यो न तस्येश्वरादुत्पत्तिः सम्भवति । नित्यस्योत्पत्त्यनुपपत्तेः । नापि ससहाय इति वक्तुं शक्यते । सहायानिरूपणात् । यः खलु जीवारम्भणे सहायः स चेतनः स्यादाहोस्विदचेतनः । चेतन इति चेत्? न । अनभ्युपगमात् । नहीश्वरव्यतिरेकेण चेतनः कश्चिदभ्युपगम्यते । अचेतनश्च चेतनारम्भणे किं साहाय्यमाचरिष्यति । न च सोऽपि कक्षीक्रियते । यस्य खलु जगत्पतेः परमेश्वरादृते चेतनम-

चेतनं वा किमपि तत्त्वं न वर्तते, परमेश्वर एव चैकाकी सङ्कल्पमात्रात सर्वमिदं चेतनाचेतनात्मकं जगदारभते, तस्य नूनमिदं बहु कठिनमापद्यते कथमेकाकिनस्तस्माद्विचित्रमिदं जगत् सहसोत्पत्स्यते। नह्यविचित्रात् कारणाद् विचित्रं कार्य्यं कथञ्चिदुत्पत्तुमर्हति। कार्य्यवैचित्र्यस्य कारणवैचित्र्यनिबन्धनत्वनियमात्। यच्चोत्पद्यते तत् कदापि न प्रध्वंसत इति तु भावत्कं वचोमात्रं न तत्र लेशतोऽपि कश्चिदर्थो विद्यते। घटादिवदुत्पद्यमानस्य प्रध्वंसावश्यम्भावात्। **तस्मा**दीश्वरतो जीव उत्पद्यत इत्ययुक्तम्॥ ४२॥

**जीव**व्यतिरेकेण नास्ति किञ्चिदान्तरं करणं मनो नामेति प्रतिक्षिपति—

**"न च कर्तुः करणम्"॥ ४३॥**

नेत्यनुवर्तते। **कर्तुः**=शुभाशुभकर्मकर्तुर्जीवात्मनः **करणं**=मनोनामान्तरं करणं न विद्यत इति **न च**=नैव युक्तमित्यर्थः।

प्रतिज्ञामात्रं खल्वेतद् भवता विधीयते नास्ति जीवात्मव्यतिरेकेण मनो नामान्तरं करणमिति, न तत्साधकं प्रमाणं किञ्चिदुपन्यस्यते। न च तदुपन्यासाभावे प्रतिज्ञामात्रात् कश्चिदर्थः सेद्धुमर्हति। प्रतिज्ञायाः सापेक्षत्वेनार्थासाधकत्वात्। सापेक्षा हि प्रतिज्ञा भवति। साध्यनिर्देशात्मकत्वात्। या च स्वयं सापेक्षा सततं प्रतिज्ञातार्थस्य सिद्ध्यै साधकं हेतुमपेक्षते न सा कञ्चिदर्थं साधयितुं क्षमते। **तस्माज्जीव**व्यतिरेकेण नास्ति करणमान्तरं मनो नामेति न युक्तम्॥ ४३॥

**अथोच्येत**—न खलु प्रतिज्ञामात्राद् वयं नास्ति जीवात्मव्यतिरेकेण मनो नामान्तरं करणं किञ्चिदिति ब्रूमः—किं तर्हि? न तत् कुत्राप्यपेक्ष्यत इत्यनपेक्ष्यत्वात् तत्सद्भावं व्यासेधामः। यद्धि कुत्रचिदपेक्ष्यते न तत् कर्हिचिद् व्यासेद्धुं शक्यते। तद्विनाऽपेक्षितार्थासिद्धेः। यच्च कुत्रापि नापेक्ष्यते न तदस्तीति वक्तुं पार्य्यते। नह्यस्ति च कुत्रापि नापेक्ष्यते चेति सम्भवति। न च मनोऽपेक्षां कुत्रचिदीक्षामहे। तस्मान्नास्ति मन इति युक्तस्तत्सद्भावप्रतिषेध इति। अस्योत्तरं पठति—

**"विज्ञानादिभावे वा तदप्रतिषेधः" ॥ ४४ ॥**

चार्थो वाकारः शङ्कोत्तरमेतदिति प्रद्योतयति । **विज्ञानादिभावे**= बाह्यविषयज्ञानतो विशिष्टं ज्ञानं विज्ञानम्, इच्छाप्रभृतिरादिपदार्थः, भावोऽत्रोत्पत्तिः, विज्ञानाद्युत्पत्तौ मनोऽपेक्षायाः सद्भावेन **तदप्रतिषेधः**= तदा करणं मनः परामृशति, तत्प्रतिषेधो न युज्यत इत्यर्थः ।

न तावत् कुत्रापि मनो नापेक्ष्यत इति युक्तमुच्यते । ज्ञानाद्युत्पत्तावेव तदपेक्षायाः सद्भावात् । यथा हि बाह्यविषयज्ञानोत्पत्तौ खलु चक्षुरादिकं बाह्यं करणजातं नियमेनापेक्ष्यते तथाऽऽन्तरविषयज्ञानोत्पत्तौ मनोऽपि नियमेनापेक्ष्यते । चक्षुराद्यभावे रूपादिबाह्यविषयज्ञानवदान्तरविषयज्ञानस्यापि मनोऽभावेऽनुत्पत्तेः । सुखादयो ह्यान्तरविषयाः प्रसिद्धाः । न च तद्गोचरं विज्ञानं मनोऽभावे कथञ्चिदुत्पत्तुमर्हति । नहि बाह्यं किमपि करणं तत्रोपयुज्यते । तस्य बाह्यविषयज्ञानोत्पत्तिहेतुत्वेनान्तरविषयज्ञानोत्पत्त्यहेतुत्वात् । जीवात्मा च तद्गोचरविज्ञानस्याश्रयत्वान्न तत्करणमुपपद्यते । क्रियाभेदो हि विज्ञानम् । क्रिया च नियमेन कर्तारमाश्रयते न करणमिति कथं स तत्करणमुपपद्येत । न च मनोऽतिरिक्तमान्तरं करणं किञ्चिद् विद्यते यत्करणिका सा परिकल्प्येत । यदि च मनोऽपि तत्र करणं नाभ्युपेयेत तदाऽकरणिका सा प्रसज्येत । न च क्रिया काचिदकरणिका सम्भवति । क्रियामात्रस्य करणजन्यत्वनियमात् । सुखादीनां च मनोविशिष्टे जीवात्मन्युत्पत्तिरभ्युपेयते न केवले तस्मिन् । विकारित्वप्रसङ्गात् । तत्रोत्पन्नानां च तेषामस्ति मनसा साक्षात्सन्निकर्ष इत्युपपद्यते तद्गोचरं मानसं विज्ञानम् । यथा च सुखादिज्ञानोत्पत्तौ मनोऽपेक्षा वर्तते तथा ज्ञानमात्रोत्पत्तावपि वर्तते । सुखादिवज्ज्ञानस्यापि तद्विशिष्टधर्मत्वाभ्युपगमात् । इच्छाप्रभृतिश्च ज्ञानसमकक्षो गुणः सर्वसम्प्रतिपन्न इति तत्रापि मनोऽपेक्षा युक्तं विज्ञायते । अन्यथा विशिष्टधर्मत्वानुपपत्तेः । यस्य चैवं ज्ञानाद्युत्पत्तौ सर्वत्र नियमेनापेक्षा वरीवृत्यते न तत् कथमपि प्रतिषेद्धुं शक्यते । तदभावेऽपेक्षितार्थासिद्धेः ।

**तस्मा**ज्जीवात्मव्यतिरेकेण नास्ति किञ्चिदान्तरं करणं मनो नामेत्य-सङ्गतम् ॥ ४४ ॥

उपसंहरति—

"**विप्रतिषेधाच्च**" ॥ ४५ ॥

चकारेण मनःसद्भावप्रतिपत्तिः समुच्चीयते । **विप्रतिषेधात्**=वि-वेकपूर्वकः प्रतिषेधो विप्रतिषेधः, तस्मात्—श्रुत्या मनसो विविच्य जीवो-त्पत्तिप्रतिषेधात्, तद्व्यतिरेकेण सर्वज्ञानोत्पत्तिसाधनतया मनःसद्भा-वप्रतिपादनाच्च जीवोत्पत्तिवादिमतमयुक्तमित्यर्थः ।

"**न जायते म्रियते वा विपश्चित्**" ( कठ० २ । १८ ) इत्यादिश्रुत्या मनोविविक्तं जीवात्मानं विपश्चिच्छब्देन निर्दिश्य तदुत्पत्तिः प्रतिषिध्यते । "**अन्यत्रमना अभूवं नादर्शम्, अन्यत्रमना अभूवं नाश्रौषम्**" ( बृ० १ । ५ । ३ ) इत्यादिश्रुत्या च सर्व-ज्ञानसाधनमन्तःकरणं मन इति प्रतिपाद्यते । न च तत्प्रतिषिद्धमुपा-दातुं तत्प्रतिपादितं च कर्हिचिद् हातुं शक्यते । प्रमाणं हि सा वैदिकानां सर्वेष्वर्थेषु छन्दोभ्योऽधस्तात् । **तस्मात्** सर्वथाऽयुक्तमिदं जीवोत्पत्तिवादिमतं वैदिकैरुपेक्ष्यम् ॥ ४५ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यात्माराम-भगवत्पादशिष्यहरिप्रसादवैदिकमुनिविरचितायां वेदान्तसूत्रवैदिकवृत्तौ द्वितीयाध्यायस्य द्वितीयः पादः ॥**

---



# द्वितीयोऽध्यायः

## तृतीयः पादः

प्रथमाध्याये प्रतिपादितो ब्रह्मणि जगज्जन्मादिकारणत्वोपपादनमुखो वेदान्तश्रुतिसमन्वयः स्मृतितर्काभ्यां तर्काभाससमुत्थितैः स्वतन्त्रप्रधानाण्वादिकारणवादैश्च न विरुध्यत इति प्रथमद्वितीयपादयोर्विस्तरेणोपपादितम्। सम्प्रति स परस्परमपि न विरुध्यत इत्युपपादयितव्यमवशिष्यते मुमुक्षूणां निष्ठातिशयसम्पादनाय। तदर्थमिमं तृतीयं पादमारभमाणः पूर्वं तावदाकाशादिगोचरं सृष्टिश्रुतिविरोधं परिहरिष्यन् पूर्वपक्षयति—

**"न वियदश्रुतेः"** ॥ १ ॥

**वियत्**=आकाशं **न**=ब्रह्मणः सकाशादुत्पद्यत इति नाभ्युपगन्तुं शक्यते, कुतः? **अश्रुतेः**=श्रवणं श्रुतिस्तदभावादित्यर्थः।

छान्दोग्ये हि षष्ठप्रपाठके **"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"** (छां० ६। २। १) इति प्रकृतात् सच्छब्दवाच्याद् भगवतो ब्रह्मणस्तेजोऽबन्नानां त्रयाणामेव महाभूतानामुत्पत्तिरीक्षणपूर्विका श्रूयते **"तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत"** (छां० ६। २। ३) इत्यादिना, नाकाशस्य नापि वायोः। अतः संशयः किमाकाशं ब्रह्मणः सकाशादुत्पद्यते किंवा नोत्पद्यत इति। नोत्पद्यत इति पूर्वः पक्षः, उत्पद्यत इति सिद्धान्तः। तत्र पूर्वं पूर्वःपक्ष उपन्यस्यते। चेदाकाशमपि भगवतस्तस्मादुत्पद्येत तदाऽवश्यं तेजःप्रभृतिवच्छ्रूयेत। न चाश्रूयमाणं शक्यमभ्युपगन्तुम्। नहि वैदिका अतीन्द्रियार्थगोचरज्ञानोत्पत्तौ श्रुतिमन्तरेण प्रमाणान्तरं किञ्चिदनुमन्यन्ते। तस्मादाकाशं ब्रह्मणः सकाशादुत्पद्यत इति न सम्यक्। तथा च वि-

रुद्धो भगवति तस्मिन् जगज्जन्मादिकारणत्वोपपादनमुखो वेदान्तश्रुति-समन्वयः ॥ १ ॥

सिद्धान्तयति—

**"अस्ति तु" ॥ २ ॥**

**तु**शब्देन पूर्वः पक्षो व्यावर्त्यते । **अस्ति**=ब्रह्मणः सकाशादाकाशमुत्पद्यत इति श्रुतिर्विद्यत इत्यर्थः ।

यद्यपि छान्दोग्ये सृष्टिप्रकरणे भगवतो ब्रह्मणः सकाशादाकाशस्योत्पत्तिश्रुतिर्न विद्यते तथापि तैत्तिरीयके विद्यते । तैत्तिरीयका हि **"सत्यं ज्ञानमनन्तं ब्रह्म"** ( तै० २ । १ ) इति प्रकृत्य समामनन्ति **"तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद् वायुः"** ( तै० २ । १ ) इति । न चैकत्राश्रवणमन्यत्रश्रवणं बाधते । श्रुतेनाश्रुतस्य पूरणं च स्वयमेव वक्ष्यति । तस्माद् ब्रह्मणः सकाशादाकाशमुत्पद्यत इति नासम्यक् । **तथा च** नास्ति कश्चित् समन्वयविरोधः ॥ २ ॥

तदेतदसहमानः पार्श्वस्थ आशङ्कते—

**"गौण्यसम्भवात्" ॥ ३ ॥**

**गौणी**=तैत्तिरीयके श्रुताऽऽकाशोत्पत्तिर्गौणी मन्तव्या, कुतः ? **असम्भवात्**=मुख्यासम्भवादित्यर्थः ।

व्यापकं खल्वाकाशमभ्युपगम्यते । यत्रैतदुक्तं भवति **"विभवान्महानाकाशस्तथा चात्मा"** ( वै० ७ । १ । २२ ) **"शब्दसंयोगविभवाच्च सर्वगतम्"** ( न्या० ४ । २ । १९ ) **"अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः"** ( न्या० ४ । २ । २० ) इति । यच्च व्यापकं तन्निरवयवम् । सावयवस्य व्यापकत्वानुपपत्तेः । न च निरवयवस्योत्पत्तिर्मुख्या सम्भवति । द्रव्यं सदस्पर्शवच्चाकाशम् । तदात्मवन्नित्यं भवितुमर्हति नानित्यम् । अनित्यस्य कुत्रापि तथात्वाप्रसिद्धेः । न च नित्यस्य सततस्योत्पत्तिर्मुख्या सम्भावयितुमपि

शक्यते किं पुनरभ्युपगन्तुम्। श्रूयते च। न च श्रूयमाणा सहसाऽपह्नोतुमुत्सह्यते। अप्रामाण्यप्रसङ्गात्। गौणकल्पनायां तु नास्ति कश्चिद्दोषः। लोकवदुपपत्तेः। यथा हि लोके खलु देवदत्तो जातो यज्ञदत्तो जात इति देवदत्तादीनामभिधीयमाना जनिर्गौण्युपपद्यते तथा तैत्तिरीयके श्रूयमाणाऽऽकाशोत्पत्तिरपि गौण्युपपद्यते। अभिव्यक्तिलक्षणस्य कार्य्यगुणस्योभयत्राप्यविशेषात्। अतः **"तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद् वायुः"** (तै० २। १) इति येयमाकाशोत्पत्तिः श्राव्यते सा गौणी श्राव्यते न मुख्येति मन्तव्यम्॥ ३॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"शब्दाच्च"** ॥ ४॥

गौणीत्यनुवर्तते। पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः। **शब्दात्**=श्रुतिवचनादाकाशोत्पत्तिर्गौणी प्रतिपत्तव्येत्यर्थः।

बृहदारण्यके ह्याकाशस्यामृतत्वमुच्यते **"वायुश्चान्तरिक्षं चैतदमृतम्"** (बृ० २। ३। ३) इति। न चामृतस्य सतस्तस्योत्पत्तिर्मुख्या कर्हिचिदुपपद्यते। न ह्युत्पत्तिमद् भवति क्वचित् कदाचित् किञ्चिदमृतम्। तस्मात् प्रतिपद्यते नूनमाकाशस्योत्पत्तिर्गौणी श्राव्यते न मुख्या। **तथा च** तदवस्थो वेदान्तश्रुतिसमन्वयविरोधः॥ ४॥

स्यादेतत् **"तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद् वायुः"** (तै० २। १) इत्यादिश्रुतिवाक्ये तावदेक एवोत्पत्तिवचनः सम्भूतशब्दः पठ्यते। स यथाऽऽकाशेन सम्बध्यते तथोत्तरत्रानुवर्तमानो वायुना तेजःप्रभृतिभिश्च सम्बध्यते। सर्वत्राविशेषेण सम्बध्यमानस्य च तस्य कथमेकत्र गौणार्थत्वमपरत्र च मुख्यार्थत्वं स्यात्। न ह्येकस्मिन् वाक्ये पठ्यमानः कश्चिदेकः शब्दो युगपद् वृत्तिद्वयमाश्रयितुमर्हति विरोधादिति। अस्योत्तरं पठति—

**"स्याच्चैकस्य ब्रह्मशब्दवत्"** ॥ ५॥

अप्यर्थश्चो भिन्नक्रमः । **एकस्य च**=एकस्यापि सम्भूतशब्दस्य **स्यात्**=गौणार्थत्वं मुख्यार्थत्वं च स्यात्, **ब्रह्मशब्दवत्**=यथैकस्य ब्रह्मशब्दस्य गौणार्थत्वं मुख्यार्थत्वं चेत्यर्थः ।

यथा हि "**तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति**" (तै०३।२) इत्यादिश्रुतिवाक्ये खलु पठ्यमानस्यैकस्यैव ब्रह्मशब्दस्य पूर्वत्र ब्रह्मणि मुख्यार्थत्वमुत्तरत्र तपसि च गौणार्थत्वमस्ति तथा "**तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद् वायुः**" (तै० २ । १) इत्यादिश्रुतिवाक्येऽपि सम्भूतशब्दस्यैकस्य तेजःप्रभृतिषु मुख्यार्थत्वमाकाशे च गौणार्थत्वं भविष्यति । साक्षाद् व्यक्तिभेदाभावेऽपि सम्बन्धिभेदेन भेदोपपत्त्या युगपद् वृत्तिद्वयाश्रयणनिबन्धनविरोधाप्रसक्तेः । तत्र हि वृत्तिद्वयाश्रयणे विरोधः प्रसज्यते यत्र शब्दव्यक्तिर्न भिद्यते । अत्र च वाय्वादिसम्बन्धिभेदादस्ति शब्दव्यक्तिभेदो विस्पष्टः । **तस्मा**दाकाशोत्पत्तिर्गौणीति युक्तं मतम् ॥ ५ ॥

ननु "**तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुः**" (तै० २ । १) इत्यादिश्रुतिवाक्ये चेदाकाशोत्पत्तिर्गौणी मन्येत तदा "**सोऽकामयत बहु स्यां प्रजायेयेति । स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किञ्च**" (तै० २ । ६) इत्युत्तरत्र श्रूयमाणसर्वोत्पत्तिप्रतिज्ञा हीयेत । उत्पद्यमानेषु सर्वेष्वाकाशस्याप्यन्तर्भावात् । नहि नित्यस्य सततस्योत्पद्यमानेषु तेष्वन्तर्भाव उपपद्यत इति । अस्योत्तरं पठति—

"**प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः**" ॥ ६ ॥

**प्रतिज्ञाऽहानिः**=आकाशस्य नित्यत्वेऽपि सर्वोत्पत्तिप्रतिज्ञाया हानिर्न भवति, कुतः? **अव्यतिरेकात्**=तस्य व्यापकत्वेनोत्पद्यमानैरर्थैर्व्यतिरेकाभावात् । कुतोऽवगम्यते? **शब्देभ्यः**=श्रुतिवाक्येभ्य इत्यर्थः । व्यापकं खल्वाकाशमित्युक्तम् । तस्य व्यापकत्वेन यावन्तः पदार्था उत्पद्यन्ते सर्वैस्तैरन्वयो विद्यते न व्यतिरेकः । नहि तादृशः कश्चिन् पदार्थः कदाचित् कुत्रचित् प्रदर्शयितुं शक्यते येन स नान्वीयेत यथासुखं च

व्यतिरिच्येत । परिच्छिन्नं हि द्रव्यं कुतश्चिद् व्यतिरिच्यते कुत्रचिच्चान्वीयते । न चाकाशं परिच्छिन्नम् । तद्व्यापकत्वस्य प्रामाणिकत्वात् । सोऽयं व्यापकस्य तस्योत्पद्यमानैर्निखिलैरर्थैर्व्यतिरेकाभावः **"आकाशः परायणम्"** ( छां० १ । ९ । १ ) **"आकाशो वै नाम नामरूपयोर्निर्वहिता"** ( छां० ८ । १४ । १ ) **"आकाश एव तदोतं च प्रोतं च"** ( बृ० ३ । ८ । ७ ) इत्यादिश्रुतिवाक्येभ्योऽपि स्फुटमवगम्यते । नहि यत्र द्यावापृथिव्यादिकं सर्वं जगदोतं प्रोतं यच्च सर्वस्य तस्य परायणं तस्य ततो व्यतिरेकः केनापि वक्तुं पार्य्यते । यस्य च यतो नास्ति व्यतिरेकस्तस्य घटोत्पत्त्या घटाकाशोत्पत्तिवत् तदुत्पत्त्योत्पत्तिरौपचारिकी शक्यते प्रतिज्ञातुम् । आत्मोत्पत्तिवद्वा तदुत्पत्तिरौपचारिकी द्रष्टव्या । नह्यात्मा यावन्न विमोक्ष्यते तावच्छरीरतो-व्यतिरिच्यते तदुत्पत्त्या च तदुत्पत्तिर्नोपचर्य्यते । तस्मादाकाशस्य नित्यत्वेऽपि सर्वोत्पत्तिप्रतिज्ञा युज्यते न जातु हीयते । तथाच **"तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुः"** ( तै० २। १ ) इति गौणी तदुत्पत्तिः श्राव्यते न मुख्येति वेदान्तश्रुतिसमन्वयविरोधस्तदवस्थः ॥ ६ ॥

समाधत्ते—

**"यावद्विकारं तु विभागो लोकवत्"** ॥ ७ ॥

तुशब्देनोक्ताशङ्का व्यावर्त्त्यते । **यावद्विकारं**=विकारः कार्य्यं, तत्पर्य्यन्तं **विभागः**=अवयवविभागो **लोकवत्**=घटपटादिवद् द्रष्टव्य इत्यर्थः ।

यस्य खलु पदार्थस्यावयवविभागो जायते स विकार इति निश्चयः । लोके विकाराणामेव घटपटादीनामवयवविभागस्य दृष्टत्वात् । नहि विकारो न विद्यतेऽवयवैश्च विभज्यत इति सम्भवति । सावयवो हि पदार्थोऽवयवैर्विभज्यते । निरवयवस्यावयवाभावेनावयवविभागानुपपत्तेः । सावयवाश्च घटपटादयः पदार्था विकाराश्चेति सर्वसम्प्रतिपन्नम् । ते यथाऽवयवैर्विभज्यन्ते तथाऽऽकाशमप्यवयवैर्विभज्यते । द्रव्यभेदस्य द्रव्य-

भेदवदवयवैर्विभागस्यौचित्यात् । यथा हि द्रव्यभेदाः खलु घटपटादय-स्तथाऽवकाशोपलक्षितो द्रव्यभेद आकाशम् । ते स्थूलत्वात् स्थूलदर्शिभिः सूक्ष्मदर्शिभिश्चोभयैर्दृश्यन्ते सूक्ष्मत्वाच्चाकाशं सूक्ष्मदर्शिभिरेव दृश्यते न स्थूलदर्शिभिः । अत एव च तदवयवविभागोऽपि सूक्ष्मदृशामेव दृष्टि-गोचरतामापद्यते न स्थूलदृशां विद्याचक्षुर्विहीनानामित्येतावान् विशेषः । व्यापकत्वं च तस्य भूतभौतिकपदार्थापेक्षया प्रोच्यते न सर्वपदार्थापेक्षयेति न तत् तस्यावयवविभागं निरुणद्धि नापि निरवयवत्वं व्यवस्थापयति । सावयवेष्वप्यहङ्कारादिष्वापेक्षिकस्य तस्याङ्गीकारात् । व्यतिरेकाभावप्रति-पादनपरत्वेनोदाहृतानि श्रुतिवाक्यानि चान्यपराण्यपि नास्माकं किञ्चित् प्रातिकूल्यमाचरन्ति । व्यापकस्य भूतभौतिकपदार्थैः सर्वैर्व्यतिरेकाभावस्ये-ष्टत्वात् । **"वायुश्चान्तरिक्षं चैतदमृतम्"** ( बृ० २ । ३ । ३ ) इत्यमृतत्वं च चिरस्थायित्वान्निगद्यते न नित्यत्वात् । अवयवैर्विभज्यमा-नस्य नित्यत्वासिद्धेः । एतेन द्रव्यं सदस्पर्शवदाकाशमित्यपि कदर्थितं वेदितव्यम् । अवयवविभागाश्रयस्यास्पर्शवत्त्वानुपपत्तेः । नह्यवयवविभाग-माश्रयते न स्पृश्यते चेत्युपपद्यते । सावयवस्य स्पृश्यत्वनियमात् । स्पृश्यं भवदाकाशं च कैश्चिदेव स्पृश्यते न सर्वैरविशेषेणेति त्वन्यदेतत् । अव-यवविभागाश्रयत्वे च नूनं स विकार इति गम्यते । न च विकारत्वेन गम्यमानस्योत्पत्तिर्गौणी कथञ्चिद् युज्यते । तस्मात् **"तस्माद्वा एत-स्मादात्मन आकाशः सम्भूत आकाशाद् वायुः"** ( तै० २ । १ ) इति ब्रह्मणः सकाशादाकाशोत्पत्तिर्मुख्यैव श्राव्यते न गौणीति मन्तव्यम् । **तथा च** नास्ति कुत्रापि वेदान्तश्रुतिसमन्वयविरोधः ॥ ७ ॥

अतिदिशति—

**"एतेन मातरिश्वा व्याख्यातः"** ॥ ८ ॥

**एतेन**=ब्रह्मणः सकाशादाकाशमुत्पद्यत इति व्याख्यानेन **मात-रिश्वा**=वायु**र्व्याख्यातः**=ब्रह्मणः सकाशादुत्पद्यत इति व्याख्यातो द्रष्टव्य इत्यर्थः ।

यथा हि ब्रह्मणः सकाशादाकाशं तावदुत्पद्यते तथाऽऽकाशानन्तरं

वायुरप्युत्पद्यते । समानं ह्युभयोर्ब्रह्मकारणम् । आकाशस्य तत्कारणद्वारा वायोश्चाकाशद्वारेति विशेषः । पूर्वोत्तरपक्षौ च पूर्ववदत्रापि रचयितव्यौ विस्तरभिया नास्माभिर्विरच्येते । **"सैषाऽनस्तमिता देवता यद्वायुः"** ( बृ० १ । ५ । २२ ) **"वायुश्चान्तरिक्षं चैतदमृतम्"** ( बृ० २ । ३ । ३ ) इति चामहाप्रलयमवस्थानमभिप्रेत्य वायोरस्तमयः प्रतिषिध्यतेऽमृतत्वं च प्रतिपाद्यते न नित्यत्वमभिप्रेत्य । प्रकृतिपुरुषेश्वरेभ्योऽन्यस्य कस्यापि परमार्थतो नित्यत्वानभ्युपगमात् । वियन्मातरिश्वनोः पूर्वोत्तरपक्षयोस्तुल्यत्वेऽपि पृथग् योगकरणं **"तेजोऽतस्तथा ह्याह"** ( वे० २ । ३ । १० ) इत्युत्तरत्र मातरिश्वनः परामर्शार्थम् । अन्यथा तत्राकाशपरामर्शोऽप्याशङ्क्येत ॥ ८ ॥

**अथोच्येत** यथा हि श्रुत्या खलु वायोराकाशस्य चास्तमयप्रतिषेधेनामृतत्वप्रतिपादनेन च नित्यत्वं परिकीर्त्यते तथा **"नित्यो नित्यानाम्"** ( कठ० ५ । १३ ) इति ब्रह्मणोऽपि नित्यत्वं सङ्कीर्त्यते । तस्मिन् परिकीर्त्यमानेऽपि चेदाकाशो वायुश्च ब्रह्मणः सकाशादुत्पद्येते तदा ब्रह्मापि कुतश्चिदुत्पद्यताम् । अविशेषात् । नह्येकत्रापेक्षिकं नित्यत्वमपरत्र चानापेक्षिकमिति विशेषोऽभिधातुं शक्यते । कल्पनामात्रत्वात् । कल्पना च यथैकत्रावकाशं लभते तथाऽपरत्रापि लब्धुं कल्पते निरङ्कुशत्वादिति । अस्योत्तरं पठति—

**"असम्भवस्तु सतोऽनुपपत्तेः"** ॥ ९ ॥

तुशब्देनोक्ताशङ्का व्यावर्त्यते । **सतः**=सच्छब्दवाच्यस्य भगवतो ब्रह्मणो**ऽसम्भवः**=सम्भव उत्पादो न युज्यते, कुतः ? **अनुपपत्तेः**=विकारत्वानुपपत्तेरित्यर्थः ।

**"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"** ( छां० ६ । २ । १ ) इति सद् ब्रह्म प्रकान्तम् । तस्माद् वेदान्तश्रुतिसमन्वयविरोधापनुत्त्यै श्रुत्यन्तरानुसारेणाकाशस्य वायोश्चोत्पत्तिः प्रतिपादिता । सम्प्रति तत्सामान्याद् ब्रह्मोत्पत्तिः शङ्क्यते । तत्र शङ्कितुराशयोऽ-

भिहितः समाधातुरिदानीमभिधीयते । यः खलु विकारः स कुतश्चिदुत्पद्यते यथाऽऽकाशादिः । न च सद् ब्रह्म विकार इत्युपपद्यते । अवयवविभागासम्भवात् । अवयवविभागनिबन्धनं हि वस्तुनो विकारत्वं गम्यते । नहि यस्यावयवविभागो न जायते स विकार इति गन्तुं शक्यते । अवयवविभागश्च सावयवस्य सम्भवति न निरवयवस्य । निरवयवं च ब्रह्म । **"विरजं ब्रह्म निष्कलम्"** ( मुं० २ । २ । ९ ) **"ततस्तु तं पश्यते निष्कलं ध्यायमानः"** ( मुं० ३ । १ । ८ ) **"निष्कलं निष्क्रियं शान्तम्"** ( श्वे० ६ । १९ ) इत्यादिश्रुतिभ्यः । न च तस्यावयवविभागासम्भवे विकारत्वं युज्यते । अविकारत्वे चोत्पत्त्ययोगः सुतराम् । विकारस्यैवोत्पत्तिनियमात् । नह्यविकारः कश्चित् कदाचिदुत्पद्यते । **"स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता नचाधिपः"** ( श्वे० ६ । ९ ) इति च स्वयं श्रुतिस्तस्य जनयितारं वारयन्ती विकारत्वं प्रतिषेधति । न च तत्प्रतिषिद्धं शक्यते समाश्रयितुम् । **तस्माद्** यथा वियदादिकं ब्रह्मणः सकाशादुत्पद्यते तथा ब्रह्मापि कुतश्चिदुत्पद्यतामित्यस्थाने चोद्यम् ॥ ९ ॥

**वियतः** पवनस्य च ब्रह्मणः सकाशादुत्पत्तिरुपवर्णिता । सम्प्रति तेजसो वर्णयितव्या । तच्चानन्तर्य्यादुपतिष्ठते । तदर्थं सूत्रमिदमवतारयति—

**"तेजोऽतस्तथा ह्याह"** ॥ १० ॥

**अतः**=मातरिश्वनस्**तेजः**=अग्निरुत्पद्यते, कुतो विज्ञायते ? **हि**=यत**स्तथा**=यथोत्पद्यते तथा**ऽऽह**=श्रुतिराहेत्यर्थः ।

छान्दोग्ये हि **"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"** ( छां० ६ । २ । १ ) इत्युपक्रम्य पठ्यते **"तत् तेजोऽसृजत"** ( छां० ६ । २ । ३ ) इति । तत्र संशयः किमिह साक्षाद् ब्रह्मणस्तेज उत्पद्यत इति प्रतिपाद्यते किंवा वायोः । ब्रह्मण इति पूर्वपक्षः, वायोरिति सिद्धान्तः । किं तावत् प्राप्तम् ? ब्रह्मण इति ब्रूमः

"**तत् तेजोऽसृजत**" ( छां० ६ । २ । ३ ) इति साक्षाद् ब्रह्मण-स्तदुत्पत्तेः प्रतिपादनात् । यदि हि वायोः खलु तेजः साक्षादुत्पद्येत तदा वायोरेव तदुत्पत्तिं प्रतिपादयेत् न ब्रह्मणः । नहि यतो यत् साक्षा-दुत्पद्यते ततस्तदुत्पत्तिप्रतिपादने श्रुतिः कञ्चिद्भारं मन्यते । श्रुतिश्च न तथा प्रतिपादयति । तस्माद् गम्यते तेजो ब्रह्मणः साक्षादुत्पद्यते न वायोरिति । **एवं** प्राप्तेऽभिधीयते—न श्रुत्यन्तरे प्रतिपादनात् । सत्यं छा-न्दोग्ये तेजो ब्रह्मणः साक्षादुत्पद्यत इति प्रतिपाद्यते तथापि न तदभ्यु-पगन्तुं शक्यते । वायोराकाशस्य चोत्पत्त्यभावे तेजसस्तदनुपपत्तेः । नहि ब्रह्मणः पूर्वं तेज एवोत्पद्यते नाकाशं नापि वायुरित्युपपद्यते । तेजसो वायुजन्यत्वस्य प्रत्यक्षत्वात् । श्रुत्यन्तरं च तस्य तथात्वं साक्षात् प्रति-पादयति "**तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद् वायुः, वायोरग्निः**" ( तै० २ । १ ) इति । तत्सा-मान्याच्छान्दोग्येऽपि सतो ब्रह्मण आकाश उत्पद्यते ततो वायुस्ततस्तेज इति प्रतिपत्तिर्गम्यते । अन्यथा विरोधप्रसङ्गात् । न च श्रुतिः श्रुत्यन्तरेण कर्हिचिद् विरुध्यते । **तस्माद्** वायोस्तेजः साक्षादुत्पद्यते न ब्रह्मण इति युक्तम् ॥ १० ॥

**अथापामुत्पत्तिर्विचार्य्यते—**

"**आपः**" ॥ ११ ॥

**अतस्तथा ह्याहे**त्यनुवर्तते । **आपः**=पाथोऽन्**तः**=तेजस उत्पद्यते, कुतोऽवगम्यते ? **हि**=यस्मात् तथाऽऽह श्रुतिरित्यर्थः ।

यथा हि वायोरग्निरुत्पद्यते तथाऽग्नेराप उत्पद्यन्ते । तथा च छान्दोग्ये तेजः सृष्ट्यनन्तरं श्रूयते "**तदपोऽसृजत**" ( छां० ६ । २ । ३ ) इति । "**अग्नेरापः**" ( तै० २ । १ ) इति च तैत्तिरीयकेऽपि स्पष्टम् ॥ ११ ॥

**अथ** पृथिव्याः सृष्टिरुच्यते—

"**पृथिव्यधिकाररूपशब्दान्तरेभ्यः**" ॥ १२ ॥

अतस्तथा आहेत्यनुवर्तते । **पृथिवी**=भूमिरतः=अद्भ्य उत्पद्यते, कुतोऽवगम्यते ? **हि**=यस्मात् तथाऽह छान्दोग्यश्रुतिः, ननु तत्रान्न-मुच्यते, कुतोऽन्नस्य पृथिवीत्वम् ? **अधिकाररूपशब्दान्तरेभ्यः**=अधिकारात्, रूपात्, श्रुत्यन्तराच्चेत्यर्थः ।

यथा हि तेजसः खल्वापो जायन्ते तथाऽद्भ्यः पृथिवी जायते । तथा श्रूयते छान्दोग्ये "**ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति, ता अन्नमसृजन्त**" ( छां० ६ । २ । ४ ) इति । नन्वत्रान्नमद्भ्यो जायत इति श्रूयते न पृथिवी, कुतो वयमद्भ्यः पृथिवी जायत इति प्रतिपद्येमहि न व्रीहियवादिकमभ्यवहार्य्यं किञ्चिदोदनादिकमिति । नैष दोषः । अन्नेन पृथिवीग्रहणात् । सत्यमत्रान्नं श्रूयते तथापि तेन पृथिवी ग्रहणमर्हति न व्रीहियवादिकमभ्यवहार्य्यं वा किञ्चिदोदनादिकम् । अधिकारात् । प्रकरणमधिकारः । स च "**तत् तेजोऽसृजत**" ( छां० ६ । २ । ३ ) "**तदपोऽसृजत**" ( छां० ६ । २ । ३ ) इति महाभूतविषयो वर्तते न व्रीहियवादिभौतिकान्नविषयः । न च यद्विषयः स न वर्तते तस्य शब्दसामान्यमात्रेण ग्रहणं युज्यते । पृथिव्या ग्रहणं तु युक्तम् । अप्तेजसोः सृष्टेरभिहितत्वेन क्रमप्राप्तायास्तस्यास्तदभिधानस्यौचित्यात् । अन्नशब्दश्च कारणे कार्य्योपचारात् "**अद्यते अत्ति च भूतानि तस्मादन्नं तदुच्यते**" ( तै० २ । २ ) इति श्रुत्युक्तयोगाद्वा तत्र सुखेन प्रयोक्तुं शक्यते । "**तस्माद् यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवति**" ( छां० ६ । २ । ४ ) इति वाक्यशेषस्तु पार्थिवत्वादन्नस्य तद्द्वारेण पृथिव्या एवाद्भ्यः प्रभवं सूचयति न व्रीहियवादेरन्नान्तरस्य । तस्मादिह पृथिव्येवान्नशब्देति स्फुटमवगम्यते । रूपाच्च । यत् खलु वाक्यशेषेऽप्तेजसो रूपमुपन्यस्यान्नस्य रूपमुपन्यस्यते "**यत् कृष्णं तदन्नस्य**" ( छां० ६ । ४ । १ ) इति, तदपि पृथिव्येवान्नशब्दा न व्रीहियवाद्यन्नमिति सुव्यक्तं प्रतिपादयति । नह्यन्नस्य व्रीहियवादेरभ्यवहार्य्यस्योदनादेर्वा क्वचित् कृष्णं रूपं नियमेनावलोक्यते । पृथिव्याः कृष्णं रूपं तु भूयिष्ठं दृष्टम् । अत एव प्रायशो विद्वांसः

खलु वाक्यरचनायां तच्छायया रात्रिमुपमिमते । सा च कृष्णाभासेति प्रत्यक्षम् । श्रुत्यन्तराच्च । विद्यते तावच्छ्रुत्यन्तरं यदद्भ्यः पृथिवीसृष्टिमभिधत्ते **"तद्यदपां शर आसीत् तत् समहन्यत सा पृथिव्यभवत्"** (बृ० १ । २ । २) इति । तथा **"अद्भ्यः पृथिवी"** (तै० २ । १) इति च समानाधिकारम् । तदपि भवत्यत्रादर्तव्यम् । अविशेषात् । **"पृथिव्या ओषधयः ओषधिभ्योऽन्नम्"** (तै० २ । १) इति पृथिव्या अधस्तादन्नसृष्टेः पृथगभिधानाच्च । तस्मात् पृथिव्येवात्रान्नशब्देनोच्यते न व्रीहियवादिकमन्नमिति सुखेन प्रतिपद्यते । सा चाद्भ्य उत्पद्यत इति निर्णयः ॥ १२ ॥

**स्यादेतत्**—यत् खलु ब्रह्मण आकाशः, आकाशाद् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी जायत इति निर्णीतं न तेन समन्वयविरोधः परिह्रियते । ब्रह्मण आकाशं प्रति कारणत्वसिद्धावपि वाय्वादिकं प्रति तदसिद्धेः । नहि स्वस्वकारणादाकाशादेरुत्पन्नस्य वायुप्रभृतिपृथिवीपर्य्यन्तस्य भूतजातस्य कारणं ब्रह्म सेद्धुमर्हति । तस्य पुत्रादिद्वारा पौत्रप्रपौत्रादिकं प्रति पितामहस्येव पारम्पर्य्येण कारणत्वे तु जीवात्मनोऽपि तत्कारणत्वं प्रसज्येत । तस्यापि तथाविधकारणत्वोपपत्तेः । **तथा च** व्याहतो भगवति तस्मिन् जगज्जन्मादिकारणत्वोपपादनमुखो वेदान्तश्रुतिसमन्वय इति । अस्योत्तरं पठति—

**"तदभिध्यानादेव तु तल्लिङ्गात् सः" ॥ १३ ॥**

तुशब्देनोक्ताशङ्का व्यावर्त्यते । भिन्नक्रमेणैवकारेण स्रष्ट्रन्तरं व्यवच्छिद्यते । **स एव**=सच्छब्दवाच्यः परमेश्वर एवाकाशादिपृथिवीपर्य्यन्तस्य भूतजातस्य साक्षात् स्रष्टा निश्चेतव्यः, कस्मात्? **तदभिध्यानात्**=तदाऽऽकाशादिपृथिवीपर्य्यन्तं भूतजातं परामृशति, सङ्कल्पगर्भमीक्षणं चाभिध्यानं, तद्गोचराभिध्यानरूपात् **तल्लिङ्गात्**=तदा सच्छब्दवाच्यं परब्रह्म परमेश्वरं परामृशति, तज्ज्ञापकलिङ्गादित्यर्थः ।

न खलु पुत्रादिद्वारा पौत्रप्रपौत्रादेः पितामह इवाकाशादिपृथिवीपर्य्य-

न्तस्य भूतजातस्य पारम्पर्य्येण कारणं परब्रह्म परमेश्वर इहोपदिश्यते किन्तु कुम्भकार इव कुम्भकपालादिकं प्रति साक्षात्कारणम्। यथा हि कुम्भकारः किल स्वयं कपालादिकं सृष्ट्वा स्वसृष्टेन तेन पुनः कुम्भमपि स्वयमेव ससृजीति तथा परब्रह्म परमेश्वरोऽपि स्वयमाकाशं सृष्ट्वा ततः पुनर्वायुं, वायुं स्वयं सृष्ट्वा ततः पुनस्तेजः, तेजः स्वयं सृष्ट्वा ततः पुनः पाथः, पाथः स्वयं सृष्ट्वा ततः पुनः पृथिवीं स्वयं ससर्ज्जे। स्रष्टव्यं स्रष्टव्योपादानं चात्र भिद्यते न तत्स्रष्टा परब्रह्म परमेश्वरः। स हि सर्वस्य स्रष्टाऽविशिष्टः। विशेषस्त्वियानेव किञ्चित् स पूर्वं सृजति किञ्चित् पश्चात्। तदिदं "**तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी**" (तै० २।१) इति सृष्टिश्रुत्याऽपि स्फुटं प्रदर्श्यते। श्रूयते च भगवतस्तस्याविशेषेण तत्स्रष्टृत्वस्य ज्ञापकं तद्विषयमभिध्यानं लिङ्गम् "**तदैक्षत बहु स्यां प्रजायेय**" (छां०६।२।३) इति। चेदसौ सर्वस्य तस्याविशेषेण स्रष्टा न भवेन्न तद्विषयं तदभिध्यानं श्रूयेत। नह्याकाशमात्रसर्जनक्षमो भवन्नाकाशादिसर्वभूतविषयमभिध्यानं कर्तुमर्हति। सर्वभूतसृष्टयनन्तरं चाभिध्यानान्तरमपि श्रावयति श्रुतिः "**सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि**" (छां० ६।३।२) इति। तदपि भगवतस्तस्य साक्षात् सर्वभूतस्रष्टृत्वे लिङ्गमवगन्तव्यम्। यदि हि स पारम्पर्य्येण सर्वभूतस्रष्टा विद्येत तदा तत्सृष्टयनन्तरं ब्रह्माण्डादिसृष्टौ तत्तद्देवताशब्देषु भूतेष्वन्तर्यामी भूत्वा स्वयमहं नामरूपे व्याकरवाणीति नाभिध्यायीत। नह्यसाक्षात् सर्वभूतस्रष्टा सन्नेवं कश्चिदभिध्यातुमीष्टे। तथाभूतोऽभिध्यायँश्च नामरूपे व्याकरवाणीत्यभिध्यायीत, स्वस्य देवताशब्देषु पृथिवीपर्य्यन्तेषु सर्वभूतेष्वन्तर्य्यामिरूपेणावस्थानं च नाचक्षीत। विपरीतं चातोऽभिध्यानमाख्यानं च दृश्यते। तत्कथं वयं परब्रह्म परमेश्वरः कुम्भकार इव कुम्भादिषु सर्वत्र साक्षात स्रष्टेति न प्रतिपद्येमहि। समाम्नायते च श्रुत्यन्तरेऽपि भगवतस्तस्य

साक्षात् सर्वभूतस्रष्टृत्वम् **"सोऽकामयत बहु स्यां प्रजायेयेति, स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किञ्च"** (तै० २ । ६) इति । **"तदात्मानं स्वयमकुरुत"** (तै० २ । ७) इति च । न चैवं सर्वश्रुतिसिद्धं शक्यं कर्हिचिदपह्नोतुम् । **"तत् तेज ऐक्षत"** (छां० ६ । २ । ३) **"ता आप ऐक्षन्त"** (छां० ६ । २ । ४) इत्याद्यभिध्यानं च तत्र तत्रान्तर्य्यामिरूपेणावस्थितस्य परब्रह्मणः परमेश्वरस्यैवाम्नायते न भूतानाम् । तेषामचेतनत्वेन तादृगभिध्यानाश्रयत्वानुपपत्तेः । अन्तर्य्यामिरूपेण तत्र तत्रावस्थानं च भगवतस्तस्य श्रावयति श्रुतिः **"यस्तेजसि तिष्ठन्"** (बृ० ३ । ७ । १४) इत्यादिना । **"अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्"** (वे० २ । १ । ५) इति च स्वयं भगवान् सूत्रकृदप्यवोचदधस्तात् । तस्मात् स्वस्वकारणादुत्पद्यमानानि सन्त्यपि भूतानि परब्रह्मणा परमेश्वरेणैव साक्षादुत्पाद्यन्ते न तत्तत्कारणेनेति मन्तव्यम् । **तथाच** न व्याहतः समन्वयः ॥ १३ ॥

भूतानामुत्पत्तिक्रमश्चिन्तितः सम्प्रति तत्प्रलयक्रमश्चिन्तयितव्यः । तत्राह—

**"विपर्य्ययेण तु क्रमोऽत उपपद्यते च" ॥ १४ ॥**

तुशब्देन प्रलयक्रमस्योत्पत्तिक्रमानुरूप्यं व्यावर्त्यते । **अतः**=भूतानामुत्पत्तिक्रमतो **विपर्य्ययेण**=वैपरीत्येन **क्रमः**=तत्प्रलयक्रमो वेदितव्यः, **च**=स एव चोपपद्यते=युज्यत इत्यर्थः ।

**"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद् ब्रह्म तद् विजिज्ञासस्व"** (तै० ३ । १) इति पृथिव्यादिजगतः खलु जन्मस्थितिप्रलयाः श्रोश्रूय्यन्ते । तत्र प्रलयक्रमे संशयः किमुत्पत्तिक्रमानुरूपः स्यादथवा तद्विपरीत इति । अनुरूप इति पूर्वः पक्षः, विपरीत इति सिद्धान्तः । किं तावत् प्राप्तम्? अनुरूप इति ब्रूमः । यथाश्रुतकल्पनाप्रसङ्गात् ।

"**आत्मन आकाशः सम्भूत आकाशाद्वायुः वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी**" (तै० २ । १) इति उत्पत्तिक्रमः श्रूयते, प्रलयक्रमश्चैवं न श्रूयते । श्रवणाभावे च स नूनं कल्पयितव्यः । उत्पत्तिवत् प्रलयस्यापि क्रमाकांक्षित्वात् । कल्पयितव्यश्चासौ चेदुत्पत्तिक्रमानुरूपः कल्प्यते तदा तत्कल्पनं यथाश्रुतं प्रसज्यते वैपरीत्ये त्वयथाश्रुतं प्रसज्येत । यथाश्रुतायथाश्रुतकल्पनयोश्च वरं यथाश्रुतकल्पनम् । तस्मादवगच्छाम उत्पत्तिक्रमानुरूप एव प्रलयक्रमो विद्यते न तद्विपरीत इति । **एवं** प्राप्तेऽभिधीयते—विपरीतो दृष्टत्वात् । सत्यमुत्पत्तिक्रमः श्रूयते प्रलयक्रमो न श्रूयते तथापि न स तदनुरूपः कल्पयितुं शक्यते । नहि यत् कल्पयितव्यं तद् यथाश्रुतं कल्पयितव्यमिति कश्चिन्नियमोऽस्ति । श्रुतं हि यत्र क्वचन श्रुतं तत्रैवापक्षीयत इति नं तत् स्वविषयादन्यत्र कल्पनाहेतुभावायावकल्पते । दृष्टं च यत्र दृश्यते ततोऽन्यत्रापि कल्पनाहेतुः सम्पद्यते । यदेवमाहुः कल्पनागर्भस्पृशः खलु कल्पकोत्तमाः "**कल्पनाः सर्वाः दृष्टाश्रयाः प्रवर्त्तन्ते**" इति । तेन यथादृष्टमेव कल्पयितव्यं वरं पश्यामो न यथाश्रुतम् । दृश्यते च पुरुषो येन क्रमेण सोपानमारोहति ततो विपरीतेन तेनावरोहति । तथा मृत्तिका येन क्रमेण घटघटिकोदञ्चनादिभावमनुभवति ततो विपरीतेन तेन घटघटिकोदञ्चनादिकं मृद्भावमुपगच्छति । तत्समान एव चोत्पत्तिप्रलयक्रमः । तेनापि मिथो विपरीतेन भवितव्यं येन क्रमेण भूतानि जायन्ते ततो विपर्य्ययेण प्रलीयन्त इति । एतदेव चोपपद्यते । अन्यथा कार्य्यमप्येति कारणमित्यापद्येत । नहि यथा कार्यमुत्पद्यमानं स्थितिकालव्यतिक्रान्तौ कारणमप्येति तथा कारणमपि कदाचित्कार्य्यमपिगच्छत् क्वचिदनुभवपथमवतरति । कल्प्येत चेत् तदा कारणाभावेऽपि कार्य्यमवतिष्ठत इति मन्येत । न च कारणाभावे कार्य्यमवतिष्ठते तदवस्थानं वा केनचिन्मन्यते । कार्य्याभावे कारणावस्थानं तु प्रत्यक्षम् । तस्मादुत्पत्तिक्रमतो विपरीते प्रलयक्रमेऽभ्युपगम्यमाने सङ्गच्छते न तदनुरूपे । अत एव सामर्थ्यतो भूतानामुत्पत्तिक्रमविपर्य्ययेण

प्रलयक्रमो भारते "**जगत्प्रतिष्ठा देवर्षे ! पृथिव्यप्सु प्रलीयते । ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते**" ( महाभा० १२ । ३४१ । २९ ) इत्यादिना । न च यदुपपद्यते साम्रर्य्यते च, तत् कर्हिचिदपह्नोतुं शक्यते । तस्मादुत्पत्तिक्रमतो विपरीतो भूतानां प्रलय-क्रमः ॥ १४ ॥

पञ्चानां महाभूतानामुत्पत्तिप्रलयावनुलोमप्रतिलोमक्रमाभ्यां भवत इति विचारितम् । इदानीं महदादिभूतसूक्ष्मान्तानां तत्कारणभूतानां कार्य्यान्तराणामुत्पत्तिप्रलयौ विचारयितव्यौ । समानत्वेनोपस्थितत्वात् । तौ कुतो न विचार्य्येते ? इत्येतदाशङ्क्य समाधत्ते—

**"अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्ना-विशेषात्" ॥ १५ ॥**

**अन्तरा**=ब्रह्मण आकाशस्य चान्तराले **विज्ञानमनसी**=विज्ञानं महत्तत्वम्, अहङ्कारस्य भूतसूक्ष्माणां चैतदुपलक्षणम्, उभयेन्द्रियं मनः, तदिदमिन्द्रियान्तरोपलक्षणम्, विज्ञानं च मनश्च **क्रमेण**=पौर्वापर्य्येण **तल्लिङ्गात्**=आकाशादिलिङ्गादुत्पद्यमाने प्रविलीयमाने चावगम्येते, तदु-त्पत्तिप्रलयौ कुतो न विचार्य्येते इति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः ? **अविशेषात्**=विशेषो भेदः, विरोध इति यावत्, तत्प्रतिपादिकासु श्रुतिषु विशेषाभावादित्यर्थः ।

**अथोच्येत**—यथा खल्वाकाशादिपृथिवीपर्य्यन्तं भूतपञ्चकं ब्रह्मणः क्रमेणोत्पद्यते प्रविलीयते च, तथा तत्कारणेन महदादिना भूतसूक्ष्मान्तेन कार्य्यान्तरेणापि यथाक्रममुत्पत्तव्यं प्रविलेतव्यं च । समानत्वात् । नह्या-काशादिकं भूतपञ्चकं ब्रह्मणः साक्षादुत्पद्यते । भवति तत्कारणमपि तत्त्वान्तरं किञ्चिद् यथा वायोराकाशः । एवं प्रकृतिपर्य्यन्तं गन्त-व्यम् । न च प्रकृतेर्ब्रह्मणः सङ्कल्पेनाकाशादीनां कारणानि महदादिभूत-सूक्ष्मान्तानि कार्य्याणि विनैव क्रमविशेषं कथञ्चिदुत्पत्तुमर्हन्ति । कार्य्य-कारणभावेन मिथः सम्बद्धानां कार्य्याणां स्वस्वकारणादुत्पत्तौ क्रमविशेषस्य

नियमेनापेक्षितत्वात्। सोऽयमाकाशादिषु भूतेषु प्रव्यक्तं दृश्यते। तल्लि-ङ्गादन्यत्राप्यवगन्तुं शक्यते। नहि स एकत्रोत्पत्तावपेक्ष्यते नापरत्रेति युज्यते। विनिगमनाविरहात्। उत्पत्तिक्रममश्च प्रलयक्रमः। तथा चाकाशादिभूतानामिव महदादितत्त्वानामप्युत्पत्तिप्रलयौ विचारयितव्यौ तौ कुतो न विचार्य्येते इति। **नैतद् वक्तव्यम्।** विशेषाभावात्। तदेव खल्वत्र विचार्य्यते यत्प्रतिपादिकाः श्रुतयः परस्परं विशिष्यन्ते विरुध्यन्ते। यत्कारणं विरोधपरिहारार्थमेवायमारभ्यते। प्रसिद्धं ह्येतत्—अनेन श्रुतीनां परस्परं विरोधः परिह्रियते। यत्प्रतिपादिकाः श्रुतयश्च न परस्परं विशिष्यन्ते न तत् कर्हिचिद् विचारमर्हति। न चाकाशादि-श्रुतिवन्महदादिश्रुतयो मिथो विशिष्यन्ते। सर्वासां तासामैकमत्येन तत्प्रतिपादकत्वनिश्चयात्। अत एव च तदाधाराणि शास्त्राण्यपि तद्वि-षये मात्रयाऽपि न विप्रतिपद्यन्ते। नहि प्रकृतेर्महान्, ततोऽहङ्कारस्ततो भूतसूक्ष्ममुभयमिन्द्रियं चेति केनचिन्नानुमन्यते, श्रुतिभिर्वा न तथा प्रतिपाद्यते। तत्प्रतिपादिकाः श्रुतयश्चोदाहारिषत पुरस्तादिति नेह पुन-रुदाह्रियन्ते। येन क्रमेणोत्पत्तिस्ततो विपर्य्ययेण प्रलय इति च निर्धा-रितोऽर्थः। न च निर्धारिते तस्मिन् पुनः कोऽपि विचारः प्रवृत्तिपदं विन्दते। तस्मादाकाशादिलिङ्गेनोपस्थितावपि महदादिभूतसूक्ष्मान्तानामु-त्पत्तिप्रलयौ नात्र विचार्य्येते। यस्य तु तेषां विचारणीयो विशेषः कश्चन निरीक्ष्यते तदग्रे स्वयं विचारयिष्यते। धीमान् धर्मो भगवान् सूत्रकृत्॥ १५॥

आकाशादिभूतानामुत्पत्तिप्रलयौ विचार्य्य तद्गोचरश्रुतिकलहो व्यु-दासि। सम्प्रति तत्सहचारेणोपस्थितत्वाज्जीवात्मनोऽपि तौ विचार्य्य तद्गोचरश्रुतिकलहो व्युदसनीयः। तत्र पूर्वं तावत् तद्विषयं लौकिक-मुत्पत्तिप्रलयव्यपदेशं भाक्तं समाधास्यन्नधिकरणान्तरमारचयति—

**"चराचरव्यपाश्रयस्तु तद्व्यपदेशो भाक्तस्तद्भाव-भावित्वात्" ॥ १६ ॥**

तुशब्देन जन्ममरणयोरात्माश्रयत्वं व्यावर्त्यते। **तद्व्यपदेशः**—

उत्पत्तिप्रलयव्यपदेशः—जन्ममरणव्यपदेश इति यावद् **चराचरव्यपाश्रयः**=चराचरशरीराश्रयो मुख्यः सन् **भाक्तः**=जीवात्मनि गौणो भवेत्, कुतः ? **तद्भावभावित्वात्**=तदा चराचरशरीरं परामृशति, तद्भावे भवनशीलत्वादित्यर्थः ।

लोके हि देवदत्तो जातो यज्ञदत्तो मृत इति व्यपदिश्यते । सोऽयं लौकिको जन्ममरणव्यपदेशो जीवात्मनि मुख्यो भवेदाहोस्विद् भाक्त इति सन्दिह्यते । तत्र मुख्य इति पूर्वः पक्षः, भाक्त इति सिद्धान्तः । किं तावत् प्राप्तम् ? मुख्य इति वदामः । प्रत्यक्षत्वात् । जीवात्मनो जन्ममरणे तावत्प्रत्यक्षमुपलभ्येते देवदत्तो जातो यज्ञदत्तो मृत इति । चेदिमे तत्रामुख्ये व्यपदिश्येयातां तदा न जातु प्रत्यक्षमुपलभ्येयाताम् । न च यद् यत्र मुख्यं न व्यपदिश्यते तत् तत्र प्रत्यक्षं कर्हिचिदुपलभ्यते । नहि माणवको दहति प्रकाशयति चेति कश्चित् केन चिदवलोक्यत । प्रत्यक्षोपलम्भस्य च माहात्म्यं प्रत्यक्षं न प्रमाणान्तरेण केनचिदभिभवितुं शक्यते । संस्कारविधानाच्च । जाते मृते देवदत्तादौ खलु जातकर्मादिसंस्कारो विधीयते "**प्राङ्नाभिवर्धनात् पुंसो जातकर्म विधीयते । मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषाम्**" ( मनु० २ । २९ ) इति । न च जीवात्मनः परमार्थतो जन्ममरणाभावे तन्निमित्ताः संस्काराः कदाचिद् विधातुं शक्यन्ते । पुंशब्दोपादानाच्च नूनमेते जीवात्मन एवोपदिश्यन्ते न शरीरस्येति स्फुटं विज्ञायते । श्रुतिसंवादाच्च । लोकसिद्धे खल्वेते जन्ममरणे जीवात्मनः श्रुत्याऽपि संवाद्येते "**स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः स उत्क्रामन् म्रियमाणः**" (बृ० ४ । ३ । ८) इति । न च तत्संवादोऽयं तत्र तद्व्यपदेशस्यामुख्यत्वे कथञ्चित् सङ्गच्छते यथा प्रत्यक्षोपलम्भः । तत्साङ्गत्यं चावश्यकम् । तस्मात् प्रतिपद्यते तत्र तद्व्यपदेशो मुख्यो न भाक्त इति । एवं प्राप्तेऽभिधीयते भाक्त उपपत्तेः । अप्रत्यक्षः खलु जीवात्मा । यत्रेदं स्मर्यते "**तत्रात्मा मनश्चाप्रत्यक्षे**" ( वै० ८ । १ । २ ) इति । नचाप्रत्यक्षस्य सतो जन्ममरणे धर्मौ चक्षुषा

प्रत्यक्षमुपलब्धुं शक्येते । चराचरशरीरविषये चैते प्रत्यक्षे इति युक्तम् । तद्धि प्रत्यक्षम् । प्रत्यक्षे धर्मिणि च धर्मप्रत्यक्षं युज्यते । नहि धर्मिणं प्रत्यक्षं पश्यन् तद्धर्मान् प्रत्यक्षं न पश्यति । यत्र चैते प्रत्यक्षे तत्र तद्व्यपदेशो मुख्योऽन्यत्र च तत्सम्बन्धाद् भाक्त इति साधु प्रतिपद्यते । अप्रत्यक्षे प्रत्यक्षवद् व्यपदेशासम्भवात् । यथा ह्युदकविशेषप्रवाहे खलु गङ्गादिव्यपदेशो मुख्यः प्रवर्तते तत्सम्बन्धिनि तीरे च भाक्तस्तथा जन्ममरणव्यपदेशोऽपि चराचरशरीरे मुख्यः प्रवर्तते तत्सम्बन्धिनि जीवात्मनि च भाक्त इति निश्चेतव्यम् । शरीरसम्बन्धे सति हि जीवात्मनि जन्ममरणव्यपदेशो बोभूयते नासति । नहि शरीरसम्बन्धादन्यत्र जीवात्मा जातो वा मृतो वा केनचित् क्वचिद् व्यपदिश्यते । शरीरसम्बन्धश्च जीवात्मनः प्रामाणिक इति शरीरे मुख्यः सन् तद्व्यपदेशः तत्सम्बन्धिनि तस्मिन् भाक्त उपपद्यते । जातकर्मादिसंस्काराश्च शरीरजन्माद्यपेक्षया विधीयन्ते न जीवात्मजन्माद्यपेक्षया । नहि तेषां जीवात्मजन्माद्यपेक्षया विधाने बीजगर्भसमुद्भवपापक्षयः प्रयोजनमुपपद्यते । स्मर्यते च स एव तत्प्रयोजनम् **"गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः । बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते"** ( मनु० २ । २७ ) इति । **"स वा अयं पुरुषो जायमानः"** ( बृ० ४ । ३ । ८ ) इत्यादिका श्रुतिस्तु शरीरसम्बन्धासम्बन्धनिमित्ते जन्ममरणे जीवात्मनो दर्शयति न स्वरूपतः । **तस्मादेष** लौकिको जन्ममरणव्यपदेशः शरीरव्यपाश्रयो मुख्यो जीवात्माश्रयश्च तदुपाधिको भाक्त इति निश्चयः ॥ १६ ॥

**स्यादेतत्**–मा नाम भूतां जीवात्मनः सर्गान्तराले मुख्यावुत्पत्तिविनाशौ, महासर्गादौ तदन्ते चाकाशादिवद् भविष्यत इति । अस्योत्तरं पठति—

**"नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः"** ॥ १७ ॥

**आत्मा**=जीवात्मा **न**=नोत्पद्यते न वा म्रियते, कुतोऽवगम्यते ?

**अश्रुतेः**=तत्प्रतिपादकश्रुतेरभावात्, **ताभ्यः**=तत्प्रतिषेधकश्रुतिभ्यो **नित्यत्वाच्च**=नित्यत्वावगमाच्चेत्यर्थः ।

यथा हि सर्गान्तराले खलु जीवात्मा नोत्पद्यते न वा म्रियते केवलं शरीरोदयविनाशाभ्यां तद्व्यपदेशमात्रं भजते तथा महासर्गादावपि नोत्पद्यते न वा तदन्ते म्रियते । नह्याकाशादिवत् तदुत्पत्तिविनाशप्रतिपादिका काचिच्छ्रुतिर्विद्यते । न च श्रुत्यभावे तदभ्युपगमो युज्यते । नित्यत्वं चास्योत्पत्तिविनाशप्रतिषेधेन प्रतिपादयन्ति श्रुतयः "**न जायते म्रियते वा विपश्चित्**" ( कठ० २ । १८ ) "**अजो नित्यः शाश्वतोऽयं पुराणः**" ( कठ० २ । १८ ) "**जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते**" ( छां० ६ । ११ । ३ ) "**अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा:**" ( बृ० ४ । ५ । १४ ) इत्याद्याः । न च नित्यस्य सतः स्वरूपेणोत्पत्तिविनाशौ सम्भवतः । "**यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि च व्युच्चरन्ति**" ( बृ० २ । १ । २० ) इति जीवात्मोत्पत्तिशासनं "**प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ति**" ( बृ० ४ । ५ । १३ ) इति तद्विनाशप्रतिपादनं च शरीरोत्पत्तिविनाशाभ्यां भाक्तं प्रतिपत्तव्यं न मुख्यम् । पूर्वत्र परमतं प्रत्यषेधि श्रुतिविरोधस्त्वत्रेति न किञ्चित् पुनरुच्यते ॥ १७ ॥

उत्पत्तिविनाशप्रतिषेधेनात्मनो नित्यत्वं प्रतिपादितम् । सम्प्रति तस्य ज्ञानरूपत्वं प्रतिपादयन्नाह—

**"ज्ञोऽत एव" ॥ १८ ॥**

आत्मेत्यनुवर्तते । **ज्ञः**=कर्तृप्रत्ययेन वृत्तिज्ञानाश्रयत्वं प्रद्योत्यते, ज्ञानस्वरूप आत्मा वेदितव्यः, कस्मात्? **अत एव**=हेत्वन्तरव्यावृत्तिरवधारणार्थः, नित्यत्वादेवेत्यर्थः ।

योऽयं पञ्जरस्यास्याध्यक्षो नित्यः खल्वात्मा प्रतिपाद्यते स किं ज्ञानाश्रयः स्यादाहोस्विज्ज्ञानस्वरूप इति सन्दिह्यते । तत्र ज्ञानाश्रय इति पूर्वः पक्षः, ज्ञानस्वरूप इति सिद्धान्तः । किं तावत् प्राप्तम् ? ज्ञानाश्रय इति वदामः । कर्तृप्रत्ययेन निर्देशात् । यदि ह्यात्मा ज्ञानस्वरूपो विद्येत तदा नासौ कर्तृप्रत्ययेन निर्दिश्येत । नहि ज्ञानस्वरूपोऽपि कदाचित् कर्तृप्रत्ययेन निर्देष्टुं शक्यते । भावप्रत्ययनिर्देश्यो हि स तदा भवेन्न कर्तृप्रत्ययनिर्देश्यः । निर्दिश्यते चैष कर्तृप्रत्ययेन "**एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः**" ( प्र० ४ । ९ ) "**यो वेदेदं जिघ्राणीति स आत्मा**" ( छां० ८ । १२ । ४ ) इत्याद्यासु श्रुतिषु । "**ज्ञः**" इति सूत्रेऽपि च कर्तृप्रत्ययनिर्देशो विस्पष्टः । "**इगुपधज्ञाप्रीकिरः कः**" ( अष्टा० ३ । १ । १३५ ) इति कर्त्रधिकारे पाणिनिस्मरणात् । क्वचिद् ज्ञानस्वरूप आत्मेति दर्शयन्त्यः श्रुतयस्तु ज्ञानस्य तदसाधारणगुणत्वाल्लाक्षणिका उपपद्यन्ते । तस्माज्ज्ञानाश्रय एवात्मा न ज्ञानस्वरूप इति । **एवं** प्राप्तेऽभिधीयते नित्यत्वाज्ज्ञानस्वरूप एवात्मा स्यान्न ज्ञानगुणाश्रयः । अनुपपत्तेः । यो हि ज्ञानगुणाश्रयं खल्वात्मानं मन्यते स पृष्टो व्याचष्टां यस्य ज्ञानगुणस्याश्रयत्वं किल्वात्मनो मन्यते तत् किं नित्यं स्यादाहोस्विदनित्यम् । नान्त्यः । सन्देहादिप्रसङ्गात् । यद्ध्यनित्यं तत् कदाचिद् भवति न भवति च कदाचिदिति नियमः । यदा न भवेत् तदात्मनि ज्ञानाभावात् किमहमस्मि नास्मि वाऽहमिति सन्देहो नाहमस्मीति विपर्ययो वा प्रसज्येत । न चात्मनि कस्यचित् सन्देहो वा विपर्ययो वा प्रसज्यमानः कश्चित्कदाचिदुपलभ्यते । यदा खलु सन्दिहानोऽप्यसन्दिग्धो विपर्ययस्यन्नप्यविपरीतः सर्वस्यात्मा सर्वदा सर्वत्रावलोक्यते तदा कथमनित्यज्ञानगुणाश्रयः स इति मन्येत । विकारित्वापत्तेश्च । यत् खलु स्वयं नोत्पद्यते न वा विनाशमयते गुणं चोत्पादविनाशिनं समाश्रयते तदपि विकारित्वमापद्यते । धर्मविकारेण धर्मिविकारस्य नियमात् । यत्रेदमाहुर्न्यायविदः "**उपयन्नपयन् धर्मो विकरोति हि**

**धर्मिणम्**" इति । ज्ञानं चानित्यत्वादुत्पादविनाशीत्यात्मनोऽपि तदाश्रयत्वे विकारित्वमापद्येत । न च स विकारी समाश्रयितुं शक्यते । कूटस्थनित्यत्वाभ्युपगमात् । "**अविकार्य्योऽयमुच्यते**" ( गी० २ । २५ ) इति विकारित्वप्रतिषेधाच्च । तेन ज्ञानमनित्यमिति न युक्तम् । **अथ** नित्यमिति चेत् । **न** । गुणत्वासिद्धेः । यदिदं नित्यं खलु ज्ञानमुच्यते तत् किं सततमात्मानमाश्रयते किंवा कदाचिदाश्रयते कदाचित् पृथगवतिष्ठते । अन्त्ये न स गुणः सिध्येत् । गुणिनोऽन्यत्र गुणस्यावस्थानानुपपत्तेः । नहि गुणो वर्तते गुणिनं परित्यज्य चान्यत्रावतिष्टत इत्युपपद्यते । **अथेदं** गुणोऽपि सन् गुणिनं परित्यज्यार्हति पृथगवस्थातुम् । **तर्हि** द्रव्यं स्यान्न गुणः । द्रव्यस्यैव पृथगवस्थानार्हत्वात् । अथ सततमिति चेत् ? । **न** । स्वरूपत्वापत्तेः । यद्धि नित्यं सन्नित्यमर्थमाश्रयते ततश्च कदाचिदपि वियोगं न भजते तत्तस्य स्वरूपमापद्यते न गुणः । यत्कारणं स्वरूपस्यैवैष स्वभावो न गुणस्य । नहि गुणपदार्थज्ञास्तथाभूतमर्थं कदाचिद् गुण इति परिभाषितुमुत्सहन्ते । परिभाषामात्रमन्यथा स्यात् । स्वरूपं वा गुणतामियात् । तथा च गुणा एव सर्वे स्युर्नार्थान्तरं किञ्चित् । तदेतन्न लोकशास्त्रोभयविरोधान्नाभ्युपगन्तुं शक्यते । गौरवं चात्र विस्पष्टम् । स्वरूपाङ्गीकारे हि वस्तुमात्रमेकमभ्युपगतं भवति गुणाङ्गीकारे च गुणस्तदाश्रयो वस्तु तदुभयसम्बन्धश्चेति त्रयम् । तदिदं स्वरूपापेक्षया गुणवादे गौरवं, स्वरूपवादे च तदपेक्षया लाघवम् । आचार्य्याश्च सर्वदा लाघवप्रिया भवन्ति न गौरवप्रियाः । तस्मान्नित्यं ज्ञानमिति सुतरामयुक्तम् । उभयायुक्तत्वे च ज्ञानाश्रय आत्मेति कथमुपपद्येत । न च यन्नोपपद्यते तदभ्युपगन्तुं शक्यते । अनुपपन्नस्याभ्युपगमायोग्यत्वात् । **अथोच्येत**—यथाऽऽत्मा ज्ञानाश्रयो नोपपद्यते तथा ज्ञानस्वरूपोऽपि नोपपद्यते । तस्योपपादयितुमशक्यत्वात् । तथा च कथं वयमेतदप्यभ्युपगच्छेमेति । **नैतद् वक्तव्यम्** । नित्यत्वेनोपपादयितुं शक्यत्वात् । नित्यो ह्यात्मा । स यदा नित्यज्ञानाश्रयो वाऽनित्यज्ञानाश्रयो वा नोपपद्यते तदा कोऽप्यन्तराभावाद् विद्यते ज्ञान-

स्वरूप इत्युपपादयितुं शक्यते । नहि यज्ज्ञानाश्रयो नोपपद्यते तज्ज्ञानस्वरूपोऽपि नोपपद्यत इत्यस्ति कश्चिन्नियमः । **"यो विज्ञाने तिष्ठन्"** (बृ० ३ । ७ । २२) **"योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः"** (बृ० ४ । ३ । ७) **"अत्रायं पुरुषः स्वयं ज्योतिर्भवति"** (बृ० ४ । ३ । ९) **"अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव"** (बृ० ४ । ५ । १३) **"अङ्गुष्ठमात्रो रवितुल्यरूपः"** (श्वे० ५ । ८) **"जडव्यावृत्तो जडं प्रकाशयति चिद्रूपः"** (सां० ६ । ५०) **"चिदवसाना भुक्तिस्तत्कर्मार्जितत्वात्"** (सां० ६ । ५५) **"द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः"** (यो० २ । २०) इत्याद्याः श्रुतिस्मृतयश्च साक्षादात्मनो ज्ञानस्वरूपत्वं दर्शयन्ति । न च तद्दर्शितेऽर्थे युक्ता विप्रतिपत्तिः । **ननु** ता अपि श्रुतयोऽस्माभिः प्रदर्शिता याः किलात्मनो ज्ञानाश्रयत्वं दर्शयन्ति । **सत्यं** प्रदर्शिताः, तथापि न तास्तस्य ज्ञानस्वरूपत्वं बाधयन्त्यो ज्ञानाश्रयत्वं दर्शयन्ति । श्रुतिदर्शितस्य बाधायोगात् । कथं तर्हि ? ज्ञानस्वरूपस्य सतो ज्ञानाश्रयत्वम् । तच्च तथाभूतस्य तस्यैन्द्रियकवृत्तिज्ञानाभ्युपगमादुपपद्यते । द्विविधं हि ज्ञानमभ्युपगम्यते स्वरूपभूतं ज्ञानमेकम्, ऐन्द्रियकं वृत्तिरूपं ज्ञानं चापरम् । तत्र स्वरूपभूतज्ञानाभिप्रायेण ज्ञानस्वरूपत्वं वृत्तिरूपज्ञानाभिप्रायेण च ज्ञानाश्रयत्वमात्मनः प्रदर्श्यत इति वेदितव्यम् । **"एष हि द्रष्टा स्प्रष्टा श्रोता"** (प्र० ४ । ९) इत्याद्यासु श्रुतिषु कर्तृप्रत्ययनिर्देशेनात्मनस्तत्तदिन्द्रियजन्यवृत्तिज्ञानाश्रयत्वं प्रतिपाद्यत इत्यतिरोहितम् । **"अथ यो वेदेदं जिघ्राणीति स आत्मा"** (छां० ८ । १२ । ४) इति श्रुतिश्च तज्ज्ञानं वृत्तिरूपमैन्द्रियकं न स्वरूपात्मकमिति तद्धेतुग्रहणेन स्वयमेव दर्शयति **"गन्धाय घ्राणम्"** (छां० ८ । १२ । ४) इति । श्रुतिमनुगच्छति च नियमेन सूत्रमिति तत्रापि कर्तृप्रत्ययेन तन्निर्देश उपपद्यते नास्ति कश्चिद् विरोधः । तदिदमैन्द्रियकं वृत्तिज्ञानं विशिष्टस्यात्मनो धर्मः स्वरूपभूतज्ञानाद् विशिष्यत इत्युक्तं दर्शनान्तरे

**"आत्मेन्द्रियार्थसन्निकर्षाद् यन्निष्पद्यते तदन्यत्"** ( वै० ३ । १ । १९ ) इति । सविस्तरमुपपादितं चैतदस्माभिः **"वैशेषिकसूत्रवैदिकवृत्तौ"** पुनरुक्तभिया नेह तत् पुनरुपपाद्यते । **यत्तूक्तं** ज्ञानमात्मनः स्वरूपं प्रतिपादयन्त्यः श्रुतयो लाक्षणिका व्याख्येया इति । **तन्न** चारु पश्यामः । जघन्यत्वात् । जघन्या हि लक्षणा वृत्तिः । न सा मुख्यवृत्तौ सम्भवन्त्यामाश्रयितुं शक्यते । **तस्मा**ज्ज्ञानस्वरूप आत्मेति निरुपप्लवो राद्धान्तः ॥ १८ ॥

**स**च्चित्स्वरूपो जीवात्मेत्युपपादितम् । इदानीमणुः स इत्युपपादयितव्यम् । तत्र तदुपपादकं सूत्रं पठति—

**"उत्क्रान्तिगत्यागतीनाम्" ॥ १९ ॥**

आत्मेत्यनुवर्तते । अणुरिति श्रुतेरिति च व्यवहितोत्तरसूत्रादाकृष्यते । **उत्क्रान्तिगत्यागतीनां**=शरीरान्निष्क्रमणमुत्क्रान्तिः, लोकान्तरे गमनं गतिः, ततश्चागमनमागतिः, उत्क्रान्तिश्च गतिश्चागतिश्च तासां **श्रुतेः** श्रवणादणुरणुपरिमाणोऽयमात्मेत्यर्थः ।

सच्चित्स्वरूपो जीवात्मा किमणुः स्यादथवा विभुरिति सन्दिह्यते । तत्र विभुरिति पूर्वः पक्षः, अणुरिति सिद्धान्तः । किं तावत् प्राप्तम्? विभुरिति ब्रूमः । अदृष्टसम्बन्धहेतुत्वात् । यत् खलु जीवात्मना भोक्तव्यमर्थजातं जगतीतले वरीवृत्यते तत् सर्वं तददृष्टसम्बन्धादुत्पद्यते । नहि यावददृष्टं न सम्बध्यते तावत् किञ्चिदुत्पत्तुं पारयते । अस्ति कार्य्यमात्रं प्रति कारणमदृष्टमिति वैदिको राद्धान्तः । अदृष्टमात्मनि समवैति दूरदूरतरदूरतमविषयेषु च भोक्तव्यमर्थजातम् । न च तेनात्मसम्बन्धाभावे तत्समवेतस्यादृष्टस्य सम्बन्धः कथञ्चिदुपपद्यते । न चाणुरात्मा तत्सम्बन्धहेतुः सम्भवति । तस्य स्वतः सम्बन्धाभावात् । मध्यमपरिमाणस्तु नित्यत्वाभावान्न तत्सम्बन्धः कर्हिचिदभ्युपेतुं शक्यते । नचान्यः कश्चिदीदृशः पदार्थोऽवलोक्यते योऽन्यत्र समवेतस्यादृष्टस्यान्यत्र सम्बन्धहेतुः सम्भवेत् । पारिशेष्यात् तत्सम्बन्धहेतुरात्मा विभुरिति विज्ञा-

यते । दर्शयति च स्वयं श्रुतिरपि "**यस्मिन् विशुद्धे विभवत्येष आत्मा**" ( मुं० ३ । १ । ९ ) इति । "**स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु**" ( बृ० ४ । ४ । २२ ) "**स चानन्त्याय कल्पते**" ( श्वे० ५ । ९ ) इति च । तथा स्मृतिरपि "**नित्यः सर्वगतः स्थाणुः**" ( गी० २ । २४ ) इत्यादिका । न च श्रुतिस्मृतिदर्शितोऽर्थः केनचिदपवदितुमीश्यते । तस्माद् अनुगम्यते व्यापको नूनं जीवात्मा नाणुरिति । एवं प्राप्तेऽभिधीयते—अनुपपत्तेराञ्जस्येन चोपपत्तेः । उत्क्रान्तिगत्यागतयो हि जीवात्मनः श्रूयन्ते "**तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः**" ( बृ० ४ । ४ । २ ) इत्युत्क्रान्तिः, "**तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्य्यां चरन्तः । सूर्यद्वारेण ते विरजाः प्रयान्ति**" ( मुं० १ । २ । ११ ) इति गतिः, "**तस्माल्लोकात् पुनरैत्यस्मै लोकाय कर्मणे**" ( बृ० ४ । ४ । ६ ) इति चागतिः । न च तास्तस्य व्यापकत्वे कथञ्चिदाञ्जस्येनोपपद्यन्ते । नहि व्यापकस्य सतः कुतश्चिदुत्क्रमणं गमनागमनं वा कुतश्चिद् घटते । जायमानाः क्रियाः कुतश्चिद् विभागं केनचित् संयोगं च नियमेनोपजनयन्ति । तदुपजनश्च परिच्छिन्ने वस्तुन्यवकल्पते न विभुनीति कथं तास्तत्रोपपद्येरन् । जीवात्मनोऽणुत्वे चाञ्जस्येन तदुपपत्तौ नास्ति कश्चित् प्रतिबन्धः । यः खलु परिमाणतोऽणुर्विद्यते स सुखेन कुतश्चिदुत्क्रमितुं कुत्रचिद् गन्तुं कुतश्चिदागन्तुं च पारयते को नु नाम तत्र प्रतिबन्धं कञ्चिदुद्भावयितुं समर्थयते । यस्तु जीवात्मनोऽनणुत्वं दूरदूरतरदूरतमविषयेषु भोक्तृव्यापारोपरतिकारणादृष्टविशेषसम्बन्धो हेतुरुपन्यस्यते स फलप्रदातुर्भगवतः परमेश्वरस्येच्छया समुपपद्यत इति न तेनान्यथासिद्धेनात्मा विभुरित्यभ्युपगन्तुमणुरिति परित्यक्तुं चोत्सहते । सुखदुःखसाङ्कर्यं चास्मिन् विभुवादे महद्दूषणं पण्डितरूपैरपि नोद्धर्तुं पार्य्येत इति च स्वयमग्रे वक्ष्यते । दर्शयति च साक्षादणुरयं जीवात्मेति श्रुतिः "**एषोऽणुरात्मा चेतसा**

**वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश**" ( मुं० ३।१।९ ) इति । "**बालाग्रशतभागस्य शतधाकल्पितस्य च । भागो जीवः स विज्ञेयः**" ( श्वे० ५ । ९ ) इति च । **नन्वस्माभिरपि** बह्वयः श्रुतिस्मृतयः प्रमाणं प्रादर्शिषत यासु व्यापको जीवात्मा सुव्यक्तं प्रतिपाद्यते । **सत्यं,** तथापि न तास्तत्प्रतिपादनपराः कथञ्चिदवधार्य्यन्ते । तत्र "**स वा एष महानज आत्मा**" ( बृ० ४ । ४ । २२ ) इति श्रुतिः स्वयमाशङ्क्य परमात्मपरत्वेन समाधास्यति । "**विभवत्येष आत्मा**" ( मुं० ३।१।९ ) इति श्रुतिशेषेण च चित्तशुद्धौ सत्यामात्मनो ज्ञानेन ब्रह्मदर्शनप्राप्तौ ज्ञानक्रियाविभूत्यतिशयः प्रतिपाद्यते न विभुभावः। विरोधात् । नह्यणोर्विभुभावप्रतिपादनं न विरुध्यते । अणुत्वं चोपक्रमे श्रुत्या स्वयमाख्यायत इति प्रव्यक्तम् । "**स चानन्त्याय कल्पते**" ( श्वे० ५ । ९ ) इति श्रुतिशेषेऽपि विरोधादानन्त्यपदेनासंख्येयत्वमुच्यते न विभुत्वमित्यभ्युपगमो ज्यायान् । नहि श्रुतिरादौ जीवात्मनोऽणुत्वमभिधाय स्वयमन्ते तद्विरुद्धं विभुत्वमभिधातुमर्हति । यदा खल्वस्मादृक् साधारणः पुमानपि प्रयोक्तव्ये स्ववाक्यसङ्घे पूर्वोत्तरविरोधं यत्नेनानुसन्धत्ते तदा सर्वजनोपचिकीर्षया प्रवर्तमानः परमसूक्ष्मदृङ्महर्षिः स्वप्रयोक्तव्ये श्रुतिवाक्ये कथं न पूर्वापरविरोधमनुसन्धास्यत इति क्षणार्द्धं निर्मलेन चेतसा चिन्तयितव्यम् । श्रुतिश्चैषा जीवात्मनोऽणुत्वं प्रतिपादयति न विभुत्वमित्यनन्तरमेव निरूपयिष्यते । यस्य तु कैवल्यमत्रानन्त्यपदेनोच्यते । तस्यापि स पुनरावृत्तेरभावादानन्त्यपदार्थो घटते । नहि स्वर्गादिवत् क्षयिष्णु कैवल्यमास्थातुं शक्यते । पौराणिकसद्मप्रवेशापत्तेः । ओमिति प्रतिवचने च किमपराद्धं तद्व्यासत्नमृत्युनाऽनेन प्रतिमापूजनेन । यथा चानन्तं कैवल्यं न सान्तं तथा फलाध्याये चतुर्थे पादे सविस्तरं वर्णयिष्यते । "**नित्यः सर्वगतः स्थाणुः**" ( गी० २ । २४ ) इति स्मृतिरपि शक्त्यतिशयेन जीवात्मनः सर्वत्र गतिमाचष्टे न विभुत्वम् । अधिकं चात्रोक्तमस्माभिः "**वैशेषिकसूत्रवैदिकवृत्तौ**"

इति न पुनरिह विस्तरभयादुच्यते । तस्मादुत्क्रान्तिगत्यागतीनां श्रुते-रणुरयमात्मेति निर्बाधम् ॥ १९ ॥

**स्यादेतत्**–न खल्वस्माभिरुत्क्रान्तिः शरीरान्निष्क्रमणमात्मनो मन्यते येनाणुरयमात्मा सिध्येत्, किं तर्हि? शरीरस्वाम्यपरित्यागः । स चाचलतो व्यापकस्याप्युपपद्यते । नहि स्थितो न शरीरस्वाम्यं परित्यक्तु-मर्हति । तदुपपत्तौ चोत्तरे गत्यागती अपि व्यापकस्यैव कथञ्चिदुपपा-दयितुं शक्येते । अविशेषात् । अतो नोत्क्रान्त्यादीनां श्रुतेरणुरयमा-त्मेति । अस्योत्तरं पठति—

**स्वात्मना चोत्तरयोः" ॥ २० ॥**

आत्मेत्यनुवर्तते । चस्त्वर्थः शङ्कां व्यावर्तयति । **उत्तरयोः**=गत्या-गत्योः **स्वात्मना**=स्वकर्त्रात्मना सम्बद्धत्वाद्गम्यतेऽणुरयमात्मेत्यर्थः ।

उत्क्रान्तिस्तावच्छरीरस्वाम्यपरित्यागात्मा परिकल्प्यमाना कदाचिद् व्यापकस्याचलतोऽपि सम्भवेत् उत्तरे गत्यागती तु न सम्भवतः । कर्तृस्थक्रियात्वात् । गत्यागती हि कर्तृस्थे क्रिये । ते च चलने निरूढे । न चाचलतः कर्तुः कथञ्चिदुपपादयितुं शक्येते । चलनं च परिच्छिन्ने सम्भवति न व्यापके । नहि व्यापकश्चलन् क्वचन निरीक्ष्यते । परि-च्छिन्नधर्मत्वे च गत्यागत्योरुत्क्रान्तिमपि शरीरान्निष्क्रान्तिमेव युक्तां प्रतिपद्यामहे न शरीरस्वाम्यपरित्यागम् । शरीरादनिष्क्रामतो गत्यागत्यनु-पपत्तेः । नहि यः शरीरान्न निष्क्रामति तस्य गत्यागती कथञ्चिदुपपद्येते । **"चक्षुष्टो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः"** ( बृ० ४ । ४ । २ ) इति शरीरप्रदेशानामपादानत्वेनोपादानाच्चोत्क्रान्ति-रत्र निष्क्रान्तिरेव न शरीरस्वाम्यपरित्याग इति निःशङ्कं प्रतिपत्तुं शक्यते । गत्यागती चास्य यथा लोकान्तरे श्रुत्या प्रदर्श्येते तथा शरी-राभ्यन्तरेऽपि प्रतिपाद्येते **"स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति"** ( बृ० ४ । ४ । १ ) **"शुक्रमादाय पुनरैति स्थानम्"** ( बृ० ४ । ३ । ११ ) इति । **सः**=आत्मा ।

**तेजोमात्राः**=इन्द्रियाणि । **अन्ववक्रामति**=प्राप्नोति । **शुक्रं**=शोचिष्मन्तमिन्द्रियसमुदायम् । **एति**=आगच्छति । **स्थानं**=जागरितस्थानमिति श्रुतिपदार्थः । ते अपि परिच्छिन्ने जीवात्मनि युज्येते न व्यापके । नित्यो भवन् परिच्छिन्नस्त्वणुरेव सिध्यति न मध्यमपरिमाणः । तस्मादुत्क्रान्तिगत्यागतीनां श्रुतेरणुरयमात्मेति युक्तम् ॥ २० ॥

अत्राशङ्क्य समाधत्ते—

**"नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्"** ॥ २१ ॥

आत्मेत्यनुवर्तते । **अणुः**=आत्माऽणुर्न=न युज्यते, कुतः ? **अतच्छ्रुतेः**=अनणुत्वश्रुतेरिति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कस्मात् ? **इतराधिकारात्**=इतरः परमात्मा, प्रकरणमधिकारः, परमात्मप्रकरणादित्यर्थः ।

**अथोच्येत**—न तावदुत्क्रान्त्यादीनां श्रवणादणुरयमात्मेति युक्तमभिधीयते । श्रुत्यन्तरेऽणुत्वविपरीतस्यानणुत्वस्य महत्त्वस्य श्रवणात् । श्रूयते खलु श्रुत्यन्तरेऽणुत्वविपरीतमात्मनो महत्त्वम् "**स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु**" (बृ० ४ । ४ । २२) इति । चेदणुरयमात्मा विद्येत तदा न स श्रुत्यन्तरे महानिति श्रूयेत । नहि श्रुतिरणुं तं महानिति श्रावयितुमर्हति । महतोऽणुत्ववदणोर्महत्त्वानुपपत्तेः । तदिदं श्रूयमाणं महत्त्वमात्मनोऽणुत्वं विगमयति व्यापकत्वं च निगमयति । व्यापको हि महान् सम्पद्यते नाणुः । उत्क्रान्त्यादीनां प्रतिपादिकाः श्रुतयस्तु गौण्यो व्याख्यातुं शक्यन्ते । तस्माद् व्यापकोऽयमात्मा नाणुरिति । **नैतद् वक्तव्यम्** । इतराधिकारात् । येयमणुत्वविपरीतस्य परिमाणान्तरस्य महत्त्वस्य प्रतिपादिका खलु श्रुतिरुदाह्रियते सा जीवात्मनः सकाशादितरस्य भगवतः परब्रह्मणः परमेश्वरस्याधिकारे पठ्यते न जीवात्मनोऽधिकारे । यदधिकारे च या पठ्यते सा तत्परिमाणमेव प्रतिपादयितुमर्हति नान्यपरिमाणम् । नहि परब्रह्मणः परमेश्वरस्याधिकारे सा समाम्नायते परिमाणं च जीवात्मनः प्रतिपादयेत

इति संश्लिष्यते । नापि पराधिकारश्रुत्यनुरोधेनापराधिकारश्रुतीनां मोक्ष व्याख्यानकल्पनं युज्यते । तस्मादणुरेव जीवात्मा न विभुरिति निरव वादम् ॥ २१ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति--

**"स्वशब्दोन्मानाभ्यां च" ॥ २२ ॥**

आत्माऽणुरिति च द्वयमनुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । **स्वशब्दोन्मानाभ्याम्**=अणुशब्दः स्वशब्दः, उद्धृतं मानमुन्मानं, स्वशब्दश्चोन्मानं च ताभ्यामणुरात्मेत्यर्थः ।

श्रुतिर्ह्यणुशब्देनात्मानं साक्षादभिधत्ते **"एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश"** (मुं० ३ । १ । ९) इति । चेदयमणुर्न स्यात् कथमेनमणुशब्देन साऽभिदध्यात् । नह्य-नणुरणुशब्देनाभिधातुं शक्यते । यथा चैतदणुशब्दादात्माऽणुरित्यधि-गम्यते तथोन्मानादप्यवगम्यते । श्रूयते जीवात्मनस्तावदुन्मानं **"बा-लाग्रशतभागस्य शतधाकल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते"** (श्वे० ५ । ९) इति । **"आराग्रमात्रो ह्यवरोऽपि दृष्टः"** (श्वे० ५ । ८) इति च । बालाग्रादुद्धृतः शततमो भागस्तस्मादपि शततमभागादुद्धृतः शततमो भागस्तावन्मात्रः, तथा तोत्राग्रप्रोतलोहाग्रस्य यावत्परिमाणं तावत्परिमाणो जीव इति श्रुतिद्वयस्यार्थो विस्पष्टः । न चानेन व्यापको जीवः कथ-ञ्चित् प्रतिपत्तुं शक्यते । मुख्यापेक्षयाऽमुख्यप्रतिपत्तेर्जघन्यत्वात् । अणु-त्वप्रतिपत्तौ च नास्ति काचिदनुपपत्तिः । तस्मादणुरात्मा ॥ २२ ॥

**ननु** नाणुरात्मेति युक्तमुच्यते । सर्वाङ्गीणशैत्यपरितापोपलब्धिविरो-धात् । यदा खल्वेष कदाचिद् गुरुकुलं गतो गङ्गोदके निमामज्यते तदा सर्वाङ्गीणं शैत्यमुष्णोदके निमामज्यमानश्च कदाचित् परितापमुप-लभ्यते । सेयं सर्वाङ्गीणशैत्यपरितापोपलब्धिः । सा चाणोः सतस्तस्य नितान्तं विरुध्यते । यत्कारणमणुर्भवन् स शरीरैकदेशे वर्तितुमर्हति न

सर्वस्मिञ्छरीरे । शरीरैकदेशे वर्तमानस्य च सर्वाङ्गीणशैत्यपरितापोपलब्धि-विशेषो विस्पष्टः । नहि शरीरैकदेशे वर्तेत सर्वाङ्गीणशैत्यपरितापो-पलब्धिश्च तस्य न विरुध्येतेति कथञ्चित् युज्यते । तस्मादनणुरयमात्मा-नाणुरिति । अस्योत्तरं पठति—

**"अविरोधश्चन्दनवत्" । २३ ॥**

**अविरोधः**=अणोर्जीवात्मनः शैत्यादेः सर्वाङ्गीणोपलब्धौ विरोधा-भावश्च **चन्दनवत्**=चन्दनबिन्दुवदवगन्तव्य इत्यर्थः ।

यथा हि निदाघे खलु शरीरैकदेशेऽवस्थितो हरिचन्दनबिन्दुः सर्वेषु तत्प्रदेशेष्वविशेषेण शान्तिसुखमुपजनयति तथा शरीरैकदेशेऽव-स्थितोऽणुरात्माऽपि शैत्यादेः सर्वाङ्गीणामुपलब्धिमुपजनयितुं पारयति नास्ति कश्चिद् विरोधः । तस्मादणुरेवात्मा नानणुः ॥ २३ ॥

अत्राशङ्क्य निराकुरुते—

**"अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद् हृदि हि" ॥ २४ ॥**

चन्दनवदित्यनुवर्तते । **अवस्थितिवैशेष्यात्**=अवस्थितिः स्थितिः, वैशेष्यं विशेषो भेदः, स्थितौ भेदाच्चन्दनस्य तथाभावो युज्यते नात्मन इति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कस्मात्? **अभ्युपगमात्**=चन्दनवदात्मनोऽपि शरीरैकदेशे स्थित्यभ्युपगमात्, कुतोऽभ्युप-गमः? **हि**=यतो **हृदि**=शरीरैकदेशे हृदि तत्स्थितिमाह श्रुतिरित्यर्थः ।

**अथोच्येत**—न खलु चन्दनवदविरोध इति युक्तमुच्यते । वैष-म्यात् । अस्ति दृष्टान्तदार्ष्टान्तिकयोः स्थितौ वैषम्यम् । चन्दनस्य हि शरीरैकदेशे स्थितिः प्रत्यक्षमीक्ष्यते जीवात्मन. शरीरैकदेशे स्थितिं च नाध्यक्षमीक्षामहे । कल्प्यमानया च तया चन्दनबिन्दुरिव शरीरैकदेशेऽ-वस्थितो जीवात्मा शैत्यादेः सर्वाङ्गीणामुपलब्धिमुपजनयतीति न निश्चेतुं शक्यते । संशयानिवृत्तेः । नहि यावदात्मनो हरिचन्दनबिन्दोरिव शरी-रैकदेशे स्थितिर्न निश्चीयते तावदणुर्भवन् स सर्वाङ्गीणां शैत्यादेरुपलब्धि-

मुपजनयति किंवा व्यापकः सन्निति संशयो निवर्तते। तदनिवृत्तौ च कुतस्तन्निश्चयः स्यादिति। **नैतद् वक्तव्यम्**। आत्मनोऽपि शरीरैकदेशे स्थित्यभ्युपगमात्। अभ्युपगम्यते हि हरिचन्दनविन्दोरिव जीवात्मनोऽपि शरीरैकदेशे हृदयेऽवस्थानम्। तथाह स्वयं श्रुतिः "**हृदि ह्येष आत्मा**" (प्र० ३।६) इति। "**कतम आत्मेति? योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः**" (बृ० ४। ३।७) इति च। तथा चात्मनः शरीरैकदेशे हृदये स्थितिनिश्चयेन विशेषाभावादविरोधश्चन्दनवदिति युक्तमुच्यते नायुक्तम्। तस्मादणुरात्मा ॥ २४ ॥

**स्यादेतत्**—सावयवं खलु चन्दनं तस्य विप्रसर्पणसम्भवात् सर्वेषु शरीराङ्गेषु शान्तिसुखोपजनयितृत्वमुपपद्यते, जीवात्मा च निरवयवः, तस्य तदसम्भवेन तत्र तदुपलब्धिजनयितृत्वं नोपपद्यते। न च ययोरेवमुपपन्नानुपपन्नकार्य्यत्वं तयोर्दृष्टान्तदार्ष्टान्तिकभावः परस्परं घटते। तथा चाणोः सतो जीवात्मनः शरीराङ्गेषु सर्वत्रोपलब्धिजनयितृत्वाभावस्तदवस्थ इति। अस्योत्तरं पठति—

"**गुणाद्वा लोकवत्**" ॥ २५ ॥

पक्षान्तरपरो वाकारः। **गुणात्**=स्वगुणभूताद् बुद्धिसत्त्वादात्मनः शरीरे सर्वत्रोपलब्धिजनयितृत्वमुपपद्यते **लोकवत्**=यथा लोके स्वगुणभूताद् धीसचिवात् सम्राजः साम्राज्ये सर्वत्र कार्य्यकर्तृत्वमित्यर्थः।

यथा हि लोके खलु साम्राज्यैकदेशेऽवस्थितस्य सम्राजस्तत्तादात्म्येन तच्छायापत्त्या देदीप्यमानेन धीसचिवेन साम्राज्यमात्रे शासनादितत्तत्कार्य्यकर्तृत्वमुपपद्यते तथा शरीरैकदेशेऽवस्थितस्य जीवात्मनोऽपि धीसचिवकल्पेन बुद्धिसत्त्वेन शरीरमात्रे तत्तद्विषयोपलब्धिजनयितृत्वमुपपद्यते। अणोरपि सतो हि जीवात्मनस्तद्गुणभूतं बुद्धिसत्त्वमा लोमभ्य आ च नखाग्रेभ्यः सर्वं शरीरमभिव्याप्य वरीवृत्यते, तत्तादात्म्येन तच्छायापत्त्या च तेजोमयमुकुरवद् देदीप्यमानं सर्वं शरीरं चाका-

क्ष्यमाणं कार्य्यजातमभिनिर्वर्तयितुमामोक्षं बद्धाञ्जलीव पुरतः प्रतिक्षणं तेष्ठीयते। नहि तदानीमस्ति तस्य तत्कार्य्यजाताभिनिर्वृत्तौ स्वप्नेऽपि प्रमादगन्धः। अत एवैतत् तत्र तत्र नियुक्तैः स्वानुचरैर्घ्राणादिभिरिन्द्रियैर्यदा यदा गन्धादीन् बाह्यार्थानुपलभते तदा तदैव धीसचिव इव सम्राजं हृदन्तर्ज्योतिषं तं यथायथं निवेदयते। न चैवम्भूते सति तस्मिन् धीसचिवकल्पे बुद्धिसत्त्वे जीवात्मनः सम्राजो भवति नाम किञ्चिदनुपपन्नं यत्किल सङ्कल्पमात्रेण सम्पादयितुं न क्षमते, हृदयैकदेशेऽवस्थितश्च सर्वाङ्गीणं शैत्यं वा परितापं वा परिज्ञातुं न कल्पते। तस्मादणुत्वे सत्यपि तस्य नास्ति शरीरे कुत्राप्युपलब्धिजनयितृत्वाभावः॥ २५॥

**स्यादेतत्**–यदिदं जीवात्मनः शरीरान्तस्तत्तद्विषयोपलब्धिसाधनं बुद्धिसत्त्वं तावदभ्युपेयते न तत् ततो व्यतिरिक्तं पश्यामः। नहि यदात्मकृत्यं चर्करीति तदात्मनो व्यतिरिच्यत इति कथञ्चित् सम्भवति। तत्कृत्यं कुर्वाणस्यैवात्मत्वात्। शरीरान्तस्तत्तद्विषयोपलब्ध्यादिजननं ह्यात्मनः प्रधानतः कृत्यम्। तच्च सर्वं तत्तादात्म्येन तच्छायापत्त्या चेतनायमानं बुद्धिसत्त्वमेव कुरुत इत्यास्थीयते। तथा च कथं वयमात्मनो व्यतिरिच्यते तदिति निश्चिनुमहि। किमिदमात्मतादात्म्येन तच्छायापत्त्या चेतनायमानं ज्ञानादिकार्य्यं निष्पादयति किंवा स्वतस्तस्यास्ति तन्निर्वर्तनक्षमं चैतन्यमिति संशयितुं शक्यत्वात्। औपाधिकचैतन्यकल्पनापेक्षया च ज्यायान् स्वरूपचैतन्याभ्युपायः। तस्माद् बुद्धिसत्त्वमेवात्मा नात्मतो व्यतिरिक्तमस्ति बुद्धिसत्त्वं नाम किञ्चिदिति। अस्योत्तरं पठति—

**"व्यतिरेको गन्धवत्"** ॥ २६॥

गुणस्येति षष्ठ्या विपरिणम्यानुवर्तते। **व्यतिरेकः**=गुणभूतस्य बुद्धिसत्त्वस्यात्मनः सकाशाद् व्यतिरेको भेदो **गन्धवत्**=उपलक्षणमेतत्, गन्धादिवदवगन्तव्य इत्यर्थः।

यथा हि स्वाश्रयद्रव्यं प्रति गुणभूताः खलु गन्धादयः परमार्थतस्ततो व्यतिरिच्यमाना अपि तादात्म्यदोषेण स्थूलदर्शिभिर्न ते ततो व्यतिरिच्यन्त इत्यवगम्यन्ते तथाऽऽत्मनः परमार्थतो व्यतिरिच्यमानमपि बुद्धिसत्त्वं तादात्म्यदोषेण स्थूलदृशां न ततस्तद् व्यतिरिच्यत इति प्रतिभासते । दुरवगाह्यं हि तादात्म्यस्य माहात्म्यम् । यत्र किल निपुणतमा अपि विवेकधियः प्रथमं व्यामोमुह्यन्ते, ययोश्च परस्परं तादात्म्यं तयोरणुमात्रमपि विवेकं न लालभ्यन्ते । किं न लोकते भवान् तप्तायःपिण्डं दृष्ट्वा विरला एव केचन भवादृशः कुशाग्रबुद्धयस्तत्राग्निलोहयोर्विवेकं बोबुध्यन्ते नाविशेषेण सर्वे द्रष्टारो जनाः । बहुसूक्ष्मं च ताभ्यामात्मा बुद्धिसत्त्वं चोभयमिति कथं पण्डितरूपा अपि तीव्रबुद्धयस्तद्विवेकं प्रतिपद्येरन् । बुद्धिसत्त्वं हि तत्तज्ज्ञानेच्छादिरूपेण तावत्परिणमते तादात्म्यवशादात्मा च तदाश्रयत्वमात्रं भजते । तत्राविवेकिनः खलु प्रतिहतज्ञानत्वादात्मनो ज्ञानेच्छादयः परिणामा अनुमन्यन्ते, तत्परिणामत्वाच्च तस्यैव ते धर्माः सञ्चिरन्ते, तेषामुत्पादविनाशदर्शनेन चानित्यगुण आत्मा, स च बुद्धिसत्त्वान्न व्यतिरिच्यत इति प्रतिजानते । विवेकिनश्चाप्रतिहतज्ञानत्वान्नूनमेते बुद्धिसत्त्वस्यैव परिणामास्तद्विशिष्टस्यात्मनश्च धर्मा न केवलस्य कुटस्थनित्यस्येति मन्वते, बुद्धिसत्त्वं चात्मनो ज्ञानसाधनं नात्मा परिणामित्वादनित्यत्वाच्चेति निश्चिन्वते । न च मदात्मनो ज्ञानसाधनं मन्त्रिवत् सम्राजस्तदात्मीयं कृत्यं कुर्वाणं कर्हिचिदात्मा सम्पद्यते । तद्धि तस्याधिकारप्राप्तं कृत्यम्, आत्मना नियुज्यमानं च तत्कृत्यं विदधाति न स्वातन्त्र्येणेति कथमात्मा सम्पद्येत । नहि सम्राजा नियुज्यमानो मन्त्री साम्राज्ये यथाधिकारं तत्तत्कृत्यं कुर्वाणः कदाचित् सम्राड्त्वमापद्यते । संशयस्तु विवेकग्रहाभावादुपजायते न विवेकग्रहात् । परिणामि हि बुद्धिसत्त्वं जडं च, ततो विपरीतोऽपरिणामी चिद्रूपश्चात्मेति सुकरस्तद्विवेकग्रहः । तस्मादात्मनो व्यतिरिच्यते बुद्धिसत्त्वमिति निश्चयः ॥ २६ ॥

ननु प्रमाणाभावे कथं वयमेतच्छ्रद्दधीमहि ? तत्राह—

**"तथा च दर्शयति"** ॥ २७ ॥

गुणस्य व्यतिरेकमित्युभयं षष्ठीद्वितीयाभ्यां विपरिणम्यानुवर्तते । **तथा च**=यथोपपादितं तथैव **दर्शयति**=गुणस्य बुद्धिसत्त्वस्यात्मनो व्यतिरेकं विज्ञापयति श्रुतिरित्यर्थः ।

यथा ह्यात्मनः सकाशाद् गुणभूतस्य बुद्धिसत्त्वस्य व्यतिरेकस्तावदुपपाद्यते तथा श्रुत्याऽपि विज्ञाप्यते **"प्रज्ञया शरीरं समारुह्य सुखदुःखे आप्नोति"** (कौ० ३ । ६) इति । प्रज्ञया=बुद्ध्या । बुद्ध्या बुध्यमानः खलु बोद्धा सम्पद्यते यथा चक्षुषा पश्यन् द्रष्टा, स्पर्शेन स्पृशन् स्प्रष्टा, श्रोत्रेण शृण्वन् श्रोता, घ्राणेन जिघ्रन् घ्राता, रसनया रसयन् रसयिता चेति सुप्रसिद्धम् । प्रमाणं च नः श्रुतिः । तस्माद्व्यतिरिक्तमात्मनो बुद्धिसत्त्वमिति युक्तं निश्चीयते ॥ २७ ॥

अत्रैव हेत्वन्तरमाह—

**"पृथगुपदेशात्"** ॥ २८ ॥

गुणस्येति षष्ठ्या विपरिणम्य, व्यतिरेकः, च, इति च पदत्रयमनुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदित्यनुवर्तमानेन चकारेणोच्यते । **पृथगुपदेशात्**=भेदः पृथक्त्वम्, अनुशासनमुपदेशः, भेदेनानुशासनाद् गुणभूतस्य बुद्धिसत्त्वस्यात्मनो व्यतिरेको गम्यत इत्यर्थः ।

श्रुतिर्हि जीवात्मनो भेदेन बुद्धिसत्त्वमुपदिशति **"आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि"** (कठ० ३ । ३) इति । **"विज्ञानसारथिर्यस्तु"** (कठ० ३ । ९) इति च । **विज्ञानं**=बुद्धिसत्त्वम् । तच्चेदात्मनो व्यतिरिक्तं न विद्येत न जातु श्रुत्या भेदेन तत्सारथित्वेनोपदिश्येत । नह्यव्यतिरिक्तं किञ्चिद् भेदेनोपदेष्टुं शक्यते । तस्मादस्ति बुद्धिसत्त्वस्यात्मनो व्यतिरेक इति गम्यते । तथा चात्माऽणुरित्यचलो राद्धान्तः ॥ २८ ॥

**स्यादेतत्**—सिध्यतु नाम बुद्धिसत्त्वस्यात्मनो व्यतिरेकः, सुतरां च

तेन तस्य शरीरे सर्वत्र तत्तद्विषयोपलब्धिजनयितृत्वं, तथापि नाणुरात्मेति सेद्धुमर्हति । यत्कारणं स्वयं श्रुत्या सोऽङ्गुष्ठपरिमाणो व्यपदिश्यते "**अङ्गुष्ठमात्रो रवितुल्यरूपः**" (श्वे० ५ । २) इति । न ह्यणोरङ्गुष्ठपरिमाणत्वं व्यपदेष्टुं शक्यते । तस्मादनणुरयमात्मा नाणुरिति । अस्योत्तरं पठति—

**"तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्"** ॥ २९ ॥

तुशब्देनोक्ताशङ्का पराक्रियते । **तद्गुणसारत्वात्**=तदा गुणभूतं बुद्धिसत्त्वं परामृशति, तस्य गुणः परिमाणं, तत्प्रधानत्वात् **तद्व्यपदेशः**=आत्मनोऽङ्गुष्ठमात्रत्वव्यपदेशः प्रतिपत्तव्यः । **प्राज्ञवत्**=यथा प्राज्ञस्य परब्रह्मणः परमेश्वरस्य हृदयगुणसारत्वादङ्गुष्ठमात्रत्वव्यपदेश इत्यर्थः ।

न खलु श्रुत्या स्वरूपतोऽङ्गुष्ठपरिमाणो जीवात्मा व्यपदिश्यते किन्तु बुद्धिगुणप्राधान्यात् । अस्ति बुद्ध्यात्मनोः परस्परं तादात्म्यं यथा तप्तायःपिण्डे वह्निलोहयोः । यत्रेदमाम्नातम् "**स समानः सन्नुभौ लोकावनुसञ्चरति**" (बृ० ४ । ३ । ७) इति । द्वयोस्तादात्म्येन च यथा चैतन्यमात्मनो बुद्धौ प्रतिभासते तथा बुद्धेः परिमाणमात्मनि प्रतिभासते । तस्य तत्र प्रतिभासनादेव च स्वरूपतोऽणुपरिमाणः सन्नपि स तत्प्राधान्यादङ्गुष्ठपरिमाणो व्यपदिश्यते यथा तप्तायःपिण्डे वह्निर्हस्तपरिमाणः । तदिदं श्रुतिशेषेण स्वयं प्रदर्श्यते "**सङ्कल्पाहङ्कारसमन्वितो यः । बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः**" (श्वे० ५ । ८) इति । स्पष्टो ह्यस्यार्थः—द्वये धर्मा आत्मनि वर्तन्ते स्वधर्मा बुद्धिधर्माश्च । स स्वधर्मै रवितुल्यरूप आराग्रमात्रो दृष्टस्तत्त्वविद्भिः, बुद्धिधर्मैश्चाङ्गुष्ठमात्रः सङ्कल्पाहङ्कारसमन्वित इति । ननु तत्त्वविदां दर्शनमिदं विरुध्यते । बुद्धिसत्त्वस्याङ्गुष्ठपरिमाणत्वानभ्युपगमात् । शरीरपरिमाणं हि बुद्धिसत्त्वमभ्युपगम्यते नाङ्गुष्ठपरिमाणमिति । अत्र वदामः । सत्यं शरीरपरिमाणं बुद्धिसत्त्वमभ्युपेयते तथापि तस्य स्थानोपाधेरङ्गुष्ठपरिमाणत्वाभिधानं युज्यते । हृदयप्रदेशो हि तदवस्थानं प्राधा-

न्येनाश्रीयते । तत्रैव तत्स्वामिनो जीवात्मनस्तथाऽवस्थानस्याङ्गीकारात् । हृदयं च मनुष्याणां प्रायेणाङ्गुष्ठपरिमाणमिति तदुपाधेर्बुद्धिसत्त्वमप्यङ्गुष्ठ-परिमाणमभिधातुं शक्यते । तस्याङ्गुष्ठपरिमाणत्वाच्च तदुपाधिको जीवा-त्माऽप्युपपद्यतेऽङ्गुष्ठपरिमाण इति न जातु तत्त्वविदां दर्शनमिदं विरु-ध्यते । **प्राज्ञवदित्युदाहरणम्** । परब्रह्मपरमेश्वरवचनो ह्येष प्राज्ञशब्दः । तत्रैव तत्प्रयोगोपलम्भात् । उपलभ्यते तावत् परब्रह्मणि परमेश्वरे प्राज्ञ-शब्दप्रयोगः **"तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्, एवमेवायं प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्"** (बृ० ४ । ३ । २१) **"तद्यथाऽनः सुसमाहितमुत्सर्जद् यायाद् एवमेवायं शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढ उत्स-र्जन् याति"** (बृ० ४ । ३ । ३५) इति । परब्रह्म परमेश्वरश्च परममहत्परिमाणो विभुत्वादिति निर्विवादम् । स यथा हृदयोपाधेरङ्गुष्ठ-परिमाणो व्यपदिश्यते **"अङ्गुष्ठमात्रः पुरुषः"** (कठ० ४ । १२) इत्याद्यासु श्रुतिषु, तथाऽणुपरिमाणः सन्नपि जीवात्मा बुद्धिसत्त्वोपाधे-रङ्गुष्ठपरिमाणो व्यपदिश्यत इत्यवगन्तव्यम् । **अथोच्येत**—उपाधिः खल्वात्मतोऽधिकपरिमाणमात्मपरिमाणं सम्पादयितुमर्हति न न्यूनपरि-माणमात्मपरिमाणम् । जीवात्मा च बुद्धिसत्त्वोपाधेर्न्यूनपरिमाणो वर्तते न प्राज्ञवद् हृदयोपाधितोऽधिकपरिमाण इति । **नैतद् वक्तव्यम्** । उपाधिमाहात्म्यस्याचिन्तनीयत्वात् । अचिन्तनीयं ह्युपाधेर्माहात्म्यं न तत् सूक्ष्मधीकैरपि चिन्तयितुं शक्यते । स यथाऽधिकपरिमाणमात्मपरिमाणं सम्पादयितुमर्हति तथा न्यूनपरिमाणमपि क्वचिदधिकपरिमाणं निष्पादयितुं पारयति । क्वचिच्चात्मतोऽप्यधिपरिमाणमिति यत्किञ्चिदेतत् ॥ २९ ॥

**स्यादेतत्**—यदिदं बुद्धिसत्त्वं खल्वात्मनो गुणभूतं परिमाणादिनि-खिलव्यवहारापादकं मन्यते न तदात्मवन्नित्यमभ्युपगन्तुं शक्यते । जन्य-त्वात् । नहि प्रकृतिजन्यं किञ्चिद् भवति नित्यम् । अनित्यस्य च सत-स्तस्य ध्रुवो विनाश इति स्वयमेव तद् विनंक्ष्यति यथेदं नः पाञ्च-

भौतिकं शरीरम् । विनष्टे च तस्मिन् साधनसम्पत्तिमन्तरैवात्मा विमोक्ष्यते संसारश्चाखिलस्तस्य निवर्तिष्यते । तथा च भवेत् तद्विधायकं शास्त्रं व्यर्थम् । सोऽयमात्मव्यतिरेकेण बुद्धिसत्त्वाभ्युपगमे दोषः । तस्मान्न तदभ्युपगमो ज्यायानिति । अस्योत्तरं पठति—

**"यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्" ॥ ३० ॥**

गुणस्येति षष्ठ्या विपरिणम्यानुवर्तते । चस्त्वर्थस्तेनोक्ताशङ्का व्यावर्त्यते । **यावदात्मभावित्वात्**=यावदात्मा संसारे वर्तते यावदात्मा न विमुच्यते तावद् भवितुं शीलत्वात् तावदात्मगुणभूतस्य बुद्धिसत्त्वस्यावस्थानादिति यावद् **दोषः**=शास्त्रवैयर्थ्यलक्षणो दोषो **न**=न भवति । यावदात्मभावित्वं तस्य कुतोऽवगम्यते? **तद्दर्शनात्**=तदा यावदात्मभावित्वं परामृशति, दर्शनं श्रुति, यावदात्मभावित्वश्रुतेरित्यर्थः ।

अस्ति तावदात्मनो गुणभूतं बुद्धिसत्त्वं प्रकृतिजन्यम् । प्रकृतिपुरुषेश्वरेभ्योऽन्यत्र पदार्थमात्रस्य तज्जन्यत्वाभ्युपगमात्, तथापि न तत् तावत् प्रध्वंसते यावदात्मा संसारे विपरिवर्तते, यथाशास्त्रं साधनजातं सुसम्पाद्य च प्राप्तब्रह्मदर्शनो न विमुच्यते । तद्धि तद्विनाशस्य निमित्तम् । नह्यनित्यमपि किञ्चिद् यावद् विनाशनिमित्तं नोपावर्तते तावद् विनाशमयते । नहि पाञ्चभौतिकं शरीरमपि जरारोगादिविनाशनिमित्ताभावे कदाचिद् विनश्यति । सर्वं वस्तु विनश्यत् खलु स्वविनाशस्य निमित्तं किञ्चिदपेक्षते । न च बुद्धिसत्त्वं वस्तुत्वं जहाति येन तद्विनाशो निमित्तं किञ्चिन्नापेक्षेत । यदनन्तरं च यद्विनाशस्तदेव तद्विनाशस्य निमित्तमिति नियमः । ब्रह्मदर्शनानन्तरं बुद्धिसत्त्वविनिर्मुक्तः शुद्धः केवल एव आत्मा भगवति परब्रह्मणि परमेश्वरेऽविभागमापद्यते संसारश्चाखिलस्तस्य विनिवर्तते, अतो ब्रह्मदर्शनमेव तद्विनाशस्य निमित्तमिति विज्ञायते । नहि तस्य तद्विनाशनिमित्तत्वाभावे तदनन्तरं तद्विनिर्मोक्षो निखिलसंसारनिवृत्तिश्चात्मनः कथञ्चिदुपपद्यते । सति ब्रह्मदर्शने बुद्धिसत्त्वसम्बन्धनिवर्तनेन शुद्धस्य केवलस्य सतः प्रत्यगात्मनः परब्रह्मणि परमेश्वरेऽविभागो निखिलसंसारोपरमश्च जायत इति स्वयं श्रुत्या

प्रतिपाद्यते **"यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान् नामरूपाद् विमुक्तः परात् परं पुरुषमुपैति दिव्यम्"** (मुं० ३ । २ । ८) इति। **विद्वान्**=प्राप्तब्रह्मदर्शनः । **नामरूपात्**=प्रकृतितत्कार्य्यात्मकान्नामरूपात्। **"यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। एवं मुनेर्विजानत आत्मा भवति गौतम!"** (कठ० ४ । १५) इति च। **विजानतः**=ब्रह्म साक्षात्पश्यतः। न चात्र प्रतिपाद्यमानं शुद्धत्वमन्तरेण बुद्धिसत्त्वसम्बन्धाभावं तस्य कथमप्युपजायते। अन्यत्र च ब्रह्मविदमधिकृत्य श्रूयते **"योऽकामो निष्काम आत्मकामो न तस्य प्राण उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति"** (बृ० ४ । ४ । ६) इति। तत्र "न तस्य प्राणा उत्क्रामन्ति" इति तत्रभवतो ब्रह्मविदः परलोकगमनं प्रतिषिध्यते, "ब्रह्मैव सन् ब्रह्माप्येति" इति बुद्धिसत्त्वसम्बन्धाभावपूर्वकस्तस्य शुद्धस्य सतः परब्रह्मणि परमेश्वरेऽविभागोऽवबोध्यते । प्रथमान्तो ब्रह्मशब्दो जीवात्ममात्रवचनः प्रयुज्यते द्वितीयान्तश्च परब्रह्मपरमेश्वरवचनः। उभयत्रापि तद्वृत्तेरभ्युपगमात् । तत्र पूर्वेणाभिसम्बध्यमानोऽवधारणशब्दस्तच्छब्दस्येतरयोगं व्यवच्छिनत्ति। यस्य खल्वितरस्य ब्रह्मवेदनतः पुरस्तात् संसारवेलायां योग आसीत् तस्योपरिष्टान्मुक्तौ ब्रह्माप्ययवेलायां स न भवतीति तद्योगव्यवच्छेदार्थो विस्पष्टः। इतरं चेह बुद्धिसत्त्वं परिगृह्यते। अन्यस्याप्रसक्तेः। ब्रह्मवेदनेन मुक्तौ ब्रह्माप्ययवेलायां तत्सम्बन्धव्यवच्छेदे नूनं तद्विनाशस्य निमित्तं ब्रह्मवेदनमिति युक्तमीक्षामहे। नहि ब्रह्मवेदनेन विनाशाभावे तद्योगो व्यवच्छेत्तुं शक्यते। **"तदभिध्यानाद् योजनात् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः"** (श्वे० १ । १०) इति च ब्रह्मदर्शनेन साक्षात् तन्निवृत्तिराम्नायते। न च ब्रह्मदर्शनस्य तद्विनाशनिमित्तत्वाभावे तदनन्तरं तन्निवृत्तिराम्नातुं पार्य्यते। **"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्"** (श्वे० ४ । १०) इति मायाशब्दस्य प्रकृतिवचनत्वनिश्चयादत्र छन्दो-

भङ्गभिया प्रकृतिशब्दस्थाने मायाशब्दः प्रयुज्यत इति द्रष्टव्यम्। भोगापवर्गार्थो हि बुद्धिसत्त्वप्रारम्भ इति शास्त्रविदां स्थितिः। यत्रेदं स्मर्यते "**भोगापवर्गार्थं दृश्यम्**" (यो० २। १८) इति। तत्र तत्तद्विषयानुभवो भोगः, विवेकख्यातिनान्तरीयकं ब्रह्मदर्शनमपवर्गः। अपवृज्यते मुच्यतेऽनेनेति त त्पत्तेः। ब्रह्मदर्शनान्मुच्यते पुरुष इति च निश्चितो वेदमार्गः। यदा चैतौ भोगापवर्गौ पुरुषस्य निष्पद्येते तदा न जातु क्षणमपि बुद्धिसत्त्वमवस्थातुं क्षमते। कृतार्थत्वात्। नहि लोके यस्यार्थो न विद्यते तत् जीवितमवतिष्ठत इति बुद्धिसोपानमारोहति। सप्रयोजनं हि जीवितं वस्तुमात्रस्य मन्यन्ते वैदिका न निष्प्रयोजनम्। न च निष्पन्ने भोगेऽपवर्गे च प्रयोजनान्तरं किञ्चिदवशिष्यते यत्कृते जीवितं बुद्धिसत्त्वमवतिष्ठेत। यस्य निष्पन्नेऽपवर्गे जीवितस्यावस्थानं खलु दुर्लभं नूनं तद्विनाशनिमित्तमपवर्गो ब्रह्मदर्शनमिति निश्चीयते। यत्रेद-मुक्तं दर्शनान्तरे "**कृतार्थं प्रति नष्टम्**" (यो० २। २२) "**ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम्**" (यो० ४। ३२) "**पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः**" (यो० ४। ३४) इति। ब्रह्मदर्शनं च शास्त्रविहितसाधनसम्पत्त्या निर्वर्तते नाकस्मादिति न तद्विधायकं शास्त्रं व्यर्थम्। एतेन यावदात्मा संसारे वर्तते तावद् बुद्धि-सत्त्वमपि न प्रध्वंसत इति समर्थितं वेदितव्यम्। दर्शयति च स्वयं श्रुतिः "**योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः, स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव**" (बृ० ४। ३। ७) इति। तत्र "**उभौ लोकावनु सञ्चरति**" इतिग्रहणेन श्रुतिरियं संसारविषया वर्तते न मुक्तिविष-येति प्रद्योत्यते। लोकशब्दवाच्यस्य जाग्रदादेः संसारावस्थाविशेष-त्वात्। नहि मुक्तो जाग्रदाद्यास्ववस्थासु सञ्चरति येन मुक्तिविषयेयं परिकल्प्येत। "**स समानः सन्**" इति जीवात्मनो बुद्धिसत्त्वसम्ब-न्धोऽवबोध्यते। समानत्वं च बुद्धिसत्त्वेन तप्तायःपिण्डवत् तादात्म्या-पत्तिः। सैव संयोगः सम्बन्धः। "**ज्योतिः**" इति च तस्य केवलं

नैजं रूपं प्रदर्श्यते । "**विज्ञानमयः**=बुद्धिमयः । प्रदेशान्तरे "**विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः**" (बृ० ४ । ४ । ५) इति विज्ञानमयस्य मनोमयादिभिः सह पाठात् । नहि बुद्धिमयार्थत्वाभावे स मनोमयादिभिः सह पठितुं शक्यते । समाना हि सह पठ्यन्ते नासमानाः । बुद्धिश्च मनआदिसमेति युक्तस्तन्मयस्य तन्मयादिभिः सह पाठः । बुद्धिसत्त्वसम्बन्धस्य मुक्तौ निवृत्त्या यावत्संसारमिदं बुद्धिमयत्वमात्मनः प्रदर्श्यत इति व्यक्तमभिहितं भवति । "**गुणान्वयो यः फलकर्मकर्ता**" (श्वे० ५ । ७) इति श्रुत्यन्तरं च यावदात्मा वेदविहितानां फलवत्कर्मणां कर्ता विद्यते तावदस्य बुद्धिसत्त्वसम्बन्धो वरीवृत्त्यत इति स्पष्टमभिधत्ते । नहि यस्य बुद्धिसत्त्वसम्बन्धो न भवति स वेदविहितानि कर्माण्यनुष्ठातुं पारयति । "**गुणान्वयः**" इति च व्यक्तस्तस्य बुद्धिसत्त्वसम्बन्धः । गुणेन=गुणभूतेन बुद्धिसत्त्वेनान्वयः=सम्बन्धो यस्येति तद्व्युत्पत्तेः । यथा च श्रुत्या वेदविहितकर्मानुष्ठानवेलायां जीवात्मनो बुद्धिसत्त्वसम्बन्धः परिकीर्त्यते तथा तत्फलोपभोगवेलायामपि सङ्कीर्त्यते "**आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः**" (कठ० ३ । ४) इति । कर्मकर्तृत्वं तत्फलभोक्तृत्वं च यावत्संसारमात्मनः सुप्रसिद्धम् । न च सुप्रसिद्धस्यातिक्रमो युज्यते । साधारणश्चैष आत्मशब्दः स यथा संसारिविषयः प्रयुज्यते तथाऽसंसारिविषयोऽपि प्रयुज्यत इति न किञ्चिदेतत् । **तस्मा**दात्मव्यतिरेकेण बुद्धिसत्त्वाभ्युपगमेऽपि यावदात्मभावित्वान्नास्ति कश्चिद्दोषः ॥ ३० ॥

**अथोच्येत**—यदिदं गुणभूतस्य बुद्धिसत्त्वस्य यावदात्मभावित्वमुच्यते तन्न युक्तं मन्यामहे । तस्य जन्यत्वेन प्रलये विनाशावश्यम्भावादिति । अस्योत्तरं पठति—

"**पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्**" ॥ ३१ ॥

यावदात्मभावित्वमिति विपरिणम्यानुवर्तते । तुशब्देनोक्ताशङ्का व्या-

वर्त्यते। **अस्य**=प्राक्रयमाणस्यात्मगुणभूतस्य बुद्धिसत्त्वस्य **सतः**=प्रलये सूक्ष्मरूपेण विद्यमानस्या**भिव्यक्तियोगात्**=अभिव्यक्तेः सम्बन्धाद् यावदात्मभावित्वं मन्तव्यम्। सतोऽभिव्यक्तियोगे दृष्टान्तः—**पुंस्त्वादिवत्**=रेतःसेचनसामर्थ्यं पुंस्त्वम्, आदिना ग्रहणधारणोहापोहादिसामर्थ्यं परिगृह्यते, बाल्ये सतः पुंस्त्वादेर्यौवनेऽभिव्यक्तियोगवदित्यर्थः।

ब्रह्मदर्शनं हि बुद्धिसत्त्वविनाशस्यासाधारणं निमित्तमित्यवोचाम। तद् यावन्न निष्पद्यते न तावद् बुद्धिसत्त्वं कर्हिचिद् विनाशमापद्यते। प्रलयस्तु तद्विनाशस्य सुषुप्तिवत् साधारणं निमित्तम्। तेन तत्र विनश्यदपि बुद्धिसत्त्वं नात्यन्तं विनश्यति। यथा हि सुषुप्तौ खलु सपरिवारं बुद्धिसत्त्वमवतिष्ठते केवलं तत्प्रभावेण तस्य कार्य्यकरणशक्तिः परिहीयते, तत्परिहाणमात्रेण चावतिष्ठमानमपि विनश्यदिति व्यपदिश्यते तथा प्रलयेऽपि तत्प्रभावेण सूक्ष्मभावापन्नं सपरिवारं बुद्धिसत्त्वं प्रकृतौ ब्रह्मणि तावदवतिष्ठते केवलं तस्य कार्य्यकरणशक्तिः परिक्षीयते। तत्परिक्षयाच्च स्वरूपतो विद्यमानमपि विनश्यदित्युपदिश्यते न परमार्थतो विनाशमास्वजते। अत्यन्तविनाशो हि परमार्थतो विनाशः। यं किल शास्त्रतत्त्वविदो वैदिकवरा "अतीतावस्था" इति नाम्ना परिभाषन्ते। स च तस्य ब्रह्मदर्शनादेव जायते न प्रलयात्। यच्चैवं प्रलयेऽपि कार्य्यकरणशक्तिपरिक्षयमात्रेण विनश्यदित्युपदिश्यमानमपि परमार्थतो न विनश्यति सूक्ष्मरूपेण च वरीवर्ति तस्य यौवने पुंस्त्वादिवत् सर्गारम्भेऽभिव्यक्तियोग उपपद्यते। यथा हि बाल्ये खलु सूक्ष्मरूपेण विद्यमानमपि पुंस्त्वादिकमनुपलभ्यमानत्वादविद्यमानवदभिप्रेयमाणं यौवनेऽभिव्यक्तियोगं लभते तथा प्रलये सूक्ष्मरूपेण विद्यमानं सपरिवारं बुद्धिसत्त्वमपि सर्गारम्भेऽभिव्यक्तियोगं भजते। न च विद्यमानस्याभिव्यक्तियोगो भवति नाम कदाचिदनुपपन्नः। ओषधिवद्वा प्रतिपत्तव्यः। यथा ह्योषधयः खलु व्रीहियवादयो ग्रीष्मे पृथिवीभावमापन्ना अपि बीजरूपेण विद्यन्ते तथा प्रलये प्रकृतिभावमापन्नमपि सपरिवारं बुद्धिसत्त्वं बीजरूपेण वरीवृत्यते नात्यन्तं प्रध्वंसते। बीजरूपेण वर्तमानं च वारि-

धारावसेके व्रीहियवाद्योषधिवत् सर्गारम्भे भगवन्नियमादभिव्यज्यते । कदाचिदभिव्यज्यमानस्य तिरोबोभूयमानस्य च कदाचिद् यावदात्मभावित्वं न दुष्यति । स्वभावो ह्येष वस्तुमात्रस्य यावदत्यन्तं न विनश्यति तावत् कदाचिदाविर्भवति कदाचित्तिरोभवति । बुद्धिसत्त्वमपि वस्तु । तस्मात् सर्गप्रतिसर्गयोराविर्भावे तिरोभावे च सत्यपि तस्यास्ति यावदात्मभावित्वमिति निःसंशयं मनसि धर्त्तव्यम् ॥ ३१ ॥

नन्वात्मव्यतिरेकेण बुद्धिसत्त्वमेव नास्ति दूरं तस्य यावदात्मभावित्वावधारणम्? तत्राह—

**"नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा" ॥ ३२ ॥**

**अन्यथा**=आत्मव्यतिरेकेण बुद्धिसत्त्वानभ्युपगमे **नित्योपलब्ध्यनुपलब्धिप्रसङ्गः**=सर्वदा बाह्यविषयोपलब्ध्यनुलब्ध्योः प्रसङ्गः प्रसक्तिः प्राप्तिः, **अन्यतरनियमः**=द्वयोः प्रसङ्गयोः कस्यचिदेकस्य प्रसङ्गस्य नियमो **वा**=अथवा स्यादित्यर्थः ।

यः खलु बुद्धिसत्त्वमात्मव्यतिरेकेण न मन्यते न तेनाणुरात्मा कर्हिचिदास्थातुं पार्य्यते । तस्य शरीरैकदेशे वर्तमानत्वेन बाह्यविषयज्ञानसाधनैरिन्द्रियैः सम्बन्धानुपपत्त्या तद्गोचरज्ञानानुत्पत्तेः । अनणुत्वे च ज्ञानसाधनैः समस्तेन्द्रियैः सम्बन्धसत्त्वेन युगपत् सर्वज्ञानोत्पत्तिवारणार्थमुपलब्ध्यनुपलब्ध्युभयजननस्वभावोऽङ्गीक्रियेत । नहि तादृक्स्वभावानङ्गीकारे युगपत् सर्वज्ञानोत्पत्तिः कथञ्चिद् वारयितुं शक्यते । तादृक्स्वभावत्वे चात्मनो बाह्यविषयगोचरे नित्यमुपलब्ध्यनुपलब्धी प्रसज्येयाताम् । स्वभावस्यापर्य्यनुयोज्यत्वात् । नहि स्वभावः कस्यचिद् वस्तुनः पर्य्यनुयोगमर्हति । न च लोके क्वचिदुपलब्ध्यनुपलब्धी युगपज्जायमाने दृश्येते । नहि यदा यस्य यद्गोचरोपलब्धिर्जायते तदैव तस्य तद्गोचराऽनुपलब्धिः क्वचिन्निरीक्ष्यते । विरुद्धे ह्युभे ते कथमेकत्र युगपत् सम्भवेताम् । अथैकविधस्वभाव एवाभ्युपेयते नोभयविधस्वभाव इति चेत्? तदोपलब्धिरेव

नित्यं प्रसज्येत नानुपलब्धिः, अनुपलब्धिरेव वा नित्यं प्रसज्येत नोपलब्धिः । न चोपलब्धिरेव क्वचिन्नियमेनावलोक्यते न वाऽनुपलब्धिः । क्रमवर्त्तिन्यौ चोभे इति सर्वजनीनम् । उपलब्धावप्यात्मनोऽनणुत्वेन सर्वेन्द्रियैः सम्बन्धसत्त्वाद् युगपत् सा सर्वेन्द्रियविषयगोचरा प्रजायेत । सति हेतौ हेतुमदुपजननस्यावश्यकत्वात् । **अथ** सत्यपि हेतौ हेतुमदुपजननाभावः? **तदा** नूनमियमेकविषयाऽपि नोपजायेत । विशेषाभावात् । तथाच प्रसज्येत नित्यं सर्वत्रानुपलब्धिः । तदिदं जगदान्ध्यप्रसक्तेर्बहु मन्दम् । **अथोच्येत**ास्त्यात्मन इच्छाभेदो विशेषः । सत्यपि युगपत्सर्वार्थसन्निकर्षे यमर्थमिच्छति तत्रोपलब्धिर्जायते नान्यत्रेति । **नैतद् वक्तव्यम्** । केवले तस्मिन्निच्छानुत्पत्तेः । मनःसम्बन्धाद्धि तत्रेच्छादयो गुणा उत्पद्यन्ते न स्वतः । कूटस्थनित्यस्योत्पादविनाशिधर्माश्रयत्वानुपपत्तेः । विकारी किल पदार्थः सर्वदा सर्वत्रोत्पादविनाशिधर्माश्रयो भवितुमर्हति नाविकारी कूटस्थनित्यः । आत्मा च तथेति कथमेष उत्पादविनाशिधर्माश्रय उपपद्येत । श्रुतिश्च मनोविशिष्टस्य तस्येच्छादयः सर्वे गुणा न केवलस्येति प्रव्यक्तं दर्शयति **"अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति, मनसा ह्येव पश्यति मनसा शृणोति, कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव"** (बृ० १ । ५ । ३ ) इति । **मनः**सम्बन्धोऽप्यात्मनोऽभ्युपगम्यत इति चेत्? **तदा** कृतं तस्यानणुत्वाभ्युपगमेन । प्रयोजनाभावात् । नहि मनोऽभ्युपगमेऽनणुत्वाभ्युपगमस्यात्मनः प्रयोजनं किञ्चिद् वक्तुं शक्यते । यत् खल्वनणुना सता तेन मनःसम्बन्धाद् विधीयते तदनणुना सता मनसाऽपि तत्सम्बन्धाद् धीसचिवेन सम्राट्सम्बन्धादिव सुखेन विधातुं पार्य्यते । न च लोके तादृशं कार्य्यं किञ्चिदीक्ष्यते यदिदं मनो न विदध्यात् । तस्य सर्वकर्मविधायकत्वं चाम्नायते साक्षाद् भगवति वेदे **"येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः । यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसङ्क-**

**रूपमस्तु**" (यजु० २४ । २) इति । लोके च प्रसिद्धमेतदिति न बहुविवरणमपेक्षते । अणुपक्षे चात्मगुणभूतस्य मनसो बुद्धिसत्त्वस्य मध्यमपरिमाणत्वेन सर्वेन्द्रियैर्युगपत्सम्बन्धसामान्ये सत्यपि ज्ञानहेतुसम्बन्धविशेषस्यात्मकृत्यधीनतया ज्ञानायौगपद्यं सुखेनोपपद्यते नास्ति तत्र कश्चिद्दोषः । उपपादितं चैतदस्माभिर्न्यायवैशेषिकसूत्रवैदिकवृत्त्योर्विस्तरेण । तदिदं बुद्धिसत्त्वमेवार्वाञ्चो "**नर्वससिस्टम**" नाम्ना परिभाषन्त इति न विस्मर्तव्यम् । तस्मादणुरयमात्मेति निर्विप्लवम् ॥ ३२ ॥

आत्माऽणुरित्युपापादि । सम्प्रति कर्ता स इत्युपपाद्यते—

"**कर्ता शास्त्रार्थवत्त्वात्**" ॥ ३३ ॥

आत्मेति प्रक्रियते । **कर्ता**=आत्मा कर्ता वेदितव्यः, कुतः ? **शास्त्रार्थवत्त्वात्**=शास्त्रं वेदः, तेन ब्राह्मणोपनिषत्स्मृतय उपलक्ष्यन्ते, अर्थवत्त्वं प्रामाण्यं, विधिनिषेधशास्त्रप्रामाण्यादित्यर्थः ।

शास्त्रं खलु जीवात्मानमधिकृत्य "**सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन । अग्नये जातवेदसे**" (ऋ० ३ । ८ । २० । १) "**अर्चत प्रार्चत प्रियमेधासो अर्चत**" (ऋ० ६ । ५ । ६ । ८) "**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः**" (यजु० ४० । २) "**अग्निहोत्रं होतव्यम्**" (शत० २ । २ । २ । १८) "**स्वाध्यायोऽध्येतव्यः**" (शत० ११ । ५ । ८ । ३) "**सत्यं वद धर्मं चर**" (तै० १ । ११) "**मङ्गलाचारयुक्तः स्यात् प्रयतात्मा जितेन्द्रियः । जपेच्च जुहुयाच्चैव नित्यमग्निमतन्द्रितः**" (मनु० ४ । १४५) "**वेदमेवाभ्यसेन्नित्यं यथाकालमतन्द्रितः । तं ह्यस्याहुः परं धर्ममुपधर्मोऽन्य उच्यते**" (मनु० ४ । १४७) इत्यादिनाऽग्निहोत्रादीनि कर्माणि विदधाति । "**गां मा हिंसीः**" (यजु० १३ । ४३) "**अक्षैर्मा दीव्यः**" (ऋ० ७ । ८ । ५ । १६) "**स्वाध्यायान्मा प्रमदः, प्रजातन्तुं मा व्यवच्छेत्सीः, देवपितृकार्य्याभ्यां न प्रमदि-**

तव्यम्"(तै० १ । ११) "**नात्मानमवमन्येत पूर्वाभिरसमृद्धिभिः। आ मृत्योः श्रियमन्विच्छेन्नैनां मन्येत दुर्लभाम्**" (मनु० ४ । १३७) इत्यादिना च हिंसादीनि कर्माणि विहितानां तेषामनुष्ठाने प्रमादं च प्रतिषेधति। न च विधायकं प्रतिषेधकं चैतच्छास्त्रं तावदर्थवद् भवितुमर्हति यावदयं कर्ता न स्यात्। यत्कारणं कर्तारं प्रत्येव किञ्चिद् विधातुं वा प्रतिषेद्धुं वा शक्यते। नहि कर्ता न भवति तं प्रति किञ्चिद् विधीयते प्रतिषिध्यते चेति युज्यते, विदधद्वा प्रतिषेधद्वा शास्त्रं कदाचित् प्रामाण्यमश्नुते। कर्त्रपेक्षितोपायः खलु शास्त्रेणोपदिश्यते। यद्ययं कर्ता न भवेत् कथं तस्यापेक्षितोपाय उपदिश्येत। नह्युन्मत्तवच्छास्त्रं कस्यचित् किञ्चिदुपदिशति। तेन यद् यस्योपदिश्यते कर्तुः सत एव तस्योपदिश्यत इति निश्चेतव्यम्। प्रमाणत्वात्। न चाकर्ता सन्नेप तदनुष्ठानफलं कर्हिचिल्लब्धुमीष्टे। तस्य कर्तृत्वेनैव स्मरणात् "**शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् तस्मात् स्वयं प्रयोगे स्यात्**" (मी० ३ । ७ । १८) इति। शास्त्रफलं=शास्त्रदेशितं फलं, प्रयोक्तरि=कर्मानुष्ठातरि। शास्त्रे च कर्ता स इति साक्षादपि पठ्यते "**एष हि द्रष्टा स्प्रष्टा श्रोता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः**" (प्र० ४।९) इति। "**गुणान्वयो यः फलकर्मकर्ता**" (श्वे० ५ । ७) इति च। न ह्यकर्ता कदाचित् कर्ता तत्र पठितुं शक्यते। तस्मादात्मा कर्ता ॥ ३३ ॥

अत्रैवापरं हेतुमुपन्यस्यति—

"**विहारोपदेशात्**" ॥ ३४ ॥

आत्मेति प्रक्रियते। कर्तेत्यनुवर्तते। **विहारोपदेशात्**=कामचारो विहारः, तदुपदेशादात्मा कर्ता गम्यत इत्यर्थः।

श्रुतिः खलु जीवात्मनः स्वप्ने विहारमुपदिशति "**स्वशरीरे यथाकामं परिवर्तते**" (बृ० २ । १ । १८) इति। "**स ईयतेऽमृतो यत्र कामम्**" (बृ० ४ । ३ । १२) इति च। स च कर्तुः सतस्त-

स्योपपद्यते नाकर्तुः सतः । नह्यकर्ता स्वातन्त्र्येण चरति चेति कथञ्चित् संश्लिष्यते । स्मर्य्यते च कर्तुः क्रियायां स्वातन्त्र्यम् "**स्वतन्त्रः कर्ता**" ( अष्टा० १ । ४ । ५४ ) इति । विहारोऽपि क्रिया । तस्मादेष कर्तेति विज्ञायते ॥ ३४ ॥

अन्यं हेतुं पठति

"**उपादानात्**" ॥ ३५ ॥

आत्मेति प्रक्रियते । कर्तेत्यनुवर्तते । **उपादानात्**=ग्रहणमुपादानं, करणशक्तेरुपादानादात्मा कर्ता गम्यत इत्यर्थः ।

श्रुतिः खलु जीवात्मनः सुषुप्तौ करणशक्त्युपादानं दर्शयति "**तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते**" ( बृ० २ । १ । १७ ) इति । प्राणानां=चक्षुरादिकरणानां, विज्ञानेन=बुद्ध्या, विज्ञानं=विषयग्रहणशक्तिम् , आदाय=उपादाय । न चेदं करणानां विषयग्रहणशक्त्युपादानमकर्तुः सतस्तस्य कथञ्चित् सम्भवति । नह्यकर्ता किञ्चिदुपादातुमर्हति । तस्मादेष कर्तेति प्रतिपद्यते ॥ ३५ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति-

"**व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्य्ययः**" ॥ ३६

आत्मेति प्रक्रियते । कर्तेत्यनुवर्तते । पूर्वत्रैवायं हेतुरिति चकारेणोच्यते । **क्रियायां**=लौकिकवैदिकक्रियायां **व्यपदेशात्**=कर्तृत्वेनाभिधानादात्मा कर्ता गम्यते । **चेत्**=यदि **न**=तत्र कर्तृत्वेनात्मनो व्यपदेशो न किन्तु बुद्धेरित्युच्येत ! तदा **निर्देशविपर्य्ययः**=विभक्तिनिर्देशव्यतिक्रम आपद्येतेत्यर्थः ।

श्रुतिः खलु लौकिकवैदिकक्रियायां कर्तृत्वेनात्मानं व्यपदिशति "**विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च**" ( तै० २ । ५ ) इति । विज्ञानं=विज्ञानमयो जीवात्मा, यज्ञं=वैदिकं कर्म, कर्माणि=लौकिककर्माणि, तनुते=यथाविधानमनुतिष्ठति । न चाकर्तुः सतस्तस्य

तत्र तथा व्यपदेशो घटते । नह्यकर्तारं सन्तमात्मानं सा कस्याञ्चित् क्रियायां कर्तृत्वेन व्यपदेष्टुमीष्टे । प्रामाण्याभावप्रसङ्गात् । **ननु** विज्ञानमिति बुद्धिसत्त्वव्यपदेशो वर्तते न जीवात्मव्यपदेश इति चेत् । **न** । निर्देशविपर्य्ययापत्तेः । बुद्धिसत्त्वव्यपदेशो हि निर्देशविपर्य्यय आपद्येत । तदा विज्ञानेनेत्येवं तावन्निर्दिश्येत न विज्ञानमिति । साधनस्य साधनविभक्त्या निर्देशस्यावश्यकत्वात् । उपलभ्यते खलु श्रुत्यन्तरे बुद्धिसत्त्वविवक्षायां साधनविभक्त्या निर्देशः "**तदेषां प्राणानां विज्ञानेन विज्ञानमादाय**" ( बृ० २ । १ । १७ ) इति । अत्र च विज्ञानमिति निर्दिश्यते न विज्ञानेनेति । तस्मादेष जीवात्मव्यपदेशो न बुद्धिसत्त्वव्यपदेश इति विज्ञायते । तथा च कर्ता जीवात्मेति सूपपन्नम् ॥ ३६ ॥

कर्तृत्वमात्मनः समर्थितम् । तत् किं नित्यं स्यादाहोस्विदनित्यमिति संशयः । तत्र यथा स्वरूपभूतं ज्ञानं नित्यं तथा कर्तृत्वमपि नित्यमित्येवं प्राप्तेऽभिधीयते—

**"उपलब्धिवदनियमः"** ॥ ३७ ॥

**उपलब्धिवत्**=स्वरूपभूतं ज्ञानमत्रोपलब्धिः, तन्नित्यत्ववद**नियमः**=कर्तृत्वनित्यत्वनियमो न विद्यत इत्यर्थः ।

यथा हि जीवात्मनः स्वरूपभूतं ज्ञानं चैतन्यं खलु नियमेन नित्यं वर्तते न तथा कर्तृत्वं तस्य नियमेन नित्यं विद्यते । यत्कारणं तद् बुद्धिसत्त्वसम्बन्धादुपजायते तदुपरमे चोपरमते । न च यदेवं तत् कर्हि चिन्नित्यमास्थातुं शक्यते । तदेव किल नित्यमास्थीयते यदात्मभावाय न जातु परमपेक्षते यथाऽऽत्मनः स्वरूपभूतं ज्ञानं चैतन्यं, यथा वाऽग्नेरौष्ण्यम् । न चेदृक्षमस्ति कर्तृत्वम् । तस्यात्मभावाय बुद्धिसत्त्वापेक्षायाः सद्भावात् । कृत्याश्रयत्वं हि कर्तृत्वम् । कृतिश्चेच्छाजन्यो गुणः प्रयत्नः प्रसिद्धः । न च तदाश्रयत्वं कूटस्थनित्यस्यात्मनो बुद्धिसत्त्वसम्बन्धमन्तरा कथञ्चिदुपपद्यते । विकारित्वापत्तेरित्यसकृदवोचाम । बुद्धिसत्त्वविशिष्टाश्रयत्वे च निमित्तभूतेन विशेषणेन तेन जन्यत इति निः-

संशयम् । यत्सत्त्वे यद् भवति तज्जन्यं तदिति निर्धारणात् । न च निमित्तभूतेन विशेषणेन बुद्धिसत्त्वेन जायमानमेतत् कर्हिचित् स्वाभाविकं सम्पद्यते । स्वभावसिद्धस्यैव स्वाभाविकत्वनियमात् । अतो नैमित्तिकं तदिति निश्चेतव्यम् । तथा च नियमेन स्यादनित्यं न कर्हिचिदुपलब्धिवन्नित्यम् ॥ ३७ ॥

**स्यादेतत्**—न खलु कृत्याश्रयत्वं वयं कर्तृत्वं मन्यामहे येन नैमित्तिकत्वादनित्यं तत् प्रसज्येत । किन्तर्हि ? क्रियाशक्तिमत्त्वम् । ज्ञानक्रिया शक्तिः पुरुष इत्यभ्युपगमात् । क्रियाशक्तिश्च नित्या यथा ज्ञानशक्तिः । तस्मात् कर्तृत्वमपि नित्यं न जात्वनित्यमिति । अस्योत्तरं पठति—

**"शक्तिविपर्य्ययात्"** ॥ ३८ ॥

अनियम इत्यनुवर्तते । **शक्तिविपर्य्ययात्**=क्रियाशक्तेर्व्यतिक्रमात् कर्तृत्वनित्यत्वनियमो नोपपद्यत इत्यर्थः ।

येयं खलु क्रियाशक्तिरभिलप्यते न सा प्रयत्नादतिरिच्यते । नहि येषां प्रयत्नो न विद्यते ते कामपि क्रियामभिनिर्वर्तयितुमीशते । प्रयत्नातिरेके त्ववश्यमीशीरन् । क्रियाभिनिर्वृत्त्यभावेऽप्यतिरिच्यते प्रयत्नादिति चेदाख्यायेत तदाऽपि न सा नित्या सिध्येत् । मुक्तौ तद्विपर्य्ययात् । मुक्तौ हि क्रियाशक्तिरात्मानं विपर्य्येति विद्यते तत्रात्मा नास्ति च क्रियाशक्तिः । तदिदं कार्य्यादर्शनाद् गम्यते । कार्य्यं ह्यर्थस्य शक्तिं गमयति । नहि यस्य कार्य्यं किञ्चिन्न दृश्यते तत्र तदनुकूला शक्तिर्विद्यत इति गन्तुं शक्यते । नह्यग्निस्तृणादिकं न दहति तदनुकूलां दहनशक्तिं धारयति चेति सङ्गच्छते । क्रिया च क्रियाशक्तिकार्य्यम् । न च तन्मुक्तौ दर्शयति शास्त्रम् । **"स तत्र पर्य्येति जक्षत् क्रीड़न् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा"** ( छां० ८ । १२ । ३ ) इति च तत्रभवतो जीवन्मुक्तस्य क्रियाभेदाः प्रदर्श्यन्ते न मुक्तस्य । तस्य संसारातीतत्वेन स्त्रीयानादिक्रीडानुपपत्तेः । वक्ष्यति च स्वयमाचार्य्योऽपि **"एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः"** ( वे०

४ । ४ । ७ ) इत्यत्र । न च तद्दर्शनाभावेऽस्ति क्रियाशक्तिरात्मन **इत्या**-स्थातुं पार्य्यते । कार्य्यगम्यानामर्थानां कार्य्यदर्शनेनैवास्थानस्य **न्याय्य**-त्वात् । **अथोच्येत**—तत्र सत्यामपि क्रियाशक्तौ निमित्तान्तराभावात् क्रिया काचिन्नोत्पद्यत इति । **नैतद् वक्तव्यम्** । नैमित्तिकीत्वप्रस-ङ्गात् । एवं हि सा नैमित्तिकी प्रसज्येत न सांसिद्धिकी । नहि वह्नेः सांसि-द्धिकी दहनशक्तिस्तृणादिकं दग्धुं निमित्तान्तरं किञ्चिदपेक्षते । क्रिया-मभिनिर्वर्तयितुं निमित्तान्तरं किञ्चिदपेक्षमाणा चेयं नूनं निमित्तान्तर-सहितस्यैवात्मनः स्यान्न केवलस्येति निःशङ्कं प्रतिपत्तुमीश्महे । निमित्ता-न्तरं च बुद्धिसत्त्वादन्यन्न निरूपयितुं शक्यते । तत्सहितस्यात्मनो धर्मः क्रियाशक्तिरिति चास्माभिरपि सहर्षमभ्युपेयते न तत्र मात्रयाऽपि विप्रति-पद्यते । न च बुद्धिसत्त्वसहितस्यात्मनो भवन्ती क्रियाशक्तिर्नित्या सेद्धु-मर्हति । विशिष्टाश्रयस्य धर्मस्य ज्ञानादिवदनित्यत्वनियमात् । विशि-ष्टाश्रया च क्रियाशक्तिस्तत्रैव क्रियाहेतुत्वादित्यतिरोहितम् । न च तस्य अनित्यत्वे कर्तृत्वनित्यत्वनियम कथञ्चिदुपपद्यते । ज्ञानशक्तिरपि क्रिया शक्तिवद् विशिष्टस्यैवात्मनो धर्म इष्यते न केवलस्येति न तद्दृष्टान्तोऽ-प्यानुकूल्यं भजते । ज्ञानक्रियाशक्तिः पुरुष इति च विशिष्टाभिप्राय-मुच्यते नात्ममात्राभिप्रायम् । वैदिकानामस्माकं सच्चित्स्वरूपत्वेनात्मनः शक्त्यन्तराश्रयत्वानभ्युपगमात् । क्रियाशक्तिसमकक्षा च ज्ञानशक्तिरिति युक्तं तस्या अपि विशिष्टाश्रयत्वम् । तस्मात् क्रियाशक्तिमत्त्वेऽप्यात्मनः कर्तृत्वं बुद्धिसत्त्वनिमित्तकतयाऽनित्यमेव सेत्स्यति न नित्यमिति निरप-वादम् ॥ ३८ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"समाध्यभावाच्च"** ॥ ३९ ॥

अनियम इत्यनुवर्तते । यत्र पूर्वो हेतुरुक्तस्तत्रैवायं हेतुरिति **चार्थः** । **समाध्यभावात्**=मोक्षस्य शास्त्रसिद्धत्वेऽपि लोकसिद्धत्वाभावान्मा नाम लोकस्तं कदाचिद् विश्वसीदिति तद्विश्वासार्थं लोकसिद्धः समाधि-

रुपादीयते, समाधिर्योगः, तत्र कर्तृत्वाभावान्नित्यत्वनियमो न सम्भवतीत्यर्थः ।

यस्मिँश्चित्तावस्थाविशेषे परवैराग्याभ्यासपाटवात् तज्जनितसंस्काराच्च प्रमाणादयः सर्वाश्चित्तवृत्तयस्तत्संस्काराश्च परवैराग्येण सार्धं निरुध्यन्ते, निरुद्धाखिलवृत्तिकं च चित्तं स्वरूपपररूपाभ्यामवस्थानाभावान्निरालम्बनं सदेकपदे स्वस्यां प्रकृतौ प्रविलीयते, पुरुषश्च पररूपेणावस्थानाभावात् स्वरूपेऽवस्थितो निजेनात्मना ब्रह्मानन्दमुपभुञ्जानो जगज्जन्मादिकारणे भगवति तस्मिन् निराकुलमवतिष्ठते, तमेव चित्तावस्थाविशेषं किल योगशास्त्राभिज्ञाः समाधिरिति परिभाषन्ते । तत्र ज्ञानस्य सद्भावो व्यक्तं विज्ञायते कर्तृत्वस्य च न स गम्यते । नहि तत्र कृतिरुपलभ्यते न वा क्रियोपजननी क्रियाशक्तिः । उभयविधं च कर्तृत्वमिष्टम् । चेदिदं नित्यं विद्येत तदा स्वरूपज्ञानवदवश्यं तदानीमुपलभ्येत । नहि विद्यते च नोपलभ्यते चेति सम्भवति । समाधौ च स्वरूपभूतज्ञानस्य भावः, कृत्याश्रयत्वस्य क्रियाशक्तिमत्त्वस्य वा कर्तृत्वस्याभावो योगाभ्यासिनां नः सर्वेषां प्रत्यक्षः । किं कारणं व्युत्थाने कर्तृत्वस्य भावः समाधौ चाभावो जायते ? बुद्धिसत्त्वसम्बन्धासम्बन्धाभ्यामिति ब्रूमः । व्युत्थाने हि बुद्धिसत्त्वसम्बन्धो वर्तते समाधौ च निवर्तते । तद्वृत्तिनिवृत्तिनिबन्धनश्च तत्र तस्य भावः समाधौ चाभाव इति मन्तव्यम् । यत् पुनरेवं कदाचिदात्मनि जायते कदाचिच्च निवर्तते तन्नूनं तस्य नैमित्तिकं वर्तते न सांसिद्धिकम् । नैमित्तिकस्य चानित्यत्वं निर्विवादं यथा स्फाटिकस्य रक्तिम्नः । तस्मादात्मनः कर्तृत्वमनित्यं नोपलब्धिवन्नित्यमिति निश्चयः ॥ ३९ ॥

तदिदं लौकिकदृष्टान्तेनाप्युपपादयति—

**"यथा च तक्षोभयथा"** ॥ ४० ॥

पूर्वत्रैवैष लौकिकदृष्टान्तोपन्यास इति चार्थः । **यथा**=येन प्रकारेण **तक्षा**=वर्द्धकि**रुभयथा**=उभयप्रकारेण वास्यादिसम्बन्धासम्बन्धाभ्यां

छिदादिक्रियायाः कर्ताऽकर्ता च व्यपदिश्यते तथा बुद्धिसत्त्वसम्बन्धा सम्बन्धाभ्यामात्माऽपि कर्ताऽकर्ता च व्यपदिश्यत इत्यर्थः।

यथा हि लोके तक्षा खलु वास्यादिसम्बन्धासम्बन्धाभ्यां छिदादि क्रियायाः कर्ताऽकर्ता चोभयथा व्यपदिश्यते तथा जीवात्मा पुरुषोऽ बुद्धिसत्त्वसम्बन्धासम्बन्धाभ्यां लौकिकवैदिककर्मणां कर्ताऽकर्ता चोभयथ व्यपदिश्यते। तक्ष्णो जीवात्मनः पुरुषस्य च स्वरूपेणाकर्तृत्वं वास्यादि बुद्धिसत्त्वनिमित्तजं च कर्तृत्वमित्युभयोर्दृष्टान्तदार्ष्टान्तिकभाव उपपद्यते तमाम्। "**एष हि द्रष्टा स्प्रष्टा श्रोता मन्ता बोद्धा कत विज्ञानात्मा पुरुषः**" (प्र० ४।९) "**गुणान्वयो यः फल कर्मकर्ता**" (श्वे० ५।७) इत्यादिशास्त्रं च बुद्धिसत्त्वविशिष्टस्यै कर्तृत्वं प्रतिपादयति न केवलस्य शुद्धस्य। "**अहङ्कारः कर्ता पुरुषः**" (सां० ६ । ५४) इत्यादिना तस्य तत्प्रतिषेधात्। नर्हि शास्त्रेण शुद्धस्य कर्तृत्वे प्रतिपाद्यमाने प्रतिषेधोऽयं कथञ्चिन प्रवर्तितु मर्हति। मा वा भूत प्रवर्तमाने प्रतिषेधेऽस्मिन्नादरः, तथापि शास्त्रे शुद्धस्य कर्तृत्वं प्रतिपाद्यत इति न साधयितुं शक्यते। विशिष्टाश्रयद्रष्ट्र त्वादिसाहचर्य्येण कर्तृत्वस्यापि विशिष्टाश्रयत्वौचित्यात्। अत ए "**गुणान्वयो यः**" इति कर्ता विशेष्यते। गुणान्वय इत्यस्य बुद्धिसत्त्वसम्बन्धवानित्यर्थो विस्पष्टः। "**न नित्यशुद्धबुद्धमुक्तस्व भावस्य तद्योगस्तद्योगादृते**" (सां० १ । १९) इत्यात्मन शुद्धत्वाभिधानमपि भवति कर्तृत्वस्य बुद्धिसत्त्वनिमित्तकत्वे लिङ्गम् नहि सांसिद्धिके कर्तृत्वे तस्य शुद्धत्वाभिधानं कथञ्चित् सङ्गच्छते बुद्धिसत्त्वसम्बन्धश्चात्मन आसंसारमनुवर्तते नोर्ध्वमिति द्रष्टव्यम्। विधि निषेधशास्त्रप्रवृत्तौ तु कर्तृत्वमात्रमपेक्ष्यते सांसिद्धिकं स्यान्नैमित्तिकं व भवेदिति न निर्बन्धः। तस्मात् कर्तृत्वमात्मनो नैमित्तिकत्वादनित्यमिति सिद्धम्॥ ४०॥

**आसंसारं** लौकिकवैदिककर्मणां कर्ता जीवात्मेति स्थितम्। तत्रै तद् विचार्य्यते किमयं परेण ब्रह्मणा प्रेर्य्यमाणो लौकिकं वैदिकं च

कर्माचरति किंवा स्वतो विनैव तत्प्रेरणामिति । तत्र स्वत इति पूर्वः पक्षः, परेण प्रेर्य्यमाण इति सिद्धान्तः । किं तावत् प्राप्तम्? स्वत इत्याचक्ष्महे । कर्तृत्वात् । कर्ता हि स्वतन्त्रो भवति । "**स्वतन्त्रः कर्ता**" (अष्टा० १ । ४ । ५४) इति स्मृतेः । यदि चैष परेण ब्रह्मणा प्रेर्य्यमाणो लौकिकं वैदिकं वा कर्माचरेत् तदा परतन्त्रो जायेत स्वतन्त्रश्च न भवेत् । तथा च कर्तृत्वाभावस्तस्य प्रसज्येत । विद्यते च कर्ता । न च प्रवर्तनालक्षणेषु रागादिषु दोषेषु सत्सु परब्रह्म परमेश्वरस्तत्प्रवर्तकोऽपि कल्पयितुं शक्यते । व्यर्थत्वात् । नहि प्रवर्तकेषु दोषेषु सत्सु पुनः प्रवर्तकान्तरस्य कल्पनं कथञ्चित् सार्थकं सम्पद्यते । प्रवर्तकेन हि प्रवृत्तिरस्य कर्मसु विधीयते । पर्य्याप्ताश्च तत्र रागादय एव दोषा इति व्यर्थं तत्कल्पनम् । यस्त रागादिभिर्दोषैः प्रयुक्तः स्वयमेव कारकान्तरसामग्रीसम्पन्नत्वादिष्टमनिष्टं लौकिकं वैदिकं वा कर्माचरितुं शक्नोति तस्य परब्रह्म परमेश्वरः प्रवर्तको भूत्वा किं विधास्यत इति न विज्ञायते । कल्पनं च सर्वत्र नियमेन प्रसिद्धिमपेक्षते । नहि कृषिकर्मण्यनडुदादिवदपेक्ष्यमाणोऽसौ लोके कुत्रापि प्रसोषिध्यते येनेहापि कल्प्येत । न चाप्रसिद्धस्य कल्पनं न्याय्यं मन्यन्ते कल्पनाचुञ्चवः । तस्मात् स्वत इत्येव युक्तं न परेण परब्रह्मणा परमेश्वरेण प्रेर्य्यमाण इति । **एवं** प्राप्ते प्रतिविधीयते—

**"परात्तु तच्छ्रुतेः"** ॥ ४१ ॥

तुना पूर्वःपक्षो व्यावर्त्यते । **तत्**=कर्तृत्वं **परात्**=परब्रह्मणः परमेश्वरादात्मनो बोभूयते, कुतोऽवगम्यते? **श्रुतेः**=वेदोपनिषच्छ्रुतेरित्यर्थः ।

"**य ईशे अस्य द्विपदश्चतुष्पदः**" (ऋ० ८ । ७ । ३ । ३) "**य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति**" (बृ० मां० ३ । ७ । ३०) इत्यादिश्रुतिभ्यो हि जीवात्मा नियम्यस्तन्नियामकश्च परब्रह्म परमेश्वरस्तावत् स्फुटमवगम्यते । न च सति नियामके भगवति तस्मिन् नियम्योऽयं जीवात्मा कुत्रापि सर्वथा स्वतन्त्रो भवितुमर्हति । नियम्यस्य नियन्तृतन्त्रत्वनियमात् । यश्च न सर्वथा स्वतन्त्रः किन्तु निय-

न्तृतन्त्रस्तस्य लौकिकवैदिककर्मसु कर्तृत्वमपि नियन्तृप्रेरणयैव सिध्यति न स्वत इति निश्चीयते । यदा खल्वचेतना अपि प्राकृताः पदार्था नियन्तुर्भगवतस्तस्य प्रेरणया यथाकालं स्वस्वकर्माचरन्ति यथा दहनमग्निस्तपनं सूर्य्यः पवनं वायुः शमनमापः, तदा चेतनो जीवात्मा तत्प्रेरणया लौकिकं वैदिकं वा कर्माचरतीति किं नु चित्रमिव लोकसे । स्वभावो ह्येष नियम्यानां पदार्थानां चेतनाः स्युरचेतना वा भवेयुः सर्वत्र ते सर्वे नियन्तृप्रेरणयैव प्रवर्तन्ते न स्वत इति । तमेव चेद् लौकिकवैदिककर्माचरणे जीवात्मा पुरुषोऽप्यनुहरति तदा न वयं किञ्चिदाश्चर्य्यमिव मन्यामहे । स्वभावस्यापर्य्यनुयोज्यत्वात् । यत् पुनरुच्यते स्वातन्त्र्येण कर्माचरणाभावे तस्य कर्तृत्वाभावः प्रसज्येतेति । तत्र निगदामः । क्रियां प्रत्यगुणभावो हि स्वातन्त्र्यम् । तच्च हेतुकर्तरि सत्यपि यदा न व्याहन्यते तदा नियामके भगवति तस्मिन् सत्यपि न व्याघानिष्यते । समानत्वात् । तथा च कर्तृत्वाभावप्रसङ्ग इत्यनुपपन्नम् । यत्तु प्रवर्तनालक्षणेषु रागादिदोषेषु सत्सु व्यर्थं तत्कल्पनमित्युट्टङ्कयते । तदपि न युक्तमीक्षामहे । क्लृप्तत्वात् । यथा हि प्रवर्तनालक्षणाः खलु रागादयो दोषाः प्रवर्तकत्वेन क्लृप्ता विद्यन्ते नापूर्वाः कल्प्यन्ते तथा जगतां पिता परब्रह्म परमेश्वरोऽपि प्रवर्तकः क्लृप्तो विद्यते नापूर्वः कल्प्यते । व्यर्थत्वं च कल्प्यमाने दूषणं व्याहरन्ति न क्लृप्ते । अन्यथाऽतिप्रसङ्गात् । क्लृप्तश्चैष तदेव विधत्ते यत्किल रागादिभिर्दोषैर्विधीयत इति न किञ्चिदेतत् । कृषिकर्मणि चानडुदादिवदपेक्ष्यमाणो लोकेऽप्रसिद्धोऽपि न तावदनुपादेयो भवितुमर्हति । वेदादिसर्वशास्त्रप्रसिद्धत्वात् । अतो भगवता परब्रह्मणा परमेश्वरेण प्रेर्य्यमाणोऽयं लौकिकं वैदिकं च कर्माचरति न स्वत इति निरुपसर्गम् ॥ ४१ ॥

**स्यादेतत्**–जीवात्मा पुरुषः खलु परब्रह्मणा परमेश्वरेण चेत् प्रेर्य्यमाणो लौकिकं वैदिकं च कर्माचरेत् तदा विधिनिषेधशास्त्रं वैयर्थ्यमापद्येत । नहि यः परेण नुद्यमानः कर्मसु प्रवर्तते तं प्रति विधिनिषेधशास्त्रं कर्हिचिदर्थवत् सम्पद्यते । तदर्थस्य परेण सम्पादितत्वात् ।

विधिनिषेधशास्त्रस्यार्थो हि जीवात्मनः पुरुषस्य विहिते कर्मणि प्रवर्तयितुं निषिद्धे कर्मणि च निवर्तयितुं विनियोगः। तं सम्पादयति च पर इति कृतं निरर्थकेन विधिनिषेधशास्त्रेण। जगद्वैचित्र्यानुपपत्तिश्च। रागादिभिः प्रवर्तनालक्षणैर्दोषैः खलु प्रेर्य्यमाणस्य जीवात्मनः पुरुषस्य पुण्यापुण्यकर्मसु प्रवृत्तेर्धर्माधर्मसञ्चयाभ्यां जायमानात् सुखदुःखवैचित्र्याज्जगद्वैचित्र्यमुपपद्यते। यदि चैष परब्रह्मणा परमेश्वरेण प्रेर्य्यमाणः कर्मसु प्रवर्तेत तदा नियमेन पुण्ये कर्मण्येव प्रवर्तेत नापुण्ये कर्मणि। नहि द्वेषपक्षपातरहितः स्वतन्त्रः परमकारुणिकोऽसौ कदाचिदेनमपुण्ये कर्मणि प्रवर्तयितुमर्हति। पुण्ये कर्मणि प्रवर्तमानस्य च धर्मसञ्चयभावेऽपि धर्माधर्मोभयसञ्चयाभावान्नेदं जगद्वैचित्र्यमुपपद्येत। तदुपपत्त्यर्थं तत्रापि तत्प्रवृत्त्यङ्गीकारे च वैषम्यनैर्घृण्यदोषौ प्रव्यक्तं प्रसज्येयाताम्। नहि यथाकामं पुण्यापुण्ये कर्मण्येनं प्रवर्तयतो भगवतस्तस्य वैषम्यनैर्घृण्यदोषौ न प्रसज्येते। तस्मात् परब्रह्मणः परमेश्वरस्य प्रेरणया जीवात्मा पुरुषोऽयं लौकिकं वैदिकं च कर्माचरति न स्वत इत्येतदसमञ्जसमिति। अस्योत्तरं पठति—

**"कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः"॥ ४२**

पर इति प्रथमया विपरिणम्यानुवर्तते। तुशब्देनोक्ताशङ्का व्यावर्त्यते। **कृतप्रयत्नापेक्षः**=कृतः कर्तव्ये कर्मणि पुरुषेण जीवात्मना यः प्रयत्न उद्योगस्तदपेक्षः पर एनं प्रेरयति, कुतोऽवगम्यते? **विहितप्रतिषिद्धावैयर्थ्यादिभ्यः**=विहितप्रतिषिद्धशब्दाभ्यां विधिनिषेधौ लक्ष्येते, तयोर्व्यर्थत्वाभावोऽवैयर्थ्यं प्रामाण्यम्, आदिना जगद्वैचित्र्यं परिगृह्यते, विधिनिषेधशास्त्रावैयर्थ्यादिभ्यो हेतुभ्य इत्यर्थः।

यदा खलु दोषप्रयुक्तो जीवात्मा पुरुषो लौकिकं वैदिकं वा कर्म किञ्चिदाचरितुमुद्युङ्क्ते तदा तदुद्योगमपेक्ष्य हृदयस्थितेन भगवता परब्रह्मणा परमेश्वरेण यत् तत्र करुणया परया पौनःपुन्येनात्ममतं प्रकाश्यते यत् त्वया कर्माचरितमुद्युज्यते तत् साधु वर्तते किंवा साधु न वर्तते

कर्तव्यं ते किंवा न कर्तव्यमिति, तदेव भगवतस्तस्य कर्तव्ये कर्मणि जीवात्मप्रेरणेति परिभाष्यते । सा चा पांसुलपादकहालिकादा च पण्डितरूपादस्ति सुप्रसिद्धा । नहि लोके तादृशो जन्तुः कश्चिद् विद्यते यः किल हृदयप्रदेशेऽभिव्यज्यमानामेनां पारमेश्वरीं प्रेरणां नावबुध्यते । न च सा यथा पुण्यापुण्यकर्मोद्योगवेलायां पांसुलपादकहालिकस्य हृत्प्रदेशेऽभिव्यज्यते तथा पण्डितरूपस्य हृदयप्रदेशे नाविरास्ते । सर्वो हि स्वस्वहृदयपुण्डरीकेऽभिव्यज्यमानामेनामविशेषेणानुबोभोति । तद्धेतोः परब्रह्मणः परमेश्वरस्य पक्षपातादिदोषशून्यत्वेन सर्वान् प्रत्यविशिष्टत्वात् । नहि जगतां पितुर्भगवतस्तस्य कस्मिँश्चिद् व्यक्तिविशेषे पक्षपातः केनचिद् द्वेषः कुत्रचित् स्वातन्त्र्यप्रतिघातो वा वर्तते, करुणा वा तस्य प्राणभृन्मात्रं न व्याशाश्यते येन स कञ्चित् प्रति विशिष्येत तत्प्रेरणां च सर्वो जनोऽविशेषेण नानुबोभूयेत । न च सर्वेषामविशेषेणानुभवपथमारोहन्त्या तया जीवात्मा पुरुषोऽयं पुण्ये वाऽपुण्ये वा कर्मणि कदाचित् कुत्रचिद् बलात् प्रवर्तयितुं शक्यते, यथा बलवत्सलिलानिलौघेन तृणकाष्ठादिकम् । स्वमतप्रकाशनमात्रत्वात् । स्वमतप्रकाशनमात्रं ह्येषा पारमेश्वरी प्रेरणा । यत्रैतत् स्मर्य्यते **"यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः । तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः"** (मनु० ८ । ९२) इति । स्पष्टश्च तस्यार्थो यच्च्छया कर्तुं व्यवस्यते तच्चेद् हृदयस्थितोऽन्तर्य्यामी परब्रह्म परमेश्वरोऽनुमन्यते तदा कर्तव्यं नो चेदनुमन्यते तदा न कर्तव्यमिति । न चेह हृदयस्थितेन भगवता विश्वनियन्त्रा परब्रह्मणा परमेश्वरेण स्मृतो विवादस्तत्प्रेरणायाः स्वमतप्रकाशनमात्रतो विशिष्टत्वे कथञ्चित् सङ्गच्छते । प्रवर्तकेन विवादानुपपत्तेः । नहि यो यं कञ्चिद् बलात् कर्मणि प्रवर्तयितुमीष्टे तेन तस्य विवादः कथञ्चिदुपपद्यते । मध्यस्थभावेन तत्र प्रवृत्त्यै निवृत्त्यै वा स्वमतं प्रकाशयता तु युज्यते विवादः । लोकेऽपि दोषप्राबल्याद्बुभुक्षानस्य तथा भावेन तत्र प्रवृत्तिं निवृत्तिं वा दिशता बहुधा विवाददर्शनादिति स्वमतप्रकाशनमात्रमेव सा पर्य्यवस्यति न ततो विशिष्टा काचित् । तत्र च

न जातु जीवात्मनः पुरुषस्य स्वातन्त्र्यं प्रतिहन्यते पारतन्त्र्यं च सञ्जायते। यत्कारणं स तदभ्युपगमानुपगमयोः सर्वथा स्वतन्त्रो वर्तते यथेच्छेत् कुर्य्यात्, अभ्युपगच्छेन्न वाऽभ्युपगच्छेत्, न च केनचित् कर्हिचित् तदभ्युपगमयितुमनभ्युपगमयितुं वा बाध्यते। यथा हि नियम्यः सन्नपि खलु प्रजावर्गो दिवानिशं स्वस्वकर्मणि स्वातन्त्र्येण प्रचरीवृत्यते सुखं वा दुःखं वा स्वस्वकर्मफलं च प्रजापतितन्त्रतया यथाकालमुपभुङ्क्ते तथा जीवात्मा पुरुषोऽपि नियम्यः सन् कर्ममात्रे स्वतन्त्रस्तत्फलोपभोगे च परतन्त्रो विद्यते न कर्मण्यपि फलोपभोगवत् परतन्त्र इति द्रष्टव्यम्। न चैवं विधिनिषेधशास्त्रं वैयर्थ्यमापद्यते, जगद्वैचित्र्यं वा नोपपद्यते, भगवति तस्मिन् वैषम्यनैर्घृण्यदोषौ वा प्रसज्येते। यत्कारणं कर्मणि पारतन्त्र्ये सति जीवात्मनः सर्वेऽमी दोषाः प्रादुष्यन्ति न स्वातन्त्र्ये। स्वतन्त्रश्च क्रियायां प्रजावर्गवत् स इति सर्वमनवद्यम्। हेतुकर्तृत्वं च भगवतः परब्रह्मणः परमेश्वरस्य प्रेरणामात्राश्रयत्वादुपपद्यतेतमाम्। स्वमतप्रकाशनात्मिका सा स्याद् विशिष्टा वा काचिदिति नास्ति कश्चिदाग्रहः। **"यो मारयति प्राणयति यस्मात् प्राणन्ति भुवनानि विश्वा"** (अथर्व० १३। ३। ३। ३) इति च स्थावरजङ्गमात्मनो विश्वस्य जगतः सृष्टिप्रलयौ परब्रह्मपरमेश्वरतन्त्रौ प्रदर्श्येते न जीवात्मनः पुरुषस्य फलोपभोगवत् कर्मण्यपि पारतन्त्र्यम्। **"एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते"** (कौ० ३। ८) इत्यादिका श्रुतिरपि भगवतस्तस्य पुरुषविशेषगोचरं यथाकर्मानुग्रहं निग्रहं च श्रावयति न जीवात्मनः कर्मसु पारतन्त्र्यं प्रतिपादयति। यः खलु यथाशक्यं तदानुकूल्ये व्यवस्थितश्चलति तस्यानुजिघृक्षया प्रतिक्षणमूर्ध्वगतिसाधनेषु पुण्यकर्मसु रुचिमुत्पादयति, यश्च सर्वथा प्रातिकूल्ये व्यवस्थितश्चरति तस्य निजिघृक्षया प्रतिक्षणमधोगतिसाधनेषु पापकर्मसु रुचिमुद्भावयति। तदिदं पुरुषविशेषस्य तस्य साध्वसाधुकर्मसु रुच्युत्पादनं च फलप्रदानकल्पमेव न ततो विशिष्टमित्यदोषः। **अथ** कुतोऽ-

न्गम्यते कृतप्रयत्नापेक्षः परब्रह्म परमेश्वरः स्वमतप्रकाशनात्मिकां प्रेरणां विधत्त इति। **विधिनिषेधशास्त्रावैयर्थ्यादिभ्य** इति ब्रूमः। प्रामाण्यं हि शास्त्रस्यावैयर्थ्यमित्युच्यते। न च शास्त्रं तत्प्रेरणायाः स्वमतप्रकाशनमात्रतो विशिष्टत्वे कथञ्चिदवैयर्थ्यमश्नुते। तदवैयर्थ्यं चावश्यकम्। अन्यथाऽव्यवस्थाप्रसङ्गात्। एतेनादिपदसङ्गृहीतं जगद्वैचित्र्यमपि तत्र कारणं व्याख्यातं वेदितव्यम्। नह्येवंविधायां प्रेरणायां जीवात्मनः कर्मसु स्वातन्त्र्यं कर्हिचिद्धीयते। "**तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्**" (ऋ० ३। ४। १०। १०) इत्यादिना च प्रतिदिनं सायं प्रातर्भगवतानुग्रहः प्रार्थयितव्यः प्रतिपाद्यते न भगवतः परब्रह्मणः परमेश्वरस्य कर्मण्यपि निरङ्कुशं जीवात्मप्रेरकत्वम्। यावन्ति वै कर्माणि लौकिकानि वैदिकानि वा विद्यन्ते तेषां किमपि कर्म तदनुग्रहं विना न निष्पद्यत इति स आस्तिकमात्रस्य सर्वत्रावश्यकः। यदा किलैष जीवात्मा शुद्धहृदयो भवन्नार्त्तेन मनोवृत्तेन भगवन्तं परब्रह्म परमेश्वरं सायं प्रातः प्रार्थयते तदाऽवश्यमेनमसौ वात्सल्यादनुगृह्णीते। नहि परमदयालोः सततस्यास्ति किञ्चिदनुपपन्नं नाम। तदनुग्रहफलं च निखिलदुरितनिवृत्तिः। यत्रेदमाम्नायते "**इन्द्रश्च मृडयाति नो न नः पश्चादघं नशत्। भद्रं भवाति नः पुरः**" (ऋ० २। ८। ९। ११) "**विश्वानि देव सवितर्दुरितानि परासुव। यद् भद्रं तन्न आसुव**" (ऋ० ४। ४। २५। ५) इति। सत्यां च तस्यां बुद्धिर्नितान्तनिर्मला सञ्जायते। तदा शुभमेव ध्यायति शुभमेवानुतिष्ठति शुभमेवानुविन्दति। तदिदमभिलक्ष्यैव प्रार्थ्यते—**धियो यो नः प्रचोदयात्**= निर्मली कुर्य्यादित्यर्थः। प्रार्थना च मानसं कर्म। तत्र च नियम्यः सन्नपि स्वतन्त्रो जीवात्मा पुरुषः कुर्य्यान्न वा कुर्य्यात्, न बलात् कार्य्यते, करुणया तत्र स्वमतं त्ववश्यं प्रकाश्यते। सैव कर्मणि प्रवृत्तस्य पारमेश्वरी प्रेरणा। तस्मात् स्वतन्त्रस्यापि तस्यास्ति तत्र कर्तृत्वं परायत्तमिति निरुपद्रवम् ॥ ४२ ॥

आत्मनः कर्तृत्वं परायत्तमित्युपपादितम् । सम्प्रति तस्य परेण सम्बन्ध उपपादयितव्यः । अन्यथा तदायत्तकर्तृत्वानुपपत्तेः । तमेवोपपादयिष्यन्नाह—

**"अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके" ॥ ४३ ॥**

आत्मेति प्रकृतम् । ब्रह्मण इति षष्ठ्या विपरिणम्याधिक्रियते । **अंशः**=जीवात्मा ब्रह्मणोंऽशः प्रतिपत्तव्यः, कुतः ? **नानाव्यपदेशात्**=नानात्वेन भेदेन निर्देशात्, **च**=तथाऽ**न्यथा**=अन्यप्रकारेणानानात्वेनाभेदेन व्यपदेशात्, **अपि**=अपि च **दाशकितवादित्वं**=दाशशब्द इह स्त्रीसामान्यपरः, दानगुणसामान्यात्, कितवशब्दः पुरुषसामान्यमभिधत्ते, विशेषेण सामान्यलक्षणात्, कितेन ज्ञानेन वाति गच्छति लौकिकवैदिकव्यवहारयोरिति वा तद्व्युत्पत्तेः, स्त्रीपुरुषादिभावं ब्रह्मणोऽ**धीयते**=पठन्त्ये**के**=श्वेताश्वतरा इत्यर्थः ।

यथा हि लोके खलु पितापुत्रयोरंशांशिभावः प्रतिपद्यते पुत्रोंऽशः पिता चांशी, तथा जीवब्रह्मणोरपि परस्परमंशांशिभावः प्रतिपत्तव्यो जीवात्मांऽशोंऽशी च परब्रह्म परमेश्वरः । तत्पितापुत्रभावस्यापि लोकवच्छास्त्रतोऽवगमात् । यज्ञदत्तविष्णुमित्रयोः पितापुत्रभावो यथा लोकतस्तावदवगम्यते तथा जीवात्मपरमात्मनोः पितापुत्रभावोऽपि शास्त्रतोऽवगम्यते । अस्ति तदवगमकं शास्त्रम् **"त्वं पिताऽसि नः"** ( ऋ० १ । २ । ३३ । १० ) **"त्वं हि नः पिता वसो !"** ( ऋ० ६ । ७ । २ । ११ ) **"यो नः पिता जनिता यो विधाता"** ( ऋ० ८ । ३ । १७ । ३ ) **उप नः सूनवो गिरः"** ( ऋ० ४ । ८ । १५ । ९ ) **"अर्चन्तु पुत्रकाः"** ( ऋ० ६ । ५ । ६ । ८ ) इत्येवञ्जातीयकम् । अवगम्यमाने च तस्मिन् स्वस्वामिभावः, नियम्यनियामकभावः, ईशित्रेशितव्यभावस्तत्सम्बन्धोऽपि भवत्यवगतः । अनर्थान्तरत्वात् । नहि पितापुत्रभावतः स्वस्वामिभावादिः सम्बन्धोऽ-

र्मान्तरतां भजते । पुत्रस्य स्वत्वादिवत् पितुः स्वामित्वादेरपि सुप्रत्यक्षत्वात् । अंशत्वं च ब्रह्म प्रति जीवात्मनो न तावदारम्भकत्वमित्यभिप्रेयते । तस्य जीवात्मवदनादित्वेनारम्भासम्भवात् । नापि खण्डत्वम् । निरवयवत्वेन खण्डानर्हत्वात् । नापि समुदायित्वम् । समुदायस्य समुदाय्यनन्यत्वेन तद्गतसुखदुःखोपभोगप्रसङ्गात् । नापि सदृशत्वे सति न्यूनत्वम् । स्थूलपटं इति सूक्ष्मपटस्याप्यंशत्वापातात् । किं तर्हि ? सजातीयत्वे सति कदाचिदविभक्तत्वम् । तच्च लौकिके पुत्रे यज्ञदत्तादिचेतने यथा वेविद्यते तथा शास्त्रीये जीवात्मनि पुत्रेऽपि वरीवृत्यते । यदि खलु लौकिके यज्ञदत्तादिपुत्रे चेतने विष्णुमित्रादिपितुश्चेतनस्यांशव्यवहारः सर्वसाक्षिकः । को नु नाम यज्ञदत्तो विष्णुमित्रस्यांश इति न व्यवहरति । विद्यते च तस्य तत्र रेतःसेचनतः पूर्वमविभक्तत्वं सजातीयत्वं च चेतनत्वादिति लक्षणसमन्वयः । एवं जीवात्मन्यपि तत्समन्वयो द्रष्टव्यः । यत्कारणमेषोऽपि प्रलयवेलायां ब्रह्मण्यविभागेनावतिष्ठते साजात्यं च चेतनत्वादवलम्बते । तत्राविभक्तत्वं च लक्षणानन्यत्वमित्यसकृदवोचाम । "**यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति, एवमेवास्मादात्मनः सर्वाणि भूतानि व्युच्चरन्ति**" ( बृ० २ । १ । २० ) इत्यादिना च सुषुप्तौ ब्रह्मण्यविभागं गतानां जीवात्मनां आप्रति ततो विभागे दृष्टान्तमात्रमुच्यते कथमविभक्ताः सन्तः, पुनस्ततो विभज्यन्त इत्येतावन्मात्रं प्रदर्शयितुं न तु जीवब्रह्मणोरग्निविस्फुलिङ्गवदस्ति परस्परमंशांशिभाव इति दर्शयितुम् । ब्रह्मणो निरंशत्वेन तथाविधांशासम्भवात् । नहि निरवयवस्य सतो भगवतस्तस्य जीवात्मा तथाविधोंऽशः सम्भवति यथाऽग्नेर्विस्फुलिङ्गः । अन्यथा प्राणादयोऽपि तदंशाः सम्भवेयुः । यथा हि सुषुप्तौ खलु ब्रह्मण्यविभागं प्राप्तानां जीवात्मनां आप्रति ततो व्युच्चरणं श्रुत्या प्रतिपाद्यते तथा प्राणादीनां व्युच्चरणमपि प्रणिगद्यते "**सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः**" ( बृ० २ । १ । २० ) इति । न च प्राणादयोऽग्नेर्विस्फुलिङ्गा इव ब्रह्मणोऽंशाः कथञ्चित् सम्भवन्ति । प्राकृतत्वादचेतना हि ते न जीवात्मान इव

चेतनाः । अविभागं गतानां विभागमात्रे दृष्टान्तानुसरणे च नायं दोषः प्रसज्यत इति युक्तः पितापुत्रवदेव जीवब्रह्मणोः परस्परमंशांशिभावो नाग्निविस्फुलिङ्गवत् । **"यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद् विविधाः सोम्य! भावाः प्रजायन्ते तत्र चैवापियन्ति"** (मुं० २ । १ । १) इति श्रुतिश्चाग्निविस्फुलिङ्गोदाहरणेनाक्षरशब्दवाच्यायाः प्रकृतेर्विश्वोत्पादं दर्शयति न भगवतो ब्रह्मण इति पुरस्तादुक्तमस्माभिर्न विस्मर्तव्यम् । अथ कुतोऽवगम्यते जीवब्रह्मणोः पितापुत्रवदंशांशिभाव इति । भेदाभेदव्यपदेशादिति ब्रूमः । श्रुतिः खलु जीवात्मानं ब्रह्मणो भेदेनाभेदेन चोभयथा व्यपदिशति **"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति"** (मुं० ३ । १ । १) इत्यादिका भेदेन **"यस्मिन् सर्वाणि भूतान्यात्मैवाभूद् विजानतः"** (ईशा० ७) इत्यादिका चाभेदेन । तमेव द्रढयन्तः श्वेताश्वतरशाखिनोऽपि स्त्रीपुरुषादिरूपत्वं तस्य साक्षादधीयते **"त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी । त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः"** (श्वे० ४ । ३) इति । वञ्चसि=गच्छसि । सोऽयं भेदाभेदव्यपदेशो जीवब्रह्मणोः पितापुत्रवदंशांशिभावावगमे हेतुरिति विज्ञायते । पितापुत्रात्मनोर्ह्यन्योऽन्याभावलक्षणो भेदः कादाचित्काविभागलक्षणोऽभेदश्च दृश्यते । यत्रैतच्छ्रुतं भवति **"पुरुषे ह वा अयमादितो गर्भो भवति यदेतद् रेतः"** (ऐ० २ । १) इत्यारभ्य **"सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते । अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति"** (ऐ० २ । १) इति । तत्सामान्येन जीवब्रह्मणोरपि तल्लक्षण एव भेदोऽभेदश्चाभ्युपेयते । अन्यथा दृष्टवैपरीत्यापत्तेः । न च दृष्टवैपरीत्यं सह्यते । अन्योऽन्याभावलक्षणो भेदश्च कादाचित्काविभागलक्षणेनाभेदेन न जातु विरुध्यत इति वक्तुं शक्यते ।

पितापुत्रयोरिव क्षीरनीरयोः सरित्समुद्रयोश्च तदविरोधस्य दृष्टत्वात्। तथा च पितापुत्रयोरंशांशिभावनिबन्धनो यथा भेदाभेदव्यपदेशस्तथा जीवब्रह्मणोरपि तन्निबन्धन एव स आस्थातव्य इति युक्तमुत्पश्यामः।

**"यस्मिन् सर्वाणि भूतान्यात्मैवाभूद् विजानतः"** (ईशा० ७) इत्यत्राविभागलक्षणोऽभेदः प्रव्यक्तः। नाखण्डाभेदवादेऽवधारणप्रयुक्तिः कथञ्चित् सङ्गच्छते। यदपि श्वेताश्वतरशाखिनोऽभेदं द्रढयन्तः स्त्रीपुरुषादिरूपत्वं ब्रह्मणोऽधीयते तदप्यविभागलक्षणाभेदाभिप्रायं मन्तव्यं नाखण्डाभेदाभिप्रायम्। तस्य श्रुतिस्मृतियुक्तिभिर्बाधितत्वेनाङ्गीकर्तुमशक्यत्वात्। अकस्माद् ब्रह्मणो जीवात्मभावानुपपत्तेश्च। विद्यते तत्कारणमविद्येति तु रिक्तं वचः। प्रकाशात्मके भगवति तस्मिन्नविद्यातमोऽवस्थानानुपपत्तेः। किमिदं चित्रमिव लोकसे, वेदोपनिषत्सु कुत्राप्यखण्डाभेदो न प्रतिपाद्यते। यत्रापि **"यदा प्रैष्यन् मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति, स पुत्रः प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोक इति"** (बृ० १।५।१७) इत्यादौ कश्चिदभेदः प्रतिपाद्यमानो निरीक्ष्यते, तत्रापि नाखण्डाभेदः सेद्धुमर्हति। चेतनाचेतनयोरखण्डाभेदासम्भवात्। चेतनः पुत्रात्मा, ब्रह्मादयश्चाचेतना इति विस्पष्टम्। साध्यसाधनभावप्रयुक्तोऽत्राभेद इति चेदास्थीयते तदाऽन्यत्रापि कादाचित्काविभागप्रयुक्तः स आस्थातव्यः। अविशेषात्। न च श्रुतेर्भेदगोचरत्वेनानुवादकत्वापत्त्या प्रामाण्यं न स्यादिति सम्यगुच्यते। अखण्डाभेदगोचरत्वेऽपि प्रामाण्याभावस्य वक्तुं शक्यत्वात्। श्रुतिस्मृतियुक्तिभिर्बाधितो ह्यखण्डाभेद इति शास्त्रपरिश्रमिभिः सहर्षमनुमन्यते। न च बाधितं तं गोचरयन्ती श्रुतिः कर्हिचित् प्रामाण्यमश्नोतुमर्हति। यादृक्षो जीवब्रह्मणोर्भेदस्तत्सम्बन्धश्च श्रुत्या गोचरीक्रियते न तादृक्षः प्रत्यक्षादिभिः प्रमाणैरिति न सा कालत्रयेऽप्यनुवादिका प्रसज्यते। प्रयोजनं चासंसारं सांसारिकैश्वर्य्यावाप्तिरूर्ध्वं च परमपरमेश्वरावाप्तिरिति भेदवादेऽपि न केनचिन्निवार्य्यते। पुरुषकारसाध्यं चैतद्विति प्रयोजनविदो मन्यन्ते। पुरुषकारश्च भेदे सत्येवाभिनिष्पद्यते

लभते नाखण्डाभेद इति भेद एव ज्यायान् । स चान्योऽन्याभावात्मकस्तथाऽखण्डाभेदेनैव विरुध्यते नाविभागलक्षणेन तेन । भवति च जीवब्रह्मणोस्तदुभयव्यपदेशः । तस्मादवगम्यते नूनं जीवात्मा ब्रह्मणोंऽशो यथा पितुः पुत्रः ॥ ४३ ॥

अत्रैव हेत्वन्तरमाह—

"मन्त्रवर्णाच्च" ॥ ४४ ॥

अंश इत्यनुवर्तते । पूर्वत्रैवायं हेतुरिति चार्थः । **मन्त्रवर्णात्**=वेदमन्त्राज्जीवात्मा ब्रह्मणोंऽशोऽवगम्यत इत्यर्थः ।

अस्ति खलु मन्त्रवर्णः **"एतावानस्य महिमाऽतो ज्यायाँश्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि"** (ऋ० ८ । ४ । १७ । ३ ) इति । तत्र जीवात्मप्रधानानि स्थावरजङ्गमानि सर्वाणि भूतानि परब्रह्मणः परमेश्वरस्य पादो व्यक्तमाम्नायन्ते । न च तेषां ब्रह्मांशत्वाभावे तत्पादत्वेनाम्नानं युज्यते । पादो भागोंऽश इति ह्यनर्थान्तरम् । मुख्योंऽशश्च निरंशस्य भगवतस्तस्य न कथञ्चिदुपपद्यते । तस्मादंश इवांशस्तस्य जीवात्मेति युक्तमवगम्यते ॥ ४४ ॥

अत्रैव स्मृतिं प्रमाणयति—

"अपि च स्मर्यते" ॥ ४५ ॥

अंश इत्यनुवर्तते । प्रमाणान्तरमेतदिति चार्थः । पूर्वेणास्यैकत्रार्थे समुच्चय इत्यपेरर्थः । **स्मर्यते**=जीवात्मा ब्रह्मणोंऽशो गीतायामधीयत इत्यर्थः ।

यथा हि मन्त्रवर्णात् खलु जीवात्मा ब्रह्मणोंऽशोऽवगम्यते तथा स्मृतेरपि प्रतिपद्यते । भवति तावदस्मिन्नर्थे स्मृतिः **"ममैवांशो जीवलोके जीवभूतः सनातनः"** (गी० १५ । ७ ) इति । तस्माद् ब्रह्मणोंऽशो जीवात्मेति साधुरयमवगमः ॥ ४५ ॥

ननु जीवात्मा चेद् ब्रह्मणः परमेश्वरस्यांशोऽभ्युपगम्येत तदा सोऽपि जीवात्मवत् क्लेशकर्मविपाकाशयैः परामृश्येत । तत्र तद्भेदस्येव तदभेदस्यापि सद्भावादिति । अस्योत्तरं पठति—

**"प्रकाशादिवन्नैवं परः ॥ ४६ ॥**

अंश इत्यनुवर्तते। **एवं**=यथांऽशो जीवात्मा क्लेशकर्मविपाकाशयैः परामृश्यते तथा **परः**=परब्रह्म परमेश्वरो **न**=न परामृश्यते, **प्रकाशादिवत्**=प्रकाशात्मकत्वात् प्रकाशः सूर्य्यः, आदिनाऽऽकाशादयो गृह्यन्ते, सूर्य्यादिवदित्यर्थः।

यथा हि सूर्य्याकाशवाय्वादयोंऽशिनः खलु चक्षुःश्रोत्रस्पर्शनादीनां स्वांशानामुपघातादिभिर्दोषैः परामृष्टत्वेऽपि न परामृश्यन्ते तथा परब्रह्म परमेश्वरोऽपि स्वांशस्य जीवात्मनः क्लेशकर्मविपाकाशयैः परामृष्टत्वेऽपि न परामष्टुमर्हति। नहि कथञ्चिदभेदो भवति परस्परं दोषपरामर्शस्य कारणम्। सूर्य्यादीनां च चक्षुरादयोंऽशाः **"अग्निर्वाग् भूत्वा मुखं प्राविशत्, वायुः प्राणो भूत्वा नासिके प्राविशत्, आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्, दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्"** (ऐ० २।४) **"सूर्य्यं चक्षुर्गच्छतु वातमात्मा"** (ऋ० ७।६।२०।३) **"देवाश्च सर्वे प्रतिदेवतासु"** (मुं० ३।२।७) **"अग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्"** (बृ० ३।२।१३) इत्याद्युत्पत्तिप्रलयश्रुतिभ्यः स्फुटं प्रतिपद्यन्ते। तस्मान्न किञ्चिदेतत् ॥ ४६ ॥

अत्र प्रमाणमुपन्यस्यति–

**"स्मरन्ति च" ॥ ४७ ॥**

नैवं पर इत्यनुवर्तते। पूर्वत्रैवैष प्रमाणोपन्यास इति चार्थः। **स्मरन्ति**=तदिदमुपलक्षणं समामनन्ति चेत्यपि द्रष्टव्यम्, नैवं पर इति स्मरन्ति योगाः, समामनन्ति चौपनिषदा इत्यर्थः।

जीवात्मा खलु क्लेशकर्मविपाकाशयैः परामृश्यते न पर इत्येतत्र स्मरन्ति योगास्तल्लक्षणमाचक्षाणाः **"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः"** (यो० १।२४) इति। समामनन्ति चौपनिषदाः सोदाहरणम् **"सूर्य्यो यथा सर्वलोकस्य चक्षुर्न**

**लिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः"** ( कठ० ५ । ११ ) इति। तस्मादंशांशिभावेऽपि न जीवात्मवद् ब्रह्मेति गम्यते ॥ ४७ ॥

**ननु** मा भूज्जीवात्मवद् ब्रह्म, जीवात्मा ब्रह्मवद् भवेत्। अंशांशिनोः सारूप्यस्यौचित्यात्। नहि वैरूप्ये भवत्यंशांशिभावोऽवकल्पते। अंशिनः परब्रह्मणः परमेश्वरस्य च विधिनिषेधौ न स्त इति तदंशस्य जीवात्मनोऽपि न स्याताम्। अविशेषात्। अन्यथा वैरूप्यापत्तेः। तथा च कृतं विधिनिषेधशास्त्रेणेति। अस्योत्तरं पठति—

**"अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्" ॥ ४८ ॥**

अंशस्येति षष्ठ्या विपरिणम्यानुवर्तते। **अनुज्ञापरिहारौ**=विधिनिषेधौ **देहसम्बन्धात्**=शरीरयोगादंशस्य जीवात्मनोऽवगन्तव्यौ, **ज्योतिरादिवत्**=ज्योतिरग्निः, पयःप्रभृतिरादिना गृह्यते, यथा ज्योतिरादेरनुज्ञापरिहारौ देशविशेषसम्बन्धादित्यर्थः।

अस्ति तावद् यथा ब्रह्म तथा जीवात्मा। न च तत्रानन्दादृते किञ्चिदूनत्वं वर्तते। **"स्वाध्यायोऽध्येतव्यः"** ( शत० २ । २ । २ । १८ ) **"अग्निहोत्रं होतव्यम्"** ( शत० २ । २ २ । १८ ) **"सत्यं वद, धर्मं चर"** ( तै० १ । ११ ) **"अर्चत प्रार्चत"** ( ऋ० ६ । ५ । ६ । ८ ) **"कृषिमित् कृषस्व"** ( ऋ० ७ । ८ । ५ । १३ ) **"सङ्गच्छध्वं संवदध्वम्"** ( ऋ० ८ । ८ । ४९ । २ ) **"स्वाध्यायान्मा प्रमदः, प्रजातन्तुं मा व्यवच्छेत्सीः"** ( तै० १ । ११ ) **"गां मा हिंसीः"** ( यजु० १३ । ४३ ) **"अविं मा हिंसीः"** ( यजु० १३ । ४४ ) **"अक्षैर्मा दीव्यः"** ( ऋ० ७ । ८ । ५ । १६ ) **"यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि"** ( तै० १ । ११ ) इत्यादिकावनुज्ञापरिहारौ च तस्य देहसम्बन्धाद् भवतो न स्वरूपतः। नह्यसौ स्वरूपेण ब्रह्मवत् कर्हिचिदनुज्ञापरिहारगोचरतामर्हति। यथा हि ज्योतिरादिः सङ्गु

स्वरूपतोऽनुज्ञापरिहारागोचरः सन्नपि देशविशेषसम्बन्धादनुज्ञापरिहारगोचरो जायते तथा जीवात्माऽपि स्वरूपेण तदगोचरः सन् देहसम्बन्धाद् भवति तद्गोचर इत्यधिगन्तव्यम् । देहसम्बन्धश्च तस्य तावदनुवर्तते यावद् ब्रह्मदर्शनमुपसम्पद्य न विमुच्यते तदुपरिष्टाच्चोपरमते । देहशब्देन च स्थूलं सूक्ष्ममुभयविधं शरीरमभिप्रेयते, तत्सम्बन्धपर्य्यन्तमेव च सर्वमनुज्ञापरिहारशास्त्रमिति वैदिकरहस्यम् । तस्माद् ब्रह्मवदेव जीवात्मेति निरवद्यम् ॥ ४८ ॥

ननु यस्य देहसम्बन्धो वर्तते स कथं ब्रह्मवद् भवेत् । नहि भगवतो ब्रह्मणः कालत्रयेऽप्यस्ति देहसम्बन्ध इति । अस्योत्तरमाह—

"असन्ततेश्चाव्यतिकरः" ॥ ४९ ॥

अंश इत्यनुवर्तते । चस्त्वर्थः शङ्कामपाकुरुते अव्यतिकरः=न विद्यते व्यतिकरो व्यतिषङ्गो देहेन विकारहेतुसम्बन्धो यस्य स तथा ब्रह्मांशो जीवात्मा वेदितव्यः, कुतः? असन्ततेः=सन्ततिः कार्य्यं विकार इति यावत्, अविकारित्वादित्यर्थः ।

सत्यं जीवात्मनो देहेन सम्बन्धो विद्यते तथापि स तस्य विकारहेतुर्न वर्तते । अविकारित्वात् । यदि हि जीवात्मा खलु विकारी विद्येत तदाऽवश्यं देहसम्बन्धाद् विक्रियेत, विक्रियमाणश्च न ब्रह्मवद् भवेत् । न च जीवात्माऽस्ति विकारी । यत्कारणं स कूटस्थनित्योऽभ्युपेयते । विकारी च परिणामिनित्यो भवति न कूटस्थनित्यः । न चाविकारिणस्तस्य देहसम्बन्धे सत्यप्यस्ति देहसम्बन्धः । विकारहेतुसम्बन्धस्यैव सम्बन्धपदार्थत्वाभ्युपगमात् । यस्तु ततोऽन्यः स सम्बन्धकल्पो न सम्बन्ध इति स्थितिः । सोऽयं द्विविधो मिथ्याज्ञानपूर्वकोऽतत्पूर्वकश्च । तत्र जीवात्मभिः सकार्य्यया प्रकृत्या च परब्रह्मणः परमेश्वरस्यातत्पूर्वकः, शरीरेण बुद्ध्यादिना सङ्घातेन च जीवात्मनो मिथ्याज्ञानपूर्वकः । मिथ्याज्ञानादेव होष प्राकृतं सङ्घातमिमं स्वीयं मन्यते सकले विकले च तस्मिन्नात्मानं सकलं विकलं चानुयोभवते । सङ्घो

दुरवगाहं बत मिथ्याज्ञानमाहात्म्यं येन वस्तुतस्तत्तादात्म्यमप्राप्तोऽप्यात्मा तादात्म्यं प्राप्त इवासकलोऽविकलोऽपि च सकलो विकल इवानुबोभूय्यते । नहि मिथ्याज्ञानतोऽन्येन केनचिदेवमनुभवितुं पार्य्यते । असङ्गत्वात् । असङ्गो ह्ययमात्मा **"असङ्गो ह्ययं पुरुषः"** ( बृ० ४ । ३ । १५ ) इतिश्रुतेः । असङ्गस्य चैवमनुभवो मिथ्याज्ञानादेवोपपद्यते नान्यस्मात् कुतश्चन । यथा हि मिथ्याज्ञानमाहात्म्यादसङ्गेऽप्याकाशे खलु तलमलिनतादिसङ्गं बाला अध्यवस्यन्ति तथा तन्माहात्म्यादेवासङ्गे जीवात्मन्यपि तत्तद्विकारसङ्गमधियन्त्यविवेकिनो मूढा इति विश्वसितव्यम् । मिथ्याज्ञानपूर्वकत्वं च सम्बन्धस्यास्य स्मर्य्यते दर्शनान्तरे **"तस्य हेतुरविद्या"** ( यो० २ । २४ ) इति । **"तद्योगोऽप्यविवेकान्न समानत्वम्"** ( सां० १ । ५५ ) इति च । अविवेकोऽविद्या मिथ्याज्ञानं चेत्यनर्थान्तरम् । न च मिथ्याज्ञानपूर्वकेण तेनात्मा कालत्रयेऽपि संस्प्रष्टुं शक्यते असङ्गस्य संस्पर्शासम्भवात् । अत एवोक्तं दर्शनान्तरे **"निर्गुणत्वमात्मनोऽसङ्गत्वादिश्रुतेः"** ( सां० ६ । १० ) इति । तस्मात् सत्यपि देहसम्बन्धे विकाराहेतुत्वाद् भवति जीवात्मा ब्रह्मवत् ॥ ४९ ॥

**ननु** देहसम्बन्धः सन्नपि जीवात्मनो विकारहेतुर्न विद्यत इति नानुमन्यामहे । तद्धेतुकस्य ज्ञानेच्छाधर्माधर्मसुखदुःखोत्क्रान्तिगत्यागत्यादिलक्षणस्य विकारस्य प्रत्यक्षमुपलम्भादिति । अस्योत्तरं पठति—

**"आभास एव च" ॥ ५० ॥**

अंशस्येति षष्ठ्या विपरिणम्य देहसम्बन्धादिति च मण्डूकप्लुत्याऽनुवर्त्तते । चस्त्वर्थः शङ्कां व्यावर्तयति । **आभास एव**=विकारेऽनाभासत्वयोगोऽवधारणेन व्यवच्छिद्यते, देहसम्बन्धादुपलभ्यमानोंऽशस्यात्मनो ज्ञानेच्छाधर्माधर्मादिलक्षणो विकारो विकाराभासो मन्तव्य इत्यर्थः ।

योऽयं ज्ञानेच्छाधर्माधर्मसुखदुःखोत्क्रान्तिगत्यागत्यादिलक्षणो विकारः खलु शरीरसम्बन्धाद् ब्रह्मांशस्य जीवात्मनः प्रत्यक्षमुपलभ्यते स सर्वः

शरीरनायके मनोऽपरपर्य्याये बुद्धिसत्त्वे वर्तते न जीवात्मनि, तत्र केवलं तत्सन्निधानात् स्फटिके लौहित्यवदवभासते । यथा हि जवाकुसुमस्य धर्मः खलु लौहित्यं स्फटिकस्य धर्मोऽभवन्नपि जवाकुसुमसन्निधानात् स्फटिकधर्मवदाभासते तथा बुद्धिसत्त्वस्य धर्मो ज्ञानेच्छाधर्माधर्मादि-र्जीवात्मनो धर्मोऽसन्नपि बुद्धिसत्त्वसन्निधानाज्जीवात्मधर्मवदाभासते । ज्ञाने-च्छाधर्माधर्मादीनां बुद्धिसत्त्वधर्मत्वं च श्रुतिस्मृतिभ्यां स्फुटमवगम्यते **"कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृति-र्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव"** (बृ० १ । ५ । ३) **"अन्तःकरणधर्मत्वं धर्मादीनाम्"** (सां० ५ । २५) इति । ज्ञानेच्छादयो ह्युत्पादविनाशशीलत्वाद् विकाराः । ते विकारिण एव धर्मा भवितुमर्हन्ति नाविकारिणः । नहि यः स्वप्नेऽपि विकारित्वं नापद्यते स कदाचिद् विकाराश्रयत्वं भजते । विकारि च बुद्धिसत्त्वं प्राकृतत्वादिति युक्तं तस्यैव तद्धर्मत्वं न जीवात्मनः । तस्य कूटस्थनित्यत्वेनाविकारि-त्वात् । मनोऽन्तःकरणं बुद्धिसत्त्वमिति चानर्थान्तरम् । यथा च ज्ञाने-च्छादयो विकारत्वादात्मनो धर्मा न भवन्ति तथोत्क्रान्त्यादयोऽपि न तद्धर्माः सम्भवन्ति । विकारत्वाविशेषात् । नहि क्रिया कदा-चिद् विकारत्वमतिक्रामति । सा भवति विकारो यथा गुणः । तदि-दमभिप्रेत्यैव श्रुत्या निष्क्रियत्वं जीवात्मनो निर्दिश्यते **"एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति । तमा-त्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्"** (श्वे० ६ । १२) इति । तत्र "एको वशी" इति परब्रह्मणः परमे-श्वरस्य "एकं बीजम्" इति प्रकृतेः "निष्क्रियाणां बहूनाम्" इति जीवा-त्मनो निर्देशः । बहूनां निष्क्रियाणां जीवात्मनां ये धीराः प्रकृतिमिमां पृष्ठतो विधाय तमात्मस्थं जगतः पितरं परब्रह्म परमेश्वरं हृदयधाम्नि साक्षात्कुर्वन्ति तेषामेव शाश्वतं कैवल्यं सुखमुपजायते नेतरेषामिति श्रुतिपदार्थः । उत्क्रान्त्यादयस्तु बुद्धिसत्त्वसहितस्यात्मनो भवन्ति न केव-लस्येति श्रुत्या स्वयं प्रतिपाद्यते **"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति,**

**प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति, सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति**" (बृ० ४ । ४ । २) इति । सविज्ञानः=विज्ञानं बुद्धिस्तत्सहितः । अन्ववक्रामति=गच्छति । बुद्धिसत्त्वमेव वृत्तिभेदेन मनश्चित्तं विज्ञानमित्यनेकधा तत्र तत्राभिलप्यते । अन्तःकरणमिति तु तस्साधारणं नामधेयम् । तत्संयोगनिबन्धन एव चात्मनि ज्ञानेच्छादीनां विकारवदाभासो न स्वरूपनिबन्धनः । तस्माद् यथा ब्रह्म तथैव जीवात्मेति सर्वं निर्दुष्टम् ॥ ५० ॥

अणुरयमात्मा कर्तृत्वादिभिः सह सविस्तरं निरधारि । सम्प्रति तस्य विभुत्वं निराकरणीयं सर्वथा प्रामाणिकत्वसम्पादनाय । तदेव निराकरिष्यन्नाह—

**"अदृष्टानियमात्"** ॥ ५१ ॥

आत्मेति प्रक्रियते । न विभुरिति हेतूपन्यासबलेन लभ्यते । अणौ तस्मिन्नदृष्टनियमस्य सिद्धेः । **अदृष्टानियमात्**=अदृष्टनियमाभावान्नात्मा विभुरुपपद्यत इत्यर्थः ।

नाना खलु जीवात्मानः । ते चेत् सर्वे व्यापका अभ्युपगम्येरन् तदाऽदृष्टनियमाभावात् सुखदुःखोपभोगसाङ्कर्य्यं दुर्निवार्य्यं प्रसज्येत । सुखदुःखोपभोगो हि सर्वोऽदृष्टनिबन्धन आस्थीयते । अन्यथाऽऽकस्मिकत्वापत्तेः । तत्साङ्कर्य्यं च न तावन्निवारयितुं शक्यते यावत्तत्कारणमदृष्टं न नियम्यते । कारणनियमाभावे कार्य्यनियमासम्भवात् । नहि कारणानियमे कार्य्यं नियन्तुं पार्य्यते । न च कारणस्यादृष्टस्य नियमो भवितुमर्हति । तस्य सर्वात्मसन्निधौ क्रियमाणत्वेन सर्वान् प्रत्यविशिष्टत्वात् । नहि यत् सर्वात्मसन्निधौ क्रियते तदेकस्य कस्यचिदात्मनो वक्तुमुत्सहते । नियमहेतोरभावात् ॥ ५१ ॥

नन्वभिसन्ध्यादितोऽदृष्टनियमो भविष्यति तत्पूर्वकत्वाददृष्टस्येति । अस्योत्तरमाह—

**"अभिसन्ध्यादिष्वपि चैवम्"** ॥ ५२ ॥

अपिना नियमाभावः समुच्चीयते। अवधारणे चो भिन्नक्रमः। **अभिसन्ध्यादिष्वपि**=रागद्वेषगर्भः सङ्कल्पोऽभिसन्धिः, आदिना प्रयत्नादिकं गृह्यते। सङ्कल्पादिष्वप्येवमेव=अदृष्टवदेव नियमाभावो द्रष्टव्य इत्यर्थः।

यथा हि सर्वात्मसन्निधौ क्रियमाणत्वाददृष्टे नियमो न विद्यतेऽस्यैतददृष्टं नास्येति, तथा तत्कारणभूतेष्वभिसन्ध्यादिष्वपि नियमो न विद्यते। सर्वात्मसन्निधौ क्रियमाणत्वस्य तत्राप्यविशेषात्। नाहमिदं प्राप्नुवानि परिहराणि चेदम्, इत्थं प्रयतैः करवाणि चेत्थमित्येवं सर्वात्मसन्निधौ क्रियमाणाः खल्वभिसन्ध्यादयोऽस्यैवैते वर्तन्ते नास्येति केनचिन्नियन्तुं शक्यन्ते। न च येषां स्वयं नियमो न वर्तते तेऽदृष्टं नियंस्यन्तीति कस्यचिद् बुद्धिसौधमध्यास्ते। स्वयं नियता हि परेषां नियमाय कल्पन्ते नानियताः॥ ५२॥

अत्राशङ्क्य निराचष्टे—

**"प्रदेशादिति चेन्नान्तर्भावात्"** ॥ ५३॥

अभिसन्ध्यादिष्वित्यनुवर्तते। नियम इति शङ्काबलाल्लभ्यते। **प्रदेशात्**=शरीरप्रदेशादभिसन्ध्यादिषु नियमः स्यादिति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः? **अन्तर्भावात्**=सर्वात्मनां शरीरान्तर्भावादित्यर्थः।

**अथोच्येत**—अभिसन्ध्यादयः खलु मनःसंयोगेनात्मनि जायन्ते। मनःसंयोगश्चात्मना शरीरे वर्तते नान्यत्र क्वचित्। शरीरं चास्ति प्रत्यात्मनियतम्। तस्य नियतत्वे च तत्प्रदेशे जीवात्मनि मनःसंयोगेन जायमाना अभिसन्ध्यादयोऽपि नियन्तुं शक्यन्ते। तन्नियमे च सुतरामदृष्टम्। तन्नियमे च सुतरां सुखदुःखोपभोगः, नास्ति काचिदनुपपत्तिरिति। **नैतद् वक्तव्यम्**। सर्वात्मनां शरीरान्तःसद्भावेनाभिसन्ध्यादिनियमानुपपत्तेः। यदि हि शरीरस्यान्तः खल्वेक एव जीवात्मा वर्तेत तदा तत्प्रदेशे तस्मिन् मनःसंयोगेन जायमाना अभिसन्ध्यादयोऽपि

नियम्येरन् । न च तस्यान्तरेक एव जीवात्मा वर्तते किन्तु यावन्तो जीवात्मानस्तावन्तः सर्वे । अन्यथा तेषां विभुत्वानुपपत्तेः । न च तद-न्तरविशेषेण वर्तमानत्वे तेषामस्यैवेदं शरीरं नास्येति नियन्तुं शक्यते । शरीरानियमे च तत्प्रदेशे जीवात्मनि मनःसंयोगेन जायमाना अभि-सन्ध्यादयोऽपि न नियन्तुं पार्य्यन्ते । तत्र मनःसंयोगस्य सर्वसाधारणत्वेन नियमहेतुत्वासिद्धेः । अन्यश्च नास्ति कश्चिन्नियमहेतुः । न च तदभावेऽ-भिसन्ध्यादीनां नियम उपपद्यते । तन्नियमानुपपत्तौ च तत्पूर्वकस्या-दृष्टस्य सुतरां नियमानुपपत्तिः । नहि कारणानियमे कार्य्यनियमः कथञ्चिदुपपादयितुं शक्यते । अदृष्टानियमे च ध्रुवः सुखदुःखोपभोग-साङ्कर्य्यप्रसङ्गः । तस्मान्नाना जीवात्मानस्ते च सर्वे व्यापका इत्ययुक्तं मतं वैदिकैरनादेयमणव इति चोपादेयम् ॥ ५३ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्माराम-भगवत्पादशिष्यहरिप्रसादवैदिकमुनिविरचितायां वेदान्तसूत्रवैदिकवृत्तौ द्वितीयाध्यायस्य तृतीयः पादः ॥**





# द्वितीयोऽध्यायः

## चतुर्थः पादः

तृतीये पादे वियदाद्युत्पत्तिगोचरः श्रुतिविरोधः पर्य्यहारि। चतुर्थेऽस्मिन्निन्द्रियाद्युत्पत्तिगोचरः स परिहरिष्यते। जीवात्मोपकरणत्वेनोपस्थितत्वात्। तमेव परिहरिष्यन्नतिदिशति—

**"तथा प्राणाः" ॥ १ ॥**

**तथा**=यथा ब्रह्मणो वियदादीनि महाभूतानि जायन्ते तथा **प्राणाः**=इन्द्रियाणि जायन्त इत्यर्थः।

इन्द्रियेषु संशयः किमिमानि ब्रह्मणो वियदादिवदुत्पद्यन्ते किंवा जीवात्मवन्नोत्पद्यन्त इति। तत्र नोत्पद्यन्त इति पूर्वः पक्षः, उत्पद्यन्त इति सिद्धान्तः। किं तावत्प्राप्तम्? नोत्पद्यन्त इति ब्रूमः। अश्रुतेः। उत्पत्तिविषया हि **"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः"** (तै० २। १) इत्यादिका श्रुतिस्तावदुदाह्रियते। तत्र च वियदादीनां स्थूलभूतानामेवोत्पत्तिः श्रूयते नेन्द्रियाणाम्। चेदिन्द्रियाण्यपि वियदादिवद् ब्रह्मणः सकाशादुत्पद्येरन् तदाऽवश्यं तदुत्पत्तिरपि श्रूयते। न च श्रुत्या केषाञ्चिदुत्पद्यमानानामुत्पत्तिः श्राव्यते न केषाञ्चिदिति धियमारोहति। नह्यविशेषेणोत्पद्यमानमात्रोत्पत्तिं श्रावयितुं प्रवृत्ता श्रुतिः कथञ्चिदेवमाचरितुमर्हति। श्रवणाभावे च न तदभ्युपायो युज्यते। सद्भावाम्नानाच्च। प्रलये तत्सद्भावः खल्वाम्नायते **"असद्वा इदमग्र आसीत्। तदाहुः किं तदसदासीदिति। ऋषयो वाव तेऽग्रेऽसदासीत्। तदाहुः के ते ऋषय इति। प्राणा वा ऋषयः"** (शत० ६। १। १। १) इति। नचेन्द्रियाणामुत्पत्तिमत्त्वे प्रलये तत्सद्भावः कर्हिचिदाम्नातुं शक्यते। नह्युत्पद्यते

न प्रलीयते चेति सम्भवति । जनिमतां प्रलयस्य ध्रौव्यात् । इन्द्रियाणां प्रलये सद्भावाम्नानं चापरोक्षम् । तस्मादिमानि जीवात्मवन्नोत्पद्यन्त इति युक्तं प्रतिपद्यामह इति । एवं प्राप्तेऽभिधीयते—**तथा प्राणाः** । सत्यं "**तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः**" (तै० २ । १ ) इत्यादिकायामुत्पत्तिश्रुतौ वियदादिवदिन्द्रियोत्पत्तिर्न श्रूयते तथापि श्रुत्यन्तरेषु श्रूयते "**सप्त प्राणाः प्रभवन्ति तस्मात्**" (मुं० २ । १ । ८) "**यथाऽग्नेर्ज्वलतः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्वे प्राणाः**" (बृ० २ । १ । २०) इत्यादिषु । न चैकत्राश्रवणमन्यत्र श्रवणं बाधते वारयितुं वा कदाचिदुत्सहते । यथा ह्येकत्र श्रवणं तथैवान्यत्र श्रवणम् । नहि सर्वमेकत्रैव श्रावयितव्यं नान्यत्रेति नियमः कश्चिद् विद्यते । न च "**तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः**" (तै० २ । १ ) इत्यादावप्यस्ति तदश्रवणम् । "**पृथिव्या ओषधय ओषधिभ्योऽन्नमन्नाद्रेतो रेतसः पुरुषः**" (तै० २ । १ ) इति पुरुषस्य शरीरस्योत्पत्त्या तदुत्पत्तेरर्थतः श्रावितत्वात् । नहीन्द्रियोत्पत्तिं विना शरीरोत्पत्तिरुपपद्यते । निरिन्द्रियस्य शरीरत्वासिद्धेः । सेन्द्रियस्य शरीरत्वं चास्ति सुप्रसिद्धम् । यत्रेदमुक्तं दर्शनान्तरे "**चेष्टेन्द्रियार्थाश्रयः शरीरम्**" (न्या० १ । १ । ११ ) इति । न चार्थिकोऽर्थः प्रामाण्यं नाश्नुत इति वक्तुं शक्यते । तत्प्रामाण्यस्य सर्वत्राभ्युपगमात् । अर्थापत्तिप्रमाणविषयो हि सः । अर्थापत्तिश्च सहर्षं प्रमाणं मन्यते वैदिकैरिति न तत्र कदापि भवत्यप्रामाण्यशङ्कावतारः । सा च दृष्टार्थापत्तिः श्रुतार्थापत्तिरिति भेदाद् द्वेधेत्यन्यत्र विस्तरः । यत्तु प्रागुत्पत्तेः प्रलयवेलायामिन्द्रियसद्भावाम्नानं तदवान्तरप्रलयापेक्षया द्रष्टव्यं न महाप्रलयापेक्षया । तदानीमिन्द्रियप्रलयस्याप्याम्नानात् "**देवाश्च सर्वे प्रतिदेवतासु**" (मुं० ३ । २ । ७) इति । अवान्तरप्रलये हि भूतभौतिकानि स्थूलकार्य्याणि प्रलीयन्ते महाप्रलये तु कार्य्यजातमिति विशेषः । इन्द्रियाणि च भूतभौतिकेभ्यो विशिष्यन्त इत्यनन्तरं स्वयं विज्ञापयिष्यते ।

प्राणशब्दश्च मुख्यप्राणवदिन्द्रियेष्वपि प्रयुज्यते प्राणवृत्तित्वात् **"अथ ह प्राणा अहंश्रेयसि व्यूदिरे 'अहं श्रेयानस्म्यहं श्रेयानस्मीति । ते ह प्राणाः प्रजापतिं पितरमेत्योचुः"** (छां० ५ । १ । ७) **"तस्मादेत एतेनाख्यायन्ते प्राणा इति"** (बृ० १ । ५ । २१) **"य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते"** (बृ० २ । १ । १७) इति । तस्माद् यथा वियदादीनि महाभूतानि ब्रह्मणः प्रजायन्ते तथा प्राणा इति युक्तमतिदिश्यते ॥ १ ॥

**ननु** नायमतिदेशो युज्यते तदुत्पत्तिश्रुतेर्गौणीत्वेन मुख्यत्वाभावादिति । अस्योत्तरं पठति—

**"गौण्यसम्भवात्"** ॥ २ ॥

तथा प्राणा इत्यनुवर्तते । **गौण्यसम्भवात्**=तदुत्पत्तिश्रुतेर्गौणीत्वासम्भवात् तथा प्राणा इत्यतिदेशो युज्यत इत्यर्थः ।

विधमाने खलु कस्मिँश्चिद् बाधके शब्दो मुख्यत्वं परित्यजति गौणत्वं च समाश्रयति । न चेह बाधकः कश्चिद् विद्यते येन तदुत्पत्तिश्रुतिरपि मुख्यत्वं परित्यजेद् गौणित्वं च समाश्रयेत् । विनाशश्चेन्द्रियाणां प्रत्यक्षमुपलभ्यते तेन तदुत्पत्तिरनुमातुं शक्यते । विनाशस्योत्पत्तिपूर्वकत्वनियमात् । न चैवमनुमानेनानुगृह्यमाना सा कदाचिद् गौणी सम्भवति मुख्या च न भवति । तस्माद् युक्तोऽयमतिदेशो नायुक्त इति विज्ञायते ॥ २ ॥

**ननु** किमिमे प्राणा आकाशादितः प्रागुत्पद्यन्ते किंवा तदनन्तरमिति । अस्योत्तरमाह—

**"तत्प्राक् श्रुतेश्च"** ॥ ३ ॥

प्राणा इत्यनुवर्तते । स्मृतेरिति चार्थः । **तत्प्राक्**=तेभ्यो वियदादिभ्यः पूर्वं प्राणा उत्पद्यन्ते, कुतोऽवगम्यते ? **श्रुतेश्च**=श्रुतेः स्मृतेश्चेत्यर्थः ।

श्रुतिस्मृती खलु वियदादितः पूर्वं महदहङ्कारमनोऽनन्तरं च प्राणानामुत्पत्तिं दर्शयतः **"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी"** (मुं० २ । १ । ३) **"सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात् पञ्च तन्मात्राण्युभयमिन्द्रियं तन्मात्रेभ्यः स्थूलभूतानि, पुरुष इति पञ्चविंशतिर्गणः"** (सां० १ । ६१) इति । ते च नः प्रमाणम् । यत्रेदं स्मर्य्यते **"श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः । इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम्"** (मनु० २ । ९) इति । **योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः । स साधुभिर्बहिष्कार्य्यो नास्तिको वेदनिन्दकः"** (मनु० २ । ११) इति च । तस्माद् वियदादिभूतेभ्यः प्राक् प्राणा उत्पद्यन्त इत्यवगम्यते ।

**"स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनः । अन्नमन्नाद् वीर्य्यं तपो मन्त्राः कर्म लोका लोकेषु च नाम च"** (प्र० ६ । ४) इत्यत्र च खादिशब्दा भूतसूक्ष्मपराः प्रयुज्यन्ते न स्थूलभूतपरा इति न किञ्चिद् विप्रतिषिध्यते ॥ ३ ॥

**ननु** वियदादिभूतेभ्यः प्रागिन्द्रियाणि चेदुत्पद्येरन् तदा **"तेजोमयी वाक्"** (छां० ६ । ५ । ४) इति वागिन्द्रियस्य तेजोमयत्वं नाम्नायेत । नहि श्रुतिषु परस्परं विरुद्धं किञ्चिदाम्नायते, प्राचीनस्य पराचीनमयत्वं वा कथञ्चिदुपपद्यत इति । अस्योत्तरमाह—

**"तत्पूर्वकत्वाद् वाचः" ॥ ४ ॥**

**वाचः**=वागिन्द्रियस्य तत्पूर्वकत्वात्=तदा बुद्धिस्थं तेजः परामृश्यते, कारणपरः पूर्वशब्दः, कार्य्यजननशक्त्यभिव्यक्तेस्तेजःकारणकत्वात् तन्मयत्वमाम्नायत इत्यर्थः ।

यथा हि प्राचीनस्यापि मनसः खलु कार्य्यजननशक्त्यभिव्यक्तेरन्ननिमित्तकत्वादन्नमयत्वं, प्राणस्य च तथाभूतस्य कार्य्यजननशक्त्यभिव्यक्तेरप्कारणकत्वादम्मयत्वमाम्नायते "**अन्नमयं हि सोम्य! मन आपोमयः प्राणः**" (छां० ६।५।४) इति, तथा प्राचीनस्यापि वागिन्द्रियस्य तेजोनिमित्तकत्वात् कार्य्यजननशक्त्यभिव्यक्तेस्तेजोमयत्वमाम्नायते "**तेजोमयी वाक्**" (छां० ६।५।४) इति। न च यस्य यन्निमित्ता कार्य्यजननशक्त्यभिव्यक्तिर्नियमेनोपजायते तस्य तत्कार्य्यत्वाम्नानं नोपपद्यते। कार्य्यजननशक्तिरेव ह्यर्थस्य सत्त्वमर्थतत्त्वविद आचक्षते। न च योऽर्थः सन्नपि कार्य्यजननशक्त्या हीयते स कदाचित् सन्निति व्यवह्रियते। वागिन्द्रियस्य च शब्दोच्चारणशक्तिर्नियमेन तेजसाऽभिव्यज्यते यथा मनःप्राणयोरन्नोदकाभ्यां स्वविषयगोचरसङ्कल्पादिकार्य्यजननशक्तिः। तदेव च तत्सत्त्वम्। नहि कार्य्यजननशक्त्यनभिव्यक्तौ काऽप्यर्थक्रिया स्वरूपं लभते। तदिदमभिप्रेत्यैव वाचस्तेजोमयत्वमाम्नायते न तज्जन्यत्वमभिप्रेत्य। तथा च नास्ति तत्र मात्रयाऽपि परस्परं श्रुतिविरोधः, नाप्यस्ति नाम किञ्चिदनुपपन्नम्। तस्माद् यथा वियदादीनि महाभूतानि ब्रह्मणः सकाशादुत्पद्यन्ते तथा प्राणा अपि प्रादुर्बोभूयन्त इति युक्तमतिदिश्यते॥ ४॥

वियदादिवत् प्राणानामिन्द्रियाणामुत्पत्तिर्निर्धारिता। सम्प्रति तत्संख्या निर्धारयिष्यते। तत्र पूर्वपक्षसूत्रम्—

"**सप्त गतेर्विशेषितत्वाच्च**" ॥ ५॥

प्राणा इत्यनुवर्तते। **सप्त**=प्राणाः सप्त भवन्ति, कुतोऽवगम्यते? **गतेः**=उत्क्रान्तेः, **विशेषितत्वाच्च**=विशेषणाच्चेत्यर्थः।

प्राणसंख्यायां संशयः किं ते सप्त स्युराहोस्विदेकादशेति। कुतः संशयः? श्रुतिविप्रतिपत्तेः। विप्रतिपद्यन्ते खल्वत्र श्रुतयः। क्वचिद् वाक् चक्षुर्घ्राणं रसनं श्रोत्रं मनस्त्वगिति सप्त प्राणाः श्राव्यन्ते "**सप्त प्राणाः प्रभवन्ति तस्मात्**" (मुं० २।१।८) इति। क्वचित्

घ्राणं वाग्रसनं चक्षुः श्रोत्रं मनो हस्तस्त्वगित्यष्टौ प्राणा ग्रहत्वेन बन्धकत्वेन गुणेन कीर्त्यन्ते **"अष्टौ ग्रहा अष्टावतिग्रहाः"** ( बृ० ३ । २ । १ ) इति । गन्धादयो विषया अतिग्रहाः । तेषां रागोत्पादनेन घ्राणाकर्षकत्वादतिग्रहत्वम् । क्वचिद् घ्राणादीनि ज्ञानेन्द्रियाणि पञ्च, वागादीनि कर्मेन्द्रियाणि पञ्च, मनश्चैकमित्येकादश प्राणा आम्नायन्ते **"दशेमे पुरुषे प्राणा आत्मैकादशः"** ( बृ० ३ । ९ । ४ ) इति । मन आत्मा, आप्नोति व्याप्नोति सर्वान् प्राणानधिष्ठानेनेति तद्व्युत्पत्तेः । आत्मतादात्म्याद्वा शरीरवत् । न चैवं श्रुतिविप्रतिपत्तौ सत्यां काचित् प्राणसंख्या निर्धारयितुं शक्यते । तत्र सप्त प्राणा इति पूर्वः पक्षः, एकादशेति सिद्धान्तः । किं तावत् प्राप्तम्? सप्तेति निगदामः । उत्क्रान्तेः । उत्क्रान्तिः खलु शरीरादात्मना सह सप्तानामेव चक्षुरादिप्राणानां श्रूयते **"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति"** ( बृ० ४ । ४ । २ ) इति । ननु सर्वशब्दोऽत्र पठ्यते न सप्तशब्दः, तत्कथं सप्तानामेवोत्क्रान्तिः श्रूयत इत्युच्यत-इति । सत्यं सर्वशब्द इह पठ्यते न सप्तशब्दः, तथापि स सप्तवचनः पठ्यते नाशेषवचन इति ब्रूमः । प्रकृतापेक्षत्वात् । यथा हि "सर्वे ब्राह्मणा भोजयितव्याः" इत्यत्र ये प्रकृता निमन्त्रिता ब्राह्मणास्तदपेक्षः सर्वशब्दः प्रयुज्यते तथेहापि यावन्तः प्राणाः प्रक्रियन्ते तदपेक्षः सर्वशब्दः प्रयुज्यते । प्रक्रियन्ते चात्र सप्तैव प्राणाः नाधिकाः । विशेषितत्वात् । चक्षुरादयस्त्वक्पर्य्यन्ताः खलु सप्तैव प्राणा अत्र विशेष्यन्ते **"स यत्रैष चाक्षुषः पुरुषः पराङ् पर्य्यावर्ततेऽथारूपज्ञो भवति । १ । एकी भवति न पश्यतीत्याहुः"** ( बृ० ४ । ४ । १-२ ) इत्यादिना । ये च विशेष्यन्ते त एवेह प्रकृता गम्यन्त इति युक्तस्तेषामेवोत्तरत्रापि परिग्रहः । यत्त्वष्टमं विज्ञानमप्यत्र विशेष्यते तन्मनोविज्ञानयोस्तत्त्वतोऽभेदेऽपि वृत्तिभेदाभिप्रायं द्रष्टव्यम् । ये च श्रुत्यन्तरेषु हस्तादयोऽधिकाः प्राणाः सङ्कीर्त्यन्ते तेषामुत्क्रान्त्यभावेनात्मनोऽल्पोपकार-

कत्वादौपचारिकत्वस्त प्राणव्यपदेश इति न ते ग्रहणमर्हन्ति। तस्मात् सप्तैव प्राणा इति युक्तं प्रतिपद्यामहे ॥ ५ ॥

सिद्धान्तसूत्रं पठति—

**"हस्तादयस्तु स्थितेऽतो नैवम्" ॥ ६ ॥**

प्राणाः, गतेरिति पदद्वयमनुवर्तते। तुशब्देन पूर्वः पक्षो व्यावर्त्यते। **स्थिते**=जीवात्मना शरीरादुत्क्रमणे प्राणसंख्यानियामके स्थिते **हस्तादयः**=पाणिपादपायुप्रभृतयश्चत्वारोऽपरे प्राणाः सन्तीति मन्तव्यम्, **गतेः**=उत्क्रान्तेः। **अतः**=अस्माद् हेतोरे**वं**=सप्तैव प्राणा इत्येवं **न**=मननं युक्तं नेत्यर्थः।

उत्क्रान्तेश्चेत् प्राणसंख्यानिर्धारणं युक्तं मन्यते तदा प्राणा एकादश मन्तव्या न सप्त। एकादशानामेवात्मना शरीरादुत्क्रान्तेः श्रवणात्। श्रूयते हि जीवात्मना सार्धं शरीरादेकादशानामेवोत्क्रान्तिः **"दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदाऽस्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति"** (बृ० ३। ९। ४) इति। तदपेक्ष्यैव च समानविषये श्रुत्यन्तरे सर्वशब्दः प्रयुज्यते **"तमुत्क्रान्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं च सर्वे प्राणा अनूत्क्रामन्ति"** (बृ० ४। ४। २) इति। एकत्र श्रुतस्यान्यत्रापेक्षाया औचित्यात्। अन्यथा श्रुतिविप्रतिषेधापत्तेः। चेदेका श्रुतिः सप्त प्राणान् श्रावयेदपरा चैकादश तदा नूनमुभे ते विप्रतिषिध्येयाताम्। न च श्रुतयः कदाचिद् विप्रतिषिध्यन्ते। ननु प्रकृतापेक्ष इह सर्वशब्दः प्रयुज्यते नोक्तश्रुत्यपेक्षः, प्रक्रियन्ते चात्र सप्तैव प्राणा विशेषितत्वादित्यवोचामेति। सत्यं भवानवोचत् तथापि न युक्तमवोचदिति मन्यामहे। प्रकरणेन श्रुतिसङ्कोचानुपपत्तेः। श्रुतिर्हि प्रकरणात् प्रबला भवति प्रकरणं च श्रुतेर्निर्बलम्। यत्रेदं स्मर्य्यते **"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्"** (मी० ३। ३। १४) इति। न च निर्बलेन तेन प्रबलायास्तस्याः सङ्कोच उपपद्यते।

प्रबलं हि सर्वदा सर्वत्र निर्बलं सङ्कोचयितुमर्हति. न निर्बलं कचित् कदाचित् प्रबलम् । अशेषवचनश्च सर्वशब्दः सर्वत्र प्रसिद्धः । अशेषाश्च प्राणा एकादशेति तद्वचन एवायमत्र प्रयुज्यते न सप्तवचन इति सम्यगालोचामहे । "सर्वे ब्राह्मणा भोजयितव्याः" इत्यत्रापि सर्वशब्दो भूमिमण्डलवर्तिनोऽशेषान् ब्राह्मणानभिधत्ते । अभिहितानां तेषां च भोजयितुमशक्यत्वात् प्रकृतनिमन्त्रितमात्रगोचरा तद्वृत्तिराश्रीयते । न चैवमिह किञ्चित् सङ्कोचकारणं विद्यते येन प्रयुज्यमानोऽसौ नाशेषान् प्राणानभिदधीत । विशेषितत्वं च भवति प्रदर्शनार्थमिति श्रुत्यन्तरबलादवगम्यते । यथा हि श्रुत्यन्तरे खलु चक्षुरादयः प्राणाः स्वविषयैः सह पठ्यन्ते तथा हस्तादयोऽप्याम्नायन्ते **"चक्षुश्च द्रष्टव्यं च"** ( प्र० ४ । ८ ) इत्यारभ्य **"हस्तौ चादातव्यं च, उपस्थश्चानन्दयितव्यं च, पायुश्च विसर्जयितव्यं च, पादौ च गन्तव्यं च"** ( प्र० ४ । ८ ) इति । न च समानश्रुतिसमाम्नातानां तेषां केषाञ्चित् परिग्रहोऽपरिग्रहश्च केषाञ्चिद् युज्यते । जीवात्मोपकारकत्वं च सर्वत्राविशिष्टमित्यशेषाणामेव तेषां प्राणत्वेन परिग्रहो न्याय्यः । यत्र पुनः **"अष्टौ ग्रहाः"** ( बृ० ३ । २ । १ ) इत्यादिश्रुत्यन्तरे ग्रहत्वेन प्राणानामष्टत्वमुपन्यस्यते तत्राप्यवशिष्टाः प्राणा उपसंहर्तव्याः । ग्रहत्वसामान्यात् । नहि यथा प्राणादयो जीवात्मनमा मुक्तेस्तावत् सक्तिहेतुत्वाद् गृह्णन्ति तथा पायूपस्थादयो न गृह्णन्ति । **"कः सप्त खानि विततर्द शीर्षणि कर्णाविमौ नासिके चक्षणी मुखम्"** ( अथर्व० १० । १ । २ । ६ ) इत्यादौ च प्राणाश्रयत्वाच्छीर्षाणि तच्छिद्राणि प्राणत्वेनाम्नायन्ते न प्राणा इति सर्वमनवद्यम् । तस्मादेकादशैव प्राणा न सप्त इति सिद्धान्तः ॥ ६ ॥

प्रसङ्गतः प्राणानामुत्पत्तिं प्रतिपाद्य तत्संख्या निरधारि । सम्प्रति भूतसूक्ष्माणामुत्पत्तिं प्रतिपिपादयिषुरतिदिशति—

**"अणवश्च"** ॥ ७ ॥

तथेति तत्प्रागिति च पदद्वयमनुषज्यते। अन्योऽयमतिदेश इति चार्थः। **अणवः**=यथा ब्रह्मणो वियदादिभ्यो महाभूतेभ्यः प्राक् प्राणा उत्पद्यन्ते तथाऽणवस्तन्मात्राणि भूतसूक्ष्माण्युत्पद्यन्त इत्यर्थः।

यथा हि प्राणाः खलु प्रश्नोपनिषदि सह विषयैराम्नायन्ते तथा वियदादीनि महाभूतानि तत्कारणं पञ्च तन्मात्राणि च भूतसूक्ष्माण्यपि सहोपन्यस्यन्ते **"पृथिवी च पृथिवीमात्रा च, आपश्चापोमात्रा च, तेजश्च तेजोमात्रा च, वायुश्च वायुमात्रा च, आकाशश्चाकाशमात्रा च"** (प्र० ४।८) इति। कार्य्यकारणयोश्च कार्य्यापेक्षया कारणेन पूर्वमुत्पत्तव्यम्। कार्य्यपूर्ववर्त्तिन एव कारणत्वनियमात्। कार्य्यं च वियदादीनि महाभूतानि पञ्च, कारणं च शब्दादीनि तन्मात्राणि भूतसूक्ष्माणि पञ्च। यत्रेवं स्मर्य्यते **"तन्मात्रेभ्यः स्थूलभूतानि"** (सां० १। ६१) इति। **"अण्व्यो मात्रा विनाशिन्यो दशार्धानां तु याः स्मृताः। ताभिः सार्धमिदं सर्वं सम्भवत्यनुपूर्वशः"** (मनु० १।२७) इति च। तस्माद् युक्तमतिदिश्यते यथा वियदादिभ्यो महाभूतेभ्यः प्राक् प्राणा उत्पद्यन्ते तथा तद्धेतवोऽणव इति॥ ७॥

सम्प्रति मुख्यप्राणोत्पत्तिं निर्धारयितुमतिदिशति—

**"श्रेष्ठश्च"** ॥ ८॥

तथेति तत्प्रागिति च पदद्वयमनुषज्यते। अतिदेशान्तरमेतदिति चार्थः। **श्रेष्ठः**=यथा ब्रह्मणो वियदादिभ्यो महाभूतेभ्यः प्राक् प्राणा उत्पद्यन्ते तथा श्रेष्ठो मुख्यः प्राण उत्पद्यत इत्यर्थः।

श्रेष्ठशब्दोऽत्र मुख्यप्राणपरः प्रयुज्यते **"प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च"** (छां०५।१।१) **"अयं वै नः श्रेष्ठः"** (बृ० १।५।२१) **"तान् वरिष्ठः प्राण उवाच"** (प्र० २।५) इत्यादिश्रुतिभ्यः। तदुत्पत्त्यनुत्पत्तिगोचरसंशयः—किमयं वियदादिवदुत्पद्यतेऽथवा नोत्पद्यत इति। तत्र नोत्पद्यत इति पूर्वः पक्षः, उत्पद्यत इति सिद्धान्तः। किं तावत्

प्राप्तम् ? नोत्पद्यत इति ब्रूमः । प्रलयेऽपि तद्व्यापारावगमात् । अस्ति खलु प्रलयपरो मन्त्रः **"न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः । आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास"** (ऋ० ८ । ७ । १७ । २) इति । तत्र "आनीत्" इति प्राणनाख्यः प्राणव्यापारोऽभिधीयते । 'अन्' प्राणने इति पाणिनिस्मरणात् । न च तदानीं प्राणाभावे तद्व्यापाराभिधानं युज्यते । अविद्यमाने व्यापारिणि व्यापारासिद्धेः । नहि व्याप्रियते न विद्यते चेति सम्भवति । न च यस्तत्र विद्यते स कर्हिचिदुत्पद्यत इति वक्तुं पार्य्यते । उत्पद्यमानस्य प्रलयावश्यम्भावात् । विद्यते च मुख्यः प्राणः । तस्मान्न स उत्पद्यत इति । एवं प्राप्तेऽभिधीयते—**"श्रेष्ठश्च"** । यथा ब्रह्मणः खलु वियदादिभ्यो महाभूतेभ्यः प्राक् तत्कारणानि शब्दतन्मात्रप्रभृतीनि भूतसूक्ष्माणि वाक्चक्षुरादयः प्राणाश्चोत्पद्यन्ते तथा मुख्यः प्राणोऽपि तस्मादुत्पद्यते । अस्ति प्राणवत् तदुत्पत्तिप्रतिपादिकाऽपि श्रुतिः **"आत्मन एष प्राणो जायते"** (प्र० ३ । ३) इति । **"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च"** (मुं० २ । १ । ३) इति च । श्रुतिश्च सर्वत्र नः प्रमाणम् । यस्तु मान्त्रवर्णिकस्तावद् "आनीत्" इति शब्दः, स प्रलये जगज्जन्मादिकारणस्य भगवतः परब्रह्मणः परमेश्वरस्य सद्भावमभिधत्ते न प्राणव्यापारसद्भावम् । तदानीं ब्रह्मैवैकं स्वधया=जगद्धर्भया प्रकृत्या प्राणिति न मृत्युप्रभृतिकं किञ्चिदन्यदिति तदभिप्रायः । प्राणनं च भगवतस्तस्य चैतन्यात्मकं विवक्ष्यते न प्राणात्मकम् । अवातमिति विशेषणात् । **"अप्राणो ह्यमनाः शुभ्रः"** (मुं० २ । १ । २) इति तत्प्रतिषेधाच्च । प्राणान्तरापेक्षया प्राधान्याच्छरीरे शुक्रनिषेककालमारभ्य वृत्तिलाभाच्च प्राणस्य ज्येष्ठत्वं शरीरधारणादिलक्षणगुणाधिक्याच्च श्रेष्ठत्वं **"न वै शक्ष्यामस्त्वदृते जीवितुम्"** (बृ० ६ । १ । १३) इत्यादिश्रुतेः ॥ ८ ॥

स किंस्वरूपः स्यादिति स्वरूपजिज्ञासायां पूर्वं तस्य पराभिमतं वायुतद्विकारत्वं तावत्प्रतिषेधति—

**"न वायुक्रिये पृथगुपदेशात्"** ॥ ९ ॥

श्रेष्ठ इत्यनुवर्तते । वायुक्रिये=क्रिया विक्रिया विकार इति यावद्, वायुश्च तद्विकारश्च **न**=श्रेष्ठो मुख्यः प्राणो न भवति, कुतः ? **पृथगुपदेशात्**=पृथक्त्वं भेदः, ततो भेदेनानुशासनादित्यर्थः ।

यदि हि मुख्यः प्राणः खलु वायुर्वा तद्विकारविशेषो वा विद्येत तदा न जातु श्रुत्या ततो भेदेनोपदिश्येत । नहि यद् यतो न भिद्यते तत्ततो भेदेनोपदेष्टुं शक्यते । श्रुतिश्च प्राणसृष्ट्यनन्तरं वायुसृष्टिं प्रतिपादयन्ती व्यक्तं वायुतद्विकाराभ्यां प्राणस्य भेदमुपदिशति **"स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः"** (प्र० ६ । ४) इति । **"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः"** (मुं० २ । १ । ३) इति च । वायुतद्विकारत्वे च वायुसृष्ट्यैव तत्सृष्टिरपि प्रतिपादिता स्यादिति पुनस्तत्प्रतिपादने व्यर्थप्रयासा सा प्रसज्येत । क्वचिद् वायुरिति व्यपदेशो वायुवत् प्रत्यक्षोपलम्भश्च शरीरोपगृहीतवायुक्रियाभेदहेतुतया वायुवत्सञ्चरणशीलत्वादुपपद्यते । यत्तु छान्दोग्योपनिषदि संवर्गविद्यायां **"वायुर्वाव संवर्गः प्राणो वाव संवर्गः"** (छां० ४ । ३ । २–३) इति वायुरधिदैवतं प्राणोऽध्यात्मं संवर्ग इत्युपदिश्यते । तत् संवर्गत्वधर्मसामान्याभिप्रायेण वेदितव्यं न वायुप्राणयोरैकात्म्याभिप्रायेण विकारविकारिभावाभिप्रायेण वा । यथा हि प्रलये खलु वायुरग्न्यादिकं सर्वमर्थजातं संवृङ्क्ते तथा सुषुप्तौ प्राणोऽपि चक्षुरादिकं सर्वमिन्द्रियगणं संवृङ्क्त इति समानमुभयत्र संवर्गत्वम् । तस्मान्न वायुर्नापि तद्विकारविशेषो मुख्यः प्राणः ॥ ९ ॥

**ननु** वायुस्तद्विकारविशेषो वा मा भूच्छ्रेष्ठः प्राणः, स्वतन्त्रं पदार्थान्तरं किञ्चिद् भविष्यति श्रेष्ठत्वाज्जीवात्मवदिति । अस्योत्तरं पठति—

**"चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः"** ॥ १० ॥

श्रेष्ठ इत्यनुवर्तते । तुशब्देन प्राणस्य जीवात्मवत् स्वातन्त्र्यं व्याव-

र्यते । **चक्षुरादिवत्**=यथा वाक्चक्षुरादयः प्राणा जीवात्मोपकरणविशेषास्तथा श्रेष्ठो मुख्यः प्राणोऽपि तदुपकरणविशेषोऽवगन्तव्यः, कुतः ? **तत्सहशिष्ट्यादिभ्यः**=शिष्टिः शासनम्, आदिना संहतत्वाचेतनत्वे गृह्येते, तैर्वाक्चक्षुरादिभिः प्राणैः सह शासनात् संहतत्वादचेतनत्वाचेत्यर्थः ।

सन्ति खलु प्राणसंवादिन्यो बह्व्यः श्रुतयः **"अथ ह प्राणा अहंश्रेयसि व्यूदिरे"** ( छां० ५ । १ । ६ ) इत्याद्याः । तत्र सर्वत्र वाक्चक्षुरादिभिः प्राणैः सहैव मुख्यः प्राणः शिष्यते । सहशासनं च समानधर्माणामेव युक्तं बृहद्रथन्तरादिवन्नासमानधर्माणाम् । नहि ये समानधर्माणो न भवन्ति ते कदाचित् सह शिष्यन्ते । जीवात्मोपकरणत्वं च समानधर्मत्वम् । यथा हि चक्षुरादयः प्राणाः खलु जीवात्मानं कर्तृत्वादिनिर्वाहकत्वेनोपकुर्वन्ति तथा मुख्यः प्राणोऽपि तं सर्वार्थसम्पादकत्वेनोपकुरुते । श्रेष्ठत्वं च मुख्यप्राणस्य मन्त्रिवद्राजानं जीवात्मानमपेक्ष्य नैयोगिकेषु चक्षुरादिषु प्राणेषु वर्तते न राजनि तस्मिन् । नह्येकत्र श्रेष्ठो भवति सर्वत्र श्रेष्ठः । जीवात्मोपकरणत्वेन तच्छेषत्वं च तस्य वाक्चक्षुरादिवत् सुव्यक्तम् । यत्रेदं स्मर्यते **"पुरुषार्थं करणोद्भवोऽप्यदृष्टोल्लासात्"** ( सां० २ । ३६ ) इति । एतेन संहतत्वाचेतनत्वाभ्यामपि तस्य शय्यासनादिवत् तदुपकरणत्वं समर्थितं वेदितव्यम् । तस्माच्छ्रेष्ठोऽपि वाक्चक्षुरादिवज्जीवात्मोपकरणविशेष एव भवति न स्वतन्त्रं किञ्चित् पदार्थान्तरम् ॥ १० ॥

ननु चक्षुरादीनां कार्य्यं तत्तद्विषयपरिच्छेदलक्षणमुपलभ्यते मुख्यप्राणस्य न तदुपलभामहे । तदुपलम्भाभावे च कथं स जीवात्मनश्चक्षुरादिवदुपकरणविशेषोऽनुमन्येत । नहि यस्य चक्षुरादिवत् कार्य्यं किञ्चन नोपलभ्यते स चक्षुरादिवदुपकरणविशेषः कथञ्चिदनुमन्तुं शक्यत इति । अस्योत्तरमाह—

**"अकरणत्वाच न दोषस्तथाहि दर्शयति"** ॥ ११ ॥

श्रेष्ठस्येति षष्ठ्या विपरिणम्यानुवर्तते। चस्त्वर्थः शङ्कां व्यावर्तयति। **दोषः**=श्रेष्ठस्य मुख्यप्राणस्य तत्तद्विषयपरिच्छेदलक्षणकार्य्याभावो दोषो **न**=न भवति, कुतः? **अकरणत्वात्**=अनिन्द्रियत्वात्। **तथाहि**=यथा तस्याकरणत्वं तथैव **दर्शयति**=जीवात्मोपकरणत्वसमर्थकं कार्य्यान्तरं प्रतिपादयन्ती श्रुतिर्दर्शयतीत्यर्थः।

यदि हि मुख्यः प्राणः खलु करणं भवेत् तदा चक्षुरादिवदवश्यं तस्य तत्तद्विषयपरिच्छेदलक्षणं कार्य्यं किञ्चिदुपलभ्येत। न चास्ति मुख्यः प्राणः करणम्। तस्य करणत्वाभावे च तत्तद्विषयपरिच्छेदलक्षणकार्य्याभावो दोषो न भवति। करणस्यैव विषयपरिच्छेदकत्वनियमात्। चक्षुरादिवदुपकरणविशेषत्वं च तस्य कार्य्यान्तरादुपपद्यते। चक्षुरादीनि हि करणानि तत्तद्विषयं परिच्छिन्दन्ति जीवात्मोपकरणतामुपयन्ति मुख्यः प्राणस्तु शरीरेन्द्रियधारणादिकार्य्यं कुर्वन् तदुपकरणतामुपगच्छति। जीवात्मनस्तत्तद्विषयपरिच्छेदवच्छरीरेन्द्रियधारणादेरप्यपेक्षितत्वात्। यथा हि जीवात्मना तत्तद्विषयपरिच्छेदस्तावदपेक्ष्यते तथा शरीरेन्द्रियधारणादिकमप्यपेक्ष्यते। तदभावे तदनुपपत्तेः। अपेक्षितसाधकं चोपकरणमिति सर्वतन्त्रसिद्धान्तः। शरीरेन्द्रियधारणादिकं मुख्यप्राणस्य कार्य्यं तस्याकरणत्वं दर्शयन्ती श्रुतिः प्रतिपादयति "**तान् वरिष्ठः प्राण उवाच मा मोहमापद्यथाहमेवैतत् पञ्चधाऽऽत्मानं प्रविभज्यैतद् बाणमवष्टभ्य विधारयामि**" (प्र० २।३) इति। "**तेन यदश्नाति यत् पिबति तेनेतरान् प्राणानवति**" (छां० १।२ ९) इति च। तस्माद् विषयपरिच्छेदानुपलम्भेऽपि शरीरेन्द्रियधारणादिप्रतिपत्त्या भवति चक्षुरादिवदुपकरणविशेषो जीवात्मनो मुख्यः प्राण इत्यधिगम्यते॥ ११॥

ननु चक्षुरादिवदुपकरणविशेषो भवन्नपि मुख्यः प्राणः किंरूपो व्यपदिश्यत इति सावान्तरभेदं वक्तव्यम्? तत्रोच्यते—

"**पञ्चवृत्तिर्मनोवद् व्यपदिश्यते**"॥ १२॥

श्रेष्ठ इत्यनुवर्तते । **मनोवत्**=यथाऽन्तःकरणं बुद्धिर्ज्ञानशक्त्या मन इति व्यपदिश्यते तथा क्रियाशक्त्या **पञ्चवृत्तिः**=लाघवाभिप्रायेणैष प्रयोगः, पञ्चवृत्तिकः श्रेष्ठो मुख्यः प्राणो व्यपदिश्यते=व्यवह्रियत इत्यर्थः ।

परब्रह्मणः परमेश्वरस्य सिसृक्षया हि प्रकृतेस्तावन्महत्तत्वमुपजायते । यत्रेदमुक्तं दर्शनान्तरे **"प्रकृतेर्महान्"** ( सां० १ । ६१ ) इति । तस्य च द्वे शक्ती ज्ञानं क्रिया च । तदंशत्वादन्तःकरणस्य बुद्धेरपि द्वे शक्ती ज्ञानं क्रिया च । तदेतज्ज्ञानशक्त्या यथा बुद्धिर्मनश्चित्तमित्याख्यायते तथा क्रियाशक्त्या मुख्यः प्राण इति समाख्यायते । ज्ञानव्यापाराविष्टं किलान्तःकरणं मनो बुद्धिरिति व्यवह्रियते क्रियाव्यापाराविष्टं च मुख्यः प्राण इति व्यपदिश्यते । व्यापारश्च व्यापारिणः सकाशात् कयाचिद् व्यपेक्षया भिन्नोऽपि वस्तुतो न भिद्यते । अत एव क्रियाशक्तिप्रधानस्यान्तःकरणस्य व्यापारविशेषो मुख्यः प्राण इति दर्शनकृतो मन्यन्ते । यत्तु छान्दोग्योपनिषदि **"न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राण इत्येवाचक्षते प्राणो ह्येवैतानि सर्वाणि भवति"** ( छां० ५ । १ । १५ ) इति मनसोऽपि वाक्चक्षुरादिवत् प्राणं प्रति गुणभावः समाम्नायते तज्ज्ञानशक्त्यपेक्षया क्रियाशक्तेः प्राधान्यमवलम्ब्य समाम्नायत इति द्रष्टव्यम् । सोऽयं मुख्यः प्राणो जीवनं नाम प्रयत्नविशेषः शरीरोपगृहीतवायुक्रियाभेदहेतुतया वायुवत् सञ्चरणशीलत्वाच्च वायुरित्यपि सङ्कीर्त्यते । यत्रेदमुक्तं दर्शनान्तरे **"सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च"** ( सां० २ । ३१ ) इति । सामान्यकरणवृत्तिः=समस्तकरणव्यापार इति प्रौढिवादाभिप्रायम् । अन्तःकरणव्यापार इति तत्त्वम् । ज्ञानशक्तिप्रधानं खल्वन्तःकरणं यथा कार्य्यभेदाद् मनो बुद्धिश्चित्तमहङ्कार इति चतुर्धा विभज्यते तथा क्रियाशक्तिप्रधानमन्तःकरणं कार्य्यभेदाद् हृदयादिस्थानभेदाच्च प्राणोऽपानः समान उदानो व्यान इति पञ्चधा प्रविभज्यते । तस्यैते पञ्चभेदाश्चाम्नायन्ते बृहदारण्यके **"प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत् सर्वं प्राण एव"** ( बृ० । १ । ५ । ३ )

इति । तत्र प्राणनक्रियाहेतुरा नासिकाग्रादा च हृदयादवस्थितः **प्राणः**, मूत्रपुरीषगर्भादीनामपनयनहेतुरा नाभेरा च पादतलादवस्थितो**ऽपानः**, अशितपीतपरिणामभेदस्य रसस्य तत्र तत्र शरीरस्थानेषु सम्यङ्नयन-हेतुरा हृदयादा च नाभेरवस्थितः **समानः**, ऊर्ध्वनयनहेतुरा नासिका-ग्राद्वा च शिरसोऽवस्थित **उदानः**, शरीरशोथहेतुः सर्वशरीरव्यापी **व्यान** इति विवेकः । प्राग्वृत्तिरुच्छ्वासादिकर्मा **प्राणः**, अवाग्वृ-त्तिर्निश्वासादिकर्मा**ऽपानः**, तदुभयसन्धौ वर्तमानो वीर्य्यवत्कर्महेतु-**र्व्यानः**, ऊर्ध्ववृत्तिरुत्क्रान्त्यादिहेतु**रुदानः**, समं सर्वेष्वङ्गेषु योऽ-न्नरसं नयति स **समान** इति शङ्कराचार्य्याणां मतम् । कूर्मा-दिप्रभेदाश्चाप्राधान्यान्नाभिधीयन्त इति नास्ति न्यूनं किञ्चित् । अन्तः-करणव्यापारविशेषरूपत्वं च मुख्यप्राणस्य "**तमुत्क्रामन्तं प्राणोऽ-नूत्क्रामति**" (बृ० ४ । ४ । २) इत्यादिश्रुतिलिङ्गादवसीयते । नहि तस्य तद्व्यापारत्वाभावे तदुत्क्रमणानन्तरमुत्क्रमणं श्रावयितुं शक्यते । व्यापार्युत्क्रमणे च व्यापारोत्क्रमणं न्याय्यमिति युक्तोऽयमवसायः । पृथगु-त्पत्त्यसङ्कीर्तनाच्च । यत्र ह्युत्पत्तिप्रक्रियायामिन्द्रियाणां भूतभौतिकानां चोत्पत्तिः परिकीर्त्यते तत्र मुख्यप्राणस्य पृथगुत्पत्तिर्न सङ्कीर्त्यते । न ह्यन्तः-करणवत् स्वतन्त्रद्रव्यत्वे तदुत्पत्तेरसङ्कीर्तनं कथञ्चिद् युज्यते । तद्व्यापारत्वे च तदसङ्कीर्तने नास्ति कश्चिदयोगः । तदुत्पत्तिसङ्कीर्तनेनैव तदुत्पत्तेः सङ्कीर्तितत्वात् । "**स प्राणमसृजत**" (प्र० ६ । ४) "**एतस्मा-ज्जायते प्राणः**" (मुं० २ । १ । ३) इत्यादौ च प्राणस्यान्तःकरण-व्यापारविशेषात्मकत्वज्ञापनाय तद्व्यपदेशहेतुक्रियाशक्तिपुरस्कारेण तद्वा-चकः शब्दो महत्तत्वे प्रयुज्यत इति द्रष्टव्यम् । तस्मादन्तःकरण-व्यापारविशेषरूप एव मुख्यः प्राणः पञ्चवृत्तिर्मनोवत् सर्वत्र व्यपदिश्यत इति निश्चलो वैदिकः सिद्धान्तः । उत्पत्तिचिन्तनप्रयोजनं तु तस्य कार्य्यत्वख्यापनमात्रमित्यदोषः ॥ १२ ॥

इदानीं भूतसूक्ष्मादिमयत्वेनोपस्थितत्वात् सूक्ष्मशरीरोत्पत्तिरतिदि-श्यते—

"अणुश्च" ॥ १३ ॥

तथेति तत्प्रागिति च पदद्वयमनुषज्यते । अतिदेशान्तरमेतदिति चार्थः । अणुः=यथा ब्रह्मणो वाक्चक्षुरादयः प्राणाः शब्दतन्मात्रादीनि भूतसूक्ष्माणि च वियदादिभ्यः स्थूलभूतेभ्यः प्रागुत्पद्यन्ते तथाऽणुः सूक्ष्मो देह उत्पद्यत इत्यर्थः ।

शब्दतन्मात्रप्रभृतीनि भूतसूक्ष्माणि पञ्च, चक्षुरादीनि ज्ञानेन्द्रियाणि पञ्च, हस्तादीनि कर्मेन्द्रियाणि पञ्च, मनः साहङ्कारा बुद्धिश्चेति सप्तदशतत्त्वानां समुदायः किल सूक्ष्मो देहः परिभाष्यते । यत्रेदमुक्तं दर्शनान्तरे "**सप्तदशैकं लिङ्गम्**" (सां० ३ । ९) इति । प्रत्यात्ममेकत्वादेकं, लिङ्गनान्निलयनाद्वा लिङ्गं सूक्ष्मो देहः । यावदयं नात्यन्तं प्रध्वंसते तावदस्मिन् षाट्कौशिके स्थूले शरीरे निलेलीयते । तेनैव च बुद्धिसत्त्वप्रधानत्वादनेकविधाभिस्तत्तद्विषयवासनाभिर्मत्स्यजालेनेव नानाविधकर्मग्रन्थिभिश्चित्रीकृतेन सम्परिष्वक्तो जीवात्मा स्वकर्मपरिपाकवशादुच्चावचेषु देवपितृमनुष्यादिषु नानाविधयोनिभेदेषु पुनः पुनर्जन्ममरणे लभते स्वकर्मफले च सुखदुःखे स्वाद्वस्वादू यथाकालमुपभुङ्क्ते । यत्रेदमाम्नातम् "**अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः**" (ऋ० २ । ३ । २१ । ३८) इति । **अमर्त्यः**=जीवात्मा । **मर्त्येन**=सूक्ष्मदेहेन । "**तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य**" (बृ० ४ । ४ । ६) इति च । **मनः**=बुद्धिः । तदिदं प्राधान्यमुसूचयिषया लिङ्गात् सूक्ष्मदेहाद् भेदेनोपादीयते । सावान्तरप्रभेदो मुख्यः प्राणस्तु व्यापारत्वाद् व्यापारिपरिग्रहणेनैव परिगृह्यत इति न लिङ्गशरीरे परिगण्यते । **ननु** सूक्ष्मदेहस्य लिङ्गशरीरस्य भूतसूक्ष्मादिमयत्वं कुतोऽवगम्यते ? रूपनिर्देशादिति ब्रूमः । श्रुत्या खलु सूक्ष्मदेहस्य माहारजनादिकल्पानि कानिचिद् रूपाणि निर्दिश्यन्ते "**तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वासः, यथा पाण्ड्वाविकं, यथेन्द्रगोपः, यथाऽग्न्यर्चिः, यथा पुण्डरीकं, यथा सकृद् विद्युत्तम्**" (बृ० २ । ३ । ६) इति । स्थूलं शरीरं पूः, तत्र ब्रह्म-

नाम्ना पुरुषस्यात्मनः शरीरत्वाद्वा पुरुषः=सूक्ष्मो देहः। न च तस्य भूतसूक्ष्मादिमयत्वाभावे निर्दिश्यमानानि तानि कथञ्चिदुपपद्यन्ते। प्रकृतिकार्य्यस्यैव रूपाश्रयत्वनियमात्। प्रकृतिकार्य्याणि च बुद्ध्यादीनि भूतसूक्ष्मान्तानि सप्तदशतत्त्वानीति युक्तस्तस्य रूपनिर्देशेन तन्मयत्वावगमः। यत्तु पूर्वत्र पुरुषशब्दोदितस्य तस्य वाय्वाकाशमात्रसारत्वमुपदिश्यते **"अथामूर्तम्—प्राणश्च यश्चायमन्तरात्मन्नाकाशः, एतदमृतमेतद् यदेतत् त्यत्, तस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्य त्यस्यैष रसो योऽयं दक्षिणेऽक्षन् पुरुषः, त्यस्य ह्येष रसः"** (बृ० २। ३। ५) इति। प्राणः=वायुः, रसः=सारः। तदुपलक्षणमात्रं वेदितव्यम्। अन्यथोत्तरत्र रूपनिर्देशासाङ्गत्यापत्तेः। नहि वाय्वाकाशमात्रसारत्वे तस्योत्तरत्र कुतो रूपनिर्देशः कर्हिचित् साङ्गत्यमापद्यते। किञ्चिदिह सूक्ष्मदृष्टिना भाव्यं सूक्ष्मदेहस्य वाय्वाकाशमात्रसारत्वं चेदृषिरभिप्रैष्यत् तदा कथं तस्योत्तरत्र नानाविधं रूपं निरदेक्ष्यत्। नहि वाय्वाकाशयोरसौ नानाविधं रूपमुन्मत्तवत् पश्यति। नूनं तथानिर्देशे विद्यते तस्य कोऽप्यभिप्रायः। स च सुव्यक्तो बुद्ध्यादिसहितानां सर्वेषां भूतसूक्ष्माणां सारः सूक्ष्मो देहो न जातु वाय्वाकाशयोरिति। तदुभयोपादानं चामूर्त्तत्वसामान्यविवक्षया न सूक्ष्मदेहस्य तन्मात्रसारत्वविवक्षयेति यत्किञ्चिदेतत्। "दक्षिणेऽक्षन्" इति जाग्रदवस्थायां बाह्यविषयग्रहणाय सन्निहितस्य तस्योपचारात् स्थानं निर्दिश्यते। परमार्थतस्तदानीं तस्य प्राधान्येन मूर्द्धस्थानत्वात्। सूक्ष्मदेहस्य भूतसूक्ष्ममयत्वं च रंहतिपादे स्वयमाचार्य्येण सविस्तरं प्रतिपादयिष्यत इति वयमिह तत्प्रपञ्चादुपरमामः। सोऽयं सूक्ष्मो देहः पुरुषाणां भोगापवर्गसिद्ध्यर्थं ब्रह्मणः सकाशादादिमे सर्गे यथा वागादयः प्राणाः शब्दतन्मात्रादीनि भूतसूक्ष्माणि चोत्पद्यन्ते तथोत्पद्यते। यावद् ब्रह्मदर्शनमुपसम्पद्य च जीवात्मा न विमुच्यते तावदत्यन्तं न प्रध्वंसते, यथाऽदृष्टं च षाट्कौशिकमिमं स्थूलं देहमुपादायमुपादायं जहाति हायं हायं चोपादत्ते। सेयं तस्यासाधारणी वृत्तिः। परिमाणं च यत्किल भूतसूक्ष्माणामिन्द्रियाणां च तदेव तस्याप्यभ्युपगम्यते। अन्य-

स्याविशेषात्। यत्रेदमुक्तं दर्शनान्तरे **"अणुपरिमाणं तत्कृतिश्रुतेः"** (सां० ३। १४) **"तदन्नमयत्वश्रुतेश्च"** (सां० ३। १५) **संस्मृतिर्लिङ्गानां सूपकारवत्"** (सां० ३। १६) इति। सङ्कोचविकाशशीलत्वाच्च न्यूनाधिकपरिमाणशरीरपरिग्रहेऽपि नाकात्स्र्यादिदोषः कश्चिदासज्यते। सङ्कोचविकाशौ च तस्योत्पत्तिमत्त्वात् सुखेनोपपद्येते। तस्माद् यथा ब्रह्मणः प्राणादयो वियदादिभ्यः प्रागुत्पद्यन्ते तथा सूक्ष्मो देह इत्यतिदेशो घटते ॥ १३ ॥

वागादयः प्राणाः प्रक्रान्ताः। तत्रान्योऽयं संशयः किमग्न्यादिदेवताधिष्ठानं तेषु विद्यते किंवा न विद्यत इति। न विद्यत इति पूर्वः पक्षः, विद्यत इति सिद्धान्तः। किं तावत् प्राप्तम्? न विद्यत इति ब्रूमः। अनुपलम्भात्। नहि यथा वागादयः प्राणाः खलु स्वस्वस्थाने स्वस्वकार्य्यं कुर्वाणाः प्रमाणेनोपलभ्यन्ते तथाऽग्न्यादिदेवताधिष्ठानं तेषु केनचित् प्रमाणेनोपलभ्यते। अनुग्राह्यानुग्राहकभावसम्बन्धो ह्यधिष्ठानम्। तद् यदि विद्येत कथं नोपलभ्येत। न च विद्यते नोपलभ्यते चेति सम्भवति। **ननु** चक्षुषि सूर्य्यदेवताधिष्ठानं प्रत्यक्षमुपलभ्यते, तत्सामान्यादन्यत्रापि तत्तद्देवताधिष्ठानमनुमातुं शक्यते नास्ति तदनुपलम्भ इति चेत्? **न**। सर्वत्रोपलम्भाभावेनानुमानानुदयात्। मनुष्यादिचक्षुषि हि सूर्य्यदेवताधिष्ठानं तावदुपलभ्यते वृषदंशकादिचक्षुषि च नोपलभ्यते। यस्य किल चक्षुष्येव नियमेनोपलम्भो न विद्यते न तदाश्रयमनुमानमन्यत्रापि क्वचिदुदेतुमर्हति। न च प्रत्यक्षानुमानाभ्यामनुपलब्धस्याभ्युपायो युज्यते। तस्मादग्न्यादिदेवताधिष्ठानं वागादिषु प्राणेषु न विद्यत इति युक्तं मन्यामह इति। एवं प्राप्त उच्यते—

**"ज्योतिराद्यधिष्ठानं तु तदामननात्"** ॥ १४ ॥

"प्राणेषु" इति सप्तम्या विपरिणम्यानुषज्यते। तुशब्देन पूर्वः पक्षो व्यावर्त्यते। **ज्योतिराद्यधिष्ठानं**=ज्योतिरग्निः, अनुग्राह्यानुग्राहकभावः सम्बन्धोऽधिष्ठानं, वागादिषु प्राणेष्वग्न्यादिदेवताधिष्ठानं विद्यते, कुतो

विज्ञायते ? **तदामननात्**=तदा बुद्धिस्थमधिष्ठानं परामृशति, श्रुतिषु तत्प्रतिपादनादित्यर्थः।

सत्यं वागादिषु प्राणेषु देवताशब्दानामग्न्यादीनामधिष्ठानं प्रत्यक्षं नोपलभ्यते तथापि नैतावता न तद् विद्यत इति मन्तुमीश्यते। सर्वेषामर्थानां प्रत्यक्षवदुपलब्धुमशक्यत्वात्। नहि यावन्तः पदार्था जगतीतले विद्यन्ते तावन्तः सर्वे प्रत्यक्षमुपलब्धुं शक्यन्ते। स्थूलो ह्यर्थः प्रत्यक्षमुपलभ्यते न सूक्ष्मः। सन्ति च लोके केचिदर्थाः स्थूलाः केचित् सूक्ष्माः। एतदपि सूक्ष्मत्वान्नोपलभ्यते नाविद्यमानत्वादिति कल्पयितुं शक्यते। अग्न्यादितत्त्वानां च स्थूलत्वेऽपि प्राणानामतीन्द्रियत्वान्न तदधिष्ठानं प्रत्यक्षमुपलभ्यत इति युक्तमालोचामहे। कुतस्तर्हि विद्यते तदधिष्ठानमिति विज्ञायते ? श्रुतिषु प्रतिपादनादिति ब्रूमः। सन्ति खलु बह्व्यस्तत्प्रतिपादिकाः श्रुतयः "**अग्निर्वाग् भूत्वा मुखं प्राविशत्, वायुः प्राणो भूत्वा नासिके प्राविशत्, आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्, दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्**" (ऐ० १।२) "**वागेव ब्रह्मणश्चतुर्थः पादः, सोऽग्निना ज्योतिषा भाति च तपति च। ३। प्राण एव ब्रह्मणश्चतुर्थः पादः, स वायुना ज्योतिषा भाति च तपति च। ४। चक्षुरेव ब्रह्मणश्चतुर्थः पादः, स आदित्येन ज्योतिषा भाति च तपति च। ५। श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः, स दिग्भिर्ज्योतिषा भाति च तपति च**" (छां० ३।१८। ३–४–५–६) इत्याद्याः। वाग् भूत्वा=वागनुग्राहको भूत्वा, अग्रेऽप्येवमर्थयितव्यम्, मुखं=मुखछिद्रं, प्राणः=घ्राणः। ब्रह्मणः=मनोरूपस्य ब्रह्मणः, भाति=दीप्यतेऽभिव्यज्यते, तपति=वदनाय प्रोत्सहते परमोत्साहेन स्वकार्यं कुरुते, इति श्रुतिपदार्थः। न चाग्न्यादीनां वागादिप्राणानुग्राहकत्वाभावे तासामित्थं प्रतिपादनं कथञ्चित् सङ्गच्छते। "**स वै वाचमेव प्रथमामत्यवहत्। सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्**" (बृ० १।३।१२) इत्यादिना च वागादि-

प्राणानामग्न्यादिभावापत्तिप्रतिपादनाद् व्यक्तं तत्र तदधिष्ठानं वर्तत इति गम्यते । **"सूर्य्यं चक्षुर्गच्छतु"** (ऋ० ७ । ६ । २० । ३) **"सूर्य्यो मे चक्षुर्वातः प्राणः"** (अथर्व० ५ । २ । ९ । ७) इत्यादिमन्त्रवर्णौ च चक्षुरादीनां सूर्य्यादिरूपतामाचक्षाणौ वागादिप्राणेषु सर्वत्राग्न्यादिदेवताधिष्ठानं प्रव्यक्तमवगमयतः । अनुग्राह्यं ह्यपिगच्छदनुग्राहकं गच्छति तद्रूपत्वं चासादयति । मनुष्यादिचक्षुषि सूर्य्यस्याधिष्ठानं तावदतिरोहितम् । नह्यस्मदादीनां चक्षुः सूर्य्याधिष्ठानाभावे स्थूलात् स्थूलमपि किञ्चिद् वस्तु कर्हिचिद् द्रष्टुं पारयते । दीपादिप्रकाशश्च सूर्य्यग्रहणेनैव जाग्रह्यत इत्यकिञ्चिदेतत् । वृषदंशप्रभृतिचक्षुषां चास्मदादिचक्षुर्वत् प्रकाशभूयस्त्वापेक्षाभावेऽपि तदल्पीयस्त्वापेक्षाऽस्त्येव । नहि तान्यपि यत्किञ्चित् प्रकाशसम्बन्धाभावे किञ्चिद् वस्तु लोकितुं शक्नुवन्ति । निशायामहरिव च सूर्य्यरश्मिसम्बन्धोऽभ्युपेयत इति नास्ति तत्रापि तदधिष्ठानव्यभिचारः । वागादिषु चैष समानश्चर्चः । एकत्रसिद्धेरन्यत्रापि तदनुमानस्य सुकरत्वात् । दृश्यते खलु लोके तेजोमात्रोपेतानामेव पुंसां वागिन्द्रियं देदीप्यते स्वकार्य्यं च साधु निष्पादयते न तदनुपेतानाम् । न चैतत् तत्र तदधिष्ठानाभावे कथञ्चित् सङ्गच्छते । मननं च सङ्गतस्य प्रशस्यते नासङ्गतस्य । तस्माद् विद्यते वागादिषु प्राणेषु ज्योतिराद्यधिष्ठानमिति निःसंशयम् ॥ १४ ॥

**ननु** ज्योतिरादिभिरधिष्ठिता अमी प्राणाः किं भोगसाधनतया जगज्जन्मादिकारणेन ब्रह्मणा सम्बध्यन्ते किंवा जीवात्मना ? तत्राह—

**"प्राणवता शब्दात्"** ॥ १५ ॥

प्राणा इत्यनुषज्यते । **प्राणवता**=प्राणस्वामिना जीवात्मना प्राणाः सम्बध्यन्ते, कुतोऽवगम्यते ? **शब्दात्**=श्रुतिवचनादित्यर्थः ।

भोगसाधनानां खलु प्राणानां भोक्त्रा सम्बन्धः संश्लिष्यते नाभोक्त्रा । निरर्थकत्वात् । भोगसिद्ध्यै किल तत्साधनसम्बन्ध इष्यते । यस्य भोग एव न भवति तेन तत्साधनसम्बन्धो निरर्थक इति विस्पष्टम् । भोक्ता

जीवात्मा ब्रह्म चाभोक्तृ **"तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति"** ( ऋ० २ । ३ । १७ । २० ) इत्यादिमन्त्रवर्णेन सुव्यक्तं प्रतिपाद्यते । न च तत्प्रतिपादितेऽर्थे युज्यते संशयः । शब्दश्च प्राणानां भोगसाधनत्वेन प्राणस्वामिना जीवात्मना सम्बन्धं दर्शयति **"अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषः, दर्शनाय चक्षुः, अथ यो वेदेदं जिघ्राणीति स आत्मा, गन्धाय घ्राणम्"** ( छां० ८ । १२ । ४ ) इत्येवञ्जातीयकः । वारयति च ब्रह्मणा **"न तस्य कार्य्यं करणं च विद्यते"** ( श्वे० ६ । ८ ) इत्येवम्प्रकारकः । न च येन यत्सम्बन्धो वार्य्यते तेन तत्सम्बन्धः कल्पयितुं शक्यते । निरालम्बनत्वेनाप्रामाण्यप्रसङ्गात् । **"सहस्राक्षः सहस्रपात्"** ( ऋ० ८ । ४ । १७ । १ ) इत्यादिकं तु सर्वान्तरात्मत्वाभिप्रायेणाम्नायते न भोक्तृत्वाभिप्रायेणेति न तदवलम्बनमुपपद्यते । तस्माद् भोगसाधनत्वेन वागादयः प्राणाः प्राणस्वामिना जीवात्मनैव सम्बध्यन्ते न जगज्जन्मादिहेतुना ब्रह्मणेति निश्चयः ॥ १५ ॥

**ननु** जीवात्माभावे ब्रह्मणा प्राणाः सम्भत्स्यन्ते । तेषां चेतनेन केनचित् सम्बन्धस्यावश्यकत्वात् । नहि भोगस्य साधनानि भवन्ति भोक्तारं चेतनमन्तरेण कदाचिदवस्थातुं पारयन्ति । अभोक्तुः सतस्तस्य च तत्सम्बन्धाद् भोक्तृत्वमुपपत्तुमर्हति नास्ति कश्चिद्विरोध इति । अस्योत्तरं पठति—

**"तस्य च नित्यत्वात्"** ॥ १६ ॥

चस्त्वर्थः शङ्कां व्यावर्तयति । **तस्य**=प्राणवतो जीवात्मनो **नित्यत्वात्**=नियमेन भावाद् ध्रौव्यात् कालत्रयाबाध्यत्वादित्यर्थः ।

जीवात्मानित्यत्वे हि तदभावप्रसक्त्या भोगसाधनानां प्राणानां चेतनेन ब्रह्मणा कथञ्चित् सम्बन्धः कल्पयितुं शक्यते । न च जीवात्माऽस्त्यनित्यः । तन्नित्यत्वस्य विस्तरेणोपपादितत्वात् । नित्यत्वे च क तद-

भावप्रसक्तिः क्व च चेतनान्तरेण ब्रह्मणा तत्सम्बन्धपरिकल्पनम् । कर्मसम्बन्धनिमित्तः खल्वेष सर्वत्रेष्यते । न च भगवतो ब्रह्मणः कालत्रयेऽप्यस्ति कर्मसम्बन्धो येनासौ तस्यापि कथञ्चित् परिकल्प्येत । नहि निमित्ताभावे कदाचित् किञ्चित् परिकल्पयितव्यं भवति । कल्पनायाः किञ्चिन्निमित्तव्यपाश्रयेण सर्वदा सर्वत्र प्रवृत्तिनियमात् । न च कथञ्चित् परिकल्पितेनापि तेनाभोक्तृ ब्रह्म भोक्तृ सम्पत्तुमर्हति । यत्कारणं प्रवर्तमानेयं कल्पना तात्कालिकं व्यवहारमात्रं प्रयोजयति न वस्तु सतत्त्वं कदाचिद् यथास्वं सम्पादयति । तत्र तत्सामर्थ्याभावात् । चेतनत्वसामान्यं तु न तन्निमित्तं पर्याप्तं निरीक्षामहे । अन्यथा पदार्थत्वसामान्येन जडा प्रकृतिरपि भोक्त्री परिकल्प्येत । तथा च महदनिष्टं प्रसज्येत । तस्मादकिञ्चिदेतत् ॥ १६ ॥

**ननु** प्राणवता जीवात्मना सम्बध्यमानानामेषां प्राणानां कश्चित् समाख्या विशेषो वक्तव्यः, येन तेषां तद्भोगसाधनत्वं व्यक्तमभिव्यज्येत ? तत्राह—

**"त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्" ॥ १७ ॥**

**ते**=जीवात्मना सम्बध्यमानास्ते प्राणाः **श्रेष्ठादन्यत्र**=श्रेष्ठो मुख्यः प्राणः, ततोऽन्यत्र, तं वर्जयित्वेति याव**दिन्द्रियाणि**=इन्द्रियशब्दवाच्यानि समाख्यायन्ते, कुतो विज्ञायते ? **तद्व्यपदेशात्**=इन्द्रियशब्दस्तदर्थः, श्रुतिस्मृतिषु तेषामिन्द्रियशब्देन व्यपदेशादित्यर्थः ।

यत्किल शरीराश्रयं सदिन्द्रस्यात्मनो भोगसाधनं सम्पद्यते तदिन्द्रियमिति समाख्यायते । वागादयश्चामी सर्वे प्राणास्तथा । को नु नाम सत्त्वभेदस्तत्तद्विषयपरिच्छित्त्या जीवात्मनो भोगं साधयतस्तान् नानुबोभूयते । अनुभवगम्येऽर्थे च नास्ति किञ्चिद् विवरणापेक्षा । तन्माहात्म्यस्य सर्वतोऽतिशयित्वाभ्युपगमात् । श्रुतिस्मृतिषु च ते प्रत्यक्षमिन्द्रियशब्देन व्यपदिश्यन्ते **"इन्द्रियाणि शतक्रतो ! या ते जनेषु पञ्चसु । इन्द्र ! तानि त आ वृणे"** ( ऋ० ३ । ३ । २२ ।

९) "**इमानि यानि पञ्चेन्द्रियाणि मनःषष्ठानि**" (अथर्व० १९।१।९।५) "**एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च**" (मुं० २। १ । ३) **कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशकम्**" (सां० २ । १८) "**एकादशेन्द्रियाण्याहुर्यानि पूर्वे मनीषिणः। तानि सम्यक् प्रवक्ष्यामि यथावदनुपूर्वशः। ८९। श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी। पायूपस्थं हस्तपादं वाक् चैव दशमी स्मृता। ९०। बुद्धीन्द्रियाणि पञ्चैषां श्रोत्रादीन्यनुपूर्वशः। कर्मेन्द्रियाणि पञ्चैषां पाय्वादीनि प्रचक्षते। ९१। एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकम्। यस्मिन् जिते जितावेतौ भवतः पञ्चकौ गणौ। ९२।** (मनु० २) इत्येवञ्जातीयकासु। न च श्रेष्ठे प्राणे तच्छब्दव्यपदेशः क्वचिदुपलभ्यते येन सोऽपि कदाचिदिन्द्रियमिति समाख्यायेत। विषयपरिछेदकत्वं च तस्याकरणत्वात् पराणुद्यते। वागादिप्राणानां जीवात्मोपभोगसाधनत्वं चेन्द्रियसमाख्यया स्वरसादभिव्यज्यते। "**इन्द्रियमिन्द्रलिङ्गम्**" (अष्टा० ५ । २ । ९३) इति सूत्रे लिङ्गपर्य्यवसानस्य साधने सर्वसम्प्रतिपन्नत्वात्। इतिशब्देन वा प्रकारवचनेन तदुपसङ्ग्रहात्। अतो मुख्यप्राणादन्यत्र वागादयः सर्वे प्राणा इन्द्रियाणि समाख्यायन्त इति प्रतिपत्तव्यम्॥ १७॥

ननु श्रेष्ठादन्यत्रेति कुतोऽभिधीयते? तत्राह—

"**भेदश्रुतेः**" ॥ १८॥

तेभ्य इति पञ्चम्या विपरिणम्य श्रेष्ठादन्यत्रेति चोभयमनुवर्तते। **भेदश्रुतेः**=वागादिप्राणेभ्यो भेदेन श्रवणाच्छ्रेष्ठादन्यत्रेत्यभिधीयत इत्यर्थः।

अस्ति तावदिन्द्रियसंज्ञानां वागादिप्राणानां मुख्यप्राणस्य च भेदस्य प्रतिपादिका श्रुतिः "**वाङ्मनश्चक्षुः श्रोत्रं च ते प्रीताः प्राणं स्तुन्वन्ति**" (प्र० २।४) इति। सा वागादिप्राणान् स्तुतिकर्तृत्वेन मुख्यं प्राणं च तत्कर्मत्वेन प्रतिपादयन्ती व्यक्तं तेभ्यस्तद्भेदं

श्रावयति । **"ते ह वाचमूचुः"** (बृ० १ । ३ । २) इत्युपक्रम्य वागादिप्राणानामसुरपाप्मभिर्विध्वस्तत्वमुपन्यस्य तत्प्रकरणं चोपसंहृत्य **"अथ हेममासन्यं प्राणमूचुः"** (बृ० १ । ३ । ७) इत्यादिना मुख्यप्राणस्य तद्विध्वंसकत्वं दर्शयन्ती च तेभ्यस्तद्भेदं स्फुटमापादयति **"त्रीण्यात्मनेऽकुरुतेति मनो वाचं प्राणम्"** (बृ० १ । ५ । ३) इत्येवञ्जातीयका अन्या अपि तद्भेदश्रुतयोऽत्रोदाहर्तव्याः । न चैवंविधे भेदश्रुतिगणे विद्यमाने तत्र तत्संज्ञासमावेशः कर्तुं शक्यते । तस्मादन्यत्र श्रेष्ठादिति युक्तमभिधीयते ॥ १८ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"वैलक्षण्याच्च"** ॥ १९ ॥

तेभ्योऽन्यत्र श्रेष्ठादित्युभयं पूर्ववदनुवर्तते । यत्र पूर्वो हेतुरुक्तस्तत्रैव हेत्वन्तरमेतदिति चार्थः । **वैलक्षण्यात्**=विरुद्धं लक्षणं विलक्षणं, लक्षणं धर्मः, वागादिभ्यस्तेभ्यो विरुद्धधर्मकत्वादन्यत्र श्रेष्ठादभिधीयत इत्यर्थः ।

अस्ति खलु वागादिप्राणानां मुख्यप्राणस्य च परस्परं वैलक्षण्यम् । वागादयो हि सुषुप्तौ मनस्येकीभूय सुखं स्वपन्ति, मुख्यप्राणश्च जागर्ति । यत्रेदमाम्नायते **"यथा गार्ग्य! मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिँस्तेजोमण्डल एकीभवन्ति, ताः पुनः पुनरुदयतः प्रचरन्ति, एवं ह वै तत् सर्वं परे देवे मनस्येकीभवति, तेन तर्ह्येष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते । २ । प्राणाग्नय एवैतस्मिन् पुरे जाग्रति"** (प्र० ४ । २–३) इति । शरीराश्रयत्वे सति शब्दोच्चारणादिहेतुत्वं वागादीनां लक्षणं, शरीरेन्द्रियधारकत्वं च मुख्यप्राणस्य । यत्रेदं पठ्यते **"तान् वरिष्ठः प्राण उवाच मा मोहमापद्यथ अहमेवैतत् पञ्चधाऽऽत्मानं प्रवि-**

**भज्यैतद् बाणमवष्टभ्य विधारयामि"** ( प्र० २ । ३ ) इति । **"अथ ह वाचमुद्गीथमुपासाञ्चक्रिरे तां हासुराः पाप्मना विविधुः"** ( छां० १ । २ । ३ ) इत्याद्यासु श्रुतिषु समाम्नातं वागादिप्राणानां पाप्मना विद्धत्वं मुख्यप्राणस्य तदविद्धत्वं च वैलक्षण्यान्तरमप्यत्रोदाहर्तव्यम् । वैलक्षण्यं च व्यावृत्तिकारणं प्रसिद्धम् । तस्मादन्यत्र श्रेष्ठादिति सम्यगभिधीयते ॥ १९ ॥

प्राणादिसूक्ष्मतत्त्वानां सावान्तरप्रभेदं सृष्टिमभिधाय जीवात्मनो लोकपरलोकयोर्गमनागमनसाधनस्य सूक्ष्मदेहस्य सृष्टिरभ्यधायि । सम्प्रति तदाश्रयस्य चराचरलक्षणस्य स्थूलशरीरस्य सृष्टिरभिधातव्या । उपस्थितत्वात् । तदर्थमिदमधिकरणान्तरमारभमाण आह—

**"संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्"** ॥ २० ॥

तुशब्देन संज्ञामूर्त्तिक्लृप्तेर्जीवात्मकर्मत्वं व्यावर्तयति । **संज्ञामूर्तिक्लृप्तिः**=संज्ञा नाम, मूर्त्ती रूपमाकृतिरिति यावत्, तयोः क्लृप्तिर्निर्माणं सृष्टिः, नामरूपात्मकचराचरशरीरसृष्टिः **त्रिवृत्कुर्वतः**=सत इत्युपादातव्ये तद्विशेषणोपादानात् पूर्वं त्रिवृत्करणं पश्चात् संज्ञामूर्तिक्लृप्तिरिति प्रद्योत्यते, त्रिवृत्करणकर्तुः सतः परब्रह्मणः परमेश्वरात् भवति, कुतः प्रतिपद्यते ! **उपदेशात्**=श्रुत्युपदेशादित्यर्थः ।

सत्प्रक्रियायां हि तेजोऽबन्नानां तिसृणां देवतानां सृष्टिं निरूप्य तावदुपदिश्यते **"सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनु प्रविश्य नामरूपे व्याकरवाणि । तासां त्रिवृतं त्रिवृतमेकैकां करवाणि"** ( छां० ६ । ३।२ ) इति । सेयं पूर्वोपक्रान्ता चिदचिदात्मकेषु सर्वेष्वर्थेष्वन्तर्यामिरूपेण वर्तमाना सदाख्या परा देवता पूर्वोक्तं बहुभवनमीक्षणप्रयोजनमद्यापि सर्वथा न निष्पन्नमिति पुनरैक्षत हन्तेदानीमहमिमाः पूर्वोत्पादितास्तेजोऽबन्नाख्यास्तिस्रो देवताः शुभाशुभकर्मकर्त्रा तत्फलसुखदुःखोपभोक्त्रा चानेन जीवेनात्मनाऽनुप्रविश्य नाम च रूपं च ते व्याकरवाणि विस्पष्टं करवाणि नामेदमस्य रूपमिदमस्ये-

त्येवं चराचरशरीरमुत्पादयानि । तदुपायाकाङ्क्षायामाह—तासां तिसृणां देवतानामेकैकां देवतां त्रिवृतं त्रिवृतं तेजोऽबन्नात्मना त्र्यात्मिकां त्र्यात्मिकां विदधानीत्यर्थः । तत्र संशयः किमिदमुपदिश्यमानं नामरूपव्याकरणरूपं चराचरशरीरोत्पादनं त्रिवृत्कुर्वतः परब्रह्मणः परमेश्वरस्य कर्म स्यात् किंवा जीवात्मन इति । जीवात्मन इति पूर्वः पक्षः, परब्रह्मणः परमेश्वरस्येति सिद्धान्तः । किं तावत् प्राप्तम्? जीवात्मन इति ब्रूमः । दृष्टत्वात् । लोके हि जीवात्मनस्तावत् कणभक्षाक्षचरणादिनामकरणं घटमठवसनादिरूपकरणं चोभयं कर्म सर्वत्र दृश्यते । तत्सामान्यादेतन्नामरूपव्याकरणमपि भवति तस्यैव कर्मेति सुखेन विज्ञातुं शक्यते । नहि यस्यैकं कर्मोपपद्यते तस्यापरं कर्म न घटत इति केनाप्यनुमन्तुमुत्सह्यते । न च नामरूपव्याकरणस्य जीवात्मकर्मत्वे "**नामरूपे व्याकरवाणि**" (छां० ६ । ३ । २) इति परदेवताकर्तृकोत्तमपुरुषप्रयोगानुपपत्तिरिति शङ्कितव्यम् । प्रयोजकत्वादुपपत्तेः । यथा हि परसैन्यसङ्कलनस्य खलु चारकर्मत्वेऽपि "**चारेण परसैन्यमनुप्रविश्य सङ्कलयानि**" इति प्रयोजकत्वनिबन्धनो नृपतिकर्तृक उत्तमपुरुषप्रयोग उपपद्यते तथा नामरूपव्याकरणस्य जीवात्मकर्मत्वेऽपि "**नामरूपे व्याकरवाणि**" (छां० ६ । ३ । २) इति प्रयोजकत्वनिबन्धनः परदेवताकर्तृक उत्तमपुरुषप्रयोग उपपत्तुमर्हति । प्रयोज्यः किल कर्म कुरुते प्रयोजकस्तत्कर्मात्मन्यध्यारोप्य तथा प्रयुङ्क्ते । प्रयोजकः परब्रह्म परमेश्वरो यथा नृपतिः, प्रयोज्यो जीवात्मा यथा चारः । न च प्रयोगमात्रेणैकस्य कर्मापरस्य सम्भवति । तस्मादेतन्नामरूपव्याकरणं कर्म जीवात्मन एव युक्तं पश्यामो न परब्रह्मणः परमेश्वरस्येति । एवं प्राप्तेऽभिधीयते—**त्रिवृत्कुर्वत उपदेशात्** । श्रुतिः खलु "सेयं देवता" इत्युपक्रम्य "नामरूपे व्याकरवाणि" इत्युपदिशन्ती नामरूपव्याकरणं कर्म त्रिवृत्कुर्वतः परब्रह्मणः परमेश्वरस्यैव विद्यते न जातु जीवात्मन इति स्फुटं प्रतिपादयति । न च तत्प्रतिपादितेऽर्थे पर्य्यनुयोगो युज्यते । जीवात्मा चात्र त्रिवृत्कुर्वतः परब्रह्मणः परमेश्वरस्य देवतानुप्रवेशे द्वारत्वेनोपादीयते यथाऽऽकाशानुप्रवेशे

घटो न चारवत् प्रयोज्यत्वेनेति प्रयोज्यप्रयोजकभावं समाश्रित्य प्रयोगोपपादनमसमञ्जसं न जीवात्मनो नामरूपव्याकरणं कर्म निर्वोढुमवकल्पते । न च जीवात्मनो यत्किञ्चिन्नामरूपव्याकरणसामर्थ्यं दृष्टमिति तत्सामान्येन सर्वत्र तत्सामर्थ्यस्य कल्पनं युक्तमालोचामहे । नह्यनीश्वरस्य सतस्तस्य सूर्य्यचन्द्रविद्युदादिषु गिरिनदीसागरादिषु च नानाविधेषु नामरूपेषु व्याकरणसामर्थ्यं कर्हिचित् सम्भवति । भगवतः परब्रह्मणः परमेश्वरस्य सर्वत्राव्याहतं तत्सामर्थ्यं तु श्रुत्या स्वयमुपदिश्यते **"आकाशो वै नाम नामरूपयोर्निर्वहिता"** ( छां० ८ । १४ । १ ) इति । किञ्च यस्य खलु त्रिवृत्करणं कर्म नामरूपव्याकरणमपि तस्यैव कर्मेति विज्ञायते । त्रिवृत्करणाभावे नामरूपव्याकरणासिद्धेः । उपायाधीना हि सर्वत्रोपेयसिद्धिः । नहि यावदुपायो न सिध्यति तावत् किञ्चिदुपेयं सेद्धुमर्हति । त्रिवृत्करणमुपायः, नामरूपव्याकरणं चोपेयम् । तदिदमग्न्यादिषु नामरूपेषु प्रविभज्य त्रिवृत्करणं प्रदर्शयन्त्या श्रुत्या स्पष्टमवबोध्यते **"यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य"** ( छां० ६ । ४।१ ) इति । त्रिवृत्करणं च पञ्चीकरणस्योपलक्षणम् । युक्तेस्तौल्यात् । भूतभौतिकेषु शरीरादिषु सर्वत्र पञ्चभूतगुणदर्शनाच्च । न च तेजःप्रभृतिभूतसूक्ष्माणां त्रिवृत्करणमल्पज्ञस्याल्पशक्तेर्जीवात्मनः कर्म कथञ्चिदुपपद्यते । नह्ययमेकैकं भूतं कालत्रयेऽपि द्व्यात्मकं त्र्यात्मकं विधातुं शक्नोति । भगवतः परब्रह्मणः परमेश्वरस्य चैतत् कर्म सूत्रकृद्वचनादेव निःशङ्कं प्रतिपद्यते । नहि भगवान् सूत्रकृद् विनैव किञ्चित् प्रयोजनं सत इत्युपादातव्ये त्रिवृत्कुर्वत् इति तद्विशेषणमुपादत्ते । व्यक्तं ह्येतदाकूतं प्रतिपद्यामहे पूर्वं ब्रह्मणा त्रिवृत्करणं विधीयते नामरूपव्याकरणं च पश्चादिति । न चैवं तत्प्रतिपत्तौ नामरूपव्याकरणं कर्म जीवात्मनः परिकल्पयितुं शक्यते । तस्मात् परब्रह्मणः परमेश्वरस्यैव त्रिवृत्कुर्वतः कर्म नामरूपव्याकरणलक्षणं चराचरशरीरनिर्माणमिति युक्तमवबुध्यामहे ॥ २० ॥

नामरूपात्मकचराचरशरीरनिर्माणं पारमेश्वरं कर्मेति प्रत्यपादि । स०

स्मति शरीराणां तेषां पाञ्चभौतिकत्वं व्यवस्थापयितुकामस्तत्र कस्य भूतस्य किं कार्य्यमिति प्रतिपादयति—

**"मांसादि भौमं यथाशब्दमितरयोश्च"** ॥ २१ ॥

**मांसादि**=मांसादिकं **भौमं**=भूमिकार्य्यम्, **इतरयोश्च**=अप्तेजसोश्च कार्य्यं **यथाशब्दं**=यथाश्रुति शरीरेषु तेषु विज्ञातव्यमित्यर्थः।

अस्मदादिशरीरेषु यत् खलु मांसादिकं निरीक्ष्यते तद् भौमं यद् रुधिरादिकं तदाप्यं यदस्थ्यादिकं तत् तैजसमवगन्तव्यम्। तथा हि दर्शयति श्रुतिः **"अन्नमशितं त्रेधा विधीयते, तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति, यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः"** (छां० ६। ५। १) इत्यादिना। त्रिवृत्कृता भूमिरेव ह्येषा व्रीहियवाद्यन्नरूपेणाद्यत इत्यभिप्रायः। मनसो भौमत्वं चात्र तद्गतं पटुत्वमभिप्रेत्य प्रदर्श्यते। मनो ह्यन्नाशनेन बहु पटु सम्पद्यत इति सर्वजनीनम्। पटुत्वं चेह कार्य्यजननशक्त्यभिव्यक्तिः। एवं पयसा प्राणपाटवं, घृतादितेजसा वाक्पाटवं स्वस्वकार्य्यक्षमत्वं समधिगन्तव्यम्। वाय्वाकाशकार्य्यं च शरीरेषु यथाशास्त्रं स्वयमुन्नेतव्यम्। तस्मात् पृथिव्यादिपञ्चभूतकार्य्यत्वेनास्मदादिशरीरजातमस्ति पाञ्चभौतिकमिति सिद्धान्तः ॥ २१ ॥

**ननु** पाञ्चभौतिकं चेदस्त्यस्मदादीनां शरीरजातं तदा पार्थिवमिति वादः कुतः प्रवर्तते? तत्राह—

**"वैशेष्यात्तु तद्वादस्तद्वादः"** ॥ २२ ॥

तुना प्रकारान्तरं व्यावर्त्यते। अभ्यासेनाध्यायसमाप्तिरवद्योत्यते। **वैशेष्यात्**=वैशेष्यं भूयस्त्वं, तस्मात् **तद्वादः**=पार्थिवमिति वादः प्रवर्तते इत्यर्थः।

पृथिव्या ह्यस्मदादिशरीरेषु भूयस्त्वं वर्तते, तन्निबन्धनः किलैष तद्विषयः पार्थिवमिति वादो न पृथिवीमात्रकार्य्यत्वनिबन्धनः। एवं भूते-

ष्वपि पृथिवीति वादोऽन्नभूयस्त्वनिबन्धनः, जलमिति वादोऽब्भूयस्त्वनिब-न्धनः, अग्निरिति वादस्तेजोभूयस्त्वनिबन्धनो वेदितव्यः ॥ २२ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्माराम भगवत्पादशिष्यहरिप्रसादवैदिकमुनिविरचितायां वेदान्तसूत्रवैदिकवृत्तौ द्वितीयाध्यायस्य चतुर्थः पादः ॥**

**समाप्तश्चायमविरोधाध्यायो द्वितीयः**





# तृतीयोऽध्यायः

## प्रथमः पादः

प्रथमे समन्वयाध्याये जगज्जन्मादिकारणं ब्रह्म जिज्ञास्यमिति सर्वश्रुतिसमन्वयप्रतिपादनेन प्रत्यपादि। तत्रापाततः प्रतिभासमानः स्मृतिन्यायविरोधः श्रुतिविप्रतिषेधश्चाविरोधाध्याये द्वितीये सविस्तरं पर्य्यहारि। सम्प्रति तज्ज्ञानस्य साधनानि यानि श्रुतिस्मृतिभ्यां समधिगम्यन्ते तानि सर्वाणि यथाशास्त्रं प्रतिपादयितुं तृतीयोऽयं साधनाध्यायः प्रारभ्यते। साधनानि च विवेकवैराग्यप्रभृतीनि नानाविधानि श्रुतिस्मृतिसमधिगतानि। तेषां विवेकस्य वैशेषिकादिषु पञ्चसु वैदिकदर्शनेषु विस्तरेण प्रतिपादितत्वाद् वैराग्यमेवादौ विशेषतः प्रतिपादयितव्यमुपतिष्ठते। तदेवार्थतः प्रतिपिपादयिषुः पूर्वं तावत् तत्प्रयोजकं पुरुषस्य जीवात्मनो लोकपरलोकयोर्गमनागमनं तत्प्रकारभेदं च पञ्चाग्निविद्यामाश्रित्य दर्शयति—

**"तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्"** ॥ १ ॥

**तदन्तरप्रतिपत्तौ**=तच्छब्देनानन्तरोक्तः संज्ञामूर्त्यात्मकः स्थूलो देहः परामृश्यते, प्रतिपत्तिः प्राप्तिः, सप्तम्यर्थो निमित्तं, देहान्तप्राप्तये **सम्परिष्वक्तः**=सूक्ष्मदेहेन परिवेष्टितो **रंहति**=गच्छति, कुतोऽवगम्यते? **प्रश्ननिरूपणाभ्यां**=प्रश्नप्रतिवचनाभ्यामित्यर्थः।

जीवात्मा पुरुषः खलु कर्मफलभोगाय देहाद्देहान्तरं गच्छतीति वैदिको राद्धान्तः। तत्रेदमिदानीं विचार्य्यते किं सूक्ष्मेण देहेन सम्परिष्वक्तो देहाद्देहान्तरं गच्छति, किंवा तदसम्परिष्वक्त इति। तदसम्परि-

ष्वक्त इति पूर्वः पक्षः, सम्परिष्वक्त इति सिद्धान्तः। किं तावत् प्राप्तम्? तदसम्परिष्वक्त इति वदामः। स्थूलदेहवत्सूक्ष्मदेहस्यापि सर्वत्र सुलभत्वात्। यथा हि पूर्वदेहाद्देहान्तरं गच्छतः खलु जीवात्मनः पुरुषस्य स्थूलेन देहेन सम्परिष्वङ्गो नेष्यते तथा सूक्ष्मेण देहेनापि न स एष्टव्यः। यत्कारणं गन्तव्यप्रदेशे सर्वत्र कारणसौलभ्येनास्ति स्थूलदेहवत् सूक्ष्मदेहोऽपि सुलभः। नहि यैः कारणैस्तत्र स्थूलो देहः प्रारभ्यते तैः सूक्ष्मो देहो न प्रारब्धुं शक्यते। यस्य चैवमारम्भो गन्तव्यप्रदेशे सर्वत्र सुलभो न तत्सम्परिष्वङ्गो देहाद्देहान्तरं गच्छतस्तस्य कथञ्चित् सङ्गच्छते। निष्प्रयोजनत्वात्। सप्रयोजनं हि सर्वदा सर्वत्र प्रेक्षावद्भिः समाश्रीयते न निष्प्रयोजनम्। न च तदानीं तत्सम्परिष्वङ्गस्य किञ्चित् प्रयोजनं पश्यामः। तस्मात् पूर्वदेहं परित्यज्य देहान्तरं प्रतिपद्यमानो जीवात्मा पुरुषो लिङ्गदेहेनासम्परिष्वक्त एव रंहति न सम्परिष्वक्त इति। एवं प्राप्ते प्रतिविधीयते—**सम्परिष्वक्तः प्रश्नप्रतिवचनाभ्याम्**। एवं हि छान्दोग्योपनिषदि पञ्चाग्निविद्यायां प्रश्नप्रतिवचने भवतः "**वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति**" (छां० ५। ३। ३) इति प्रश्नः, द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्चाहुतीः प्रदर्श्य "**इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति**" (छां० ५। ९। १) इति च प्रतिवचनम्। तत्रोभयत्र "आपः" इति जीवात्मविशिष्टो लिङ्गदेह उच्यते। तन्निमित्तमनन्तरं प्रवेदयिष्यते। तासां पुरुषवचस्त्वं च स्थूलदेहप्राप्तौ पुरुषशब्दाभिलप्यत्वम्। यदि हि जीवात्मा पुरुषः खलु पूर्वदेहं परित्यज्य देहान्तरं प्रतिपद्यमानो लिङ्गदेहेन सम्परिष्वक्तो न रंहेत् तदा तच्छब्दानामपां पञ्चम्यामाहुतौ योषिति पुरुषवचस्त्वं न पृच्छ्येत नापि तथा प्रत्युच्येत। नहि तत्सम्परिष्वङ्गेण रंहणाभावे तद्गोचरस्तादृशः प्रश्नो वा प्रतिवचनं वा तादृक् कर्हिचिद् घटते। न चोन्मत्तवदेते प्रश्नप्रतिवचने राज्ञः प्रवाहणस्य प्रवर्तेते येन नाद्रियेयातां निरर्थके च परिकल्प्येयाताम्। न च सूक्ष्मदेहस्य स्थूल-

देहवत् सर्वत्र सुलभत्वमपि जीवात्मनः पुरुषस्य तत्सम्परिष्वङ्गाभावे हेतुरवकल्पते । तथा सति लोकपरलोकयोस्तद्गमनागमनस्यैवानुपपत्तेः । लिङ्गदेहव्यपाश्रयं हि जीवात्मनः पुरुषस्य लोकपरलोकयोर्गमनागमनमिष्यते । लोकाल्लोकान्तरं गच्छतस्तस्य चेत्स्थूलदेहेनेव लिङ्गदेहेनापि सम्परिष्वङ्गो नाभ्युपगम्येत तदा केवलस्यात्मनः कूटस्थनित्यत्वेन क्रियाविकाराश्रयत्वासम्भवात् तत्र गमनागमनमेव नोपपद्येत । नहि यस्य स्वरूपतः क्रियाविकारो नोपजायते तस्य तद्धेतुपदार्थान्तरसम्परिष्वङ्गाभावे कुत्रचिद् गमनागमनमुपपद्यते । लिङ्गदेहो हि क्रियाविकाराश्रयो भवन् स्वपरिष्वङ्गेण कूटस्थनित्यं सन्तमेनं लोकाल्लोकान्तरं नयति देहाद्देहान्तरं प्रापयति । यत्रेदमाम्नायते **"तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य"** (बृ० ४ । ४ । ६) इति । न च यन्निबन्धनं यस्य लोकपरलोकयोर्गमनागमनं सूपपद्यते तत्सम्परिष्वङ्गाभावस्तस्य कर्हिचिदभ्युपेतुं शक्यते, सर्वत्र कारणसौलभ्येन स्थूलदेहवत् सुलभोऽपि स किं न भवेत् । एतेन प्रयोजनाभावोऽपि प्रत्याख्यातो वेदितव्यः । प्रयोजनस्य सुव्यक्तत्वात् । अस्ति सूक्ष्मदेहसम्परिष्वङ्गस्य लोकपरलोकयोर्गमनागमनं प्रयोजनं सुव्यक्तम् । नहि तत्सम्परिष्वङ्गाभावे केवलो जीवात्मा पुरुषस्तत्र गन्तुमागन्तुं वा तस्मात् कर्हिचिदीष्टे । मन्त्रवर्णश्च देहाद्देहान्तरं गच्छतो जीवात्मनः पुरुषस्य लिङ्गदेहेन सम्परिष्वङ्गं साक्षादुपदिशति **"अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः"** ( ऋ० २।३।२१।३८ ) इति । **स्वधया**=कार्य्ये कारणप्रयोगः, प्रकृतिकार्य्येण **मर्त्येना**=छान्दसो दीर्घः, मरणधर्मणा लिङ्गदेहेन **गृभीतः**=सम्परिष्वक्तः **सयोनिः**=देहान्तरयोनिना क्लेशकर्मादिना सहितो**ऽमर्त्यः**=स्वरूपतो मरणरहितो जीवात्मा पुरुषो**ऽपाङेति**=कदाचिदधो गच्छति **प्राङेति**=कदाचिदूर्ध्वं गच्छति घटीयन्त्रवदित्यर्थः । मन्त्रवर्णोपदिष्टं च नः सर्वदा सर्वत्रः स्वतः प्रमाणं न शक्यते पुरुषमतिप्रभवेण तर्केणाप्रमाणीकर्तुम् । तस्माद्देहाद्देहान्तरप्रतिपत्तौ

लिङ्गदेहेन सम्परिष्वक्त एव कर्मफलभोगार्थं गच्छति जीवात्मा पुरुष-इति निश्चयः ॥ १ ॥

**स्यादेतत्**-देहाद्देहान्तरप्रतिपत्तौ लिङ्गदेहेन सम्परिष्वक्तस्य रंहणे योऽयं हेतुरुपन्यस्यते प्रश्नप्रतिवचनाभ्यामिति, स नोपपद्यते । तत्रो-भयत्रापां पञ्चम्यामाहुतौ योषिति पुरुषवचस्त्वनिर्देशेन लिङ्गदेहस्य तद-निर्देशात् । नहि तन्निर्देशाभावे तस्य तत्सम्परिष्वङ्गेण रंहणं कर्हिचिन्नि-श्चेतुं शक्यत इति । अस्योत्तरमाह—

**"त्र्यात्मकत्वात्तु भूयस्त्वात्"** ॥ २ ॥

प्रश्ननिरूपणयोरिति सप्तम्या विपरिणम्यानुवर्तते । तुशब्देनोक्ताशङ्का व्यावर्त्यते । **त्र्यात्मकत्वात्**=भूतसूक्ष्मबाह्याभ्यन्तरकरणेति त्रिरूपत्वाद् **भूयस्त्वात्**=तत्र चाश्रयत्वेन भूतसूक्ष्माणां वैशेष्यात् तद्बहुलाभिरद्भि-र्लिङ्गदेहो निर्दिश्यते प्रश्नप्रतिवचनयोरित्यर्थः ।

यथा हि स्थूलो देहः किलास्थिस्नायुमज्जात्वङ्मांसशोणितानां समुदाय-रूपत्वात् षडात्मकः सन्नस्थिस्नायुमज्जानां पितृतस्त्वङ्मांसशोणितानां च मातृतः प्रवृत्तेरवान्तरभेदेन द्व्यात्मको व्यपदिश्यते तथा भूतसूक्ष्मादि-सप्तदशतत्त्वानां समुदायरूपत्वात् सप्तदशात्मकः सन्नपि लिङ्गदेहो भूत-सूक्ष्माणि पञ्च, बाह्यकरणानि दश, वृत्तिभेदेन भिन्ने मनोबुद्धी द्वे चाभ्य-न्तरकरणे इत्यवान्तरभेदेन त्र्यात्मको व्यपदिश्यते । तत्राश्रयत्वात् प्रधानानि भूतसूक्ष्माणि, तानि चाप्कल्पत्वादब्बहुलानि तदानीमिति बहुलाभिरद्भिरेव सूक्ष्मो देहः प्रश्नप्रतिवचनयोर्निर्दिश्यते । दृश्यन्ते चेदृशो बहवो निर्देशाश्छत्रिणो गच्छन्ति ब्राह्मणानां ग्राम इत्यादय इति तादृङ्निर्देशेऽपि न किञ्चिद् हीयते । अप्शब्दश्च गर्भसंज्ञितेषु जीवात्मो-पेतेषु सूक्ष्मदेहेषु प्रयुज्यमानो निरीक्ष्यते **"तस्मिन्नपो मातरिश्वा दधाति"** ( यजु० ४० । ४ ) इति । तत्सामान्यात् प्रश्नप्रतिवचनयो-रपि तत्रैव स प्रयुक्त इति निश्चीयते । तथा चास्ति तत्र लिङ्गदेहस्य निर्देश इत्युपपन्नम् । तस्माद् देहान्तरप्रतिपत्तौ रंहति तत्सम्परिष्वक्तो जीवात्मा पुरुष इति युक्तमवगम्यते ॥ २ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"प्राणगतेश्च"** ॥ ३ ॥

तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्त इति मण्डूकप्लुतिन्यायेनानुवर्तते । पूर्वत्रैवायं हेतुरिति चार्थः । **प्राणगतेः**=प्राणोत्क्रान्तेरवगम्यते देहान्तरप्रतिपत्तौ लिङ्गदेहेन सम्परिष्वक्तो रंहति जीवात्मा पुरुष इत्यर्थः ।

जीवात्मना पुरुषेण हि वागादिप्राणानामुत्क्रान्तिस्तावच्छ्रूयते **"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति"** ( बृ० ४ । ४ । २ ) इत्याद्यासु श्रुतिषु । चेदसौ देहान्तरप्रतिपत्तौ लिङ्गदेहेन सम्परिष्वक्तो न रंहेत् तदा न जातु तस्मिन्नुत्क्रामति तदुत्क्रान्तिः श्रूयेत । नह्यसती सा श्रावयितुं शक्यते । तदुत्क्रान्त्या च लिङ्गदेहस्योत्क्रान्तिः प्रव्यक्तमवगम्यते । तेषां ततो व्यतिरेकाभावात् । नहि वागादयः प्राणाः सूक्ष्मदेहतो व्यतिरिच्यन्ते । **"विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र"** ( प्र० ४ । ११ ) इत्यादौ श्रुत्यन्तरे च सूक्ष्मदेहसम्परिष्वङ्गो जीवात्मनः पुरुषस्य विस्पष्टं प्रतिपाद्यते । तस्माद्देहान्तरप्रतिपत्तौ लिङ्गदेहेन सम्परिष्वक्तो रंहति जीवात्मा पुरुष इति युक्तमवगच्छामः ॥ ३ ॥

तदेतदाक्षिप्य समाधत्ते—

**"अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्"** ॥ ४ ॥

प्राणगतिरिति प्रथमया विपरिणम्यानुवर्तते । नेत्याक्षेपबलेन लभ्यते । **अग्न्यादिगतिश्रुतेः**=अग्निवाय्वादिषु गतिश्रवणाज्जीवात्मना पुरुषेण वागादिप्राणगतिर्नोपपद्यत इति चेत्=यद्युच्यते तदा **न**=न वाच्यम्, कुतः? **भाक्तत्वात्**=भक्त्या प्रवृत्तत्वात् तत्र तद्गतिश्रुतेर्गौणित्वादित्यर्थः ।

**अथोच्येत**—यदुक्तं जीवात्मना पुरुषेण वागादिप्राणानां गतिश्रुतेरवगम्यते लिङ्गदेहेन सम्परिष्वक्तो देहाद्देहान्तरं रंहति जीवात्मा पुरुष

इति। तन्नोपपद्यते। तेषां मरणवेलायामग्न्यादिषु गतिश्रुतेः। वागादीनां हि प्राणानां जीवात्मनः पुरुषस्य मरणवेलायामग्न्यादिषु गतिः श्रूयते **"यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः"** (बृ० ३ । २ । १३) इति। **"देवाश्च सर्वे प्रतिदेवतासु"** (मुं० ३ । २ । ७) इति च। चेदिमे देहाद्देहान्तरं गच्छता जीवात्मना पुरुषेण गच्छेयुस्तदा नैषामग्न्यादिषु गतिः श्रूयेत। नहि जीवात्मना तेन गच्छतां तेषां तत्र गतिः श्रावयितुमीश्यते। न च श्रुतिरन्यथा किञ्चिच्छ्रावयति। तत्र तद्गतेश्च न तत्समुदायात्मना लिङ्गदेहेन सम्परिष्वक्तस्य तस्य देहाद्देहान्तरे गमनं कर्हिचिदुपपद्यते। तस्मादेष देहान्तरप्रतिपत्तौ रंहति लिङ्गदेहेन सम्परिष्वक्त इत्ययुक्तमिति। **नैतद् वक्तव्यम्**। तत्र तद्गतिश्रुतेर्भाक्तत्वात्। येन हि गुणेन शब्दः खलु मुख्यार्थाद् भज्यते स भक्तिरिति व्यपदिश्यते। भक्त्या यत् प्रवर्तते तद् भाक्तम्। वागादिप्राणानामग्न्यादिषु गतिश्रवणमप्यत्र भाक्तं वेदितव्यं न मुख्यम्। अग्न्यादयो देवाः किल जीवनकाले वागादिप्राणान् स्वस्वविषयप्रकाशनशक्त्यभिव्यञ्जनेनानुगृह्णन्ति, मरणकाले च तेषां जीवात्मना पुरुषेण गमनादेष तदनुग्रहो विनिवर्तते। तद्विनिवृत्तिमात्रं गुणमपेक्ष्य चाग्न्यादीन् गच्छन्ति वागादय इति श्रुत्या श्राव्यते न वास्तवीं तत्र तद्गतिमपेक्ष्य। तदिदं वाक्यशेषात् स्फुटमवगम्यते। अस्ति तावद् वाक्यशेषः **"ओषधीर्लोमानि वनस्पतीन् केशाः"** (बृ० ३ । २ । १३) इति। तत्र या लोम्नामोषधिषु केशानां च वनस्पतिषु गतिः श्राव्यते सा भाक्ती श्राव्यते न मुख्या। नहि लोमानि केशाश्चोत्प्लुत्य गच्छन्त्योषधीर्वनस्पतींश्च कदाचिदिति सम्भवति। तस्या भाक्तित्वे च तत्सामान्याद् वागादीनामग्न्यादिषु गतिरपि भाक्ती शक्यतेऽवगन्तुम्। अन्यथाऽर्द्धजरतीयानुहरणं प्रसज्येत। न च तदिष्यते। तस्माद् गच्छन्ति जीवात्मना पुरुषेण प्राणा इत्युपपद्यते। तदुपपत्त्या च देहान्तरप्रतिपत्तौ रंहति तत्सम्परिष्वक्तो जीवात्मा पुरुष इत्युपपद्यतेतराम्॥ ४॥

अत्राशङ्क्य परिह्रियते—

**"प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः"** ॥ ५ ॥

नेत्यनुवर्तते । **प्रथमे**=द्युलोकाख्ये प्रथमेऽग्नावश्र**वणात्**=लिङ्गदेहवचनानामपां होम्यद्रव्यत्वेन श्रवणाभावाद् गम्यते न लिङ्गदेहेन सम्परिष्वक्तो रंहति जीवात्मा पुरुष इति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः ? **हि**=यतस्**ता एव**=लिङ्गदेहवचना आप एव तत्र होम्यद्रव्यत्वेन श्रद्धयाऽभिप्रेयन्ते, कुतोऽवगम्यते ? **उपपत्तेः**=प्रश्नप्रतिवचनैकवाक्यतोपपत्तेरित्यर्थः ।

**अथोच्येत**—यदुक्तं देहान्तरप्रतिपत्तौ लिङ्गदेहेन सम्परिष्वक्तो रंहति जीवात्मा पुरुष इति पञ्चाग्निविद्याप्रश्नप्रतिवचनाभ्यामवगम्यते । तन्नोपपद्यते । द्युलोकाख्ये प्रथमेऽग्नौ लिङ्गदेहवचनानामपां होम्यद्रव्यत्वेन श्रवणाभावात् । यदि हि लिङ्गदेहवचनाः किलापो द्युलोकाख्ये प्रथमेऽग्नौ होम्यद्रव्यत्वेन श्रूयेरन् तदा तासामाहुतिपारम्पर्य्येण पञ्चम्यामाहुतौ योषिति पुरुषवचस्त्वं सम्पद्यत इति मन्येत, देहान्तरप्रतिपत्तौ च लिङ्गदेहेन सम्परिष्वक्तो रंहति जीवात्मा पुरुष इति निःशङ्कं मन्येत । न च ता आपस्तस्मिन् प्रथमेऽग्नौ होम्यद्रव्यत्वेन श्रूयन्ते । पञ्चाग्निविद्यायां हि द्युलोकादीन् पञ्चाग्नीन् परिकल्प्य तेषां च **"असौ वाव लोको गौतम ! अग्निः"** ( छां० ५ । ४ । १ ) इति प्रथमं द्युलोकाख्यमग्निं प्रदर्श्य तत्र होम्यद्रव्यत्वेन श्रद्धा तावच्छ्राव्यते **"तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति"** ( छां० ५ । ४ । २ ) इति । **देवाः**=अग्निभेदाः सूर्य्यरश्मयः । श्रद्धा चास्तिक्यबुद्धिः, चेतसोऽभिरुचिरिति यावत् प्रसिद्धा । न च सा कथञ्चिदापो भवितुमर्हति । गुणस्य द्रव्यत्वासम्भवात् । न चानपां तस्यास्तत्र होतव्यत्वे पञ्चम्यामाहुतौ पुरुषवचस्त्वसम्पत्तिः सम्भावयितुमपि शक्यते । तस्माद् देहान्तरप्रतिपत्तौ लिङ्गदेहेन सम्परिष्वक्तो रंहति जीवात्मा पुरुष इत्येतदनुपपन्नमिति । **नैतद् वक्तव्यम्** । तत्र श्रद्धाशब्देनापामभिधानस्यैवाभिप्रेतत्वात् । यः

खलु शब्दो यत्र यदर्थाभिप्रायेण प्रयुज्यते स शब्दस्तत्र तमेवार्थमभिधत्ते नान्यं कञ्चनेति नियमः, यथा **"गोभिः श्रीणीत मत्सरम्"** (ऋ० ७।१।३।४) इत्यादौ गोविकारं क्षीरं गोशब्दः। यत्रेदं स्मर्य्यते **"गोभिः श्रीणीत मत्सरमिति पयसः, मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः"** (नि० २।२।१) इति। यथा वा **"गङ्गायामृषिकुलम्"** इत्यादौ गङ्गाकूलं गङ्गाशब्दः। श्रद्धाशब्दोऽप्यत्रावभिप्रायेणैव प्रयुज्यते नास्तिक्यबुद्ध्यभिप्रायेण। स यदि तद्बुद्ध्यभिप्रायेणेह न प्रयुज्यते तदा न तां बुद्धिमभिधातुं क्षमते। अवभिधाने च तस्य नास्ति कश्चित् सन्देहः। यत्कारणं स तदभिप्र. णैवात्र प्रयुज्यते। तदिदं प्रश्नप्रतिवचनयोरेकवाक्यतोपपत्तेरध्यक्षमवगम्यते। यदि हि श्रद्धाशब्दस्यानभिधानाभिप्रायेण प्रयोगस्तावदभ्युपेयते तदा तच्छब्देनापामभिहितत्वात् प्रश्नप्रतिवचनयोरेकवाक्यत्वमुपपद्यते, अन्यथा तु नोपपद्यते। अस्ति **"वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति"** (छां० ५।३।३) इति प्रश्नः। तत्प्रतिवचनावसरे प्रथमाहुतिस्थाने यदि श्रद्धाशब्देन होम्यद्रव्यमास्तिक्यबुद्धिरेवोच्येत तदाऽन्यथा प्रश्नः प्रतिवचनं चान्यथेत्युभयोरेकवाक्यता नोपपद्येत, **"इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति"** (छां० ५।९।१) इत्युपसंहारोऽपि च न उपगच्छेत। युक्ता च तदुपपत्तिरुपसंहारस्य च सङ्गतिः। आपश्चात्र लिङ्गदेहोपेतो जीवात्मा पुरुष इत्युक्तम्। पुरुषश्च श्रद्धामयः। यत्रेदं स्मर्य्यते **"श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः"** (गी० १७।३) इति। न च श्रद्धामयस्य श्रद्धाशब्देनाभिधानं कथञ्चिद् विरुध्यते। अप्स्वपि चान्यत्र श्रद्धाशब्दः प्रयुज्यमानो निरीक्ष्यते **"श्रद्धा वा आपः"** (तै० ब्रा० ३।२।४) इति। तस्माद् देहान्तरप्रतिपत्तौ लिङ्गदेहेन सम्परिष्वक्तो रंहति स्वकर्मफलभोगार्थं जीवात्मा पुरुष इत्यचलोऽयं वैदिको राद्धान्तः॥ १५॥

अत्र पुनराशङ्क्य समाधत्ते—

**"अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः" ॥ १६ ॥**

नेत्यनुवर्तते । **अश्रुतत्वात्**=प्रश्नप्रतिवचनयोर्लिङ्गदेहवचनानामपां रंहणस्य श्रवणेऽपि तत्सम्परिष्वक्तस्य जीवात्मनः पुरुषस्य श्रवणाभावान्न स देहान्तरप्रतिपत्तौ तत्सम्परिष्वक्तो रंहतीत्युपपद्यत इति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः ? **इष्टादिकारिणाम्**=उत्तरत्रोक्तानामिष्टादिकर्मानुष्ठायिनां **प्रतीतेः**=अत्र प्रत्यभिज्ञातेस्तत्सम्परिष्वक्तो रंहतीत्युपपद्यत इत्यर्थः ।

**अथोच्येत**–ये हि पञ्चाग्निविद्यायां प्रश्नप्रतिवचने तावदुदाह्रियेते ताभ्यां लिङ्गदेहवचनानामपामेव रंहणं प्रतिपद्यते न तत्सम्परिष्वक्तस्य जीवात्मनः पुरुषस्य । नहि तत्रापामिव तच्छ्रावयिताऽपि शब्दः कश्चिद् विद्यते येन वयं तासामिव तत्सम्परिष्वक्तस्यापि रंहणं प्रतिपद्येमहि । न च श्रवणाभावे तत् प्रतिपत्तुं शक्यते । तस्मादेतदनुपपन्नमिति । **नैतद्वक्तव्यम्** । प्रत्यभिज्ञासिद्धत्वेनोपपन्नत्वात् । यद्यपि पञ्चाग्निविद्यायां समाम्नातयोः प्रश्नप्रतिवचनयोराप एव साक्षाद् रंहन्त्यः श्रूयन्ते न तत्सम्परिष्वक्तो जीवात्मा पुरुषः, तथापि तत्सम्परिष्वक्तस्य तस्य रंहणमुत्तरस्माच्छ्रुतिवाक्यादिह प्रत्यभिज्ञायते । अस्ति तावदुत्तरत्र श्रुतिवाक्यम् **"अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति, धूमाद् रात्रिम्"** ( छां० ५ । १० । ३ ) इत्यारभ्य **"पितृलोकादाकाशमाकाशाच्चन्द्रमसम्, एष सोमो राजा"** ( छां० ५ । १० । ४ ) इत्येवमन्तम् । **ये**=विधिवदधीतवेदवेदाङ्गविद्या ये मनुष्याः **ग्रामे**=गृहाश्रमेऽवस्थाये**ष्टम्**=अग्निहोत्रादिकं **पूर्त्तं**=विश्वविद्यालयस्थापनादिकं **दत्तं**=नानाविधं दानं येन परिव्राडनाथातिथिप्रभृतयो देशोपकारिणो भवेयुरित्येतत् त्रयं **कर्मोपासते**=सम्यगनुतिष्ठन्ति **ते**=त इष्टादिकारिणो महाधियो **धूमं**=यत्पर्य्यन्तं धूमस्य गतिर्यत्र विरलाः किल सूर्य्यरश्मयस्तत्पर्य्यन्तं पितृयानस्यादिमं प्रदेशम**भि**

**सम्भवन्ति**=प्राप्नुवन्ति, धूमाद् **रात्रिं**=निशामित्येवं तत्तत्प्रदेशपरम्परा-क्रमेण **चन्द्रमसं**=चन्द्रमसं लोकमभिसम्भवन्ति प्राप्नुवन्ति, तत्रैव=जात्य-भिप्रायमेकवचनम्, एते **सोमराजा**=सोमराजानः सोमवद्देदीप्यमानदेहा-श्चन्द्रलोकभोग्योपभोगयोग्यधृतदिव्यदेहाः सम्पद्यन्ते स्वस्वकर्मानुसारेणे-त्यर्थः । तत्र ये तावदेते वेदविहितेष्टादिकर्मकारिणो धूमादिना पितृ-यानेन दक्षिणमार्गेण चन्द्रमसं लोकं प्राप्ताः सोमराजानः श्रूयन्ते ते नूनमिहापि प्रतीयन्ते "**तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति**" ( छां० ५ । ४ । २ ) इति श्रुतिसामान्यात् । समानं ह्युभयत्र सोमराजत्वश्रवणम् । न च समाने तस्मिन्नुत्तरत्र लिङ्गदेहेन सम्परिष्वक्तानां जीवात्मनां चन्द्रलोकं प्रति रंहणं पूर्वत्र च केवलस्य लिङ्गदेहस्येति कथञ्चित् सङ्गच्छते । श्रुतिविप्रतिषेधापत्तेः । नहि श्रुतिः किञ्चिद् विप्रतिषिद्धं श्रावयितुमर्हति । न च केवलस्य लिङ्गदेहस्य रंहणमप्युपपद्यते । व्यर्थत्वात् । कर्मफल-भोगाय हि लोकान्तरे रंहणमभ्युपेयते । स च जीवात्मनः पुरुषस्य सम्भवति न लिङ्गदेहस्याचेतनत्वादिति व्यर्थस्तद्रंहणाभ्युपायः । व्याप-कत्वं च जीवात्मनो निराकार्य्यं सविस्तरमधस्तादिति न तद्व्याजेनापि शक्यते केवलस्य लिङ्गदेहस्य रंहणमभ्युपेतुम् । अत एव प्रश्नप्रतिवचनयो-रप्यप्शब्दो जीवात्मसहितस्य लिङ्गदेहस्य वाचक एवाश्रीयते न लिङ्ग-देहमात्रस्य । शङ्कासमाधाने च तदेतद्रहस्योद्घाटनार्थं प्रवर्तेते शिष्य-बुद्धिव्युत्पादनार्थं चेति सर्वं चतुरस्रम् । तस्माद् देहान्तरप्रतिपत्तौ रंहति लिङ्गदेहेन सम्परिष्वक्तो जीवात्मा पुरुष इत्युपपद्यते ॥ ६ ॥

**अथोच्येत**—न खलु स्वकर्मफलभोगाय लिङ्गदेहेन सम्परिष्वक्तो लोकाल्लोकान्तरं गच्छति जीवात्मा पुरुष इत्युपपन्नमिदमभिधीयते । यत्कारणं चन्द्रमसं लोकं गतानामिष्टादिकारिणां तेषां देवान्नत्वं देवैर्भक्ष्य-माणत्वं चोपदिशति श्रुतिः "**एष सोमो राजा, तद्देवानामन्नं तं देवा भक्षयन्ति**" ( छां० ५ । १० । ४ ) इति । न च देवैर्भक्ष्य-

माणानां तेषां कर्मफलभोगः कथञ्चिद् घटते। अवासिता हि भोगाय कल्पन्ते न भक्षिता इति। अस्योत्तरं पठति—

**"भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयति"** ॥ ७ ॥

इष्टादिकारिणामित्यनुवर्तते। त्वर्थेन वाशब्देनोक्ताशङ्का व्यावर्त्यते। **भाक्तं**=चन्द्रमसं लोकं गतानामिष्टादिकारिणामुपदिश्यमानं देवान्नत्वं तद्भक्ष्यत्वं चोभयं भाक्तं गौणं वेदितव्यम्, कुतः? **अनात्मवित्त्वात्**= आत्मभिन्नं कर्मैव श्रेयःसाधनमिति वेदितृत्वात् कर्मित्वादिति यावत्, **तथा हि**=यथा चानात्मविदां कर्मिणां तदुभयं भाक्तं तथैव **दर्शयति**=कर्मफलभोगं प्रतिपादयन्ती श्रुतिरवगमयतीत्यर्थः।

यत् खलु स्वकर्मफलभोगाय चन्द्रलोकं गतानामिष्टादिकारिणां जनानां देवान्नत्वं तद्भक्ष्यत्वं चोपदिश्यते तद् भाक्तमुपदिश्यते न मुख्यम्। मुख्ये तस्मिन् तद्विधायकशास्त्रवैयर्थ्यप्रसङ्गात्। स्वर्गादिफलप्राप्तिकामनया हि सर्वोऽधिकारिवर्गः शास्त्रविहिते कर्मणि तावत् प्रवर्तते। तत्फलं चेच्चन्द्रलोकं गतानां तेषां देवान्नत्वं तद्भक्ष्यत्वं चोभयं मुख्यमुपदिश्येत तदा कोऽपि तदनुष्ठाने न प्रवर्तेत। नह्यात्मनो देवान्नत्वं तद्भक्ष्यत्वं च यथाशक्यं केनचिदभिलषितुं पार्य्यते। सर्वस्यात्मप्रियत्वनियमात्। आत्मा हि सर्वस्य प्रियो भवति न तस्य देवान्नत्वं देवभक्ष्यत्वं च। यत्रेदमाम्नातम् **"न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति, आत्मनस्तु कामाय सर्वं प्रियं भवति"** (बृ० ४।५।६) इति। तदनुष्ठाने प्रवृत्त्यभावे च **"अग्निहोत्रं होतव्यम्"** (शत० २।२।२।१८) **"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः"** (यजु० ४०। २) इत्येवञ्जातीयकं सर्वं तद्विधायकं शास्त्रं वैयर्थ्यमापद्येत। तद्विहितानुष्ठानमेव हि सार्थ्यं शास्त्रस्य शास्त्रविदो मन्यन्ते, तदननुष्ठानं च वैयर्थ्यम्। न च शास्त्रमस्ति मात्रयाऽपि व्यर्थम्। न चोभयस्य तस्य भाक्तत्वे शास्त्रे प्रसरत्येवंविधः कश्चिद्दोषः। भाक्तत्वं चोभयस्य तस्य शक्यते कर्मित्वेन तेषामुपदेष्टुम्।

कर्मिणां हि तेषां लोको देहोऽन्नकल्पत्वादन्नमित्युपदिश्यते। कर्मसम्पाद्यत्वस्योभयत्रापि समानत्वात्। यथा ह्यन्नं खलु कर्मणा सम्पाद्यते तथा लोकोऽपि कर्मणा सम्पाद्यते। समाने चोभयत्र कर्मसम्पाद्यत्वे चन्द्रलोकं गताः कर्मिणोऽपि ते तल्लोकत्वादन्नमिति भक्त्योपदिश्यन्ते। भक्तिरत्र कर्मसम्पाद्यत्वम्। अन्नस्य च देवभक्ष्यत्वं सुप्रसिद्धम्। तत्कल्पत्वात् कर्मिणोऽपि देवभक्ष्या उपदेष्टुं शक्यन्ते। अन्नं हि सम्पद्यमानं यथाकालं लौकिका देवा भक्षयन्ति चन्द्रलोकं गतान् कर्मिणश्चेश्वरकालप्रभृतयः सर्वे देवा इति विशेषः। तदिदमभिप्रेत्यैवोपदिशति श्रुतिः "**तद् देवानामन्नं तं देवा भक्षयन्ति**" (छां० ५। १०। ४) इति। स्पष्टो हि तस्या एषोऽभिप्रायो यथाऽन्नं कर्मणा जायते कालादिना चापक्षीयते तथेष्टादिकारिणोऽपि तेन तेन कर्मणा चन्द्रलोकाः जायन्ते कालादिना चापक्षीयन्ते नास्ति तेषामसौ लोको नित्य इति। परिस्फोरयति चैतत् समानविषयं श्रुत्यन्तरमपि "**ते चन्द्रं प्राप्यान्नं भवन्ति, ताँस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेताँस्तत्र भक्षयन्ति**" (बृ० ६। २। १६) इति। देवाः=सूर्य्यरश्मयः, तैर्यथा सोमो राजा चन्द्रमा आप्यायते वर्द्धतेऽपक्षीयते च तथा तल्लोकाः कर्मिणोऽपि देवैरीश्वरकालप्रभृतिभिराप्यायन्तेऽपक्षीयन्ते चेति द्रष्टव्यम्। कर्मिलोकस्यान्नवदुत्पद्यमानत्वं क्षयिष्णुत्वं चान्यत्रापि श्रूयते "**तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते**" (छां० ८। १। ६) इति। "**इष्टापूर्त्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः। नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति**" (मुं० १। २। १०) इति च। तदिदं चन्द्रलोकं गतानामिष्टादिकारिणामुपदिष्टं देवान्नत्वं देवभक्ष्यत्वं च भाक्तं तत्र कर्मफलभोगं प्रतिपादयन्ती श्रुतिः स्वयमवगमयति "**सोमलोके विभूतिमनुभूय पुनरावर्तते**" (प्र० ५। ४) इति। सोमलोके=चन्द्रलोके, विभूतिं=कर्मफलमैश्वर्य्यम्। न च तेषां देवान्नत्वे तद्भक्ष्यत्वे

च मुख्येऽभिप्रेयमाणे कर्मफलभोगः कर्हिचित् प्रतिपादयितुं शक्यते । आत्मनात्वविनाशित्वाभिप्रायेण तथाभिधाने तु सिध्यतितरां तदुभयं भाक्तम् । तस्मात् स्वकर्मफलभोगार्थं लिङ्गदेहेन सम्परिष्वक्तो लोकाल्लोकान्तरं गच्छति जीवात्मा पुरुष इत्युपपद्यतेतमां नास्ति कश्चिद्दोषः ॥ ७ ॥

देहान्तरप्रतिपत्तौ चन्द्रलोकपर्य्यन्तमिष्टादिकर्मभिर्लिङ्गदेहेन सम्परिष्वक्तो रंहति जीवात्मा पुरुष इति निर्धारितम् । चन्द्रलोकेनात्र तदुपलक्षितं प्रदेशमात्रं विवक्ष्यते, यत्किल वैदिकाः पितृलोकमन्तरिक्षं स्वरिति च व्याचक्षते । यत्रैतदाम्नातं भवति **"कर्मणा पितृलोकः"** ( बृ० १ । ५ । १६ ) **"अन्तरिक्षमथो स्वः"** ( ऋ० ८ । ८ । ४८ । ३ ) इति । सम्प्रति तस्य चन्द्रलोकादेतस्मादारंहणं निर्धारयितव्यम् । रंहणेनारंहणस्योपस्थितेः । तदेव निर्धारयिष्यन्नाह—

**"कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च" ॥ ८ ॥**

रंहतीति प्रकृतम्, तदेवारंहतीति भूत्वाऽनुषज्यते । **कृतात्यये**=कृतस्य चन्द्रलोकप्राप्तिसाधनस्येष्टादेः कर्मणोऽत्यये भोगेन क्षयेऽ**नुशयवान्**= भुक्तावशिष्टः सञ्चितकर्माशयोऽत्रानुशयः, कर्तारं पुरुषमनुशेते यावन्न विमुच्यते तावदनुगच्छतीति तद्व्युत्पत्तेः, तद्वान् सानुशय इति यावदारंहति पृथिवीलोकमागच्छति, कुतो विज्ञायते ? **दृष्टस्मृतिभ्यां**= श्रुतिस्मृतिभ्याम् । कथमागच्छति ? **यथा**=येन प्रकारेणे**तं**=गतं तथा, **अनेवं च**=अतथा च प्रकारान्तरेण चेत्यर्थः ।

इष्टादिकर्मणां हि फलभोगाय चन्द्रलोकं गतानामिष्टादिकारिणां भोगेन तत्परिक्षये सत्यारंहणं तावदाम्नायते **"तस्मिन् यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतम्"** ( छां० ५ । १० । ५ ) इति । **तस्मिन्**=चन्द्रलोके, **यावत्सम्पातं**=कर्माशयः सम्पातः, सम्पतति गच्छत्यनेनास्माल्लोकादमुष्मिन् लोके कर्मफलभोगार्थमिति तद्व्युत्पत्तेः, तमनतिक्रम्य यावत् कर्माशयो नोपभुज्यते ताव-

**वुषित्वा**=वासं कृत्वाऽथ=तद्भोगानन्तर**मेतमेव**=अध्वान्तरव्यावृत्ति-रवधारणार्थः, एतं वक्ष्यमाण**मध्वानं**=मार्गं पुनर्निवर्तन्ते=पुनःशब्दात् पूर्वमपि निवृत्ता इति गम्यते, पुनः परावर्तन्ते **यथा**=येन प्रकारेणे**तं**=गतमित्यर्थः । तत्र संशयः—किमयं सानुशयः पृथिवीलोकं प्रति चन्द्रलोका-दारोहति किंवा निरनुशय इति । निरनुशय इति पूर्वः पक्षः, सानुशय इति सिद्धान्तः । किं तावत्प्राप्तम्? निरनुशय इति वदामः । यावत्स-म्पातमिति समाम्नानात् । श्रुतिर्हि यावत्सम्पातमिति समामनन्ती स्व-कृतस्य कृत्स्नस्य कर्माशयस्य तत्र भोगं दर्शयति । न च कृत्स्नस्य तस्य तत्र भोगे सानुशयस्यारोहणं प्रतिपत्तुं शक्यते । तत्र कृत्स्नकर्मभोगश्च श्रुत्यन्तरेणापि प्रतिपाद्यते "**तेषां यदा तत् पर्य्यवैति अथेममे-वाकाशमभिनिष्पद्यन्ते**" ( बृ० ६ । २ । १६ ) इति । **तेषां**=चन्द्रलोकमारूढानां कर्मिणां **यदा**=यस्मिन् काले **तत्**=इह कृतं कर्म **पर्य्यवैति**=परिगच्छति परिक्षीयतेऽ**थ**=तदेत्यर्थः । इममेवाकाशमिति च पूर्वेणोक्तार्थम् । अनेनापि चन्द्रलोकं गतस्य यावानस्ति कर्माशयस्तावान् तेन तत्र भुक्त्वा परावर्त्यत इति व्यक्तमधिगम्यते । न च यावान् तत्र भोक्तव्यः कर्माशयस्तावान् भुक्त्वेति कल्पयितुं शक्यते । श्रुत्यन्तरविरो-धप्रसङ्गात् । यदि हि यावाँस्तत्र भोक्तव्यः कर्माशयस्तावान् भुक्त्वेति कल्प्येत तदा श्रुत्यन्तरविरोधः प्रसज्येत । विद्यते तावच्छ्रुत्यन्तरम् "**प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् । तस्मा-ल्लोकात् पुनरैत्यस्मै लोकाय कर्मणे**" ( बृ० ४ । ४ । ६ ) इति । जीवात्मा पुरुषोऽयं यत्किञ्चिदिह लोके कर्म करोति तस्या**न्तं**=फलममुष्मिँल्लोके **प्राप्य**=अनुभूय तस्माच्चन्द्रलोकादस्मै पृथिवीलोकाय पुनरैति=पुनरागच्छति **कर्मणे**=कर्मानुष्ठानार्थमित्यर्थः । तच्च यत्किञ्चेति कर्मणो विशेषणमुपाददानमिह कृतस्य सर्वस्य कर्माशस्य तत्र भोगं प्रतिपादयति । न च भुक्ते तस्मिन् सानुशयस्यारोहणं युज्यते । अनु-शयस्यैवाभावात् । अतो निरनुशयोऽयमारोहति नानुशयवानिति युक्तं **ब्रूमः** इति । **एवं** प्राप्तेऽभिधीयते—**अनुशयवान् श्रुतिस्मृतिभ्याम्** ।

भवतः खलु श्रुतिस्मृती याभ्यां चन्द्रलोकात् पृथिवीलोकं प्रत्यारोहतो जीवात्मनः पुरुषस्यानुशयसम्बन्धः स्फुटमवगम्यते । तद्यथाऽमुष्माल्लोकादिमं लोकं प्रत्यारोहन्तमधिकृत्याह श्रुतिः **"तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा, अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चण्डालयोनिं वा"** ( छां० ५ । १० । ७ ) इति । चरणशब्दः कर्माशयवचनो वर्णयिष्यते । तदित्यव्ययं तत्रार्थम् । अमुष्माल्लोकात् प्रत्यवरूढेषु तेषु ये जीवात्मानः पूर्वं **रमणीयचरणाः**=शोभनाचरणाः पुण्यकर्माण आसन् ते रेतःसिग्योगे सति **रमणीयां**=शोभनां पुण्यां **योनिं**=शरीर**मापद्येरन्**=प्रतिपद्येरन्निति यत् तद**भ्याशो ह**=क्षिप्रमेवाप्रतिबन्धेनेति द्रष्टव्यम्, कां तां योनिमापद्येरन्? **ब्राह्मणयोनिं क्षत्रिययोनिं वैश्ययोनिं** शूद्रयोनिमिति त्रैवर्णिकाश्रयत्वाल्लभ्यते । वाकारोऽनास्थायाम् । **कपूयचरणाः**=कुत्सिताचरणाः पापकर्माणः । शेषं पूर्ववत् । स्मृतिश्च **"चन्द्रादिलोकेऽप्यावृत्तिर्निमित्तसद्भावात्"** ( सां० ६ । ५६ ) इति । यदि हि चन्द्रलोकादारोहतो जीवात्मनः पुरुषस्यानुशयः कश्चन न विद्येत तदा न जातु श्रुतिस्मृतिभ्यां तस्यारोहणानन्तरं क्षिप्रमेव रमणीयारमणीययोनिप्राप्तिः प्रतिपाद्येत । नह्यनुशयाभावे साऽऽकस्मिकी कस्यचित् प्रतिपादयितुं शक्यते । अनुशयनिबन्धनश्चोच्चावचसुखदुःखोपभोगलक्षणः सर्वः संसारः प्रसिद्धः । न च जातमात्रस्य दृश्यमानः सोऽनुशयाभावो कथञ्चिदुपपादयितुं शक्यते । स्मृतिश्च **"निमित्तसद्भावात्"** इत्यधीयाना निःशङ्कमारोहतस्तस्यानुशयसम्बन्धमवगमयति । क्लेशावनद्धस्यानुशयस्यैवावृत्तेर्निमित्तत्वाभ्युपगमात् । न चैवमनुशयसिद्धे निरनुशयस्यारोहणं कथञ्चिदभ्युपेतुमीश्यते । यदुक्तं यावत्सम्पातमिति समाम्नानादिह कृतस्य कृत्स्नस्य कर्मणोऽमुत्र भोगो गम्यत इति । तन्न युक्तम् । तस्य फलदानप्रवृत्तेष्टापूर्तादिकर्मापेक्षयाऽप्युपपत्तेः । यथा हि **"कुर्वन्नेवेह कर्माणि जि-**

**जीविषेच्छतं समाः**" (यजु० ४० । २) इत्यादिना विहितमपि यावज्जीवमग्निहोत्रादिकं कर्म सायंप्रातःकालापेक्षयैव विधीयते नाहारविहारादिकालमात्रापेक्षयेति विज्ञायते तथा यावत्सम्पातमित्येतदपि फलदानप्रवृत्तेष्टापूर्त्तादिकर्मापेक्षयैव समाम्नायते न कर्ममात्रापेक्षयेति विज्ञातुं शक्यते । नह्येकमुपपद्यते नापरमिति वचोऽर्थवन्निभाल्यते । विशेषादर्शनात् । विशेषे चोपपत्त्यभावात् । सङ्कोचश्चोपक्रमानुरोधेन यथोपसंहारस्य घटते तथोपसंहारानुरोधेनोपक्रमस्यापि घटयितुं पार्य्यते नास्ति काचिदनुपपत्तिः । उपसंहारे च रमणीयचरणादिश्रुत्या यावत्सम्पातश्रुतिरमुत्रभोक्तव्येष्टादिकर्मपरा न कर्ममात्रपरेति प्रव्यक्तम् । एतेन "**तेषां यदा तत् पर्य्यवैति**" (बृ० ६ । २ । १६) इत्यादिका श्रुतिरपि व्याख्याता द्रष्टव्या । तत्रापि तत्पदस्यामुत्रभोक्तव्येष्टादिकर्मपरत्वेनाशेषकर्मपरत्वाभावात् । "**यत्किञ्चेह करोत्ययम्**" (बृ० ४ । ४ । ६) इत्यादिश्रुत्यन्तरमपि यत्किञ्च कर्मामुत्रभोक्तव्यं तावन्मात्रस्यैव भोगं दर्शयति न कर्ममात्रस्य । विशेषणं हि प्रवर्तमानं प्रकृतं विशिनष्टि नाप्रकृतम् । अतिप्रसङ्गात् । प्रकृतं चामुष्मिकफलमिष्टापूर्त्तादिकं कर्म न कर्ममात्रमिति यत्किञ्चपदेनापि तदेवेह निगद्यत इति सन्तोष्टव्यम् । किञ्चासौ कर्मणि प्रवृत्तो धीमान् न केवलमिष्टापूर्त्तादिकर्मैवेह समचेष्ट येनामुत्र तत्सर्वं भुक्त्वा निरनुशय एव परावर्तेत किन्तु वाङ्मनःकायचेष्टाप्रभवं नानाविधमिहामुत्रभोग्यं शुभाशुभं कर्म । तच्च सर्वं नामुत्र भोक्तुं शक्यते । नह्यत्र भोग्यं कर्म कदाचिदमुत्रभोगमर्हति । यच्चामुत्र भोगानर्हमत्र च भोगार्हं तदेव कर्मजातमनुशयः । तद्वानेवायं भोगेन नीते क्षयमामुष्मिकफले कर्मणि द्रागित्येव पृथिवीलोकमारोहति । यत्रेदं श्रूयते "**इष्टापूर्त्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति**" (मुं० १ । २ । १०) इति । स्मर्य्यते च "**ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति**" (गी० ९ । २१) इति । सोऽयं

श्रुतिस्मृत्योर्निर्धारितोऽर्थः । तस्मादिह सानुशयस्यैवारंहणं न निरनुशयस्येत्येतदेव युक्तं मतम् ।

आरंहणमागमनमवरोहणम् । तच्च तस्य यथेतं तथाऽतथा चोभयथेति द्रष्टव्यम् । धूमादिमार्गेण गमनमिति तु निश्चितम् । तत्रोपात्तयोर्धूमाकाशयोरारंहणे श्रवणाद् यथेतमिति समाम्नानाच्च यथेतमित्युच्यते । तत्रोपात्तस्य रात्र्यादेरश्रवणादनुपात्तस्य चाभ्रादेः श्रवणादनेवं चेति कथ्यते । चन्द्रलोकात् पृथिवीलोकं प्रति सानुशयस्यारंहणं श्रुतिस्मृतिभ्यामिति निश्चयः ॥ ८ ॥

अत्राशङ्क्य मतान्तरेण समाधत्ते—

**"चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः"** ॥ ९ ॥

आरंहतीति पूर्ववदनुषज्यते । यत इति शेषः । **चरणात्**=श्रुतिप्रतिपादितादाचरणादारंहतीति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः ? यत **उपलक्षणार्था**=चरणश्रुतिः कर्मोपलक्षणार्था विद्यते **कार्ष्णाजिनिः**=इति कार्ष्णाजिनिराचार्य्यो मन्यत इत्यर्थः ।

**अथोच्येत**—न खल्वनुशयादेष चन्द्रलोकादारंहति येन वयं सानुशयस्य तस्यारंहणं मन्यामहे । कुतस्तर्हि ? चरणात् । श्रुतिर्हि ब्राह्मणादियोनिविशेषापत्तिं कीर्तयन्ती चरणादस्यारंहणं स्वयमवगमयति **"तद्य इह रमणीयचरणाः"** ( छां० ५ । १० । ७ ) इत्यादिका । न च श्रुत्यवगतोऽर्थः शक्यतेऽपह्नोतुम् । न चात्र चरणशब्दोऽनुशयपरः प्रयुज्यत इति वक्तुं शक्यते । तस्याचारे प्रसिद्धत्वात् । आचारे खलु चरणशब्दः प्रसिध्यति । लौकिकाः स्युः परीक्षका वा भवेयुः सर्वे ते चरणं चारित्रमाचारः शीलं वृत्तमिति समानमभिदधते । भुक्तावशिष्टः सञ्चितकर्मराशिरनुशय इति च व्याख्यातम् । श्रुतिश्च कर्मचरणे भेदेन प्रत्यक्षमुपदिशति **"यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि । यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि"** ( तै० १ । ११ ) इति । **"यथाकारी यथाचारी**

**तथा भवति"** ( बृ० ४ । ४ । ५ ) इति च । न च भेदेनोपदिश्यमानयोरेकशब्दाभिलप्यत्वं कथञ्चिदुपपद्यते । तस्मादनुशयवानारंहतीत्ययुक्तमिति । **नैतद्युक्तम्** । उपलक्षणार्थत्वात् । अनुशयोपलक्षणार्था खल्वेषा चरणश्रुतिरिह विद्यते नाचारार्था । यथा हि **"गङ्गायां महाविद्यालयः"** इत्यादौ गङ्गाशब्दः प्रवाहवचनोऽपि लक्षणया तत्सम्बन्धिनं तीरमभिधत्ते तथाऽऽचारवचनोऽपि चरणशब्दो लक्षणया तत्सम्बन्धिनमनुशयमत्राभिधत्ते । अस्ति च गङ्गातत्तीरयोरिव चरणानुशययोरपि परस्परमङ्गाङ्गिभावः सम्बन्धः । तस्मादुदाहृता श्रुतिरनुशयादेव ब्राह्मणादियोनिविशेषप्राप्तिमाह न चरणादिति कार्ष्णाजिनिराचार्य्यो मन्यते ॥ ९ ॥

अत्र चरणनैरर्थक्यमशङ्क्य निराचष्टे—

**"आनर्थक्यमिति चेन्न तदपेक्षत्वात्"** ॥ १० ॥

चरणस्येति षष्ठ्या विपरिणम्यानुवर्तते । **आनर्थक्यं**=चरणोपलक्षितादनुशयाद् योनिविशेषप्राप्तौ चरणस्य नैरर्थक्यं नैष्फल्यं स्यादिति **चेत्**=यदि मन्यते तदा **न**=न मन्तव्यम्, कुतः ? **तदपेक्षत्वात्**=तदा चरणं परामृश्यते, तत्रानुशयस्य चरणापेक्षणादित्यर्थः ।

**अथ** मन्येत चरणशब्दस्य लक्षणयाऽनुशयप्रत्यायकत्वेऽनुशय एव योनिविशेषप्राप्त्यै कारणं सम्पद्येत न चरणम् । तथा च स्यादनर्थकम् । न च तस्यानर्थक्यमभ्युपगन्तुं शक्यते । विहितत्वात् । यथा हि शास्त्रेणानुशयः कर्म तावद् विधीयते तथा चरणमपि विधीयते **"आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च । तस्मादस्मिन् सदा युक्तो नित्यं स्यादात्मवान् द्विजः"** ( मनु० २ । १०८ ) इति । **"यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि"** ( तै० १ । ११ ) इति च । चरणमाचार इत्युक्तम् । न च विहितत्वेऽविशेषेऽपि योनिविशेषप्राप्तिफलमनुशय एव प्रसूते नाचार इति वचः प्रशस्यते । विनिगमकाभावात् । अतो ब्राह्मणा-

दियोनिविशेषप्राप्तौ कारणमाचार एव श्रुत्या प्रदर्श्यते नानुशय इति सम्यगवबुध्यते । तथा च फल्गु तदुपलक्षणार्था चरणश्रुतिरिति कार्ष्णाजिनिमतमिति । **नैतन्मन्तव्यम्** । तदपेक्षत्वात् । यदि हि चरणनिरपेक्षः खल्वनुशयो ब्राह्मणादियोनिविशेषप्राप्तौ कारणमभ्युपगम्येत तदाऽवश्यमाचरणं नैरर्थक्यमापद्येत । न च तन्निरपेक्षः स तत्र कारणमभ्युपगम्यते । यथा किल दर्शपूर्णमासाख्यं कर्म स्वर्गे फले जनयितव्ये प्रयाजानुयाजादिकमङ्गकर्म नियमेनापेक्षते तथाऽनुशयोऽपि योनिविशेषे फले जनयितव्ये स्वमङ्गमाचरणं नियमेनापेक्षते । तद्विना तस्य तज्जनकत्वानुपपत्तेः । नह्यङ्गाभावेऽङ्गिनः फलजनकत्वमुपपद्यते । न चोपलक्षणार्था चरणश्रुतिरित्येतावता चरणस्य योनिविशेषप्राप्तौ कारणत्वं व्यावर्त्यते येन तस्यानर्थक्यं प्रसज्येत । किं तर्हि? चरणसहितस्यानुशयस्य कारणत्वं व्यवस्थाप्यते । यदि हि चरणशब्दे खलु जहत्स्वार्था व्याप्रियेत तदा तत्परिग्रहाभावेनावश्यमानर्थक्यं प्रसज्येत । अजहत्स्वार्था तु तत्र व्याप्रियत इति भवति तस्यापि तेन सङ्ग्रहः । पुरुषार्थत्वपक्षेऽप्यनुशयारब्धे तत्तद्योनिविशेषेऽतिशयं कञ्चिदारप्स्यत इति न तदानर्थक्यशङ्काऽवकाशं लभते । अनुशयस्य शुभाशुभकर्माशयरूपत्वाद् योनिविशेषप्राप्तिकारणत्वं च श्रुतिस्मृतिषु प्रसेत्स्यते नास्ति तत्र नाम किञ्चिद् वक्तव्यम् । तस्मादनुशय एवेह चरणोपलक्षितो योनिविशेषे कारणं चरणश्रुतिश्च तदुपलक्षणार्थेति युक्तं कार्ष्णाजिनिमतम् ॥ १० ॥

आचारवचनेनापि चरणशब्देन शुभाशुभकर्माशयलक्षणोऽनुशयोऽत्र लक्ष्यत इति कार्ष्णाजिनिमतं प्रादर्शि । सम्प्रति तत्र मुख्य एवैष चरणशब्दो वर्तत इति बादरिमतं प्रदर्श्यते—

**"सुकृतदुष्कृते एवेति तु बादरिः" ॥ ११ ॥**

चरणमिति प्रथमया विपरिणम्यानुवर्तते । अवधारणेन चरणमाचार इति व्यावर्त्यते । तुना कार्ष्णाजिनिमतं व्यवच्छिद्यते । **सुकृतदुष्कृते**=सुकृतं पुण्यं दुष्कृतं पापं, तदुभयं **चरणं** चरणशब्दाभिधेयमिति **बादरिः**=बादरिराचार्यो मन्यत इत्यर्थः ।

इह खलु मुख्ययैव वृत्त्या पुण्यपापकर्मात्मकोऽनुशयश्चरणशब्देनाभिधीयते । तत्रापि तत्प्रसिद्धेः । नहि यत्रार्थे यः शब्दः प्रसिध्यति स तेन नाभिधातुं पार्य्यते । चरणशब्दश्चास्ति पुण्यपापात्मके कर्मणि प्रसिद्धः । दृश्यते हि यः कश्चिदिह शास्त्रेण विहितं पुण्यं कर्म यथाविध्यनुतिष्ठति लौकिकास्तं धर्मं चरत्येष महात्मा, यः पुनर्निषिद्धं पापं कर्म, तमधर्मं चरत्येष दुरात्मेति व्याचक्षते । न चानेन चरणं कर्मेति न प्रतिपद्यते । शास्त्रविहितप्रतिषिद्धाचारोऽपि च सुकृतदुष्कृतात्मा कर्मविशेष एव विद्यते नार्थान्तरं किञ्चित् । यत्रापि च क्वचित् कर्माचरणयोर्भेदव्यपदेशो दृश्यते स गोबलीवर्दन्यायेन सङ्गमयितुं शक्यते । तथा च **रमणीयचरणाः**=पुण्यकर्माणः, **कपूयचरणाः**=पापकर्माण इति मुख्ययैव वृत्त्या युक्तः श्रुत्यर्थः समाश्रयितुं न लक्षणया । मुख्ये सम्भवत्यमुख्यपरिग्रहस्यानौचित्यादिति बादरिराचार्य्यो मन्यते । अतोऽनुशयवानारंहतीति निर्बाधम् ॥ ११ ॥

इष्टादिकारिणां चन्द्रलोके गमनं ततो भोगानन्तरमागमनं चेत्येतन्निर्धारितम् । इदानीमनिष्टादिकारिणोऽपि चन्द्रलोकं गच्छन्ति किंवा न गच्छन्तीत्येतन्निर्धारयितव्यम् । कर्मित्वाविशेषाद् गमनमगमनं चानिष्टादिकारित्वादिति संशयः । तत्र गच्छन्तीति पूर्वः पक्षः, न गच्छन्तीति सिद्धान्तः । पूर्वं तावत् पूर्वपक्षेणोपक्रमते—

**"अनिष्टादिकारिणामपि च श्रुतम्" ॥ १२ ॥**

नेष्टादिकारिणामेव चन्द्रलोके गमनमित्याद्भिा समुच्चीयते । हेत्वर्थश्चः । इष्टादिकारिणामेव चन्द्रलोके गमनमिति न युक्तं पश्यामः, कुतः? **च**=यतो**ऽनिष्टादिकारिणामपि**=ये विहितमिष्टादिकर्म नाचरन्ति निषिद्धं च मद्यमांसभक्षणादिकमनुतिष्ठन्ति तेऽनिष्टादिकारिणः, नेष्टादि कर्तुं शीलं येषामिति तद्व्युत्पत्तेः, पापकर्माण इति निष्कृष्टोऽर्थः, तेषामपि **श्रुतं**=चन्द्रलोके गमनं श्रूयत इत्यर्थः ।

कौषीतकिब्राह्मणोपनिषदि श्रूयते "ये वै के चास्माल्लोकात्

**प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति"** (कौ० १ । २) इति । तत्र यः खलु सर्वशब्दः प्रयुज्यते स साधारण इष्टादिकारिणोऽनिष्टादिकारिणश्चोभयानविशेषेणाभिधत्ते । न च तत्सङ्कोचकः कश्चिदिह निरीक्ष्यते येनेष्टादिकारिविषय एव सङ्कुच्येत । पुनः शरीरारम्भश्च यथेष्टादिकारिणामिष्यते तथाऽनिष्टादिकारिणामप्यभिलष्यते । स च तेषां चन्द्रलोके गमनादेवावकल्पते नान्यथा । **"पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति"** (छां० ५ । ९ । १) इति पुनःशरीरारम्भायाहुतिसंख्यानियमात् । ननु **"पुरुषवचसः"** इति पुरुषशब्दो मनुष्यपरतया प्रयुज्यते न मनुष्यामनुष्यपरतया । नचानिष्टादिकारिणः प्रेत्य पुनर्मनुष्यशरीराय कल्पन्ते । तस्य पुण्यापुण्योभयारभ्यत्वप्रतिपादनात् **"उभाभ्यामेव मनुष्यलोकम्"** (प्र० ३ । ७) इति । मनुष्यलोकं=मनुष्यशरीरम् । अतो व्यर्थस्तेषां पुनःशरीरग्रहणाय चन्द्रलोके गमनाभ्युपाय इति चेत् । न । चन्द्रलोकादवतीर्णानां सारमेयादियोनिविशेषप्राप्तिसङ्कीर्तनेन पुरुषशब्दस्य मनुष्यामनुष्योभयपरत्वनिश्चयात् । नहि तस्य तत्परत्वाभावे चन्द्रलोकादवतीर्णानां कपूयचरणानां सारमेयादियोनिविशेषप्राप्तिः सङ्कीर्तयितुं शक्यते । तस्मादिष्टादिकारिणः स्युरनिष्टादिकारिणो वा भवेयुः सर्वे तेऽविशेषेण चन्द्रलोकं गच्छन्तीत्येतदेव युक्तं न केवलमिष्टादिकारिण इत्येतत् ॥ १२ ॥

नन्वेवमिष्टादिकारिणामनिष्टादिकारिणां च मियो विशेषो न स्यादविशिष्टगतित्वादिति । अस्योत्तरं पठति—

**"संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्"** ॥ १३ ॥

तुनाऽविशेषो व्यवच्छिद्यते । **संयमने**=विश्वनियन्तुर्भगवतो यमस्य सदनं संयमनं, संयम्यन्ते नानाजातीयाभिस्तीव्राभिर्वेदनाभिः परिवेष्ट्यन्ते हन्यन्ते जीवात्मानो यत्रेति तद्व्युत्पत्तेः, तस्मिन्ननुभूय=विविधा यामीर्यातना उपभुज्य**इतरेषाम्**=इष्टादिकारिभ्यो भिन्नानामनिष्टादिकारिणामारो-

**हावरोहौ**=पृथिवीलोकाच्चन्द्रलोके गमनमारोहः, चन्द्रलोकात् पृथिवीलोकं प्रत्यागमनमवरोहः, तावुभौ भवतः, कुतो विज्ञायते? **तद्गतिदर्शनात्**=गतिः प्राप्तिः, तत्र तद्गतेर्दर्शितत्वादित्यर्थः।

अस्ति खलु चन्द्रलोकगमने समानेऽप्यनिष्टादिकारिणामिष्टादिकारिणां च परस्परं विशेषः। अनिष्टादिकारिणो हि संयमने विविधा यामीर्यातना अनुभूय चन्द्रलोकं गच्छन्ति, ता अननुभूय चेष्टादिकारिणः। स्वकर्मफलभोगार्थं नूनमिष्टादिकारिणां चन्द्रलोके गमनमिष्यते, वृष्ट्यादिक्रमेण शरीरपरिग्रहमात्रार्थं चानिष्टादिकारिणामित्यपरोऽपि विशेषोऽनुसन्धातव्यः। संयमनेऽनिष्टादिकारिणां नानाविषयमयातनानुभवं च विश्वनियन्तुर्भगवतो यमस्य पापिजनसङ्गन्तव्यत्वं प्रतिपादयन् स्वयं भगवान् मन्त्रो दर्शयति "**यो ममार प्रथमो मर्त्यानां यः प्रेयाय प्रथमो लोकमेतम्। वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा सपर्य्यत**" (अथ० १८।३।३।१३) इत्येवञ्जातीयकः। **सङ्गमनं**=सङ्गम्यं सङ्गन्तव्यं, **जनानां**=पापिमनुष्याणाम्॥ १३॥

तदिदं प्रमाणान्तरेणापि द्रढयन्नाह—

**"स्मरन्ति च"॥ १४॥**

संयमने नानाविषयमयातनानुभवमितरेषामित्यध्याहृतेनानुवर्तते। प्रमाणान्तरमेतदिति चार्थः। स्मरणमनुस्मरणं प्रत्यभिज्ञानम्। **स्मरन्ति च**=अनुस्मरन्ति प्रत्यभिजानन्ति चौपनिषदाः संयमने नानाविषयमयातनानुभवमितरेषामित्यर्थः।

यं किलेतरेषां संयमने नानाविषयमयातनानुभवं दर्शयति भगवान् मन्त्रस्तमौपनिषदा अपि प्रत्यभिजानन्ति "**न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्। अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे**" (कठ० २।६) इति। **सम्परायः** परलोकः, सम्यग्=अवश्यम्भावेन परा=परस्ताद् देहपातादीयते गम्यत इति तद्व्युत्पत्तेः, तत्साम्यर्थः साध-

नविशेषः साम्परायः, स **बालम्**=अज्ञं विशेषतो ज्ञानरहितं **वित्तमोहेन**=वित्तनिमित्तेन मोहेन मूढं छन्नदृष्टिम्, अत एव च **प्रमाद्यन्तं**=प्रमादं कुर्वन्तं जनं प्रति **न भाति**=ज्ञातो न भवति, स न केवलमज्ञ एव किन्तु विपरीतदर्शनोऽपि—यस्मादयमेव **लोकः**=अन्नपानादिरस्ति न **परः**=अदृश्यमानो लोकः कश्चिदिति **मानी**=मननशीलोऽतस्तदनुरूपमविहितं निषिद्धं चाचरन् **पुनः पुनः**=पौनःपुन्येन **मे**=मम यमस्य **वशमापद्यते**=विविधा यामीर्यातना अनुभवतीत्यर्थः। तस्माद् गत्यविशेषेऽप्यस्ति विशेषोऽनिष्टादिकारिणामिष्टादिकारिणां चोभयेषाम् ॥ १४ ॥

**ननु** विश्वनियन्तुर्भगवतो यमस्य सदनं क्व वर्तते यत्रेमेऽनिष्टादिकारिणो विविधा यामीर्यातना अनुभूय चन्द्रलोकं गच्छन्तीति । अस्योत्तरं पठति—

**"अपि च सप्त" ॥ १५ ॥**

संयमनमिति प्रथमया विपरिणम्यानुवर्तते । **अपि च**=विश्वनियन्तुर्भगवतो यमस्य संयमनं गृहममुत्र क्वचन न वर्ततेऽपि तु **सप्त**=यत्र सप्त ऋषयः प्रतिधीयन्ते तदेवेत्यर्थः ।

सप्त किल चक्षुरादयः प्राणाः सप्तर्षय इह निगद्यन्ते **"प्राणा वा ऋषयः"** ( शत० ६ । १ । १ । १ ) इत्यादिश्रुतेः । ते चास्मिन् षाट्कौषिके जीवात्मशरीरे यथास्थानं प्रतिधीयन्ते । यत्रैतच्छ्रुतं भवति **"सप्त ऋषयः प्रतिहिताः शरीरे, सप्त रक्षन्ति सदमप्रमादम् । सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ"** ( यजु० ३४ । ५५ ) इति । **प्रतिहिताः**=यथास्थानं व्यवस्थिताः, **सप्त**=ते सप्त, **सदं**=सर्वदा**ऽप्रमादं**=सावधानं यथा स्यात् तथा **रक्षन्ति**=शरीरं रक्षन्ति, **आपः**=व्यापनाः, **स्वपतः**=सुप्तिं गतस्य जीवात्मनो **लोकं**=हार्दाकाशं ब्रह्म । **तत्र**=तस्यामृषीणां जीवात्मलोकगमनावस्थायां **जागृतः**=जागरणं कुरुतः, **अस्वप्नजौ**=

ययोः स्वप्नो निद्रा न जायते तौ **सत्रसदौ**=जीवितदातारौ **देवौ** दीप्यमानौ प्राणापानावित्यर्थः । **"सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्चिषः समिधः सप्त होमाः । सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त"** (मुं० २ । १ । ८) इति च । यत्र च तत्प्रतिधानं तदेव विश्वनियन्तुर्भगवतो यमस्य संयमनम् । तत्र हृत्प्रदेशे किलैष भगवान् सर्वेभ्यो जनेभ्यः कर्तव्येषु कर्मसु हिताहितशिक्षाप्रदानार्थमवतिष्ठते । यत्रैतत् स्मृतं भवति **"यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः । तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः"** (मनु० ८ । ९२) इति । ये हि मूढाः पुरुषापसदा भगवतस्तस्य शिक्षामननुवर्तमानाः खलु विहितं कर्म न कुर्वन्ति निषिद्धं च यथा काममाचरन्ति ते दुष्कृतिनो विविधा यामीर्यातना अत्रैवानुभवन्ति । न च लोके तादृक्षाः का अपि यातना विद्यन्ते याभिस्ता मात्रयाऽप्युपमीयेरन् । न च तदनुभवं कुर्वाणा अमी मरणं कामयमाना अपि तूर्णं म्रियन्ते, म्रियमाणा वा सुखेन म्रियन्ते । भूयस्यो नूनं तेषां तदानीं नानाजातीया यातनाः प्रवर्तन्ते । ताश्च सर्वा अत्रैव सतां न प्रेत्य गच्छतामपुत्र क्वचित् । तस्मादेतदेव जीवात्मशरीरं विश्वनियन्तुर्भगवतो यमस्य संयमनमिति निश्चयः ॥ १५ ॥

नन्वेतत्संयमनत्वे भगवतस्तस्य विश्वनियन्तृत्वं विरुध्यते । नहि सोऽत्र वर्तमानोऽमुत्र व्यापारयितुमर्हति जीवात्मवदिति । अस्योत्तरं पठति—

**"तत्रापि च तद्व्यापारादविरोधः"** ॥ १६ ॥

पूर्वत्रोत्थिताशङ्कायाः समाधानमेतदिति चार्थः । अपिनाऽत्र तद्व्यापारसद्भाव उच्यते । **तत्र**=अमुत्र चन्द्रलोकादौ **तद्व्यापारात्**=तदा यमं परामृशति बद्धिस्थत्वात्, व्यापारो नियमनं, तद्व्यापारस्य सत्त्वाद**विरोधः**=विरोधो नास्ति कश्चिदित्यर्थः ।

यदि हि भगवान् यमः खलु जीवात्मवत् परिच्छिद्येत तदाऽस्य तस्य

विश्वनियन्तृत्वं विरुध्येत । अत्र सतोऽमुत्र व्यापारयितुमशक्यत्वात् । न च स परिच्छिद्यते यथा जीवात्मा । व्यापकत्वात् । नहि तल्लोके किञ्चिद् वस्तु विद्यते यदसौ बहिरन्तः सर्वतो न व्याप्नोति । श्रूयते च बहिरन्तः सर्वत्र तद्व्याप्तिः **"ईशा वास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्"** ( यजु० ४० । १ ) इति । **"तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः"** ( यजु० ४० । ५ ) इति च । **वास्यं**=वस्तेराच्छादनकर्मणो रूपम्, आच्छादनीयं व्याप्तमित्यर्थः । व्यापकस्य तस्य च यथाऽत्र व्यापार उपपद्यते तथाऽमुत्राप्युपपद्यते । सर्वत्रेहामुत्र तद्व्यापारसद्भावं च दर्शयति स्वयं श्रुतिः **"य इमं च लोकं परं च लोकं सर्वाणि च भूतान्यन्तरो यमयति"** ( बृ० ३ । ७ । १ ) इति । न च श्रुत्या दर्शितेऽर्थे कर्हिचिद् विप्रतिपत्तिर्युज्यते । तस्मादेतत्संयमनत्वेऽपि तस्य नास्ति व्यापाराभावनिबन्धनः कश्चिद् विरोधः ॥ १६ ॥

जातः पूर्वः पक्षः सम्प्रति सिद्धान्त उच्यते—

**"विद्याकर्मणोरिति तु प्रकृतत्वात्"** ॥ १७ ॥

तुशब्देन पूर्वः पक्षो व्यावर्त्यते । विद्योपादानं निदर्शनार्थं सहचारात् । **विद्याकर्मणोः**=विद्याऽत्रोपासना, कर्म चेष्टापूर्त्तादिकं, विद्यायाः कर्मणश्चेति=एतत् पूर्वोक्तं फलं देवयानेनार्चिरादिना पथा कार्य्यब्रह्मलोकगमनं पितृयानेन धूमादिना पथा च चन्द्रलोकगमनं वेदितव्यम्, कुतः ? **प्रकृतत्वात्**=प्रक्रियमाणत्वादित्यर्थः ।

श्रुतिः खलु विद्याकर्मणी प्रकृत्य विद्यावतामर्चिरादिना देवयानेन मार्गेण कार्य्यब्रह्मलोके कर्मिणां चेष्टापूर्त्तादिकारिणां धूमादिना पितृयानेन मार्गेण चन्द्रलोके गमनमुपदिशति **"तद् य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति"** (छां० ५ । १० । १ ) इत्यादिना विद्यावताम् **"अथ य इमे ग्राम इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति"** ( छां० ५ ।

१० । १ ) इत्यादिना चेष्टापूर्त्तादिकारिणां कर्मिणाम् । तेन विद्यायाः फलं यथा कार्य्यब्रह्मलोकगमनं तथा चन्द्रलोकगमनमिष्टादिकर्मणां फलं नानिष्टादिकर्मणामिति स्फुटमवगम्यते । यत् प्रकृत्य हि यत्फलमुपदिश्यते तत् तस्यैव भवितुमर्हति नान्यस्येति सुखेनावगन्तुं शक्यत्वात् । अन्यथा श्रुत्युपदेशवैयर्थ्यापत्तेः । न च श्रुत्युपदेशो भवति कदाचिद् व्यर्थः । **"वेत्थ यथाऽसौ लोको न सम्पूर्य्यते"** ( छां० ५ । ३ । ३ ) इति चन्द्रलोकासम्पूरणतागोचरप्रश्नस्य च प्रतिवचने प्रवृत्तः खलु प्रवाहणो जैवलिरनिष्टादिकारिणां तृतीयं मार्गं प्रदर्शयन् तद्धेतुकामेव तदसम्पूरणतां प्रतिवक्ति **"अथैतयोः पथोर्न कतरेणचन, तानीमानि क्षुद्राण्यसकृदावृत्तीनि भूतानि भवन्ति, जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं, तेनासौ लोको न सम्पूर्य्यते"** ( छां० ५ । १० । ८ ) इति । स्थानमत्र मार्गः । प्रकरणात् । संख्यानिवेशस्य च साजात्यापेक्षत्वात् । चेदिष्टादिकारिणामिवानिष्टादिकारिणामपि चन्द्रलोके गमनं मन्येत तदा न जातु तेषां तृतीयो मार्गः प्रदर्श्येत, नापि तद्धेतुका तदसम्पूरणता प्रत्युच्येत । नह्यशेषेण सर्वेषु प्रयत्सु चन्द्रलोकं गच्छत्सु पुनः काँश्चित् प्रति तृतीयो मार्गः प्रदर्शयितुं शक्यते, तद्धेतुका चन्द्रलोकासम्पूरणता वा प्रतिवक्तुं पार्य्यते । येऽरण्ये श्रद्धातपःपूर्वकं विद्यां नाभ्यस्यन्ति ग्रामे चेष्टापूर्त्तादिकं कर्म नानुतिष्ठन्ति तेषां विद्याकर्माननुष्ठायिनामनिष्टादिकारिणाम् **एतयोः**=पूर्वोक्तयोर्देवयानपितृयानयोः **पथोः**=अर्चिर्धूमादिमार्गयोः **कतरेणचन**=एकेनापि गमनं न जायते तदर्थं भवति तृतीयो मार्गः, कोऽसौ ? **जायस्व म्रियस्वेत्येष** इति च प्रत्यक्षं विद्याकर्मविरहितानामनिष्टादिकारिणां तृतीयो मार्गः प्रदर्श्यते । **"तेनासौ लोको न सम्पूर्य्यते"** (छां० ५। १० । ८) इति च व्यक्तं तद्धेतुका चन्द्रलोकासम्पूरणता प्रत्युच्यते । न चैतदभ्युपाये तृतीयमार्गप्रदर्शनं कदाचिद् वैयर्थ्यमापद्यते, प्रतिवचनं वा प्रश्नवैरूप्यमश्नुते । अन्यथा तु भवेत् सर्वथा तत्प्रदर्शनं व्यर्थं प्रतिवचनं च प्रश्नाननुरूपम् । न चानिष्टादिकारिणां प्रयतां चन्द्रलोकं प्रति गमने

प्रयोजनमपि किञ्चिदीक्षामहे । स्वकर्मफलभोगार्थं हि प्रयतां चन्द्रलोके गमनमिष्यते । न चानिष्टादिकारिणां तत्र तद्भोगः सम्पद्यत इति क्वचिदुच्यते । शरीरारम्भ इति प्रयोजनं तु स्वयमनन्तरं निराकरिष्यते । न च श्रुतिरपि काचनानिनिष्टादिकारिणां चन्द्रलोके गमनं प्रतिपादयति । **"ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति"** (कौ० १ । २) इति श्रुतिश्चेष्टादिकारिविषया सङ्कोच्यते—ये वै केचिदिष्टादिकारिणोऽस्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते गच्छन्ति सर्व इति । श्रुत्यन्तरबलेन तस्यास्तथा सङ्कोचोपपत्तेः । अस्ति तावच्छ्रुत्यन्तरं यस्मादिष्टादिकारिण एव चन्द्रलोकाधिकारिणोऽधिगम्यन्ते **"सङ्गच्छस्व पितृभिः संयमेनेष्टापूर्त्तेन परमे व्योमन् । हित्वायावद्यं पुनस्तमेहि सङ्गच्छस्व तन्वा सुवर्चाः"** (ऋ० ७ । ६ । १५ । ८) इति । न च श्रुत्यधिगम्येऽर्थे युज्यते विप्रतिपत्तिः । तस्मादिष्टादिकारिण एव चन्द्रलोकं गच्छन्ति नानिष्टादिकारिण इति युक्तमवसीयते ॥ १७ ॥

यत्पुनरुक्तं शरीरारम्भार्थमिष्टादिकारिवदनिष्टादिकारिणोऽपि चन्द्रलोकं गन्तुमर्हन्ति । **"पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति"** (छां० ५ । ३ । ३) इत्याहुतिसंख्यानियमादिति । तत् प्रतिवक्तव्यम् । तत्रेदं प्रत्युच्यते—

**"न तृतीये तथोपलब्धेः"** ॥ १८ ॥

**तृतीये**=तृतीये मार्गे गच्छतां **न**=शरीरारम्भार्थमाहुतिसंख्यानियमो न विद्यत इति विज्ञातव्यम्, कुतः ? **तथोपलब्धेः**=यथा तेषां शरीरारम्भार्थमाहुतिसंख्यानियमो न विद्यते तथोपलम्भादित्यर्थः ।

ये खलु देवयानपितृयानमार्गाभ्यां व्यतिरिक्ते पुनः पुनर्जन्ममरणलक्षणे तृतीये मार्गे गच्छन्ति तेषां शरीरारम्भार्थमाहुतिसंख्यानियमो न विद्यते । मूढधियोऽनिष्टादिकारिणस्ते विनैवाहुतिसंख्यानियमं सततं म्रियन्ते जायन्ते च । तदिदं श्रुतिवाक्यात्मव्यक्तमुपलभ्यते **"जायस्व म्रियस्वे-**

स्येतत् तृतीयं स्थानम्" ( छां० ५ । १० । ८ ) इति । न चेह जन्ममरणश्रवणमात्रेणाहुतिसंख्या नियन्तुं शक्यते । नहि येऽत्रैव जनित्वा म्रियन्ते मृत्वा च जायन्ते तेषां द्युलोकादिष्वमिषु शरीरारम्भहेतुराहुतिः कथञ्चिदुपपद्यते । श्रुतिश्चानिष्टादिकारिणां पापिजनानामत्रैव निरन्तरं जन्ममरणे प्रतिपादयति नेष्टादिकारिणामिवामुत्र गमनमिति तच्छरीरारम्भे निःशङ्कं वयमाहुतिसंख्यानियमाभावमुपलभामहे । "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" ( छां० ५ । ३ । ३ ) इति च पञ्चम्यामाहुतावपां पुरुषवचस्त्वं प्रतिपाद्यते नापञ्चम्यामाहुतौ तासां पुरुषवचस्त्वं प्रतिषिध्यते । अवधारणाश्रुतेः । तस्मादनिष्टादिकारिणां पापिजनानां शरीरारम्भे नास्त्याहुतिसंख्यानियमः ॥ १८ ॥

अत्र स्मृतिं प्रमाणयति—

**"स्मर्य्यतेऽपि च लोके" ॥ १९ ॥**

प्रमाणान्तरमेतदिति चार्थः । श्रौतोपलब्धिः प्रामाणि पूर्वत्रेत्यादिनाऽवगमय्यते । **लोके**=वेदातिरिक्तं निखिलं शास्त्रमत्र लोकः, तस्मिन् **स्मर्य्यते**=विनैवाहुतिसंख्यानियमं शरीरारम्भः सर्य्यत इत्यर्थः ।

दर्शनशास्त्रे खलु सर्गादिभुवामृषीणां पश्वादीनां च सर्वेषां शरीरभेदा अयोनिजास्तावत् सर्य्यन्ते "सन्त्ययोनिजाः" ( वै० ४ । २ । ११ ) इति । तदारम्भे योषित्पुरुषविषये द्वे अप्याहुती न स्त इति विस्पष्टम् । यथा चात्राहुतिसंख्यानियमाभावस्तथाऽन्यत्रापि भवितुमर्हति नास्ति कश्चित् प्रतिबन्ध इति द्रष्टव्यम् ॥ १९ ॥

अत्रैव लौकिकं दर्शनं प्रमाणयति—

**"दर्शनाच्च" ॥ २० ॥**

पूर्वत्रैवैतद्दर्शनं प्रमाण्यत इति चार्थः । **दर्शनात्**=जरायुजाण्डजस्वेदजोद्भिज्जलक्षणे चतुर्विधभूतग्रामे स्वेदजोद्भिज्जयोरन्तरेणैव ग्राम्यधर्ममुत्पत्तेर्दृष्टत्वादन्यत्राप्याहुतिसंख्यानियमाभावो गम्यत इत्यर्थः ।

अस्ति खलु चतुर्विधो भूतग्रामो लोके प्रसिद्धो जरायुजोऽण्डजः स्वेद

उद्भिज्जश्च । तत्र जरायुजाण्डजयोः स्त्रीपुरुषसंयोगेन शरीरारम्भे सत्यपि स्वेदजोद्भिज्जयोस्तत्संयोगं विनैव शरीरारम्भो दृश्यते । कृमिदंशादयः किल स्वेदजाः स्वेदादेवोपजायन्ते तरुगुल्मप्रभृतयश्चोद्भिज्जः पृथिव्युद्भेदात् । न च तेषु स्त्रीविषया पुरुषविषया वाऽऽहुतिः स्वप्नेऽप्यपेक्ष्यते । यथादर्शनं चाभ्युपायो ज्यायान् । तस्मात् क्वचिदेकत्राहुतिसंख्यानियमेऽपि नास्ति सर्वत्र तत्संख्यानियम इति निर्बाधम् ॥ २० ॥

ननु चतुर्विधो भूतग्राम इति लोकप्रसिद्धिः श्रुत्या विरुध्यते । तत्र त्रिविधस्य तस्योपदेशात् **"तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति"** ( छां० ६ । ३ । १ ) इति । जीवजं=जरायुजम्, अण्डजमेवाण्डजम् । तस्य प्राणिमात्रेऽविशेषेण प्राधान्यादादौ सङ्कीर्तनम् । अस्योत्तरं पठति—

**"तृतीयशब्दावरोधः संशोकजस्य" ॥ २१ ॥**

संशोकजस्य=कार्य्ये कारणप्रयोगः, संशोकः प्रस्वेदः, तज्जस्य तृतीयशब्दावरोधः=आण्डजं जीवजमुद्भिज्जमित्यत्र तृतीयेनोद्भिज्जशब्देन सङ्ग्रहो विधत इत्यर्थः ।

श्रुतौ योऽयमुद्भिज्जशब्दस्तावदुपादीयते तेन स्वेदजमप्यवरुध्यते । समानत्वात् । अस्ति स्वेदजोद्भिज्जयोरुभयो पृथिव्युदकोद्भेदप्रभवत्वं समानम् । स्थावरोद्भेदतो विलक्षणो जङ्गमोद्भेद इत्यवान्तरवैलक्षण्यदृष्टया तु चतुर्विधोऽपि तद्विभागो न विरुध्यते । लोकप्रसिद्धिश्चैतरेयकश्रुत्याधारा । तत्र भूतबीजानां चातुर्विध्यस्याम्नानात् **"बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि च"** ( ऐ० ३ । १ ) इति । तथा च सर्वमनवद्यम् । **तत्रैव निष्कर्षः**-इष्टादिकारिणां कर्मिणां पितृयानाख्यो धूमादिमार्गः, विद्यावतामुपासकानां देवयानाख्योऽर्चिरादिमार्गः । द्वावेव चैतौ परलोकसम्बन्धिनौ मार्गौ भवतः । यत्रेदमाम्नायते **"द्वे सृती अशृणवं पितृणामहं देवानामुत मर्त्यानाम् । ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पि-**

तरं मातरं च" (यजु० १८ । ४७) इति । पितृयानेन मार्गेण कर्मिणोऽन्तरिक्षलोकं गच्छन्ति, देवयानेन मार्गेण चोपासका द्युलोकम् । यत्रैतच्छ्रुतं भवति "कर्मणा पितृलोको विद्यया देवलोकः" (बृ० १ । ५ । १६) इति । ये च तद्व्यतिरिक्ताः पापिनोऽनिष्टादिकारिणस्तेऽत्रैव पुनः पुनर्जन्ममरणलक्षणं तृतीयं पन्थानमाश्रयन्ति । तमाश्रयन्तश्च जनित्वा म्रियन्ते मृत्वा च जायन्ते । न च तेषां भवति कदाचिदमुत्र रंहणम् । यत्रेदं श्रूयते "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्" (कठ० ५ । ७) इति । तस्मादिष्टादिकारिण एव स्वकर्मफलभोगाय सूक्ष्मशरीरेण सम्परिष्वक्ता अमुत्र रंहन्ति नानिष्टादिकारिण इत्यचलोऽयं वैदिको राद्धान्तः ॥ २३ ॥

स्वकर्मफलभोगाय चन्द्रलोकं रंहतामिष्टादिकारिणां तद्भोगे सति तस्माल्लोकात् पृथिवीलोकं प्रति सानुशयानामारंहणं भवतीत्युक्तम् । सम्प्रति तेषामारंहणप्रकारश्चिन्त्यते । तत्प्रतिपादिका चैषा श्रुतिः समाम्नाता "अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद् वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति" (छां० ५ । १० । ७) इति । तत्र संशयः किमिह चन्द्रलोकादन्तरिक्षात् पृथिवीलोकं प्रत्यागच्छतामिष्टादिकारिणामाकाशादितादात्म्यप्राप्तिः प्रतिपाद्यते किंवा तत्सादृश्यप्राप्तिरिति । तादात्म्यप्राप्तिरिति पूर्वः पक्षः, तत्सादृश्यप्राप्तिरिति सिद्धान्तः । किं तावत् प्राप्तम्? तादात्म्यप्राप्तिरिति ब्रूमः । भवतीति श्रवणात् । यथा हि "मृत्स्ना घटो भवति, सुवर्णं कुण्डलं भवति" इत्यादौ श्रूयमाणा खलु भवतिश्रुतिर्मृत्स्नादीनां घटादितादात्म्यप्राप्तिमवबोधयति तथा "आकाशमाकाशाद् वायुं वायुर्भूत्वा धूमो भवति" इत्यादावपि श्रूयमाणा सा चन्द्रलोकादागच्छतामिष्टादिकारिणामाकाशादितादात्म्यप्राप्तिमवगमयति । स्फुटं ह्यत्र तादात्म्यप्राप्तिरवगम्यते । नहि ततोऽन्यत्र "वायुर्भूत्वा धूमो भवति" इत्येवमादीन्यक्षराणि कथञ्चिदवकल्पन्ते । न च

मुख्यवृत्तौ सम्भवन्त्यां गौणी वृत्तिः समाश्रयितुं शक्यते । तस्मादत्रेष्टादि-कारिणामाकाशादितादात्म्यप्राप्तिरेव प्रतिपाद्यते न सादृश्यप्राप्तिरिति । एवं प्राप्तेऽभिधीयते—

**"तत्साभाव्यापत्तिरुपपत्तेः"** ॥ २२ ॥

**तत्साभाव्यापत्तिः**=तच्छब्देनाकाशादिकं परामृशति, साभाव्यं सादृश्यं, प्राप्तिरापत्तिः, तत्सादृश्यप्राप्तिरिह प्रतिपाद्यत इति मन्तव्यम्, कुतः? **उपपत्तेः**=उपपन्नत्वादित्यर्थः ।

इह हि चन्द्रलोकात् पृथिवीलोकं प्रत्यागच्छतामिष्टादिकारिणामाकाशादिसादृश्यप्राप्तिः प्रतिपाद्यते न तत्तादात्म्यप्राप्तिः । अन्यस्यान्यात्मत्वानुपपत्तेः । नहि यो यस्यात्मा न विद्यते तदात्मभावस्तस्य कथञ्चिदुपपद्यते । न तावद् दधिपयसी परस्परात्मनी सम्पद्यमाने क्वचन निरीक्ष्येते, येनान्यत्रापि तदुपपादनाय प्रयतामहे । न चाकाशेन तादात्म्यं प्राप्तानां तेषां वाय्वादिक्रमेण पृथिव्यामारंहणमप्युपपद्यते । तस्य व्यापकत्वेन नित्यप्राप्तत्वात् । न चैवं सादृश्यप्राप्तावस्ति काचिदनुपपत्तिः । सादृश्यस्य भेदे सत्यपि भूयोधर्मवत्त्वेनोपपादयितुं शक्यत्वात् । भवतिश्रुतिश्च सादृश्येऽपि प्रयुज्यमाना बहुत्रोपलभ्यते "भाषणादिकर्मणा भवत्याखण्डलः सुरेन्द्रः, शौर्य्यादिधर्मेण भवति प्रतापो मृगेन्द्रः" इत्यादौ । आकाशं वायुमिति कर्मत्वेन निर्देशाद् भवतिश्रुतिरपि तत्सादृश्ये व्यवतिष्ठते । तत्रैव तदुपपत्तेः । न तदात्मभावे । अनुपपत्तेः । तस्मादनुशयिनामाकाशादिसाभाव्यापत्तिरेवात्र निर्दिश्यते न तत्तादात्म्यापत्तिरिति निश्चेतव्यम् ॥ २२ ॥

तत्रेयमपरा चिन्ता प्रवर्तते किमियमाकाशादिसाभाव्यापत्तिरनुशयिनां तेषामतिचिरेण जायते किंवा नातिचिरेणेति । विशेषाश्रवणादति चिरेणेति प्राप्ते सिद्धान्तसूत्रं पठति—

**"नातिचिरेण विशेषात्"** ॥ २३ ॥

साभाव्यापत्तिरित्यनुवर्तते । **अतिचिरेण**=किञ्चिच्चिरमतिना स्वी-

क्रियते, चन्द्रलोकादन्तरिक्षात् पृथिवीलोकं प्रत्यारंहतामनुशयिनामिष्टादिकारिणामाकाशादिसाभाव्यापत्तिरतिविलम्बेन **न**=न भवति, कुतो विज्ञायते? **विशेषात्**=उत्तरत्र पठिताच्छब्दविशेषादित्यर्थः।

अन्तरिक्षलोकात् पृथिवीलोकं प्रत्यागच्छन्तस्तावदनुशयिनोऽचिरेण कालेनाकाशादिसाभाव्यमापद्यन्ते। न च तेषां तत्साभाव्यापत्तौ ततो निष्क्रमणे च भवति किञ्चित्कालविलम्बः। यदा हि ते स्वर्गादवतरन्ति तदैवाकाशं प्राप्नुवन्ति। तं प्राप्नुवन्तश्च तत्साभाव्यमापद्यन्ते। सूक्ष्मो ह्याकाशः, सूक्ष्माश्च तेऽनुशयिनो लिङ्गदेहसम्परिष्वक्ता इति तेषां तत्साभाव्यापत्तिर्युज्यते। ततश्च वायुमाप्नुवन्ति। वायुना चेतोऽमुतो नीयमानास्तत्समाः सम्पद्यन्ते। तदनु च धूममाक्रामन्तो भवन्ति धूमसमाः। धूमेन चेह धूमकल्पत्वाद् बाष्प उच्यते। तदनन्तरमभ्रं मेघं च समालिङ्गय वर्षधाराभिः पृथिवीलोकमागच्छन्ति। तत्राकाशादारभ्य पृथिवीलोकपर्य्यन्तमागमने लोष्टादीनां लौकिकपदार्थानां यावान् कालोऽपेक्ष्यते ततो बहुन्यूनस्तदागमनेऽपेक्ष्यते। नहि ते तत्र तत्र किञ्चित्कालमवस्थाय पृथिवीलोकमारंहन्ति येनातिचिरेण तत्र तदागमनं परिकल्प्येत। पूर्वपूर्वपदार्थसाभाव्यमापद्योत्तरोत्तरसाभाव्यापत्तौ चाल्प एव कालो व्यतीयते न बहुकाल इति पृथिवीलोकं प्रत्यारंहणाय तत्र तत्र तत्तत्पदार्थसाभाव्येनावस्थितानां तेषामचिरेणैव कालेम ततो निष्क्रमणं मन्यामहे नातिचिरेण। तदेतच्चोत्तरत्र पठिताच्छब्दविशेषात् स्फुटमवगम्यते। पृथिवीलोकमारंहतां व्रीह्यादिसाभाव्यापत्त्यनन्तरं तावदेष, शब्दविशेषः पठ्यते **"अतो वै खलु दुर्निष्प्रपतरम्"** (छां० ५। १०। ६) इति। तकारलोपश्छन्दसः, **दुर्निष्प्रपततरं**=दुर्निष्क्रमतरं दुःखतरमस्माद् व्रीह्यादिभावान्निष्क्रमणं निःसरणं भवतीत्यर्थः। स चेह दुःखं निष्प्रपतनं ब्रुवन् पूर्वत्राकाशादिषु सुखं निष्प्रपतनं विज्ञापयति। सुखं दुःखं च निष्प्रपतनस्य कालाल्पत्वाधिकत्वापेक्षया प्रोच्यते न तद्भोगापेक्षया। तदानीं तदनुपपत्तेः। तस्मादन्तरिक्षादारंहतामनुशयिनामाकाशादिसाभा-

व्यापत्तिर्यावद्व्रीह्यादिभावप्राप्ति स्वल्पेनैव कालेन जायते नातिचिरेणेत्यवगन्तव्यम् ॥ २३ ॥

अन्तरिक्षादाकाशादिसाभाव्यं यथाक्रममापद्य स्वल्पेनैव कालेन पृथिवीलोकमागतानामनुशयिनामिह व्रीह्यादिभावस्तावदाम्नायते **"त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते"** (छां० ५ । १० । ६) इति । तत्र संशयः—किमिह पृथिवीलोकमागतानामनुशयिनां व्रीह्यादिभावेन जन्म प्रतिपाद्यते तदुचितसुखदुःखभोगार्थं किंवा तद्भोक्तृपुरुषान्तराधिष्ठिते व्रीह्यादौ तत्साभाव्यापत्तिः पूर्ववदिति । जन्मेति पूर्वः पक्षः, तत्साभाव्यापत्तिरिति सिद्धान्तः । किं तावत्प्राप्तम्? जन्मेति वदामः। जायन्त इति साक्षादाम्नानात्। जन्मपरिग्रहे हि जनेः खलु साक्षादाम्नानमुपपद्यते न तत्साभाव्यापत्तिपरिग्रहे । नह्यसौ यथा जन्मार्थे सर्वत्र प्रसेषेद्धि नथा तत्साभाव्यापत्तावपि क्वचित् प्रसिध्यति । प्रसिद्धाप्रसिद्धयोश्च प्रसिद्धार्थस्यैव भवति परिग्रहो न्याय्यो नाप्रसिद्धार्थस्य । तस्मादनुशयिनामत्र व्रीह्यादिभावेन जन्मैव प्रतिपाद्यते न तत्साभाव्यापत्तिः पूर्ववदिति । **एवं** प्राप्त उच्यते—

**"अन्याधिष्ठिते पूर्ववदभिलापात्"** ॥ २४ ॥

तत्साभाव्यापत्तिरित्यनुवर्तते । **अन्याधिष्ठिते**=अत्र भोज्यभोक्तृभावः सम्बन्धोऽधिष्ठानम्, भोज्यं व्रीह्यादिकं, भोक्तारोऽन्ये पुरुषाः, तैरधिष्ठिते व्रीह्यादौ तत्साभाव्यापत्तिरनुशयिनामत्र प्रतिपाद्यत इति वेदितव्यम्, कुतः? **पूर्ववदभिलापात्**=आकाशादिवदाम्नानादित्यर्थः ।

यथा हि पूर्वत्र **"आकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति"** (छां० ५ । १० । ५) इत्याकाशादिकं तावदभिलप्यते तथाऽत्र **"ते इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते"** (छां० ५ । १० । ६) इति व्रीह्यादिकमभिलप्यते । तत्र च तत्साभाव्यापत्तिरर्थ इति निर्णीतम् । इहापि स एवेति विज्ञायते । अभिलापे समानेऽभिलप्यस्यापि

समानत्वौचित्यात् । नह्यभिलापः समो भवति तदभिलप्यश्च विषम इति युज्यते । जनिश्च जन्मपरिग्रहे प्रसिद्धोऽपि तद्धेतुकर्मविशेषासङ्कीर्तनादुपचरितार्थो भवितुमर्हति यथा पूर्वत्र भवतिः । अस्ति खलु जन्मपरिग्रहे कर्मविशेषो हेतुः । स यथाऽऽकाशादिषु प्रवर्षणान्तेषु न प्रकीर्त्यते तथा व्रीह्यादावपि न सङ्कीर्त्यते । यदि च व्रीह्यादिभावेनात्र जन्माभिप्रेयेत तदाऽवश्यं "रमणीयचरणाः" "कपूयचरणाः" (छां० ५ । १० । ७ ) इत्युत्तरत्रेवेहापि कर्मविशेषः सङ्कीर्त्येत । तत्सङ्कीर्तनाभावे च यथा पूर्वत्राकाशादौ तत्साभाव्यापत्तिप्रतिपादनपरो भवतिः प्रयुज्यते न तत्तादात्म्यापत्तिप्रतिपादनपरस्तथाऽत्र जनिरपि व्रीह्यादिसाभाव्यापत्तिप्रतिपादनपर एव प्रयुज्यते न तद्भावेन जन्मप्रतिपादनपर इति विज्ञातुं शक्यते । नह्येष तद्धेतुविशेषासङ्कीर्तनेऽपि शक्नोति कर्हिचिज्जन्मप्रतिपादयितुम् । नहि हेत्वपाये हेतुमदपायो न कश्चिदभ्युपेयते । त इह व्रीहियवसमा ओषधिवनस्पतिसमास्तिलमाषसमा जायन्त इत्येवं जनेर्मुख्यार्थपरिग्रहेऽपि नास्ति किञ्चिद्दूषणम् । इतिना प्रकारवचनेन तथाभूतार्थस्य व्यक्तं प्रकाशितत्वात् । समत्वं च समानभाव इत्यतिरोहितम् । तथाकाशादिवदन्तःप्रवेशेन न तादात्म्येनेति वेदितव्यम् । तस्मादत्रापि पूर्ववदन्तरिक्षादवरोहतामनुशयिनां व्रीह्यादिसाभाव्यापत्तिरेव प्रतिपाद्यते न व्रीह्यादिभावेन जन्मेति निर्विप्लवम् ॥ २४ ॥

अत्राशङ्क्य निराचष्टे—

"अशुद्धमिति चेन्न शब्दात्" ॥ २५ ॥

अन्याधिष्ठितमिति प्रथमया विपरिणम्यानुवर्तते । अशुद्धं=साभाव्यमापन्नानामनुशयिनां कण्डनादिवेलायां हिंसाया अवश्यम्भावादन्याधिष्ठितं व्रीह्यादिकमशुद्धमभोज्यं स्यादिति चेत्=यद्युच्यते तदा न=न वाच्यम्, कुतः? शब्दात्=शब्दो वेदस्ततस्तद्भोज्यत्वप्रतिपत्तेरित्यर्थः ।

अथोच्येत—ये खल्वन्तरिक्षादवारोहन्तोऽनुशयिनो व्रीह्यादिसाभाव्यमापन्नास्ते मुसलेन कण्ड्यमानेषु व्रीह्यादिषु कण्ड्यन्ते अवलनेन पच्य-

मानेषु च पच्यन्त इत्यवश्यमेतन्मन्तव्यम् । नहि कण्ड्यमाने पच्यमाने च शरीरे तत्साभाव्यमापन्नो जीवात्मा न कण्ड्यते न पच्यते चेति सम्भवति । शरीरकल्पाश्चैते व्रीहियवादयोऽनुशयिनाम् । यच्च तेषां कण्डनं पचनं च सैव तद्धिंसा । सर्वत्र पीडाहेतुव्यापारस्यैव हिंसात्वाभ्युपगमात् । पीड्यमानो हि जीवः सर्वदा सर्वत्र प्राणान् जहाति न कदाचिदपीड्यमानोऽपि तान् परित्यजति । न च हिंसया निष्पन्नमन्नं स्वप्नेऽपि शुद्धं बोभोति । स्मर्य्यते चैतदशुद्धं दर्शनान्तरे **"दुष्टं हिंसायाम्"** ( वै० ६ । १ । ७ ) इति । दुष्टम्—अशुद्धम् । न च यदशुद्धं तद्भोज्यं कर्हिचिदुपपद्यते । नहि येऽनवरतम् **"आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः"** ( छां० ७ । २६ । २ ) इत्यभ्यसन्ति ते कदाचिदशुद्धमन्नं भोक्तुमर्हन्ति । नूनमिदं महत्कष्टमुपस्थितम् । कुत्रापि शुद्धान्नानुपलब्धेः । तस्मादिह व्रीह्यादिसाभाव्यापत्तिरनुशयिनां प्रतिपाद्यत इत्यसम्यगुच्यते, न सम्यगिति । **नैतद्वक्तव्यम्** । वेदतस्तद्भोज्यत्वस्य प्रतिपत्तेः । वेदः खलु मनुष्याणां व्रीहियवादिकमन्नं भोज्यमिति साक्षात् प्रतिपादयति **"अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि सञ्जयामि शश्वतः । मां हवन्ते पितरं न जन्तवोऽहं दाशुषे विभजामि भोजनम्"** ( ऋ० ८ । १ । ५ । १ ) **"मया सोऽन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम्"** ( ऋ० ८ । ७ । ११ । ४ ) इत्यादिना । चेदिदमन्तरिक्षादारंहतामनुशयिनां हिंसयाऽशुद्धं भवेत् तदा न तन्मनुष्याणां भोज्यं प्रतिपादयेत् । नहि मनुष्यमात्रकल्याणायावतीर्णः खलु भगवान् वेदः कदाचिदशुद्धमन्नं तद्भोज्यं प्रतिपादयितुमर्हति । नह्यशुद्धमन्नं भुक्तं कस्यापि कल्याणायावकल्पते येन तत्प्रतिपाद्यं परिकल्प्येत । **"तं सखायः पुरोरुचं यूयं वयं च सूरयः । अश्याम वाजगन्ध्यं सनेम वाजपस्त्यम्"** ( ऋ० ७ । ४ । २४ । १२ ) इति च स्वयमेव हृद्यं स्निग्धं बल्यमन्नं मनुष्याणां भोज्यमुपदिशन् भोज्यं शुद्धमशुद्धं चाभोज्यं स्फुटं प्रत्य

र्शयति । शुद्धस्यैव सतस्तस्य हृद्यत्वादिगुणजाताश्रयत्वसम्भवात् । नह्य-शुद्धमन्नं कदाचिद् हृद्यत्वादिगुणजातमाश्रयितुं पारयति । शुद्धत्वं च तस्याहिंसायां सत्यां सम्पद्यते न तु हिंसायाम् । न च व्रीह्यादिसाभाव्य-मापन्नानामनुशयिनां तत्कण्डनेन कण्डनं तत्पाकेन च पाको जायते । असङ्गत्वादाकाशवत् । यथा ह्यसङ्गः खल्वाकाशो गेहादौ तत्साभाव्येन वर्तमानोऽपि न तत्खननेन खन्यते न तद्दाहेन च दह्यते तथा व्रीह्यादौ तत्साभाव्येन वर्तमाना अनुशयिनोऽप्यसङ्गत्वान्न तत्कण्डनेन कण्ड्यन्ते न तत्पाकेन च पच्यन्ते । कण्डनपाकयोरभावे च दूरेण तद्धिंसनम् । दर्शयति चैतत् स्वयं श्रुतिः "**असङ्गो नहि सज्यते, असितो नहि व्यथते न रिष्यति**" (बृ०३।२।४) इति । कण्डन-पाकहेतुका तद्धिंसा च भोगः । स च भोगायतने युज्यते नाभोगायतने क्वचित् । न च व्रीह्यादिकमन्नं तेषां भोगायतनं विद्यते । तद्धि केवलं रेतःसिग्योगेन स्त्रीयोनिप्राप्तौ पूर्वाभिहिताकाशादिवद् द्वारमात्रम् । तच्च कथञ्चिद् भोगायतनकल्पं भवदपि न तद्भोगाय कर्हिचित् प्रकल्पते । अहंममाभिमानो हि सर्वत्र भोगस्य कारणमभ्युपेयते । न च तदानीं मूर्च्छितावस्थानां तेषां तत्राहंममाभिमानः सम्भवति येनामी तत्कण्डनपा-काभ्यां पीडाभोगं भुञ्जीरन् । पीडा च हिंसा । न च तदभावे व्रीह्या-दिकमन्नमशुद्धं भवितुमर्हति । शुद्धस्य च तस्य भोज्यत्वं युक्तं मन्या-महे नाभोज्यत्वम् । तस्मादिह पूर्ववद् व्रीह्यादिसाभाव्यापत्तिरनुशयिनां प्रतिपाद्यत इति सम्यगुच्यते नास्ति कश्चिद्दोषः ।

**रामानुजाचार्य्यास्तु** सूत्रमिदं व्याचक्षाणास्तन्निष्कृष्टमर्थमेवं प्रका-शयन्ते "अतिशयिताभ्युदयसाधनभूतो व्यापारोऽल्पदुःखदोऽपि न हिंसा, प्रत्युत रक्षणमेव । तथा च मन्त्रवर्णः "**न वा उ एतन्म्रियसे न रिष्यसि देवान् इदेषि पथिभिः सुगेभिः । यत्र यन्ति सुकृतो नापि दुष्कृतस्तत्र त्वा देवः सविता दधातु**" इति । चिकित्सकं च तादात्विकाल्पदुःखकारिणमपि रक्षकमेव वदन्ति पूज-यन्ति च तज्ज्ञा इति । यत्र भूयिष्ठं फलं यथा देशोन्नयनं जात्युन्नयनं

तद्धेतुशरीरोत्पत्त्यर्थं वा तत्र भवन्त्यपि प्राणिहिंसा हिंसा न मन्यते यत्कारणं सा शास्त्रेणानुमन्यते "**अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः**" (छां० ८ । १५ । १ ) इति श्रुतेरिति तदाकूतम् । **अन्यत्र तीर्थेभ्यः**=वेदादिसत्यशास्त्रविहितेभ्योऽन्यत्राहिंसा धर्मो मन्तव्य इति **दयानन्दस्वामि**भाष्यमृग्वेदादिभाष्यभूमिकायाम् । तदभिप्रायो विस्पष्ट इत्युपरम्यते ॥ २५ ॥

व्रीह्यादिसाभाव्यापत्त्यनन्तरं श्रूयते "**यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति**" (छां० ५ । १० । ६ ) इति । अनुशयीति शेषः । तत्र संशयः—किमिह रेतःसिग्भूपत्वमनुशयिनामभिधीयते किंवा तद्योग इति । रेतःसिग्भूपत्वमिति पूर्वः पक्षः, तद्योग इति सिद्धान्तः । किं तावत् प्राप्तम्? रेतःसिग्भूपत्वमिति ब्रूमः "तद्भूय एव भवति" इति श्रवणात् । तद्भूय इत्यस्य हि तद्रूप इत्यर्थो विस्पष्टः । भवतेः क्यपि भावार्थे भूयपदनिष्पत्तेः । न च विस्पष्टेऽर्थे युज्यते विप्रतिपत्तिरिति । एवं प्राप्त उच्यते—

"**रेतःसिग्योगोऽथ**" ॥ २६ ॥

**अथ**=व्रीह्यादिसाभाव्यापत्त्यनन्तरं **रेतःसिग्योगः**=वीर्य्यं रेतस्तत्सिचा तत्सिञ्चनकर्त्रा पुरुषेण योगः संयोगः सम्बन्धो व्रीह्याद्यदनद्वारा पुरुषकुक्षौ प्रवेशोऽनुशयिनां भवतीत्यर्थः ।

यद्यपि "तद्भूयः" इत्यस्य तद्भावस्तद्रूप इत्ययमेवार्थः, तथापि स विचार्य्यमाणस्तदाकृतावेव पर्य्यवस्यति न तदात्मत्वे । अन्यस्यान्यात्मत्वासिद्धेः । तदाकृतित्वं च तद्योगादेवोपपद्यते न प्रकारान्तरेण केनचित् । नहि तद्योगं न भजते तदाकारतां चापद्यत इति सम्भवति । यथा हि काष्ठभेदं प्रविष्टः खल्वग्निस्तत्संयोगादेव तदाकारः प्रजायते "**अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव**" (कठ० ५ । १० ) इति श्रुतेः, तथाऽनुशयिनोऽपि रेतःसिक्प्रविष्टास्तत्संयोगादेव तद्रूपास्तदाकाराः प्रजायन्ते । नो चेदन्नादिद्वारा कुक्षौ प्रविष्टास्ते

रेतःसिचा संयुज्येरन् न जातु तदाकाराः पजायेरन् । संयोग एव हि तेषां तद्रूपतापत्तिप्रयोजको नान्यः कश्चन । तस्मादिह व्रीह्याद्यन्नद्वारा रेतःसिक्कुक्षौ प्रविष्टानामनुशयिनां तत्संयोग एवाभिधीयते न तद्रूपत्वमिति निश्चितोऽर्थः ।

**भूय** इति वा पुनरर्थेऽव्ययम् । तस्य च व्रीह्यादिसाभाव्यापत्त्यनन्तरमर्थः । अवधारणेनानुशयिनो रेतःसिगात्मत्वं व्यवच्छिद्यते । तद्=रेतःसिग् रेतःसिग्योगी भवति=सम्पद्यत इति निष्प्रत्यूहः श्रुतिपदार्थः । प्रतिपत्तिकर्मा वा भवतिरिह प्रयुज्यते, तदिति तद्योगमाह । यो यो हि व्रीह्याद्यन्नमनुशयिसंश्लिष्टमत्ति स यो रेतो निषिञ्चति च स्त्रियां योनावृतुकाले, तद्योगमेव प्रतिपद्यतेऽनुशयीत्यर्थः । **तथाच** मनुष्यान्मनुष्यो जायते पश्वादेश्च पश्वादिरित्युपपन्नम् ॥ २६ ॥

अनुशयिनां व्रीह्याद्यन्नद्वारा रेतःसिग्योगः प्रतिपादितः । सम्प्रति तेषामृतुकाले स्त्रीयोनौ निषिक्ते रेतसि तत्तच्छरीरावाप्तिः प्रतिपाद्यते—

**"योनेः शरीरम्"** ॥ २७ ॥

अथेत्यनुवर्तते । रेतःसिग्योगानन्तरं **योनेः**=निषिञ्चितरेतसस्तत्तत्स्त्रीयोनेः **शरीरं**=तत्तच्छरीरमनुशयिनः प्रतिपद्यन्त इत्यर्थः ।

रेतःसिचो हि यथासमयं स्त्रीयोनौ रेतो निषिञ्चन्ति । तद्द्वारा तत्र प्रविष्टाः खल्वनुशयिनो यथाकर्मविपाकं तत्तच्छरीरमापद्यन्ते । तदिदमाह स्वयं श्रुतिः **"तद्य इह रमणीयचरणाः"** (छां० ५ । १० । ७) इत्यादिका । सेयं तत्तच्छरीरापत्तिरात्मनः सुखदुःखोपभोगहेतुः संसारः । स चैवं पुनःपुनर्लोकपरलोकयोर्गमनागमनाभ्यां जन्ममरणप्रबन्धात्मकत्वाद् दुःखम् । यत्रेदमाख्यायते **"भगवतो जैगीषव्यस्य संस्कारसाक्षात्करणाद् दशसु महासर्गेषु जन्मपरिणामक्रममनुपश्यतो विवेकजं ज्ञानं प्रादुरभवत् । अथ भगवानावट्यस्तनुधरस्तमुवाच दशसु महासर्गेषु भव्यत्वादनभिभूतबुद्धिसत्त्वेन त्वया नरकतिर्य्यग्गर्भसम्भवं दुःखं सम्प-**

श्यता देवमनुष्येषु पुनःपुनरुत्पद्यमानेन सुखदुःखयोः किमधिकमुपलब्धमिति। भगवन्तमावट्यं जैगीषव्य उवाच दशसु महासर्गेषु भव्यत्वादनभिभूतबुद्धिसत्त्वेन मया नरकतिर्यग्गर्भसम्भवं दुःखं सम्पश्यता देवमनुष्येषु पुनःपुनरुत्पद्यमानेन यत्किञ्चिदनुभूतं तत् सर्वं दुःखमेव प्रत्यवैमि । भगवानावट्य उवाच यदिदमायुष्मतः प्रधानवशित्वमनुत्तमं च सन्तोषसुखं किमिदमपि दुःखपक्षे निक्षिप्तमिति। भगवान् जैगीषव्य उवाच विषयसुखापेक्षयैवेदमनुत्तमं सन्तोषसुखमुक्तं कैवल्यापेक्षया दुःखमेव । बुद्धिसत्त्वस्यायं धर्मस्त्रिगुणः। त्रिगुणश्च प्रत्ययो हेयपक्षे न्यस्तः" इति । हेयं=दुःखम् । तस्मादतो विरज्येत मोक्षमाणो धीमानित्याशयः ॥ २७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादवैदिकमुनिविरचितायां वेदान्तसूत्रवैदिकवृत्तौ तृतीयाध्यायस्य प्रथमः पादः ॥





# तृतीयोऽध्यायः

## द्वितीयः पादः

प्रथमे पादे जीवात्मनः पञ्चाग्निविद्यामाश्रित्य वैराग्यप्रयोजनं लोक-परलोकयोर्गमनागमनं सप्रकारं निरूपितम् । इदानीं संसाराद् विरक्तस्य तस्य परब्रह्मपरमेश्वरगोचरो भक्त्यतिशयो निरूपयितव्यः । स हि तदु-पासनस्य प्रधानमङ्गम् । उपासनं च विक्षेपलक्षणचेतोमालिन्यनिवर्तक-तया तत्साक्षात्कारस्य कर्मवदुत्कृष्टं साधनम् । न च विरक्तस्य सतस्तस्य भक्त्यतिशयोऽपि तद्गोचरस्तावदुपजायते यावदयमात्मतो विलक्षणमपूर्वम-चिन्त्यमहिमानं भगवन्तं तं न प्रतिपद्यते । तत्प्रतिपत्तये चादौ जीवात्मनः संसारगतिभेदनिरूपणवदवस्थाभेदनिरूपणमनन्तरं चाशेषविशेषनिरूपण-सहितं परब्रह्मणः परमेश्वरस्य तद्भावनिरूपणमावश्यकम् । तदर्थमिमं द्वितीयं पादमारभमाणो जाग्रदवस्थायाः प्रसिद्धत्वेन निरूपणानर्हतामाकलय्य पूर्वं तावत् स्वप्नावस्थामेव जीवात्मनो निरूपयिष्यन् पूर्वपक्षसूत्रं पठति—

**"सन्ध्ये सृष्टिराह हि"** ॥ १ ॥

**सन्ध्ये**=जाग्रत्सुषुप्त्योः सन्धौ भवः सन्ध्यः स्वप्नः **"सन्ध्यं तृ-तीयं स्वप्नस्थानम्"** ( बृ० ४ । ३ । ९ ) इति श्रुतेः, तस्मिन् सन्ध्ये स्वप्ने **सृष्टिः**=रथप्रभृतितत्तत्पदार्थसृष्टिर्भवति, कुतो विज्ञायते ? **हि**=यस्मादाह—तत्र सृष्टिमाह श्रुतिरित्यर्थः ।

बृहदारण्यके हि स्वप्नाधिकारे **"स यत्र प्रस्वपिति"** ( बृ० ४ । ३ । ९ ) इत्युपक्रम्याम्नायते **"न तत्र रथा न रथयोगा न प-न्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते"** ( बृ० ४ । ३ । १० ) इत्यादि । तत्र संशयः—किमिह स्वप्ने जाग्रद्वत्परमार्थसृष्टि-

तत्तत्पदार्थानां सृष्टिरुपदिश्यते किंवा तद्गोचरं विपर्य्ययज्ञानमात्रमिति । सृष्टिरिति पूर्वः पक्षः, विपर्य्ययज्ञानमात्रमिति सिद्धान्तः । किं तावत् प्राप्तम्? सृष्टिरिति ब्रूमः । श्रुत्यभिधानात् । श्रुतिर्हि नः सर्वेष्वर्थेषु प्रमाणम् । सा च स्वप्ने रथप्रभृतितत्तत्पदार्थानां सृष्टिं साक्षादभिधत्ते **"अथ रथान् रथयोगान् पथः सृजते"** ( बृ० ४ । ३ । १० ) इति । न च तदभिहितोऽर्थो विप्रतिपत्तिमर्हति । तत्स्रष्टा च जीवात्मा पुरुषः **"स हि कर्ता"** ( बृ० ४ । ३ । १० ) इत्युपसंहाराद् विस्पष्टम् । तस्मादत्र रथप्रभृतितत्तत्पदार्थानां सृष्टिरनुशिष्यते न तद्गोचरं विपर्य्ययज्ञानमात्रमिति युक्तम् ॥ १ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"निर्मातारं चैके पुत्रादयश्च"** ॥ २ ॥

सन्ध्ये सृष्टिर्हीति पदत्रयमनुवर्तते । पूर्वत्रैवैष हेतुरित्याद्येन चकारेणोच्यते । पुत्रादीनां तत्र निर्मातव्यत्वेन समुच्चय इति द्वितीयेन । सन्ध्ये सृष्टिरिति मन्तव्यम्, कस्मात्? **हि** यस्मादेके=कठशाखिनो **निर्मातारं**=स्वाप्नपदार्थस्रष्टारं पुरुषमधीयते, **पुत्रादयः**=तत्र निर्मातव्यत्वेनाम्नाता अर्थाः पुत्रादयो विज्ञातव्या इत्यर्थः ।

कठशाखिनो ह्यधीयते **"य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः"** ( कठ० ५ । ८ ) इति । चेत् स्वप्ने पदार्थानां सृष्टिर्न स्यात् न जातु कठशाखिनः पुरुषं तन्निर्मातरमधीयीत । नहि तदानीमर्थसृष्ट्यभावे तन्निर्माता स कथञ्चिदध्येतुं शक्यते । निर्माणं चार्थानां घटते न तद्गोचरस्य ज्ञानविशेषस्य विपर्य्ययात्मकस्य । **ननु** कठशाखिभिः पुरुषकर्तृकं कामनिर्माणमधीयते **"कामं कामं पुरुषो निर्मिमाणः"** इति, नार्थनिर्माणम् । कामशब्दश्चेच्छाविशेषवचनः प्रसिद्धः । न च तन्निर्माणेनार्थनिर्माणं सिध्यति येन तदानीं भवत्यर्थसृष्टिरित्यध्यवसीयेत । ज्ञानविशेषनिर्माणञ्चेच्छाविशेषनिर्माणवचनेन कथञ्चिदध्यवसातुं शक्यते । समानयोगक्षेमत्वादिति । **न** । कामशब्देनात्र पुत्राद्यर्थजातस्याख्यानात् ।

इच्छाविशेषवचनः खलु प्रसिद्धोऽपि कामशब्द इह पुत्रादीन् काम्यमानानर्थविशेषानाख्याति नेच्छाविशेषम् । प्रकृतत्वात् । प्रकृता यत्र पुत्रादयः काम्यमाना अर्थाः **"शतायुषः पुत्रपौत्रान् वृणीष्व बहून् पशून् हस्तिहिरण्यमश्वान् । भूमेर्महदायतनं वृणीष्व स्वयं च जीव शरदो यावदिच्छसि"** ( कठ० १ । २३ ) इति । न च ये प्रकृतास्तान् विहाय विनैव निमित्तं शक्नोति स इच्छाविशेषमाख्यातुम् । अन्यथा प्रकृतहानाप्रकृताख्यानप्रसङ्गात् । कामशब्दश्च प्रकृतेषु तेषु प्रयुज्यमानोऽपि तत्र तत्रोपलभ्यते **"कामानां त्वा कामभाजं करोमि"** ( कठ० १ । २४ ) इति । **कामानां**=काम्यमानानां पुत्रपौत्रप्रभृतीनामर्थानां **कामभाजं**=प्रकामभाजमतिशयभाजं **त्वा**=त्वां **करोमि**=विदधामीत्यर्थः । **"ये ये कामा दुर्लभा मर्त्यलोके"** ( कठ० १ । २५ ) इति च । प्रत्ययार्थभेदनिबन्धना च प्रायेण शब्दप्रसिद्धिरिति काम्येषु तेषु तत्प्रयोगेऽपि नास्ति काचिद्धानिः । तस्मात् स्वप्ने भवत्यर्थसृष्टिरिति सम्यगुच्यते ॥ २ ॥

**एवं** प्राप्ते प्रतिविधास्यमानः सिद्धान्तसूत्रं पठति—

**"मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्"** ॥ ३ ॥

सन्ध्य इति प्रथमया विपरिणम्यानुवर्तते । **तुना** पूर्वःपक्षो व्यावर्त्यते । **मायामात्रं**="केतः केतुश्चेतश्चित्तं क्रतुरसुर्धीः शचीर्माया वयुनमभिख्येत्येकादश प्रज्ञानामानि" ( नि० ३ । ९ ) इति निघण्टुवचनाज्ज्ञानसामान्यवचनोऽपि मायाशब्दोऽत्र ज्ञानविशेषं विपर्य्ययमाह, मात्रचाऽर्थसृष्टिर्व्यवच्छिद्यते, विपर्य्ययज्ञानमेव **सन्ध्यः** स्वप्नो वेदितव्यः, कुतः ? **कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्**=उचितदेशकालनिमित्तसम्पत्तिरत्र कार्त्स्न्यं, तेन न भवत्यभिव्यक्तं स्वरूपं यस्य स तथा, तस्य भावस्तत्त्वं तस्माद् विनैवोचितदेशकालनिमित्तैर्भासमानस्वरूपत्वादित्यर्थः ।

**स्वप्ने** खलु रथप्रभृतयस्तत्तदर्थाः केवलं प्रतिभासन्ते न तु जायन्ते ।

नहि यावति देशे यावति काले यावद्भिश्च निमित्तैस्तेषां जन्मना भवितव्यं तावन्ति तानि शरीराभ्यन्तरे स्वप्नप्रदेशे कण्ठनाड्यां विद्यन्ते । तदभावे च कथं ते तत्र जायेरन् । न च देशकालनिमित्तैर्विना कश्चिदेकोऽप्यर्थो जनितुं पारयते किं पुना रथप्रभृतिरर्थगणः । पुरुषो हि कदाचित्स्वप्ने शार्मण्यजनपदे परिभ्रमन् वारलीनं राजमन्दिरं निशामयित्वा मूर्च्छाश्चर्य्यं मन्यते । कदाचिदाङ्गले पर्य्यटन् नान्दनं मन्त्रिमण्डलं जानपदविषयेषु पदे पदे युध्यमानमीक्षित्वा बहुविस्मयमापद्यते । कदाचित् स्तोकायां जापानविषये परिगच्छंश्च तत्रत्यानां बुद्धिवैभवं दुःसहं दुर्निवार्य्यं चाल्पकालीनं राजश्रीविस्तारं लोकित्वा हन्तायमुद्योगमहिमेत्यद्धोकावेन क्षणमेकं चित्रमिवावतिष्ठते । अथ च द्रुतं पुण्यभूमिं भारतं पर्य्यावर्तते । तत्रत्यानां चार्थशून्यं पारस्परिकं कलहमल्पे वयसि परिणयनं विद्याऽभावे संन्यसनं भाषाभेदमुपास्यभेदमुद्देशभेदं च लोचित्वा नूनमत्राप्ययावदविद्यायाः साम्राज्यं वर्वर्त्ति न भगवती विद्यादेवी जागर्त्तीति सुदृढं निश्चिनुते । न चैतत् सर्वं शक्यं स्वप्नप्रदेशे निर्माय यथायथमनुभवितुम् । नहि यत्र यस्यावस्थानमेव न सम्भवति तत्र तस्य निर्माणं कथञ्चिदुपपद्यते । **अथोच्येत**—मा नामैष पुरुषः स्वप्ने तं तं पदार्थं निर्माय दर्शत्, यत्र प्रदेशे सस पदार्थो विद्यते तत्र प्रदेशे बहिर्देहान्निर्गत्य तं तं पदार्थं द्रक्ष्यति । दर्शयति च श्रुतिरपि तस्य बहिर्देहान्निर्गतस्य यथाप्रदेशं तत्तत्पदार्थदर्शनम् "**बहिष्कुलायादमृतश्चरित्वा स ईयतेऽमृतो यत्र कामम्**" ( बृ० ४ । ३ । १२ ) इति । युक्तं चैतत् । अन्यथा तत्तत्पदार्थानुभवानुपपत्तेरिति । **नैतद्वक्तव्यम्** । सम्भवाभावात् । न खलु जीवतः पुरुषस्यान्तरेण योगं यथाकामं बहिर्देहान्निर्गमनं सम्भवति । योगो ह्येकस्तदुपायः । न चायं योगेन स्वप्ने देहाद् बहिर्निर्गन्तुं प्रयतते येन तस्य ततो बहिर्निर्गमनं सम्भवेत् । न च निद्राणस्य तस्य तदानीं तादृक् प्रयत्नोऽप्युपपद्यते । मनसो निद्राग्लानत्वेन तदुत्पत्तिहेतुत्वानुपपत्तेः । सुप्तश्चैष क्षणमात्रेण योजनसहस्रान्तरितं देशं गच्छति प्रत्यागच्छति चेति सर्वानुभवसिद्धम् । न च सुप्तस्यैतत्सामर्थ्यं

सम्भावनापथमारोहति। नहि यज्जाग्रति तस्मिन् न सम्भाव्यते तत् स्वप्ने कर्हिचित् सम्भावयितुं शक्यते। प्रत्यागमनवर्जितोऽपि च भवति कदाचित् कश्चित् स्वप्नः। न च तस्मात् प्रतिबुध्यमानो यत्रशयानस्तत्र न प्रतिबुध्यते। बहिर्निर्गमने च न प्रतिबुध्येत। स्थूलदेहेन चायं सर्वदा देशान्तरे गमनं मन्यते। स च तस्य नियमेन शयनप्रदेशे तिष्ठति न जातु देशान्तरं गच्छति। तदिदमपरं बहिर्निर्गमनवादिनस्ते दुश्चिकित्स्यम्। न च यदेवमुपपत्तिं न सहते श्रुतिस्तत् कर्हिचिद्दर्शयितुमुत्सहते। गौणी हि सा तत्रेति विज्ञायते बहिरिव कुलायादिति। अन्यथा श्रुत्यन्तरविरोधापत्तेः। अस्ति तावच्छ्रुत्यन्तरं यदन्तरेव देहस्य स्वप्नमिमं दर्शयति **"स यत्रैतत् स्वप्नया चरति"** (बृ० २।१।१८) इत्युपक्रम्य **"स्वशरीरे यथाकामं परिवर्तते"** (बृ० २।१।१८) इति। न चोदितश्रुतिबलादेतदेव गौणं किं न स्यादिति साम्प्रतम्। उपपन्नार्थत्वात्। उपपद्यते हि देहस्यान्तरेव स्वप्नदर्शनं न बहिस्तत्र गमनासम्भवादित्युक्तम्। **अथोच्येत**—नो चेद्रथप्रभृतयो बाह्यास्तत्तत्पदार्थाः स्वप्ने जीवात्मना पुरुषेण निर्माय दृश्यन्ते न वा बहिर्देहान्निर्गत्य तत्तत्प्रदेशे द्रष्टुं शक्यन्ते, कथं तर्हि ते तत्र दृश्यन्ते। नहि स्वप्नेऽविद्यमानानां दर्शनं कथञ्चिदुपपद्यत इति। **नैतद् वक्तव्यम्।** संस्कारबलेनोपपत्तेः। सत्यं रथप्रभृतयो बाह्यास्तत्तत्पदार्थाः खलु बहिर्देहात् स्वस्वप्रदेशे विद्यन्ते न स्वप्नप्रदेशे, तथापि संस्कारबलेन तेषां तत्राविद्यमानानामपि दर्शनमुपपद्यते। अचिन्तनीयं हि संस्काराणां माहात्म्यम्। नहि स लोके कश्चिदर्थो विद्यते यस्तैः स्वप्रदेशादन्यत्रापि यथानुभवं दर्शयितुं न शक्यते। तत्तत्पदार्थानुभवजनिताः खलु वासनाभेदाः संस्कारा इह व्यपदिश्यन्ते। ते च केवला अप्यर्थानां देशकालव्यत्यासेन दर्शने पटीयांसः किं पुनर्दोषान्तरसहाया इति नास्ति किञ्चित् परोक्षम्। यथा खलु कामिनीसंस्कारो जाग्रदवस्थायामेव देशान्तरे कालान्तरे चानुभूतामपि कामिनीं तत्स्पृहया मोमुह्यमानचेतस्कं कैणं प्रति साक्षात्पुरतोऽवस्थितामिव क्षणमात्रेण यथानुभवं दर्शयति तथा रथ-

प्रभृतितत्तत्पदार्थसंस्कारा अपि स्वप्नावस्थायां देशान्तरे कालान्तरे चानुभूतानपि रथप्रभृतींस्तत्तत्पदार्थान् निद्राग्लानचेतस्कं जीवात्मानं पुरुषं प्रति साक्षात्पुरतोऽवस्थितानिव क्षणमात्रेण यथानुभवं दर्शयन्ति । तदिदं दर्शनं तेषां च कामिनीदर्शनवद् विपर्य्ययज्ञयानमात्रं विद्यते न यथार्थं ज्ञानम् । अर्थाभावे जायमानत्वात् । न चार्थाभावे जायमानं किमपि ज्ञानं यथार्थं बोभोति । श्रुतिश्च स्वप्ने रथप्रभृतितत्तत्पदार्थाभावं प्रत्यक्षं प्रतिपादयति **"न तत्र रथा न रथयोगा न पन्थानो भवन्ति"** ( बृ० ४ । ३ । १० ) इति । संस्कारमात्रजन्यत्वाच्च स्मरणमेवैतन्न ततो विशिष्टं किञ्चित् । निद्रा च केवलं देशकालादिव्यत्यासेन तेषां प्रदर्शने हेतुः । अत एव वैदिकैस्तत्तत्पदार्थगोचरं विपर्य्ययात्मकं स्मरणज्ञानमेव स्वप्न इति दर्शनान्तरे सिद्धान्त्यते **"आत्ममनसोः संयोगविशेषात्संस्काराच्च स्मृतिः"** ( वै० ९ । २ । ६ ) **"तथा स्वप्नः"** ( वै० ९ । २ । ७ ) इत्यादिना । युक्तं चैतदनुमन्यामहे । अन्यथा जात्यन्धस्यापि स्वप्ने रूपदर्शनप्रसङ्गात् । न च स यावज्जीवं कदाचिदपि स्वप्ने रूपं किञ्चित् पश्यति । तदिदं स्वप्नज्ञानस्य स्मृत्यात्मकत्वे सुदृढं लिङ्गम् । प्रत्युत्पन्नेन्द्रियसम्प्रयोगादिसामग्रीप्रभवं हि सर्वं ज्ञानमनुभव इत्याख्यायते । न च सामग्रीयं स्वप्नज्ञाने कथञ्चिदुपपद्यते । चक्षुरादीन्द्रियग्रामस्य तदानीमुपरमात् । तदुपरमेण च लिङ्गादिज्ञानस्याप्यसम्भवात् । अवशिष्टस्य संस्कारस्य तत्सामग्रीत्वे च स्मृतिरूपमेव स्वप्नज्ञानं नानुभवात्मकमिति स्वयमेव निष्पद्यते । संस्कारमात्रजन्यज्ञानस्य स्मार्तत्वनियमात् । अननुभूतार्थगोचरं ज्ञानमनुभवः, अनुभूतार्थगोचरं ज्ञानं च स्मृतिरिति सर्वतन्त्रसिद्धान्तः । न च स्वप्नेऽनुभूतमर्थं विहाय कदाचिदननुभूतोऽर्थः प्रतिभासते । नहि यद् येन कदापि कुत्रापि नानुभूयते तत्प्रतिभासस्तस्य कदाचित् स्वप्ने जायते । नहि जात्यन्ध इवानन्धोऽपि कदाचिददृष्टमं रूपं तत्रेक्षते । श्रुतिश्चानुभूतमात्रगोचरं स्वप्नज्ञानं सुव्यक्तं भावयति **"यानि ह्येव जाग्रत् पश्यति तानि सुप्तः"** ( बृ० ४ । ३ । १४ ) इति । **यदेव जाग्रद् भयं पश्यति तदत्रा-**

**विद्यया मन्यते**" (बृ० ४ । ३ । २० ) इति च । विपर्य्ययोऽविद्या । नन्वनुभूतवदननुभूतज्ञानमपि श्रुत्या स्वप्ने श्राव्यते "**दृष्टं चादृष्टं च, श्रुतं चाश्रुतं च, अनुभूतं चाननुभूतं च**" (प्र० ४ । ५ ) इति । तत्कथं वयं स्वप्नज्ञानं स्मृतिरिति प्रतिपद्यामहे इति चेत् ? । परिहर्तव्यमेतत् । **अत्रोच्यते** । न खल्वदृष्टमश्रुतमननुभूतं पश्यतीत्यस्य यत् कदाचिन्न दृष्टं न श्रुतं नानुभूतं तत् पश्यतीत्यर्थः, कस्तर्हि ? जाग्रति यद् यथा दृष्टं स्वप्ने तत् कदाचिदयथादृष्टं पश्यति यद्यथा श्रुतं तत् कदाचिदयथाश्रुतं पश्यति यद् यथाऽनुभूतं तत् कदाचिदयथानुभूतं पश्यतीत्यर्थः । अनेन च स्वप्ने विपर्य्ययेण दृष्टादिगोचरं ज्ञानं प्रतिपादितं भवति न सर्वथाऽदृष्टादिगोचरम् । दृष्टादिविपर्य्ययेण तत्र वस्तुज्ञानम् "**अविद्यया मन्यते**" ( बृ० ४ । ३ । २० ) इत्युदाहृतश्रुत्याऽप्यनुमन्यते न च तत्रास्ति कश्चिदंशो विप्रतिपन्नः । या तु स्वप्ने जीवात्मकर्तृका तत्तत्पदार्थसृष्टिराम्नायते "**अथ रथान् रथयोगान् पथः सृजते**" (बृ० ४ । ३ । १०) इत्यादिना । साऽपि गौणी निश्चेतव्या । तत्र हि दृष्टादिव्यतिक्रमेण रथादीनां दर्शनात् "**सृजते**" इत्याम्नायते न परमार्थतस्तत्सृष्टिमभिसन्धाय । निद्राणस्य तत्सर्जनसामर्थ्याभावात् । "सृजते" इत्यस्य च "सृजत इव" इत्यर्थो न "सृजते" इति । "**स हि कर्ता**" (बृ० ४ । ३ । १० ) इत्युच्यमानं कर्तृत्वं च दर्शनसृष्टिहेतुत्वादुपपद्यते । नहि तदभावे संस्कारसहस्रेणापि यथापूर्वं वाऽयथापूर्वं वा तत्तत्पदार्थदर्शनं तत्र सम्भवति । "**य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः**" (कठ० ५ । ८ ) इति च परब्रह्मणः परमेश्वरस्य निर्मातृत्वमभिधीयते न जीवात्मनः पुरुषस्य "**तदेव शुक्रं तद् ब्रह्म**" ( कठ० ५ । ८ ) इत्यादिवाक्यशेषस्य तत्रैवोपपत्तेः । प्रकरणाच्च । प्रकरणं चेदं परब्रह्मणः परमेश्वरस्य विस्पष्टम् । "**अन्यत्र धर्मादन्यत्राधर्मात्**" ( कठ० २ । १४ ) इत्यादिना ब्रह्मण एव प्रकृतत्वात् । न च तत्प्रकरणे जीवात्मनो निर्मातृत्वमभिधातुं शक्यते । "**सुप्तेषु**" इत्यस्य च "जीवात्मसु सुप्तेषु" इत्यर्थो न "प्राणेषु सुप्तेषु"

इति । तस्माद् विपर्य्ययज्ञानमेव स्वप्नो नास्ति तत्र मात्रयाऽप्यर्थसृष्टिरिति सम्यगुच्यते ॥ ३ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"सूचकश्च हि श्रुतेराचक्षते च तद्विदः"** ॥ ४ ॥

सन्ध्य इति प्रथमया विपरिणम्य मायामात्रमिति च द्वयमनुवर्तते । पूर्वत्रैवायं हेतुरिति प्रथमेन चकारेणोच्यते, समुच्चयो द्वितीयेन । हेतौ हिः । विपर्य्ययज्ञानमेव स्वप्नो वेदितव्यः, कुतः ? **हि**=यतः **सूचकः**= भाविशुभाशुभावेदको विद्यते, कुतो विज्ञायते ? **श्रुतेः**=श्रुतिवचनादा- **चक्षते च**=व्याचक्षते च **तद्विदः**=स्वप्नविद इत्यर्थः ।

अस्ति खलु स्वप्नो भाविशुभाशुभावेदक इति श्रुतिराकर्णयति **"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र विजानीयात् तस्मिन् स्वप्ननिदर्शने"** ( छां० ५ । २ । ९ ) इति । **"पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति"** ( ऐ० आ० ३ । २ । ४ । १७ ) इति च । तथा स्वप्नविदोऽप्याचक्षते—स्वप्ने गजारोहणछत्रचामरलाभादिकं शुभावेदकं भवति, तैलाभ्यञ्जनखरोष्ट्रारोहणादिकं चाशुभावेदकमिति । यदि हि तत्र जाग्रद्वदभिनवा तत्तत्पदार्थसृष्टिरुपजायेत विपर्य्ययज्ञानमात्रं च न स विद्येत तदाऽवश्यं श्रुतिस्तत्कार्य्यमन्यत्किञ्चिदाकर्णयेत्, तद्विद्भिश्चाख्यायेत । नहि पदार्थास्तत्र जायन्ते कार्य्यं च किञ्चन नारभन्त इति मनोऽनुमन्यते । प्रबोधे दृश्यमानश्चरमधातुविसर्गस्तु स्त्रीदर्शनकार्य्यं न स्त्रीकार्य्यम् । अन्यथा माल्यविलेपनादयोऽपि स्त्रीस्वरूपनिबन्धनास्तत्र दृश्येरन् । न च ते प्रबुद्धस्य दृश्यन्ते यथा चरमधातुविसर्गः । भाविशुभाशुभावेदकत्वं च तस्य ज्ञानात्मकतामवगमयति नार्थात्मकताम् । तस्माद् विपर्य्ययज्ञानमात्रं स्वप्न इति निश्चितम् ॥ ४ ॥

ननु जाग्रद्वत् स्वप्नेऽपि कदाचिदेष बन्धमोक्षौ प्रत्येति, तस्य तौ कुतः प्रतिभासेते ? इति । अतः कारणसामान्यनिर्देशपूर्वकमुत्तरं पठति—

**"पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्य्ययौ" ॥ ५ ॥**

सन्ध्य इत्यनुवर्तते । तुना बुद्धिसत्त्वतिरोधाने पराभिध्यानातिरिक्तं कारणं व्यवच्छिद्यते । हिना रथप्रभृतितत्तत्पदार्थप्रतीतौ यत् कारणं तदेव बन्धमोक्षप्रतीतौ कारणमिति सोसूच्यते । **पराभिध्यानात्**=प्रत्यक्षादिप्रमाणतोऽनुभवपथं प्राप्ता रथप्रभृतयो मोक्षान्तास्तत्तत्पदार्थाः पराः, तेषामभितो ध्यानं पौनःपुन्येनाशेषविशेषतश्चिन्तनं तस्मात् **तिरोहितं**=बुद्धिसत्त्वमाच्छादितं वर्तते, **ततः**=तत्तिरोधानतोऽ**स्य**=निद्राणस्यास्य जीवात्मनो **बन्धविपर्य्ययौ**=बन्धस्तद्विपर्य्ययो मोक्षश्च सन्ध्ये प्रतिभासेते इत्यर्थः ।

ये खलु प्रत्यक्षादिप्रमाणतोऽनुभवपथं प्राप्तानां तत्तत्पदार्थानां सूक्ष्मा आभासाः प्रतिच्छायाः प्रतिबिम्बभेदा इति यावद् बुद्धिसत्त्वमारोहन्ति ते संस्कारा इत्याख्यायन्ते । ता एव च तत्तत्पदार्थवासना इत्युक्तम् । ताश्चैताः पुनः पुनस्तत्तत्पदार्थचिन्तनेन पोपुष्यमाणा बुद्धिसत्त्वं तिरोदधते यथा सौर्य्यं ज्योतिर्वृत्रपङ्क्तयः । तेन च तस्य याथातथ्यतो दूरादूरतत्तत्पदार्थप्रकाशनसामर्थ्यं व्याहन्यते । निद्राणस्य जीवात्मनश्च तत्तन्निमित्तं समवाप्य यथाकालमुद्बुध्यमानाभिस्तथाभूताभिस्तत्तत्पदार्थवासनाभिर्निद्राकृतेन देशकालविपर्य्यासेन यथा रथप्रभृतयस्तत्तत्पदार्थाः प्रतिभासन्ते तथा बन्धमोक्षावपि प्रतिभासेते । समानो ह्युभयेषां तदानीं प्रतिभासे कारणम् । शास्त्रस्य च बन्धमोक्षप्रतिपादनपरत्वाद् विशेषारम्भ इति सर्वमनवद्यम् ॥ ५ ॥

ननु स्वप्नोऽपि किञ्चिन्निमित्ताद् भवति, विचित्रस्य तस्य निमित्तवैचित्र्यस्याप्यवश्यम्भावात्? इति । अत आह—

**"देहयोगाद्वा सोऽपि" ॥ ६ ॥**

**वा**शब्देन निमित्तं विकल्प्यते । चार्थोऽपिः । **सोऽपि**=स च सन्ध्यो **देहयोगात्**=कदाचिद् देहविशेषसम्बन्धात् कदाचिद् धर्मात् कदाचिदधर्माद् भवतीत्यर्थः ।

तत्तत्पदार्थसंस्कारा हि स्वप्ने साधारणं कारणमभ्युपगम्यन्ते, देहविशेषसम्बन्धो धर्मोऽधर्मश्चासाधारणम् । तत्र यस्तावत् स्वप्नः संस्कारप्राधान्यात् सञ्जायते स संस्कारज इत्याख्यायते, यश्च देहविशेषसम्बन्धादिप्राधान्यात् स देहविशेषसम्बन्धजो धर्मजोऽधर्मजश्च समाख्यायते। देहवैशिष्ट्यं चात्र धातुवैषम्यं विवक्ष्यते । वातपित्तश्लेष्मणां धातूनां समाहारो हि देहः । ते यदा तत्र दैवाद्वा प्रमादाद्वा कदाचिद् वैषम्यमापद्यन्ते तदैव स समानदेहो भवन् देहविशेषः सम्पद्यते । तत्सम्बन्धाच्चैव नियमेनाकाशगमनादिकं वह्निप्रवेशकनकाचलाभ्युदितार्कमण्डलादिकं सरित्समुद्रप्रतरणहिमपर्वतादिकं च स्वप्ने पश्यति । गजारोहणछत्रचामरलाभादिकं धर्मात्, तैलाभ्यञ्जनखरोष्ट्रारोहणादिकमधर्मादित्यपि वेदितव्यम् । यश्चैतस्मात्स्वप्नभेदादन्यः स्वप्नः स सर्वः संस्कारजः ॥ ६ ॥

स्वप्नावस्था जीवात्मनो न्यरूपि । सम्प्रति तस्य सुषुप्त्यवस्था निरूप्यते—

**"तदभावो नाडीषु तच्छ्रुतेरात्मनि च" ॥ ७ ॥**

समुच्चयार्थश्चः । **तदभावः**=तदा प्रकृतः सन्ध्यः परामृश्यते, तस्य सन्ध्यस्य स्वप्नस्याभावोऽविद्यमानता सुषुप्तिरिति यावद् **नाडीषु**=हितानामिकासु नाडीषु पुरीतति नाड्या**मात्मनि च**=परमात्मनि च भवति, कुतो विज्ञायते ? **तच्छ्रुतेः**=तदा नाड्यादयः परामृश्यन्ते, तेषां सुषुप्त्यवस्थायां जीवात्मस्थानत्वेन श्रवणादित्यर्थः ।

सुषुप्तिमधिकृत्य हि समाम्नायते **"तद् यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति"** ( छां० ८ । ६ । ३ ) **"अथ यदा सुप्तो भवति तदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते"** ( बृ० २ । १ । १९ ) **"यत्रैतत् पुरुषः स्वपिति नाम सता सोम्य! तदा सम्पन्नो भवति"** ( छां० ६ । ८ ।

१) "**प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्**" (बृ० ४।३।२१) इति। तत्र संशयः–किमिह जीवात्मनः सुषुप्त्यवस्थायां स्थानत्वेन श्रुतानां नाडीपुरीतत्परमात्मनां विकल्पः स्यादाहोस्वित् समुच्चय इति। विकल्प इति पूर्वः पक्षः, समुच्चय इति सिद्धान्तः। किं तावत् प्राप्तम्? विकल्प इति ब्रूमः। परस्परानपेक्षाणां तेषामेकार्थत्वेन समाम्नानात्। ये हि परस्परनिरपेक्षाः खलु कस्मैचिदेकस्मै कार्य्याय समाम्नायन्ते ते नूनं तत्प्रति विकल्प्यन्ते न समुच्चीयन्ते। नहि परस्परनिरपेक्षाः क्रतुसाधनीभूताय पुरोडाशाय समाम्नाता व्रीहियवाः कदाचित् समुच्चीयन्ते। यथा च परस्परनिरपेक्षाणां तेषां पुरोडाशैकार्थतया समाम्नातानां विकल्पोऽभ्युपगम्यते तथा परस्परनिरपेक्षाणां जीवात्मनः स्वापाय समाम्नातानां नाडीपुरीतत्परमात्मनां स्थानविशेषाणामपि विकल्पोऽभ्युपगममर्हति। परस्परनिरपेक्षाणां तेषां स्वापैकार्थत्वेन समाम्नानं च समानविभक्त्या निर्देशादवगम्यते। परस्परनिरपेक्षा हि समानार्थाः समानविभक्त्या निर्दिश्यन्ते न परस्परसापेक्षाः। विद्यते च सुषुप्तिस्थानानां नाड्यादीनां समानविभक्त्या सप्तम्या निर्देशः "**नाडीषु सुप्तो भवति**" (छां० ८।६।३) "**पुरीतति शेते**" (बृ० २।१।१९) इत्यादिः। **ननु च** तृतीययाऽपि क्वचन निर्देशो दृश्यते "**सता सोम्य! तदा सम्पन्नो भवति**" (छां० ६।९।२) इत्यादिः। **नैष दोषः**। तत्रापि वाक्यशेषबलेन सप्तम्यर्थस्य गम्यमानत्वात्। अस्ति तावद् वाक्यशेषः "**सति सम्पद्य न विदुः सति सम्पद्यामहे**" (छां० ६।९।२) इति। तत्र च सप्तमी प्रयुज्यते। तद्बलादिहापि तृतीयाप्रयोगः सप्तम्यर्थ इति गम्यते। युगपद् सर्वत्र स्वापासम्भवाच्च। समुच्चये हि जीवात्मनो नाडीषु पुरीतति परमात्मनि च सर्वत्र युगपत् स्वापो वक्तव्यः। न च स सम्भवति। तस्याणुत्वात्। नह्यणुर्भवन् जीवात्मा यस्मिन् काले नाडीषु स्वापार्थमुपसर्पति तस्मिन्नेव काले पुरीतति परमात्मनि चोपसर्पितुमर्हति। न चैवंविधो दोषः कश्चिद् विकल्पे प्रसज्यते। तत्र स्वापस्य लोकवदाश्रयेणोपपत्तेः।

यथा हि लोके खलु सम्राट् सत्सु बहुषु स्वापप्रासादेषु कदाचिन्नन्द्यावर्ते स्वपिति कदाचित् सर्वतोभद्रे स्वस्तिके च कदाचित्, तथा जीवात्मा पुरुषोऽपि कदाचिन्नाडीषु शेते कदाचित् पुरीतति परमात्मनि च कदाचिदित्याञ्जस्येनोपपद्यते नास्ति किञ्चिद्दोषावतारः । तस्माज्जीवात्मनः सुषुप्तिस्थानत्वेन श्रुतानां नाडीपुरीतत्परमात्मनां विकल्प एव युक्तो न समुच्चय इति । एवं प्राप्तेऽभिधीयते—**समुच्चयः** । पाक्षिकबाधप्रसक्तेः । श्रुत्या खलु नाडीपुरीतत्परमात्मनां त्रयाणां सुषुप्तौ जीवात्मस्थानत्वं श्राव्यते । तत्र चेद्विकल्पः समाश्रीयेत तदा श्रुतस्य पाक्षिको बाधः प्रसज्येत । स चागतिकगतिकः । न च सम्भवन्त्यां गतौ क्वचित् समाश्रयितुं शक्यते । व्रीहियवास्तु परस्परनिरपेक्षाः क्रतुसाधनीभूतं पुरोडाशं विधातुं शक्नुवन्ति । तेषां तत्र परस्परापेक्षायामभ्युपगम्यमानायां च निरपेक्षसाधनताप्रतिपादिका श्रुतिर्बाध्यते । तस्याश्च नास्त्यन्या काचन गतिरित्यनन्यगतिकत्वाद् विकल्पः समाश्रीयते । न चैवं परस्परनिरपेक्षा नाड्यादयो जीवात्मनः स्वापं साधयितुं पारयन्ति, न वा परस्परापेक्षायां तेषां तत्साधनताप्रतिपादिका श्रुतिः कदाचिद् बाधमापद्यते येन तद्विकल्पोऽपि स्वापं प्रति समाश्रीयेत । यत्तु तत्र साधनमुपन्यस्यते परस्परनिरपेक्षाणां तेषामेकार्थत्वेन समानविभक्त्या निर्देश इति । तदपि न सम्यगुपन्यस्यते । परस्परसापेक्षाणामप्येकार्थत्वेन समानविभक्त्या निर्देशस्य दृष्टत्वात् । यदि हि परस्परनिरपेक्षा एव खल्वेकार्थत्वेन समानविभक्त्या निर्दिश्यन्त इति नियम्येत तदाऽवश्यं सुषुप्तिस्थानत्वेन श्रुतेषु नाडीपुरीतत्परमात्मसु विकल्पोऽभ्युपगम्येत । न चैवं नियन्तुं शक्यते । यत्कारणं परस्परसापेक्षा अपि समानार्थत्वेन समानविभक्त्या निर्दिश्यमाना दृश्यन्ते—कर्मणा मुच्यते ज्ञानेन मुच्यते, प्रासादे शेते पर्य्यङ्के शेत इति । तत्र ज्ञानकर्मणी मोक्षं प्रासादपर्य्यङ्कौ च स्वापं साधयितुमन्योऽन्यमपेक्षेते इति नास्ति कस्यचन तिरोहितम् । अवान्तरव्यापारविशेषस्तु तेषां समुच्चयमेव द्रढयति न विकल्पमासञ्जयति । तं विना तत्समुच्चयासिद्धेः । क्रमसमुच्चयश्चात्र मोक्षे ज्ञानकर्मवदभिप्रेयते न समसमुच्चयः । यथा हि ज्ञानमाप्तौ साधनं खलु

कर्म ज्ञानसाध्ये मोक्षेऽपि साधनं तत्र तत्र व्यपदिश्यते तथा पुरीतत्प्राप्तौ साधनं नाड्यः, परमात्मप्राप्तौ च साधनं पुरीतदिति ते अपि परमात्मवत् सुषुप्तिस्थाने व्यपदिश्येते । तत्र परब्रह्म परमात्मा जीवात्मनः साक्षात् सुषुप्तिस्थानं, तत्प्राप्तौ द्वारमात्रत्वाच्च नाड्यः पुरीतच्चेत्युभयम् । द्वारिशब्दश्च द्वारमात्रेऽपि शक्यते प्रयोक्तुमुपचारादिति न तत्र तद्व्यपदेशो विरुध्यते । तमिमं द्वारद्वारिभावनिबन्धनं क्रमिकं नाम समुच्चयं च नाड्यादीनां सुषुप्तिस्थानानां दर्शयति स्वयं श्रुतिः "**तासु तदा भवति, यदा सुप्तः स्वप्नं न कश्चन पश्यत्यथास्मिन् प्राण एकधा भवति**" ( कौ० ४ । १९ ) इति । तत्र नाडीनां प्राणस्य चोक्तसमुच्चयो विस्पष्टः । पूर्वं नाडीषु स्वापाय प्रत्यवसर्पति, ताभिः प्रत्यवसृप्य च प्राणे स्वपिति । एकधात्वमविभागः । स एव "**सता सोम्य ! तदा सम्पन्नो भवति**" ( छां० ६ । ८ । १ ) "**प्राज्ञेनात्मना सम्परिष्वक्तः**" ( बृ० ४ । ३ । २१ ) इत्याद्यासु श्रुतिषु सम्पत्तिपदार्थः सम्परिष्वक्तपदार्थश्च । सत्प्राज्ञौ तु परमात्मवचनौ प्रसिद्धौ । प्राणस्य तद्वचनत्वं च "**प्राणस्तथाऽनुगमात्**" ( वे० १ । १ । २८ ) इत्यत्र समधिगतं न विस्मर्तव्यम् । नाडीपुरीतत्समुच्चयश्च श्रुत्यन्तरेऽपि द्वारविभक्त्युपादानेन सुव्यक्तं प्रदर्श्यते "**ताभिः प्रत्यवसृप्य पुरीतति शेते**" ( बृ० २ । १ । १९ ) इति । यत्रापि निरपेक्षा नाडीः सुषुप्तिस्थानं जीवात्मनः श्रावयति श्रुतिः "**आसु तदा नाडीषु सृप्तो भवति**" ( छां० ८ । ६ । ३ ) इति, तत्रापि श्रुत्यन्तरप्रसिद्धस्य परब्रह्मणः परमेश्वरस्याप्रतिषेधान्नाडीद्वारा भगवति तस्मिन्नेवावतिष्ठते तदानीमिति श्रावितं विज्ञायते "**पुरीतति शेते**" ( बृ० २ । १ । १९ ) इति स्वापाधारतया पुरीतदुपादानमपि च द्वारमात्राभिप्रायेणैव क्रियत इति द्रष्टव्यम् । "**य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते**" ( बृ० २ । १ । १७ ) इति प्रकृते हि हृदयाकाशे सुषुप्तिस्थाने तावदिदमुच्यते "**पुरीतति शेते**" ( बृ० २ । १ । १९ ) इति । यस्मिन् प्रकृते च यदुच्यते नूनं तत्प्रतिपादनाय तदुच्यत इति शास्त्रविदां

स्थितिः । तत्प्रतिपादनं च द्वारद्वारिभावेन समुच्चयेऽभ्युपगम्यमाने घटते न प्रकारान्तरेण केनचित् । न च तत्र सप्तम्यनुपपत्तिरिति साधु भाषणम् । उपचारादुपपत्तेः । यथा हि प्रासादस्थिते पर्य्यङ्के शयानः खलु प्रासादे शेते यथा वा प्राकारवेष्टिते नगरे विद्यमानो नगराधिपः प्राकारे विद्यत इत्युपचर्य्यते तथा हृदयाकाशे शयानोऽपि पुरीतति शेत इत्युपचरितुं शक्यते । हृदयपरिवेष्टनं चर्म हि पुरीतदिह प्राकारवदभिधीयते तदन्तरवर्ती हृदयाकाशः परमात्मा च नगरवत् । हृदयाकाशः परमात्मेति च निरणायि पुरस्तात् **"दहर उत्तरेभ्यः"** ( वे० १ । ३ । १४ ) इत्यत्र । यदुक्तं समुच्चये जीवात्मनोऽणुत्वाद् युगपत्स्वापासम्भवः स्यादिति । तदप्येतेनैव समूलकाषं कषितं वेदितव्यम् । द्वारद्वारिभावेनाभ्युपगम्यमाने तस्मिन्नुक्तदोषानवतारात् । तथाच जीवात्मनः सुषुप्तौ यानि त्रीणि स्थानानि नाड्यः पुरीतत् परमात्मा चेति सङ्कीर्त्यन्ते तेषां नाड्यः पुरीतदित्युभयं परमात्मप्राप्तिद्वारमात्रत्वात् सुषुप्तिस्थानं परमात्मा च साक्षादिति निष्कर्षः । तत्र च तावदविभागेनावतिष्ठते जीवात्मा यावन्न प्रबुध्यत इति सिद्धान्तः । तस्मात् सुषुप्तौ जीवात्मस्थानतया श्रुतानां नाडीपुरीतत्परमात्मनां समुच्चय एव स्यान्न विकल्प इति युक्तमीक्षामहे ॥ ७ ॥

तदेव द्रढयन्नाह—

**"अतः प्रबोधोऽस्मात्"** ॥ ८ ॥

**अतः**=यतः परमात्मैव सुषुप्तिस्थानमतः **प्रबोधः**=जीवात्मप्रबोधो**ऽस्मात्**=परमात्मनः सकाशादनुशिष्यमाणः सङ्गच्छत इत्यर्थः ।

सुषुप्त्यधिकारे हि **"कुत एतदागात्"** ( बृ० २ । १ । १६ ) इति प्रश्नस्य प्रतिवचनवेलायां परमात्मनः सकाशाज्जीवात्मनः प्रबोधस्तावदनुशिष्यते **"यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवै तस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति"** ( बृ० २ । १ । २० ) इति । **"सत आगम्य न विदुः सत आगच्छामहे"** ( छां० ६ । १० । २ )

इति च। चेत् सुषुप्तिस्थानेषु नाडीपुरीतत्परमात्मसु विकल्पो विद्येत तदा नाडीभ्यः पुरीततः परमात्मनश्च त्रिभ्यस्तत्प्रबोधोऽनुशिष्येत। नहि विकल्प्यमानेषु तेषु परमात्मन एव तत्प्रबोधोऽनुशासितुं शक्यते। अस्ति च यतः प्रबोधस्तदेव सुषुप्तिस्थानमिति नियमः। अन्यत्र सुषुप्तस्यान्यतः प्रबोधानुपपत्तेः। स च परमात्मन इत्युक्तानुशासनात् प्रव्यक्तम्। अतः सुषुप्तिस्थानमपि स एवेति निश्चयः॥ ८॥

**किं** सुषुप्त एव प्रबुध्यतेऽथवाऽन्य इति संशयः। तत्र सुषुप्तस्य परमात्मन्यविभागाभ्युपगमादन्य इति प्राप्ते प्रतिविधीयते—

**"स एव तु कर्मानुस्मृतिशब्दविधिभ्यः"** ॥ ९ ॥

तुना प्राप्तं व्यावर्त्यते। **स एव**=यः सुषुप्तः स एव प्रबुध्यते, कुतः? **कर्मानुस्मृतिशब्दविधिभ्यः**=कर्मानुष्ठानं कर्म, प्रत्यभिज्ञानमनुस्मृतिः, श्रुतिः शब्दः, शेषकर्मानुष्ठानात्, प्रत्यभिज्ञानात्, श्रुतेः, कर्मविद्याविधिभ्यश्चेत्यर्थः।

प्रबुद्धः खलु पूर्वेद्युरनुष्ठितस्य कर्मणः शेषमपरेद्युर्नियमेनानुतिष्ठन्नवलोक्यते। चेदयं सुषुप्तादन्यो भवेन्न जातु प्रबुद्धस्तच्छेषानुष्ठाने नियमेन यथारुचि प्रवर्तेत। नह्यन्येनारब्धस्य कर्मणः शेषस्यानुष्ठानेऽन्यो नियमेन यथाकामं प्रवर्तितुमुत्सहते। प्रतिप्रबोधं चायमात्मानं प्रत्यभिजानन् दृश्यते य एवाहं नक्तमस्वाप्सं स एवाहं प्रातः प्रबुध्य इति। न च प्रबुद्धस्य सुषुप्तादन्यत्वे प्रतिप्रबोधं दृश्यमानमिदं प्रत्यभिज्ञानं कथञ्चिदुपपद्यते। नह्यन्यमात्मानमन्यः कदाचिदात्मत्वेन प्रत्यभिज्ञातुं पारयते। शब्दश्च य एव सुप्तः स एव प्रबुध्यत इति सुस्पष्टं प्रतिपादयति **"पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव"** (बृ० ४। ३। १६) इति। **"त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद् यद् भवन्ति तदाभवन्ति"** (छां० ६। ९। ३) इति। कर्मविद्याविधयश्चैनं कर्मणि **विद्यायाम्**=उपासनायां च सततं प्रयुञ्जते। प्रबुद्धस्य सुषुप्ताद-

न्यत्वे नूनं सर्वे ते निष्फलाः प्रसज्येरन् । नहि विहिते इमे विद्याकर्मणी कदाचित्प्रयोक्तृतोऽन्यत्र फलमुपजनयितुमर्हतः । प्रयोक्तरि शास्त्रोक्तस्य फलस्य नियमात् । न च निष्फलास्ते स्वप्नेऽपि वक्तुं शक्यन्ते । शास्त्राप्रामाण्यापातात् । प्रमाणं च नः सर्वदा सर्वत्र विधिनिषेधशास्त्रम् । यत्रेदं स्मर्य्यते **"तस्माच्छास्त्रं प्रमाणं ते कार्य्याकार्य्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि"** ( गी० १६ । २४ ) इति । कृतनाशादिप्रसक्तेश्च । यदि हि प्रबुद्धः खलु सुषुप्तादन्यो भवेत् तदा कृतनाशाकृताभ्यागमौ दुर्निवारणौ प्रसज्येयातां, जगज्जन्मादिकारणे भगवति परब्रह्मणि परमात्मनि च वैषम्यनैर्घृण्ये । तदनभ्युपगमे चोभयलोकभ्रष्टकरं परमं नास्तिक्यम् । तदिदं बहु मन्दम् । तस्माद् य एव स्वपिति स एव प्रबुध्यत इति निश्चितो वेदविन्मार्गः ॥ ९ ॥

**सम्प्रति** जीवात्मनो मूर्च्छावस्था विचार्य्यते—

**"मुग्धेऽर्द्धसम्पत्तिः परिशेषात्"** ॥ १० ॥

**मुग्धे**=मूर्च्छां मोहः, तं प्राप्ते**ऽर्द्धसम्पत्तिः**=सम्पत्तिः सुषुप्तिः **"सता सोम्य! तदा सम्पन्नो भवति"** ( छां० ६ । ८ । १ ) इति श्रुतेः, अर्धसुषुप्तिः प्रतिपत्तव्या, कुतः? **परिशेषात्**=परिशेषत इत्यर्थः ।

अस्ति खलु शरीरस्थस्य जीवात्मनो लोकायुर्वेदयोः प्रसिद्धा काचन मूर्च्छावस्था । यां किल प्राप्तः पुरुषो मूर्च्छितो मुग्ध इति वा व्यपदिश्यते । तत्र संशयः—किमियं जाग्रदादीनामन्यतमा काचित् स्यादाहोस्विदवस्थान्तरम् । अवस्थान्तरस्वीकारे गौरवापत्तेरन्यतमा काचित् स्यादिति प्राप्तेऽभिधीयते—**अवस्थान्तरं परिशेषात्** । न तावत् स्वप्नजागरितयोरेका काचन मूर्च्छावस्था सम्भवति । विशेषात् । स्वप्नजागरितयोर्हि विषयविज्ञानं बोभवीति मूर्च्छायां च न बोभोति । सोऽयं स्वप्नजागरितयोर्मूर्च्छायाश्च विशेषः । न च सति तस्मिन् स्वप्नो वा जागरितं वा भवितुमर्हति । नाप्येषा मरणं कल्पयितुं शक्यते । प्राणोष्मणोः सद्भा-

वात् । मूर्च्छायां हि प्राणोष्माणौ स्तो मरणे च न स्तः । न च सुषुप्ति-रपि सम्भवति । वैलक्षण्यात् । अस्ति मूर्च्छायां सुषुप्तेर्वैलक्षण्यम् । मूर्च्छां प्राप्तो हि कदाचिच्चिरमपि नोच्छ्वसिति मुखश्रियं च परित्यजति । शरीरं तस्य वेपथते नेत्रे च विस्फारिते जायेते । सुषुप्तिं गतस्तु नैवं सम्पद्यते । स हि तुल्यकालं पौनःपुन्येनोच्छ्वसिति मुखश्रियं च मात्रयाऽपि न परिजहाति । न चास्य शरीरं कम्पते, न च नेत्रे अपि विस्फारिते जायेते । स प्रसन्नवदनो निमीलितनयनः स्वपिति पाणिपेषणमात्रेण च जागर्ति । मूर्च्छितस्तु मुद्गरादिघातेनापि नोत्तिष्ठति । तदिदमपरं तयोर्वैलक्षण्यम् । निमित्तभेदश्च । मूर्च्छायाः सुषुप्तेश्च निमित्तभेदोऽपि वर्तते । मूर्च्छा हि मुसलसम्पातादितो जन्यते सुषुप्तिश्च परिश्रमात् । न चैवमाकारभेदे निमित्तभेदे च सति मूर्च्छा सुषुप्तिरिति कथञ्चिदुपपद्यते । न च जाग्रदादितोऽन्या जीवात्मनोऽवस्था काचनाभ्युपगम्यते यत्रास्या अन्तर्भाव आशङ्क्येत । परिशेषादर्द्धसम्पत्तिरेवैषेति प्रतिपद्यते । विशेषविज्ञानाभावसामान्यात् सम्पत्तित्वम्, आकारादिवैलक्षण्याच्चार्द्धत्वम् । अर्द्धसम्पत्तिरर्द्धसुषुप्तिः । मोहो मुग्धिरिति च तदभिधानान्तरम् ॥ १० ॥

जीवात्मनः स्वप्नाद्या अवस्थाभेदाः प्रत्यपादिषत । सम्प्रति भगवतो ब्रह्मणस्तदसम्बन्धः प्रतिपाद्यते भक्त्यतिशयोत्पत्त्यर्थम्—

**"न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र" ॥ ११ ॥**

**परस्य**=जीवात्मभ्यः प्रकृतितत्कार्य्येभ्यश्च परस्य भगवतो ब्रह्मणः **स्थानतोऽपि**=स्वत इत्यपेरर्थः, स्थानमिह जीवात्मा, तत्र हि ब्रह्मान्तर्य्यामिरूपेणावतिष्ठते **"य आत्मनि तिष्ठन्नात्मनोऽन्तरः"** (बृ० मां० ३ । ७ । ३०) इत्यादिश्रुतेः, निमित्तं पञ्चम्यर्थः, स्थाननिमित्तोऽपि **न**=स्वप्नाद्यवस्थासम्बन्धो न विद्यते, कुतः? **हि**=यतः **सर्वत्र**=श्रुतिस्मृतिषु **सर्वत्रोभयलिङ्गम्**=लिङ्गं धर्मः, आन्तरबाह्योभयस्थितिधर्मकं समाम्नायत इत्यर्थः ।

अत्र जगज्जन्मादिकारणं ब्रह्म विषयः । तस्य जीवात्मवत् स्वप्नाद्यवस्था-

सम्बन्धो विद्यते किंवा न विद्यत इति संशयः । तत्र विद्यत इति पूर्वः पक्षः, न विद्यत इति सिद्धान्तः । किं तावत् प्राप्तम्? विद्यत इति ब्रूमः । चैतन्याविशेषात् । अस्ति खलु चेतनं ब्रह्म चेतनो जीवात्मा । तस्य यदा स्वप्नाद्यवस्थासम्बन्धो विद्यते तदा ब्रह्मणोऽपि तत्सम्बन्धेन भवितव्यमिति विज्ञायते । नह्येकश्चेतनस्तत्सम्बन्धमर्हति नापर इत्याकस्मिको विशेषो युज्यते । चैतन्याविशेषे तत्सम्बन्धाविशेषस्याप्यौचित्यात् । **ननु** तत्सम्बन्धे चैतन्यमात्रं कारणं न घटते । मुक्तात्मनि व्यभिचारात् । नहि तस्य चेतनत्वेऽपि स्वप्नाद्यवस्थासम्बन्धो विद्यते । किं तर्हि तत्र करणम्? भोगहेतुशरीरसम्बन्धः । स च मुक्तस्येव भगवतो ब्रह्मणो नाभून्न भवति न भविष्यति । **"शुक्रमकायमव्रणम्"** (यजु० ४० । ८) इत्यादिश्रुतिभिः प्रतिषेधात् । तथाच कथं तस्य तत्सम्बन्धो भवेदिति चेत्? । **अत्रोच्यते** । मा नाम भूत् तर्हि तस्य स्वतस्तत्सम्बन्धः स्थाननिमित्तो भविष्यति । स्वत इवोपाधितोऽपि तद्धर्मसम्बन्धस्य सम्भवात् । अस्ति खलु जीवात्मनः शरीरमिव भगवतो ब्रह्मणो जीवात्मा स्थानम् । तस्य तत्रान्तर्य्यामिरूपेणावस्थानात् । यत्रेदमाम्नायते **"यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरो यमयति, एष त आत्माऽन्तर्य्याम्यमृतः"** (बृ० ३ । ७ । २२) इति । विज्ञानं जीवात्मेत्युक्तम् । तथाच केदारादौ वर्तमानस्योदकस्य शरीरे च वर्तमानस्य जीवात्मनो यथा तद्धर्मसम्बन्धः सम्भवति तथा शरीरकल्पे जीवात्मनि विज्ञाने वर्तमानस्य भगवतो ब्रह्मणोऽपि तद्धर्मस्वप्नाद्यवस्थासम्बन्धः सम्भवति नास्ति कश्चित् प्रतिबन्धः । तस्माद् विद्यते जीवात्मवद् ब्रह्मणोऽपि तत्सम्बन्ध इति । **एवं** प्राप्ते प्रतिविधीयते—**न स्थानतोऽपि परस्य** । यथा हि जीवात्मा खलु शरीरमात्रेऽवतिष्ठते तथा चेद् ब्रह्मापि जीवात्ममात्रेऽवतिष्ठेत तदाऽवश्यं तस्य जीवात्मोपाधिकृतः स्वप्नाद्यवस्थासम्बन्धः परिकल्प्येत । न च शरीरमात्रे जीवात्मवज्जीवात्ममात्रे ब्रह्मावतिष्ठते । तद्धि यथा जीवात्मनोऽन्तस्तास्याति तथा ततो बहिरपि प्रतितास्याति । न चान्तर्बहिःक्रम-

यत्र प्रतितिष्ठितस्य तस्य तदुपाधिकः स्वप्नाद्यवस्थासम्बन्धः कथञ्चिदवकल्पते । तत्रैव ह्युपाधिः खलु स्वधर्मं सम्बन्धुं पारयति यत्तेन परिच्छिद्यते यथा दर्पणादिना तत्प्रतिबिम्बितं कामिन्यादिमुखं केदारेण चोदकम् । न चैवं ब्रह्म जीवात्मादिना केनचिदुपाधिना परिच्छिद्यते । यच्च न परिच्छिद्यते कथं तत्र तदुपाधिको धर्मः सम्बध्येत । तत्तदुपाधिना भगवतस्तस्यापरिछिन्नत्वं चान्तर्बहिरुभयत्रावस्थानात् सुखेन प्रतिपद्यते । समाम्नायते चेदं श्रुतिस्मृतिषु सर्वत्र विस्पष्टम् **"स भूमिं विश्वतो वृत्त्वाऽत्यतिष्ठद् दशाङ्गुलम्"** (ऋ० ८ । ४ । १७ । १) **"तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः"** (यजु० ४० । ५) **"बहिरन्तश्च भूतानामचरं चरमेव च"** (गी० १३ । १५) इति । सार्वत्रिकश्चैष नियम—उपाधिसंसर्गे सत्येवोपधेये तद्धर्माः संसृज्यन्ते नासति तत्संसर्गे । नहि यस्य येन संसर्गो न विद्यते तद्धर्मास्तत्र कर्हिचित् संस्रष्टुं पारयन्ते । चेतने चाविद्यकस्तत्संसर्गस्तद्धर्मसंसर्गहेतुरिष्यते न स्फटिकजवाकुसुमदिसाधारण इति सिद्धान्तः । यत्रेदं स्मर्य्यते **"न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते"** (सां १ । १९) **"तद्योगोऽप्यविवेकान्न समानत्वम्"** (सां० १ ५५) **"तस्य हेतुरविद्या"** (यो० २ । २४) इति । न च विद्यास्वभावे भगवति ब्रह्मणि कालत्रयेऽप्यविद्याकृतोपाधिसंसर्गो वक्तुं शक्यते । तदभावे च कथं तत्रौपाधिकाः स्वप्नाद्यवस्थाभेदा अपि संसृज्य प्रत्यवभासेरन् । तस्मात् स्थानतोऽपि नास्ति भगवतस्तस्य स्वप्नाद्यवस्थासम्बन्ध इत्यवसातव्यम् ॥ ११ ॥

अत्राशङ्क्य समाधत्ते—

**"न भेदादिति चेन्न प्रत्येकमतद्वचनात्"** ॥ १२ ॥

स्थानतः परस्येत्यनुवर्तते । न=यदुक्तं तन्न युज्यते, कुतः? भेदात्=स्थानतः परस्य भेदादिति चेत्=यदुच्यते तदा न=न वाच्यम्, कुतः? प्रत्येकं=प्रतिस्थानमतद्वचनात्=तच्छब्देन भेदं परामृशति, अभेदवचनात् तदभेदाभिधानादित्यर्थः ।

**अथोच्येत**—यदुक्तं स्थानतोऽपि भगवतो ब्रह्मणः स्वप्नाद्यवस्थासम्बन्धो न विद्यत इति, तन्न युक्तं मन्यामहे । तस्य स्थानभेदेन भेदात् । यथा ह्याकाशः खलु घटघटिकोदञ्चनादिस्थानभेदेन भिद्यते तथा ब्रह्मापि तत्तत्स्थानभेदेन भिद्यते । चेदिदं न भिद्येत तदा न श्रुत्या तस्य भिन्नं नाम भिन्नं रूपं च श्राव्येत । नह्येकस्य सतो विना स्थानयोगेन भिन्नं नाम भिन्नं रूपं च कथञ्चिच्छ्रावयितुं शक्यते । यथा चाकाशस्य तावद् घटाकाशो घटिकाकाश इत्यादिकं नाम रूपं च घटघटिकादिस्थानयोगाद् व्यपदिश्यते तथा ब्रह्मणोऽपि तत्तत्स्थानयोगादादित्यपुरुषोऽक्षिपुरुषो वैश्वानर इत्यादिक नाम रूपं च तत्र तत्र श्रुत्या श्राव्यत इति विज्ञायते । सति चैवं स्थानभेदेन नामरूपयोर्भेदे तद्धर्मसम्बन्धोऽपि भगवतस्तस्य जायत इति सुखेन प्रतिपत्तुं शक्यते । रूपभेदस्य तस्य धर्मसम्बन्धनिबन्धनत्वात् । नह्यादित्यादिस्थानधर्मासम्बन्धे हिरण्यश्मश्रुर्हिरण्यकेश इत्यादिकं रूपं भगवतस्तस्य कथञ्चिदुपपद्यते । न च परमार्थतोऽस्ति तस्येदृशं किञ्चिद्रूपम् । तत्तत्स्थानधर्मसम्बन्धे च स्वप्नाद्यवस्थासम्बन्धोऽपि घटते । स्थानधर्मत्वाविशेषात् । आदित्यादिस्थानधर्मो हि सः, जीवात्मस्थानधर्मश्चायमित्यविशेषः । तस्मात् स्थानतोऽपि न विद्यते परस्य स्वप्नाद्यवस्थासम्बन्ध इत्ययुक्तमिति । **नैतद्वक्तव्यम्** । स्थानभेदेऽपि तदभेदाभिधानात् । अस्ति तावद् व्यापकं ब्रह्म **"स ओतश्च प्रोतश्च विभूः प्रजासु"** (यजु० ३२ । ८) **"अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च"** (कठ० ६ । ९) **"सर्वव्यापी सर्वभूतान्तरात्मा"** (श्वे० ६ । ११) इत्यादिश्रुतिभ्यः । न च तदादित्यादिषु तत्तत्स्थानेषु वर्तमानमपि तद्भेदेन कर्हिचिद्भेदमापद्यते । नहि स्थानानि भिद्यन्त इति कृत्वा तत्स्थानिभेदेनापि भवितव्यमिति कश्चिन्नियमोऽस्ति । न च यत् स्वतो न भिद्यते तद् भिद्यमानानि सन्त्यपि स्थानानि कदाचिद् भेत्तुमवकल्पन्ते । घटघटिकादिस्थानयोगादाकाशभेदोऽपि स्थूलदृशामेव प्रतिभासते न जातु सूक्ष्मदृशाम् । नहि सूक्ष्मदृशः कदापि तद्भेदेन तद्भेदं प्रामाणिकं मन्यन्ते । सूक्ष्मदृशोऽधिकृत्य प्रवृत्तं चैतद् वेदोपनिष्च्छास्त्रं न स्थूल-

दृशः । तेऽपि च कदाचिदाकाश इव भगवति तस्मिन्नपि तत्तत्स्थानभेदेन भेदं मा नाम द्राक्षुर्यथा दर्शनमुपासनायां प्रवर्तमानाः संसारगर्भपातोद्भवं नानाविधं दुःखं च मा नामार्च्छिषुरिति तदनुकम्पापरायणा श्रुतिस्तद्भेदे सत्यपि तदभेदमभिधत्ते "**तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम**" (छां० १ । ७ । ५) इति । **तस्यैतस्य**=अक्षिपुरुषस्य, **अमुष्य**=आदित्यपुरुषस्येर्थः । "**स यश्चायं पुरुषे यश्चासावादित्ये स एकः**" (तै० ३ । १०) "**स यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषः, अयमेव स योऽयमात्मेदममृतमिदं ब्रह्म**" (बृ० २ । ५ । १) इति च । न च श्रुत्या तदभेदेऽभिहिते स्थानभेदेन शक्यस्तद्भेदोऽभ्युपगन्तुम् । तस्य श्रुत्यपेक्षया दुर्बलत्वात् । नामभेदश्च क्वचित् स्थानभेदनिबन्धनो भवन्नपि न तत्स्वरूपभेदमावहति । तस्य तत्राकिञ्चित्करत्वात् । नहि किञ्चिद् वस्तु स्थानभेदेन नामभेदमनुभवत् कदाचित्स्वरूपभेदमनुभवति । नह्येकत्र भवन्नश्वोऽन्यत्र नामभेदेन सोऽनश्वो भवति । यत्तु हिरण्यश्मश्रुर्हिरण्यकेश इत्यादिकं रूपं श्राव्यते तदालङ्कारिकं श्राव्यते न स्थानप्रयोज्यम् । नह्यादित्यादिस्थानस्य तादृक्षं रूपं विद्यते येनेदं तत्प्रयोज्यं परिकल्प्येत । देवतात्वं च द्योतनान्मण्डलस्यैवाभ्युपेयते नान्यस्य कस्य चित् । आलङ्कारिकत्वे च तस्य नास्ति कश्चिदंशश्चिन्तनीयः । यथा यथा ह्युपदेष्टव्योऽर्थः सत्वरसहृद्धितलमधिरोहति तथा तथैव श्रुतिरस्मभ्यमुपदिशति । शिरःपाणिपादादिमद्रूपं चास्माकं बहु प्रियं साजात्यादिति मत्वा श्रुत्याऽपि तेनैव रूपेणोपदेष्टव्यः परमात्मा तावदुपदिश्यते "**तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ**" (छां० ५ । १२ । २) इति । "**अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग् विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा**" (मुं० २ । १ । ४) इति च । रूपस्यास्यालङ्कारिकत्वे च पर्यवसानमपनिबन्ध-

नत्वमपि प्रत्युक्तं भवति । सर्वत्रालङ्कारिके रूपे स्थानधर्मसम्बन्धस्यानपेक्षणात् । एकत्र सिद्धे च स्थानधर्मासम्बन्धेऽन्यत्रापि सोऽस्ति सिद्ध इति गम्यते । समानयोगक्षेमत्वात् । अतः स्थानतोऽपि परस्य स्वप्नाद्यवस्थासम्बन्धो न विद्यत इति युक्तमुच्यते नायुक्तम् ॥ १२ ॥

तदिदं प्रमाणान्तरेणोपोद्बलयन्नाह—

**"अपि चैवमेके"** ॥ १३ ॥

स्थानतः परस्य नेति पदत्रयमनुवर्तते । **अपि च**=न केवलं हेतुबलेन स्थानतः परस्य स्वप्नाद्यवस्थासम्बन्धं प्रत्याचक्ष्महेऽपि त्वेवं=जीवात्मवदेके=अथर्ववेदिनोऽलङ्कारेण तस्य तत्सम्बन्धं प्रतिपाद्य प्रत्यक्षमन्ते प्रत्याचक्षत इत्यर्थः ।

अथर्ववेदिनो हि माण्डूक्योपनिषदि पूर्वं जीवात्मवत् परब्रह्मणः परमेश्वरस्यालङ्कारेण **"स्वप्नस्थानोऽन्तःप्रज्ञः"** ( मां० ४ ) इत्यादिना स्वप्नाद्यवस्थासम्बन्धं प्रतिपाद्य स्वयमन्ते वाक्यशेषे प्रत्यक्षं प्रत्याचक्षते **"नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनम्"** ( मां० ७ ) इति । तत्र नान्तःप्रज्ञमिति स्वप्नावस्थासम्बन्धं, न बहिःप्रज्ञमिति जाग्रदवस्थासम्बन्धं, नोभयतःप्रज्ञमिति मूर्च्छावस्थासम्बन्धं न प्रज्ञानघनमिति च सुषुप्त्यवस्थासम्बन्धं प्रत्याचक्षते । यदि हि स्वतो वा परतो वा भगवतस्तस्य स्वप्नाद्यवस्थासम्बन्धोऽभविष्यत् तदा न जात्वाथर्वणिकास्तं प्रत्याख्यास्यन्त । नहि यद् भवति तत् कदाचित् प्रत्याख्यातुं शक्यते । न चालङ्कारेण तत्प्रतिपादनमेव तत्सत्तामवगमयतीति साधु भण्यते । तत्सत्तायामलङ्कारस्यैवानुपपत्तेः । अलङ्कारो हि नाम स भवति यत्रारोप्यार्थाः प्रतिपाद्यन्ते । ते चेत् पूर्वमेवालङ्कारिणि वर्तेरन् तदा स स्वयमेवानुपपन्नः स्यात् । आरोपस्तु चैतन्यसामान्याज्जीवात्मनि वर्तमानानां स्वप्नाद्यवस्थानां भगवति तस्मिन्नुपपद्यते नास्ति कश्चिद् विरोधः । तस्मात् स्थानतोऽपि न विद्यते भगवतः परब्रह्मणः परमेश्वरस्य स्वप्नाद्यवस्थासम्बन्ध इति युक्ततरोऽयमर्थः ॥ १३ ॥

अत्रैव हेत्वन्तरमुपन्यस्यति—

**"अरूपवदेव हि तत् प्रधानत्वात्" ॥ १४ ॥**

स्थानतः परस्य नेति पदत्रयमनुवर्तते। इतोऽपि स्थानतः परस्य स्वप्नाद्यवस्थासम्बन्धो न विद्यते, **हि**=यतस्तत्=परम**रूपवदेव**=अवधारणेन कादाचित्कोऽपि रूपवत्तासम्बन्धस्तस्य व्यवच्छिद्यते, हस्तपादादिमद्रूपं रूपं, तद् यस्य विद्यते तद् रूपवत्, यद् रूपवन्न भवति तदरूपवदशरीरीति यावदभ्युपगम्यते, कुतः? **प्रधानत्वात्**=स्वामित्वादीश्वरत्वादित्यर्थः।

इह प्रधानशब्दः खलु परब्रह्मपरमेश्वरवचनः प्रयुज्यते। प्रकृतिपुरुषयोः स्वामित्वात्। प्रयोक्ष्यते चाग्रेऽपि तद्वचनस्तच्छब्दः **"आनन्दादयः प्रधानस्य"** (वे० ३। ३। ११) इति। रूपमित्याकार उच्यते। शरीरमाकार इति चानर्थान्तरम्। न च किमपि रूपं भगवतस्तस्याभ्युपगन्तुं शक्यते। अनीश्वरत्वप्रसङ्गात्। यदि हि परमेश्वरो रूपवान् स्वीक्रियेत तदाऽनीश्वरः प्रसज्येत। नहि रूपवतः कस्यचन निरपेक्षेश्वरत्वं लोके क्वचिदनुभूयते शास्त्रे वा क्वचिदाकर्ण्यते। न चादृष्टस्याश्रुतस्य च स्वीकारः प्रशस्यते। रूपं च सर्वं शुभाशुभकर्मनिबन्धनं प्रसिद्धम्। न च भगवतस्तस्य किञ्चित् कर्मोपपद्यते। अनधिकार्य्यत्वात्। कर्मणि हि जीवात्मा सर्वत्राधिक्रियते न जगतां पतिरीश्वरः। तस्य तत्प्रयोजकार्थित्वादेरभावात्। कर्मानुपपत्तौ च कथमेष रूपवान् भवेत्। अस्ति तस्यापि किञ्चित्कर्मेति तु पौराणिकं मतं न वैदिकमिति न तदत्राद्रियामहे। श्रुतिभिश्च साक्षाद् भगवतस्तस्य रूपवत्त्वं प्रतिषिध्यते **"अकायम्"** (यजु० ४०। ८) **"अशरीरम्"** (कठ० २। २२) **"अशब्दमस्पर्शमरूपमव्ययम्"** (कठ० ३। १५) **"दिव्यो ह्यमूर्त्तः पुरुषः"** (मुं० २। १। २) **"अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनः"** (बृ० ३। ८। ८)

**"अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः"** (श्वे० ३ । १९) इति । न च यस्य रूपं श्रुतिभिः साक्षात् प्रतिषिध्यते तस्य किमपि रूपमभ्युपगन्तुं शक्यते । **"सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः"** (छां० ३ । १४ । ४) इत्यादिकं रूपं तु तस्य सर्वशक्तिमत्त्वसर्वाधिष्ठानत्वप्रतिपत्त्यर्थमुपदिश्यते न रूपवत्त्वप्रतिपत्त्यर्थम् । अरूपस्य रूपासम्भवात् । स्वप्नाद्यवस्थाभेदाश्च सर्वत्र रूपवत एव दृश्यन्ते नारूपवतः । न च रूपवति दृष्टानामरूपवति कल्पनं युक्तमीक्षामहे । प्रलापमात्रत्वप्रसङ्गात् । तदेव हि कल्पनं प्रेक्षावद्भिर्युक्तमास्थीयते यत् खलु यथादर्शनं प्रवर्तते । यस्य तु नास्ति किमपि दर्शनं मूलं तन्मोहात् प्रवर्तमानमपि प्रलापमात्रं भवेदिति किमनेन कल्पनेन कल्पनाभासेन । तस्मात् स्थानतोऽपि न विद्यते परस्य स्वप्नाद्यवस्थासम्बन्ध इति सुध्रुवम् ॥ १४ ॥

नन्वरूपवदेव तदित्यभ्युपगमे रूपवद्वाक्यजातं व्यर्थं भवेदिति । अतआह—

**"प्रकाशवच्चावैयर्थ्यात्"** ॥ १५ ॥

तदित्यनुवर्तते । पूर्वाभ्युपगमतोऽभ्युपगमान्तरमेतदिति चकारेणोच्यते । **प्रकाशवत्**=वतिः, प्रकाशतुल्यं तद् ब्रह्माभ्युपगम्यते, कुतः? **अवैयर्थ्यात्**=निर्विषयत्वं व्यर्थत्वं, रूपवद्वाक्यानां व्यर्थत्वाभावादित्यर्थः ।

सन्ति खलु कानिचिद् रूपवद्विषयाणि वाक्यानि **"विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः"** (ऋ० ८ । ३ । १६ । ३) **"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम्"** (ऋ० ८ । ४ । १७ । १) **"सर्वतःपाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् । सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति"** (श्वे० ३ । १६) इत्यादीनि । तानि मा नाम निर्विषयाणि भूवन्निति

जगज्जन्मादिकारणं ब्रह्म प्रकाशतुल्यमभ्युपगम्यते। यथा हि सौरो वा चान्द्रमसो वा प्रकाशः खलु सर्वं जगदभिव्याप्यावतिष्ठमानोऽपि तत्तत्पदार्थसम्बन्धात् तत्तत्पदार्थाकारतामिव प्रतिपद्यते तां प्रतिपद्यमानश्च व्यवहारसौकार्य्याय लौकिकैर्जनैस्तथा तथा व्यपदिश्यते, तथा विश्वं जगदन्तर्बहिः सर्वतोऽभिव्याप्यावतिष्ठमानं जगज्जन्मादिकारणं ब्रह्मापि तत्तत्पदार्थसम्बन्धात् तत्तत्पदार्थाकारतामिव प्रतिपद्यते। तां प्रतिपद्यमानं च बोधसौकर्य्याय रूपवद्विषयैस्तत्तच्छ्रुतिवाक्यैस्तथा तथोपदिश्यते। न च वस्तुतोऽस्ति ब्रह्म रूपवत्। मन्त्रे सहस्रशब्दोऽनेकवचनः प्रयुज्यते यथा **"शुनश्चिच्छेपं निदितं सहस्राद् यूपादमुञ्चो अशमिष्ट हि षः। एवास्मदग्ने! विमुमुग्धि पाशान् होतश्चिकित्व इह तू निषद्य"** (ऋ० ३।८।१५।७) इत्यत्र॥ १५॥

नन्वप्रकाशस्य सतो ब्रह्मणः कथं प्रकाशतुल्यत्वमभ्युपगम्यते? इति। अस्योत्तरं पठति—

**"आह च तन्मात्रम्"॥ १६॥**

तत् प्रकाशवदिति पदद्वयं सूत्राभ्यामनुवर्तते। हेतौ चः। इतस्तद् ब्रह्म प्रकाशवदभ्युपगम्यते, यतस्तन्मात्रं=तदा प्रकाशं परामृशति, मात्रचा धर्मधर्मिभावो व्यवच्छिद्यते, प्रकाशमात्रमाह=मन्त्रवर्णः प्राहेत्यर्थः।

प्रकाशो हि ब्रह्मेति मन्त्रवर्णस्तावत् साक्षादभिधत्ते **"ध्रुवं ज्योतिर्निहितं दृशये कं मनोजविष्ठं पतयत्स्वन्तः"** (ऋ० ४।५।११।५) इत्येवञ्जातीयकः। प्रकाशस्य सतश्च रूपवद्वाक्यानामवैयर्थ्याय प्रकाशतुल्यत्वाभ्युपायो युज्यते। समानत्वात्। नास्ति कश्चिद् विरोधः॥ १६॥

यन्मन्त्रवर्णेनाभ्यधायि तदेव श्रुतिस्मृतिभ्यामपि प्रतिपाद्यत इत्याह—

**"दर्शयति चाथो अपि स्मर्य्यते"॥ १७॥**

तत् तन्मात्रमिति पदद्वयमनुवर्तते। पूर्वत्र यदभिहितं तदेवात्राभि-

धीयत इति चार्थः । भिन्नक्रमोऽपिः । **दर्शयति**=प्रकाशमात्रं ब्रह्म प्रतिपादयति श्रुतिर**थो**=किञ्च **स्मर्य्यतेऽपि**=स्मृत्याऽपि प्रतिपाद्यत इत्यर्थः ।

यथा हि मन्त्रवर्णः खलु प्रकाशमात्रं ब्रह्माभिदधाति तथौपनिषत्की श्रुतिरपि प्रतिपादयति **"तच्छुभ्रं ज्योतिषां ज्योतिः"** ( मुं० २ । २ । ९ ) **"यदतः परो दिवो ज्योतिः"** ( छां० ३ । १४ । ७ ) **"परं ज्योतिरुपसम्पद्य"** ( छां० ८ । १२ । ३ ) **"तद्देवा ज्योतिषां ज्योतिः"** ( बृ० ४ । ४ । १६ ) इत्येवञ्जातीयका । स्मृत्याऽपि च विस्पष्टं प्रतिपाद्यते **"ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते । ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम्"** ( गी० १२ । १७ ) इत्यादिकया । ज्योतिः प्रकाश इत्युक्तम् ॥ १७ ॥

तदिदं गमकान्तरेणापि सम्पादयति—

**"अत एव चोपमा सूर्य्यकादिवत्"** ॥ १८ ॥

तस्येति षष्ठ्या विपरिणम्यानुवर्तते । यत्पूर्वत्र प्रतिपादितं तदेवात्र सम्पाद्यत इति चार्थः । **अत एव**=यतो ब्रह्म प्रकाशस्वरूपमत एवो**पमा**=तस्योपमा **सूर्य्यकादिवत्**=सूर्य्य एव सूर्य्यकः, स्वार्थे कन्, अग्निरादिना गृह्यते, सूर्य्यवदग्निवदित्युपादीयते श्रुतिस्मृतिषु सर्वत्रेत्यर्थः ।

श्रुतिस्मृतिषु हि जगज्जन्मादिकारणं ब्रह्म सूर्य्याग्निभ्यामुपमीयते **"वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्"** (यजु० ३१ । १८) **"अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः"** ( कठ० ४ । १३ ) **"यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः । क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत!"** (गी० १३ । ३३ ) इत्याद्यासु । **आदित्यवर्णम्**=आदित्यस्य सूर्य्यस्येव वर्णो रूपं स्वरूपं यस्य तमित्यर्थः । चेदिदं प्रकाशस्वरूपं न भवेत् तदा न जातु सूर्य्याग्निभ्यामुपमीयेत । नहि सादृश्याभावे केनचित् किञ्चिदुपमातुं

शक्यते । गुणकर्मस्वभावनिबन्धनं च प्रायिकं सादृश्यमिति सुप्रसिद्धम् । तस्मात् प्रकाशस्वरूपं ब्रह्मेति ज्यायानेषोऽभ्युपगमः ॥ १८ ॥

**ननु** सूर्य्याद्युपमोपादानात् प्रकाशस्वरूपं ब्रह्म चेदभ्युपगम्यते तदा परिच्छिन्नमप्यभ्युपगन्तव्यम् । सूर्य्यादिवत् परिच्छिन्नत्वेऽपि कृत्स्नजगदवभासकत्वसम्भवात् । यथा हि सूर्य्यादिकं खलु परिच्छिन्नत्वादेकदेशस्थितं कृत्स्नमिदं जगदवभासयति तथा परिच्छिन्नत्वादेकदेशे स्थितं ब्रह्मापि कृत्स्नमिदं जगदवभासयिष्यति नास्त्यणुमात्रेणापि तदसम्भवः । तस्य श्रूयमाणं सर्वभूतान्तरत्वं च प्रतिबिम्बद्वारेणोपपत्स्यते यथा सूर्य्यादेः प्रतिबिम्बद्वारेणाम्ब्वाद्यन्तरत्वमिति । **एवं** प्राप्तेऽभिधीयते—

**"अम्बुवदग्रहणात्तु न तथात्वम्"** ॥ १९ ॥

तस्येति पूर्ववत् षष्ठ्या विपरिणम्यानुवर्तते । तुशब्देन प्राप्तं व्यावर्त्यते । **अम्बुवत्**=सप्तम्यन्ताद् वतिः, अम्बु जलमुपलक्षणं काचादेः, अम्ब्वादौ सूर्य्यादिप्रतिबिम्बवद**ग्रहणात्**=ब्रह्मप्रतिबिम्बाग्रहणात् सर्वभूतान्तरत्वासिद्धे**र्न तथात्वं**=न सूर्य्यादिवत् परिच्छिन्नत्वं तस्याभ्युपगम्यत इत्यर्थः ।

अम्ब्वादौ हि सूर्य्यादिप्रतिबिम्बं खलु प्रत्यक्षेण परिगृह्यते ब्रह्मप्रतिबिम्बं तु कुत्रापि केनापि न गृह्यते । न च वेदादिशास्त्रमपि तत्प्रतिबिम्बं भवतीति ग्राहयति । न च ग्रहणाभावे तद्द्वारेण सर्वभूतान्तरत्वं ब्रह्मणः कथञ्चिदुपपत्तुमर्हति । नहि यस्य सत्त्वैव न विज्ञायते तत् किञ्चिदुपपादयितुं साहयति । सर्वभूतान्तरत्वं च भगवतस्तस्य श्रुतिस्मृतिषु सर्वत्र साक्षात् प्रतिपाद्यत इति नाव्यक्तम् । बहु प्रपञ्चितं चैतदस्माभिरप्यधस्तात् । तच्चापरिच्छिन्ने सति तस्मिन् सङ्गच्छते न परिच्छिन्ने । तस्मान्न सूर्य्यादिवत् परिच्छिन्नमपि जगज्जन्मादिकारणं ब्रह्माभ्युपगन्तुं शक्नुमः ॥ १९ ॥

**ननु** ब्रह्मणोऽपरिच्छिन्नत्वेन चेत् साक्षात् सर्वभूतान्तरत्वमभ्युपगम्येत तदा तस्य तद्गतवृद्धिह्रासाभ्यां वृद्धिह्रासावपि प्रसज्येयाताम् । नहि सर्वाणि भूतानि वृद्धिह्रासौ नियमेनाभवते तदन्तर्वर्तमानं ब्रह्म च न तौ भजत

इति प्रेक्षावद्भिरनुमन्यते । वृद्धिह्रासौ च विकारौ नाविकारिणस्तस्य कथञ्चित् सम्भवतः । तस्माद् ब्रह्मापरिच्छिन्नमित्येतदपि न युक्तमीक्षामह इति । अस्योत्तरं पठति—

**"वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्"** ॥२०॥

तस्येति पूर्ववत् षष्ठ्या विपरिणम्य नेति चोभयमनुवर्तते । **अन्तर्भावात्**=सर्वभूतान्तर्वर्तमानत्वाद् **वृद्धिह्रासभाक्त्वं**=तद्गतवृद्धिह्रासाभ्यां वृद्धिह्रासभाक्त्वं तस्य न सम्भवति, कस्मादेवं प्रतिपद्यते? **उभयसामञ्जस्यादेवं**=तत्सङ्गिन्युभयोस्तयोरौचित्यादेवं प्रतिपद्यामह इत्यर्थः ।

यद्धि यत्र वर्तमानमनुषज्यते तदेव तद्गतगुणदोषाभ्यामनुषज्यते । यस्य तु तत्र वर्तमानस्यापि नास्त्यणुमात्रेणापि तत्सङ्गो न तत् तद्गतगुणदोषाभ्यां कर्हिचित् संस्पृश्यते । सङ्गो हि सर्वार्थानां गुणदोषयोः संस्पर्शे कारणम् । न च निःसङ्गं गुणा वा लिम्पन्ति दोषा वा संस्पृशन्ति । तत्र तदौचित्याभावात् । बहूनि चात्र निदर्शनानि लौकिकानि दार्शनिकानि च विद्यन्ते येभ्यो गुणदोषयोः प्रसक्तौ सङ्ग एव कारणमिति व्यक्तमवबुध्यते । तानि च सर्वाणि स्वयमूहितव्यानि केवलमेकमिह वात्सल्यात् प्रदर्शयामः । तद्धि बहु प्रकृतानुगुणम् । पश्य भो! यथा अपरिच्छिन्नं तावदाकाशं सर्वभूतान्तर्वर्तमानमप्यसङ्गत्वान्न तद्गतवृद्धिह्रासाभ्यां वृद्धिह्रासावालिङ्गते तथाऽपरिच्छिन्नं ब्रह्मापि सर्वभूतान्तर्वर्तमानमसङ्गत्वान्न तद्गतवृद्धिह्रासाभ्यां वृद्धिह्रासौ भजते । तत्सङ्गिन्येवोभयोस्तयोः सामञ्जस्यात् ॥ २० ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"दर्शनाच्च"** ॥ २१ ॥

तस्य, न, वृद्धिह्रासभाक्त्वमन्तर्भावादिति पदचतुष्टयमनुवर्तते । पूर्वेणैवायं हेतुरिति चकारेणोच्यते । सर्वभूतान्तर्भावाद् वृद्धिह्रासभाक्त्वं तस्य न सम्भवति, कुतो विज्ञायते? **दर्शनात्**=श्रुतिदर्शनादित्यर्थः ।

श्रुतिर्हि भगवतो ब्रह्मणः खलु सर्वभूतान्तर्वर्तमानत्वेऽपि तद्गतवृद्धि-ह्रासाभ्यां वृद्धिह्रासाभावं दर्शयति **"सूर्य्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः"** (कठ० ५। ११) इति। लोकदुःखेनेत्युपलक्षणं वृद्ध्यादिनेत्यपि द्रष्टव्यम्। **"सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान्"** (बृ० ४। ४। २२) इति च। न च श्रुतिदर्शनतोऽधिकमस्ति किञ्चिद्दर्शनं प्रमाणम्। तस्माद् वृद्ध्यादिवत् स्थानतोऽपि नास्ति तस्य स्वप्नाद्यवस्थासम्बन्ध इति सिद्धम्॥ २१॥

स्थानतोऽपि परस्य भगवतो ब्रह्मणः स्वप्नाद्यवस्थासम्बन्धो न विद्यत इति प्रतिपादितम्। सम्प्रति मा नाम कश्चन तत्सम्बन्धाभावे तदभावं निश्चैष्टेति तद्भावं प्रतिपादयितुकामोऽधिकरणान्तरमारचयन्नाह—

**"प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः"॥ २२॥**

**हि**रवधारणे, तेन ब्रह्मसत्ताप्रतिषेधो व्यवच्छिद्यते। हेतौ **चः**। **प्रकृतैतावत्त्वं**=प्रकृतैतावदात्मकत्वं प्रकृतं यदेतावदियत्तापरिच्छिन्नं मूर्त्तामूर्त्तलक्षणं रूपं तदात्मकत्वं ब्रह्मणः **प्रतिषेधति**—नेतिनेतिश्रुतिर्व्यासेधति, कुतो विज्ञायते? यतस्**ततः**=तदनन्तरं प्रतिषेधानन्तरं **भूयः**=पुनर्**ब्रवीति**=मूर्त्तामूर्त्तरूपतो भेदेन ब्रह्मोपदिशतीत्यर्थः।

बृहदारण्यके हि मूर्त्तामूर्त्तब्राह्मणे **"द्वे वाव ब्रह्मणो रूपे मूर्त्तं चामूर्त्तं च"** (बृ० २। ३। १) इति प्रकृत्य श्राव्यते **"अथात आदेशो नेति नेति"** (बृ० २। ३। ६) इति। तत्र संशयः-किमियं श्रुतिर्ब्रह्मणः सत्तां प्रतिषेधति किंवा तस्य प्रकृतमूर्त्तामूर्त्तरूपद्वयात्मकत्वमिति। सत्तामिति पूर्वः पक्षः, प्रकृतमूर्त्तामूर्त्तरूपद्वयात्मकत्वमिति सिद्धान्तः। किं तावत् प्राप्तम्? सत्तामिति वदामः। प्रतिषेध्यान्तर-

सम्बन्धाभावात् । प्रतिषेधः खलु नियमेन प्रतिषेध्यं किञ्चिदपेक्षते । तच्च यद्यप्यत्रेदं तदिति विशेषितं किञ्चिन्नोपलभ्यते तथापि प्रकरण-सामर्थ्यादेतद् द्वयमालोचामहे मूर्त्तामूर्त्तरूपद्वयं ब्रह्म च । न चोभयो-स्तयोर्मूर्त्तामूर्त्तरूपद्वयं प्रतिषेधेन सम्बन्धुमर्हति । तन्निरूपणविच्छेदेन ब्रह्मनिरूपणस्योपक्रमात् "**अथात आदेशः**" (बृ० २ । ३ । ६) इति । आदेशः=निर्देशः—सत्यस्य ब्रह्मणः कथनं निरूपणम् । न चोप-क्रान्ते तन्निरूपणे विच्छिन्नस्य मूर्त्तामूर्त्तरूपद्वयस्य सम्बन्धो युज्यते । प्रतिषेध्यान्तरं च न किञ्चित् प्रसज्यते । पारिशेष्याद् ब्रह्मैवैकं प्रतिषेध्य-मवशिष्यते । तस्य च वाङ्मनसातीतत्वेनासम्भाव्यमानतया प्रतिषेध उप-पद्यते । नेति नेत्यभ्यासस्तु दार्ढ्यार्थो विद्यते न प्रतिषेध्यद्वयप्रतिषेधार्थः । तस्मादेषा श्रुतिर्ब्रह्मसत्तामेव प्रतिषेधति न ब्रह्मणः प्रकृतमूर्त्तामूर्त्तरूपद्वया-त्मकत्वमिति । **एवं** प्राप्तेऽभिधीयते—प्रकृतमूर्त्तामूर्त्तरूपद्वयात्मकत्वमेव प्रति-षेधति न ब्रह्मसत्ताम् । आरम्भवैयर्थ्यापत्तेः । ब्रह्मविजिज्ञापयिषया हि ब्राह्मणमिदमारभ्यते, तद्विज्ञानोपायतया चाध्यात्मं लिङ्गशरीरान्तमाधि-दैवं च महत्तत्वान्तं पृथिव्यादि निखिलं जगन्मूर्त्तामूर्त्तभेदेन द्वेधा प्रवि-भज्य तद्रूपत्वेन सप्रपञ्चं प्रदर्श्यते । तद्धि दृष्टिपथं प्राप्तं त्वरया स्वजन्मा-दिहेतुतया रूपयति निरूपयति विज्ञापयति ब्रह्मेति तद्रूपमाम्नायते । तत्र रूपरूपिणोर्जगद्ब्रह्मणोश्चेद् रूपि ब्रह्म प्रतिषेधेन्नेतिनेतिश्रुतिस्तदा नूनमेतद्ब्राह्मणारम्भो वैयर्थ्यमापद्येत । नहि यस्य ब्रह्मणो विजिज्ञापयि-षया ब्राह्मणमिदमारभ्यते तत्प्रतिषेधे तदारम्भः कथञ्चित् सार्थकः सम्प-द्यते । रूपं च मूर्त्तामूर्त्तात्मकं जगद् विच्छिन्नत्वात् प्रतिषेधेन न सम्ब-ध्यत इति स्वयमुच्यते । अतस्तत्प्रतिषेधोऽपि न तदारम्भप्रयोजनं घटते । सुतरां चोभयप्रतिषेधः । शून्यवादप्रसङ्गात् । न च ब्रह्मप्रतिषेधोपपत्तिमपि पश्यामः । "**ब्रह्म ते ब्रवाणि**" (बृ० २ । १ । १) इत्युपक्रमविरो-धात् । नह्येष उपक्रमो वक्तव्यत्वेनोपक्रान्तस्य ब्रह्मणः प्रतिषेधे न विरुध्यते । न चोपक्रमविरोधे तत्प्रतिषेधः कथञ्चिदुपपद्यते । निन्दाश्रुतेश्च । निन्दां च ब्रह्मप्रतिषेद्धुः श्रावयति श्रुतिः "**असन्नेव स भवति असद्**

**ब्रह्मेति वेद चेत्**" (तै० २ । ६) इति । न च प्रतिषिद्धस्य समाश्रयणं युज्यते । न च यस्य भगवतो ब्रह्मणः खलु सर्वे वेदाः सर्वाश्चोपनिषदः सर्वाणि च दर्शनानि महता परिकरेण निरूपणं विदधति तदिह श्रुत्या प्रतिषिध्यत इति कस्यचित् सम्भावनापथमवतरति बुद्धिपथमिति तु बहुदूरम् । वाङ्मनसातीतत्वं चालौकिकत्वाभिप्रायेण प्रतिपाद्यते न तदभावाभिप्रायेणेति निश्चेतव्यम् । अन्यथा "**अस्तीत्येवोपलब्धव्यः**" (कठ० ६ । १३) इत्यवधारणविरोधापत्तेः । न च यत् पूर्वं ब्रह्मणो मूर्त्तामूर्त्तलक्षणं रूपं निरूपितं तन्नेतिनेतिश्रुतिः प्रतिषेधति मिथ्यात्वसमर्पणार्थं, परिशिनष्टि च ब्रह्म तत्कल्पनाप्रवृत्त्यर्थं, विनाऽधिष्ठानं कल्पनाऽनुपपत्तेरिति कैश्चिदुपवर्णितमसम्भ्यं रोचते । श्रुत्यक्षरतोऽप्रतीतेः । नह्येतच्छ्रुत्यक्षरतः प्रतीयते । ब्रह्मविज्ञानोपायतया निरूपिते खलु मूर्त्तामूर्त्तलक्षणे ब्रह्मरूपे मा नाम कश्चन धीदोषादेतदेव ब्रह्म प्रमनिष्टेति पृथक् तन्निरूपणाय प्रवर्त्तते "**अथात आदेशो नेति नेति**" (बृ० २ । ३ । ६) इत्यादिका श्रुतिरिति विज्ञायते । अन्यथा मध्येऽथकारासाङ्गत्यापत्तेः । स्पष्टो हि मध्येऽथकारविन्यासाशयः श्रुतेः—पूर्वं ब्रह्मविज्ञानोपायभूतं कार्य्यकारणभेदभिन्नं मूर्त्तामुर्त्तलक्षणं रूपं न्यरुरूपां सम्प्रति विज्ञेयं ब्रह्म निरूपयितास इति । तत्र नेति नेतीत्यभ्यासो दार्ढ्यार्थ इति पूर्वपक्षावसरेऽवोचाम । पूर्वप्रकृतं रूपमितिना परामृश्यते । नञश्च प्रतिषेधोऽर्थः । यत् कार्य्यकारणभेदभिन्नं मूर्त्तामूर्त्तलक्षणं रूपं पूर्वं निरूपितत्वादस्ति प्रकृतं तद् ब्रह्म न, किन्तु ततोऽस्ति भिन्नमित्यक्षरार्थः । न चैतेन रूपप्रतिषेधो वा ब्रह्मप्रतिषेधो वा केनचित् कदाचित् प्रतिपत्तुं शक्यते । ब्रह्मणो मूर्त्तामूर्त्तलक्षणरूपद्वयात्मकत्वप्रतिषेधस्तु शक्यते प्रतिपत्तुमित्यत्र नास्ति संशयतुषः । तमिममर्थं वाक्यशेषे निर्ब्रुवाणा श्रुतिः स्वयं ततो भेदेन ब्रह्म दर्शयति "**नह्येतस्मादिति नेति, अन्यत् परमस्ति, अथ नामधेयं सत्यस्य सत्यमिति**" (बृ० २ । ३ । ६) इति । पूर्वप्रकृतादेतस्माद्रूपद्वयादन्यद् ब्रह्म नास्तीति न मन्तव्यं, किन्तु ततः परमन्यदस्तीति

निश्चेतव्यम् । यदन्यदस्ति ततः परं तस्याधुना नामधेयमुच्यते सत्यस्य सत्यमिति । न चायमर्थो ब्रह्मप्रतिषेधे कथञ्चित् सामञ्जस्यमश्नुते । नहि यन्न विद्यते तत् सत्यस्य सत्यं दर्शयितुं शक्यते । ब्रह्मणो मूर्त्तामूर्त्तरूपद्वयात्मकत्वप्रतिषेधे तु नास्ति किञ्चिदसामञ्जस्यम् । तस्मादस्ति कार्य्यकारणभेदभिन्नान्मूर्त्तामूर्त्तलक्षणाद्रूपात् परमन्यद् ब्रह्मेति निःशङ्कं निश्चिनुमहे ॥ २२ ॥

**ननू**क्तलक्षणाद् रूपात् परं विद्यते चेद् ब्रह्म कुतो नास्माभिर्दृश्यते? तत्राह—

**"तदव्यक्तमाह हि"** ॥ २३ ॥

**तद्**=ब्रह्म**ऽव्यक्तं**=करणाग्राह्यं विद्यते, कुतो विज्ञायते? **हि**=यस्मादा**ह**=श्रुतिराहेत्यर्थः ।

उक्तलक्षणाद् रूपात् परं विद्यमानमपि ब्रह्म वाङ्मनसादिकरणाग्राह्यत्वान्न दृश्यते नत्वभावात् । वाङ्मनसादिकरणाग्राह्यत्वं च भगवतस्तस्य स्वयमाह श्रुतिः **"नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा"** (कठ० ६ । १२) **"यत्तदद्रेश्यमग्राह्यम्"** (मुं० १ । १ । ६) **"न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा"** (मुं० ३ । १ । ८) इत्येवञ्जातीयका । स्मृतिश्च **"अव्यक्तोऽक्षर इत्युक्तः"** (गी० ८ । २१) इत्याद्या ॥ २३ ॥

**ननु** ब्रह्मणोऽव्यक्तत्वे **"य इत्तद्विदुस्तेऽमृतत्वमानशुः"** (ऋ० २ । ३ । १८ । २३) **"तमेव विदित्वाऽतिमृत्युमेति"** (यजु० ३१ । १८) **"ब्रह्मविदाप्नोति परम्"** (तै० २ । १) इत्याद्याः श्रुतयो व्याकुप्येरन् । नहि केनापि करणेनाग्राह्यस्य वेदनमुपपद्यते । साक्षाद्दर्शनं ह्यत्र वेदनमिति । अत आह—

**"अपि संराधने प्रत्यक्षानुमानाभ्याम्"** ॥ २४ ॥

तदव्यक्तमित्यनुवर्तते । **अपि**=तदव्यक्तमपि **संराधने**=राधनं साधनं, तत्र सम्यक्त्वं दीर्घकालनैरन्तर्य्यसत्कारासेवितत्वं, तस्मिन् समी-

चीने श्रवणमननादिसाधने सति दृश्यते, कुतोऽवगम्यते? **प्रत्यक्षानुमानाभ्यां**=श्रुतिस्मृतिभ्यामित्यर्थः ।

अव्यक्तं खलु सदपि ब्रह्म तत्प्रसादेन तद्दर्शनसाधने श्रवणमननादौ प्रवृत्त्या दीर्घकालादिप्रयत्नसातत्यात् कदाचित् सुनिष्पन्ने निर्विकल्पे समाधौ मनःसम्बन्धप्रविलये शुद्धेन केवलेन सता निजेनात्मना पश्यन्ति केचन मुमुक्षवः । नहि भगवत्कृपापात्रीभूतानां तेषां भवति नामेह दुर्लभं किञ्चित् । तदिदं श्रुतिस्मृतिभ्यां स्फुटमवगम्यते **"यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्"** ( कठ० २ । २३ ) **"ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः"** ( मुं० ३ । १ । ८ ) **"यदाऽऽत्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत्"** ( श्वे० २ । ५ ) **"सूक्ष्मतां चान्ववेक्षेत योगेन परमात्मनः"** ( मनु० ६ । ६५ ) **"योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्"** ( महाभा० १२।४७।५४ ) इत्येवञ्जातीयकाभ्याम् । तस्मादव्यक्तत्वेऽपि नास्ति श्रुतिव्याकोपः ॥ २४ ॥

**ननु** किं मुमुक्षूणां ब्रह्मदर्शनार्थं संराधनमात्रं पर्य्याप्तं विद्यते किंवाऽन्यदपि किञ्चिदपेक्ष्यते? तत्राह—

**"प्रकाशादिवच्चावैशेष्यं, प्रकाशश्च कर्मण्यभ्यासात्"॥२५॥**

समुच्चयार्थश्चो भिन्नक्रमः । **प्रकाशादिवत्**=जलमादिना गृह्यते, यथा प्रकाशेन प्रकाशस्य जलेन जलस्य तथा ब्रह्मणा मुमुक्षूणामवैशेष्यं **च**=विशेषो भेदो विभाग इत्यनर्थान्तरं, विशेष एव वैशेष्यं, न वैशेष्यमवैशेष्यमविभागश्चापेक्ष्यते, **प्रकाशश्च**=एकदेशग्रहणमुत्तरत्रार्थान्तरेऽनुवृत्त्यर्थं, प्रकाशादिवदवैशेष्यं च **कर्मणि**=विषयसप्तमीयं, संराधनकर्मण्य**भ्यासात्**=पौनःपुन्येनानुष्ठानाद् भवतीत्यर्थः ।

यदा हि ब्रह्मदिदृक्षाकुलचेतसः खलु मुमुक्षवस्तपोब्रह्मचर्य्यश्रद्धातिशयेन सत्कारेण नैरन्तर्य्येण दीर्घकालेन च संराधनं कर्म पुनःपुनरनु-

तिष्ठन्ति प्रत्यहं बाह्याभ्यन्तररक्षोभिर्विघ्नैः प्रतिहन्यमानाश्च न ततः क्षणमपि विरमन्ति तदा सततं प्रयतमानानां तेषां पुनःपुनरनुष्ठानलक्षणात् तदभ्यासाद् द्रागित्येव निर्विकल्पः समाधिरुपतिष्ठते । तत्र च क्लेशकर्मादिवासनासहितस्य मनसः प्रविलयाच्छुद्धाः केवलाः सन्तस्तदात्मानः प्रकाशादिवद् ब्रह्मण्यवैशेष्यं प्रतिपद्यन्ते । तदेव हि तदानीं तेषां विश्रामस्थानम् । यत्रेदं स्मर्य्यते "**समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता**" (सां० ५।११६) इति । ब्रह्मावैशेष्यं प्रतिपद्यमानाश्च ते निष्प्रत्यूहं सर्वसुखमयं तद्दर्शनं विन्दन्ते । तस्मान्मुमुक्षूणां ब्रह्मदर्शनार्थं यथा संराधनं कर्म नियमेनापेक्ष्यते तथा तदभ्यासजं ब्रह्मावैशेष्यमपि नियमेन प्रकाशादिवदपेक्ष्यत इत्यध्यवस्यामः ॥ २५ ॥

**ननु** मुमुक्षूणां संराधनाभ्यासेन जाते प्रकाशादिवदवैशेष्ये केन रूपेण ब्रह्मणो दर्शनमुपजायते? तत्राह—

**"अतोऽनन्तेन तथाहि लिङ्गम्"** ॥ २६ ॥

प्रकाश इत्यनुवर्तते । **अतः**=अस्मात् प्रकाशादिवदवैशेष्याद**नन्तेन**=अपरिच्छिन्नेन रूपेण ब्रह्मणः प्रकाशो दर्शनमुपजायते, **तथाहि**=तथाच **लिङ्गं**=मान्त्रवर्णिकं लिङ्गं दर्शयतीत्यर्थः ।

यत् खलु संराधनकर्मण्यभ्यासेन जातात् प्रकाशादिवदवैशेष्यान्मुमुक्षूणां ब्रह्मदर्शनमुपजायते तदपरिच्छिन्नेन रूपेण सञ्जायते । यथार्थं हि तद्दर्शनम् । न च परिच्छिन्नेन रूपेण जायमानं कदाचिद् यथार्थं सम्पद्यते । ब्रह्मणोऽपरिच्छिन्नत्वात् । तदिदं दर्शयति च मान्त्रवर्णिकं लिङ्गम् "**तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम्**" (ऋ० १ । २ । ७ । २०) इति । **चक्षुः**=सूर्य्यः "**सूर्य्यो यथा सर्वलोकस्य चक्षुः**" (कठ० ५ । ११) इति श्रुतेः । तस्मादस्ति प्रकृतात् कार्य्यकारणभेदभिन्नान्मूर्त्तामूर्त्तलक्षणाद्रूपात् परमन्यद् ब्रह्म, यस्यापरिच्छिन्नेन रूपेण दर्शनं निर्विकल्पे समाधौ मुमुक्षूणामुपजायत इति सिद्धम् ॥ २६ ॥

**ननु** यदिदं मूर्तामूर्तलक्षणाद्रूपात् परमन्यदस्ति तत्कारणं ब्रह्म, तत् किं ज्ञानस्वरूपं स्यादथवा ज्ञानाश्रयः । प्रथमे **"यो विश्वाऽभिविपश्यति"** (ऋ० ३ । ४ । १० । ९) **"यः सर्वज्ञः सर्ववित्"** (मुं० १ । १ । ९) **"स विश्वकृद् विश्ववित्"** (श्वे० ६ । १६) **"स हि सर्ववित्"** (सां० ३ । ५६) इत्यादिव्यपदेशानुपपत्तिः । द्वितीये **"प्रज्ञानं ब्रह्म"** (ऐ० ३ । १) **"सत्यं ज्ञानमनन्तं ब्रह्म"** (तै० २ । १ ( **"विज्ञानमानन्दं ब्रह्म"** (बृ० ३ । ९ । २८) इत्यादिव्यपदेशानुपपत्तिः । न चोभयव्यपदेशेऽनुपपन्ने शक्यमेकविधं ब्रह्म निर्धारयितुम् । न चानिर्धारितस्वरूपस्य तस्याभ्युपायो युज्यते । तस्मान्नास्ति ब्रह्मेति सम्यगवलोकामह इति । अस्योत्तरं पठति—

**"उभयव्यपदेशात्त्वहिकुण्डलवत्"** ॥ २७ ॥

तुशब्देनोक्ताशङ्का निरस्यते । ज्ञानस्वरूपं ब्रह्मेति निर्धारितत्वात् । **उभयव्यपदेशात्**=उभयविधव्यपदेशाद**हिकुण्डलवत्**=कुण्डलाकाराहिवद् ब्रह्म प्रतिपत्तव्यमित्यर्थः ।

यथा हि कुण्डलस्वरूपोऽहिः कुण्डलं कुण्डलीति चोभयथा लोके व्यपदिश्यते तथा ज्ञानस्वरूपं ब्रह्मापि ज्ञानं ज्ञानाश्रय इति चोभयथा श्रुतिस्मृतिषु व्यपदिश्यते । द्विविधस्यापि व्यपदेशस्य सापेक्षत्वेन नास्ति ब्रह्मणि युगपदनुपपत्तिः ॥ २७ ॥

एतदेव दृष्टान्तान्तरेण सुव्यक्तयति—

**"प्रकाशाश्रयवद्वा तेजस्त्वात्"** ॥ २८ ॥

दृष्टान्तान्तरपरो वाकारः । **प्रकाशाश्रयवत्**=प्रकाशाश्रयतेजोवद् ज्ञानाश्रयब्रह्म प्रतिपत्तव्यम्, कुतः **तेजस्त्वात्**=तेजस्त्वसामान्यादित्यर्थः ।

तेजो हि ब्रह्म **"तेजोऽसि शुक्रममृतम्"** (यजु० २२ । १) **"येन सूर्य्यस्तपति तेजसेद्धः"** (तै० ब्रा० ३ । १२ । ९)

इत्यादिश्रुतिभ्यः । तेजश्चाग्निविद्युदादि । तद् यथा प्रकाशस्वरूपं सदपि प्राकाश्याभिसम्बन्धात् प्रकाशकं प्रकाशाश्रयो व्यपदिश्यते तथा ज्ञानस्वरूपं सदपि ब्रह्म ज्ञेयाभिसम्बन्धाज्ज्ञानाश्रयः शब्द्यते । ज्ञेयं तद्भिन्नं सर्वं जगत् । तस्मादुपपद्यते तद्गोचरः सर्वज्ञमित्येवञ्जातीयकः श्रुतिव्यपदेशो नास्ति काचिदनुपपत्तिः ॥ २८ ॥

तदिदं चेतनसाधर्म्येणापि विस्पष्टयति—

**"पूर्ववद्वा"** ॥ २९ ॥

उदाहरणान्तरपरो वाकारः । **पूर्ववत्**=जीवात्मवद् ब्रह्म निश्चेतव्यमित्यर्थः ।

पूर्वशब्देनात्र जीवात्मा कथ्यते । स हि मध्यमत्वाद् यथा प्रकृतेः परो विद्यते तथाऽस्ति ब्रह्मणः पूर्वः । मध्यमत्वं च प्रकृतिपुरुषेश्वराणां तस्याम्नायते साक्षाद् भगवति वेदे **"तस्य भ्राता मध्यमो अस्त्यश्नः"** ( ऋ० २ । ३ । १४ । १ ) इति । **तस्य**=परब्रह्मणः परमेश्वरस्य । **भ्राता**=भरणीयः । **अश्नः**=कर्मफलभोक्ता जीवात्मा । **तृतीयाध्यायादस्मात्** पूर्वस्मिन् द्वितीयाध्याये निरूपितत्वाद्वा पूर्वो जीवात्मा । स यथा ज्ञानस्वरूपो भवन् बुद्ध्यादिसम्बन्धाज्ज्ञानाश्रयोऽभिधीयते **"एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः"** ( प्र० ४ । ९ ) इत्याद्यासु श्रुतिषु, तथा ज्ञानस्वरूपं सद् ब्रह्मापि निखिलजगत्सम्बन्धाज्ज्ञानाश्रयो जेगीयते **"यो विश्वाऽभिविपश्यति"** ( ऋ० ३ । ४ । १० । ९ ) इत्याद्यासु श्रुतिषु । तस्मात् सर्वत्र ब्रह्मणि ज्ञानमिति व्यपदेशः स्वरूपतो ज्ञानाश्रय इति च परतोऽध्यवसातव्यः ॥ २९ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"प्रतिषेधाच्च"** ॥ ३० ॥

पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । **प्रतिषेधात्**=गुणगुणिभावप्रतिषेधादित्यर्थः ।

श्रुत्या खलु ब्रह्मणि गुणगुणिभावः प्रतिषिध्यते "**साक्षी चेता केवलो निर्गुणश्च**" (श्वे० ६ । ११) इति । न च तत्प्रतिषेधे विद्यमाने ज्ञानाश्रयो ब्रह्माभ्युपगन्तुं शक्यते । यत्तु "**यो विश्वाऽभिविपश्यति**" (ऋ० ३ । ४ । १० । ९) इत्यादिको व्यपदेशः स परापेक्षत्वादौपचारिको न मुख्यः । "**प्रज्ञानं ब्रह्म**" (ऐ० ३ । १) "**सत्यं ज्ञानमनन्तं ब्रह्म**" (तै० २ । १) इत्यादिको व्यपदेशश्च मुख्यः । निरपेक्षत्वात् । नहि यथा पूर्वत्र परं विश्वमपेक्ष्यते तथाऽत्रापि किञ्चिदपेक्ष्यते । तस्माद् ब्रह्म ज्ञानस्वरूपमेव न ज्ञानगुणाश्रय इति निर्धारयितव्यम् ।

एतेनानन्दस्वरूपं ब्रह्म नानन्दगुणाश्रय इत्येतदपि निर्धारितं वेदितव्यम् । "**आनन्दं ब्रह्मणो विद्वान्**" (तै० २ । ९) इत्यादिको व्यपदेशश्च "आत्मनश्चैतन्यम्" इत्यादिवद् वैकल्पिको न पारमार्थिक "**स्वर्यस्य च केवलम्**" (अथ० १० । ४ । ८ । १) "**आनन्दरूपममृतं यद्विभाति**" (मुं० २ । २ । ७) "**को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्**" (तै० २ । ७) "**आनन्दो ब्रह्मेति व्यजानात्**" (तै० ३ । ६) "**विज्ञानमानन्दं ब्रह्म**" (बृ० ३ । ९ । २८) इत्याद्यनेकश्रुतिविरोधात् । तथाचास्ति कार्य्यकारणभेदभिन्नान्मूर्त्तामूर्त्तलक्षणादेतस्माद्रूपात् परमन्यत् सच्चिदानन्दस्वरूपं ब्रह्मेति निष्कण्टकोऽयं वैदिकोऽध्वा ॥ ३० ॥

अस्ति सर्वस्मादेतस्मात् परं ब्रह्मेति निरधारि । सम्प्रति ब्रह्मणः परं नास्ति किञ्चिदिति निर्दिधारयिषुरधिकरणान्तरमारभमाणः पूर्वं तावत् पूर्वपक्षेणोपक्रमते—

**"परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः" ॥ ३१ ॥**

**अतः**=यदेतस्मात्सर्वस्मात् परं ब्रह्म निर्धारितम्, अस्माद् **ब्रह्मणः परं**—परमन्यत्किञ्चिद् भवितुमर्हति, कुतः? **सेतून्मानसम्बन्धभे-**

**दृव्यपदेशेभ्यः**=द्वन्द्वान्ते श्रूयमाणत्वाद् व्यपदेशशब्दः सेत्वादिभिः प्रत्येकमभिसम्बध्यते, सेतुव्यपदेशादुन्मानव्यपदेशात् सम्बन्धव्यपदेशाद् भेदव्यपदेशाच्चेत्यर्थः।

यत्तावत् सर्वस्मादेतस्मात् परं सच्चिदानन्दलक्षणं ब्रह्म निर्धारितं ततोऽपि परमस्ति किञ्चिदन्यत् तत्त्व किंवा नास्ति किञ्चिदिति संशयः। अस्तीति पूर्वः पक्षः, नास्तीति सिद्धान्तः। किं तावत् प्राप्तम्? अस्तीति ब्रूमः। सेत्वादिव्यपदेशात्। श्रुत्या खलु ब्रह्म सेतुरिति व्यपदिश्यते **"अथ य आत्मा स सेतुर्विधृतिः"** (छां० ८। ४। १) इति। आत्मा=ब्रह्म। सेतुः सर्वो लोके पारवान् दृष्टः। तत्सामान्यादात्मनो ब्रह्मणोऽप्यस्ति पारे किञ्चिदन्यत् तत्त्वमिति विज्ञायते। उन्मानव्यपदेशात्। उद्धृत्य मानं ह्युन्मानम्। तल्लोकवद् भगवतो ब्रह्मणोऽपि व्यपदिश्यमानमुपलभ्यते **"पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि"** (ऋ० ८। ४। १७। ३) **"ब्रह्मणश्च ते पादं ब्रवाणि"** (छां० ४। ५। २) इति। लोके च यदुन्मितमेतावदिति परिमितं वस्तु कार्षापणादि, ततः परमन्यत् किञ्चिद् वस्तु लोक्यते। तत्सामान्याद् ब्रह्मणः परेणापि केनचिदन्येन तत्त्वेन भवितव्यमिति गम्यते। सम्बन्धव्यपदेशात्। सम्बन्धं खलु जीवब्रह्मणोः प्राप्तृप्राप्यभावं व्यपदिशति श्रुतिः **"परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते"** (छां० ८। १२। ३) इति। प्राप्तव्याच्चैकस्मात् परमन्यत् प्राप्तव्यं प्राप्तृणामनुभूयते। नह्यध्वनीनैरेकं नगरं प्राप्य ततः परं नगरान्तरं न प्राप्यते। प्राप्तारो मुमुक्षवः प्राप्तव्यं चात्र ब्रह्म। न च तस्य प्राप्तव्यत्वे ततः परं नास्त्यन्यत् किञ्चित् प्राप्तव्यमिति वक्तुं शक्यते। विशेषाभावात्। तथाचास्ति ततोऽपि परमन्यत् किञ्चित् तत्त्वमिति युक्तं प्रतिपद्यामहे। भेदव्यपदेशाच्च। ब्रह्मसाक्षात्कारे जाते यत्पदं मुमुक्षुभिस्तावत् समवाप्यते तद् ब्रह्मणो भेदेन व्यपदिश्यते **"तद्विप्रासो विपन्यवो जागृवाँसः समिन्धते। विष्णोर्यत् परमं पदम्"** (ऋ० १। २। ७। २१) **"स तु तत्पदमाप्नोति यस्माद् भूयो न**

जायते" (कठ० ३ । ८) "**सोऽध्वनः पारमाप्नोति तद् विष्णोः परमं पदम्**" (कठ० ३ । ९) इति । न च तद् ब्रह्मपरत्वाभावे तथा व्यपदेष्टुं शक्यते । षष्ठी च भेदविषया प्रसिद्धा । "**परात् परं पुरुषमुपैति दिव्यम्**" (मुं० ३ । २ । ८) इति च जगत्कारणात् परात् परं दिव्यं पुरुषं व्यपदिशन्ती श्रुतिः स्पष्टं ब्रह्मणः परमस्ति दिव्यपुरुषाख्यं तत्त्वं किञ्चिदन्यदिति दर्शयति । न च विस्पष्टे श्रुतिदर्शितेऽर्थे युज्यते विप्रतिपत्तिः । तस्माद् यथा सर्वस्मादेतस्मात् परं ब्रह्म तत्त्वं विद्यते तथा ब्रह्मणोऽपि परं तत्त्वमन्यत् किञ्चिद् विद्यत इति निःशङ्कमवबुध्यामहे ॥ ३१ ॥

एवं प्राप्ते सिद्धान्त उच्यते—

**"सामान्यात्तु" ॥ ३२ ॥**

तुशब्दः पूर्वपक्षं व्यावर्त्तयति । **सामान्यात्**=विधारकत्वसामान्यात् ब्रह्म सेतुर्व्यपदिश्यत इत्यर्थः ।

न खलु यादृशो लोके सेतुर्दृष्टस्तादृशमस्ति ब्रह्मेत्यभिप्रायेण श्रुत्या सेतुर्ब्रह्मेति व्यपदिश्यते । अन्यथा मृद्दार्वादिमयत्वमपि तस्य परिकल्प्येत । केनाभिप्रायेण तर्हि? विधारकत्वसामान्याभिप्रायेण । भवति खलु लौकिके सेतौ ब्रह्मणि च विधारकत्वसामान्यम् । लौकिकः सेतुर्हि पयसामोघं विधारयति ब्रह्म च जगत्तन्मर्य्यादाश्च । तदिदं दर्शयति स्वयं श्रुतिः "**अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय**" (छां० ८ । ४ । १) इति । "**एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय**" (बृ० ४ । ४ । २२) इति च । विधारकत्वसामान्येन च शक्यते ब्रह्म सेतुरिव सेतुरिति व्यपदेष्टुम् । बहूपपादितं चैतदस्माभिरधस्ताद् द्युभ्वाद्यधिकरण इत्युदास्महे ॥ ३२ ॥

यदुक्तम् "उन्मानव्यपदेशात्" इति, तत्राह—

**"बुद्ध्यर्थः पादवत्" ॥ ३३ ॥**

**बुद्ध्यर्थः**=उन्मानव्यपदेशो ब्रह्मणि बुद्धिप्रवेशार्थो वेदितव्यः, **पादवत्**=लोकसिद्धपादव्यपदेशवदित्यर्थः।

यथा हि कार्षापणे पादविभागात्मकस्तावदुन्मानव्यपदेशो व्यवहारसौकर्य्यार्थः क्रियते न तु कार्षापणतोऽस्ति किञ्चिदन्यत् परमित्यवगमार्थस्तथा जगज्जन्मादिकारणे ब्रह्मण्युन्मानव्यपदेशोऽपि भूलोकादिपादात्मको मुमुक्षूणां बुद्धिप्रवेशार्थः क्रियते न ततोऽस्ति किञ्चिदन्यत् परं तत्त्वमित्यवगमार्थः। नहि मूर्त्तामूर्त्तलक्षणाद्रूपात् परस्मिन् परमसूक्ष्मे भगवति तस्मिन् मन्दमध्यमोत्तमभेदभाग्भिर्मुमुक्षुभिः सहसा बुद्धिः प्रवेशयितुं शक्यते। सति चैवंलक्षणे पादव्यपदेशे सा तत्रानायासेन प्रविशति सर्वेषां तेषामविशेषेणेति युज्यते पादशस्तदुन्मानव्यपदेशः॥ ३३॥

ननु यस्य भगवतो ब्रह्मणो वस्तुतः किमप्युन्मानं न विद्यते कथं बुद्ध्यर्थमपि तस्य तद् व्यपदेष्टुं शक्यते। नह्यनुन्मितस्य कथञ्चिदुन्मानमुपपद्यत इति। अस्योत्तरं पठति—

**"स्थानविशेषात् प्रकाशादिवत्"॥ ३४॥**

**स्थानविशेषात्**=स्थानविशेषसम्बन्धादनुन्मितस्याप्युन्मानं व्यपदेष्टुं शक्यते **प्रकाशादिवत्**=आदिशब्देनाकाशो गृह्यते, यथा प्रकाशस्याकाशस्य चेत्यर्थः।

यथा हि वातायनादिस्थानविशेषसम्बन्धादनुन्मितस्यापि सौर्य्यादिप्रकाशस्याकाशस्य चोन्मानं लोके व्यपदिश्यते वातायनप्रकाशो घटाकाश इत्येवञ्जातीयकम्, तथा भूलोकादिस्थानविशेषसम्बन्धादनुन्मितस्यापि वस्तुतो भगवतो ब्रह्मणश्चतुर्भिः पादैरुन्मानं व्यपदेष्टुं शक्यते नास्ति काचिदनुपपत्तिः॥ ३४॥

यदुक्तं "सम्बन्धव्यपदेशाद्भेदव्यपदेशाच्च" इति, तस्योत्तरं पठति—

**"उपपत्तेश्च"॥ ३५॥**

अनुपपत्तेरिति चार्थः। **उपपत्तेः**=जीवब्रह्मणोः प्राप्तृप्राप्तव्यभावसम्बन्धोपपत्तेर्ब्रह्मणः परस्मान्यस्य कस्यचिदनुपपत्तेश्च सम्बन्धव्यपदेशो भेदव्यपदेशश्च घटत इत्यर्थः।

प्राप्तव्यं खलु ब्रह्म, प्राप्ता च जीवात्मा। तयोः प्राप्तृप्राप्तव्यभावः सम्बन्ध उपपद्यते। न चोपपद्यमानं बोधयन्ती श्रुतिः कथञ्चिद्दोषमृच्छति। न च यत् प्राप्त्वा प्राप्तव्यं ततः परेणान्येन केनचिद् भवितव्यमित्यस्ति कश्चिद्राजनियमः। दर्शनं च परिच्छिन्नविषयमुदाह्रियते नापरिच्छिन्न-विषयम्। ब्रह्म चापरिच्छिन्नम्। न चापरिच्छिन्नात्तस्मादस्ति किञ्चिद-न्यत् परमिति सहस्रेणापि पुरुषायुषैः प्रदर्शयितुं शक्यते। न च भेद-व्यपदेशोऽपि ब्रह्मणः परमन्यत् किञ्चिदवगमयितुं शक्नोति। अनुपपत्तेः। यत् खलु ब्रह्मणः परमन्यत् किञ्चित् परिकल्प्यते तत्किं ब्रह्मसमानैश्वर्यं स्यादथवा न्यूनैश्वर्य्यम्। समानैश्वर्य्ये द्वयोस्तुल्यत्वेन किं कस्मात् परं सम्भवेत्। अतुल्ययोर्हि परस्परं परापरभावः सम्भवति न तुल्ययोः। विवादापत्तेः। न्यूनैश्वर्य्ये च सुतरां परापरभावासम्भवः। नहि न्यूनै-श्वर्य्यमधिकैश्वर्य्यात् कथञ्चित् परं भवितुमर्हति। यदेव च सर्वस्मादति-शयि तदेवास्माकं ब्रह्मेति न तत्परमन्यत् किञ्चिदुपपद्यते। पदमिति च स्वरूपमुच्यते। न च स्वरूपं वस्तुनः सकाशाद् भिद्यते येन ब्रह्मणो विष्णोरपि भिन्नं तदुत्प्रेक्ष्येत। षष्ठी चाभेदेऽपि भेदं परिकल्प्य शक्यते प्रयोक्तुमात्मनश्चैतन्यमित्यादिवत्। **"परात् परं पुरुषमुपैति दिव्यम्"** (मुं० ३।२।८) इत्यत्र च प्रकृतिरूपाज्जगत्कारणात् परात् पुरुषाख्यं दिव्यं ब्रह्म परं प्रतिपाद्यते न ब्रह्मणः परं पुरुषाख्यं किञ्चिदन्यत् तत्त्वम् ॥३५॥

तदेतद्धेत्वन्तरेण पुष्णाति—

**"तथाऽन्यप्रतिषेधात्"** ॥ ३६ ॥

तथाशब्दो हेत्वन्तरसमुच्चयमाचष्टे। **अन्यप्रतिषेधात्**=ब्रह्मणोऽन्यस्य परस्य प्रतिषेधान्न तत्परं किञ्चिदन्यदुपपद्यत इत्यर्थः।

**"तस्माद्धान्यन्न परः किञ्चनास"** (ऋ० ८।७।१७।२) **"पुरुषान्न परं किञ्चित्"** (कठ० ३।११) **"यस्मात् परं नापर-मस्ति किञ्चित्"** (श्वे० ३।९) **"न तस्य कश्चित् पतिरस्ति लोके"** (श्वे० ६।९) इत्याद्याः तयो हि ब्रह्मणः परमन्यत् प्रति-षेधन्ति। न च प्रतिषिद्धे तस्मिन् तदस्तित्वं केनाप्युपपादयितुं शक्यते।

तस्माद् ब्रह्मैवास्ति सर्वस्मात् परं न च ब्रह्मणोऽपि परमस्ति किञ्चिदन्यदिति निश्चीयते ॥ ३६ ॥

अतिदिशन्नाह—

**"अनेन सर्वगतत्वमायामादिशब्देभ्यः"** ॥ ३७ ॥

**अनेन**=अन्यस्य परस्य प्रतिषेधेन **सर्वगतत्वं**=ब्रह्मणः सर्वपदार्थान्तर्बहिःपूर्णत्वमुपपादितं वेदितव्यम्, कुतस्तस्यैतन्निष्पद्यते? **आयामादिशब्देभ्यः**=आयामो दैर्घ्यं, तेनेह ज्यायस्त्वं परिगृह्यते, विभुत्ववचना व्याप्तिवचनाः शब्दाश्चादिना गृह्यन्ते, आयामशब्दादिभ्य इत्यर्थः ।

श्रुतयो हि ब्रह्मणो ज्यायस्त्वं विभुत्वं व्यापित्वं च साक्षात् प्रतिपादयन्ति **"परो दिवा पर एना पृथिव्याः"** ( ऋ० ८ । ३ । १७ । ५ ) **"एतावानस्य महिमाऽतो ज्यायाँश्च पुरुषः"** ( ऋ० ८ । ४ । १७ । ३ ) **"ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः"** ( छां० ३ । १४ । ३ ) **"ज्यायान् दिवो ज्यायानाकाशात्"** ( शत० १० । ६ । ३ । २ ) **"स ओतः प्रोतश्च विभूः प्रजासु"** ( यजु० ३२ । ८ ) **"नित्यं विभुं सर्वगतं सुसूक्ष्मम्"** ( मुं० १ । १ । ६ ) **"तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः"** ( यजु० ४० । ५ ) **"सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम्"** ( श्वे० १ । १६ ) **"तेनेदं पूर्णं पुरुषेण सर्वम्"** ( श्वे० ३ । ९ ) इत्याद्याः । तेन भगवतस्तस्य सर्वगतत्वं सुखेन निष्पद्यते । श्रुत्यधिगतेऽर्थे कस्यापि विवादाभावात् । न च श्रुतयो युक्तिविरुद्धं किञ्चित् सङ्कीर्तयन्ति । नहि सर्वगतत्वाभावे ब्रह्म सर्वमिदं जगत् प्रशासितुं धारयितुं पालयितुं वा कर्हिचिदीष्ट इति श्रुतिनिष्पन्नमपि भवति युक्त्याऽपि सुनिष्पन्नम् । तदिदं सर्वगतत्वं चान्यस्मिन् परस्मिन् प्रतिषिद्धे जगज्जन्मादिकारणस्य तस्यैवोपपादयितुं शक्यते नान्यस्य कस्यचित् । अयोग्यत्वात् । अतोऽस्ति सर्वस्मात् परं सर्वगतं ब्रह्म ॥ ३७ ॥

**सम्प्रति** भक्त्यतिशयार्थं भगवतस्तस्य फलदातृत्वं प्रतिपिपादयिषुरधिकरणान्तरमारभमाणः पूर्वं तावत् सिद्धान्तेनोपक्रमते—

**"फलमत उपपत्तेः"** ॥ ३८ ॥

**अतः**=यत् सर्वस्मात् परं सर्वगतं ब्रह्म प्रतिपादितमस्माद् ब्रह्मणः **फलं**=शुभाशुभकर्मणामैहिकामुष्मिकं सुखदुःखात्मकं फलं भवितुमर्हति, कुतः? **उपपत्तेः**=युक्तेरित्यर्थः ।

अत्र जीवात्मकर्तृकं शुभाशुभकर्मजातं विषयः । तत्र संशयः-किमिदं स्वयमात्मफलं ददाति किं वा जगज्जन्मादिकारणं ब्रह्म । स्वयमिति पूर्वः पक्षः, ब्रह्मेति सिद्धान्तः । पूर्वपक्षमनन्तरमुपन्यस्य निरसिष्यति । सिद्धान्तमधुनाऽऽह । जगज्जन्मादिकारणं ब्रह्मैव तावज्जीवात्मानुष्ठितानां नानाविधशुभाशुभकर्मणां सुखदुःखात्मकं फलं ददातीति प्रतिपत्तव्यम् । उपपत्तेः । यत् खलु जीवात्मभिर्नानाविधाभिप्रायेणानुष्ठितानि निखिलानि कर्माणि तेषामेवञ्जातीयकं फलमस्मिन् देशेऽस्मिन् कालेऽनेन क्रमेण दातव्यमिति नोभयं सम्यगभिपश्यति तत्फलमिह वाऽमुत्र वा सुखं वा दुःखं वा प्रचुरं वा क्षुल्लकं वा यथोचितं दातुं च शक्नोति तदेव कर्मफलं ददाति जीवात्मभ्य इत्युपपद्यते । नहि येनाशेषविशेषतो निखिलानि तानि नाभिज्ञायन्ते यथादेशं यथाकालं यथोचितं तत्फलं प्रदातुं च न शक्यते तत् कर्मफलदातृ कथञ्चिदुपपद्यते । तदेतद् द्वयं च सर्वज्ञे सर्वेशाने जगतां पितरि भगवति परब्रह्मण्येवाञ्जस्येन घटते नान्यत्र क्वचित् । अन्यथात्वात् । कर्म च स्वयं न स्थास्नु क्षणिकत्वादिति नात्मफलदानायावकल्पते । तस्माद् ब्रह्मण एव भवति कर्मफलमिति युक्तं प्रतिपद्यामहे ॥ ३८ ॥

**ननु** सूक्ष्मोऽयं कर्मफलविषयः । सूक्ष्मे चैतादृक्षे विषये श्रुतिं वयमाद्रियामहे नोपपत्तिमिति । अत आह—

**"श्रुतत्वाच्च"** ॥ ३९ ॥

फलमत इत्यनुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । **श्रुतत्वात्**=श्रूयमाणत्वात् फलमतोऽध्यवसीयत इत्यर्थः ।

यथा ह्युपपत्तेः खलु कर्मफलं ब्रह्मणो भवतीति निश्चीयते तथा श्रुते-

रप्यध्यवसीयते । श्रुतिर्हि साक्षात् फलप्रदातृ ब्रह्म तावदध्यवसायति **"यदङ्ग! दाशुषे त्वमग्ने! भद्रं करिष्यसि तवेत् तत्सत्यमङ्गिरः!** (ऋ० १।२।२।६) **"अहं दाशुषे विभजामि भोजनम्"** (ऋ० ८।१।५।१) **"अहं दधामि द्रविणं हविष्मते"** (ऋ० ८।७।११।२) **"कर्माध्यक्षः"** (श्वे० ६।११) इत्येवञ्जातीयका। न च श्रुत्यध्यवसितेऽर्थे कोऽपि विवादोऽवकाशं लभते। तस्मात् कर्मफलदातृ ब्रह्मैवेति सिद्धान्तः ॥ ३९ ॥

पूर्वपक्षमुपन्यस्यति—

**"धर्मं जैमिनिरत एव"** ॥ ४० ॥

**जैमिनिः**=जैमिनिराचार्य्यो**ऽत एव**=श्रुत्युपपत्तिभ्यामेव **धर्मम्**=उपलक्षणमेतदधर्मस्य, धर्मः पुण्यम्, अधर्मः पापम्, शुभाशुभकर्मजन्यमपूर्वाख्यं पुण्यपापापरनामधेयं धर्ममधर्मं च फलदातारं मन्यत इत्यर्थः।

यस्तावत् फलप्रदातृ ब्रह्मेति मन्यते स प्रष्टव्यः—किं कर्मानपेक्षं ब्रह्म फलं ददाति किंवा तदपेक्षम्। नाद्यः। वैषम्यनैर्घृण्यदोषप्रसङ्गात्। **"वैषम्यनैर्घृण्ये न सापेक्षत्वात्"** (वे० २।१।१४) इति तदपेक्षाङ्गीकाराच्च। न द्वितीयः। अन्वयव्यतिरेकाभ्यां कर्मणः फलदातृत्वसिद्धेर्ब्रह्मणोऽन्यथासिद्धत्वात्। यथा हि घटनिर्माणवेलायां विद्यमानोऽपि कुलालजनकोऽन्वयव्यतिरेकाभ्यां कुलालस्यैव तन्निर्मातृत्वसिद्धेर्भवत्यन्यथासिद्धस्तथा फलदानवेलायां विद्यमानमपि ब्रह्मान्वयव्यतिरेकाभ्यां कर्मण एव तद्दातृत्वसिद्धेर्भवत्यन्यथासिद्धम्। न खलु वयमिह जगज्जन्मादिकारणं ब्रह्म व्यासेधामः, किं तर्हि? तस्य कर्मफलदातृत्वमविचारसहमिति निगदामः। तद्विनाऽप्युपपत्तेः। यथा हि धरण्यामवस्थितः खल्वग्निर्दिवि चैकाकी सूर्य्यः सर्वमेतदाकर्षन् स्वयमेव सततमभिज्वलति, सर्वस्य प्राणो वा वायुरन्तरिक्षमभिव्याप्य स्वयमेव सर्वत्रेतस्ततो निरन्तरं धावति, विश्वस्य धारिणी धरणी वा स्वमर्यादायां तिष्ठन्ती स्वयमेव रात्रिन्दिवा सूर्य्यं परिक्रामति, यथौषधिभेदाः सोमादयो वा स्वयमेव यथाऋतु जन्यन्ते स्वयमेव च पच्यन्ते, यथा वा कृष्यादिकं कर्म

स्वयमेव यथासमयं फलं प्रददाति तथा जीवात्मभिरनुष्ठितं शुभाशुभं तत्तत्कर्मापि स्वयमेव यथासमयं फलं प्रददातीत्युपपद्यते । *समानत्वात्* । नह्येकस्य यथासमयं स्वकार्य्यकरणमुपपद्यते नापरस्येति सङ्गच्छते । वैषम्यकारणानुपलब्धेः । अथावोचाम क्षणिकं कर्म फलवेलायामसत्त्वान्नार्हति यथासमयं फलं प्रदातुमिति । नैतद् युक्तमुच्यते । अपूर्वमतिज्ञानात् । न खलु वयं कर्मशब्देनेह क्रियाकलापमभिप्रैमो येन शङ्केयं समुदियात् । अपूर्वं तु तज्जन्यं फलप्रदातृ प्रतिजानीमहे । यत्किल वैदिका अदृष्टं धर्माधर्मौ पुण्यं पापमिति च परिभाषन्ते । तदेतच्च स्थास्नु वर्तते न क्षणिकमिति सुखेन यथासमयं फलदानाय कल्पते । भवति चात्र श्रुतिरपि प्रमाणम् "**योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्**" ( कठ० ५ । ७ ) "**तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च**" ( बृ० ४ । ४ । २ ) "**पुण्यः पुण्येन कर्मणा भवति पापः पापेन**" ( बृ० ४ । ४ । ५ ) इत्यादिका । तस्मात् कर्मण एव फलं भवति न तदधिष्ठातुर्ब्रह्मण इति युक्तम् ॥ ४० ॥

उपन्यस्तः पूर्वः पक्षः । तमधुना निरस्यन्नाह—

**पूर्वं तु बादरायणो हेतुव्यपदेशात्**" ॥ ४१ ॥

तुना पूर्वपक्षनिरास उच्यते । **पूर्वं**=पूर्वसूत्रोक्तं ब्रह्म **बादरायणः**= बादरायणाचार्य्यः फलप्रदातृ मन्यते, कुतः? **हेतुव्यपदेशात्**=हेतुः कारणं, कार्य्यमात्रकारणाभिधानादित्यर्थः ।

श्रुतिस्मृतयो हि कार्य्यमात्रकारणं तावद् ब्रह्म व्यपदिशन्ति "**एष योनिः सर्वस्य**" ( मां० ६ ) "**स कारणं करणाधिपाधिपः**" ( श्वे० ६ । ९ ) "**एको बहूनां यो विदधाति कामान् तत्कारणम्**" ( श्वे० ६ । १३ ) "**स हि सर्ववित् सर्वकर्ता**" ( सां० ३ । ५६ ) "**मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् । हेतुनाऽनेन कौन्तेय! जगद्विपरिवर्तते**" ( गी० ९ । १० ) इत्याद्याः । तत्तत्कर्मफलमपि कार्य्यम् । न च कार्य्यमात्रकारणं तत्कारणं न भवतीति

वक्तुं शक्यते । अर्द्धजरतीयानुहरणप्रसङ्गात् । यानि च तत्प्रसाधकान्युदाहरणानि प्रदर्श्यन्ते तत्रापि सर्वत्रास्ति ब्रह्म कारणमिति निश्चेतव्यम् । प्रशासितृ हि तत् सर्वस्य विद्यते । यत्रेदमाम्नातं भवति **"सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च"** ( बृ० ५ । ६ । १ ) इति । न च प्रशासितुस्तस्य प्रशासनं चेतनो वाऽचेतनो वा कश्चिदपि शक्नोत्युल्लङ्घयितुम् । स यद्यत् कर्म कुरुते नूनं तत्प्रशासनादेव कुरुते न जातु स्वातन्त्र्येण किञ्चित् । यदा खलु सूर्य्यप्रभृतयो महान्तः पदार्था अपि तत्प्रशासनं नातिवर्तितुमुत्सहन्ते तद्वशवर्तिनः सन्त एव च सततं यथासमयं स्वस्वकार्य्यमनुविदधते तदा का स्वातन्त्र्येण फलदानकथा वराकस्य तत्तत्कर्मणः । कृष्यादिकर्मापि च ब्रह्मनियमादेव यथासमयं फलं प्रयच्छति न स्वातन्त्र्येणेत्यनुदाहरणम् । एतेनौषधिभेदाः सोमादयोऽपि व्याख्याता वेदितव्याः । जगद्वत् तत्रापि ब्रह्मण एव जन्मादिहेतुत्वाभ्युपगमात् । पर्य्याप्तं च स्वत एवेष्टानिष्टं फलं प्रदातुं सर्वशक्ति ब्रह्म, तथापि वैषम्यनैर्घृण्ये न प्रसज्येयातामिति जीवात्मीयं कर्मोपादत्ते । यथा हि लोके खलु सुखं वा दुःखं वा फलं प्रदातुं प्रजाभ्यः समर्थोऽपि प्रजाधिपो वैषम्यादिदोषाप्रसङ्गाय फलबीजं तत्कर्म परिगृह्णाति तदनुरूपं चेष्टानिष्टं फलं प्रयच्छति तथा जगज्जन्मादिकारणं ब्रह्मापि प्रतिपत्तव्यम् । प्रजाधिपत्वाविशेषात् । यत्रेदं श्रूयते **"स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा"** ( बृ० २ । ५ । १५ ) इति । तस्माद् ब्रह्मैव कर्मफलदातृ न स्वतन्त्रं कर्मेति बादरायणाचार्य्यो मन्यते ॥ ४१ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादवैदिकमुनिविरचितायां वेदान्तसूत्रवैदिकवृत्तौ तृतीयाध्यायस्य द्वितीयः पादः ॥**

---



# तृतीयोऽध्यायः

## तृतीयः पादः

ब्रह्मगोचरो विचारः प्रावर्तिष्ट । सम्प्रति तदुपासनगोचरः प्रवर्तिष्यते । कर्मवदुपासनस्यापि ज्ञानोपायत्वात् । तत्र च कर्मनिष्ठानां ज्ञानोत्पत्तितः पुरस्तात् प्रवृत्त्यौचित्यात् । सर्ववेदान्तेषु विहितानि दहरशाण्डिल्यवैश्वानरप्रभृतीनि ब्रह्मोपासनानि किं मिथो विशिष्यन्ते किंवा न विशिष्यन्त इत्येष तद्गोचरो विचारः । विशेषे गुणानुपसंहारोऽविशेषे च तदुपसंहार इति विचारप्रयोजनम् । तदेव निर्णिनीषुर्बादरायणो मुनिरिमं तृतीयं पादमारभमाणः पूर्वं तावत् सिद्धान्तपक्षमवलम्ब्य सर्ववेदान्तविहितानां तेषामविशेषमाह—

**"सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्"** ॥ १ ॥

**सर्ववेदान्तप्रत्ययं**=वेदान्ता उपनिषदः, ताभ्यो हि निःश्रेयसहेतुर्वेदार्थो निश्चितं बुद्धिपथमुपनिषीदति, ताश्चैशाद्या दश प्रमाणमितरा अप्रमाणम्, कौषीतकिब्राह्मणोपनिषच्चैतरेयोपनिषदा सगृह्यत इत्युक्तम्, सर्वेषु वेदान्तेषु प्रत्ययः प्रतीतिर्विधिर्यस्य ब्रह्मोपासनस्य 'तत् सर्ववेदान्तप्रत्ययं ब्रह्मोपासनम्, ब्रह्मैकत्ववदेकत्वमविवक्षितं तदुपासनजातमविशिष्टं परस्परविशेषरहितं समानमिति यावत् प्रतिपत्तव्यम्, कुतः? **चोदनाद्यविशेषात्**=चोदना विधिः, आदिना फलरूपाख्याः सगृह्यन्ते, विशेषो भेदः, चोदनादिविशेषाभावादित्यर्थः ।

अत्र सर्ववेदान्तविहितानि दहरशाण्डिल्यवैश्वानरप्रभृतीनि ब्रह्मोपासनानि विषयः । किमिमानि परस्परं विशिष्यन्ते किंवा न विशिष्यन्त इति संशयः । विशिष्यन्त इति पूर्वः पक्षः, न विशिष्यन्त इति सि-

द्धान्तः । तत्र पूर्वपक्षसाधको हेतुरनन्तरसूत्रे स्वयमाशङ्क्य निराख्यास्यते, सिद्धान्तसाधको हेतुरत्रोपन्यस्यते—**चोदनाद्यविशेषात्** । यथा हि सर्वब्राह्मणविहितानि किलाग्निहोत्रादीनि कर्माणि चोदनाद्यविशेषात् परस्परं न विशिष्यन्ते, यत्रेदमुक्तं पूर्वमीमांसायाम् "**एकं वा संयोगरूपचोदनाख्याऽविशेषात्**" ( मी० २ । ४ । ९ ) इति, एकम्=अविशिष्टं, तथा सर्ववेदान्तविहितानि ब्रह्मोपासनान्यपि परस्परं न विशिष्यन्ते, चोदनाद्यविशेषात् । विधायकशब्दविशेषो हि चोदनेत्युच्यते । यत्रेदमुक्तं दर्शनान्तरे "**विधिर्विधायकः**" ( न्या० २ । १ । ६३ ) इति । चोदना विधिरित्यनर्थान्तरम् । सा चोपासीत वेद ध्यायीतेत्यादिलक्षणा प्रतिवेदान्तमविशिष्टोपलभ्यते । न च तदविशिष्टोपलब्धौ सत्यां चोद्यस्य विधेयस्यार्थस्य ब्रह्मोपासनस्य विशेषो वक्तुं शक्यते । अन्यथाऽग्निहोत्रादिकर्मणोऽपि परस्परं विशेषः प्रतिब्राह्मणमुच्येत । यथा चैष चोदनाऽविशेषः प्रत्युपासनमीक्ष्यते तथा फलसंयोगाविशेषोऽपि निरीक्ष्यते । ब्रह्मोपासनफलं हि ब्रह्मसाक्षात्कार इति सुप्रसिद्धम् । न च तद् यथा छन्दोगा दहरोपासने वा शाण्डिल्योपासने वा वैश्वानरोपासने वा समामनन्ति वाजसनेयिनस्तथा तत्र नामनन्ति, ततो विशिष्टं वा किञ्चिदादिशन्ति । रूपमपि चाविशिष्टं सर्वत्र लोचामहे । यथा हि द्रव्यदेवतं खलु यागस्य कर्मणो रूपं तथोपास्यमुपासनस्य रूपमिति शास्त्रविद्भिराख्यायते । ब्रह्मोपास्यं च सर्वत्राविशिष्टमेकरूपत्वादिति न रूपतोऽपि किञ्चिदुपासनं विशिष्यते । ब्रह्मोपासनमित्याख्याऽपि प्रतिवेदान्तमविशिष्टा दृश्यते । विशेषे चावश्यं विशिष्येत । दहरोपासनं शाण्डिल्योपासनं वैश्वानरोपासनमित्यादिविशेषोपलब्धिश्च स्वयमग्रे समाधास्यते । तस्मात् सर्ववेदान्तविहितानि यानि दहरशाण्डिल्यवैश्वानरप्रभृतीनि ब्रह्मोपासनानि विद्यन्ते तानि परस्परं न विशिष्यन्ते । अवैशिष्ट्यं हि तेषां सर्वत्र प्रतिपद्यामहे ॥ १ ॥

अत्र विशेषहेतुमाशङ्क्य निराचष्टे—

"**भेदान्नेति चेन्नैकस्यामपि**" ॥ २ ॥

सर्ववेदान्तप्रत्ययमित्यनुवर्तते । **भेदात्**=वेदान्तभेदान्न=सर्ववेदान्तप्रत्ययं ब्रह्मोपासनमविशिष्टं नेति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः? **एकस्यामपि**=प्रतिवेदान्तमविशिष्टायां विशेषरहितायां ब्रह्मोपासनायां सत्यामपि प्रतिपादकप्रतिपादयितव्यविशेषापेक्षया विशेषोपपत्तेरित्यर्थः ।

**अथोच्येत**—न खलु चोदनाद्यविशेषात् सर्ववेदान्तप्रत्ययं ब्रह्मोपासनमविशिष्टं प्रतिपत्तुं शक्यते । वेदान्तभेदेन तद्विशेषस्यावधारणात् । उपनिषदो हि वेदान्ता उच्यन्ते । ताश्चानेकधा विभिद्यन्त इति न परोक्षम् । तासां भेदाद् वेदान्तभेदः । तद्भेदे चावर्जनीया तावदविशेषपुनःश्रुतिः । यां किल प्रत्यहं शास्त्राभ्यासाहतमतयो विचक्षणाः पुनरुक्तिरिति नाम्ना सङ्गिरन्ते । सा चास्ति कर्मभेदवदुपासनभेदस्यापि प्रयोजिकेति मन्तव्यम् । अन्यथाऽसाङ्गत्यप्रसङ्गात् । नहि प्रतिवेदान्तं ब्रह्मोपासनविशेषानाश्रयणे सा कथञ्चित् साङ्गत्यमापद्यते । तद्विशेषाश्रयणे च तस्याः साङ्गत्यं विस्पष्टम् । न च सम्भवति सङ्गताश्रयणेऽसङ्गताश्रयणं न्याय्यम् । तस्मादवधार्य्यते नूनमस्ति वेदान्तभेदेन मिथो ब्रह्मोपासनभेद इति । **नैतद् वक्तव्यम्** । प्रतिपादकप्रतिपादयितव्यभेदापेक्षया तद्भेदोपपत्तेः । प्रतिपादकभेदाद् हि वेदान्तभेदस्तावदास्थीयते । यस्तु सत्यपि प्रतिपादकाभेदे शतपथादौ काण्वमाध्यन्दिनादिभेदः स मन्त्रवर्णेषु शाकलबाष्कलादिभेदवत् प्रवक्तृभेदनिबन्धनो द्रष्टव्यः । यत्रेदं स्मर्य्यते "**आख्या प्रवचनात्**" (मी० १ । १ । ३०) इति । प्रतिपादकभेदे च प्रतिपादयितव्यभेदोऽप्यावश्यकः । तद्भेदाभावे प्रतिपादकभेदासम्भवात् । नहि बहवः प्रतिपादकाः कदाचिदेकं प्रतिपादयितव्यमभिप्रवर्तितुमुत्सहन्ते । प्रतिपादकप्रतिपादयितव्यभेदे चाविशेषपुनःश्रुतिप्रसङ्गोऽपि ब्रह्मोपासनस्यावर्जनीयत्वान्न कस्मैचिद्दोषायावकल्पते । सङ्गतत्वात् । सङ्गतं ह्येकस्यापि सतोऽर्थस्य प्रतिपादकप्रतिपादयितव्यभेदादविशेषेण पुनःश्रवणम् । नहि पाटलिपुत्रे देवदत्तो यज्ञदत्तं यमेकमर्थं प्रतिपादयति तमेवार्थं विष्णुमित्रो मूलत्राणे प्रतिपादयन् कञ्चिद्दोषमावहति । तस्याविशेषपुनःश्रवणं

वा कदाचिद् भेदमापादयति । तस्माद् वेदान्तभेदे सत्यपि ब्रह्मोपासनं प्रतिवेदान्तमविशिष्टमेव विद्यते न जातु स्वप्नेऽपि विशिष्यत इति निश्चेतव्यम् ॥ २ ॥

**स्यादेतत्**—मा नाम भूद् वेदान्तभेदान्मिथो ब्रह्मोपासनभेदः, प्रतिवेदान्तं धर्मभेदाद् भविष्यति । श्रूयते हि धर्मभेदः । आथर्वणिकास्ताववन्मुण्डके ब्रह्मविद्यायाः धर्मः शिरोव्रतमधीयते **"तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद् यैस्तु चीर्णम्"** ( मुं० ३ । २ । १० ) इति । वाजसनेयिनः कठाश्छन्दोगाश्च न तमधीयते । प्रतिवेदान्तं विद्याऽभेदे च सर्वेऽविशेषेणैनमधीयेरन् । नहि धर्मस्य सतस्तस्य क्वचिदध्ययनमनध्ययनं च क्वचित् कथञ्चिदुपपद्यते । न च यः क्वचिदेकत्र विद्याधर्मोऽधिगतः सोऽन्यत्र तद्धर्मतां न भजत इति घटते । विद्या च कर्मवत् सर्वधर्मोपेतैव सर्वदा शास्त्रदेशितं फलं प्रसोतुमर्हति न तदपेतेति नियमेन सर्वत्र सोऽध्येतव्यो विज्ञायते । अधीयते चैकत्र न सर्वत्र । तस्मात् प्रतिपद्यते भवति प्रतिवेदान्तं विद्याभेद इति । अस्योत्तरं पठति—

**"स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः"** ॥ ३ ॥

**स्वाध्यायस्य**=स्वशब्देन मुण्डकोपनिषदुच्यते, अध्यायोऽध्ययनं, मुण्डकोपनिषदध्ययनस्यैष धर्मः प्रतिपत्तव्यः, कुतः ? **हि**=यतः **समाचारे**=सम्यगाचारे यथाशास्त्रं वर्तमानेऽध्येत्रध्यापयितृव्यवहारे **तथात्वेन**=स्वाध्यायधर्मत्वेन स प्रसिध्यतितराम्, **अधिकाराच्च**=स्वाध्यायसम्बन्धाच्च । **सववच्च**=विशेषान्तरोक्तिपरश्चकारः, सवो यज्ञस्तत्र मन्त्रवच्च **तन्नियमः**=स्वाध्याये शिरोव्रतनियम इत्यर्थः ।

यदि आथर्वणिकानां मुण्डकोपनिषदि खलु ब्रह्मविद्याया धर्मः शिरोव्रतमधीयेत तदाऽवश्यं ब्रह्मविद्याऽपि धर्मभेदात् प्रतिवेदान्तं भिद्येत । स्वाध्यायधर्मश्चायमधीयते न ब्रह्मविद्याधर्मः । अन्यस्य धर्मेण च न जात्वन्यस्य भेद आपद्यते । स्वाध्यायधर्मत्वं च शिरोव्रतस्य समाचारे सुप्रसि-

द्धम् । यथाशास्त्रं वर्तमानोऽध्ययनाध्यापनलक्षणोऽध्येत्रध्यापयितृव्यवहारो हि समाचार इह व्यपदिश्यते । तत्र च स्वाध्यायस्य शिरोव्रतं धर्म इति प्रसिध्यतितराम् । को नु नाम वेदवेदान्तविद्यासमादृतशेमुषीको धीमानध्येति न जानाति च वेदिवंशावतंसानां काश्यालङ्कारभूतानामुदासीनवर्य्याणामाम्नाये प्रायेणासीदेतदाचरणमिति । न च यदेवं बहुषु सम्प्रदायवित्सु भगवच्चरणेषु नियमतः स्वाध्यायधर्मत्वेनाचर्य्यमाणं दरीदृश्यते तदाचारानवच्छिन्नधारा च जाह्नवीधारावदजस्रवाहिनी तत्रभवद्भ्यः शोश्रूय्यते न तदन्यस्य कस्यचिद् धर्मोऽभिधातुं शक्यते । अधिकाराच्च स्वाध्यायस्य शिरोव्रतं धर्म इति निःशङ्कं प्रतिपद्यामहे । अधिकारो ह्यत्र सम्बन्ध उच्यते । क्वचित् सामान्येऽपि विशेषप्रयोगाभ्युपगमात् । स च शिरोव्रतस्य **"नैतदचीर्णव्रतोऽधीते"** (मुं० ३ । २ । ११) इति वाक्यशेषात् स्वाध्यायेनाधिगम्यते । सर्वनाम्ना तस्यैव परामर्शसम्भवात् "अधीते" इति श्रवणाच्च । **"तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद् यैस्तु चीर्णम्"** (मुं० ३ । २ । १०) इति श्रूयमाणो ब्रह्मविद्यासंयोगस्तु तस्य स्वाध्यायापेक्ष एव द्रष्टव्यो न निरपेक्षः । अन्यथा वाक्यशेषविरोधापत्तेः । कृतस्वाध्यायो हि ब्रह्मविद्यायामधिक्रियते, स्वाध्याये च शिरोव्रतस्य नियम इति सुव्यक्तस्तस्य स्वाध्यायापेक्षो ब्रह्मविद्यासंयोगः । स्वाध्यायो मुण्डकोपनिषदध्ययनम् । तत्र तन्नियमश्च **सववद्** वेदितव्यः । यथा हि सवे यज्ञे खलु मन्त्रैर्देवतास्मरणं नियम्यते तथा शिरोव्रतधर्मोऽपि मुण्डकोपनिषदध्ययने नियम्यते न वेदान्तान्तराध्ययने । तत्र तच्छ्रवणाभावात् । अध्ययनधर्मेण च न जातु प्रतिवेदान्तं ब्रह्मोपासनभेदः कल्पयितुं शक्यते । अतिप्रसङ्गात् । अतोऽस्ति प्रतिवेदान्तं ब्रह्मोपासनमविशिष्टमिति निर्बाधम् ॥ ३ ॥

एतदेव श्रुतिदर्शनेनोपोद्बलयति—

**"दर्शयति च"** ॥ ४ ॥

पूर्वत्रैव दर्शनमेतदुपोद्बल्यत इति चार्थः । **दर्शयति**=प्रतिवेदान्तमेकं ब्रह्मोपास्यमुपदिशन्ती श्रुतिरविशिष्टं ब्रह्मोपासनं दर्शयतीत्यर्थः ।

श्रुतिर्हि प्रतिवेदं प्रतिवेदान्तं चैकमेव ब्रह्मोपास्यमुपदिशति **"न यस्य द्यावापृथिवी अनुव्यचो न सिन्धवो रजसो अन्तमानशुः । नोत स्ववृष्टिं मदे अस्य युध्यत एको अन्यच्चकृषे विश्वमानुषक्"** (ऋ० । १ । ४ । १४ । १४ ) **"युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः"** (ऋ० ४ । ४ । २४ । १ ) **"एतो न्विन्द्रं स्तवाम सखायः स्तोम्यं नरम् । कृष्टीर्यो विश्वा अभ्यस्त्येक इत्"** ( ऋ० ६ । २ । १८ । १९ ) **"एको वशी सर्वभूतान्तरात्मा"** ( कठ० ५ । १२ ) **"एकधैवानुद्रष्टव्यम्"** ( बृ० ४ । ४ । २० ) **"एको देवः सर्वभूतेषु गूढः"** ( श्वे० ६ । ११ ) इति । तथा यद्गुणविशिष्टं ब्रह्मोपास्यं छन्दोगानां शाण्डिल्यविद्यायामुपदिश्यते वाजसनेयिनामपि तत्र तद्गुणविशिष्टमेवोपदिश्यते । तद् यथा **"मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः"** ( छां० ३ । १४ । २ ) इति छन्दोगानाम्, **"स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपमाकाशात्मानं कामरूपिणं मनोजवसं सत्यसङ्कल्पं सत्यधृतिं सर्वगन्धं सर्वरसं सर्वा अनुदिशः प्रभूतं सर्वमिदमभ्याप्तमवाकमनादरम्"** ( शत० १० । ६ । ३ । २ ) इति च वाजसनेयिनाम् । तथा वैश्वानरविद्यायामपि यत्प्रादेशमात्रं वैश्वानरं ब्रह्म वाजसनेयकी श्रुतिस्तावदुपास्यं दर्शयति **"तान् हो वाचैते वै यूयं पृथग् वैश्वानरान् विद्वांसः पृथगन्नमघस्त, प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसम्पन्नास्तथा तु व एनान् वक्ष्यामि यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामि"** ( शत० १० । ६ । १ । १० ) इति, तदेव सिद्धवदुपाददाना छान्दोग्यश्रुतिरप्युपास्यं निर्दिशति **"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमु-**

पास्ते" ( छां० ५ । १८ । १ ) इति । यथा चात्र तथाऽपरत्राप्येकं ब्रह्मोपास्यमुपदिश्यत इति द्रष्टव्यम् । उपास्यैकत्वे च तदुपासनेनापि सर्वत्रैकेन भवितव्यमिति युक्तमालोचामहे । नहि प्रतिवेदान्तं दृश्यमानमुपास्यं ब्रह्म न भिद्यते तदुपासनं च भिद्यत इति कथमपि संश्लिष्यते । सर्वत्र ह्युपास्यानुगुणान्येवोपासनानि विधीयन्ते । न चोपास्यं ब्रह्म प्रतिवेदान्तं भिद्यते येन तत्र विहितानि तदुपासनान्यपि भिन्नानि कल्प्येरन् । न च कल्पनामात्रमाद्रियन्ते विवेचकाः । तस्मादस्ति प्रतिवेदान्तं ब्रह्मोपासनावैशिष्ट्यमिति निर्धार्य्यते ॥ ४ ॥

प्रतिवेदान्तं ब्रह्मोपासनावैशिष्ट्यं निरधारि । सम्प्रति तत्प्रयोजनमुच्यते—

**"उपसंहारोऽर्थाभेदाद् विधिशेषवत् समाने च" ॥ ५ ॥**

**समाने च**=प्रतिवेदान्तमविशिष्टे च ब्रह्मोपासने**ऽर्थाभेदात्**=प्रयोजनाविशेषा**दुपसंहारः**=अन्यत्रोक्तानां गुणानामन्यत्र सङ्ग्रहः सम्बन्धोऽवगन्तव्यः, **विधिशेषवत्**=यथा विधिशेषाणामग्निहोत्रादिधर्माणामन्यत्रोदितानामन्यत्रोपसंहार इत्यर्थः ।

प्रतिवेदान्तं यावद् ब्रह्मोपासनं समानं तावद् विषयः । तत्रैव संशयः-किमेकत्रोक्तानां गुणानामपरत्रोपसंहारो भवति किंवा न भवति । न भवतीति पूर्वः पक्षः, भवतीति सिद्धान्तः । किं तावत् प्राप्तम् ? न भवतीति ब्रूमः । तत्रोक्तैरेव गुणैरुपासने निष्पन्नेऽन्यत्रोक्तानां तेषामुपसंहारस्यानपेक्षणात् । यत्र ह्युपासने यावन्तो गुणा उच्यन्ते तत् तावद्भिरेव सुष्ठु निष्पद्यते नास्ति तस्य स्वनिष्पत्त्यै गुणान्तरापेक्षा । गुणाश्चापेक्षायां सत्यामुपसंहारमर्हन्ति नत्वनपेक्षायाम् । नहि यस्य यदपेक्षा न विद्यते तत्र तदुपसंहारः कस्मैचिदर्थायावकल्पते । तस्मादन्यत्रोपासनेऽभिहितानां गुणानामन्यत्रोपासने भवत्युपसंहार इति नैतद् युक्तं मन्यामह इति । एवं प्राप्तेऽभिधीयते—**अर्थाविशेषादुपसंहारः कर्मशेषवत्** । गुणानामर्थो ह्युपासनोपकारस्तावदिष्यते यथा कर्मोपकारः । तेन चोपासनस्य प्रतिवेदान्तमविशेषादविशेषेण भवितव्यम् । अन्यथा फलवि-

शेषानुपपत्तेः । नह्युपासनानां कथमपि विशेषे फलाविशेषः कथञ्चिदुपपद्यते । प्रतिवेदान्तं समानेषु तेषु फलाविशेषश्चाभ्युपगम्यते । नच न्यूनाधिकभावेनोक्तानां गुणानामर्थाविशेषः प्रत्युपासनं तावद् घटते यावदन्यत्रोक्तास्तेऽन्यत्र नोपसंह्रियन्ते । गुणिनां स्वोपकारिगुणगोचरापेक्षा च सततमनुवर्तते न जातु निवर्तते । गुणाश्च ते स्वसविधेऽभिहिताः स्युरन्यसविधे वा पठिता भवेयुर्गुणिभिः समानमपेक्ष्यन्ते । तस्मात् प्रतिवेदान्तमुपासने समानेऽन्यत्रोक्तानां गुणानामन्यत्रोपसंहारो भवतीति युक्तं मन्तव्यम् । **कर्मशेषवत्** । यथाऽग्निहोत्रादिकर्मशेषाणां गुणानामन्यत्रोक्तानामन्यत्रोपसंहारः । अस्ति हि प्रतिवेदान्तं ब्रह्मोपासनमिव कर्माप्यग्निहोत्रादिकं प्रतिब्राह्मणं समानम् ॥ ५ ॥

अत्राशङ्क्य समाधत्ते—

**"अन्यथात्वं शब्दादिति चेन्नाविशेषात्"** ॥ ६ ॥

**अन्यथात्वम्**=उपसंहारान्यथात्वमनुपसंहारो गुणानां प्रतिब्रह्मोपासनं भवति, कुतोऽवगम्यते? **शब्दात्**=तदुपासनविधायकश्रुतेरिति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कस्मात्? **अविशेषात्**=विशेषो भेदः, ब्रह्मणस्तद्गुणानां च वस्तुतो विशेषाभावादित्यर्थः ।

**अथोच्येत**—न खलु प्रतिवेदान्तं ब्रह्मोपासने समानेऽपि गुणोपसंहारं युक्तं पश्यामः । श्रुत्या ब्रह्ममात्रोपासनस्य तत्र तत्र विधानात् । अस्ति तावद् ब्रह्ममात्रोपासनविधायिका श्रुतिः **"आत्मेत्येवोपासीत"** ( बृ० १ । ४ । ७ ) इति । **"तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः"** ( मुं० २ । २ । ५ ) इति च । आत्मा=ब्रह्म । यदि हि प्रतिवेदान्तं समाने खलु ब्रह्मोपासने गुणोपसंहारो भवेत् तदा श्रुत्या ब्रह्ममात्रोपासनं न विधीयेत । ब्रह्ममात्रोपासनं च विदधाति श्रुतिरिति प्रत्यक्षमीक्ष्यते । अन्यथैवकारोपादानवैयर्थ्यप्रसङ्गात् । नहि गुणव्यवच्छेदमन्तरेणान्यः कश्चिदेवकारस्यार्थो दर्शयितुं शक्यते । प्रसिद्धो ह्यन्ययोगव्यवच्छेदस्तस्यार्थः । अन्यशब्दाश्चात्र गुणा एव

प्रतीयन्ते नान्यत् किञ्चित्। **"साक्षी चेता केवलो निर्गुणश्च"** (श्वे० ६ । ११ ) इत्यादिकं श्रुत्यन्तरं च निर्गुणं ब्रह्म प्रतिपादयत् प्रतिवेदान्तं तदुपासनेषु गुणोपसंहाराभावं दृढमुपोद्बलयति । गुणोपसंहारे नूनं ब्रह्म सगुणं भवेन्न निर्गुणम् । यत्र क्वचिदुपासनेषु च गुणाः केचनोपदिश्यमाना दृश्यन्ते तत्रापि तान् वर्जयित्वा ब्रह्मोपासितव्यं न तदुपेतमिति सम्यगालोचामहे । तस्मात् प्रतिब्रह्मोपासनं गुणोपसंहारो भवतीत्येतदयुक्तमिति । **नैतद् वक्तव्यम् ।** अविशेषात् । न खलु ब्रह्मगुणाः परमार्थतो ब्रह्मणः सकाशाद् विशिष्यन्ते । केवलं तत्स्वरूपावबोधनार्थं तत्तत्क्रियाविशेषोपाधिना कथञ्चित् ततो विशेष्य श्रुतिस्मृतिषु तत्र तत्रोपदिश्यन्ते। यथा हि प्रकाशतापादिस्वरूपो भवन्नपि सूर्य्यस्तत्तत्क्रियाविशेषोपाधिना प्रकाशतापादिगुणकस्तावद् व्यपदिश्यते प्रकाशयति तापयति हरति बभर्ति दृणाति पुष्णाति विश्वमिदं जगत्सूर्य्य इति, तथा ज्ञानानन्दादिस्वरूपं भवदपि ब्रह्म तत्तत्क्रियाविशेषोपाधिना ज्ञानानन्दादिगुणकमुपदिश्यते । ज्ञानानन्दादिगुणानां च प्रकाशतापादिगुणवत् सूर्य्यतो नास्ति ब्रह्मणः सकाशादणुमात्रेणापि परमार्थतो विशेषः । तत्तद्गुणोपदेशस्तु जनानां सूर्य्यस्वरूपावबोधनार्थं यथा लोके प्रवर्तते तथा मुमुक्षूणां ब्रह्मस्वरूपावबोधनार्थं शास्त्रे प्रवर्तते । मुमुक्षवो हि ब्रह्मस्वरूपदिदृक्षया तदुपासने प्रवर्तमाना गुणगुणिभाववासनावासितान्तःकरणत्वान्न तद्भावविनिर्मुक्तं तत्स्वरूपं सहसाऽधिगन्तुं पारयन्ते । तदधिगमश्चावश्यक इति तत्स्वरूपभूता अपि ते गुणाः कथञ्चित् क्रियाद्वारेण पृथक्कृत्योपदिश्यन्ते । तदुपदेशमूलैव चैषा गुणोपसंहारचर्चा । चर्चामात्रस्य यथोपदेशप्रवृत्तेरौचित्यात् । **"आत्मेत्येवोपासीत"** ( बृ० १ । ४ । ७ ) **"तमेवैकं जानथ आत्मानम्"** ( मुं० २ । २ । ५ ) इत्यादौ चैवकारेणानात्मा व्यवच्छिद्यते नात्मनो ब्रह्मणो गुणा व्यवच्छिद्यन्ते । तेषां स्वरूपाविशेषेण तद्ग्रहणेनैव गृहीतत्वात् । श्रुतिस्मृतिषु च यत्र तद्गुणानसङ्कीर्त्य केवलं ब्रह्म सङ्कीर्त्यते तत्र सर्वत्र गुणसहितस्यैव तस्य सङ्कीर्तनं द्रष्टव्यम् । नहि गुणास्तत्स्वरूपतो विशिष्यन्ते येन तत्सङ्कीर्तनेन न

ते सङ्कीर्येरन् । "**साक्षी चेता केवलो निर्गुणश्च**" (श्वे० ६ । ११ ) इत्यादौ निर्गुणत्वं च भगवतस्तस्य स्थौल्यादिप्राकृतगुणाभावाभिप्रायेणाम्नायते न तत्स्वरूपभूतज्ञानानन्दादिगुणाभावाभिप्रायेण । तस्मात् प्रतिब्रह्मोपासनं गुणोपसंहारो भवतीति युक्तमभिधीयते नायुक्तम् ॥ ६ ॥

**स्यादेतत्** मा नाम भूद् गुणानां ब्रह्माविशेषतया प्रतिब्रह्मोपासनं शब्दादुपसंहारान्यथात्वमुपक्रमभेदाद् भविष्यति । छन्दोगा हि "**सर्वं खल्विदं ब्रह्म**" (छां० ३ । १४ । १ ) इति प्रक्रम्य शाण्डिल्योपासनं पठन्ति, वाजसनेयिनश्च "**सत्यं ब्रह्मेत्युपासीत**" (शत० १० । ६ । ३ । १ ) इति प्रक्रम्य तत् समामनन्ति । यथा चेह प्रक्रमभेदस्तथोपासनान्तरेष्वप्यवगन्तव्यः । प्रक्रमभेदेन चोपासनभेद इति निःशङ्कमभिधातुं शक्यते । अन्यथा तद्भेदानुपपत्तेः । नह्युपासनाभेदे तत्प्रक्रमभेदः कथञ्चिदुपपद्यते । तद्भेदे च गुणोपसंहारान्यथात्वं सुध्रुवम् । सति ह्युपासनाभेदे गुणा इतरेतरस्मिन्नुपसंह्रियन्त इत्यभ्युपगम्यते न तद्भेदे । परोवरीयस्त्वादिवत् । यथा हि "**आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्**" (छां० १ । ९ । १ ) "**स एष परोवरीयानुद्गीथः स एषोऽनन्तः**" (छां० १ । ९ । २ ) इति परोवरीयस्त्वादिगुणविशिष्टोद्गीथब्रह्मोपासनस्य "**अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः**" (छां० १ । ६ । ६ ) इति हिरण्यश्मश्रुत्वादिगुणविशिष्टोद्गीथब्रह्मोपासनतो भेदे नेतरेतरगुणोपसंहार इति । अस्योत्तरं पठति—

**"न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्"** ॥ ७ ॥

अन्यथात्वमविशेषादिति पदद्वयमनुवर्तते । शङ्कोत्तरमेतदिति वाकारेणावद्योत्यते । **प्रकरणभेदात्**=प्रकरणं प्रस्तावः प्रक्रमः, तद्भेदान्=गुणोपसंहारान्यथात्वं न भवति, कुतः? **अविशेषात्**=उपास्यभेदाभावात् । **परोवरीयस्त्वादिवत्**=व्यतिरेक्युदाहरणमिदं, यथा परो-

वरीयस्त्वादिगुणविशिष्टोद्गीथब्रह्मोपासनयोर्विशेषाद् गुणोपसंहारान्यथात्व-मित्यर्थः ।

शाण्डिल्यवैश्वानरप्रभृत्युपासनेषु सत्यपि प्रक्रमभेदे परब्रह्मणः परमेश्वरस्योपास्यस्य भेदाभावान्न तदुपासनभेदो वक्तुं शक्यते । नहि निरूपणप्रकारमात्रभेदेन निरूपणीयवस्तु कदाचिद् भेदमापद्यते । प्रतिपादकप्रतिपादयितव्यभेदनिबन्धनो हि निरूपणप्रकारभेदः । प्रतिपाद्यमुपास्यं परब्रह्म वस्तु च सर्वत्रैकमेवेति न तदुपासनं कर्हिचिद् भिद्यते । अस्ति च गुणभेदोऽप्युपासनभेदहेतुः । न च सोऽत्रोपलभ्यते येन तत्प्रयुक्तोऽपि तदुपासनभेदः शङ्क्येत । तदभावे चेतरेतरगुणोपसंहार एव सिध्यति न तदन्यथात्वम् । परोवरीयस्त्वादिगुणविशिष्टोद्गीथब्रह्मोपासनयोश्च गुणभेदेन भेदाद् गुणोपसंहारान्यथात्वमिष्यते नोपक्रमभेदादुपास्यभेदाद्वा । तस्माद् प्रक्रमभेदे सत्यपि भवति सर्वत्र ब्रह्मोपासनेषु गुणोपसंहार इति युक्ततरमेतत् ॥ ७ ॥

अत्रैव किञ्चित् पुनराशङ्क्य समाधीयते—

**"संज्ञातश्चेत्तदुक्तमस्ति तु तदपि" ॥ ८ ॥**

अन्यथात्वं नेति पदद्वयमनुवर्तते । **संज्ञातः**=अनेकसंज्ञातो गुणोपसंहारान्यथात्वमिति **चेत्**=यद्युच्यते तदा न वाच्यम्, कुतः ? यतस्**तदुक्तं**=तत्रोक्तं समन्वयलक्षणेऽधस्तात्, **अस्ति तु**=विद्यते च **तदपि**=संज्ञैक्यमपि प्रतिवेदान्तमित्यर्थः ।

**अथोच्येत**—अनेकसंज्ञकमुपास्यं तावत् प्रत्युपासनमुपलभ्यते क्वचिद् ब्रह्म क्वचिद् वैश्वानरः क्वचिदक्षरं क्वचिद् दहरः क्वचिज्ज्योतिः क्वचित् प्राणः क्वचिद् भूमा क्वचिदाकाश इति । संज्ञानैक्याच्चोपास्यस्य संज्ञिनोऽनैक्यं, तदनैक्याच्चोपासनानैक्यम्, उपासनानैक्ये च युक्तं गुणोपसंहारान्यथात्वमिति । **नैतद् वक्तव्यम्** । संज्ञानैक्येऽपि संज्ञिनोऽनैक्याभावात् । यदि हि संज्ञानैक्येन संज्ञिनोऽनैक्यं नियम्येत तदाऽवश्यं संज्ञानैक्योपलब्धेरुपास्यस्य संज्ञिनोऽनैक्यमप्यभ्युपगम्येत । न चैवं नियन्तुं

शक्यते । लोके सर्वत्रैकस्याप्यनेकसंज्ञादर्शनात् । नह्येकोऽपि सन् देवदत्तो मनुष्यो ब्राह्मणो वदान्यः श्रोत्रियः पाचको धावकः पिता पुत्रो भ्राता जामातेत्यनेकसंज्ञाभाङ् न दृश्यते । जगज्जन्मादिकारणस्य भगवतः परब्रह्मणः परमेश्वरस्य चैताः वैश्वानरप्रभृतयः सर्वाः संज्ञा इति विस्तरेणावोचाम "**सर्वत्र प्रसिद्धोपदेशात्**" ( वे० १ । २ । १ ) इत्यत्र समन्वयलक्षणोऽधम्मात । संज्ञाविशेषा हि वस्तुनो गुणकर्मस्वरूपसम्बन्धान् पुरस्कृत्य सर्वत्र प्रवर्तन्ते । भगवतस्तस्य च स्वरूपैक्येऽपि गुणकर्मसम्बन्धानामनैक्यात् संज्ञानैक्यं लोकवदुपपद्यते नास्ति कश्चिद्दोषः । प्रतिवेदान्तं केषुचिदुपासनेषु चोपास्यस्य तस्य संज्ञैक्यमपि प्रत्यभिज्ञायते यथा दहरोपासने दहर वैश्वानरोपासने च वैश्वानर इति । सर्वथाऽपि प्रतिवेदान्तमुपास्यैक्यसिद्धौ तदुपासनस्याप्यैक्यमेव सिध्यति नानैक्यम् । **तथाच** गुणोपसंहार एव युक्तो न तदन्यथात्वमिति निष्प्रत्यूहम् ॥ ८ ॥

**स्यादेतत्**—मा नाम संज्ञाभेदतो ब्रह्मोपासनभेदः, स्थानभेदतो भविष्यति । ब्रह्मोपासनं हि क्वचिद् हृदये विधीयते क्वचिद् दिवि क्वचिदादित्ये क्वचिदक्षिणि क्वचित् सर्वत्र । स्थानभेदेन च स्थानिभेदनियमादुपास्यभेदो विस्पष्टः । तद्भेदे चोपासनभेदः । तेन च सुध्रुवं गुणोपसंहारान्यथात्वमिति । अस्योत्तरं पठति—

**"व्याप्तेश्च समञ्जसम्"** ॥ ९ ॥

चस्त्वर्थः शङ्कां व्यावर्त्तयति । **व्याप्तेः**=ब्रह्मणो व्यापकत्वात् **समञ्जसं**=सर्वस्थानेषु तदुपासनविधानमुचितं वर्तत इत्यर्थः ।

विविधाः खलु मुमुक्षवः । तेषां कस्मैचिद् हृदये ब्रह्मोपासनं रोचते कस्मैचिद्दिवि कस्मैचिदादित्ये कस्मैचिदक्षिणि कस्मैचित् सर्वत्र । ते च महाभागाः सततं तद्दर्शनेप्सयाऽशक्यं कर्म कुर्वाणा अतप्यं तपश्च तन्वाना अविकारिणः सन्तो यथाकामं ब्रह्मोपासीरन्निति तदनुकम्पया हृदयादिषु सर्वस्थानेषु तदुपासनं विधीयते । ब्रह्म चास्ति व्यापकम् **"अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च"** ( कठ०

६।८) इत्यादिश्रुतिभ्यः। व्यापकस्य च तस्यैकस्यापि सर्वत्र व्याप्तेर्नियमात् तत्र तत्र तदुपासनविधानं समञ्जसं विद्यते नासमञ्जसम्। नहि यदन्तर्बहिः सर्वतः सर्वमभिव्याप्य नित्यं तेष्ठीयते तस्य हृदये वा दिवि वाऽऽदित्ये वाऽक्षिणि वा सर्वत्र वा कुत्राप्युपासनविधानं न सङ्गच्छते। तत्रेयानेव विशेषो यत्र स्थाने तदुपासनं विहितं तत्रानुष्ठानात् कल्याणाय कल्पते, यत्र च न विहितं तत्रानुष्ठानात् पापाय। स्थानभेदेन च परिच्छिन्नं वस्तु भिद्यते नापरिच्छिन्नं व्यापकम्। नह्याकाशो घटमठादिस्थानभेदेन कदाचिद् भेदमापद्यते। तद्भेदाभावे चोपासनभेदाभावाद् गुणोपसंहार एव सुभ्रुवायते न तदन्यथात्वम्॥ ९॥

**स**र्ववेदान्तेषु समानं ब्रह्मोपासनं, समाने च तस्मिन् गुणोपसंहार इत्यचीकथत्। तदेवोपसंहरन्नाह—

**"सर्वाभेदादन्यत्रेमे"** ॥ १०॥

**सर्वाभेदात्**=सर्वेषु वेदान्तेषु ब्रह्मोपासनाभेदा**दिमे**=वक्ष्यमाणा अमी ब्रह्मगुणा **अन्यत्र**=अन्यत्रोक्ता अन्यत्रोपसंह्रियन्त इत्यर्थः।

गुणा हि कर्मवदुपासनं तावदुपकुर्वन्ति। उपकारकाणां तेषां चावश्यकस्तत्र सम्बन्धः। अन्यथोपकारानिष्पत्तेः। नह्युपकारकाणामुपकार्यासम्बन्धे तदुपकारः कथञ्चिन्निष्पादमर्हति। तस्मात् सर्वेषु वेदान्तेषु यत्र ब्रह्मोपासने न ते निर्दिश्यन्ते तत्रान्यत्रोक्ता इमे तदुपकारार्थमुपसंह्रियन्ते॥ १०॥

**ननु** के ते भगवतो ब्रह्मणो गुणा वर्तन्ते येऽन्यत्रोक्ता अन्यत्रोपसंह्रियन्ते? तत्राह—

**"आनन्दादयः प्रधानस्य"** ॥ ११॥

सर्वाभेदादित्यनुवर्तते। प्रधानस्य=स्वामिनः सर्वस्य चिदचिदात्मनो जगतोऽधिष्ठानस्य भगवतः परब्रह्मणः परमेश्वरस्या**नन्दादयः**=ज्ञानादय इति वक्तव्ये जिज्ञास्यत्वोपास्यत्वोपपत्त्यर्थमुक्तमानन्दादयः, आनन्दप्रभृतयो ये गुणा वर्तन्ते ते सर्वाभेदादन्यत्रोक्ता अन्यत्रोपसंह्रियन्त इत्यर्थः।

सर्वेषु वेदवेदान्तेषु यत्र यत्र ब्रह्मोपास्यं तावदुपदिश्यते तत्र सर्वत्रानन्दादयस्तद्गुणा उपसंह्रियन्ते । तदुपसंहारेण नूनं तदुपासनं यथोपास्यं सर्वाङ्गसुन्दरं सम्पद्यते । सर्वाङ्गसौन्दर्य्यसम्पदेव चोपासनस्य यथासमयं यथाविषयं यथाशास्त्रं त्वरया फलोपजनने कारणम् । आनन्दप्रभृतयस्तद्गुणाश्चानन्दवल्ल्यां तैत्तिरीयके समाम्नायन्ते । ते च "**आनन्दमयोऽभ्यासात्**" ( वे० १ । १ । १२ ) इत्यत्र सविस्तरं प्रत्यपादिषत ॥११॥

नन्वानन्दादयश्चेद् ब्रह्मगुणास्तदुपासनेषु सर्वत्रोपसंह्रियन्ते तदा प्रियशिरस्त्वादयोऽपि तत्रोपसंह्रियेरन् । यत्कारणं तेऽप्यानन्दवल्ल्यामानन्दमयमात्मानमुपक्रम्य तद्गुणत्वेनाम्नायन्ते "**तस्य प्रियमेव शिरो मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्ष आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठा**" (तै० २ । ५ ) इति । न चाविशेषेणाम्नातानां तेषां केषाञ्चिदुपसंहारोऽनुपसंहारश्च केषाञ्चिदुपपद्यते । अर्द्धजरतीयानुहरणप्रसङ्गादिति । अस्योत्तरं पठति—

"**प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे**" ॥ १२ ॥

**प्रियशिरस्त्वाद्यप्राप्तिः**=शिरःपक्षादित्वेन विकल्पितानां प्रियमोदप्रभृतीनां ब्रह्मोपासनेषु प्राप्तिरुपसंहृतिर्न भवति, कुतः ? **हि**=यत **उपचयापचयौ**=प्रियान्मोदे मोदात् प्रमोदे य उपचयः प्रचयः, प्रमोदान्मोदे मोदात् प्रिये च योऽपचयोऽप्रचयः, तावुभौ **भेदे**=नानात्मकत्वे सम्भवतो, ब्रह्म च न नानात्मकमित्यर्थः ।

ब्रह्मणः शिरःपक्षादिरूपेण विकल्पितास्तावत् प्रियमोदप्रभृतयो गुणा भोक्त्रन्तरापेक्षत्वात् परस्परमुपचयापचयवन्तो विद्यन्ते । अस्ति प्रियमपेक्ष्य मोदप्रमोदयोरुपचयः, प्रमोदमपेक्ष्य च प्रियमोदयोरपचयः । न चोपचयापचयवतां तेषामानन्दादिवद् ब्रह्मगुणत्वमभ्युपेतुं शक्यते । गुणोपचयापचयाभ्यां गुणिन्युपचयापचययोरप्यावश्यम्भावात् । यत्रेदमाचक्षते न्यायविदः "**उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्**" इति । न चैतौ कालत्रयेऽपि ब्रह्मणि सम्भवतः । नानात्मकवस्तुन्येव

तत्सम्भवात् । ब्रह्म चैकात्मकं विद्यते न नानात्मकम् । **"एकात्मप्रत्ययसारम्"** (मां० ७) **"एकधैवानुद्रष्टव्यम्"** (बृ० ४ । ४ । २०) **"अनन्तरमबाह्यम्"** (बृ० ३ । ८ । ८) इत्यादिश्रुतिसहस्रेभ्यः । यदा खल्वेष मुमुक्षुर्दीर्घकालनैरन्तर्य्यसत्कारासेवितादभ्यासाद् ब्रह्मनिष्ठामापद्यते तदा तन्माहात्म्याद् यस्तेनानन्दमयस्य भगवतस्तस्य स्वरूपानन्दो निजेनात्मना चिता यथाकालमुपभुज्यते स एव निष्ठातारतम्येनोपभोगतारतम्यात् प्रियमोदादिभिः शब्दैः कथञ्चिद्भेदं परिकल्प्याभिलप्यते । रूपकसारूप्यसम्पत्त्यै चान्यस्य कस्यचित् पारमार्थिकस्य शिरःपक्षादेरभावात् प्रियमोदप्रभृतय एव भगवतस्तस्य शिरःपक्षादिरूपेण विकल्प्यन्ते । न चैवमेते विकल्प्यमानाः पदार्थान्तरेभ्यो ब्रह्म व्यावर्त्य कदाचिदवबोधयन्ति येनानन्दादिवत् तद्गुणा अभ्युपगम्येरन् । गुणा एव च प्रतिब्रह्मोपासनं सर्वत्रोपसंह्रियन्ते न गुणकल्पाः । तस्मादाम्नानाविशेषेऽपि प्रियशिरस्त्वादीनां गुणकल्पतया नास्ति कुत्रापि ब्रह्मोपासनेषु प्राप्तिः॥१२॥

नन्वेवमानन्दादयोऽपि ब्रह्मोपासनेषु सर्वत्र नोपसंह्रियेरन् । गुणत्वस्योपसंहाराप्रयोजकत्वात् । नहि गुणा इत्येतावन्मात्रेण ते तत्रोपसंहारमर्हन्ति । गुणत्वाविशेषेऽपि **"एतं संयद्वाम इत्याचक्षते"** (छां० ४ । १५ । २) इत्यादिना विहितेषु संयद्वामत्वादिषु गुणेषु तददर्शनादिति । अस्योत्तरमाह—

**"इतरे त्वर्थसामान्यात्"** ॥ १३ ॥

तुशब्देनानन्दादीनां ब्रह्मोपासनेषु सर्वत्रानुपसंहाराशङ्का व्यावर्त्यते । **इतरे**=प्रियशिरस्त्वादिभ्योऽतिरिक्ता आनन्दादयोऽ**र्थसामान्यात्**=परब्रह्म परमेश्वरोऽत्रोपासनविषयत्वादर्थः, तत्समानत्वात् तत्प्रतीत्यनुबन्धित्वात् तत्प्रतीत्या प्रतीयमानत्वात् तदुपासनेषु सर्वत्रोपसंह्रियन्त इत्यर्थः ।

आनन्दादयः खलु ब्रह्मगुणा ब्रह्मप्रतीत्यनुबन्धितया यत्र यत्र ब्रह्मोपास्यं तत्र सर्वत्रावर्जनीयत्वादुपसंह्रियन्ते । संयद्वामत्वादयस्तु विधेया न ब्रह्मप्रतीत्यनुबन्धिन इति वैषम्यान्नान्यत्र कुत्राप्युपसंहारं विन्दन्ते ।

द्वेधा हि ब्रह्मगुणा आश्रीयन्ते तत्प्रतीत्यनुबन्धिनोऽतत्प्रतीत्यनुबन्धिनश्च। तेषामन्त्या अविधेयत्वात् कुत्रापि न प्रसज्यन्ते। विधेयाश्च यत्र विधीयन्ते तत्रैवान्वीयन्ते नान्यत्र यथा संयद्वामत्वप्रभृतयः। विधितन्त्रत्वात्। आनन्दादयश्च तत्प्रतीत्यनुबन्धिन इति यत्र ब्रह्म प्रतीयते तत्रावर्जनीयप्रतीतित्वादुपसंहारं लालभ्यन्ते। ब्रह्मस्वरूपप्रतिपत्त्यर्थो हि तेऽभ्युपगम्यन्ते। तस्माद् यत्र यत्र ब्रह्म प्रतिपद्यते तत्र सर्वत्र युज्यते तेषामुपसंहारः॥१३॥

आनन्दादीनां ब्रह्मोपासनेषु सर्वत्रोपसंहारो निरधारि। सम्प्रति प्रकृत्यन्तनिखिलपदार्थपरत्वस्योपसंहारो निर्धारयितव्यः। आनन्दादिसहभूतत्वेनोपस्थितत्वात्। तदर्थमिदमधिकरणान्तरमारचयन्नाह—

**"आध्यानाय प्रयोजनाभावात्" ॥ १४ ॥**

**आध्यानाय**=आनन्दादिवद् ब्रह्मोपासनेषु सर्वत्रानुचिन्तनाय परब्रह्मणः परमेश्वरस्येन्द्रियादिप्रकृत्यन्तनिखिलपदार्थपरत्वं काठके समाम्नातं वेदितव्यं नार्थादीनां प्रत्येकं परत्वम्, कुतः? **प्रयोजनाभावात्**=फलाभावादित्यर्थः।

काठके हि समाम्नायते **"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः। १०। महतः परमव्यक्तमव्यक्तात् पुरुषः परः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः"** (कठ० ३। १०–११) इति। महानात्मा=महत्तत्वम्, अव्यक्तं=प्रकृतिः, पुरुषः=परब्रह्म परमेश्वरः। तत्र संशयः—किमिदमर्थादीनां पुरुषपर्य्यन्तानां समाम्नातं प्रत्येकं परत्वमानन्दादिवद् ब्रह्मोपासनेषु सर्वत्रोपसंह्रियते किंवा प्रतिपिपादयिषितत्वात् पुरुषमात्रपरत्वमिति। प्रत्येकमिति पूर्वःपक्षः, पुरुषमात्रपरत्वमिति सिद्धान्तः। किं तावत् प्राप्तम्? प्रत्येकं परत्वमिति वदामः। अविशेषात्। यथा हीन्द्रियादिभ्योऽव्यक्तपर्य्यन्तेभ्यः पुरुषस्य परब्रह्मणः परमेश्वरस्य परत्वमिह समाम्नायते तथा प्रत्येकमर्थादीनामव्यक्तपर्य्यन्तानामपि समाम्नायते। न चाविशेषे समाम्नाने तेषामेकस्य परत्वं

ब्रह्मोपासनेषु सर्वत्रोपसंह्रियते नापरेषामित्यभ्युपगमो युज्यते । विशेषकारणानुपलब्धेः । **ननु** प्रतिपिपादयिषितत्वमेवात्र विशेषकारणमुपलभामहे । यत् प्रतिपिपादयिषितं तस्यैवोपसंहारौचित्यात् । प्रतिपिपादयिषितं चात्र पुरुषस्य परब्रह्मणः परमेश्वरस्येन्द्रियादिभ्योऽव्यक्तपर्य्यन्तेभ्यः परत्वं निश्चिनुमहे नार्थादीनां प्रत्येकम् । वाक्यभेदप्रसङ्गादिति । **नैष दोषः** । वाक्यबहुत्वोपपत्तेः । सम्भवत्येकवाक्यत्वे खलु वाक्यभेदप्रसङ्गो दोषाय कल्पते । यत्र तु स्वत एव वाक्यभेदो वर्तते तत्र नासौ कर्हिचिद्दोषायते । अत्र चार्थादीनां बहूनां परत्वं प्रतिपादयितुं बहूनीमानि वाक्यानि सुखेनोपपद्यन्ते । न च तदुपपत्तौ प्रतिपिपादयिषितत्वलक्षणो विशेषोऽन्यतरोपसंहारे कारणं सम्भाव्यते । तस्मादर्थादीनां प्रत्येकं परत्वमानन्दादिवद् ब्रह्मोपासनेषु सर्वत्रोपसंह्रियते न पुरुषमात्रपरत्वमिति । एवं प्राप्तेऽभिधीयते—**प्रयोजनाभावात्** । न खलु प्रत्येकमर्थादीनां परत्वस्य ब्रह्मोपासनेषु प्रयोजनं किञ्चिद् विद्यते । नहि यथाऽऽनन्दादयो गुणाश्चिन्त्यमानास्तत्रोपकारं कञ्चिदुपजनयन्ति तथाऽर्थादीनां प्रत्येकं परत्वमपि चिन्त्यमानं तत्रोपकारं कञ्चिदुपजनयितुमर्हति । नह्यन्यदुपास्यते गुणाश्चान्यस्य चिन्त्यन्त इति कस्मैचित् फलाय क्षमते । ब्रह्मोपासनेषु हि ब्रह्मगुणाः फलाय समर्थायन्ते नार्थादिगुणाः । अत्र च गुणोपसंहारचर्चा ब्रह्मोपासनेषु प्रवर्तते नार्थादीनामुपासनेष्विति कथं तद्गुणः परत्वं तत्र विनैव प्रयोजनमानन्दादिवदुपसंह्रियेत । न च प्रतिपिपादयिषितत्वमपि प्रत्येकमर्थादीनां परत्वे निरीक्ष्यते । तदेव हि प्रतिपिपादयिष्यते यत्प्रतिपादने खलु प्रयोजनं किञ्चन विद्यते । न चार्थादीनां प्रत्येकं परत्वस्य प्रतिपादनेऽस्ति किञ्चित् प्रयोजनम् । नहि प्रत्येकं परत्वेन प्रतिपन्नास्तावदर्थादयः पुरुषस्य प्रतिपत्तुः प्रयोजनं किञ्चित् साधयितुं प्रकल्पन्ते । ब्रह्मपरत्वप्रतिपादने च विद्यते निःश्रेयसावाप्तिः प्रयोजनम् । यदा ह्येष मुमुक्षुरिन्द्रियादिभ्यः प्रकृतितत्कार्य्येभ्यः परत्वं परब्रह्मणः परमेश्वरस्य निश्चिनुते तदा तत्साक्षात्काराय यथाशास्त्रं प्रयतते । प्रयतमानश्च द्रागित्येव भगवन्तं तं साक्षादीक्षते । साक्षादीक्षणाच्च संसाराध्वनः

पारभूतं सर्वोत्कृष्टं निःश्रेयसं पदमुपसम्पद्यते । यत्रेदं श्रुतं भवति **"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्"** (कठ० ३ । ९) इति । यत्र चास्ति प्रयोजनं तदेव प्रतिपिपादयिषितमिति प्रतिपद्यन्ते शास्त्रविदो विवेकिनः । स्वानुभवोऽपि चैतत् प्रव्यक्तं निश्चाययति । नहि प्रयोजनमनुद्दिश्य मन्दोऽपि क्वचित् प्रवर्तते, काठकी श्रुतिरिति तु किं वक्तव्यम् । न च यन्निष्प्रयोजनमप्रतिपिपादयिषितं च तदर्थं वाक्यभेदोऽप्यास्थातुं शक्यते । गौरवात् । सम्भवत्येकवाक्यत्वे च वाक्यभेदकल्पनस्यान्याय्यत्वात् । स्वतश्च नास्ति वाक्यबहुत्वमिति विस्पष्टम् । **अथोच्येत**—पुरुषपरत्वप्रतिपादनार्थत्वादर्थादीनां प्रत्येकं परत्वमपि सप्रयोजनं विद्यते न निष्प्रयोजनमिति । **नैतद् वक्तव्यम्** । तत्र तदुपयोगस्य भावेऽप्युपासनेऽभावादुपसंहारासिद्धेः । यद्ध्युपासने कथञ्चिदुपयुज्यते तदेव तत्रोपसंह्रियते नान्यत्रोपयुक्तमपि तत्रानुपयुक्तम् । उपासने च पुरुषपरत्वमुपयुज्यते नार्थादीनां प्रत्येकं परत्वमिति न तदुपसंहारस्तत्र सेद्धुमर्हति । **तस्मात्** काठके समाम्नातं पुरुषस्य परब्रह्मणः परमेश्वरस्येन्द्रियादिप्रकृत्यन्तेभ्यः पदार्थेभ्यः परत्वमेव तदुपासनेषु सर्वत्रानन्दादिवदुपसंहारं भजते नार्थादीनां प्रत्येकं परत्वम् ॥ १४ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"आत्मशब्दाच्च"** ॥ १५ ॥

पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । **आत्मशब्दात्**=आत्मनः पुरुषस्य गूढत्वप्रतिपादकाद् वाक्यशेषाद् गम्यते प्रतिपिपादयिषिततया तत्परत्वमेव ब्रह्मोपासनेषु सर्वत्रोपसंह्रियते नार्थादिपरत्वमित्यर्थः ।

अस्ति तावद् वाक्यशेषः **"एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते"** (कठ० ३ । १२) इत्येवञ्जातीयकः । तत्र प्रकृतं पुरुषमात्मशब्देन परामृश्य तस्य सर्वभूतेषु गूढत्वं प्रतिपाद्यते । नहि पूर्वत्र तत्परत्वस्य प्रतिपिपादयिषितत्वाभावे तन्मात्रगूढत्वमुत्तरत्र प्रतिपादयितुं शक्यते । पुरुषपरत्ववदिन्द्रियादिपरत्वस्यापि प्रतिपिपादयिषितत्वे

तु नूनं तद्विषयमपि तत्र किञ्चित् पुरुषवत् प्रतिपादयेत् । न च प्रतिपादयति । तस्मात् पुरुषपरत्वमेव पूर्वत्र प्रतिपिपादयिषितं वर्तते नार्थादिपरत्वमिति स्फुटमवगम्यते । **तथाच** युक्तस्तस्यैव ब्रह्मोपासनेषु सर्वत्रोपसंहारः॥१५॥

इदानीमकामत्वादिधर्माणामुपसंहारं वक्तुमुपक्रमते—

**"आत्मगृहीतिरितरवदुत्तरात्"** ॥ १६ ॥

**आत्मगृहीतिः**=आत्मनः परमात्मनो गृहीतिर्ग्रहणमाथर्वणे मन्त्रे द्रष्टव्यम्, कुतः? **उत्तरात्**=उत्तरमन्त्रात्, **इतरवत्**=इतरत्रात्मशब्देन परमात्मग्रहणवदित्यर्थः ।

अथर्वाङ्गिरसे हि पठ्यते **"अकामो धीरो अमृतः स्वयम्भू रसेन तृप्तो न कुतश्चनोनः । तमेव विद्वान् न बिभाय मृत्योरात्मानं धीरमजरं युवानम्"** (अथ० १० । ४ । ८ । ४४ ) इति । तत्र संशयः—किमत्रात्मशब्देनाकामत्वादिगुणकः परब्रह्म परमेश्वरो गृह्यते किंवा जीवात्मा । जीवात्मेति पूर्वः पक्षः, परब्रह्म परमेश्वर इति सिद्धान्तः । पूर्वपक्षेऽकामत्वादिगुणानामनुपसंहारः सिद्धान्ते चोपसंहारः फलम् । पूर्वपक्षमुत्तरसूत्रे स्वयमुपन्यस्य निराकरिष्यति सिद्धान्तोऽत्राभिधत्ते । यथा हि मन्त्रात्मकाद्वेदादितरत्र **"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः"** (तै० २ । १) **"आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत्"** (ऐ० १ । १ ) **"स आत्मा तत्त्वमसि"** (छां० ६ । ८ । ७ ) इत्याद्यासूपनिषच्छ्रुतिष्वात्मशब्देन जगज्जन्मादिकारणं परब्रह्म परमेश्वरस्तावत् परिगृह्यते तथाऽस्मिन्नाथर्वणे मन्त्रेऽप्यात्मशब्देन परब्रह्म परमेश्वरः परिगृह्यते । अविशेषात् । नह्युभयत्र कञ्चिद्विशेषं पश्यामः । न च तद्दर्शनाभावे क्वचिदेकत्र परमात्मा जीवात्मा चापरत्र परिग्रहीतुं शक्यते । मन्त्रादस्मादुत्तरस्मिन् मन्त्रे च प्रकृतोऽयमात्मा साक्षादिन्द्रशब्देन परामृश्यते **"अघायतामपि नह्या मुखानि सपत्नेषु वज्रमर्पयैतम् । इन्द्रेण दत्ता प्रथमा शतौदना भ्रातृव्यघ्नी यजमानस्य**

**गातुः"** ( अथ० १० । ४ । ९ । १ ) इति । शतौदना=गौः । इन्द्रशब्दश्चेह परमेश्वरवचनो विस्पष्टः । शतौदनाप्रभृतिसर्वविधानप्रदातृत्वस्य तत्रैवोपपत्तेः । दर्शयति चेन्द्रशब्दव्युत्पत्त्या यास्कोऽपि पारमेश्वरमेतत् कर्म **"इन्द्र इरां दृणातीति वा, इरां ददातीति वा, इरां दधातीति वा"** ( नि० १० । १ । ८ ) इत्यादिना । सर्वविधमन्नमिरा । प्रयुज्यते चेन्द्रशब्दोऽन्यत्रापि शतशः श्रुतिस्मृतिषु परमात्मवचनः **"य एकश्चर्षणीनां वसूनामिरज्यति । इन्द्रः पञ्च क्षितीनाम्"** ( ऋ० १ । १ । १४ । ९ ) **"इन्द्रो यातोऽवसितस्य राजा शमस्य च शृङ्गिणो वज्रबाहुः । सेदु राजा क्षयति चर्षणीनामरान्न नेमिः परि ता बभूव"** ( ऋ० १ । २ । ३८ । १५ ) **"एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् । इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम्"** ( मनु० १२ । १२३ ) इति । न च तेन परामृष्टस्यात्मनो जीवात्मपरत्वं वक्तुं शक्यते । परमात्मपरत्वं च निर्विवादम् । इन्द्रेणात्मनेति सामानाधिकरण्योपपत्तेरन्यथा चानुपपत्तेः । तस्मादत्रात्मशब्देन परब्रह्म परमेश्वरो गृह्यते न जीवात्मेति युक्तम् ॥ १६ ॥

अत्र पूर्वपक्षमुपन्यस्य निराकुरुते—

**"अन्वयादिति चेत् स्यादवधारणात्" ॥ १७ ॥**

आत्मगृहीतिरित्यनुवर्तते । नेति पूर्वपक्षोपन्यासबलेन लभ्यते । द्विरावृत्तिश्चोभयोः । **अन्वयात्**=पदपदार्थसम्बन्धोऽत्रान्वयः, जीवात्मन्यन्वयादात्मशब्देन न परमात्मगृहीतिरिति **चेत्**=यद्युच्यते तदा न वाच्यम्, कुतः? यतो**ऽवधारणात्**="तमेव विद्वान्" इति तद्विषया जन्ममरणभयाभावावधारणात् **स्यात्**=भविष्यति परमात्मगृहीतिरित्यर्थः ।

**अथोच्येत**—न खलु मन्त्रवर्णे पठितेनात्मशब्देन परमात्मगृहीतिर्युज्यते । तस्य जीवात्मन्यन्वयात् । आत्मशब्दोऽयं जीवात्मनि तावदन्वीयते न परमात्मनि । नहि तस्य तत्रान्वये युवानमिति विशेषणं

कथञ्चित् सङ्गच्छते । यौवनावस्थासम्बन्धाद्यात्मा युवेति व्यपदिश्यते । यौवनावस्थासम्बन्धश्च जीवात्मनो घटते न परमात्मनः । तस्याशरीरत्वेनावस्थासम्बन्धासम्भवात् । आत्मशब्दवदिन्द्रशब्दोऽपि च जीवात्मपरमात्मसाधारणो विद्यते । स हि यथा परमात्मानमभिधत्ते तथा जीवात्मानमप्याचष्टे । दर्शयति चैतदिन्द्रियशब्दं व्युत्पादयन् भगवान् पाणिनिः **"इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा"** (अष्टा० ५ । २ । ९३) इति । न चोभयाभिधायकस्यान्यतरनिर्धारकत्वमुपपद्यते । अकामत्वादयो गुणाश्चावस्थाभेदेन जीवात्मनोऽपि न विरुध्यन्ते । स कदाचित् कामयमानो यथोपलभ्यते तथाऽकामयमानोऽपि कदाचिदनुभूयते । यत्रेदं श्रुतं भवति **"तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य । प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् । इति नु कामयमानः । अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति"** (बृ० ४ । ४ । ६) इति । तस्मादत्रात्मशब्देन परमात्मगृहीतिरित्ययुक्तमिति । **नैतद् वक्तव्यम्** । अवधारणात् । अत्र किलात्मनो विद्यया साक्षात्कारेण जन्ममरणसंसारभयाभावोऽवधार्य्यते **"तमेव विद्वान् न बिभाय मृत्योः"** इति । तच्चात्मशब्देन परमात्मपरिग्रहे घटते न जीवात्मपरिग्रहे । मन्त्रान्तरे परमात्मविषयैव तादृगवधारणोपलब्धेः **"तमेव विदित्वाऽतिमृत्युमेति"** (यजु० ३१ । १८) इति । न च मन्त्रेषु विरुद्धं किञ्चिद् गीयते । सर्वज्ञवचनत्वात् । अविरुद्धगाने च तत्रेवात्रापि युक्तस्तेन परमात्मपरिग्रह इति सम्यगीक्षामहे । युवानमिति विशेषणं च तस्य निरतिशयबलमभिप्रेत्योपादीयते नावस्थाविशेषसम्बन्धम् । अन्यथाऽजरमिति विशेषणानुपपत्तेः । नह्येकावस्थासम्बन्धेऽवस्थान्तरसम्बन्धो वारयितुं शक्यते । नच तत्सम्बन्धेऽजरमिति विशेषणान्तरोपादानं कर्हिचित् सङ्गच्छते । मन्त्रान्तरे च **"युवा"** इति विशेषणमुपादाय **"अमितौजाः"** इति पुनर्विशेषणोपादानाद् नूनमिह **"युवानम्"**

इति विशेषणं निरतिशयबलाभिप्रायेणोपादीयते नावस्थाविशेषसम्बन्धाभिप्रायेणेति व्यक्तमधिगम्यते । भवति च मन्त्रान्तरम् "**पुरां भिन्दुर्युवा कविरमितौजा अजायत । इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः**" (ऋ० १।१।२१।४) इति । शरीरसम्बन्धकृतो ह्यवस्थाविशेषसम्बन्ध इष्यते । न च भगवतो ब्रह्मणः कालत्रयेऽपि शरीरसम्बन्धो विद्यते येनावस्थाविशेषसम्बन्धोऽपि विद्येत । व्यासेधन्ति च भगवतस्तस्य शरीरसम्बन्धवदवस्थाविशेषसम्बन्धमपि श्रुतयः "**नैनमहोरात्रे तरतो न जरा न मृत्युः**" (छां० ८।४।१) "**स वा एष महानज आत्माऽजरोऽमरः**" (बृ० ४।५।२५) "**वेदाहमेतमजरं पुराणम्**" (श्वे० ३।२१) इत्याद्याः । जीवात्मनश्च यथा शरीरसम्बन्धोऽध्यक्ष्यते तथाऽवस्थाविशेषसम्बन्धोऽपि प्रत्यक्ष्यते । न च प्रत्यक्षे तस्मिन्नजरमिति विशेषणं कथञ्चिदुपपद्यते । तस्य स्वरूपप्रयुक्तत्वे च स्याद् युवानमिति विशेषणं सुतरामनुपपन्नम् । "**न कुतश्चनोनः**" इति चापरं विशेषणम् । तदप्यात्मशब्देन परमात्मपरिगृहीतिं निःसंशयमवद्योतयति । जीवात्मपरिग्रहेऽनुपपत्तेः । नहि जीवात्मा कुतश्चिदूनो न वर्तते । परमात्मा हि तथा वर्वर्ति न जीवात्मा । यत्रेदं श्रूयते "**सत्यमद्धा नकिरन्यस्त्वावान्**" (ऋ० १।४।१४।१३) इति । "**न त्वदन्यः कवितरो न मेधया धीतरो वरुण! सुधावन्!**" (अथ० ५।३।११।४) इति च । न चैवंविधे विशेषणे विद्यमाने जीवात्मपरतया व्युत्पाद्यमानोऽपि कश्चिदिन्द्रशब्दो जीवात्मानमिह परिग्राहयितुं शक्नोति । तस्य परमात्मनि बलान्नयनोपपत्तेः । अकामत्वादयो धर्माश्च परमात्मन्याञ्जस्येनान्वीयन्ते न जीवात्मनि तेषामन्वयार्थमवस्थाभेदकल्पनं न्याय्यम् । तस्मादात्मशब्देन परमात्मग्रहीतिरिह युज्यतेतरां नास्ति कश्चिद्दोषः । तथा चोपपन्नस्तद्धर्माणामकामत्वादीनां तदुपासनेषु सर्वत्रानन्दादिवदुपसंहारः ॥ १७ ॥

इदानीमपूर्वत्वगुणोपसंहारं विवक्षुराह—

"**कार्याख्यानादपूर्वम्**" ॥ १८ ॥

**कार्य्याख्यानात्**=सर्वस्य जगतो ब्रह्मकार्य्यत्वाख्यानादपूर्वं=पूर्वं कारणं तद्रहितं ब्रह्म प्रतिपत्तव्यमित्यर्थः ।

सर्वमिदं जगद् ब्रह्मणः कार्य्यं तावदाख्यायते "**एष योनिः सर्वस्य**" (मां० ५) "**अक्षरात् सम्भवतीह विश्वम्**" (मुं० १ । १ । ७) "**सर्वं खल्विदं ब्रह्म तज्जलान्**" (छां० ३ । १४ । १) "**स विश्वकृत्**" (श्वे० ६ । १५) इति । ब्रह्म च नैवं कस्यचित् कार्य्यं व्याख्यायते । तदपि चेत् कस्यचित् कार्य्यं भवेज्जगदिव व्याख्यायेत । नहि कार्य्याख्याने प्रवृत्तं शास्त्रमेकं कार्य्यमाख्याति नापरमिति सम्भवति । प्रकृतिर्जीवात्मानौ च तदधिष्ठेयत्वान्न तत्कारणं भवितुमर्हतः । अन्यत् सर्वं च तत्कार्य्यत्वान्न तत्कारणमुपपद्यते । परं च तस्मात् प्रतिषिद्धम् "**नकिरिन्द्र ! त्वदुत्तरः**" (ऋ० ३ । ६ । १९ । १) "**पुरुषान्न परं किञ्चित्**" (कठ० ३ । ११) "**यस्मात् परं नापरमस्ति किञ्चित्**" (श्वे० ३ । १०) इत्याद्याभिः श्रुतिभिः । तस्मादपूर्वं ब्रह्म । तथाचाकामत्वादिवदपूर्वत्वगुणोऽपि तदुपासनेषु सर्वत्रोपसंह्रियत इति सिद्धम् ॥ १८ ॥

सम्प्रति तत्समकक्षगुणान्तरोपसंहारं दर्शयति—

"**समान एवं चाभेदात्**" ॥ १९ ॥

पूर्वत्रादिग्रहणेनैव सिद्धेऽनिष्टाशङ्काव्युदासाय पृथग् योगो विधीयते । गुणान्तरोपसंहारोऽयमिति चकारेणोच्यते । **एवम्**=अपूर्वत्ववत् **समानः**=तत्समकक्षोऽनपरत्वादिर्ब्रह्मोपासनेषु सर्वत्रोपसंह्रियते, कुतः ? **अभेदात्**=उपास्यस्य ब्रह्मणो भेदाभावादित्यर्थः ।

यथा हि ब्रह्मणोऽपूर्वत्वगुणः खलु तदुपासनेषु सर्वत्रोपसंह्रियते तथा तत्समकक्षोऽनपरत्वादिगुणोऽप्युपसंह्रियते । तत्र सर्वत्रोपास्यस्य गुणिनो भगवतस्तस्य समानत्वात् । नह्युपास्ये समाने भवति कश्चिदेकस्तद्गुणस्तदुपासनेषु सर्वत्रोपसंहारं लभते नापर इति युज्यते । अपूर्वत्वादिगुणजातं च समानं भगवतस्तस्य श्रुत्या साक्षात् प्रदर्श्यते "**तदेतद् ब्रह्मा-**

**पूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः**" ( बृ० २ । ५ । १९ ) इति । न विद्यतेऽ**परं** कार्य्यं मृदः कुम्भादिवद् यस्य तदनपरं, न विद्यतेऽ**न्तरे**ऽन्तराले विभक्तमिव वस्तु किञ्चिद् यस्य तदनन्तरं, न विद्यते **बाह्यं** बहिर्भूतं वस्तु किञ्चिद् यस्मात् तदबाह्यं, सर्वमनुभवति साक्षादशेषविशेषतः पश्यतीति **सर्वानुभूः**=सर्वज्ञ इति श्रुतिपदार्थः । तस्माद् यथाऽपूर्वत्वगुणस्तदुपासनेषु सर्वत्रोपसंह्रियते तथा तत्समानोऽनपरत्वादिसर्वानुभूत्वान्तो गुणसमुदायोऽप्युपसंह्रियत इति निश्चेतव्यम् ॥ १९ ॥

अत्रानिष्टमाशङ्कते—

"**सम्बन्धादेवमन्यत्रापि**" ॥ २० ॥

**एवं**=यथा समानश्रुतिपठिता अनपरत्वादयो गुणा उपसंह्रियन्त एव**मन्यत्रापि**=श्रुतितोऽन्यत्र पठिता अपि देशविशेषनिवासित्वादयो गुणा उपसंह्रियेरन्, कुतः? **सम्बन्धात्**=गुणगणिभावसम्बन्धाविशेषादित्यर्थः ।

यथा हि समानश्रुतिपठिताः खलु केचनानपरत्वादयो गुणाः प्रतिब्रह्मोपासनमपूर्वत्वगुणवदुपसंह्रियन्ते तथा वेदवेदान्तश्रुतितोऽन्यत्र साकारेश्वरवादिनामागमेषु पठिताः केचन देशविशेषनिवासित्वप्रभृतयो गुणा अप्युपसंह्रियेरन् । अस्ति तेषामिवामीषामप्युपास्येन भगवता ब्रह्मणा गुणगणिभावसम्बन्धोऽविशिष्टः । उभयत्रापि तद्गुणत्वेनैव पठ्यमानत्वात् । नह्यत्र पठितास्तद्गुणाः सम्पद्यन्ते नान्यत्र पठिता इति वचनं युज्यते विना पक्षपातात् । पक्षपातश्च बाह्यानां धर्मो न वैदिकानाम् । तस्माद् युक्तः समानश्रुतिपठितानामिवान्यत्र पठितानामपि देशविशेषनिवासित्वप्रभृतीनां ब्रह्मोपासनेषु सर्वत्रोपसंहारः ॥ २० ॥

अनिष्टाशङ्कामिमां व्युदस्यति—

"**न वा विशेषात्**" ॥ २१ ॥

अनिष्टाशङ्काव्युदासकं सूत्रमेतदिति वाग्रहणेनावबोध्यते । **न**=यदुक्तं तन्न युज्यते, कुतः? **विशेषात्**=वैशिष्ट्यादित्यर्थः ।

श्रुतिर्हि ब्रह्म तद्गुणांश्चोभयं याथातथ्यतः प्रतिपादयितुं समर्थयते न शब्दान्तरं किञ्चित् । तस्याल्पज्ञबुद्धिपूर्वकत्वेन तत्प्रतिपादनसामर्थ्याभावात् । नहि वाङ्मनसातीते भगवति तस्मिन्नल्पज्ञबुद्धिपूर्वकः शब्दः प्रवेशायापि कल्पते तदुभयस्य याथातथ्यतः प्रतिपादनं तु बहुदूरम् । न च यस्यैवंविधं क्षुद्रतमं सामर्थ्यं तत्प्रतिपादिताः केचनापि गुणाः प्रतिब्रह्मोपासनं कर्हिचिदुपसंहारमर्हन्ति । तदुपसंहारे नियमेन प्रामाणिकत्वस्यापेक्षणात् । प्रतिब्रह्मोपासनं गुणानामुपसंहारे हि नियमेन प्रामाणिकत्वमपेक्ष्यते न सम्बन्धमात्रम् । अतिप्रसङ्गात् । देशविशेषनिवासित्वादिकं च भगवतो ब्रह्मणोऽप्रामाणिकत्वात् प्रत्यषेधिष्म विस्तरेणास्मादिति कृतमिह पुनस्तदुपसंहारकथया कुकथया । श्रुतिश्च साकारवादिशब्दापेक्षया विशिष्यतेतराम् । सा हि भवन्ती भवति सर्वज्ञबुद्धिपूर्विका तत्पूर्वकमूला चेति कथं न विशिष्येत । विशेषादेव चैषा न स लोके कश्चिदर्थो विद्यते यस्य स्वरूपतो गुणतो वा याथातथ्येन प्रतिपादनाय न क्षमते । ब्रह्म तद्गुणानां यथास्वं प्रतिपादनं च तस्याः परमं कृत्यम् । तदेव च तद्वैशिष्ट्ये कारणं विशिष्टम् । अन्यतस्तथा तत्प्रतिपादनासम्भवात् ॥ २१ ॥

अत्रैवार्षं दर्शनं प्रमाणयति—

**"दर्शयति च"** ॥ २२ ॥

विशेषमिति द्वितीयया विपरिणम्यानुवर्तते । पूर्वत्रैव दर्शनमेतत्प्रमाणमिति चार्थः । **दर्शयति**=ब्रह्मतद्गुणानां याथातथ्यतः प्रतिपादने श्रुतेर्विशेषमृषिर्दर्शयतीत्यर्थः ।

ऋषिः खलु तित्तिरिर्वेदार्थप्रतिपादने प्रवर्तमानो यो वेदं न वेत्ति नावबुध्यते स स्वरूपतो गुणतो बृहन्तं परब्रह्म परमात्मानं नावबुध्यते वेद एव नूनं ब्रह्मतद्गुणानामवबोधस्योपाय इति विस्पष्टं दर्शयति । **"नावेदविन्मनुते तं बृहन्तम्"** (तै० ब्रा० ३ । १२ । ९) इति । **"तं त्वौपनिषदं पुरुषं पृच्छामि"** (बृ० ३ । ९ । २६)

**"वेदान्तविज्ञानसुनिश्चितार्थाः"** (मुं० ३ । २ । ६) इति चौपनिषदादिविशेषणविशेषोपादानेनोपनिषदोऽपि तदवबोधाय इति याज्ञवल्क्यप्रभृतिऋषिरपि सुव्यक्तं विज्ञापयति। न च वेदविदामृषीणां दर्शनं कदाचिदन्यथापयितुं शक्यते। तस्माच्छ्रुतिपठिता एव गुणास्तदुपासनेषु सर्वत्रोपसंह्रियन्ते नान्यत्र क्वचित् पठिता इति इदं मनसि कर्तव्यम् ॥ २२ ॥

गुणान्तरोपसंहारमाह—

**"सम्भृतिद्युव्याप्त्यपि चातः"** ॥ २३ ॥

अपिनाऽपूर्वत्वादिवदित्युच्यते। गुणान्तरोपसंहारोऽयमिति चकारेणोच्यते। सन्धिरार्षः। **सम्भृतिद्युव्याप्ती**=सर्वासां जगन्निर्माणरक्षणोपसंहारशक्तीनां सम्भरणं धारणं सम्भृतिः, द्युपर्य्यन्तसर्वलोकव्याप्तिर्द्युव्याप्तिः, सम्भृतिश्च द्युव्याप्तिश्च ताविमौ गुणौ ब्रह्मोपासनेषु सर्वत्रापूर्वत्वादिगुणवदुपसंह्रियेते। कुतः? **अतः**=इदमाऽभेदादिति हेतुः परामृश्यते, स हि व्यवहितोऽप्यस्ति बुद्ध्या सन्निहितः, अस्मादुपास्याभेदादित्यर्थः।

अथर्वाङ्गिरसे हि पठ्यते **"ब्रह्म ज्येष्ठा सम्भृता वीर्य्याणि ब्रह्माग्रे ज्येष्ठं दिवमाततान। भूतानां ब्रह्म प्रथमोत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः"** (अथ० १९ । ३ । २२ । २१) इति। **ब्रह्म**=विभक्तेर्लुक् ब्रह्मणा, **ज्येष्ठा**=ज्येष्ठानि, **वीर्य्याणि**=जगज्जन्मादिगोचराः शक्तयः, **सम्भृता**=सम्भृतानि सम्भ्रियन्ते नित्यं भ्रियन्ते, **ज्येष्ठं**=सर्वतोऽग्र्यं श्रेष्ठं, **ब्रह्म**=जगज्जन्मादिकारणं ब्रह्म, **अग्रे**=सूर्य्यादिदेवतातोऽग्रे, **दिवं**=पृथिव्यादिसहितं द्युलोकमाततान=व्याप्याध्यास्त, प्रथम उत=च **जज्ञे**=आस, **अर्हति**=समर्थो भवति, **स्पर्धितुं**=स्पर्धां विधातुं, **कः**=चेतनोऽचेतनो वा क इत्यर्थः। तथा बह्वृचसंहितायामाम्नायते **"यस्मादिन्द्राद् बृहतः किञ्चन ईमृते विश्वान्यस्मिन् सम्भृताऽधि वीर्य्या। जठरे सोमं तन्वी सहो महो, हस्ते वज्रं भरति शीर्षणि क्रतुम्"** (ऋ०

२।६।१७।३) इति। **बृहतः**=महतः, **किञ्चन इमम्**=किमपि वस्तु नास्ति, **सम्भृता**=सम्भृतानि, **वीर्य्या**=वीर्य्याणि, **तन्वी**=तन्वां शरीरे, **सहः**=बलं, **महः**=महत्, **भरति**=बिभर्ति, **शीर्षणि**=शिरसि, **क्रतुं**=ज्ञानमित्यर्थः। तत्र संशयः—किं याविमौ वीर्य्यसम्भृतिद्युव्याप्तिलक्षणौ गुणौ परब्रह्मणः परमेश्वरस्योच्येते तौ तदुपासनेषु सर्वत्रोपसंह्रियेते किंवा नोपसंह्रियेते इति। नोपसंह्रियेते इति पूर्वः पक्षः, उपसंह्रियेते इति सिद्धान्तः। किं तावत् प्राप्तम्? नोपसंह्रियेते इति ब्रूमः। व्यर्थत्वात्। अनन्ताः किल भगवतो ब्रह्मणो गुणाः श्रूयन्ते। तेषां सर्वेषां प्रतिब्रह्मोपासनमुपसंहारेऽशक्योपासनं ब्रह्म नूनं प्रसज्येत। नह्यल्पज्ञेन जीवात्मना यावन्तो भगवतस्तस्य गुणा विद्यन्ते तावद्भिरुपेतं तत् सहस्रैरपि पुरुषायुषैरुपासितुं शक्यते। अशक्योपासने च भगवति तस्मिन् व्यर्थस्तदुपासनेषु तद्गुणोपसंहार इति। एवं प्राप्तेऽभिधीयते—**स्यादुपास्याभेदादपूर्वत्वादिवत्**। यथा ह्युपास्यब्रह्माभेदादपूर्वत्वादयो गुणाः खलु प्रतिब्रह्मोपासनमुसंह्रियन्ते तथा वीर्य्यसम्भृतिद्युव्याप्ती गुणावप्युपसंह्रियेते। समानत्वात्। समानं ह्युभयेषां तेषामुपास्यब्रह्मगुणत्वम्। न च तत्र तदुपसंहारो भवति कदाचिद् व्यर्थः। नहि यावन्तो भगवतस्तस्य गुणा वर्तन्ते तावद्भिरुपेतं तदुपासितुं चेन्न शक्यते तदा तद्गुणोपसंहारेण न भवितव्यमिति शास्त्रविदो न्याय्यं मन्यन्ते। यावद्भिरुपेतं स्यादुपास्यं तावद्भिरुपेतमुपासितव्यमिति हि तेषां मतम्। अधिकस्याधिकं फलमिति न्यायात्। न चेह सर्वेषां तद्गुणानामुपसंहार उच्यते। केषाञ्चिदुपसंहारेऽभिधीयमाने च तदुपेतोपासनस्याल्पज्ञेनापि जीवात्मना यथासुखं विधातुं शक्यत्वान्न व्यर्थत्वाशङ्का स्वप्नेऽप्युन्मिषति। गुणाश्च यावन्तोऽपि भवेयुरल्पा एव भवन्ति। नहि गुणेषु भवत्सु कोऽपि चेतनावान् कर्हिचिद् विरज्यति मूढो वा कदाचिन्न रज्यति। प्रोत्साहनकर्माणः किल गुणाः सर्वत्र मन्यन्ते। भवत्सु च तेषु नूनमुपासकेनोपासनेषु शक्यधिया भवितव्यं न जात्वशक्यधियेति युक्तं विज्ञायते। नहि येषां प्रोत्साहनं कृत्यं नित्यं विजेजीयते ते कदाचिदु-

त्सादनं कृत्यं कर्तुं पारयन्ते । तस्मादपूर्वत्वादिगुणवद् वीर्य्यसम्भृतिद्युव्याप्ती गुणावपि ब्रह्मोपासनेषु सर्वत्रोपसंह्रियेते इति सम्यगीक्षामहे ॥२३॥

नन्वानन्दादिद्युव्याप्तिपर्य्यन्ता यावन्तो गुणा उपसंहर्तव्या निर्धार्य्यन्ते ते सर्वेऽविशेषेण प्रतिब्रह्मोपासनमुपसंह्रियन्ते किंवा तेषां ये यत्र नाम्नायन्ते ते तत्रोपसंह्रियन्त इत्याकांक्षायां सोदाहरणमुत्तरमाह—

**"पुरुषविद्यायामिव चेतरेषामनाम्नानात्"** ॥ २४ ॥

उपसंहर्तव्यगुणविषयमेतद् विशेषकथनमिति चार्थः । **इतरेषाम्**=आम्नातेभ्योऽन्येषां गुणानां प्रतिब्रह्मोपासनमुपसंहारो वेदितव्यः, कुतः? **अनाम्नानात्**=तेषां तत्राम्नानाभावात्, **पुरुषविद्यायामिव**=यथा पुरुषोपासनायामनाम्नाता गुणा उपसंह्रियन्त इत्यर्थः ।

यस्यामुपासनायां हि परः पुरुषः परब्रह्म परमेश्वरस्तावदुपास्यते सा पुरुषोपासना पुरुषविद्येति व्यपदिश्यते । विद्योपासनेति समानार्थत्वात् । सा च बह्वृचसंहितायां **"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्"** (ऋ० ८ । ४ । १७ । १ ) इत्यादिना सविस्तरमाम्नायते । तत्रोपास्यस्य परब्रह्मणः परमेश्वरस्य पुरुषस्य द्युव्यापित्वजगज्जन्मादिहेतुत्वप्रभृतयः केचिद्गुणा आम्नाताः, आनन्दादयश्च नाम्नाताः । ते यथाऽन्यत्राम्नाता अत्र पुरुषोपासनायामुपसंह्रियन्ते ये चात्राम्नातास्तेऽन्यत्र पठिता अपि नोपसंह्रियन्ते तथोपासनान्तरेष्वपि बोद्धव्यम् । तेष्वपि त एव गुणा उपसंह्रियन्ते ये तत्र नाम्नायन्ते ये चाम्नायन्ते तेऽन्यत्र पठिता अपि नोपसंह्रियन्ते । अर्थाभावात् ॥ २४ ॥

उपसंहार्य्यं गुणजातमुक्तम् । अनुपसंहार्य्यमधुना विवक्षुरधिकरणान्तरमारभमाण आह—

**"वेधाद्यर्थभेदात्"** ॥ २५ ॥

**वेधादि**=भेदकत्वादिकमादिना गृह्यते, वेधकत्वादिगुणजातं ब्रह्मोपासनेषु नोपसंह्रियते, कुतः? **अर्थभेदात्**=फलभेदादित्यर्थः ।

बह्वृचसंहितायां हि समाम्नायते **"यद्गैरिषूः सं नममानो अग्ने!**

**वाचा शल्याँ अशनिभिर्दिहानः। ताभिर्विध्य हृदये यातुधानान् प्रतीचो बाहून् प्रति भङ्ध्येषाम्**" (ऋ० ८।४।५।४) "**अग्ने! त्वचं यातुधानस्य भिन्धि हिंस्राशनिर्हरसा हन्त्वेनम्। प्र पर्वाणि जातवेदः! शृणीहि क्रव्यात् क्रविष्णुर्विचिनोतु वृक्णम्**" (ऋ० ८।४।५।५) इति। तत्र संशयः–किं यथाऽऽनन्दादयो गुणा ब्रह्मोपासनेषु सर्वत्रोपसंह्रियन्ते तथाऽत्र समाम्नाताः शत्रुहृदयवेधकत्वप्रभृतयो गुणा अपि तत्र सर्वत्रोपसंह्रियन्तेऽथवा नोपसंह्रियन्त इति। उपसंह्रियन्त इति पूर्वः पक्षः, नोपसंह्रियन्त इति सिद्धान्तः। किं तावत् प्राप्तम्? उपसंह्रियन्त इति ब्रूमः। अविशेषात्। यथा ह्यानन्दादयो गुणाः खलु वेदवेदान्तेषु भगवतो ब्रह्मणो निर्दिश्यन्ते तथा शत्रुहृदयवेधकत्वप्रभृतयोऽप्युपदिश्यन्ते। नहि तेषां परस्परं विशेषः कश्चिद् वक्तुं शक्यते। अविशेषे चोभयेषां तेषामिवामीषामपि युक्तो ब्रह्मोपासनेषु सर्वत्रोपसंहार इति। एवं प्राप्तेऽभिधीयते- **अर्थभेदादनुपसंहारः**। यद्यप्यानन्दादीनां शत्रुहृदयवेधकत्वादीनां च गुणत्वे नास्ति कश्चिद् विशेषः; तथाप्यर्थे तेषां महान् विशेषो विद्यते। नह्यानन्दादिगुणोपेतं ब्रह्मोपास्यमानं यस्मै यस्मै फलायावकल्पते शत्रुहृदयवेधकत्वादिभिर्गुणैरुपेतमपि तस्मै तस्मै फलायार्हति। भिन्नं ह्यानन्दादिगुणोपेतब्रह्मोपासनस्य फलमानन्दाद्यवाप्तिः, भिन्नं च शत्रुहृदयवेधकत्वादिगुणोपेतब्रह्मोपासनस्य फलं शत्रुहृदयवेधप्रभृति। मुमुक्षवः किल शास्त्रसंस्कृतबुद्धित्वादानन्दादिगुणोपेतं ब्रह्मोपासते। तद्धि भवति सौम्यवपुः। शत्रुहृदयवेधकत्वादिगुणोपेतं च संसारिणो जनाः। तद्धि भवति भीमतनु। यत्रेदमाम्नायते "**स वज्रभृद् दस्युहा भीम उग्रः सहस्रचेताः शतनीथ ऋभ्वा। चम्रीषो न शवसा पाञ्चजन्यो मरुत्वान्नो भवत्विन्द्र! ऊती**" (ऋ० १।७।१०।१२) इति। "**मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। मा नो वीरान् रुद्र! भामितो वधीर्हविष्मन्तः सदमित् त्वा हवामहे**" (यजु० १६।१६)

इति च । प्रकृतं चेह मोक्षफलं ब्रह्मोपासनं न शत्रुहृदयवेधादिफलम् । तदनुगुणाश्चानन्दादयो गुणा न शत्रुहृदयवेधकत्वादयः । तस्मान्न ते ब्रह्मोपासनेषु सर्वत्रोपसंह्रियन्ते यथाऽऽनन्दादयः ॥ २५ ॥

अर्थभेदादित्युक्तम् । तत्र कोऽसौ ब्रह्मोपासनस्यार्थः फलमत्राभिप्रेयत इत्याकांक्षायां मध्ये तद्गोचरं विचारं प्रवर्तयिष्यन्नाह—

**"हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम्" ॥ २६ ॥**

कम्पन इति तुना व्यावर्त्यते । **हानौ**=छान्दोग्योपनिषदि श्रुतो विधूननशब्दो हानौ वर्तते, हानिः प्रहाणं त्याग इति यावत्, कुतो विज्ञायते? **उपायनशब्दशेषत्वात्**=उपायनशब्दसान्निध्यात्, उपादानमुपायनं, सान्निध्यं शेषत्वं, **कुशाच्छन्दस्तुत्युपगानवत्**=कुशाशब्दस्येह श्रीत्वं शलाकापरत्वात्, यथाऽविशेषेण श्रुतानां कुशादिशब्दानामर्थविशेषे वृत्तिरौदुम्बर्य्यादिशब्दशेषत्वात्, **तत्**=तदिदम् **उक्तं**=पूर्वमीमांसायामभिहितमित्यर्थः ।

छान्दोग्ये श्रूयते **"अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि"** ( छां० ८ । १३ । १ ) इति । यथाऽ**श्वः**=तुरगो **रोमाणि**=जीर्णलोमानि **विधूनते** त्यजत्येवं **पापं**=सुकृतदुष्कृतोभयं **विधूय**=प्रहाय त्यक्त्वा, यथा **चन्द्रः**=विधू **राहोः**=तमसो **मुखात्**=आस्यात् **प्रमुच्य**=मुक्त्वा भास्वरो भवति, तथा **शरीरं**=देहं **धूत्वा**=त्यक्त्वा **कृतात्मा**=साक्षात्कृतपरमात्मा कृतकृत्यो वाऽ**कृतम्**=अकार्य्यं **ब्रह्मलोकं**=ब्रह्म च तल्लोकं **चाभिसम्भवामि**=सरिदिव समुद्रमभितः सर्वतः प्राप्नोमीत्यर्थः । तत्र संशयः—किमिह "पापं विधूय" इति श्रुतो विधूननशब्दो हानौ वर्तते किंवाऽर्थान्तरे कम्पने चलनं इति । चलन इति पूर्वः पक्षः, हानाविति सिद्धान्तः । किं तावत् प्राप्तम्? चलन इति ब्रूमः । प्रसिद्धत्वात् । लोके हि चलितार्थे यः प्रयुक्तः

खलु प्रसेषिध्यते स तत्रैव नियमेन वरीवृत्यते । नहि केसरादिमति व्यक्तिविशेषे प्रसिद्धो घोटकशब्दः कदाचिद् गोमहिषादिषु वर्तते । विधूननशब्दस्य च विद्यते चलने प्रसिद्धिः । प्रयुञ्जते तावत् प्रयोक्तारः पताकाग्राणि दोधूय्यन्ते चाचल्यन्त इति । न च बलवति बाधके कस्मिंश्चिदसति साऽतिक्रामितुं शक्यते । स्मरणाच्च । अस्ति खलु "धूञ्-कम्पने" इति पाणिनिस्मरणम् । कम्पनं चलनम् । तेनापि विधूननशब्दश्चलने वर्तेत इति स्फुटमवगम्यते । हानौ तद्वृत्त्यभ्युपगमे च नूनमिदं भवेदप्रमाणम् । चलनं चेह सुकृतदुष्कृतयोः स्वभावतोऽभिप्रेयते न स्थानतः । तयोर्गुणत्वेन तदसम्भवात् । सुखदुःखात्मकफलारम्भकत्वं हि तत्स्वभाव आश्रीयते । ततश्चलनं च कञ्चित्कालं तदनारम्भकत्वमिति सम्यगालोचामहे । तस्माद् विधूननशब्दोऽत्रार्थान्तरे चलने वर्तेत न हानाविति । एवं प्राप्तेऽभिधीयते—**हानौ तूपायनशब्दशेषत्वात्** । हानौ त्वेष विधूननशब्दः खलु वर्तितुमर्हति नार्थान्तरे चलने । यत्कारणं शेषोऽस्योपायनशब्दः श्रूयते "**तत् सुकृतदुष्कृते धूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्**" (कौ० १ । ४) इति । **तत्**=तदा, **धूनुते**=विधूनुते, **तस्य**=विदुषः, **उपयन्ति**=उपाददत इत्यर्थः । उपायनशब्दश्चोपादानवचनः प्रसिद्धः । उपादानं च सुकृतदुष्कृतयोः प्रहीणयोः परित्यक्तयोरेव ज्ञातिभिः परैर्विधातुं शक्यते नाप्रहीणयोरपरित्यक्तयोः । यदि हि विधूननशब्दोऽत्र हानिवचनो न प्रयुज्येत न जातु तच्छेषत्वेनोपायनशब्दः श्रूयेत । नह्यप्रहीणं किञ्चित् कदाचित् कश्चिदुपादातुं शक्नोति । प्रहाणपूर्वकत्वादुपादानस्य । यद्यपि श्रूयमाणमिदं विदुषः सुकृतदुष्कृतयोर्ज्ञातिभिः परैरुपायनं साक्षान्नोपपद्यते तथापि शेषत्वेन श्रूयमाणत्वात् प्रहाणवचनमेवात्र विधूननमिति निर्णयायावकल्पते । भवति हि शेषिणोऽर्थस्य निर्णायकः शेष इति सर्वतन्त्रसिद्धान्तः । "**तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्**" (कौ० १ । ४) इति श्रुतेः "**प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् । विसृज्य ध्यानयो-**

**गेन ब्रह्माभ्येति सनातनम्**" ( मनु० ३ । ७९ ) इति तन्मूलायाः स्मृतेश्च विदुषः सुकृतदुष्कृते ज्ञात्योः प्रियाप्रिययोः सजातीयसुकृतदुष्कृते जनयित्वा विनश्यत इत्यर्थोऽभिप्रेयत इति त्वन्यदेतत् । **अथोच्येत**–यत्र खलु विधूननशब्दस्य शेषत्वेनोपायनशब्दः श्रूयते तत्र विधूननं प्रहाणमिति निर्णेतुं शक्यते । न च छान्दोग्यश्रुतौ स तच्छेषत्वेन श्रयते । तत्र श्रवणाभावे च तद्वचनमेतदिति कथं निर्णीयेतेति । **नैतद् वक्तव्यम्** । अन्यत्र श्रुतस्यान्यत्रश्रुतशेषत्वोपपत्त्या निर्णयसम्भवात् । सत्यं छान्दोग्यश्रुतौ विधूननशब्दस्य शेषत्वेनोपायनशब्दो न श्रूयते तथापि कौषीतकिश्रुतौ श्रूयते । विधूननं चोभयत्र समानम् । तद् यथा स्वार्थनिर्णयाय तत्रोपायनं शेषमपेक्षते तथाऽत्राप्यपेक्षते । समानायामपेक्षायां तत्र श्रुतस्यापि तस्यात्र स्वार्थनिर्णयहेतुः शेषशेषिभावसम्बन्धो घटते नास्ति कश्चित् प्रतिबन्धः । सम्बन्धस्य सर्वत्रापेक्षाकृतत्वनियमात् । अन्यत्रश्रुतस्यान्यत्रश्रुतशेषत्वे दृष्टान्तः **कुशाछन्दस्तुत्युपगानवत्** । भाल्लविनां श्रूयते "**कुशा वानस्पत्याः**" इति । उद्गातॄणां स्तोत्रगणनार्थाः शलाका हि दारुमय्यः कुशा उच्यन्ते । ताश्चात्राविशेषेण वनस्पतियोनिकाः श्रूयमाणा अपि कस्य वनस्पतेरिमाः स्युरिति न विशेषतस्तावन्निर्णेतुं पार्य्यते यावत् तन्निर्णायको वाक्यशेषो न सम्बध्यते । वाक्यशेषश्चान्यत्र श्रूयते शाट्यायनिनाम् "**औदुम्बर्य्यः कुशाः**" इति । तत्सम्बन्धाच्चैष निर्णयो नूनमिमाः स्युरौदुम्बर्य्य इति । केषाञ्चिच्छाखिनां श्रूयते "**छन्दोभिः स्तुवते**" इति । छन्दांसि च द्विविधानि देवच्छन्दांस्यसुरच्छन्दांसि च। दशाक्षरादीनि देवच्छन्दांसि, नवाक्षरान्तानि चासुरच्छन्दांसि । तत्राविशेषेण श्रवणात् कानि तानि पुरस्तात् कर्तव्यानि कानि च तानि पश्चादिति विशेषतो न निर्णीयते तन्निर्णयार्थमस्ति वाक्यशेषापेक्षा । स च पैङ्गिनामेवं पठ्यते "**देवच्छन्दांसि पूर्वाणि**" इति । तत्सम्बन्धाद् भवत्येष निर्णयः पूर्वं देवच्छन्दोभिः स्तुवते पश्चादसुरच्छन्दोभिरिति । तैत्तिरीयाणामेकत्राधीयते "**अतिरात्रे षोडशिनः स्तोत्रमुपाकरोति**" ( तै० सं० ६ ।

६ । ११ ) इति । ज्योतिष्टोमस्य संस्थाविशेषोऽतिरात्रो यज्ञः, तत्र **षोडशिनः**=इन्द्रः षोडशी, तद्देवताकस्य ग्रहस्य पात्रविशेषस्य **स्तोत्रं**=ग्रहणाङ्गभूतं स्तोत्रमु**पाकरोति**=लेटो रूपं, गानमन्त्रोपाकरणम्, उपाकुर्य्यात्–गायेदित्यर्थः । तत्राविशेषेण श्रवणात् कदा तत्स्तोत्रमुपाकुर्य्यादिति विशेषतो न निश्चीयते । तन्निश्चयार्थमस्ति निश्चायकस्य कस्यचिद् वाक्यशेषस्याकांक्षा । स चान्यत्र तेषामेवाम्नायते "**समयाविषिते सूर्य्ये षोडशिनः स्तोत्रमुपाकरोति**" ( तै० सं० ६ । ६ । ११ ) इति । **समयाविषिते**=अर्धास्तमिते । ततो भवति सायं सन्धिवेलायां षोडशिनः स्तोत्रमुपाकुर्य्यादिति निश्चयः । केचित् समामनन्ति "**ऋत्विज उपगायन्ति**" इति । ऋत्विजो बहवो ब्रह्मादयः । तत्राविशेषेण श्रवणात् किं सर्वैर्ऋत्विग्भिरुपगातव्यं किंवा नेति विशेषतो नाध्यवसीयते । तदध्यवसायार्थमस्ति वाक्यशेषापेक्षा । स च तैत्तिरीयाणां समाम्नायते "**नाध्वर्युरुपगायेत्**" ( तै० सं० ७ । ३ । १ ) इति । ततोऽध्वर्युव्यतिरिक्तैरुपगातव्यं न सर्वैरिति सुखेनाध्यवसातुं शक्यते । चेदन्यत्र श्रुतस्यान्यत्र श्रुतशेषत्वं नास्थीयेत तदा नायं निर्णयो जायेत । तदभावे च स्यात् पुरुषार्थापभ्रंशः सर्वेषां. किंकर्तव्यविमूढत्वात् । अन्यत्र श्रुतस्यान्यत्रश्रुतशेषत्वं चोक्तं भगवता जैमिनिना पूर्वमीमांसायाम् "**अपि तु वाक्यशेषः स्यात्**" ( मी० १० । ८ । ३ ) इत्यत्र । प्रसिद्धिश्च कम्पनवत् प्रहाणेऽपि समाना विद्यते । लोकेऽवधूत इत्यादिप्रयोगप्राचुर्य्योपलम्भात् । अनेकार्थत्वाभ्युपगमाच्च धातूनां पाणिनिस्मरणमपि नाप्रामाण्यमश्नुते । तस्मादत्र श्रुतं विधूननं हानौ वर्तेत इति निःसंशयम् ॥ २६ ॥

**ननु** वर्ततां हानौ विधूननम्, उपासकस्योपासनमाहात्म्येन ब्रह्मसाक्षात्कारे जाते पापमात्रस्य हानिः प्रजायते किंवा पुण्यपापोभयस्येति वक्तव्यम् ? तत्राह—

**"साम्पराये तर्तव्याभावात् तथा ह्यन्ये"** ॥ २७ ॥

हानिरिति प्रथमया विपरिणम्यानुवर्तते । **साम्पराये**=परलोके

**तर्तव्याभावात्**=तरितुं भोगेनातिक्रामितुं योग्यस्य कस्यचित् पदार्थस्याभावात् पुण्यपापोभयस्य हानिर्निवृत्तिः प्रतिपत्तव्या, **तथा हि**=तथा **चान्ये**=अन्यशाखिनोऽधीयत इत्यर्थः ।

यदि हि ब्रह्मोपासनमाहात्म्येन ब्रह्मसाक्षात्काररूपायां तद्विद्यायां जातायां सम्परेतस्य तत्रभवतो ब्रह्मोपासकस्य विदुषो विना ब्रह्मप्राप्तिमन्यत् किञ्चित् परलोके भोगेन तरितव्यमुपभोक्तव्यं विद्येत तदाऽवश्यं तदुपभोगार्थं पुण्यस्यावस्थानं परिकल्प्येत । न च तदानीं भगवतस्तस्य ब्रह्मप्राप्तिव्यतिरेकेणान्यत् किञ्चिदुपभोक्तव्यं विद्यते । ब्रह्मविद्यामाहात्म्येन भोक्तव्यमात्रस्योत्तीर्णात् । यत्रेदमुदाहियते **"तस्याभिध्यानाद् योजनात् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः"** (श्वे० १ । १० ) इति । **"जहात्येनां भुक्तभोगामजोऽन्यः"** (श्वे० ४ । ५ ) इति च । भोक्तव्या सकार्य्या प्रकृतिर्विश्वमाया, तस्या उपभोगादुपरमो निवृत्तिः । **"कृतार्थं प्रति नष्टम्"** (यो० २ । २२ ) इति स्मृतेः । ब्रह्मविद्याप्रज्वलनस्य तावदविशिष्टं पुण्यं पापं चैधो भस्मयितव्यं वर्तते स उदयमासादयन् यथा पाप्मैधो भस्मसात्कुरुते तथा पुण्यैधोऽपि भस्मीभावं नयते । स्मर्य्यते खलु भगवद्गीतायामेतद् विस्पष्टम् **"यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ! । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा"** (गी० ४ । ३७ ) इति । न च ब्रह्मविद्याग्निनाऽविशिष्टे भस्मयितव्ये क्षणार्द्धमपि पुण्यमेधो यथावदवस्थातुमर्हति । नहि समाने किलोपस्थिते प्रहाणहेतौ कस्यचित् प्रहाणमप्रहाणं च कस्यचिदिति कथञ्चिद् युज्यते । तत्रभवतो ब्रह्मोपासकस्य विदुषः पुण्यपापयोरुभयोः प्रहाणं चान्यशाखिनो विस्पष्टमधीयते **"तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"** (मुं० ३ । १ । ३ ) इति । **"तत् सुकृतदुष्कृते धूनुते"** (कौ० १ । ४ ) इति च । तस्मादिह पुण्यपापोभयस्यैव प्रहाणिः प्रतिपत्तव्या न केवलस्य पाप्मन इति युक्तमुत्पश्यामः ॥ २७ ॥

नन्वेवं तर्हि **"अश्व इव रोमाणि विधूय पापम्"** (छां०

८ । १३ । १ ) इति पापमात्रस्य हानिं श्रावयन्त्याश्छान्दोग्यश्रुतेः का गतिः स्यात् । नहि साऽप्रमाणमिति । अस्योत्तरमाह—

**"छन्दत उभयाविरोधात्" ॥ २८ ॥**

**छन्दतः**=वक्तुरिच्छातस्तात्पर्य्यतश्छान्दोग्यश्रुतौ पापमिति पुण्यपापोभयपरं प्रयुक्तं वेदितव्यम्, कुतः? **उभयाविरोधात्**=उभयश्रुत्यविरोधादित्यर्थः ।

यथा हि लोके खलु **"काकेभ्यो दधि रक्ष्यताम्"** इत्यादौ काकशब्दो दध्युपघातककाकादिसमस्तप्राणिपरः प्रयुज्यत इति वक्तुरिच्छातः प्रतिपद्यते तथा छान्दोग्यश्रुतावपि पापशब्दः पुण्यपापोभयपरः प्रयुज्यत इति प्रतिपत्तव्यम् । एवं हि मुण्डकश्रुतिश्छान्दोग्यश्रुतिश्चोभे परस्परमविरुद्धे सम्पद्येते, अन्यथा तु मिथो विरुध्येयाताम् । न चाविरोधे सम्भवति विरोधाभ्युपायो युज्यते । अन्यतराप्रामाण्यप्रसङ्गात् । मुण्डके तावत् पुण्यपापयोरुभयोः प्रहाणं सुव्यक्तमाम्नायते **"तथा विद्वान् पुण्यपापे विधूय"** ( मुं० ३ । १ । ३ ) इति । तदविरोधाय छान्दोग्यश्रुतावपि युक्तः पापशब्देन पुण्यपापयोरुभयोरेव परिग्रहो न केवलस्य पापस्येति सम्यगुत्प्रेक्षामहे । जन्मादिसंसारहेतुत्वाच्च वर्तते पुण्यमपि पापसमकक्षमिति न तत्र तत्प्रयोगोऽपि विरुध्यते । तस्माच्छान्दोग्यश्रुतौ पापमित्यस्य सुकृतदुष्कृतोभयमित्यर्थो निश्चेतव्यः ॥ २८ ॥

**ननु** तत्रभवतो ब्रह्मोपासकस्य सुकृतदुष्कृतयोः प्रहाणौ देवयानेन पथा श्रूयमाणा गतिरनर्थिका प्रसज्येत । तत्प्रहाण्या तस्यात्रैव ब्रह्मप्राप्त्युपपत्तेरिति । अस्योत्तरं पठति—

**"गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः" ॥ २९ ॥**

**गतेः**=तत्रभवतो ब्रह्मोपासकस्य देवयानेन पथा श्रूयमाणाया गते**रर्थवत्त्वं**=सार्थकत्वं वर्तते, कुतः? **उभयथा**=अभ्युपगमादिति शेषः, उभयप्रकारेण गतिमत्त्वेनागतिमत्त्वेन चोपासनस्याभ्युपगमात् । कस्मादेवमभ्युपगम्यते? **हि**=यस्मादन्यथा=उभयथाऽनभ्युपगमे **विरोधः**=श्रुतिविरोधः प्रसज्यत इत्यर्थः ।

द्विविधं हि ब्रह्मोपासनमभ्युपगम्यते गतिमदगतिमच्च । यस्मिन् सति कुतश्चित् प्रतिबन्धाद् ब्रह्मसाक्षात्कारो न जायते तद् गतिमत्, विपरीतमगतिमत् । यदि च श्रुत्या सर्वेषां ब्रह्मोपासकानामविशेषेण गतिरुपदिश्येत तदाऽवश्यं ब्रह्मसाक्षात्कारवतामुपासकानां सुकृतदुष्कृतयोः प्रहाण्याऽत्रैव ब्रह्मप्राप्तेरनर्थिका सा प्रसज्येत । न च सा श्रुत्या सर्वेषां तेषामविशेषेणोपदिश्यते । किन्तु ये महाभागाः सततं ब्रह्मोपासते कुतश्चित् प्रतिबन्धादाप्रायणं ब्रह्मसाक्षात्कारश्च न जायते तेषामुपदिश्यते । तत्र च सा सार्थिका विद्यते नानर्थिका । तेषामुपासनफलोपलब्धये लोकान्तरगतेरावश्यकत्वात् । सुकृतदुष्कृतयोः प्रहाणं च ब्रह्मसाक्षात्कारस्य कृत्यं न तदुपासनस्य । ऊर्ध्वगतौ च ते प्रतिरुद्धफले तावदवतिष्ठेते यावद् ब्रह्मसाक्षात्कारो न प्रजायते । गतिश्चोपासनफलं न सुकृतदुष्कृतयोरिति विशेषोऽवगन्तव्यः । न चैवं गतिमत्त्वेनागतिमत्त्वेन चोभयथा ब्रह्मोपासनाभ्युपगमे दोषः कश्चित् प्रसज्यते । तदनभ्युपगमे च नूनं श्रुतिविरोधः प्रसज्येत । श्रुतिर्हि ब्रह्मसाक्षात्कारवतस्तत्रभवतो ब्रह्मोपासकस्य सुकृतदुष्कृतप्रहाणानन्तरमिहैव तत्प्राप्तिमभिधत्ते **"तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"** (मुं० ३ । १ । ३ ) इति । **"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते"** ( बृ० ४ । ४ । ७ ) इति च । न च सा पूर्वाभिहिततद्विभागाभ्युपायमन्तरेण कथञ्चित् सङ्गमयितुं शक्यते । साक्षादेषा हि **"निरञ्जनः"** इति **"अत्र"** इति चाभिदधती तत्रभवतो ब्रह्मसाक्षात्कारवतो ब्रह्मोपासकस्य लोकान्तरप्रापणीं गतिं निवारयति, अत्रैव ब्रह्मप्राप्तिं चानुशास्ति । सर्वेषां तेषामविशेषेण लोकान्तरगतौ चाभ्युपगतायां कथं न तया विरोधः प्रसज्येतेति सूक्ष्मधिया क्षणमेकं चिन्तयितव्यम् । न च श्रुतिरपि सर्वेषां तेषामविशेषेण गतिमभिधत्ते । नचाविशिष्टायां गतावुपकोसलादिविद्यासु तदभिधानं शाण्डिल्यादिविद्यासु च तदनभिधानं कथञ्चित् सङ्गच्छते । तत्र तदुपसंहारे चैकत्रोपकोसलविद्यायामेवाभिधीयेत नान्यत्र पञ्चाग्निविद्यायामपि । तत्रापि

तदुपसंहारसम्भवात्। उभयथाऽभ्युपगमे च नास्ति स्वमेऽपि कस्यचिदेतादृक्षस्य दोषस्यात्रावतारः। तस्मात् सुकृतदुष्कृतयोः महाणावपि तत्रभवतो ब्रह्मोपासकस्य श्रूयमाणा गतिः सार्थिका विद्यते नानर्थिका ॥२९॥

**ननु** यस्य ब्रह्मोपासकस्य ब्रह्मसाक्षात्कारोऽत्र न जायते तस्यापि गत्यभ्युपायो नोपपद्यते। तत्फलानुपलब्धेरिति। अस्योत्तरं पठति—

**"उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्" ॥ ३० ॥**

**उपपन्नः**=इह ब्रह्मसाक्षात्काराभावे ब्रह्मोपासकस्य परत्र गत्यभ्युपायो युक्तो विद्यते, कुतः? **तल्लक्षणार्थोपलब्धेः**=तदा गतिं परामृशति, लक्षणं हेतुः, उपलब्धिः प्राप्तिः, तद्धेतुकार्थोपलम्भात्, **लोकवत्**=यथाऽर्थविशेषोपलब्धिहेतुत्वाद् द्वीपान्तरगत्यभ्युपायो लोक इत्यर्थः।

यथा हि लोके तावदर्थविशेषोपलब्धिहेतुत्वात् पातालादिद्वीपान्तरगत्यभ्युपायो युज्यते तथा तत्रभवतो ब्रह्मोपासकस्य लोकान्तरगत्यभ्युपायोऽप्युपपद्यते। अर्थविशेषोपलब्धिहेतुत्वात्। फलविशेषोऽर्थविशेष इत्येकोऽर्थ उच्यते। ब्रह्मोपासनस्यार्थविशेषो ब्रह्मसाक्षात्कारः। सोऽत्र स्यादमुत्र वा भवेदिति न निर्बन्धः। तत्प्राप्तिं च तत्रभवतस्तस्य स्वयं दर्शयति श्रुतिः **"स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते"** (प्र० ५।५) इति। **सामभिः**=मन्त्राभिप्रायं बहुवचनम्, सामवेदोक्तब्रह्मोपासनेन, **ब्रह्मलोकं**=कार्य्यब्रह्मलोकमु**न्नीयते**=प्राप्यते, **स**=उपासकः, **एतस्माज्जीवघनात्**=जीवानां भोगार्थः पृथिव्यादिद्युलोकान्तः सर्वः प्रकृतितद्विकारो मूर्तिविशेषत्वाज्जीवघनः **"मूर्त्तौ घनः"** (अष्टा० ३।३।७७) इति स्मृतेः, तस्मादेतस्मात् प्रत्यक्षविषयात् परो जीवात्मा, तस्मात् परं पुरिशयं पुरुषं परब्रह्म परमात्मान**मीक्षते**=साक्षात्कुरुत इत्यर्थः। ब्रह्मसाक्षात्कारे सुकृतदुष्कृतकर्मक्षयः **"क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"** (मुं० ३।२।८) इति श्रुतेः। कर्मक्षये लिङ्गशरीरभङ्गः। तद्भङ्गे प्रकृतितत्कार्य्यसम्बन्धनिवृत्त्या निर-

ज्ञानस्य सतः परब्रह्मपरमेश्वरप्राप्तिः **"ब्रह्मविदाप्नोति परम्"** (तै० २ । १) इति श्रुतेरिति तन्निष्कर्षः । तस्मादुपपद्यते तत्रभवतो ब्रह्मोपासकस्य देवयानेन पथा लोकान्तरगत्यभ्युपायः ॥ ३० ॥

**ननु** देवयानेन पथा ब्रह्मलोकं गतानां सर्वेषां ब्रह्मोपासकानां तल्लक्षणार्थोपलब्धेर्नियमो विद्यते किंस्विदनियमः । नियमे **"आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन !"** (गी० ८ । १६) इति स्मृतिविरोधः । तल्लक्षणार्थानुपलब्धावेव पुनरावृत्त्युपपत्तेः । अनियमे **"तपसा ब्रह्मचर्य्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्यादित्यमभिजयन्ते । एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्ते"** (प्र० १ । १०) **"ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः"** (बृ० ६ । २ । १५) इत्यादिश्रुतिविरोधः । तल्लक्षणार्थोपलब्धावेवापुनरावृत्तिसिद्धेः । नियमानियमौ तु विरुद्धौ नैकत्र युगपदवस्थातुमर्हतः । अत एव प्रकारान्तरस्थितिरपि न सम्भाव्यते । परस्परविरोधे न प्रकारान्तरस्थितिरित्यभियुक्तोक्तेः । तस्माद् "उपपन्नस्तल्लक्षणार्थोपलब्धे र्लोकवद्" इत्युक्तमयुक्तमिति । अस्योत्तरमाह—

**"अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम्"** ॥ ३१ ॥

तल्लक्षणार्थोपलब्धेरिति षष्ठ्या विपरिणम्यानुवर्तते । **सर्वेषां**=देवयानेन पथा ब्रह्मलोकं गतानां सर्वेषां ब्रह्मोपासकानाम**नियमः**=तल्लक्षणार्थोपलब्धेर्नियमो न विद्यते, **अविरोधः**=तत्र नास्ति श्रुतिविरोधः, कुतः? **शब्दानुमानाभ्यां**=प्रतिपत्तेरिति शेषः, श्रुतिस्मृतिभ्यां तत्प्रतिपत्तेरित्यर्थः ।

यावन्तः खलु ब्रह्मोपासका ब्रह्मलोकं गच्छन्ति तेषां सर्वेषां ब्रह्मसाक्षात्कारप्राप्तिनियमो न विद्यते । तत्रापि ब्रह्मनिष्ठानामेव तत्प्राप्तिसम्भवात् । साधनसम्पत्तिप्रकर्षो हि मोक्षमाणानां सर्वदा सर्वत्र ब्रह्मसाक्षात्कारं प्रयोजयति न लोकविशेषः कश्चित् । नहि ये ब्रह्मलोकं गता अपि

तत्र तत्साधनभूतां ब्रह्मनिष्ठां यथापूर्वं नाभ्यस्यन्ति ते तत्साक्षात्कारं कहि-चित्प्राप्नुवन्ति । साक्षात्कारप्राप्तौच युक्ता तेषामावृत्तिरिति न जातु स्मृति-र्विरुध्यते । न च तदुक्तश्रुतिविरोधः स्यादिति शङ्कितव्यम् । तत्र प्राप्तब्रह्मसाक्षात्काराभिप्रायकत्वेन विरोधाभावात् । प्राप्तब्रह्मसाक्षात्काराभि-प्रायेण ह्येवंविधाः श्रुतयः प्रवर्तन्ते न प्राप्ताप्राप्तब्रह्मसाक्षात्कारमात्राभिप्रायेण। येषां खलु ब्रह्मलोके साधनाभ्यासप्रकर्षेण ब्रह्मसाक्षात्कारः प्रजायते तेषां न पुनरावृत्तिः, येषां च न प्रजायते तेषां पुनरावृत्तिरित्येष एव तासामभिप्रायः। अतो नास्ति तद्विरोधोऽपि कश्चित् । तदेतच्च श्रुतिस्मृतिभ्यां स्फुटं प्रतिप-द्यते। अस्ति तावदुपकोसलविद्यायां श्रुतिः "**एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते**" (छां० ४ । १५ । ६) इति । **एतेन**= पूर्वाभिहितेन देवयानेन मार्गेण **प्रतिपद्यमानाः**=ब्रह्मलोकं गच्छन्त **इमं मानवं**=मनुसम्बन्धिनं मनोः सृष्टिलक्षणम**आवर्तं**=यस्मिन् जन्म-मरणप्रबन्धचक्रारूढा मनुष्या घटीयन्त्रवत् पौनःपुन्येनावर्तन्ते तं **नाव-र्तन्ते**=न प्रतिपद्यन्त इत्यर्थः । तत्रेममिति विशेषणोपादानादनावृत्ति-रस्मिन् कल्पे कल्पान्तरे त्वावृत्तिरिति सूच्यते । अन्यथा विशेषणासाङ्ग-त्यापातात् । नहि सर्वदाऽनावृत्तौ विशेषणमिदं कथञ्चित् सङ्गच्छते । कल्पान्तरावृत्तौ च नास्ति तत्र गतानां सर्वेषां ब्रह्मसाक्षात्कारप्राप्तिनियम इति निःशङ्कं प्रतिपत्तुमीश्यते । साक्षात्कारप्राप्तौ कल्पान्तरेऽपि तदनुपपत्तेः । "**ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे**" (मुं० ३ । २ । ६) इत्यादिका श्रुतिस्तु प्राप्तब्रह्मसाक्षात्कारविषयेत्यदोषः। स्मृतिश्च "**तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिः**" (सां० १ । ८३) इति । ततोऽपि ब्रह्मलोकेषु प्राप्तो विवेको विवेकपूर्वको ब्रह्मसाक्षात्कारो येन तस्यानावृत्तिं प्रतिपादयति श्रुतिर्नान्यस्याप्राप्तविवेकस्येत्यभिधानान्नास्ति ब्रह्मलोकं गतानां सर्वेषां ब्रह्मसाक्षात्कारप्राप्तिनियम इति व्यक्तमधिगम्यते । अन्यथा "**तत्र प्राप्तविवेकस्य**" इत्यभिधानानुपपत्तेः । सूत्रे "**सर्वे-षाम्**" इत्यस्य स्थाने "सर्वासाम्" इति शङ्कराचार्य्याणां सम्मतः पाठः । तत्रापि ब्रह्मलोकगतिसाधनानां सर्वासां ब्रह्मोपासनानां ब्रह्मसाक्षात्कार-

ज्ञानस्य सतः परब्रह्मपरमेश्वरप्राप्तिः **"ब्रह्मविदाप्नोति परम्"** (तै० २ । १) इति श्रुतेरिति तन्निष्कर्षः । तस्मादुपपद्यते तत्रभवतो ब्रह्मोपासकस्य देवयानेन पथा लोकान्तरगत्यभ्युपायः ॥ ३० ॥

**ननु** देवयानेन पथा ब्रह्मलोकं गतानां सर्वेषां ब्रह्मोपासकानां तल्लक्षणार्थोपलब्धेर्नियमो विद्यते किंस्विदनियमः । नियमे **"आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन !"** (गी० ८ । १६) इति स्मृतिविरोधः । तल्लक्षणार्थानुपलब्धावेव पुनरावृत्त्युपपत्तेः । अनियमे **"तपसा ब्रह्मचर्य्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्यादित्यमभिजयन्ते । एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्ते"** (प्र० १ । १०) **"ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः"** (बृ० ६ । २ । १५) इत्यादिश्रुतिविरोधः । तल्लक्षणार्थोपलब्धावेवापुनरावृत्तिसिद्धेः । नियमानियमौ तु विरुद्धौ नेकत्र युगपदवस्थातुमर्हतः । अत एव प्रकारान्तरस्थितिरपि न सम्भाव्यते । परस्परविरोधे न प्रकारान्तरस्थितिरित्यभियुक्तोक्तेः । तस्माद् "उपपन्नस्तल्लक्षणार्थोपलब्धे र्लोकवद्" इत्युक्तमयुक्तमिति । अस्योत्तरमाह—

**"अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम्"** ॥ ३१ ॥

तल्लक्षणार्थोपलब्धेरिति षष्ठ्या विपरिणम्यानुवर्तते । **सर्वेषां**=देवयानेन पथा ब्रह्मलोकं गतानां सर्वेषां ब्रह्मोपासकानाम**नियमः**=तल्लक्षणार्थोपलब्धेर्नियमो न विद्यते, **अविरोधः**=तत्र नास्ति श्रुतिविरोधः, कुतः ? **शब्दानुमानाभ्यां**=प्रतिपत्तेरिति शेषः, श्रुतिस्मृतिभ्यां तत्प्रतिपत्तेरित्यर्थः ।

यावन्तः खलु ब्रह्मोपासका ब्रह्मलोकं गच्छन्ति तेषां सर्वेषां ब्रह्मसाक्षात्कारप्राप्तिनियमो न विद्यते । तत्रापि ब्रह्मनिष्ठानामेव तत्प्राप्तिसम्भवात् । साधनसम्पत्तिप्रकर्षो हि मोक्षमाणानां सर्वदा सर्वत्र ब्रह्मसाक्षात्कारं प्रयोजयति न लोकविशेषः कश्चित् । नहि ये ब्रह्मलोकं गता अपि

तत्र तत्साधनभूतां ब्रह्मनिष्ठां यथापूर्वं नाभ्यस्यन्ति ते तत्साक्षात्कारं कर्हिचित्प्राप्नुवन्ति । साक्षात्काराप्राप्तौच युक्ता तेषामावृत्तिरिति न जातु स्मृतिर्विरुध्यते । न च तदुक्तश्रुतिविरोधः स्यादिति शङ्कितव्यम् । तत्र प्राप्तब्रह्मसाक्षात्काराभिप्रायकत्वेन विरोधाभावात् । प्राप्तब्रह्मसाक्षात्काराभिप्रायेण ह्येवंविधाः श्रुतयः प्रवर्तन्ते न प्राप्ताप्राप्तब्रह्मसाक्षात्कारमात्राभिप्रायेण। येषां खलु ब्रह्मलोके साधनाभ्यासप्रकर्षेण ब्रह्मसाक्षात्कारः प्रजायते तेषां न पुनरावृत्तिः, येषां च न प्रजायते तेषां पुनरावृत्तिरित्येष एव तासामभिप्रायः। अतो नास्ति तद्विरोधोऽपि कश्चित् । तदेतच्च श्रुतिस्मृतिभ्यां स्फुटं प्रतिपद्यते। अस्ति तावदुपकोसलविद्यायां श्रुतिः **"एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते"** (छां० ४ । १५ । ६) इति। **एतेन**=पूर्वाभिहितेन देवयानेन मार्गेण **प्रतिपद्यमानाः**=ब्रह्मलोकं गच्छन्त **इमं मानवं**=मनुसम्बन्धिनं मनोः सृष्टिलक्षणमावर्तं=यस्मिन् जन्ममरणप्रबन्धचक्रारूढा मनुष्या घटीयन्त्रवत् पौनःपुन्येनावर्तन्ते तं **नावर्तन्ते**=न प्रतिपद्यन्त इत्यर्थः। तत्रेममिति विशेषणोपादानादनावृत्तिरस्मिन् कल्पे कल्पान्तरे त्वावृत्तिरिति सूच्यते । अन्यथा विशेषणासाङ्गत्यापातात् । नहि सर्वदाऽनावृत्तौ विशेषणमिदं कथञ्चित् सङ्गच्छते । कल्पान्तरावृत्तौ च नास्ति तत्र गतानां सर्वेषां ब्रह्मसाक्षात्कारप्राप्तिनियम इति निःशङ्कं प्रतिपत्तुमीश्यते । साक्षात्कारप्राप्तौ कल्पान्तरेऽपि तदनुपपत्तेः । **"ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे"** (मुं० ३ ।२ । ६) इत्यादिका श्रुतिस्तु प्राप्तब्रह्मसाक्षात्कारविषयेत्यदोषः। स्मृतिश्च **"तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिः"** (सां० १ । ८३) इति । ततोऽपि ब्रह्मलोकेषु प्राप्तो विवेको विवेकपूर्वको ब्रह्मसाक्षात्कारो येन तस्यानावृत्तिं प्रतिपादयति श्रुतिर्नान्यस्याप्राप्तविवेकस्येत्यभिधानान्नास्ति ब्रह्मलोकं गतानां सर्वेषां ब्रह्मसाक्षात्कारप्राप्तिनियम इति व्यक्तमधिगम्यते । अन्यथा **"तत्र प्राप्तविवेकस्य"** इत्यभिधानानुपपत्तेः । सूत्रे **"सर्वेषाम्"** इत्यस्य स्थाने "सर्वासाम्" इति शङ्कराचार्य्याणां सम्मतः पाठः । तत्रापि ब्रह्मलोकगतिसाधनानां सर्वासां ब्रह्मोपासनानां ब्रह्मसाक्षात्कार-

जनकत्वानियम इत्यर्थो वेदितव्यः । तस्माद् "उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवद्" इति युक्तमुच्यते नायुक्तम् ॥ ३१ ॥

**ननु** ब्रह्मोपासनेन ब्रह्मलोकं गतानां ब्रह्मोपासकानां यथा ब्रह्मसाक्षात्कारप्राप्त्यनियमो विद्यते तथा ब्रह्मनियोगेन कस्मैचित् कार्य्यविशेषाय पृथिवीलोकमागतानां मुक्तानामपि कार्य्यावसाने पुनःस्वपदप्राप्त्यनियमः स्यादविशेषादिति । अस्योत्तरमाह—

**"यावदधिकारमवस्थितिराधिकारिकाणाम्" ॥ ३२ ॥**

**आधिकारिकाणां**=कस्मिँश्चिदधिकारे नियुक्तानां **यावदधिकारम्**=अधिकारसमाप्तिपर्य्यन्तम**वस्थितिः**=अवस्थानं भवतीत्यर्थः ।

यथा ह्यस्मदादयः सर्वेऽमी बद्धात्मानः खलु सांसारिका जनाः भगवतः परब्रह्मणः परमेश्वरस्यानुशासनेऽहर्निशं वर्तन्ते तथा मुक्तात्मानोऽपि तदनुशासने निरन्तरं वर्तन्ते । नहि बद्धो भवेन्मुक्तो वा स्यात् कश्चिदपि तदनुशासनमतिशयितुं पारयते । स किल मुक्तात्मनां बद्धात्मनां चाविशेषेणानुशास्ता नित्यं विराज्यते । यत्रेदमाम्नातं भवति "**उतामृतत्वस्येशानो यदन्नेनातिरोहति**" ( ऋ० ८ । ४ । १७ । २ ) इति । अमृतत्वस्येति मुक्तात्मान उच्यन्ते, यदन्नेनातिरोहतीति बद्धात्मानः । उभयेषामीशानः परब्रह्म परमेश्वरः पुरुष इति तदर्थः । यदा खलु सूर्य्यचन्द्रप्रभृतयोऽचेतनाः सन्तोऽपि नित्यं तदनुशासनमनुवर्तन्ते, यत्रेदं श्रुतं भवति "**एतस्य वा अक्षरस्य प्रशासने गार्गि! सूर्य्याचन्द्रमसौ विधृतौ तिष्ठतः, एतस्य वा अक्षरस्य प्रशासने गार्गि! द्यावापृथिव्यावविधृते तिष्ठतः**" ( बृ० ३ । ८ । ९ ) इति, तदा चेतना अमी बद्धात्मानो वा मुक्तात्मानो वेति किमु वक्तव्यम् । अस्ति भगवतस्तस्यैश्वर्य्यं तावदुपचयापचयवर्जितमेकरसं न तत् कर्हिचित् केनचिदुपचीयते न वा कर्हिचित् केनचिदपचीयते । चेदमी मुक्तिं प्राप्तास्तत्रभवन्तो योगिनस्तदनुशासनमुल्लङ्घ्यावतिष्ठेरन् तदाऽवश्यं तदैश्वर्य्यमपचीयेत । न स्यादसौ नूनं तदानी मुक्तानां तेषामी-

श्वरः। नहि ये तदनुशासनमुल्लङ्घ्यावतिष्ठन्ते ते तदीशनाविषयाः कर्हिचित् सम्भावयितुमपि शक्यन्ते। अधीयते च संसारी स्यान्मुक्तो वा भवेदविशेषेण स सर्वस्येश्वरः **"इन्द्रो यातोऽवसितस्य राजा शमस्य च शृङ्गिणो वज्रबाहुः। सेदु राजा क्षयति चर्षणीनामरान्न नेमिः परि ता बभूव"** (ऋ० १। २। ३८। १५) इति। **"सर्वस्येशानः सर्वस्याधिपतिः सर्वेषां भूतानां राजा"** (बृ० २ ५। १५) इति च। यः सर्वस्येश्वरो यस्यानुशासने च बद्धात्मान इव मुक्तात्मानोऽपि सर्वे वर्तन्ते स तान् यथासमयमधिकारविशेषे नियोक्तुं शक्नोति। तन्नियोगमनुवर्तमानाश्च तेऽपि महाभागाः पृथिवीतले यथाकालमवतरीतुं पारयन्ति। श्रूयते च तत्रभवतां मुक्तात्मनां तत्तत्कार्य्यविशेषं सम्पादयितुमधिकारविशेषे नियोजनं भगवतस्तस्य **"अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः। यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्"** (ऋ० ८। ७। ११। ५) इति। स्मर्य्यतेऽपि च **"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत!। अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम्"** (गी० ४। ७) इति। ते चैते भगवन्तो मुक्तात्मानो भगवता परब्रह्मणा तत्तत्कार्य्यविशेषं सम्पादयितुमधिकारविशेषे नियुज्यमाना यदेदं भूमिमण्डलं तावदवरुरुक्षन्ति तदैव भगवती प्रकृतिर्भगवदाज्ञया स्वच्छं सुनिर्मलं दिव्यमभिनवं शरीरेन्द्रियान्तःकरणात्मकमुपकरणजातं द्रागित्येव निर्माय सादरं तत्रभवद्भ्यस्तेभ्यः सम्प्रयच्छति, स्वयं च तन्निदेशं प्रतीक्षमाणा दासीव पुरतोऽहर्निशं बद्धाञ्जलिस्तिष्ठति। तदेतत् प्रकृतिदत्तमुपकरणजातमधिष्ठाय चावरोहन्तस्ते भगवन्तो यथाधिकारं तत्तत्कार्य्यविशेषं सम्पादयन्तोऽपि न जातु संसारदुःखेन मात्रयाऽपि संस्पृश्यन्ते। जन्मजराव्याधिजानि दुःखानि हि कर्मणाऽवतीर्णेषु प्रकृतिनिघ्नेषु जीवात्मसु नियम्यन्ते न भगवदाज्ञयाऽवतीर्णेषु प्रकृतिवशिषु तत्रभवत्सु मुक्तात्मसु। स्वरूपज्ञानं च तेषामावरणाभावाद् यथापूर्वमवतिष्ठते, तेन ते तेषु तेषु संसारकार्य्येषु वर्तमानाः

संसारिण इव न तत्रांशेनापि सज्यन्ते, पद्मपत्रमिव चाप्सु दिवानिशं प्रफुल्लवदनेक्षणा वरीवृत्यन्ते । मोक्षसुखं च निष्प्रत्यूहं पूर्ववदनुबोभूयन्ते । यत्रेदं समाम्नातं भवति **"तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत् परमं पदम्"** (ऋ० १।२।७।२१) इति । तेऽमी भगवन्तः प्रायेण सर्गादौ सर्गमध्येऽपि च कदाचन महीमण्डलमेतदलङ्कुर्वन्ति । यथाधिकारं स्वकर्तव्यं कर्म सुसम्पाद्य च पुनस्तदेवात्मीयं वैष्णवं पदं सुखेनारोहन्ति । न चोपासकानां ब्रह्मसाक्षात्कारप्राप्ताविव पुनःस्वपदप्राप्तौ तेषामनियमो विद्यते । अवस्थितेरिव तस्या अपि नियतत्वात् । यथा हि यावदधिकारं तेषामत्रावस्थितिर्नियम्यते तथा समाप्तेऽधिकारे पुनःस्वपदप्राप्तिरपि नियम्यते । नह्यधिकारसमाप्त्यनन्तरं तदवस्थितेरिह प्रयोजनं किञ्चिद्विद्यते येन स्वपदप्राप्तावप्यनियमः कल्प्येत । तस्माद् ब्रह्मोपासनेन ब्रह्मलोकं गतानां ब्रह्मोपासकानां ब्रह्मसाक्षात्कारप्राप्त्यनियमेऽपि भगवन्नियोगेन कस्मैचित्कार्य्यविशेषाय कञ्चिदधिकारविशेषं सम्प्राप्य भूमिमण्डलमागतानां मुक्तात्मनां तत्परिसमाप्तौ नास्ति पुनः स्वपदप्राप्त्यनियम इति सुदृढं मनसि धर्त्तव्यम् ॥ ३२ ॥

समाप्तः प्रासङ्गिको विचारः । सम्प्रति पुनःप्रकृतमनुसरन्नाह—

**"अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम्"** ॥ ३३ ॥

तुना वेधादिवदनवरोधो व्यवच्छिद्यते । **अक्षरधियाम्**=अक्षरविद्यायां पठितानामस्थूलत्वादीनाम**वरोधः**=सर्वेषु ब्रह्मोपासनेषु सम्बन्धः उपसंहारोऽवगन्तव्यः, कुतः ? **सामान्यतद्भावाभ्याम्**=उपास्यस्य ब्रह्मणः समानत्वादस्थूलत्वादीनां च तद्धर्मत्वात् । अवरोधे दृष्टान्तः **औपसदवत्**=तैत्तिरीयके जामदग्न्येऽहीने विहितासूपसत्संज्ञिकास्विष्टिषु पुरोडाशप्रदानाङ्गत्वेनोद्गातृब्राह्मणे चोदिता मन्त्रा औपसदाः, तेषां पुरोडाशप्रदानकर्त्राऽध्वर्युणा सम्बन्धवत् । **तत्**=तदिद**मुक्तं**=पूर्वमीमांसायामभिहितमित्यर्थः ।

बृहदारण्यके ह्यक्षरविद्यायां पठ्यते **"एतद्वै तदक्षरं गार्गि! ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमसुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन"** ( बृ० ३ । ८ । ८ ) इति । **तमः**=प्रकृतिः । तथाऽऽथर्वणे पठ्यते **"अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्"** ( मुं० १ । १ । ६ ) इति । तत्र संशयः—किमिह पठ्यमाना अस्थूलत्वादयो गुणाः सर्वेषु ब्रह्मोपासनेषूपसंह्रियन्ते किंवा नोपसंह्रियन्त इति । नोपसंह्रियन्त इति पूर्वःपक्षः, उपसंह्रियन्त इति सिद्धान्तः । किं तावत् प्राप्तम्? नोपसंह्रियन्त इति वदामः । यथाश्रुति व्यवस्थानस्यैवौचित्यात् । यावन्तो हि गुणा यत्र ब्रह्मोपासनेऽपेक्ष्यन्ते तावन्तस्ते श्रुत्या तत्र श्राव्यन्ते । श्रावितानां च तेषां युक्तं यथाश्रुति व्यवस्थानं नायथाश्रुति सर्वत्रोपसंहार इति । **एवं** प्राप्तेऽभिधीयते—**सामान्यतद्भावाभ्यां स्यादुपसंहारः** । उपास्यं खलु ब्रह्म सर्वत्रोपासनेषु समानं विद्यते, अस्थूलत्वादयो गुणाश्चोदाहृतश्रुतिभ्यां तद्धर्माः समधिगम्यन्ते । तेषां च क्वचिदेकत्र पठितानामपि सर्वत्र धर्मिणा भगवता तेन सम्बन्धो युज्यत इति सम्यगवगच्छामः । नहि धर्मा भवन्ति धर्मिणं च सर्वतो न सम्बध्नन्तीति कथञ्चित् संश्लिष्यते । अवश्यम्भाविनं हि तेन तत्सम्बन्धं निश्चिनुमः । अन्यथा गुणगुणिभावानुपपत्तेः । अन्यत्र पठितानां च गुणानामन्यत्र पठितेन गुणिना सम्बन्धे दृष्टान्त औपसदवत् । तैत्तिरीयके हि **"जमदग्निः पुष्टिकामश्चतूरात्रेणायजत"** इत्युपक्रम्य जमदग्निना मुहुर्मुहुरनुष्ठितत्वाज्जामदग्न्योऽहीनश्चतूरात्रसंज्ञकः कश्चित् क्रतुविशेषो विधीयते । तत्र चाध्वर्युकर्तृकाः **"पुरोडाशिन्य उपसदो भवन्ति"** इति याः काश्चित् पुरोडाशसाध्या इष्टिविशेषाश्चोद्यन्ते ता उपसदः परिभाष्यन्ते । तत्र पुरोडाशप्रदानाङ्गत्वेन सम्बद्धा मन्त्राश्चोद्गातृब्राह्मणे पठ्यन्ते **"अग्ने! वेर्होत्रं वेर-**

**ध्वरम्**" (ताण्ड्य० २१ । १० । ११) इत्येवमादयः । तेषामापाततो ब्राह्मणसम्बन्धादुद्गातृसम्बन्धे प्राप्ते पुरोडाशप्रदानस्याध्वर्युकर्तृकत्वादङ्गानां च प्रधानतन्त्रत्वाद् यथा पुरोडाशप्रदानकर्त्राऽध्वर्युणा सम्बन्धस्तथाऽत्राप्य-स्थूलत्वादीनां गुणानां सर्वत्रोपास्येन ब्रह्मणा सम्बन्ध इत्यवगन्तव्यम् । तदिदमुक्तं पूर्वमीमांसायाम् "**गुणमुख्यव्यतिक्रमे तदर्थत्वान्मु-ख्येन वेदसंयोगः**" (मी० ३ । ३ । ९) इत्यत्र । **मुख्येन**=प्रधानेन, **वेदसंयोगः**=मन्त्रसंयोगः ॥ ३३ ॥

**नन्वेवम्भूताः** कियन्तस्ते भगवतः परब्रह्मणः परमेश्वरस्य गुणा वर्तन्ते ये तदुपासनेषु सर्वत्रोपसंह्रियन्त इति । अस्योत्तरमाह—

"**इयदामननात्**" ॥ ३४ ॥

**इयत्**=एतावद् यावदुक्तं तावद्गुणजातं ब्रह्मोपासनेषु सर्वत्रोपसंहर्तव्यं वेदितव्यं, कुतः ? **आमननात्**=तावन्त एव तत्रतत्र श्रुतिषु सर्वत्रा-वबोधनादित्यर्थः ।

यद्यपि जगज्जन्मादिकारणस्य परमपितुर्भगवतः परब्रह्मणः परमेश्वरस्य किलासंख्येया गुणा विद्यन्ते तथापि मुमुक्षूणामस्माकमेतावन्त एव ते तदुपासनायामुपयुज्यन्ते यावन्तः "**आनन्दादयः प्रधानस्य**" (वे० ३ । ३ । ११) इत्यारभ्य "**अक्षरधियां त्ववरोधः**" (वे० ३ । ३ । ३३) इत्यन्तेषु सूत्रेषु तत्र सर्वत्रोपसंहर्तव्यत्वेन निर्धा-र्यन्ते । अल्पज्ञो ह्येष तावदुपासको मुमुक्षुः । न च तेन सहस्रैरपि पुरुषायुषैः सर्वैर्गुणैरुपेतं ब्रह्म कर्हिचिदुपासितुमीश्यते । तेषां संख्याविर-हेण ज्ञातुमशक्यत्वात् । श्रुतिषु च तदवबोधनार्थं प्रवृत्तासु तत्रतत्रा-नन्दादय एव कतिपयगुणाः समाम्नायमाना दृश्यन्ते । प्रमाणं च नः श्रुतयोऽतीन्द्रियार्थेषु सर्वत्र । तस्मात् तत्समाम्नातमेतावदेव गुणजातं ब्रह्मोपासनेषु सर्वत्रोपसंह्रियते नाधिकमिति निश्चेतव्यम् ॥ ३४ ॥

**ननु यस्य भगवतः परब्रह्मणः परमेश्वरस्योपासनेषु सर्वत्रोपसंहर्तव्य-मेतावद्गुणजातं श्रुतिभिरवबोध्यते तदुपासकेन मुमुक्षुणा क सततमुपासि-तव्यमिति । अस्योत्तरं पठति—**

**"अन्तरा भूतग्रामवत् स्वात्मनः" ॥ ३५ ॥**

आमननादित्यनुवर्तते । **स्वात्मनः**=स्वस्यात्मनोऽ**न्तरा**=मध्ये मुमुक्षुणोपासकेन ब्रह्म सततमुपासितव्यम्, **आमननात्**=तत्रैव तदामननात्, **भूतग्रामवत्**=भूतग्रामो देहः, तन्मध्ये स्वात्मवदित्यर्थः।

यथा हि जीवात्मोपासकाः खलु मेधाविनस्तत्साक्षात्काराय सततं स्वशरीराभ्यन्तरे तं योगेन समुपासते । तस्य तत्रावस्थानात् । यत्रेदं समाम्नायते **"तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति"** ( कठ० २ । १२ ) इति, तथा जगज्जन्मादिकारणं सर्वज्ञं सर्वशक्ति ब्रह्मापि साक्षात्काराय स्वात्मनोऽभ्यन्तरे मुमुक्षुणोपासकेन सततमुपासितव्यम् । तस्यापि तत्रावस्थानात् । यथा हि जीवात्मा खलु शरीरस्यान्तरवतिष्ठते तथा ब्रह्मापि जीवात्मनोऽन्तरवतिष्ठते । यत्रेदं श्रुतं भवति **"सूर्य्य आत्मा जगतस्तस्थुषश्च"** ( ऋ० १ । ८ । ७ । १ ) **"अयमन्तरात्मन् पुरुषः"** ( शत० १० । ६ । ३ । २ ) **"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति"** ( कठ० ४ । १२ ) **"य आत्मनि तिष्ठन्नात्मनोऽन्तरः"** ( बृ० मा० ३ । ७ । ३० ) इति । यस्य यत्रावस्थानं तस्य तत्रैवोपासनं युज्यते नान्यत्र । समाम्नातं च साक्षादुपनिषत्सु तत्रैव तदुपासनम् **"तमात्मस्थं येऽनुपश्यन्ति धीराः"** ( कठ० ५ । १२ ) **"एष म आत्माऽन्तर्हृदये"** ( छां० ३ । १४ । ३ ) **"एवमात्माऽऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति"** ( श्वे० १ । १५ ) इति । **गृह्यते**=साक्षात्क्रियते, **अनुपश्यति**=समुपास्ते । तस्मादुपासकेन मुमुक्षुणा स्वात्माभ्यन्तरे जगतः पितृचरणं ब्रह्म सततमुपासितव्यम् ॥३५॥

अत्राशङ्क्य समाधत्ते—

**"अन्यथाभेदानुपपत्तिरिति चेन्नोपदेशान्तरवत्" ॥ ३६ ॥**

अन्तरा स्वात्मन इत्यनुवर्तते । **अन्यथाभेदानुपपत्तिः**=अन्यथे-

पलभ्यमानोपदेशभेदानुपपत्तिः—स्वात्मनोऽन्तरा ब्रह्मण्युपासितव्ये प्रकारान्तरेणोपलभ्यमानोपासनोपदेशविशेषानुपपत्तिरिति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः? यत **उपदेशान्तरवत्**=उपासनोपदेशतोऽन्यः कर्मोपदेश उपदेशान्तरं तद्वदुपपद्यत इत्यर्थः ।

**अथोच्येत**—न खलु सर्वज्ञं सर्वशक्ति ब्रह्म मुमुक्षुणोपासकेन स्वात्मनोऽन्तरा सततमुपासितव्यमिति युक्तमुच्यते । प्रकारान्तरेणोपलभ्यमानतदुपासनोपदेशविशेषानुपपत्तेः । वेदान्तेषु हि भगवतस्तस्योपासनमन्यथोपदिश्यमानमुपलभ्यते । तथा हि छान्दोग्ये वैश्वानरोपासनायां "**तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ । यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति**" ( छां० ५ । १८ । १ ) इति प्रत्येकमादित्यादौ ब्रह्मोपासनं विनिन्द्य द्युप्रभृतिपृथिवीपर्य्यन्ते सर्वस्मिन्नस्मिन् त्रिलोकीशरीरे च फलप्रदर्शनपूर्वकं विधाय तत्स्वरूपजिज्ञासायामाम्नायते "**तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो वस्तिरेव रयिः पृथिव्येव पादौ**" ( छां० ५ । १८ । २ ) इति । तदिदं स्वरूपमुपास्यस्य तस्य मुण्डकेऽपि प्रव्यक्तमुपदिश्यते "**अग्निर्मूर्धा चक्षुषी चन्द्रसूर्य्यौ दिशः श्रोत्रे वाग् विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा**" ( मुं० २ । १ । ४ ) इति । तथाऽथर्वसंहितायाम् "**यस्य भूमिः प्रमाऽन्तरिक्षमुतोदरम् । दिवं यश्चक्रे मूर्धानं तस्मै ज्येष्ठाय ब्रह्मणे नमः**" ( अथ० १० । ४ । ७ । ३२ ) इत्यादिना । न चोपासकेन मुमुक्षुणा स्वात्माभ्यन्तरे सततमुपासितव्ये भगवति ब्रह्मणि त्रिलोकीशरीरेऽस्मिन्नुपदिश्यमानमिदं तदुपासनं कथञ्चिदुपपद्यते । यत्कारणं स्वात्मप्रदेशाद् द्युलोकादिपृथिवीलोकान्तः प्रदेशो भिद्यते । परोक्षोऽसौ प्रत्यक्षोऽयमिति च भेदान्तरम् । न च तत्रोपदिश्यमानमत्रोपदिश्य-

मानं कदाचित् सम्पद्यते । तस्मान्मुमुक्षुणा स्वात्माभ्यन्तरे ब्रह्मण्युपासितव्ये स्यादवश्यमन्यथोपदेशभेदानुपपत्तिरिति । **नैतद्वक्तव्यम्** । कर्मोपदेशभेदवदुपपत्तेः । अन्यथोपासनोपदेशभेदः खलु कर्मोपदेशभेदवदुपपद्यते । यथा ह्यधिकारिभेदादग्निहोत्रं कर्म बाह्यमध्यात्मं च द्वेधोपदिश्यते । ब्रह्मचारिणां गृहिणां वनिनां च बाह्यं, यत्रेदमाम्नायते तैत्तिरीयाणाम् **"जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवा जायते ब्रह्मचर्य्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः । एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी"** (तै० सं० ६ । ३ । १० ) इति । विरक्तानां चतुर्थाश्रमिणामध्यात्मं, यत्रेदं स्मर्य्यते **"समारोपणादात्मन्यप्रतिषेधः"** (न्या० ४ । १ । ६१ ) इति । **"प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम् । आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्"** (मनु० ६ । ३८) इति च । तथा वैश्वानरोपासकानां, यत्रेदमाम्नातं भवति छन्दोगानाम् **"उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्य्यपचन आस्यमाहवनीयः"** ( छां० ५ । १८ । २ ) **"तद् यद् भक्तं प्रथममागच्छेत् तद्धोमीयम् । स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहेति प्राणस्तृप्यति"** ( छां० ५ । १९ । १ ) इत्युपक्रम्य **"अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति । २ । तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति"** ( छां० ५ । २४ । २–३ ) इति, तथा ब्रह्मोपासनमप्यधिकारिभेदादनेकधोपदिश्यते । तत्र विरक्तानां मोक्षमाणानां स्वात्मनि, तत्तत्फलविशेषकामानामितरेषां च संसारिणां हृदयादिब्रह्माण्डान्तेषु नानाविधप्रदेशेष्विति नास्ति वैदिकानां शास्त्रश्रमजुषां परोक्षम् । उपास्यस्य भगवतो ब्रह्मणश्च तत्र सर्वत्रैकत्वेऽपि गुणस्थानभेदेनोपासनभेदस्तत्फलभेदश्चेष्यते । तस्मादुपासकेन मुमुक्षुणा सर्वज्ञं

सर्वशक्ति ब्रह्म स्वात्माभ्यन्तरे सततमुपासितव्यमिति युक्तमुच्यते नास्त्यन्यथोपदेशभेदानुपपत्तिः ॥ ३६ ॥

**ननु** स्वात्माभ्यन्तरे सर्वज्ञं सर्वशक्ति ब्रह्मोपासीनो मुमुक्षुः कथं सुनिष्पन्नमिदमुपासनं विजानीयात् । को हि सुनिष्पन्नस्य तस्य परमोऽवधिरिति । अस्योत्तरं पठति—

**"व्यतिहारो विशिंषन्ति हीतरवत्"** ॥ ३७ ॥

**व्यतिहारः**=उपास्योपासकयोरन्योऽन्यात्मतासम्प्रत्ययः परमोऽवधिरुपासनस्यावगन्तव्यः, कुतः ? **हि**=यस्मादि**तरवत्**=इतरस्येतरात्मवद् **विशिंषन्ति**=प्रतिपादयन्ति साक्षादैतरेयका इत्यर्थः ।

यदा खल्वेष उपासकः स्वस्मिन्नुपास्ये ब्रह्मणि चोभयस्मिन्नुपासनोत्कर्षात् सम्प्राप्तामन्योऽन्यात्मतां सम्प्रतीयात् तदा सुनिष्पन्नं मामकीनमुपासनमिदमिति निःशङ्कं विजानीयात् । एवंविधसम्प्रत्ययस्यैव तत्परमावधित्वाभ्युपगमात् । प्रतिपादयन्ति च सुनिष्पन्ने तस्मिन्नुपास्योपासकयोरुभयोरन्योऽन्यात्मतां साक्षादैतरेयकाः **"योऽहं सोऽसौ, योऽसौ सोऽहम्"** ( ऐ० आ० २ । २ । ४ । ६ ) इति । न च सम्प्राप्तायां तस्यामुपासकस्य मुमुक्षोरन्यत् किञ्चिदुपासनकृत्यं परिशिष्यते । नूनं तस्य तत्सम्प्राप्तौ सर्वं तत्कृत्यं परिसमाप्यते । स हि परमोऽवधिरुपासनस्येति वैदिकैरभ्युपगम्यते । विश्वस्य मातापितृब्रह्म च तावन्मात्रेणैव प्रसासद्यते । प्रसासद्यमानं च तत्रभवन्तमेनं कृपया परया द्रागित्येव वेव्रीयते, स्वां तनुं च तद्दर्शनार्थं निःसङ्कोचं निरावेव्रीयते । यामसौ साक्षात्पश्यन् प्रमोमुद्यते जीवन्नेव चात्मना स्वेन मुक्तिसुखं बाभज्यते । यत्रेदमुदाहृतं भवति **"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्"** ( मुं० ३ । २ । ३ ) **"सम्प्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः । ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति"** ( मुं०

: । २ । ५ ) इति । तस्मादुपासनस्य परमोऽवधिः परस्परात्मभावसम्प्र-
यय इति युक्तं विज्ञायते ॥ ३७ ॥

**सा**मान्यतो ब्रह्मोपासनेषु गुणोपसंहारश्चिन्तितः । प्रसङ्गात् कति-
यार्था अपि च निर्धारिताः । सम्प्रति विशेषतो ब्रह्मोपासनेषु केषुचिद्
गुणोपसंहारश्चिन्तयिष्यते, प्रासङ्गिकोऽर्थोऽपि च मध्ये निर्धारयिष्यते।
तत्र विशेषतो गुणोपसंहारचिन्तनस्य चेदमादिमं सूत्रम्—

**"सैव हि सत्यादयः" ॥ ३८ ॥**

**हि**=यस्मात् **सैव**=छान्दोग्योपनिषदि या शाण्डिल्यविद्या समाम्नाता
सैव बृहदारण्यकोपनिषदि समाम्नायते तस्मात् **सत्यादयः**=छान्दोग्यो-
पनिषदि श्रुताः सत्यसङ्कल्पत्वादयो बृहदारण्यकोपनिषदि श्रुताः सर्वेशान-
त्वादयश्च गुणाः परस्परमुपसंहर्तव्या इत्यर्थः ।

छान्दोग्योपनिषदि शाण्डिल्यविद्या तावत् समाम्नायते **"सर्वं
खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत। स क्रतुं
कुर्वीत । १ । मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प
आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः
सर्वमिदमभ्यात्तोऽवाक्यनादरः । २ । एष म आत्माऽन्त-
र्हृदयेऽणीयान् व्रीहेर्वा यवाद् वा सर्षपाद्वा श्यामाकाद्वा
श्यामाकतण्डुलाद्वा। एष म आत्माऽन्तर्हृदये ज्यायान्
पृथिव्या ज्यायानन्तरिक्षाद् ज्यायान् दिवो ज्यायानेभ्यो
लोकेभ्यः"** ( छां० ३ । १४ । १–२–३ ) इति । तथा बृहदारण्य-
कोपनिषदि **"मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये
यथा व्रीहिर्वा यवो वा, स एष सर्वस्येशानः सर्वस्याधि-
पतिः सर्वमिदं प्रशास्ति यदिदं किञ्च"** ( बृ० ५ । ६ । १ )
इति । तत्र संशयः—किं छान्दोग्योपनिषदि या विद्या समाम्नाता सैव
बृहदारण्यकोपनिषदि समाम्नायते किंस्विदन्या काचिद् । उपनिषद्वा-
क्या न्यायविदिति प्राप्तेऽभिधीयते—सैव चोदनाद्यविशेषात् । अन्यत्वे हि

चोदनादयो विशिष्येरन् । न च तद्विशेषमिह कञ्चित् पश्यामः । अविशेषे च येयं शाण्डिल्यविद्या छान्दोग्योपनिषदि समाम्नायते सैव बृहदारण्यकोपनिषदि समाम्नायत इत्यवगम्यते । तत्रोभयत्र विद्यैकत्वावगतौ च छान्दोग्योपनिषदि शाण्डिल्यविद्यायां ये सत्यसङ्कल्पत्वप्रभृतयो गुणाः श्राव्यन्ते ते बृहदारण्यकोपनिषदि शाण्डिल्यविद्यायां, तत्र श्रुताः सर्वेशानत्वप्रभृतयो गुणाश्च छान्दोग्योपनिषदि शाण्डिल्यविद्यायामुपसंहर्तव्याः । विद्याऽविशेषे गुणाविशेषस्याप्यौचित्यात् । **एतेन** वाजसनेयिनामग्निरहस्ये **"स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपम्"** ( शत० १० । ६ । ३ । २ ) इत्यादिना समाम्नाता शाण्डिल्यविद्याऽपि सैवेत्यवगन्तव्यम् । न्यायसामान्यात् । उपनिषदादिभेदश्चोपदेष्टव्यभेदनिबन्धनो न विद्याभेदं प्रयोजयितुमर्हति ॥ ३८ ॥

शाण्डिल्यविद्यायामुक्तो गुणोपसंहारः । सम्प्रति दहरविद्यायामुच्यते-

**"कामादीतरत्र तत्र चायतनादिभ्यः" ॥ ३९ ॥**

सैव हीत्यनुवर्तते । **कामादि**=सत्यकामप्रभृतिगुणजात**मितरत्र**=बृहदारण्यके, **तत्र च**=छान्दोग्ये च दहरविद्यायामुपसंहर्तव्यम्, कस्मात्? **हि**=यस्मादा**यतनादिभ्यः**=हृदयायतनादिभ्यः समानधर्मेभ्यस्तत्रोभयत्र सैवैका विद्या गम्यत इत्यर्थः ।

छान्दोग्योपनिषदि हि **"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः"** ( छां० ८ । १ । १ ) इत्यादिना दहरविद्यां समाम्नाय श्राव्यते **"एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः"** ( छां० ८ । १ । ५ ) इत्यादि, तथा बृहदारण्यकोपनिषदि समाम्नायते **"स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते, सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः"** ( बृ० ४ । ४ । २२ ) इत्यादि । तत्र संशयः—किं छान्दोग्योपनिषदि येयं

दहरविद्या समाम्नाता सैव बृहदारण्यकोपनिषदि समाम्नायते किंवाऽन्या काचित्। अन्या काचिदिति पूर्वः पक्षः, सैवेति सिद्धान्तः। किं तावत् प्राप्तम्? अन्या काचिदिति ब्रूमः। रूपभेदात्। छान्दोग्योपनिषदि अप-हतपाप्मत्वादिगुणविशिष्ट आकाश उपास्यः समाम्नायते, बृहदारण्यको-पनिषदि च वशित्वादिगुणविशिष्ट आत्मा। सोऽयमुपास्यभेदो रूपभेदः। द्रव्यदैवतस्य यागरूपत्ववदुपास्यस्योपासनरूपत्वाभ्युपगमात्। रूपभेदे चान्या छान्दोग्योपनिषदि दहरविद्या पठ्यते बृहदारण्यकोपनिषदि चान्या, न जातु यैवैकत्र सैवान्यत्रेति युक्तमालोचामह इति। एवं प्राप्तेऽभिधी-यते—सैवायतनादिभ्यः। हृदयायतनत्वादयो धर्माः खलु समाना उभयत्र पठ्यमाना उपलभ्यन्ते। यथा हि छान्दोग्योपनिषदि हृदयायतनत्वं सेतुत्वं विधरणत्वं चोपास्यस्य धर्माः पठ्यन्ते तथा बृहदारण्यकेऽपि पठ्यन्ते। न चोभयत्रोपलभ्यमानं नानाधर्मसामान्यमेतद् विद्याभेदे सति कथञ्चित् सङ्गच्छते। धर्मसामान्ये च विद्यासामान्यमपि युक्तं मन्यामहे। यत्तु छान्दोग्योपनिषदि किलोपास्य आकाशो बृहदारण्यके चात्मा हृदया-काशे श्यान इति विशेषः, सोऽप्यापातरमणीयः। "दहर उत्त-रेभ्यः" (वे० १।३।१४) इत्यत्र छान्दोग्योपनिषदि श्रूयमाण-माकाशं ब्रह्मैवेति विस्तरेण प्रतिष्ठापितत्वात्। बृहदारण्यकोपनिषदि चात्म-शब्दं ब्रह्मैवेति सुप्रसिद्धम्। हृदयाकाशं चात्र हृदयछिद्रमभिप्रेयते न ब्रह्मेत्यविशेषः। तस्माच्छान्दोग्योपनिषदि श्रुतं सत्यकामादिगुणजातं बृहदारण्यके दहरोपासनायामत्र श्रुतं च सर्ववशित्वादिगुणजातं छान्दोग्ये दहरविद्यायामुपसंहर्तव्यम्॥ ३९॥

छान्दोग्यबृहदारण्यकयोः शाण्डिल्याद्युपासनं समानं, समानत्वात् परस्परं पठिताः सत्यसङ्कल्पत्वादयो गुणाश्चोपसंहर्तव्या इत्युक्तम्। सम्प्रति तद्वि-षयं विशेषान्तरमाह—

**"आदरादलोपः" ॥ ४० ॥**

**आदरात्**—तदिदं ब्रह्मोपासनं मुमुक्षुणोपासकेनादरात् सत्कारात् तपो-

ब्रह्मचर्य्यश्रद्धातिशयात् सततं विधातव्यम्, **अलोपः**=कदापि तस्य लोपो विच्छेदो मा भूदित्यर्थः ।

उपासनं हि भगवतो ब्रह्मणः सत्कारेण नैरन्तर्य्येण दीर्घकालेन च यथाशास्त्रं विधीयमानं मुमुक्षूणामुपासकानां सम्यक्फलायावकल्पते न वैपरीत्येन । किं न लोक्यते लौकिकैश्वर्य्यफलकं तत्तत्साधारणं कर्मापि यदा स्वानुष्ठाने सत्कारादिकं नियमेनापेक्ष्य फलं प्रसूते तदा संसारार्णवतरणसाधनं साक्षाद् ब्रह्मदर्शनं फलं प्रसोतुं ब्रह्मोपासनं स्वानुष्ठाने सत्कारादिकमपेक्षत इति किमु वक्तव्यम् । नहि लोके किमपि कर्म कदाचिद् विधीयेत कदाचिन्न विधीयेत, विधीयेत वाऽनादरेण विधीयेत, फलं च यथावत् प्रसूयेतेति क्वचिदनुभूयते येनेदमपि तथा विधीयमानं यथावदात्मफलं प्रसोष्यत इति कल्प्येत । नूनमेतदसाधारणं बहुकठिनं च कर्म यत्र सांसारिकं विषयजातं पृष्ठतो विधाय करतलनिहितजीवनो मुमुक्षुरधिक्रियते न सांसारिकविषयाभिलाषुकः कृपणो जनः । अत एव चौपनिषदाः किल महर्षयो दुर्गमपथेनैनदुपमिमते, तत्पथिकेभ्यो मुमुक्षुभ्यश्च तत्र गमनाय प्रयत्नातिशयमनुशासते "**उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत । क्षुरस्य धारा निशिता दुरत्यया दुर्गम पथस्तत्कवयो वदन्ति**" ( कठ० ३ । १४ ) इति । स्वयं श्रुतिश्च ब्रह्मोपासने मुमुक्षूणामादरातिशयमवगमयति "**ये चेमेऽरण्ये श्रद्धा तप इत्युपासते**" ( छां० ५ । १० । १ ) इति । "**ये चामी अरण्ये श्रद्धां सत्यमुपासते**" ( बृ० ६ । २ । १५ ) इति च । मन्त्रवर्णोऽपि च सर्वेषामुपास्यं ब्रह्म तदाश्रितममृतं मृत्युं च प्रतिपादयन् मुमुक्षूणां तदुपासने बह्वादरं दर्शयति "**य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः । यस्य छायाऽमृतं यस्य मृत्युः**" ( ऋ० ८ । ७ । ३ । २ ) इति । **आत्मदा** प्राणदा । **प्रशिषं**=प्रशासनं, **छाया**=छायावदधीनम्, **अमृतं**=मोक्षः **मृत्युः**=पुनःपुनर्मरणं संसार इति यावत्, प्राणिनामिति शेषः । उपलभ्यते च कर्ममात्रस्य श्रद्धोपदेशः साक्षाद् भगवति वेदे, ब्रह्मोपासन

स्येति तु किमु वक्तव्यम् "**कस्तमिन्द्र! त्वा वसुमा मर्त्यो दधर्षति । श्रद्धा इत्ते मघवन्! पार्थ्ये दिवि वाजी वाजं सिषासति**" ( ऋ० ४ । ३ । १९ । १४ ) इति । स्पष्टं च गीतायाम् "**मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते । श्रद्धया परयोपेतास्ते मे युक्ततमा मताः**" ( गी० १२ । २ ) इति । तस्मादुपासकेन मुमुक्षुणा परमादरतो निरन्तरं सर्वज्ञं सर्वशक्ति ब्रह्मोपासितव्यमुपासनलोपभिया च क्षणमपि ततो नोपरन्तव्यम् ॥ ४० ॥

**ननु** ब्रह्मोपासने मुमुक्षूणामादरातिशयः किमर्थमुच्यत इति । अस्योत्तरं पठति—

"**उपस्थितेऽतस्तद्वचनात्**" ॥ ४१ ॥

**अतः**=अस्माद् ब्रह्मोपासनाद्**उपस्थिते**=उपस्थितिं गते प्राप्ते साक्षात्काररूपे ब्रह्मज्ञाने मोक्षो मुमुक्षुभिरुपसम्पद्यते, कुतोऽवगम्यते? **तद्वचनात्**=तत्प्रतिपादकश्रुतिवचनादित्यर्थः ।

दीर्घकालनैरन्तर्य्यसत्कारासेविताद्धि ब्रह्मोपासनात्तद्गोचरः साक्षात्कारः खलु मुमुक्षूणामुपतिष्ठते । ततश्च तत्प्राप्तिलक्षणो मोक्षस्तैर्यथाकाममुपसम्पद्यते । तदेतद् "**एष म आत्माऽन्तर्हृदये, एतद् ब्रह्म, एतमितः प्रेत्याभिसम्भवितास्मीति । यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माह शाण्डिल्यः**" ( छां० ३ । १४ । ४ ) इत्यादिकाच्छ्रुतिवचनात् स्फुटमवगच्छामः । प्राप्तिरभिसम्भूतिः । "भू—प्राप्तौ" इति स्मृतेः । यस्य विदुषो ब्रह्मोपासकस्य **स्यात्**=भवेद**द्धा**=ब्रह्मगोचरः साक्षात्कारस्तस्य **विचिकित्सा**=तत्प्राप्तौ संशयो **नास्ति**=न विद्यत इति ह स्माह शाण्डिल्यो महर्षिरित्यर्थः । चेद् ब्रह्मोपासने मुमुक्षूणामादरातिशयो नोच्येत तदा यथोचितानुष्ठानाभावेन न जातु ब्रह्मगोचरः साक्षात्कारस्तेषामुपतिष्ठेत । तदनुपस्थितौ च न मोक्षस्तैः कर्हिचिदुपसम्पद्येत । मा नामैवं भूदित्येतदर्थं तत्रादरातिशयस्तेषामभिधीयते ॥ ४१ ॥

उपासनादुपस्थितिर्ज्ञानस्येत्यभिहितम् । तदुपशृण्वतस्तदुपस्थितिप्रकारविषया जिज्ञासा प्रवर्तते—किमुपासनतो ज्ञानं साक्षादुपतिष्ठत इति नियम्यते, किमुतोपासनं तदुपस्थितिप्रतिबन्धमपाकुरुते ततो ज्ञानं स्वयं प्रवर्तत इत्युच्यत इति । तामिमां जिज्ञासामुपशामयन्नाह—

**"तन्निर्धारणानियमस्तद्दृष्टेः पृथग् ह्यप्रतिबन्धः फलम्" ४२**

अत इत्यनुवर्तते । चार्थो हिः । **तन्निर्धारणानियमः**=तदा ब्रह्म परामृश्यते, निर्धारणं निश्चयः, चिदचिद्व्यतिरेकेण साक्षात्कारलक्षणं ज्ञानमिति यावत्, उपासनतो ब्रह्मज्ञानस्य नियमाभावो वेदितव्यः, कुतः? **तद्दृष्टेः**=उपासनाभावे तदुपलब्धेः, **पृथग् हि**=पृथक् च ज्ञानादप्रतिबन्धः=तदुपस्थितौ यः कश्चित् प्रतिबन्धस्तदभावः **फलम्**=उपासनफलमभ्युपगम्यत इत्यर्थः ।

उपासनं हि दीर्घकालनैरन्तर्य्यसत्कारासेवितं ज्ञानोपस्थितौ चित्तविक्षेपादिलक्षणो यः कश्चित् प्रतिबन्धो वरीवृत्यते तमविलम्बेन समूलकाषं कषति । ततश्च निर्व्यापारे सुप्रसन्ने चेतसि जातायामृतम्भरायां प्रज्ञायां समधिगतेन स्वरूपप्रतिष्ठेन प्रत्यगात्मना ब्रह्मगोचरं साक्षात्कारात्मकं ज्ञानं स्वयमेवोपतिष्ठते । सोऽयं तदुपस्थितिप्रकारो वैदिकैरनुमन्यते नोपासनतो ज्ञानं साक्षादुपतिष्ठत इति नियम्यते । यद्येवं नियम्येत तदोपासनाभावे तदुपस्थितिर्न निरीक्ष्येत । नहि नियमेन यद् यदनन्तरं भवति तत् तदभावेऽपि सम्भवतीति क्वचिन्निरीक्ष्यते । श्रुतिश्च जीवात्मज्ञानानन्तरं ब्रह्मज्ञानं प्रतिपादयन्ती सुव्यक्तमुपासनाभावेऽपि ब्रह्मज्ञानं जायत इत्यवगमयति **"यः सर्वज्ञः सर्वविद् यस्यैष महिमा भुवि । दिव्ये ब्रह्मपुरे ह्येष व्योमन्यात्मा प्रतिष्ठितः । मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय । तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद् विभाति"** (मुं० २ । २ । ७) इति । सर्वेषामिन्द्रियार्थानां ज्ञाता सर्वज्ञो, वेत्ता सर्ववित् । **ब्रह्मपुरे**=हृदयपुण्डरीके, **व्योम्नि**=हृदयपुण्डरीकव्योम्नि, **आत्मा**=जीवात्मा, **अन्ने**=अन्नमये शरीरे, **प्रतिष्ठितः**=स्थितः, **तद्वि-**

**ज्ञानेन**=जीवात्मविज्ञानेन, **परिपश्यन्ति**=साक्षात्कुर्वन्ति, **धीराः**=धीमन्तः, **आनन्दरूपम्**=आनन्दस्वरूपम्, **अमृतं**=स्वरूपोपाधिभ्यां मरणरहितं यद् **ब्रह्म विभाति**=सर्वसाक्षित्वेन बाभास्तीति श्रुतिपदार्थः । न चैषा साक्षादुपासनेन ब्रह्मज्ञाने जनयितव्ये जीवात्मज्ञानानन्तरं ब्रह्मज्ञानं प्रतिपादयितुं शक्नोति । नहि तस्यास्तथा प्रतिपादनेऽस्ति कश्चिदतिभारः । **अथ** मन्येत जीवात्मज्ञानं जनयित्वा ब्रह्मज्ञानं तेन जन्यत इति । **तत्र** वदामः । नैवं मन्तव्यम् । यत्कारणमत्रापि किञ्चिद्भ्रमो वर्तते । नह्यस्ति शुद्धमेतन्मननम् । चित्तादिकरणवैयर्थ्योपातात् । इष्यते यदि मन्तुं तदा प्रतिबन्धनिवृत्तिमात्रं तेन विधीयते ज्ञानं तु चित्तादिना करणेन स्वयमुपजायत इति मन्तव्यम् । एवं ह्येतद् यथाश्रुति सम्पत्स्यते । श्रुत्या खलु चेतसा विशुद्धेन जीवात्मज्ञानमुत्पद्यते, ज्ञातेन जीवात्मना च परब्रह्मणः परमेश्वरस्य ज्ञानमिति प्रत्यक्षमुपदिश्यते **"एषोऽणुरात्मा चेतसा वेदितव्यः"** (मुं० ३ । १ । ९) **"यदाऽऽत्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत्"** (श्वे० २ । ५) इति । नचेहास्ति कस्यचित् किञ्चिद्वैमत्यम् । न च चेतोविशुद्धिर्ज्ञानप्रतिबन्धिकाया विक्षेपादिलक्षणाया अविशुद्धेर्निवृत्त्यभावे कथञ्चिदुपपद्यते । तन्निवृत्तिश्च नूनमुपासनस्य कृत्यमिति युक्तमालोचामहे । लोके सर्वत्र क्रियाया एवाविशुद्धिनिवृत्तिकृत्यस्योपलम्भात् । नहि क्रियातोऽन्यस्याविशुद्धिनिवृत्तिः कृत्यं क्वचिदुपलभ्यते । दर्पणादौ च प्रत्यक्षं तस्यास्तत्कृत्यमुपलभामहे । न च तन्माहात्म्यं प्रमाणान्तरेण केनचिदभिभवितुं शक्यते । न चोपासनमपि क्रियात्वमतिक्रामति । मानसी क्रिया हि तत् । अत एव वैदिकैः प्रतिबन्धनिवृत्तिमात्रं तस्य साक्षात् फलं ज्ञानं च पारम्पर्य्येणेति सूत्र्यते दर्शनान्तरे **"ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च"** (यो० १ । २९) इति । पूर्वमुपासनतोऽन्तराया निवर्तन्ते पश्चात् प्रत्यगात्मज्ञानं स्वकारणात् स्वयं प्रवर्तत इति सूत्राशयः । अन्तरायाः प्रतिबन्धाः, ते च सहभूभिः सहितास्तत्रैवोत्तरसूत्रयोः संख्यायन्ते **"व्याधिस्त्यानसंशयप्रमाद-**

**लस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः"** ( यो० १ । ३० ) **"दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः"** ( यो० १ । ३१ ) इति । चित्तविक्षेपकत्वाद् विक्षेपा इति तेषामेव नामान्तरम् । तस्मादत्रोपासनं ज्ञानोपस्थितौ प्रतिबन्धजातं निरुणद्धि ततो ज्ञानं स्वयं प्रवर्तत इत्युच्यते नोपासनतो ज्ञानं साक्षादुपतिष्ठत इति नियम्यत इति बोद्धव्यम् ॥ ४२ ॥

ननु ज्ञानात् पृथक् प्रतिबन्धनिवृत्तिश्चेदुपासनस्य फलमभ्युपगम्यते तर्हि ज्ञानसाधनं तत् कथमुच्यत इति । अस्योत्तरं पठति—

**"प्रदानवदेव तदुक्तम्" ॥ ४३ ॥**

**प्रदानवदेव**=प्रकारान्तरव्यावृत्तिरवधारणार्थः, प्रदानं यज्ञदक्षिणा, सा हि दानान्तरेभ्यः प्रकृष्टं दानं, तद् यथा वैगुण्यं निवर्तयद् यज्ञस्य प्रधानकर्मणोऽङ्गमभिधीयते तथा **तत्**=उपासनम् **उक्तं**=प्रतिबन्धं निवर्तयज्ज्ञानसाधनमभिहितं वेदितव्यमित्यर्थः ।

यत् खलु प्रासब्रह्मसम्पद्भ्यो ब्राह्मणेभ्यो हिरण्यवस्त्रादिकं भोग्यं वस्तुजातं वेदितो बहिः श्रद्धया परया यथाकालं दीयते तद् दानमिति परिभाष्यते । वैदिकाश्च देयत्वसामान्यादेनदपि दक्षिणेति नाम्ना परिभाषन्ते । यत्रेदं समाम्नायते **"नाकस्य पृष्ठे अधितिष्ठति श्रितो यः पृणाति स ह देवेषु गच्छति । तस्मा आपो घृतमर्षन्ति सिन्धवस्तस्मा इयं दक्षिणा पिन्वते सदा"** ( ऋ० २ । १ । १० । ५ ) इति । **सदा**=सर्वदा, **पिन्वते**=सेचयति तोषयति **"दक्षिणावतामिदिमानि चित्रा दक्षिणावतां दिवि सूर्यासः । दक्षिणावन्तो अमृतं भजन्ते दक्षिणावन्तः प्रतिरन्त आयुः"** ( ऋ० २ । १ । १० । ६ ) इति च । **प्रतिरन्ते**=प्रवर्धयन्ते । यत् पुनरन्तर्वेदि यज्ञानुष्ठातृभ्य ऋत्विग्भ्यो यज्ञावसाने हिरण्यवस्त्रादिकं भोग्यं वस्तु दीयते तद् यज्ञदक्षिणेति व्यपदिश्यते ।

यत्रेदमाम्नातम् "**उच्चा दिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सह ते सूर्येण । हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोम! प्रतिरन्त आयुः**" (ऋ० ८ । ६ । ३ । २) इति । "**तमेव ऋषिं तमु ब्रह्मणमाहुर्यज्ञन्यं सामगामुक्थशासम् । स शुक्रस्य तन्वो वेद तिस्रो यः प्रथमो दक्षिणया रराध**" (ऋ० ८ । ६ । ४ । ६) इति । सेयं प्रकृष्टदानत्वात् प्रदानमिति शब्द्यते । तद् यथा वैगुण्यं निराकुर्वत् प्रधानकर्मणो यज्ञस्याङ्गमुच्यते, यत्रेदमुक्तं दर्शनान्तरे "**दीक्षादक्षिणं तु वचनात् प्रधानस्य**" (मी० ३ । ७ । ११) इति, तथा प्रतिबन्धजातं निवर्तयदुपासनमपि ज्ञानस्य साधनमुक्तमस्माभिरिति न विस्मर्तव्यम्॥४३॥

**ननु** कुतः प्रदानवदुपासनं ज्ञानाङ्गमुक्तं न विस्मर्तव्यमिति । अस्योत्तरं पठति—

"**लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि**" ॥ ४४ ॥

उक्तमित्यनुवर्तते । **हि**=यतस्**तत्**=ज्ञानं **बलीयः**=अतिशयेन बलवत् सुदृढं बाधवर्जितं निर्विप्लवं साक्षान्मोक्षसाधनं वर्तते, कुतो विज्ञायते? **लिङ्गभूयस्त्वात्**=तदवबोधकानां लिङ्गानां प्रमाणानामतिशयेन बहुत्वाद् बाहुल्यात् । **तदपि**=मोक्षस्य साक्षात्साधनं ज्ञानमित्येतदप्**युक्तं**=दर्शनान्तरेऽभिहितमित्यर्थः ।

"**स यो ह वै तत परमं ब्रह्म वेद ब्रह्मैव भवति**" (मुं० ३ । २ । ९) "**ब्रह्मविदाप्नोति परम्**" (तै० २ । १) "**तरति शोकमात्मवित्**" (छां० ७ । १ । ३) "**यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति**" (श्वे० ७ । २०) इत्यादीनि भूयांसि खलु ज्ञानलिङ्गानि वेदान्तेषु तत्र तत्रोपलभ्यन्ते येभ्यो मोक्षस्य साक्षात् साधनं ज्ञानमिति विज्ञायते । न च तत् तावदुत्पत्तुमर्हति यावच्चेतोविक्षेपादिकं तत्प्रतिबन्धजातं न निवर्तते । नहि प्रतिबन्धे

विद्यमाने प्रतिबध्यस्य कस्यचिदुत्पत्तिः सम्भवति, ज्ञानस्येति तु किमु-वक्तव्यम्। न च तन्निवृत्तिरुपासनादृते कुतश्चिदुपायान्तरतः कर्हिचिदुपपद्यते। सर्वत्र तस्यैव तन्निवृत्त्युपायत्वावधारणात्। तथाच तन्निवृत्ति-द्वारा तस्य ज्ञानसाधनत्वं युक्तमुक्तमिति प्रतिपद्यते। प्रतिबन्धनिवृत्त्या विशुद्धे चेतसि ज्ञानोत्पत्तेरवश्यम्भावात्। ज्ञानं चास्ति साक्षान्मोक्ष-साधनमिति सुव्यक्तमुक्तं दर्शनान्तरे **"ज्ञानान्मुक्तिः"** (सां० ३। २३) इति। **"न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा। ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः"** (मुं० ३। १। ८) इत्याद्यासु श्रुतिषु च॥ ४४॥

अत्र पूर्वपक्ष्यते—

**"पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत्"** ॥ ४५ ॥

**पूर्वविकल्पः**=उपासनतः पूर्वेण कर्मणा ज्ञानस्य मोक्षं प्रति विकल्पः **स्यात्**=भवेत्, कुतः? **प्रकरणात्**=तं प्रत्युभयोः प्रक्रियमाणत्वात्, **क्रियामानसवत्**=यथा बाह्यक्रियात्मकेनाग्निहोत्रेण मानसक्रियात्मकस्य तस्याभ्युदयं प्रति विकल्प इत्यर्थः।

ईशोपनिषदि खलु **"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः"** (ईश० २) इत्यादिना कर्म **"यस्तु सर्वाणि भूतान्यात्मन्नेवानुपश्यति"** (ईश० ६) इत्यादिना ज्ञानं च प्रकृत्य ब्रह्म-प्राप्तिलक्षणो मोक्षस्तावत् प्रतिपाद्यते **"स पर्य्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्। कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः"** (ईश० ८) इति। **तदा** पूर्वमन्त्रोपात्तो भगवान् ब्रह्मवित् परामृश्यते। पूर्वमन्त्रादेवात्मानमिति द्वितीयया विपरिणम्य विशेष्यपदं चानुवर्तते। शुक्रमित्यादीनि द्वितीयान्तानि कविरित्यादीनि प्रथमान्तानि च तद्विशेषणानि। द्वितीयान्तानां **"पर्य्यगात्"** इति क्रियया, प्रथमान्तानां च

**"व्यदधात्"** इति क्रियया सम्बन्ध इति विशेषः। भोगेन प्रारब्धकर्मोपक्षये स भगवान् ब्रह्मविदात्**मानं**=परमात्मानं **पर्यगात्**=लडर्थे लुङ् **"छन्दसि लुङ्लङ्लिटः"** (अष्टा० ३। ४। ६) इति स्मृतेः, पर्य्येति परिगच्छति सरिदिव समुद्रं प्राप्नोतीत्यन्वयः। **शुक्रं**=दीप्तिमन्तं स्वप्रकाशम्। तत्र संशयः—किमिह मोक्षं प्रति ज्ञानकर्मणोर्विकल्पोऽभिप्रेयते किंस्विदुपासनवत् कर्म ज्ञानस्य, ज्ञानं च मोक्षस्य साधनमिति क्रमसमुच्चयो विवक्ष्यते। विकल्प इति पूर्वः पक्षः, क्रमसमुच्चय इति सिद्धान्तः। किं तावत् प्राप्तम्? विकल्प इति ब्रूमः। प्रकरणात्। ज्ञानकर्मणोः प्रकरणे खलु मोक्षः प्रतिपाद्यते। चेदिमे तत्कारणं न स्यातां तदा न ते प्रकृत्य मोक्षः प्रतिपाद्येत। नहि परस्परसम्बन्धाभावेऽन्यस्य प्रकरणेऽन्यस्य प्रतिपादनं कथञ्चिदुपपद्यते। ज्ञानं चास्ति मोक्षस्य साक्षात्साधनमिति निर्विवादम्। तत्साहचर्य्यात् कर्मणाऽपि तत्साक्षात्साधनेन भवितव्यमिति विज्ञायते। न च तत्रोभयोस्तयोः समुच्चयेन साक्षात्साधनत्वं घटते। अन्यतरवैयर्थ्यप्रसङ्गात्। मोक्षो हि सिध्यन्नेकेनापि सेद्धुमर्हति। द्वयोः साधनत्वे तु नूनमेकस्य वैयर्थ्यं प्रसज्येत। न च व्यर्थं किञ्चित् क्वचित् प्रेक्षावद्भिः परिकल्प्यते। समुच्चयेन द्वयोस्तयोः साधनत्वाभावे च कदाचिज्ज्ञानं साधनं कदाचित्कर्मेति विकल्पमेव ज्यायांसं मन्यामहे। यथा ह्यभ्युदयं प्रति बाह्यक्रियात्मकेनाग्निहोत्रेण कर्मणा मानसक्रियात्मकं तावदग्निहोत्रं विकल्प्यते तथा मोक्षं प्रति कर्मणा ज्ञानमपि विकल्प्यत इति निश्चेतव्यम्। बाह्यक्रियात्मकेन तेन मानसक्रियात्मकस्य तस्य विकल्पं च कौषीतकिनः स्फुटमवगमयन्ति **"अथातः सांयमनं प्रातर्दनमान्तरमग्निहोत्रमिति चाचक्षते। यावद् वै पुरुषो भाषते न तावत् प्राणितुं शक्नोति, प्राणं तदा वाचि जुहोति। यावद् वै पुरुषः प्राणिति न तावद् भाषितुं शक्नोति, वाचं तदा प्राणे जुहोति। एते अनन्ते अमृताहुती जाग्रच्च स्वपंश्च सततमव्यवच्छिन्नं जुहोति। अथ या अन्या आहुतयोऽन्तवत्यस्ताः। कर्म-**

**मय्यो हि भवन्ति । एतद् ह वै पूर्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रुः"** ( कौ० २ । ४ ) इति । तथा स्मृतिकृतोऽपि **"ज्ञानेनैवापरे विप्रा यजन्त्येतैर्मखैः सदा । ज्ञानमूलां क्रियामेषां पश्यन्तो ज्ञानचक्षुषा"** ( मनु० ४ । २४ ) इति । **"दैवमेवापरे यज्ञं योगिनः पर्युपासते । ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति"** ( गी० ४ । २५ ) इत्यादिना च गीतायाम् । तस्मादुपासनावत् कर्म ज्ञानस्य न साधनं किन्तु मोक्षस्य यथा ज्ञानमिति विकल्प एव श्रेयान् ॥ ४५ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"अतिदेशाच्च" ॥ ४६ ॥**

पूर्वविकल्पः स्यादित्यनुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । **अतिदेशात्**=इतरधर्मस्येतरस्मिन् प्राप्तिरतिदेशः, धर्मशब्देन चात्र कार्य्यादयो विवक्ष्यन्ते, ज्ञानफलस्य कर्मण्यतिदेशाज्ज्ञानस्य पूर्वेण तेन विकल्पः स्यादिति गम्यत इत्यर्थः ।

**"यत् सांख्यैः प्राप्यते स्थानं तद् योगैरपि गम्यते । एकं साख्यं च योगं च यः पश्यति स पश्यति"** ( गी० ५ । ५ ) इत्यादिना सांख्यशब्दाभिधेयस्य ज्ञानस्य फलं मोक्षो योगशब्दाभिधेये कर्मणि तावदतिदिश्यते । यदि ज्ञानवत् कर्मापि मोक्षस्य साक्षात्साधनं न विद्येत तदा न जातु तत्फलं तत्रातिदिश्येत । नहि यत् साक्षात्साधनं न विद्यते तत्र साक्षात्साधनफलमतिदेष्टुं शक्यते । सति हि सामान्ये कस्मिँश्चिदतिदेशः प्रवर्तते नासति । न च मोक्षं प्रति साक्षात्साधनत्वानभ्युपगमे कर्म ज्ञानसामान्यं कर्हिचिदश्नोतुमर्हति । न च तं प्रति समुच्चयेन तयोः साक्षात्साधनत्वं घटते । तत्रान्यतरवैयर्थ्यप्रसङ्गस्य जागरूकत्वात् । अतः कदाचिज्ज्ञानं कदाचित् कर्मेति मोक्षं प्रति तद्विकल्पमेव युक्तमुत्प्रेक्षामहे ॥ ४६ ॥

अवसितः पूर्वः पक्षः । सम्प्रति सिद्धान्त उच्यते—

**"विद्यैव तु निर्धारणात्" ॥ ४७ ॥**

तुना पूर्वःपक्षो व्यावर्त्यते। अवधारणेनान्ययोगो व्यवछिद्यते। **विद्यैव**=ज्ञानमेव मोक्षसाधनं निश्चेतव्यम्, कुतः? **निर्धारणात्**= व्यावृत्य प्रतिपादनादित्यर्थः।

**"य इत्तद्विदुस्तेऽमृतत्वमानशुः"** (ऋ० २। ३। १८। २३) **"तमेव विदित्वाऽति मृत्युमेति"** (यजु० ३१। १८) **"तमेव विद्वान् न बिभाय मृत्योः"** (अथ० १०। ४। ८। ४४) **"तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथा-मृतस्यैष सेतुः"** (मुं० २। २। ५) इत्याद्याभिः श्रुतिभिर्ज्ञानमेवैकं मोक्षस्य साधनं तावन्निर्धार्य्यते। न च तन्निर्धारणं मोक्षं प्रति ज्ञानकर्मणोर्विकल्पेऽभ्युपगम्यमाने कथञ्चिदुपपद्यते। श्रौतत्वादिष्यते च तदुपपत्तिः। तस्मान्नास्ति कालत्रयेऽपि मोक्षं प्रति ज्ञानकर्मणोर्विकल्पः किन्तु ज्ञानस्य साधनं कर्म यथोपासनं, ज्ञानं च मोक्षस्येति क्रमसमुच्चयः। एतेन **"प्रकरणात्"** इत्येतदपि समाहितं वेदितव्यम्। तस्याप्यत्रैव तात्पर्य्यात्। सविस्तरं चेदमुपापीपदाम जिज्ञासाधिकरणे पुरस्तादिति विरमामोऽत्र तदुपपादनात्। विशेषस्त्वग्रे वक्ष्यते। **न चातिदेशो**ऽपि विरुध्यते। साक्षात्परम्पराभ्यां फलाविशेषाभिप्रायकत्वेन तस्य विरोधाभावात्। सांख्यशब्दस्य ज्ञानस्य हि मोक्षः साक्षात् फलं, योगशब्दस्य कर्मणश्च ज्ञानद्वारेत्यविशेषः॥ ४७॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"दर्शनाच्च"** ॥ ४८॥

विद्यैवेत्यनुवर्तते। पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः। **दर्शनात्**= लिङ्गदर्शनाद् विद्यैव मोक्षसाधनं प्रतिपद्यत इत्यर्थः।

यथा हि वेदोपनिषच्छ्रुतिभिस्तावज्ज्ञानमेवैकं मोक्षसाधनं निर्धार्य्यते तथा लिङ्गदर्शनादपि तदेव तत्साधनं प्रतिपद्यते। दृश्यन्ते खलु वेदवेदान्तेषु भूयांसि तत्प्रतिपादकलिङ्गानि। तानि चास्माभिरुदाहृतानि **"लिङ्गभूयस्त्वात्"** (वे० ३। ३। ३४) इत्यत्रेति न पुनरत्रोदाह्रियन्ते॥ ४८॥

**ननु** श्रुतिलिङ्गानां प्रकरणेन बाधाद् विकल्पः स्यादिति । अस्योत्तरमाह—

**"श्रुत्यादिबलीयस्त्वाच्च न बाधः" ॥ ४९ ॥**

चस्त्वर्थः, तेनोक्ताशङ्का व्यावर्त्यते । **श्रुत्यादिबलीयस्त्वात्**=आदिना लिङ्गानि सङ्गृह्यन्ते, श्रुतिलिङ्गानामतिशयेनबलवत्त्वाद् **बाधः**=प्रकरणेन बाधो **न**—न भवतीत्यर्थः ।

श्रुतिलिङ्गानि हि प्रकरणापेक्षया प्रबलानि प्रकरणं च श्रुतिलिङ्गापेक्षया दुर्बलं वर्तते । न च दुर्बलेन सता तेन प्रबलानि तानि स्वप्नेऽपि बाधितुं शक्यन्ते । प्रबलस्यैव दुर्बलबाधकत्वनियमात् । श्रुतिलिङ्गापेक्षया प्रकरणस्य दुर्बलत्वं च दर्शनान्तरे स्मर्यते **"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्"** (मी० ३।३।१४) इति । तस्मान्न तेन तद्बाधः । तथाच मोक्षं प्रति ज्ञानकर्मणोर्विकल्प इत्ययुक्तम् ॥ ४९ ॥

**विकल्पायोगेऽन्यं** हेतुमवतारयति—

**"अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम्" ॥ ५० ॥**

न इत्यनुवर्तते । हेतौ चः । **अनुबन्धादिभ्य**=अनुबन्धः सम्बन्धः, साधनभेदा इतिकर्तव्यताभेदाश्चादिना गृह्यन्ते, अधिकारिविशेषसम्बन्धादिभ्यो हेतुभ्यः **प्रज्ञान्तरपृथक्ववत्**=प्रज्ञा ज्ञानम्, अन्या प्रज्ञा प्रज्ञान्तरमुपासनं, तस्य यथा फलपृथग्भावस्तथा **दृष्टः**=कर्मणः फलपृथग्भावो दृष्टः प्रत्यक्षवन्निश्चितो विद्यते **च**=यतः, अतो न तेन ज्ञानस्य विकल्पो युक्तः । **तदुक्तं**=तदिदमुक्तं दर्शनान्तर इत्यर्थः ।

यथा हि चित्तदोषनिवृत्तिलक्षणः फलविशेषः खलु ज्ञानतः पृथगुपासनस्य वरीवृत्यते, यत्रेदमाम्नातं भवति **"ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात्"** ( मुं० २ । २ । ६ ) इति, **स्वस्ति**=चित्तदोषनिवर्तनेन ज्ञानप्रदं **"पश्यन्ति क्षीण-**

**दोषाः"** (मुं० ३।१।५) इति लिङ्गात्, तथा कर्मणोऽप्यनुबन्धादिभ्यो हेतुभ्यो ज्ञानतः पृथक् चित्तमलनिवृत्तिलक्षणः फलविशेषो दृष्ट इव विद्यते। यथा किल प्रत्यक्षेणावगतेऽर्थे संशयविपर्ययौ न प्रवर्तेते निश्चितत्वात् तथाऽनुबन्धादिहेतुभ्योऽवगतेऽस्मिन्नर्थेऽपि तौ न प्रवर्तेते इति दृष्टः स उच्यते। दृष्टः=हेतुभ्योऽवगम्यमानोऽपि प्रत्यक्षवन्निश्चित इत्यर्थः। अनुबन्धोऽधिकारिविशेषसम्बन्धः। अस्ति तावदग्निहोत्रादिकर्मणोऽधिकारिविशेषसम्बन्धः। वर्णाश्रमवयोऽवस्थादिविशेषाभिमानिनः पुरुषविशेषस्यैव तत्र नियमेनाधिकारात्। अग्निहोत्रादौ वैदिके कर्मणि हि वर्णाश्रमवयोऽवस्थादिविशेषाभिमानी पुरुषविशेषोऽधिक्रियते न पुरुषमात्रम्। अन्यथा बालादयोऽप्यधिक्रियेरन्। नहि ते तत्राधिक्रियन्ते। यश्चैष पुरुषविशेषः स एव कर्मणोऽधिकारिविशेषः। तस्य तत्सम्बन्धे च साधनभेदा इतिकर्तव्यताभेदाश्चार्थतोऽवगम्यन्ते। तेषामपि तत्रावश्यकत्वात्। यावद्धि कर्म विधीयते सर्वं तदात्मनिष्पत्त्यै यथाऽधिकारिविशेषं नियमेनापेक्षते तथा साधनभेदानितिकर्तव्यताभेदाँश्चापि नियमेनापेक्षते। नो चेदपेक्षेत न निष्पद्येत। नहि न तानपेक्षते निष्पद्यते चेति सम्भवति। यदा खलु लौकिकं कर्मापि तान् विना न निष्पत्तुमर्हति तदा वैदिकं कर्मेति किमु वक्तव्यम्। न चानुबन्धादयोऽमी ज्ञाने कर्मवदपेक्ष्यन्ते। तस्य वस्तुतन्त्रत्वात्, पुरुषमात्रस्य च तत्राधिकारात्। तदपेक्षानपेक्षाभ्यां च ज्ञानतोऽस्ति कर्मणः फलं पृथगिति निःशङ्कं प्रतिपत्तुं शक्यते। साधनादिभेदेन फलभेदस्यावश्यम्भावात्। नहि साधनादयो भिद्यन्ते फलं च न भिद्यत इति युज्यते। ज्ञानस्य हि ब्रह्मप्राप्तिलक्षणो मोक्षः फलं प्रसिद्धं, कर्मणश्च ज्ञानोत्पत्तिप्रतिबन्धकस्य चित्ताविशुद्धिहेतोः पाप्मनो निवृत्तिः। यः किल वैदिकैर्मृत्युनाम्ना किल्बिषनाम्ना च परिभाष्यते। स्फुटं चैतदुभयं भेदेन श्रुतिस्मृतयो दर्शयन्ति **"अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते"** (ईश० ११) **"तपो विद्या च विप्रस्य निःश्रेयसकरं परम्। तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते"** (मनु० १२।१०४) इत्याद्याः।

तप इति कर्मान्तरमुपलक्ष्यते । **"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन"** (बृ० ४ । ४ । २२) **"स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः । महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः"** (मनु० २ । २८) इत्यादिश्रुतिस्मृतिभ्यः । **ब्राह्मी**=ब्रह्मप्राप्तियोग्या, **ब्रह्म**=ब्रह्मज्ञानं, **तनुः**=तन्वध्यक्षो जीवात्मा । न चैवं ज्ञानकर्मणोः फलभेदे सति विकल्पोऽभ्युपगन्तुमीश्यते । यत्कारणं स फलं प्रत्यभिलष्यते, फलस्य चानुबन्धादिभ्यः श्रुतिस्मृतिभ्यश्च पृथग्भावो दृष्ट इव विद्यते । विकल्पश्च व्रीहियवयोः फलापृथग्भावे दृष्टो न तत्पृथग्भावे । वक्ष्यति चोपासनानां विकल्पाभिधानसमये फलापृथग्भावं स्वयमाचार्य्योऽपि **"विकल्पोऽविशिष्टफलत्वात्"** (वे० ३ । ३ । ५८) इति । तथाच कथं मोक्षं प्रति ज्ञानकर्मणोर्विकल्पोऽभ्युपगम्येत । नहि दृष्टविरुद्धं किञ्चिदभ्युपगन्तुं शक्यते । दर्शनान्तरे तदयुक्तत्वं च स्फुटमुक्तं पश्यामः "नियतकारणत्वान्न समुच्चयविकल्पौ" (सां० ३ । २५) इति । **"विवेकान्निःशेषदुःखनिवृत्तौ कृतकृत्यो नेतरान्नेतरात्"** (सां० ३ । ८४) इति च । तस्मान्मोक्षं प्रति ज्ञानस्य कर्मणा विकल्प इति नितरामयुक्तम् ॥ ५० ॥

**ननु** मा भून्मोक्षं प्रति ज्ञानस्य कर्मणा विकल्पः, उपासनया भविष्यति, प्रज्ञात्वसामान्यादिति । अस्योत्तरं पठति—

**"न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः"** ॥ ५१

**सामान्यादपि**=प्रज्ञात्वसामान्यधर्मयोगादपि **न**=मोक्षं प्रति ज्ञानस्योपासनेन विकल्पो न युज्यते, कुतः ? **उपलब्धेः**=फलपृथक्त्वोपलम्भात् **मृत्युवत्**=यथा मृत्य्वोरग्निपरमेश्वरयोर्मृत्युत्वसामान्येऽपि कार्य्यभेदः तदेव स्फुटयति—**नहि लोकापत्तिः**=नह्यग्नेः परमेश्वरवदस्ति सर्वलोकोपसंहर्तृत्वप्राप्तिरित्यर्थः ।

न खलु प्रज्ञात्वसामान्येऽपि ज्ञानस्योपासनस्य च मोक्षं प्रति विकल्पो

युज्यते । फलपृथक्त्वोपलब्धेः । फलं ह्युभयोस्तयोः पृथक् पृथगुपलभ्यते । ज्ञानस्य तावदुपासनतः पृथङ् मोक्षं फलमुपलभामहे, ततः पृथक् चोपासनस्य चित्तदोषनिवृत्तिरित्यवोचाम । न च फलपृथक्त्वोपलम्भे तयोर्मोक्षं प्रति विकल्पोऽभ्युपगन्तुं पार्य्यते । तस्य फलापृथक्त्वेऽन्यत्र दर्शनात् । न च दृष्टविरुद्धस्य कल्पनं न्याय्यम् । किञ्चिद्धर्मसामान्येऽपि च भवति कार्य्यभेद इत्यत्र दृष्टान्तो **मृत्युवत्** । मृत्युरेषोऽग्निः । यत्रेदमाम्नातम् **"अग्निर्वै मृत्युः"** ( बृ० ३ । २ । १० ) इति । मृत्युः परमेश्वरः । यत्रेदं समाम्नायते **"स एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुषः"** ( शत० १० । ५ । २ । ३ ) इति । न चोभयोर्मृत्युत्वधर्मसामान्येऽपि भवति कार्य्यैक्यम् । संहरति खलु यत्किञ्चिदग्निः, संहरति च विश्वं जगत् परमेश्वरः । धर्मसामान्यमात्रेण कार्य्यैक्योत्प्रेक्षायां तु परमेश्वरवदग्नेरपि सर्वलोकसंहर्तृत्वमापद्येत । न च मृत्युत्वेऽप्यग्नेरस्ति सर्वलोकसंहर्तृत्वापत्तिः । यदा खल्वग्निपरमेश्वरयोः संहर्तृत्वरूपमृत्युत्वधर्मसामान्येऽपि कार्य्यभेदात् सर्वलोकसंहारं प्रति विकल्पो न घटते तदा प्रज्ञात्वधर्मसामान्येऽपि ज्ञानोपासनयोः फलभेदान्न स मोक्षं प्रति घटत इति किमु वक्तव्यम् । तस्मादयुक्तो मोक्षं प्रति ज्ञानस्य कर्मवदुपासनेनापि विकल्पः ॥ ५१ ॥

**किं** तर्हि निश्चेयम्? तत्राह—

**"परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः"** ॥ ५२ ॥

हेतौ चः । तुना भूयस्त्वाभावेऽनुबन्धं व्यवच्छिनत्ति । **परेण**=पूर्वमुपासनतः कर्म, परं ज्ञानं, तेन मोक्षो जायत इति निश्चेयम्, कुतः? **च**=यतः **शब्दस्य**=श्रुतेस्ताद्विध्यं=तद्विधायकत्वं भूयस्त्वेनोपलभामहे, **भूयस्त्वात्**=तदुपलब्धिभूयस्त्वादनुबन्धः=ज्ञानस्य मोक्षफलेन सम्बन्धो निश्चीयत इत्यर्थः ।

भूयस्यः खलु श्रुतयो ज्ञानान्मोक्षं विदधत्यो वेदेषु वेदान्तेषु चोपलभ्यन्ते यासां किल बह्वयोऽस्माभिस्तत्र तत्रोदाहारिषत पुरस्तादिति विस्तर-

भिया नेह ताः पुनरुदाह्रियन्ते । नच तासां विधानमिदं कर्हिचिदतथ्यं भवितुमर्हति । प्रमाणत्वात् । प्रमाणं हि ताः सर्वदा निःसंशयं भवन्ति नाप्रमाणम् । नच यत् प्रमाणं तदतथ्यं किञ्चित् विदधाति । नूनमेतदप्रमाणस्य कृत्यं न प्रमाणस्य, तत्रापि नः परमर्षिशब्दस्य । तस्माज्ज्ञानेन मोक्षस्तस्यैव च मोक्षेण साक्षादनुबन्धः सम्बन्ध इति युक्तं निश्चिनुमहे । तदेव मुमुक्षुभिरपि सुदृढं निश्चेयम् । तथाच तेषां यावद् ब्रह्मगोचरं साक्षात्कारलक्षणं ज्ञानं न प्रजायते तावत् साधनेषु यथाशास्त्रं प्रयतितव्यं न जातु क्षणमप्युपरन्तव्यमिति हृदयम् ॥ ५२ ॥

परेण ज्ञानेन मोक्ष इत्युक्तम् । सम्प्रति तत्परिशुद्ध्यै तत्र बाह्यानां मतमुपन्यस्यति—

**"एक आत्मनः शरीरे भावात्" ॥ ५३ ॥**

परेणेत्यनुवर्तते । **आत्मनः**=जीवात्मनः **शरीरे**=सति पाञ्चभौतिके देहे **भावात्**=सत्त्वात्–शरीरतो व्यतिरेकेणाभावादिति यावत् परेण ज्ञानेन मोक्ष इत्युक्तमयुक्तमेके=बाह्याः केचिदेके मन्यन्त इत्यर्थः ।

न खलु परेण ज्ञानेन मोक्ष इति युक्तमुच्यते । मोक्षभाजो जीवात्मन एव शरीरतो व्यतिरेकेणाभावात् । नहि जीवात्मा शरीरतो व्यतिरिच्यत इति कथञ्चिदवगन्तुं शक्यते । तदवगमहेतूनामनुपलब्धेः । न च चैतन्यादयस्तदवगमहेतवस्तावदुपपद्यन्ते । तेषां शरीरधर्मत्वेनात्मधर्मत्वासिद्धेः । चैतन्यादयो हि शरीरस्य धर्माः सिध्यन्ति न जातु जीवात्मनः । शरीरे भवति भावादभवति चाभावात् । नहि यद् यस्मिन् भवति भवति न भवति चाभवति, तत् तस्य धर्मो न सिध्यति । ज्वलनस्याप्युष्णप्रकाशौ न सिध्येतामन्यथा धर्मौ । न च पृथिव्यादिषु भूतेषु प्रत्येकमनुपलभ्यमानाश्चैतन्यादयः कथं शरीरस्य धर्माः सिध्येयुरिति शङ्कितव्यम् । अनुद्भूतत्वेनोपलम्भाभावोपपत्तेः । न खलु पृथिव्यादिषु भूतेषु समस्तव्यस्तेषु चैतन्यादीनामभावाच्चैतन्यादयो नोपलभ्यन्ते, कुतस्तर्हि? भवन्तोऽपि ते तत्र नोद्भवन्तीति नोपलभ्यन्ते । शरीराकारपरिणामो हि तेषामुद्भवस्य कारणं

यथा किण्वादीनां मदशक्तेर्मदिराकारपरिणामः। किण्वादयः समस्त-व्यस्ताः किल मदनाः सन्तोऽपि यथा मदशक्तेरनुद्भावान्न मदयन्ति मदिरा-कारपरिणताश्च तच्छक्तेरुद्भवान्मदयन्ति तथा समस्तव्यस्तानि भूतानि चेतनानि भवन्त्यपि चैतन्यशक्तेरनुद्भावान्न चेतयन्ति, शरीराकारेण परि-णतानि च तानि तच्छक्तेरुद्भवाच्चेतयन्तीति विज्ञातव्यम्। आन्तर-त्वोपलम्भश्च चैतन्यादीनामन्तःशरीराश्रयत्वं गमयति न शरीरव्यतिरिक्ता-श्रयत्वम्। अन्यथा दृष्टहानाददृष्टोपादानकल्पनाप्रसक्तेः। अहं गौरोऽहं स्थूल इत्यादिप्रत्ययाश्च शरीरगोचराः प्रत्यक्षाः। तस्मादव्यतिरेकः शरी-रादात्मन इति बाह्याः केचिदेके मन्यन्ते। तथाच परेण मोक्ष इत्य-युक्तम्॥ ५३॥

प्रतिक्षिपति—

**"व्यतिरेकस्तद्भावाभावित्वान्नतूपलब्धिवत्"** ॥ ५४॥

आत्मनः शरीरादिति पञ्चम्या विपरिणम्यानुवर्तते। **व्यतिरेकः**= आत्मनः शरीराद् व्यतिरेको मन्तव्यो **नतु**=नैवाव्यतिरेकः, कुतः? **तद्भावाभावित्वात्**=तदा शरीरं परामृशति, शरीरभावेऽभावशील-त्वात्। व्यतिरेके दृष्टान्तः—**उपलब्धिवत्**=यथोपलब्धेर्ज्ञानस्य विषय-भावेऽभावशीलत्वाद् विषयेभ्यो व्यतिरेक इत्यर्थः।

आत्मा खलु चैतन्यमात्रमभ्युपगम्यते। तद् यदि शरीरस्य धर्मः कथञ्चित् सिध्येत् तदाऽवश्यमात्मनः शरीरादव्यतिरेको मन्येत। न च तद् शरीरस्य धर्मः कथमपि सेद्धुमर्हति। तद्भावेऽप्यभावशीलत्वात्। यो हि यस्य धर्मो भवति स न तस्मिन् भवति न भवति। नहि भवन्त्यां मदिरायां मदशक्तिः कदाचिन्न भवन्ती निरीक्ष्यते। चैतन्यं तु शरीरे भवत्यपि न भवति। प्रायणावस्थायामस्ति शरीरं नास्ति च चैतन्यम्। तत्कथं वयं मदशक्तिरिव मदिरायाः शरीरस्य धर्मश्चैतन्यं मन्यामहे। वैलक्षण्याच्च। वैलक्षण्यं खलु चैतन्यादिषु शरीरधर्मतो नियमेनोपलालभ्या-महे। रूपादयो हि शरीरस्य धर्माः स्वपरोभयप्रत्यक्षाः सर्वत्रोपलभ्यन्ते

चैतन्यादयश्च स्वमात्रप्रत्यक्षाः । तदिदमुपलभ्यमानं वैलक्षण्यं भिन्नधर्मत्वे तेषां सङ्गच्छते न समानधर्मत्वे । नहि समानधर्मणां सतामीदृग् वैलक्षण्यं कथञ्चिद् युज्यते । शरीरान्तरुपलम्भश्च चैतन्यादीनामात्मतादात्म्यादुपपद्यते नास्ति काचिदनुपपत्तिः । उपलब्धेरिव चात्मनः शरीराद् व्यतिरेको विज्ञातव्यः । यथा हि विषयोपलब्धिः खलु विषयसम्बन्धात् प्रथमानाऽपि विषयेभ्योऽतिरिच्यते तथा शरीरसम्बन्धात् प्रथमानं चैतन्यमपि ततो व्यतिरिक्तमवबोद्धव्यम् । तद्भावाभावित्वाविशेषात् । चैतन्यमात्मा । तस्य शरीरतो व्यतिरेके च बन्धवन्मोक्षोऽपि सङ्गच्छते । तस्मात् परेण ज्ञानेन तस्य मोक्ष इति युक्तमुच्यते नायुक्तम् ॥ ५४ ॥

अवसिता प्रासङ्गिकी गाथा । सम्प्रति पुनःप्रकृतमनुसरन् कर्माङ्गावबद्धोपासनगोचरां चिन्तां तावदवतारयति सकलवेदान्तविहितोपासनपरिशुद्धये—

**"अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्"** ॥ ५५ ॥

तुना अङ्गानवबद्धा उपासना व्यावर्त्यन्ते । हिरवधारणे । **अङ्गावबद्धाः**=ज्योतिष्टोमादिकर्माङ्गेषूद्गीथादिषु सम्बद्धास्तदाश्रयत्वेन विहिता उपासनाः **प्रतिवेदं**=प्रतिशाखमुपसंह्रियन्ते, **शाखासु हि**=यासु शाखासु विहितास्तासु शाखास्वेव **न**=न व्यवतिष्ठन्त इत्यर्थः ।

**"ओमित्येतदक्षरमुद्गीथमुपासीत"** ( छां० १ । १ । १ ) **"लोकेषु पञ्चविधं सामोपासीत"** ( छां० २ । २ । १ ) **"उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव पृथिवी"** ( ऐ० आ० २ । १ । २ । १ ) **"अयं वाव लोक एषोऽग्निश्चितः"** ( शत० १० । ५ । ४ । १ ) इत्येवमाद्याः कर्माङ्गभूतोद्गीथादिसम्बद्धाः किल काश्चिदुपास्तयश्छन्दोगानां बह्वृचानां वाजसनेयिनां च विधीयन्ते । तत्र विधानाविधानोपलम्भात् संशयः- किमिमा यासु शाखासु विहितास्तद्गतेष्वेवोद्गीथादिषु व्यवतिष्ठन्ते किंवा सर्वशाखागतेषु तेष्वनुवर्तन्ते । व्यवतिष्ठन्त इति पूर्वः पक्षः, अनुवर्तन्त

इति सिद्धान्तः । किं तावत् प्राप्तम्? व्यवतिष्ठन्त इति ब्रूमः । सन्निधानात् । "**ओमित्येतदक्षरमुद्गीथमुपासीत**" (छां० १ । १ । १ ) इत्याद्याभिः श्रुतिभिः कर्माङ्गभूता उद्गीथादयो ह्युपासनाश्रयत्वेन सामान्यतोऽवगम्यन्ते । ते च द्विविधाः स्वशाखागता अन्यशाखागताश्च । द्विविधानां च तेषामत्र कतमास्ते भवेयुरिति विशेषाकांक्षायां स्वशाखागता एव सन्निहितत्वाद् ग्रहणमर्हन्ति नान्यशाखागताः । नहि यथा स्वशाखागताः सन्निधीयन्ते तथाऽन्यशाखागता अपि सन्निधानं प्रपद्यन्ते । सन्निहितव्यवहितानां च सन्निहितग्रहणमेवोचितं न जातु व्यवहितग्रहणम् । विशेषाकांक्षा तु तद्ग्रहणेनैवोपशमिष्यति । न चैवं सन्निधानेन श्रुतीनां बाधः स्यादिति शङ्कितव्यम् । अर्थविशेषेऽवस्थापनात् । यदि हि सन्निधानं खलु सर्वथा श्रुतीः स्वार्थात् प्रच्यावयेदवश्यं ता बाधेत । न च तत् सर्वथा ताः स्वार्थात् प्रच्यावयति, किं तर्हि? स्वार्थविशेषेऽवस्थापयति । भवन्ति हि स्वशाखागता उद्गीथादयोऽपि श्रुतीनां स्वार्थो यथा सर्वशाखागतास्ते । न च स्वार्थविशेषेऽवतिष्ठमानाः श्रुतयः सन्निधानेन बाधिता मन्यन्ते । तस्मात् कर्माङ्गभूतोद्गीथादिसम्बद्धा उपासनाः स्वशाखागतेष्वेवोद्गीथादिषु व्यवतिष्ठन्ते न सर्वशाखागतेषु तेषु स्वमेऽप्यनुवर्तन्त इति । एवं प्राप्तेऽभिधीयते—**प्रतिशाखमविशेषात्** । अविशेषेण प्रवृत्ताः खलु "**ओमित्येतदक्षरमुद्गीथमुपासीत**" (छां० १ । १ । १ ) इत्येवञ्जातीयकाः श्रुतयः । ता अविशेषेणैव सर्वशाखागतानुद्गीथादीनुपासनाश्रयत्वेनोपस्थापयितुमर्हन्ति न विशेषेण । नह्यविशेषेण ताः प्रवर्तन्ते विशेषेण चोद्गीथादीन् काँश्चिदुपासनाश्रयत्वेनोपस्थापयन्त इति युज्यते । न चाविशेषेण ताभिरुपस्थापितेषु तेषु विहितास्तास्ता उपासना नोपपद्यन्ते येन विशेषाकांक्षोत्तिष्ठेत् सन्निधानेन चोपशाम्येत । न चोत्थानाभावे सा बलाद् विशेषान् तान् समर्पयता सन्निधानेनोपशमयितुं शक्यते । न चाविशेषेण प्रवृत्तानां श्रुतीनामर्थविशेषेऽवस्थापनमपि सन्निधानेन घटते । दुर्बलत्वात् । स्थानं खलु सन्निधानम् । तच्च श्रुत्यपेक्षया दुर्बलम् । न च दुर्बलं कदाचित् प्रबलं बाधितुं शक्नोति ।

श्रुतीनामविशेषेण प्रवृत्तानां चैष बाध एव मन्यते यत्किलार्थविशेषेऽवस्थापनम् । यदि नाम सर्वविशेषगामिनीनां तासामेकस्मिन् विशेषेऽवस्थापनं बाधो न मन्यते तदा को नु तद्बाधो मन्येत । नह्ययं स्वार्थमच्युतेः कश्चिद् विशिष्यते । न च निरपेक्षममाणानां श्रुतीनामीदृग् बाधोऽपि न्याय्यो गण्यते । तस्मादुद्गीथादिकर्माङ्गावबद्धा उपासनाः सर्वशाखागतेषूद्गीथादिष्वनुवर्तन्ते न यत्र विधीयन्ते तद्गतेष्वेव तेषु व्यवतिष्ठन्त इति युक्तमुत्पश्यामः ॥ ५५ ॥

ननु श्रुत्याऽन्यत्र विहितानामुपासीनामन्यत्र सम्बन्धे सन्निधानं विरुध्यत इति । अत आह—

**"मन्त्रादिवद् वाऽविरोधः"** ॥ ५६ ॥

पक्षान्तरपरो वाकारः । तेन पूर्वत्र सन्निधानविरोधे सत्यपि श्रुत्याऽन्यत्र विहितानामन्यत्र सम्बन्धोऽभिहित इति ध्वन्यते । **वा**=अथवं-**मन्त्रादिवत्**=आदिना कर्माङ्गानि द्रव्यादीनि गृह्यन्ते, अन्यत्र पठितानां मन्त्रद्रव्यप्रभृतीनां कर्माङ्गानामन्यत्र कर्मसम्बन्धे विरोधाभाववद-**विरोधः**=विरोधाभावो द्रष्टव्य इत्यर्थः ।

यथा खल्वन्यत्र पठितानां कर्माङ्गानां मन्त्रद्रव्यप्रभृतीनामन्यत्र कर्मसम्बन्धे सन्निधानं न विरुध्यते तथाऽन्यशाखासु विहितानामुद्गीथादिकर्माङ्गोपासनानामन्यत्रोद्गीथादिषु सम्बन्धेऽपि न तद् विरुध्यते । समानत्वात् । समानो ह्याश्रयाणामङ्गानामिवाश्रितानामुपासनानामपि श्रुत्याऽन्यत्र सम्बन्धः । न च स एकत्र विरुध्यते नापरत्रेति युज्यते । ऋग्वेदे पठितानां **"यो जात एव प्रथमो मनस्वान्"** ( ऋ० २ । ६ । ७ । १ ) इत्यादीनां मन्त्राणां चान्यत्राध्वर्यवे कर्मणि विनियोगो विधीयमानो दृश्यते **"आध्वर्यवे सजनीयं शस्यम्"** ( तै० सं० ७ । ५ । ५ । २ ) इत्यत्र । **आध्वर्यवे**=अध्वर्युकर्तृके कर्मणि । **सजनीयं**= "स जनास इन्द्रः" ( ऋ० २ । ६ । ७ । १ ) इत्यनेनोपलक्षितं सूक्तम् । एवमन्यत्रोक्तानां द्रव्यादीनामन्यत्र विनियोगोऽप्यवबोद्धव्यः । नूनं श्रुतिसमक्षेऽकिञ्चित्करं सन्निधानमिति रहस्यम् ॥ ५६ ॥

अङ्गोपासनाः प्रतिकर्म मुमुक्षुभिरनुष्ठेया इति वर्णितम्। तत्सामान्याद् वैश्वानराङ्गोपासना अप्यनुष्ठेयाः प्राप्ताः। मा नामानुष्ठाविषत ता अनर्थहेतुत्वादिति प्रतिषिषेधयिषुराह—

**"भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति"** ॥ ५७ ॥

**भूम्नः**=एकैकाङ्गोपासनापेक्षया भूम्नोऽग्निवैश्वानरोपासनस्य **ज्यायस्त्वं** स्वरूपतः फलतोऽतिशयेन वृद्धत्वं प्रामाणिकत्वमनुष्ठेयत्वमिति यावत् प्रतिपत्तव्यम्, **क्रतुवत्**=दर्शपूर्णमासप्रभृतियागवत्। **तथा हि**=तथा च **दर्शयति**=ज्यायस्त्वं दर्शयति श्रुतिरित्यर्थः।

छान्दोग्ये खलु **"प्राचीनशाल औपमन्यवः"** (छां० ५। ११। १) इत्यारभ्याधीतायां वैश्वानरोपासनायामङ्गोपासनमग्निवैश्वानरोपासनं च पठ्यते—**"औपमन्यव! कं त्वमात्मानमुपास्स इति, दिवमेव भगवो राजन्निति होवाच। एष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से"** (छां० ५। १२। १) इत्यादिनाऽङ्गोपासनम् **"तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ"** (छां० ५। १८। २) इत्यादिना चाग्निवैश्वानरोपासनम्। तत्र संशयः किमङ्गानामङ्गिनश्चोभयेषामत्रोपासनं विवक्ष्यते किंवा केवलमङ्गिन इति। उभयेषामिति पूर्वः पक्षः, केवलमङ्गिन इति सिद्धान्तः। किं तावत् प्राप्तम्? उभयेषामुपासनमिति ब्रूमः। उपास्त इति श्रुतिसामान्योपलम्भात्। समानां खलु **"उपास्ते"** इति श्रुतिमुपलभामहेऽङ्गेष्वङ्गिनि च **"य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन इति होवाच"** (छां० ५। १२। २) इत्यादावङ्गेषु **"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते"** (छां० ५। १८। १) इत्यादौ चाङ्गिनि। न चोभयत्र श्रुतिसामान्योपलब्धौ सत्यामेकत्रोपासनं विवक्ष्यते नान्यत्रेति कल्पनं युक्तं प्रतीयते।

फलभेदश्रुतेश्च । फलं च वैश्वानराङ्गानां द्युप्रभृतिपृथिवीपर्य्यन्तानां मूर्द्धादिपादान्तानामुपासनस्याग्निवैश्वानरोपासनस्य च भेदेन श्राव्यते "**तस्मात् तव सुतं प्रसुतमासुतं कुले दृश्यते**" (छां० ५ । १२ । १) इत्यादिनाऽङ्गोपासनस्य "**स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति**" (छां० ५ । १८ । १) इत्यादिना चाग्निवैश्वानरोपासनस्य । **सुत**मग्निष्टोमे, **प्रसुत**महीने, सत्रे **चासुतं** सोमं याज्ञिकाः परिभाषन्ते । तत्साध्यकर्मसम्पत्तिस्तव कुले दृश्यत इत्यर्थः । न चान्यतरोपासने विवक्ष्यमाणे श्रुतिस्तत्फलं भेदेन श्रावयितुमर्हति । फलभेदो ह्युपासनभेदे सति सङ्गच्छते नान्यथा । तस्मादुभयोपासनमेवात्र विवक्ष्यते न केवलमग्निवैश्वानरोपासनमिति । एवं प्राप्तेऽभिधीयते—

**ज्यायस्त्वाद् भूम्नः क्रतुवत्** । यथा हि दर्शपूर्णमासप्रभृतीनां क्रतूनामेक एव साङ्गप्रधानप्रयोगस्तावदभिप्रेयते न ततः पृथगेकैकशोऽङ्गानामपि प्रयाजादीनां प्रयोगस्तथाऽत्राप्यग्निवैश्वानरोपासनमेव केवलमेकं मुमुक्षुभिरनुष्ठेयं विवक्ष्यते न ततः पृथगेकैकशोऽङ्गानामपि द्युप्रभृतिपृथिवीपर्य्यन्तानामुपासनम् । यत्कारणमुपक्रमोपसंहारपर्य्यालोचनया भूम्नोऽग्निवैश्वानरोपासनस्यैव ज्यायस्त्वमुपलभामहे । प्राचीनशालप्रभृतयः किलोद्दालकषष्ठा महर्षयो वैश्वानरात्मनि निष्ठामलभमानास्तज्जिज्ञासया कैकेयमश्वपतिं राजानमभ्याजग्मुः । अभ्यागत्य च तम् "**आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि**" (छां० ५ । ११ । ६) इति पप्रच्छुरित्येष ह्युपक्रमः । स चाग्निवैश्वानरोपासनगोचरो विस्पष्टः । तज्जिज्ञासयैव प्राचीनशालप्रभृतीनां कैकयराजसमीपेऽभ्यागमनात् । न चैकैकाङ्गजिज्ञासयैव तेषां तत्समीपेऽभ्यागमनं बभूवेति वक्तुं शक्यते । प्रश्नोत्तराभ्यामेकैकाङ्गविज्ञानस्य तेषां पूर्वत एव सद्भावोपलब्धेः । नहि सर्वथा वैश्वानरात्मानभिज्ञाः "**औपमन्यव ! कं त्वमात्मानमुपास्से**" (छां० ५ । १२ । १) इत्यादिषु प्रश्नेषु "**दिवमेव भगवो राजन् ! इति होवाच**" (छां० ५ । १२ । १) इत्यादिकमुत्तरयितुमर्हन्ति । मूर्द्धा तु द्युलोको वैश्वानरात्मन इति

निःसन्दिग्धम्। यथा चोपक्रमस्तावदग्निवैश्वानरोपासनविषयस्तथा "**यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते**" (छां० ५। १२। १) इत्यादिक उपसंहारोऽपि तद्गोचरः सुव्यक्तमुपलभ्यते। प्राचीनशालौपमन्यवप्रभृतिभिरभिहितमेकैकाङ्गोपासनं निराकृत्याग्निवैश्वानरोपासनस्योपदेशात्। एवमुपक्रमोपसंहारयोरग्निवैश्वानरोपासनपरत्वे चास्ति तदुपासनस्य ज्यायस्त्वोपलम्भ इति किमु वक्तव्यम्। श्रुतिश्चाग्निवैश्वानरोपासनस्य "**स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति**" (छां० ५। १८। १) इति फलातिशयमुपदिशन्ती स्फुटं तस्य ज्यायस्त्वं दर्शयति। ज्यायस्त्वं चानुष्ठेयत्वप्रयोजकत्वादनुष्ठेयत्वमुक्तम्। न चैतदेव, किं तर्हि? अङ्गोपासनानां निन्दाऽपि मध्ये क्रियमाणा दरीदृश्यते। यदा खलु प्राचीनशालप्रभृतयो महर्षयो वैश्वानरात्मविविदिषया समेत्य कैकेयराजानमुपसेदुः, तदा स गूढाभिसन्धिरुपसीदतस्तान् स्वं स्वमुपास्यं पप्रच्छ। ते च पृष्टा द्युप्रभृतीनामेकैकं तदङ्गं स्वंस्वमुपास्यं प्रत्यूचुः। कैकेयश्च "**मूर्द्धा त्वेष आत्मन इति होवाच**" (छां० ५। १२। २) इत्यादिना मूर्द्धादिभावं तेषामेकैकस्य विदधत् "**मूर्द्धा ते व्यपतिष्यद् यन्मां नागमिष्यः**" (छां० ५। १२। २) इत्यादिना तदङ्गोपासनं मूर्धपाताद्यनिष्टफलहेतुत्वप्रदर्शनेन निन्दयाम्बभूव। न चाङ्गोपासनानामप्यनुष्ठेयत्वे निन्देयं कथञ्चिदुपपद्यते। नह्यनुष्ठेयं किञ्चित् क्वचिन्निन्द्यते। निन्दितस्य वा कदाचिदनुष्ठानमुपपद्यते। प्रत्येकाङ्गोपासननिन्दया चाग्निवैश्वानरोपासनप्रशंसाऽर्थात् संपिण्ड्यते। ततोऽप्यस्यैवानुष्ठेयत्वं विस्पष्टम्। **यत्तु** प्रत्येकमङ्गोपासनेषु फलं श्रूयते तदग्निवैश्वानरोपासनस्तुत्यर्थमनूद्यते तत्फलेऽन्तर्भावात्। उपास्त इत्यप्यनुवादमात्रं वर्तमानापदेशश्च न विधिः। तस्मादत्राग्निवैश्वानरोपासनमेवैकं विवक्ष्यते न ततो व्यतिरिक्तमङ्गोपासनमपि किञ्चिदिति दृढं मनसि धर्तव्यम्॥ ५७॥

उपासनगोचरो गुणोपसंहारविचारः पर्यवसितः। **सम्प्रति तदनुष्ठानगोचरो** विचारः प्रारब्धव्यः। उपासने विज्ञाते **तदनुष्ठानवि-**

ग्रासावाः स्वत एवोदयात् । तमेव प्रारब्धुकामः पूर्वं तावदुपासननानात्वं व्यवस्थापयति—

"नाना शब्दादिभेदात्" ॥ ५८ ॥

**नाना**=उपासनानि नाना विज्ञातव्यानि, कुतः? **शब्दादिभेदात्**=चोदनाशब्दोऽत्र शब्दः, आदिशब्देनेतिकर्तव्यता गृह्यते, भेदशब्दो द्वन्द्वान्ते श्रूयमाणत्वादुभाभ्यां सम्बध्यते, चोदनाशब्दभेदादितिकर्तव्यताभेदाच्चेत्यर्थः ।

दहरशाण्डिल्यवैश्वानरप्रभृतीनि खलु यान्युपासनानि सर्ववेदान्तेष्वविशिष्टानि व्यवस्थापितानि "**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्**" ( वे० ३ । ३ । १ ) इत्यादिना, तानि विषयः । तत्र संशयः किमेषां नानात्वं विज्ञातव्यमाहोस्विदेकत्वमिति । उपास्यस्य भगवतो ब्रह्मणः सर्वत्राविशेषादेकत्वमिति प्राप्तेऽभिधीयते—**नाना शब्दादिभेदात्** । यद्यप्युपास्यं ब्रह्म सर्वत्राविशिष्टं वर्तते न कुत्रापि विशिष्यते तथापि 'उपासीत, वेद, ध्यायीत' इत्यादिचोदनाशब्दानामितिकर्तव्यतानां च भेदान्नानात्वमेव तेषां युक्तं विज्ञायते नैकत्वम् । ननूपास्याभेदमात्रेण तानि सम्भेत्तुमर्हन्ति यावदितिकर्तव्यतादयस्तेषां न सम्भिद्यन्ते । अस्ति चात्र तद्भेदः । तस्मात् तानि नाना ॥ ५८ ॥

उपासनानां नानात्वं व्यवस्थापि । सम्प्रति तदनुष्ठाने विकल्पः प्रतिपाद्यते—

"विकल्पोऽविशिष्टफलत्वात्" ॥ ५९ ॥

**विकल्पः**=उपासनानामनुष्ठाने विकल्पः प्रतिपत्तव्यः, कुतः? **अविशिष्टफलत्वात्**=समानफलकत्वादित्यर्थः ।

शाण्डिल्यदहरवैश्वानरप्रभृतीनामुपासनानां नानात्वे व्यवस्थितेऽयमपरः संशयः किं तेषामनुष्ठाने समुच्चयः स्यादाहोस्विद् विकल्प इति । भिन्नानामप्यग्निहोत्रदर्शपूर्णमासप्रभृतिकर्मणामनुष्ठाने समुच्चयस्य दृष्टत्वात् कर्मत्वाविशेषेण समुच्चये प्राप्तेऽभिधीयते—**विकल्पोऽविशिष्टफलत्वात्** ।

ब्रह्मसाक्षात्कारलक्षणं फलं हि सर्वेषामुपासनानामविशिष्टम्। तद्यथा सर्वोपासनानुष्ठानेन मुमुक्षुभिरवाप्यते तथैकोपासनानुष्ठानेनाप्यवाप्तुं शक्यते। न चैकोपासनानुष्ठानेनैव तदवाप्तावन्योपासनानुष्ठानं पुनर्युक्तमधिगम्यते। व्यर्थत्वात्। नहि व्यर्थं किञ्चित् प्रेक्षावद्भिरनुष्ठातुमुत्सह्यते। अग्निहोत्रदर्शपूर्णमासादीनि कर्माणि तु नित्यानि प्रत्यवायप्रसङ्गभिया समुच्चित्यानुष्ठीयन्ते। तस्मान्मुमुक्षूणामुपासनानुष्ठाने विकल्पो न्याय्यो न समुच्चय इति साधु निरीक्षामहे ॥ ५८ ॥

काम्योपासनासु विशेषमाह—

**काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात्" ६०**

तुशब्देनाकाम्या उपासना व्यवच्छिद्यन्ते। **काम्याः**=ब्रह्मसाक्षात्कारातिरिक्ततत्तत्फला उपासना **यथाकामं**=यथाभिलाषं **समुच्चीयेरन्**=समुच्चित्यानुष्ठीयेरन्, **वा**=अथवा **न**=न समुच्चित्यानुष्ठीयेरन्, कुतः? **पूर्वहेत्वभावात्**=पूर्वस्य "अविशिष्टफलत्वात्" इत्यस्य विकल्पहेतोरसत्त्वादित्यर्थः।

या इमा उपासनाः खलु ब्रह्मसाक्षात्कारातिरिक्तमुख्यावचं तत्तत्सांसारिकं किञ्चित्फलमुद्दिश्य तत्र तत्र वेदान्तेषु विधीयन्ते ताः काम्या इति व्यपदिश्यन्ते। तासामनुष्ठाने तत्तत्फलमवेप्सूनामात्मेच्छैव नियामिका वेदितव्या यथा काम्यकर्मानुष्ठाने कर्मिणाम्। न च तत्र तत्समुच्चयो वा तद्विकल्पो वा नियन्तुं शक्यते। यत्कारणं तत्फलमविशिष्टं नास्ति। नहि ये फलभूयस्त्वं कामयन्ते तेषां विकल्पेन तदनुष्ठानं घटते। ये चैकमेव किञ्चित् फलमभिलषन्ते तेषां समुच्चयेन तदनुष्ठानमुपपद्यते। तस्माद् यथा ते कामयेरन् तथाऽनुतिष्ठेयुः समुच्चित्य वा विकल्प्य वा। स्वतन्त्रा हि तत्र ते यथाफलाभिलाषमिति सिद्धान्तः ॥ ६० ॥

काम्योपासनेषु सर्वत्रानुष्ठानानियमोऽभिहितः। अङ्गोपासनेषु सोऽभिधातव्यः। समानत्वात्। तमेवाभिधातुकामः पूर्वं तावत् पूर्वपक्षमाह—

**"अङ्गेषु यथाश्रयभावः" ॥ ६१ ॥**

**अङ्गेषु**=कर्माङ्गोपासनेषु **यथाश्रयभावः**=यथोपासनाश्रयाणां प्रधानकर्माङ्गानामुद्गीथादीनामनुष्ठानं तथाऽनुष्ठानस्य भवनं भावोऽवगन्तव्य इत्यर्थः ।

कर्माङ्गावबद्धोपासनेषु संशयः किं काम्योपासनानामिवाङ्गोपासनाना-मनुष्ठानेऽप्यनियमो वर्तते किंवा तेषामनुष्ठानेऽस्ति कश्चिन्नियम इति । तत्र नियम इति पूर्वः पक्षः, अनियम इति सिद्धान्तः । किं तावत् प्राप्तम्? नियम इति ब्रूमः । अङ्गाश्रितत्वात् । उपासनानि हि तान्यु-द्गीथादीनि प्रधानकर्माङ्गान्याश्रयन्ति । कर्माङ्गानि च तानि साङ्गं प्रधानं कर्तव्यमिति नियमात् समुच्चित्यानुष्ठीयन्ते न जातु विकल्प्य । तेषां समुच्चित्यानुष्ठाने च तदाश्रितानामुपासनानामपि युक्तं समुच्चित्यानुष्ठा-नम् । अन्यथा तदाश्रितत्वानुपपत्तेः । नह्याश्रितानि स्युराश्रयतन्त्राणि च न भवेयुरित्युपपद्यते । तस्मात् कर्माङ्गानामिवास्ति तेषां समुच्चये-नानुष्ठाननियमः ॥ ६१ ॥

हेत्वन्तरमाह—

**"शिष्टेश्च"** ॥ ६२ ॥

अङ्गेषु यथाश्रयभाव इत्यनुवर्तते । पूर्ववत्रैव हेत्वन्तरमेतदिति चार्थः । **शिष्टेः**=शासनादङ्गेषु यथाश्रयभावो द्रष्टव्य इत्यर्थः ।

यथा ह्युद्गीथादीनि कर्माङ्गानि खलु शिष्यन्ते तथा तदाश्रयाण्युपास-नान्यपि शिष्यन्ते **"ओमित्येतदक्षरमुद्गीथमुपासीत"** ( छां० १ । १ । १ ) इत्याद्यासु श्रुतिषु । न च तेषां शासनाविशेषेऽनुष्ठानविशेषो युज्यते । तस्माद् युक्तः कर्माङ्गोपासनेषु यथाश्रयभावः ॥ ६२ ॥

अत्रैव लिङ्गं दर्शयति—

**"समाहारात्"** ॥ ६३ ॥

अङ्गेषु यथाश्रयभाव इत्यनुवर्तते । **समाहारात्**=समाहरणमत्र सम-ताकरणं कर्मणि जातस्य क्षतस्य पूरणं, तस्मादङ्गेषु यथाश्रयभावो बध्यत इत्यर्थः ।

छान्दोग्ये खलु "**य उद्गीथः स प्रणवः, यः प्रणवः स उद्गीथः**" (छां० १ । ५ । ५) इति प्रणवोद्गीथयोरेकत्वोपासनं विधाय फलवाक्यं समाम्नायते "**होतृषदनाद्धैवापि दुरुद्गीतमनुसमाहरति**" (छां० १ । ५ । ५) इति । छन्दोगानामुद्गीथः, बह्वृचानां प्रणवः, तयोरुभयोरेकत्वेन यदुपासनमुद्गात्रा कृतं, तन्माहात्म्येन ह=प्रसिद्धं भिन्नक्रमोऽपिः, **दुरुद्गीतमपि**=दुष्टं गानं कृतमपि स्वकर्मणि गाने स्वरव्यञ्जनादिप्रमादरूपं जातं क्षतमपि **होतृषदनादेव**=यत्स्थो होता शंसति प्रणवमुच्चारयति तद् होतृषदनं, तेनेह शंसनमात्रं लक्ष्यते, होतृकर्तृकशंसनादे**वानुसमाहरति**=प्रतिसमादधाति समीकरोति पूरयतीत्यर्थः । अत्र योऽयमौद्गात्रकर्मणि जातस्य दुरुद्गानरूपस्य क्षतस्य हौत्रकर्मणः शंसनादनुसमाहारोऽभिधीयते स भवत्यङ्गानामिव तदाश्रितोपासनानामपि समुच्चित्यानुष्ठाने लिङ्गम् । नह्युद्गात्रा यावत् प्रत्यङ्गमुपासनसम्बन्धो न भवति तावद् दुरुद्गीतं हौत्रकर्मणः शंसनादनुसमाहर्तुं शक्यते । तद्ध्युपासनस्य कृत्यम् । न च तदुपासनासम्बन्धे निष्पद्यते । प्रत्यङ्गमुपासनसम्बन्धे चायातमङ्गानामिव तदाश्रितोपासनानामपि समुच्चित्यानुष्ठानम् । अतोऽङ्गेषु यथाश्रयभाव इति चारु मतम् ॥ ६३ ॥

लिङ्गान्तरमुपन्यस्यति—

"**गुणसाधारण्यश्रुतेश्च**" ॥ ६४ ॥

अङ्गेषु यथाश्रयभाव इत्यनुवर्तते । लिङ्गान्तरमेतदिति भावः । **गुणसाधारण्यश्रुतेः**=गुणस्य सोपासनस्य प्रधानकर्माङ्गस्योङ्कारस्य सर्वकर्मसाधारणत्वश्रुतेरङ्गेषु यथाश्रयभावो गम्यत इत्यर्थः ।

"**तेनेयं त्रयी विद्या वर्तते, ओमित्याश्रावयति, ओमिति शंसति, ओमित्युद्गायति**" (छां० १ । १ । ९) इति श्रुत्या हि गुणभूतस्य प्रधानकर्माङ्गस्य सोपासनस्योङ्कारस्य सर्वकर्मसाधारणः सम्बन्धः श्राव्यते । न चाङ्गानामिव तदाश्रितोपासनानां समुच्चित्यानुष्ठानाभावे सोपासनस्य तस्य सर्वकर्मसाधारणः सम्बन्धः आपयितुं

शक्यते । नहि श्रुतिरन्यथा श्रावयति किञ्चित् । साङ्गप्रधानानुष्ठाननियामकेन प्रयोगविधिना चाङ्गानामुद्गीथादीनां सर्वकर्मसाधारणः सम्बन्धः सुव्यक्तं प्राप्यते । सोऽयं तदाश्रितानामुपासनानां श्रूयमाणोऽपि भवति तत्समुच्चयानुष्ठाने लिङ्गम् । **तस्मात्** यथोपासनाश्रयभूतानि कर्माङ्गान्युद्गीथादीनि नियमेन समुच्चित्यानुष्ठीयन्ते तथा तदाश्रितान्युपासनान्यपि नियमेन समुच्चित्यानुष्ठीयन्त इति सम्यक् प्रतिपद्यते ॥ ६४ ॥

**जातः** पूर्वः पक्षः । सम्प्रति सिद्धान्तमाह—

**"न वा तत्सहभावाश्रुतेः"** ॥ ६५ ॥

**अङ्गेषु** यथाश्रयभाव इत्यनुवर्तते । वाकारेण पूर्वःपक्षो व्यावर्त्यते । **न**=अङ्गोपासनेषु यथाश्रयभावो न नियन्तुं शक्यते, कुतः? **तत्सहभावाश्रुतेः**=कर्मभिस्तत्सहभावस्य श्रवणाभावादित्यर्थः ।

न खलु कर्माङ्गोपासनेषु यथाश्रयभावः कथञ्चिन्नियन्तुं शक्यते । तेषां कर्मभिः सहभावस्याश्रवणात् । यदि हि कर्माङ्गोपासनानां कर्मभिः सहभावः श्रूयेत तदाऽवश्यं तेषां यथाश्रयभावोऽपि नियम्येत । समुच्चित्यानुष्ठानं तु यथाश्रयभाव इत्युक्तम् । न च तेषां तत्सहभावः कुत्रापि श्रूयते । प्रयोगविधिश्च क्रत्वर्थानामङ्गानामेवोद्गीथादीनां कर्मभिः सहभावं प्रापयितुमर्हति न तदाश्रयोपासनानाम् । पुरुषार्थत्वात् । पुरुषार्थत्वं च तेषां गोदोहनादिवत् **"तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद, नाना तु विद्या चाविद्या च । यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरं भवति"** (छां० १।१।१०) इति श्रुत्या फलविशेषसंयोगान्निश्चीयते । अन्यथा तदनुपपत्तेः । एतेनाङ्गानां तदाश्रितोपासनानां च शासनाविशेषोऽपि प्रत्युक्तो वेदितव्यः । क्रत्वर्थपुरुषार्थत्वाभ्यां तद्विशेषस्य प्रत्यक्षत्वात् । न चाश्रयाश्रयिभावः सम्बन्धोऽपि तेषामङ्गवत् समुच्चित्यानुष्ठानं नियन्तुमर्हति । व्यभिचारात् । नहि धूमध्वजाश्रयो धूमो भवति धूमध्वजे भवति । यथा चैष धूमस्तथैतान्यङ्गोपासनानीति नाङ्गेषु सत्सु नियमेन भवितुमर्हन्ति । **"समाहारात्"**

**"गुणसाधारण्यश्रुतेश्च"** इति दर्शितं लिङ्गद्वयमप्येतेनैव प्रत्याख्यातं द्रष्टव्यम् । तस्यार्थवादस्थत्वेन मानान्तरप्राप्तज्ञापकत्वेऽपि स्वयमसाधकत्वात् । मानान्तरं च न किञ्चिदिह पश्यामः । साधकमानाभावे च यस्य यस्मिन्नुपासनेऽभिरुचिस्तस्य तदनुष्ठानमिति युक्ततरं विज्ञायते न सर्वोपासनसमुच्चयः । तस्मादङ्गानां समुच्चित्यानुष्ठाननियमेऽपि तदाश्रितोपासनानां नास्ति समुच्चित्यानुष्ठाननियमः ॥ ६५ ॥

अत्रैव हेत्वन्तरमवतारयति—

**"दर्शनाच्च"** ॥ ६६ ॥

अङ्गेषु यथाश्रयभावो नेत्यनुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । **दर्शनात्**=विदुषा ब्रह्मणा सर्वर्त्विगभिरक्ष्यत्वस्य दर्शनाद् गम्यते नास्त्यङ्गोपासनेषु यथाश्रयभाव इत्यर्थः ।

**"एवं विद् ह वै ब्रह्मा यज्ञं यजमानं सर्वाँश्चर्त्विजोऽभिरक्षति"** ( छां० ४ । १७ । १० ) इति श्रुतिर्हि विदुषा खलु ब्रह्मणा सर्वेषामृत्विजामभिरक्षणं प्रतिपादयति । चेदङ्गाश्रितानि किलोपासनानि कर्मसु सर्वत्राङ्गवत् समुच्चित्य नियमेनानुष्ठीयेरन् तदा सर्वे सर्वविद इति नेयमेकेन तेन तदभिरक्षणं प्रतिपादयेत् । प्रतिपादयन्ती चैतदेषां नास्ति सर्वेषां कर्माङ्गवदुपासनानुष्ठाननियम इति स्फुटं विज्ञापयति । तस्मादङ्गानां प्रतिकर्मानुष्ठानसमुच्चयनियमेऽपि तदाश्रितोपासनानामनुष्ठाने नास्ति कश्चिन्नियमः समुच्चित्यानुष्ठीयेरन् विकल्प्य वेति राद्धान्तः ॥ ६६ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादवैदिकमुनिविरचितायां वेदान्तसूत्रवैदिकवृत्तौ तृतीयाध्यायस्य तृतीयः पादः ॥**

---



# तृतीयोऽध्यायः

## चतुर्थः पादः

ज्ञानसाधनमुपासनं विचारितम्। इदानीमन्यानि तत्साधनानि विचारणीयानि। प्रसङ्गागतं चापरं किञ्चिद् यथा पूर्वत्र। तदर्थमिमं चतुर्थं पादमारभमाणः पूर्वं तावत् स्वप्रधानत्वेन ज्ञानस्य मोक्षसाधनत्वमुपपादयन् सिद्धान्तेनोपक्रमते—

**"पुरुषार्थोऽतः शब्दादिति बादरायणः"** ॥ १ ॥

**अतः**=यस्य ज्ञानस्य साधनमुपासनं पूर्वस्मिन् पादे विचारितमस्माज्ज्ञानात् **पुरुषार्थः**=दुःखत्रयात्यन्तनिवृत्तिपूर्वकब्रह्मानन्दावाप्तिलक्षणः परमपुरुषार्थो मोक्षः सिध्यति, कुतोऽवगम्यते? **शब्दात्**=वेदोपनिषच्छ्रुतिवचनादिति **बादरायणः**=बादरायणाचार्यो मन्यत इत्यर्थः।

यस्य ज्ञानस्य साधनानि व्यचारिषत विचार्य्यन्ते च तस्मिन् संशयः किमिदं कर्मशेषत्वेन मोक्षसाधनं स्यादाहोस्वित् स्वप्रधानत्वेन। स्वतन्त्रत्वं स्वप्रधानत्वम्। कर्मशेषत्वेनेति पूर्वःपक्षः, स्वप्रधानत्वेनेति सिद्धान्तः। पूर्वः पक्षो विस्तरेणोपन्यस्य निरसिष्यते सिद्धान्तोऽनेनोच्यते। यावत्यः खलु वेदोपनिषच्छ्रुतयः सर्वास्ताः स्वप्रधानात् स्वतन्त्राज्ज्ञानादधिकारिणां मोक्षावाप्तिं प्रतिपादयन्ति **"य इत्तद्विदुस्तेऽमृतत्वमानशुः"** (ऋ० २। ३। १८। २३) **"तमेव विदित्वाऽति मृत्युमेति"** (यजु० ३१। १८) **"तमेव विद्वान् न बिभाय मृत्योः"** (अथर्व० १०। ४। ८। ४४) **"तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्"** (कठ० ५। १२) **"तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथाः"** (प्र० ६। ६) **"तमेवैकं जानथ आत्मानममृतस्यैष सेतुः"** (मुं० २। २। ५) **"ब्र-**

**ब्रह्मविदाप्नोति परम्**" (तै० २ । १) "**य एतद्विदुरमृतास्ते भवन्ति**" (श्वे० ३ । १) इत्याद्याः । तथा स्मृतयः "**तत्त्वज्ञानान्निःश्रेयसम्**" (वैशे० १ । १ । ४) "**तत्त्वज्ञानान्निःश्रेयसाधिगमः**" (न्या० १ । १ । १) "**ज्ञानान्मुक्तिः**" (सां० ३ । २३) "**सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम् । तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः**" (मनु० १२ । ८५) इत्याद्याः । ताश्च नः सर्वेष्वर्थेषु प्रमाणं न केनचित्कथञ्चिदन्यथयितुं शक्यन्ते । तस्मात् स्वतन्त्रं स्वप्रधानं ज्ञानं मोक्षस्य साधनमिति बादरायणाचार्यो मन्यते ॥ १ ॥

स्वमतविशुद्ध्यर्थमात्मशिष्यस्य जैमिनेरधुना पूर्वपक्षमुपन्यस्यति—

**"शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः"** ॥२॥

अत इति सप्तम्या विपरिणम्यानुवर्तते । **पुरुषार्थवादः**=अत्रार्थवाद इत्येकदेशस्तन्त्रेणोपात्तो द्रष्टव्यः, पृथग् वाऽर्थवाद इति पदं शेषणीयम्, अस्मिन् ज्ञाने परमपुरुषार्थप्राप्तिवादोऽर्थवादो वर्तते, कुतः? **शेषत्वात्**=शेषत्वमङ्गत्वं, कर्माङ्गत्वात्, **यथाऽन्येषु**=द्रव्यसंस्कारकर्मसु कर्माङ्गेषु यथेत्यर्थः ।

यदुक्तं खलु परमपुरुषार्थस्य मोक्षस्य स्वप्रधानं स्वतन्त्रं ज्ञानं साधनं तन्न युक्तमुच्यते । ज्ञानस्य कर्माङ्गत्वेन स्वप्रधानत्वाभावात् । आत्मब्रह्मणी हि कर्तृत्वदेवतात्वाभ्यां कर्माङ्गे भवतः । ज्ञानं च तत्संस्कारकमिति तदपि तद्द्वारा भवति परोक्षणादिवत् कर्माङ्गम् । यथा हि पुरोडाशप्रकृतयो व्रीह्यादयः परोक्षणादिना संस्क्रियमाणाः कर्माङ्गतां प्रपद्यन्ते नान्यथेति तत्संस्कारकं परोक्षणादिकं भवति तद्द्वारा कर्माङ्गं तथाऽऽत्मब्रह्मणी अपि देहादिभ्यो व्यतिरेकेण हविर्भोक्तृत्वेन च ज्ञाते कर्माङ्गतां बाभज्येते नाज्ञाते इति तज्ज्ञानमपि भवति तद्द्वारा कर्माङ्गम् । परोक्षणादयः किल व्रीह्यादीन् संस्कुर्वन्ति ज्ञानं चात्मब्रह्मणी । नह्येष यावदात्मनो देहादिभ्यो व्यतिरेकं परलोकसम्बन्धं च नाधिगच्छति तावद् वैदिकेषु कर्मसु वर्तितुम-

इति। अत्र च तत्तद्देवतारूपेण यावद् हविर्भाग् न विज्ञायते तावत् कर्माङ्गं सम्पद्यते। यदिदमात्मब्रह्मणोर्विज्ञानं तदेव तत्संस्कारः। संस्कृतयोस्तयोः कर्माङ्गत्वे चागतं तत्संस्कारकस्य ज्ञानस्यापि तदङ्गत्वम्। अङ्गानां च प्रधानफलेनैव फलवत्त्वमिष्यते न स्वतन्त्रम्। यस्तु तत्र परमपुरुषार्थप्राप्तिवादो नाम फलवादः श्रुतिस्मृतीनां विद्यते सोऽर्थवादो वर्तते यथाऽन्येषु द्रव्यसंस्कारकर्मसु "**यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति**" (तै० सं० ३ । ५ । ७ । २) "**यदङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते**" (तै० सं० ६ । १ । १ । ५) "**यत् प्रयाजानुयाजा इज्यन्ते वर्म वा एतद् यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्यै**" (तै० सं० २ । ६ । १ । ५) इति। तस्मात् कर्मैव स्वप्रधानं मोक्षस्य साधनं ज्ञानं तु तच्छेषत्वेनेति जैमिनिराचार्यो मन्यते ॥ २ ॥

अत्र शिष्टाचारं प्रमाणयति—

**"आचारदर्शनात्"** ॥ ३ ॥

अत इति षष्ठ्या शेषत्वमिति च प्रथमया विपरिणम्यानुवर्तते। **आचारदर्शनात्**=शिष्टाचारदर्शनाज्ज्ञानस्यास्य कर्मशेषत्वं गम्यत इत्यर्थः।

ये किलाश्वपतिप्रभृतयो ज्ञानिनः शिष्टाः श्रूयन्ते तेषां सर्वेषां कर्माचारो निर्दिश्यमानो दृश्यते "**यक्ष्यमाणो वै भगवन्तोऽहमस्मि**" (छां० ५ । ११ । १) इत्याद्यासु श्रुतिषु। यदि हि ज्ञानमिदं कर्मशेषो न विद्येत न जातु तेषां तद्विषयः स निर्दिश्यमानो दृश्येत। नहि ज्ञानस्य कर्मशेषत्वाभावे ज्ञानिनां कर्माचारो निर्देष्टुं शक्यते। निर्दिशन्ति चैतं सुव्यक्तं श्रुतयः। तस्मादस्ति ज्ञानस्य कर्मशेषत्वमिति निःसंशयं प्रतिपद्यते ॥ ३ ॥

अत्रैवान्यं हेतुमाह—

**"तच्छ्रुतेः"** ॥ ४ ॥

अतः शेषत्वमिति पूर्ववद् विपरिणम्यानुवर्तते । **तच्छ्रुतेः**=तदा शेषत्वं परामृशति, तत्प्रतिपादकश्रुतेर्ज्ञानस्यास्य कर्मशेषत्वं निश्चीयत इत्यर्थः ।

छान्दोग्योपनिषदि पठ्यते "**यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति**" (छां० १ । १ । १०) इति । तत्र विद्ययेति साधनार्थिका तृतीया श्रुतिः । तया विद्याशब्दोदितस्य ज्ञानस्य कर्मशेषत्वं प्रत्यक्षं प्रतिपाद्यते । अन्यथाऽनुपपत्तेः । नहि तत्प्रतिपादनाभावे सा कथञ्चिदुपपत्तुमर्हति । तस्मात् कर्मशेषो ज्ञानमिति निश्चयः ॥ ४ ॥

अत्रैवापरं हेतुमाह—

"**समन्वारम्भणात्**" ॥ ५ ॥

अतः शेषत्वमिति पूर्ववद् विपरिणम्यानुवर्तते । **समन्वारम्भणात्**=समन्वारम्भणमनुगमनं, ज्ञानस्य कर्मणा सार्धमनुगमनात् कर्मशेषत्वं गम्यत इत्यर्थः ।

बृहदारण्यके श्रूयते "**तं विद्याकर्मणी समन्वारभेते**" (बृ० ४ । ४ । २) इति । **तं**=परलोकं गच्छन्तं जीवात्मानं **विद्याकर्मणी**=ज्ञानं च कर्म च **समन्वारभेते**=अनुगच्छत इत्यर्थः । तत्र यदिदं ज्ञानकर्मणोः समन्वारम्भणमुच्यते तन्न तावदुपपद्यते यावत् कर्माङ्गत्वं ज्ञानस्य नाभ्युपगम्यते । नहि स्वप्रधानस्य सतो ज्ञानस्य कर्मसाहित्यमन्यथा कथञ्चिदुपपादयितुं शक्यते । स्वप्रधानभावेन तत्कल्पनदपेक्षया च वरमुक्तविधया कर्म प्रत्यङ्गभावेन तत्कल्पनम् । तस्मात् कर्माङ्गत्वं ज्ञानस्येति युक्तमधिगम्यते ॥ ५ ॥

अत्रैव हेत्वन्तरमाह—

"**तद्वतो विधानात्**" ॥ ६ ॥

अतः शेषत्वमिति पूर्ववद् विपरिणम्यानुवर्तते । **तद्वतः**=ज्ञानवतो **विधानात्**—कर्मविधानाज्ज्ञानस्यास्य कर्मशेषत्वं गम्यत इत्यर्थः ।

श्रुतिः खलु वेदार्थज्ञानवतः स्वाध्यायादिकं कर्म विदधाति "**आचार्य्यकुलाद् वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः**" (छां० ८।१५।१) इत्यादिना। न चेयं वेदाध्ययनवतः कर्म विदधाति न वेदार्थज्ञानवतः "वेदमधीत्य" इत्युपादानादिति शङ्कितव्यम्। अर्थज्ञानपूर्वकवेदाक्षरग्रहणस्यैवाध्ययनपदार्थत्वाभ्युपगमात्। न खल्वस्माभिर्वेदाक्षरग्रहणमात्रं वेदाध्ययनमभ्युपगम्यते येनाशङ्क्यमुदियात् किं तर्हि? अर्थज्ञानपूर्वं वेदाक्षरग्रहणम्। तत्र चेदं ब्रह्मज्ञानमप्यन्तर्भूयते। वेदार्थत्वाविशेषात्। नहि ब्रह्म वेदार्थत्वं कदाचिदतिक्रामति। तथाच येन वेदार्थो विज्ञायते तेन ब्रह्मापि विज्ञायत इति सुध्रुवम्। तत्रैतद् विचारणीयं भवति चेदिदं ब्रह्मज्ञानं कर्मशेषो न विद्येत न जातु तद्वतः स्वाध्यायादिकं कर्म विधीयेत। नहि ज्ञानस्य कर्मशेषत्वाभावे तद्वतस्तत्कर्म विधातुं शक्यते। वैयर्थ्यप्रसङ्गात्। नहि श्रुत्या व्यर्थं किञ्चिद् विधीयते। सा हि जगतां कल्याणाय प्रवृत्ते न प्रहाणाय। विदधाति च ज्ञानवतः कर्म। तस्मादस्ति कर्मशेषो ज्ञानमिति विज्ञायते॥ ६॥

अत्रैवान्यं हेतुं समुच्चिनोति—

"**नियमाच्च**" ॥ ७॥

अतः शेषत्वमिति पदद्वयं पूर्ववद् विपरिणम्यानुवर्तते। यत्रार्थे पूर्वे हेतवोऽभ्यधायिषत तत्रैवार्थे हेतुरयं समुच्चीयत इति चार्थः। **नियमात्**—यावदायुःकर्मनियमनाद्यस्य ज्ञानस्य कर्मशेषत्वं प्रतिपद्यत इत्यर्थः।

श्रुतिर्हि यावदायुरग्निहोत्रादिकर्मानुष्ठानं तावन्नियच्छति "**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः**" (यजु० ४० । २) इति। "**एतद् वै जरामर्य्यं सत्रं यदग्निहोत्रं, जरया वा ह्येवास्मान्मुच्यते मृत्युना वा**" (शत० १२ । ४ । १ । १) इति च। न चायं यावदायुःकर्मानुष्ठाननियमो ज्ञानस्य स्वातन्त्र्येण मोक्षसाधनभावे

कथञ्चित् सङ्गच्छते। ज्ञानं चेदस्ति किं कर्मणा। कर्मणोऽपि वर्तते तत्र किञ्चित् कृत्यमिति चेत्? हन्त तर्हि कर्मैवास्तु स्वतन्त्रं मोक्षसाधनं यावदायुस्तदनुष्ठाननियमोपलब्धेः कृतं तत्र सर्वविप्रयोगहेतुनाऽनेनामङ्गलमूर्तिना ज्ञानेन। श्रूयमाणं तस्य तत्साधनत्वं तु कर्माङ्गत्वेनापि सङ्गमयितुं पार्य्यते नास्ति तत्र किञ्चिदनुपपन्नं नाम। तस्मात् कर्मणो मोक्षो ज्ञानं तु कर्मशेष इति युक्तं प्रतिपद्यामहे॥ ७॥

उपन्यासि पूर्वःपक्षः। सम्प्रति तमपाकृत्य स्वसिद्धान्तोऽध्यवसीयते—

**"अधिकोपदेशात्तु बादरायणस्यैवं, तद्दर्शनात्"॥ ८॥**

तुशब्देन पूर्वःपक्षोऽपाक्रियते। **बादरायणस्य**=बादरायणाचार्य्यस्य**अधिकोपदेशात्**=यावदात्मज्ञानं कर्मण्युपयुज्यते ततोऽधिकस्योपदेशादनुशासनादेवं=यथोक्तं प्रथमसूत्रे तथाऽध्यवसातव्यम्, कस्मादधिकमुपदिशति बादरायणः? **तद्दर्शनात्**=तदाऽधिकोपदेशं परामृशति, तस्याधिकोपदेशस्य वेदोपनिषच्छ्रुतिषु दर्शनादित्यर्थः।

यावदात्मज्ञानं खलु कर्मण्युपयुज्यते जैमिनिराचार्य्यस्तावन्मात्रमुपदिशति। बादरायणाचार्य्यस्तु न तावन्मात्रमुपदिशति, किं तर्हि? ततोऽधिकमुपदिशति। जैमिनिराचार्य्यो हि कर्तुर्भोक्तुः सतः प्रत्यगात्मनः शरीरादिभ्यो व्यतिरेकं परलोकसम्बन्धं चादिशति, जगज्जन्मादिकारणं ब्रह्म च तत्तद्देवतारूपेण हविर्भागमनुशास्ति। तदिदं ज्ञानं कर्मणोऽङ्गमुपपद्यते। सर्वस्य शरीरादिभ्यो व्यतिरेकं परलोकसम्बन्धं चात्मनो विज्ञाय तत्र प्रवृत्तेरौचित्यात्। कर्म च सर्वमनित्यफलं प्रसिद्धम् **"तद्यथेह कर्मचितो लोकः क्षीयत एवममुत्र पुण्यचितो लोकः क्षीयते"** (छां० ८। १। ६) इत्यादिश्रुतिभ्यः। न चानित्यफलेन तेन नित्यो मोक्षः कर्हिचिदवाप्तुं शक्यते। ज्ञानं च तदङ्गत्वात् सुतरां तदवाप्तौ न समर्थायते। अतस्तत्रातुष्यन् बादरायणाचार्य्यस्ततोऽधिकं तत्साधनं जीवात्मज्ञानं ब्रह्मज्ञानं चोपदिशति। शरीरादिभ्यत्यन्तेभ्यो

निखिलपदार्थेभ्यो विविक्तः कर्तृत्वभोक्तृत्वादिसंसारिधर्मविरहितो नित्य-शुद्धबुद्धमुक्तस्वभावो जीवात्मा, तदन्तरात्मभूतमसंख्येयकल्याणगुणगणनि-धानं चिदचिदखिलपदार्थाधिष्ठानं जगज्जन्मादिकारणं सर्वज्ञं सर्वशक्ति सच्चिदानन्दस्वरूपं च ब्रह्म । तयोरुभयोर्यत्साक्षाद्दर्शनं ज्ञानं तदेव मोक्ष-साधनमित्येष हि तदुपदेशः । न च तदुपदिष्टमिदं जीवात्मपरमात्म-गोचरं ज्ञानं कदाचित् कर्मणोऽङ्गं सम्पद्यते । तद्ध्युत्पद्यमानं समूलं कर्म-जातमुच्छिनत्ति न जातु निर्वर्तयति । निर्वर्तयच्चाङ्गं सम्पद्यते न समूलमुच्छिन्दत् । प्रतिपादयिष्यति च तेन समूलं तदुच्छेदं स्वयमा-चार्य्यः **"उपमर्दं च"** ( वे० ३ । ४ । १६ ) इत्यत्र । तमिमं ज्ञान-विषयमधिकोपदेशं भगवतो बादरायणस्य वेदोपनिषच्छ्रुतयो दर्शयन्ति **आत्मनाऽऽत्मानं संविवेश"** ( यजु० ३२ । ११ ) **"तद्वि-ज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति"** ( मुं० ३ । २ । ७ ) **"तद्यदात्मविदो विदुः"** (मुं० २ । २ । ९) इत्याद्याः । सति चैवमधिकोपदेशदर्शने परमपुरुषार्थवादोऽपि श्रुतिस्मृ-तीनां यथार्थवाद एव बुद्धितलमध्यास्ते नार्थवादः । तस्माद् यद् यथोक्तं भगवता बादरायणेन **"पुरुषार्थोऽतः शब्दात्"** ( वे० ३ । ४ । १ ) इत्यत्र तत् तथैवाध्यवसीयते न जैमिनिनाऽभिहितं **"शेषत्वात् पुरुषार्थवादः"** ( वे० ३ । ४ । २ ) इत्यत्र कर्मशेषो ज्ञानं पुरुषार्थ-वादोऽर्थवाद इत्यादिकम् । तत्प्रतिपादकश्रुतिवचोऽदृष्टेः ॥ ८ ॥

यदुक्तमाचारदर्शनात् कर्मशेषत्वं ज्ञानस्येति, तत्राह—

**"तुल्यं तु दर्शनम्"** ॥ ९ ॥

तुशब्देनाचारदर्शनस्य कर्मशेषत्वगमकत्वं व्यावर्त्यते । **दर्शनं**= शिष्टाचारदर्शनं **तुल्यं**=कर्मवत् तत्त्यागेऽपि समानं विद्यत इत्यर्थः ।

यदि हि शिष्टानां खलु ज्ञानिनां कर्मगोचर एवाचारो लोके दृश्येत तदा नूनं ज्ञानस्य कर्मशेषत्वमभ्युपगम्येत । न च स तेषां तद्गोचर एव दृश्यते । तत्त्यागेऽपि दर्शनात् । यथा हि ज्ञानिनां तेषां कर्मगोचरस्ता-

वदाचारो दृश्यते तथा कर्मत्यागगोचरोऽपि दरीदृश्यते, “**एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रिरे**” ( कौ० २ । ५ ) “**एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति । एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति । ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति**” ( बृ० ४ । ४ । २२ ) “**एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राज**” ( बृ० मा० ४ । ५ । २५ ) इत्याद्यासु श्रुतिषु । न चैवं सत्यां तेषामुभयत्राचारदर्शने शक्यं कर्मशेषत्वं ज्ञानस्यावगन्तुम् । न च विकल्पस्तर्हि स्यादिति शङ्कितव्यम् । कर्माचारश्रुतीनामन्यथाऽप्युपपत्तेः । तासामन्यथोपपत्तिश्चादीदृशाम जिज्ञासासूत्रे पुरस्तात् । अनन्यथोपपत्तिकाश्चेमाः कर्मत्यागश्रुतयः । न च ताः कर्मणः शेषित्वे कथञ्चिदुपपत्तुमर्हन्ति । नहि तस्य तथात्वे कदाचन त्यागो घटते । तस्मान्न कर्मशेषो ज्ञानमिति परमार्थः ॥ ९ ॥

**यदुक्तं** तच्छ्रुतेरिति, तत्राह—

**“असार्वत्रिकी”** ॥ १० ॥

“यदेव विद्यया” ( छां० १ । १ । १० ) इत्यादिका श्रुतिः सर्वविद्याविषया न वर्तत इत्यर्थः ।

एषा खलु श्रुतिः प्रकृतविद्याविषया वर्तते न सर्वविद्याविषया । प्रकृता च कर्माङ्गावबद्धोद्गीथविद्या “**ओमित्येतदक्षरमुद्गीथमुपासीत**” ( छां० १ । १ । १ ) इत्युपक्रमान्नात्मविद्या । तस्मान्नासौ कर्मशेष इति निश्चयः ॥ १० ॥

**यदुक्तं** समन्वारम्भणादिति, तत्राह—

**“विभागः शतवत्”** ॥ ११ ॥

**विभागः**=विद्याविभागोऽवगन्तव्यः, **शतवत्**=शतविभागवदित्यर्थः ।

यथा हि स्थानभेदेषु विनियोगार्थं खलु शतं विभज्यते तथा विद्याविभागोऽप्यवगन्तव्यः । सा हि द्वेधा विभज्यते परा चापरा चेति । अत्रेदमाम्नायते "**द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चापरा च**" (मुं० १ । १ । ४) इति । ब्रह्मसाक्षात्कारात्मिका विद्या परेत्युच्यते तदन्या सर्वा चापरा । "**तं विद्याकर्मणी समन्वारभेते**" (बृ० ४ । ४ । २) इत्यत्र च विद्याशब्देनापरा काचिद् विद्या निगद्यते न परा । कामयमानाधिकारस्थत्वात् । सांसारिकविषयजातं कामयमानस्याधिकारे ह्येषा समन्वारम्भणश्रुतिर्वर्तते न मोक्षमाणाधिकारे "**इति नु कामयमानः**" (बृ० ४ । ४ । ६) इत्युपसंहारात् । "**अथाकामयमानः**" ) बृ० ४ । ४ । ६ ) इति च मोक्षमाणाधिकारस्य पृथक्करणात् । न च कामयमानाधिकारे वर्तमानायास्तस्याः कदाचित् परविद्यापरत्वं युज्यते । तत्राकामयमानानामेवाधिकारात् । अपरविद्यायाश्चास्माभिरपि कर्माङ्गत्वमिष्यते नास्ति काचिद् विप्रतिपत्तिः । यत्र च परविद्यायामस्ति विप्रतिपत्तिर्न तामेषा श्रुतिः कर्माङ्गत्वं प्रतिपादयति । तस्मात् कर्माङ्गं परविद्येति रिक्तं वचः ॥

"**तं विद्याकर्मणी समन्वारभेते**" (बृ० ४ । ४ । २) इत्यत्र विद्याकर्मणोर्विभागो वा द्रष्टव्यः शतवदिति सूत्रार्थः ।

यथा हि शतं विभज्यमानं क्षेत्रविक्रयिणं बलीवर्दविक्रयिणं चान्वेति क्षेत्रविक्रयिणं पञ्चाशत्, बलीवर्दविक्रयिणं च पञ्चाशदिति, एवं परलोकयात्रिणं तं विद्याकर्मणी विभज्य समन्वारभेते विद्यावन्तं विद्या कर्मवन्तं च कर्म । न चेत्थं विभागेन विद्याकर्मणोः समन्वारम्भणे कर्माङ्गं विद्येति सिध्यति । युक्तश्चैव समन्वारम्भणे तयोर्विभागः । भिन्नफलत्वात् । ब्रह्मलोकप्राप्तिं हि विद्याफलमाचक्षते स्वर्गलोकप्राप्तिं च कर्मफलम् । यत्रेदं श्रूयते "**विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणा यान्ति नाविद्वांसस्तपस्विनः**" (शत० १० ।

५।४।१६) इति। **विद्यया**=ब्रह्मोपासनया, **तत्**=कार्यं ब्रह्मलोकम**आरोहन्ति**=प्राप्नुवन्ति। **यत्र**=यस्मिन् प्राप्ते **कामाः**=क्षुद्रविषयाः कामाः **परागताः**=व्यावृत्ता निवृत्ता भवन्ति। **दक्षिणाः**=दक्षिणमार्गगाः केवलकर्मिणः। तपस्विनोऽप्य**विद्वांसः**=विद्यारहिताः। **यन्ति**=गच्छन्ति। "**कर्मणा पितृलोको विद्यया देवलोकः। देवलोको वै लोकानां श्रेष्ठः, तस्माद्विद्यां प्रशंसन्ति**" (बृ० १।५।१६) इति च। **पितृलोकः**=स्वर्गलोकः। **देवलोकः**=कार्य्यब्रह्मलोकः। न च भिन्नफलयोस्तयोर्मिलित्वा स्वर्गलोको वा ब्रह्मलोको वा फलं किञ्चिदेकं सम्भवति। विद्याशब्देन चेह न परविद्या ग्रहीतुं शक्यते कामयमानाधिकारादित्युक्तम्। देहादिव्यतिरिक्तात्मज्ञानादिलक्षणायाः परिग्रहे तु नास्त्यावश्यको विभागः कर्माङ्गत्वसम्भवादिति स्वयमूह्यम्॥ ११॥

यदुक्तं तद्वतो विधानादिति, तत्राह—

"**अध्ययनमात्रवतः**"॥ १२॥

मात्रचा वेदार्थज्ञानातिरिक्तं ज्ञानं परागुद्यते। छान्दोग्यश्रुतौ वेदार्थज्ञानमात्रवतः कर्म विधीयत इत्यर्थः।

यदि हि "**आचार्य्यकुलाद् वेदमधीत्य**" (छां० ८।१।१) इत्यादौ छान्दोग्यश्रुतौ खलु ब्रह्मज्ञानवतः स्वाध्यायादिकं कर्म विधीयेत तदाऽवश्यं ब्रह्मज्ञानं कर्माङ्गमिति मन्येत। न चात्र ब्रह्मज्ञानवतः स्वाध्यायादिकं कर्म विधीयते। कस्य तर्हि? वेदार्थज्ञानमात्रवतः। "**अधीत्य**"इति विशिष्योपादानात्। अध्ययनं चाचार्य्यादर्थैः सार्धं वेदाक्षराणां ग्रहणमिति वैदिकाभ्युपगमः प्रसिद्धः। **ननु** वेदार्थज्ञाने ब्रह्मज्ञानमप्यन्तर्भवति वेदार्थत्वाद् ब्रह्मण इत्युक्तम्। सत्यमुक्तमन्यत्वं तु नावबुद्धम्। अन्यत् किल वेदार्थज्ञानं भवति ब्रह्मज्ञानं चान्यत्। शब्दार्थसम्बन्धमात्रज्ञानं खलु वेदार्थज्ञानं वेदविदः कथयन्ति, स्वानुभवं च ब्रह्मविषयं ब्रह्मज्ञानम्। नहि येन वेदेषु शब्दार्थसम्बन्धो विज्ञायते तेन ब्रह्मापि

कदाचिदनुभूयते। निर्विकल्पसमाधिफलं हि मुमुक्षूणां ब्रह्मानुभवो न शब्दार्थसम्बन्धज्ञानफलम्। अत एव चाचार्य्याः सम्प्रदायविदः शब्दार्थ-सम्बन्धज्ञानमपरां विद्यां मन्यन्ते ब्रह्मगोचरमात्मानुभवं च परां विद्याम्। यत्रेदमाम्नायते **"तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्व-वेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिष-मिति। अथ परा यया तदक्षरमधिगम्यते"** (मुं० १।१।५) इति। न चापरविद्यावतः कर्मविधानं परविद्यावतः कल्पयितुं शक्यते। विरोधात्। परविद्या ब्रह्मज्ञानम्। तस्मान्न तत् कर्मशेष इति युक्तं मन्यामहे॥ १२॥

**यत्** पुनरुक्तं नियमादिति। तत् प्रतिविधीयते—

**"नाविशेषात्"** ॥ १३॥

**न**="कुर्वन्नेवेह कर्माणि" (यजु० ४०।२) इत्यादिना नियमवचनेन ब्रह्मज्ञानस्य कर्मशेषत्वं न सिध्यति, कुतः? **अविशेषात्**= अविशेषवचनत्वादित्यर्थः।

उदाहृतं खलु याजुषं नियमवचनं सामान्यवचनं विद्यते न विशेष-वचनम्। नह्यत्राज्ञानिनं प्रति यावज्जीवमग्निहोत्रादिकं कर्म नियम्यते ज्ञानिनं प्रति वेति विशेषो विज्ञायते। तदविज्ञाने च येनापेक्ष्यते कर्म तं प्रत्येष नियम इत्यर्थाद् गम्यते। अपेक्ष्यते चाज्ञानिना मोक्षहेतुब्रह्म-ज्ञानोत्पत्त्यर्थं कर्म न ज्ञानिना। प्राप्तब्रह्मज्ञानत्वात्। न चाज्ञानिनं प्रति कर्मनियमे तच्छेषो ब्रह्मज्ञानमिति कथञ्चित् सेद्धुमर्हति। **"कर्मणैव हि संसिद्धिमास्थिता जनकादयः"** (गी० ३।२०) इत्यादौ च संसिद्धिशब्देन ज्ञानप्राप्तिरुच्यते न मोक्षप्राप्तिः। तस्मादनङ्गं कर्मणो ज्ञानमिति ध्रुवः प्रत्ययः॥ १३॥

समाधानान्तरमाह—

**"स्तुतयेऽनुमतिर्वा"** ॥ १४॥

**वा**=अथवा **स्तुतये**=कर्मस्तुत्यर्थम**नुमतिः**=यावदायुः कर्मानुष्ठानानुज्ञा वदितव्येत्यर्थः।

ज्ञानं खलु मोक्षफलं प्रसिद्धम् । तच्च कर्मणैवावाप्तुं शक्यते नान्येन केनचिदिति नूनमिदं कर्म बहुस्तुत्यम् । न चैवम्भूतस्य तस्योचितो ज्ञानिनामपि कर्हिचित् परित्यागः । नहि येन परमपुरुषार्थहेतुज्ञानावाप्तिलक्षणो महानुपकारो विधीयते तत्परित्यागः कस्यचित् प्रशस्यते । अज्ञा खलु मूढधीकल्पाः केचित् कचित् कृतघ्नाः प्रजायेरन् न सुधियो ज्ञानिनो भ्रमेणापि तथा भवितुमुत्सहन्त इत्याचार्यो मन्यते । तस्माज्ज्ञानावाप्तितः पूर्वं यथा तदवाप्त्यर्थं कर्मानुष्ठीयते तथा तदवाप्तितः पश्चादपि शिष्टाचारपरिपालनार्थं लोकसङ्ग्रहार्थं च यावज्जीवं ज्ञानिभिरनुष्ठेयमिति तदङ्गत्वाऽनुमतिः प्रदीयते **"कुर्वन्नेवेह कर्माणि"** ( यजु० ४० । २ ) इत्यादिना याजुषेण नियमवचनेन । यत्रेदं स्मृतं भवति **"सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।। कुर्याद् विद्वाँस्तथाऽसक्तश्चिकीर्षुर्लोकसङ्ग्रहम्"** ( गी० ३ । २५ ) इति । तस्मात् कर्माङ्गं ज्ञानमित्यनुपपन्नम् ॥ १४ ॥

अत्रैव हेत्वन्तरमाह—

**"कामकारेण चैके"** ॥ १५ ॥

ज्ञानस्य कर्माङ्गत्वानुपपत्तौ हेत्वन्तरमेतदिति चार्थः । **एके**=केचिदेके शाखिनः **कामकारेण**=इच्छया ज्ञानिनामग्निहोत्रादिकर्मपरित्यागमामनन्तीत्यर्थः ।

कौषीतकिनो वाजसनेयिनश्च स्वेच्छया ज्ञानिनामग्निहोत्रादिकर्मपरित्यागमधीयते **"एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहाञ्चक्रिरे"** ( कौ० २ । ५ ) **"एतद् ह स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति । ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति"** ( बृ० ४ । ४ । २२ ) इति । प्रजामिति कर्मवित्तयोरुपलक्षणम् । लोकः कर्म । आत्मा=परमात्मा, स एव लोकः । न च ज्ञानस्य

कर्माङ्गत्वे ज्ञानिनां कामकारेणाग्निहोत्रादिकर्मपरित्यागः पठितुं शक्यते । नहि कर्मपरित्यागेऽपि ज्ञानं कर्माङ्गं कथञ्चिदुपपद्यते । अङ्गिनोऽभावे कस्येदमङ्गं भवेत् । न चानुपपद्यमानं शक्यमभ्युपगन्तुम् । तस्मात् कर्माङ्गं ज्ञानमित्ययुक्तम् ॥ १५ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"उपमर्दं च" ॥ १६ ॥**

एक इत्यनुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । **उपमर्दं**= ज्ञानिनां पुण्यापुण्यरूपस्य समस्तसंसारदुःखमूलस्य कर्मव्रातस्योपमर्दं क्षयमेके शाखिनोऽधीयत इत्यर्थः ।

यत्कारणमाथर्वणिका खलुः ब्रह्मसाक्षात्कारवतस्तत्रभवतो ब्रह्मज्ञानिनः समस्तकर्मोपमर्दं समामनन्ति **"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"** (मुं० २ । २ । ८) इति, तस्मात् प्रतिपद्यते कर्माङ्गं ज्ञानमिति नितान्तं साहसं वचः । अङ्गिनोऽङ्गेनोपमर्दानुपपत्तेः ॥ १६ ॥

अत्रैवापरं हेतुमाह—

**"ऊर्ध्वरेतस्सु च शब्दे हि" ॥ १७ ॥**

पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । चार्थो हिः । **ऊर्ध्वरेतस्सु**= चतुर्थाश्रमिणो मुनय ऊर्ध्वरेतसः, तेषु ब्रह्मज्ञानवत्सु कर्माभावादनङ्गं कर्मणो ज्ञानमिति प्रतिपद्यते । **शब्दे हि**=श्रुतौ चोर्ध्वरेतसो भगवन्तः श्रूयन्त इत्यर्थः ।

चतुर्थाश्रमिणो भगवन्तः संन्यासिनस्तावदूर्ध्वरेतसः समाख्यायन्ते । तेषां कदाचित् कुत्रचिद्रेतसः स्खलनाभावेन सततमूर्ध्वमेवावस्थानात् । नैष्ठिकब्रह्मचारिणश्च संन्यासिकल्पत्वात् तेष्वेवान्तर्भवन्ति । परिव्राजः परिव्राजकाः संन्यासिनो मुनयो यतय इति चैकोऽर्थः । तत्रभवत्सु तेषु ज्ञानं वर्तते कर्माग्निहोत्रादिकं च न वर्तते । बाह्योपकरणसाध्यं हि तत् कर्म । नच तत्रभवतां तेषां बाह्यं किञ्चिदुपकरणं विद्यते येन तत्साध्यं कर्मापि

सम्भाव्येत। यत्र च यस्य सम्भावनैव नास्ति दूरं तत्र तद्भावः। न च यन्न भवति तदङ्गत्वं ज्ञानस्य वक्तुं शक्यते। न चाङ्गि विहायापि कदाचिदङ्गं भवितुमर्हति। ज्ञानैकनिष्ठाश्च भगवन्तस्तुर्य्याश्रमिणः परिव्राजः श्रुतिस्मृतिप्रसिद्धाः। अज्ञानां पारिव्राज्यसद्मनि प्रवेशस्यापि दौर्लभ्यात्। ते भगवन्तश्छान्दोग्योपनिषदि सुव्यक्तमाकर्ण्यन्ते "**त्रयो धर्मस्कन्धाः। यज्ञोऽध्ययनं दानमिति प्रथमः। १। तप एव द्वितीयः। ब्रह्मचार्य्याचार्य्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्य्यकुलेऽवसादयन्। सर्वे एते पुण्यलोका भवन्ति। ब्रह्मसंस्थोऽमृतत्वमेति**" (छां० २। २३। १-२) इति। **त्रयः**=त्रिसंख्याकाः, **धर्मस्कन्धाः**=धर्मविभागाः। **यज्ञः**=अग्निहोत्रादि कर्म, **अध्ययनं**=स्वाध्यायः, **दानं**=बहिर्वेदि द्रव्यादिदानमिति त्रयं मिलित्वा **प्रथमः**=एको धर्मस्कन्धः। अनेन गृहस्थाश्रमोऽभिलप्यते। **तपः**=शास्त्रविहितं तपः, **द्वितीयः**=द्वितीयो धर्मस्कन्धः। अनेन तपःप्रधानो वानप्रस्थाश्रमो निगद्यते। आचार्य्यकुलवासी ब्रह्मचारी **तृतीयः**=तृतीयो धर्मस्कन्धः। **अत्यन्तम्**=अतिशयेनात्**मानं**=देहमा**चार्य्यकुले**=गुरुकुले**ऽवसादयन्**=विविधैर्नियमैः क्षपयन्नाचार्य्यकुलवासीत्यन्वयः। पितृगृहे वसतां ब्रह्मचारित्वव्यावृत्त्यर्थमिदम्। अनेन ब्रह्मचर्य्याश्रमः कथ्यते। तदानीमेवाचार्य्यकुले वासोपपत्तेः। **सर्वे**=त्रयः, **एते**=ब्रह्मचारिगृहस्थवानप्रस्थाः **पुण्यलोकाः**=यथोक्तं स्वधर्ममनुतिष्ठन्तः पुण्यसाध्यलोकभाजो **भवन्ति**=जायन्ते। **ब्रह्मसंस्थः**=ब्रह्मनिष्ठश्चतुर्थाश्रमी भगवान् परिव्राड**मृतत्वं**=मोक्षं**मेति**=प्राप्नोतीत्यर्थः। तत्र चतुर्थाश्रमिणो भगवतः परिव्राजकस्य ब्रह्मसंस्थशब्देनोपादानादग्निहोत्रादिकर्माभावं ज्ञानैकनिष्ठत्वं चोर्ध्वरेतसां तेषां स्फुटमवबोध्यते। कर्मिणां विक्षेपबाहुल्येन ब्रह्मसंस्थत्वानुपपत्तेः। यत्तु तत्रभवतां तेषामपि किञ्चित्कर्मावलोक्यते तल्लीलामात्रत्वान्न विक्षेपकम्। कर्माभासो हि तद् भवति न कर्म। अत एवोक्तं दर्शनान्तरे "**न किञ्चिदप्यनुशायिनः**" (सां० ५। १२५) इति। न च कर्माभावेऽपि भवतो

ज्ञानस्य परमपुरुषार्थलक्षणं मोक्षं प्रति स्वातन्त्र्यं कर्हिचिद् विहन्यते कर्मशेषत्वं चापद्यते । तस्मादनङ्गं कर्मणो ज्ञानमिति सम्प्रत्ययः ॥ १७ ॥

अत्र सशिष्यस्य जैमिनेराक्षेपः प्रदर्श्यते—

**"परामर्शं जैमिनिरचोदना चापवदति हि" ॥ १८ ॥**

शब्द इत्यनुवर्तते । **जैमिनिः**=जैमिनिराचार्यः **शब्दे**=छान्दोग्यश्रुतौ **परामर्शं**=परामर्शः सम्बन्धः, धात्वर्थानुगमात्, इहानुवादः परिगृह्यते, तेनाप्यन्यत्राभिहितस्यान्यत्र सम्बन्धोपपत्तेः, चतुर्थस्य पारिव्राज्याश्रमस्यानुवादं मन्यते, कुतः ? **हि**=यतोऽ**चोदना**=तद्विधिर्न विद्यते, **अपवदति च**=निन्दति च कर्मत्यागिनं श्रुतिरित्यर्थः ।

यदुक्तमूर्ध्वरेतःसु परिव्राजकेषु ज्ञानसत्त्वेऽपि कर्माभावादनङ्गं कर्मणो ज्ञानमिति । तन्न युज्यते । चतुर्थस्य पारिव्राज्याश्रमस्यैवाभावात् । छान्दोग्यश्रुतौ तु ब्रह्मचर्य्यगृहस्थवानप्रस्थाख्य एवाश्रमा धर्मस्कन्धनाम्ना श्राव्यन्ते **"त्रयो धर्मस्कन्धाः"** ( छां० २ । २३ । १ ) इति, न चतुर्थः कश्चित् पारिव्राज्याश्रमः श्राव्यते । यदि चोक्ताश्रमत्रयव्यतिरिक्तश्चतुर्थोऽपि कश्चित् पारिव्राज्याश्रमोऽभविष्यत् तदाऽवश्यं श्रुतिश्चत्वारो धर्मस्कन्धा इत्यश्रावयिष्यत् । त्रयो धर्मस्कन्धा इति श्रावयन्त्या च त्रय एवाश्रमा अभिप्रेयन्ते न चत्वार इति स्फुटमवगम्यते । **"ब्रह्मसंस्थोऽमृतत्वमेति"** ( छां० २ । २३ । २ ) इति च पारिव्राज्याश्रमस्य चतुर्थस्य परामर्शमात्रं विद्यते न विधानम् । न चान्यत्रापि तद्विधानं क्वचिदुपलभामहे । स्मृत्याचारप्रसिद्धिमूलश्चेह तत्परामर्शो ब्रह्मसंस्थतास्तुत्यर्थः । स्मृत्याचारौ तु मूलश्रुत्यभावान्न प्रामाण्यपीठमारोहतः । प्रत्यक्षं च श्रुतिः कर्मत्यागिनं तत्रभवन्तं परिव्राजमपवदन्ती चतुर्थं पारिव्राज्याश्रमं व्यासेधति **"वीरहा वा एष देवानां योऽग्निमुद्वासयते"** ( तै० सं० १ । ५ । २ । १ ) इति । **"आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः"** ( तै० १ । ११ ) **"नापुत्रस्य लोकोऽस्ति"** ( ऐ० ब्रा० ७ । १३ । १२ )

इत्येवमाद्याः श्रुतयोऽपि च गार्हस्थ्यपरित्यागं प्रतिषेधन्त्यो नास्ति चतुर्थः कश्चित् पारिव्राज्याश्रम इति व्यक्तं प्रतिपादयन्ति । न च [illegible]के चतुर्थे कस्मिँश्चित् सति पारिव्राज्याश्रमे श्रुतिभिरेवं [illegible] शक्यते, गृहस्थाश्रम एव पुत्रोत्पादनादिना लोकसाधनमिति न प्रतिपादयितुं पार्य्यते । तस्मान्नास्ति चतुर्थः कश्चिदूर्ध्वरेतसां [illegible] परिव्राजकानां पारिव्राज्याश्रमो नाम यत्र सत्यपि ज्ञाने कर्मानुष्ठानं कर्मणो [illegible]प्नोतीति जैमिनिराचार्य्यो मन्यते ॥ १८ ॥

तमिममाक्षेपं परिहरन्नाह—

**"अनुष्ठेयं बादरायणः साम्यश्रुतेः"** ॥ १९ ॥

**अनुष्ठेयं**=चतुर्थं पारिव्राज्याश्रमं वैदिकैरनुष्ठेयं । **बादरायणः**=बादरायणाचार्य्यो मन्यते, कुतः ? **साम्यश्रुतेः**=आश्रमान्तरसमानत्वेन श्रवणादित्यर्थः ।

यथा हि छान्दोग्यश्रुतौ खलु ब्रह्मचर्य्यगृहस्थवानप्रस्थास्त्रय आश्रमाः श्रूयन्ते तथा चतुर्थः पारिव्राज्याश्रमोऽपि श्रूयते । यथा हि ब्रह्मचर्य्यादिभिस्त्रिभिराश्रमैश्चतुर्थस्यास्य पारिव्राज्याश्रमस्य परामर्शश्रुतिः । न चेद् वैदिकैरनुष्ठेया जैमिनिना मन्यन्ते तदा चतुर्थमिमं बादरायणोऽपि वैदिकैरनुष्ठेयं मन्यते । अविशेषात् । नहि समायां परामर्शश्रुतौ ब्रह्मचर्य्यादयस्त्रयोऽनुष्ठानमर्हन्ति न चतुर्थः पारिव्राज्याश्रम इत्यत्रास्ति कश्चिद् विशेषहेतुः । **"त्रयो धर्मस्कन्धाः"** ( छां०, २ । २३ । १ ) इति च कर्मसम्बन्धाविशेषाभिप्रायाद् ब्रह्मचर्य्यादयस्त्रय आश्रमाः समुच्चित्य श्राव्यन्ते न त्रय एवाश्रमा भवन्तीत्यभिप्रायात । अनन्तरं चतुर्थस्य पारिव्राज्याश्रमस्यापि श्रवणात् । अग्निहोत्रादिकं खलु वैदिकं कर्म ब्रह्मचर्य्यादिषु त्रिष्वेवाश्रमेषु यथाविधानमनुष्ठीयते न चतुर्थे पारिव्राज्याश्रमे, ज्ञानमात्राश्रमत्वादिति तेभ्यस्तस्य पृथक् परामर्शश्रुतिः सङ्गच्छते । न च ब्रह्मचर्य्यादयस्त्रय एवाश्रमाः श्रुतिष्वन्यत्र प्रसिध्यन्ति न चतुर्थः पारिव्राज्याश्रम इत्येवञ्जातीयकं भाषणं युज्यते । ब्रह्मचर्य्यादिवत् पारिव्राज्य-

स्याप्यन्यत्र श्रुतिषु प्रसिद्धत्वात् । यथा हि ब्रह्मचर्य्यादयस्तावदाश्रमास्त्रयोऽन्यत्र श्रुतिषु प्रसिध्यन्ति तथा चतुर्थः पारिव्राज्याश्रमोऽपि प्रसिध्यति । सन्ति किलानेकशो वेदोपनिषच्छ्रुतयो यत्र ब्रह्मचारिप्रभृतीनामिव तत्रभवतां परिव्राजकानामपि प्रतिपादनं प्रत्यक्षमीक्ष्यते **"मुनयो वातरशनाः पिशङ्गा वसते मला। वातस्यानु ध्राजिं यन्ति यद्देवासो अविक्षत"** ( ऋ० ८ । ७ । २४ । २ ) **"एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति"** ( बृ० ४ । ४ । २२ ) इत्याद्याः । **मुनयः**=परिव्राजकाः । **वातरशनाः**=वातः प्राणो विश्वस्य परब्रह्म परमेश्वरस्तदिच्छानुगाः । **पिशङ्गाः**=पिशङ्गानि पिङ्गलवर्णानि **मलाः**=मलानि कौशेयानि शाणानि वा वासांसि **वसते**=आच्छादयन्ति । **वातस्या**=छान्दसो दीर्घः, विश्वप्राणस्येश्वरस्य **ध्राजिं**=पदमनु**यन्ति**=प्राप्नुवन्ति यदा **देवासः**=विद्वांसस्ते, **अविक्षत**=लडर्थे लुङ्, योगेन प्रविशन्तीत्यर्थः । एतेन तदाश्रमप्रसिद्धिरपि श्रौती समधिगम्यते । अपवादश्रुतिश्चाविद्वद्विषया । पारिव्राज्ये विदुषामेवाधिकारात् । यत्रेदमाम्नायते **"वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः । ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे"** ( मुं० ३ । २ । ६ ) इति । **"प्रजातन्तुं मा व्यवच्छेत्सीः"** ( तै० १ । ११ ) इत्यादिभिश्चाश्रमादाश्रमं गत्वा पारिव्राज्यमन्दिरे प्रवेष्टव्यं न ब्रह्मचर्य्यादेव पातित्यापातादित्यनुज्ञायते न तु तुर्य्याश्रम एव नास्ति कश्चिदित्यवबोध्यते । स्मृत्याचारौ च वेदोपनिषच्छ्रुतिमूलकौ न सहसा प्रामाण्यतलात् प्रच्यावयितुं शक्येते । दर्शयति च श्रुतेरिव तयोरपि धर्मज्ञानहेतुतां भगवान् मनुः **"वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । एतच्चतुर्विधं प्राहुः साक्षाद् धर्मस्य लक्षणम्"** ( मनु० २ । २ ) इति । माहात्म्यं चात्रभवतां परिव्राजकानां तत्र तत्र श्रुतिस्मृतिषु प्रव्यक्तमाम्नायते **"यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते याँश्च कामान् । तं तं लोकं जायते**

**ताँश्च कामान् तस्मादात्मज्ञं ह्यर्चयेद् भूतिकामः"** ( मुं० ३ । २ । ६ ) इत्येवञ्जातीयकम् । **विशुद्धसत्त्वः**=संन्यासी । तस्मात् परामर्शे सत्यपि विद्यते ब्रह्मचर्य्यगृहस्थवानप्रस्थाश्रमवदनुष्ठेयः पारिव्राज्याश्रमोऽयं चतुर्थ इति बादरायणाचार्य्यो मन्यते ॥ १९ ॥

**ननु** विधिरनुष्ठेयत्वप्रयोजकः सर्वत्राश्रीयते न परामर्शः । यथा कथञ्चित् प्रसिद्धस्यापि परामर्शोपपत्तेरिति । अत आह—

**"विधिर्वा धारणवत्"** ॥ २० ॥

**वा**=अथवा **विधिः**="प्रव्रजन्ति" ( बृ० ४ । ४ । २२ ) इति पारिव्राज्याश्रमविधिरध्यवसातव्यः, **धारणवत्**=यथा धारणविधिरित्यर्थः ।

तैत्तिरीयके हि महापितृयज्ञं दिष्टान्तगतामिहोत्रं च प्रकृत्य श्रूयते **"अधस्तात् समिधं धारयन्ननुद्रवेत्, उपरि हि देवेभ्यो धारयति"** ( तै० सं० ) इति । तत्र यथा **"धारयति"** इति दैवे होमे स्रुग्दण्डोपरि समिद्धारणविधिराश्रीयते, यत्रेदमुक्तं पूर्वमीमांसायाम् **"विधिस्तु धारणेऽपूर्वत्वात्"** ( मी० ३ । ४ । १५ ) इति, तथा **"एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति"** ( बृ० ४ । ४ । २२ ) इत्यत्रापि **"प्रव्रजन्ति"** इति पारिव्राज्याश्रमविधिराश्रीयते । विधिविहितस्य च परामर्शानुष्ठेयत्वे उपपद्येते नास्ति कश्चिद्दोषः ॥ २० ॥

अत्राशङ्क्य निराकुरुते—

**"स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्"** ॥ २१ ॥

विधिर्धारणवदित्यनुवर्तते । **स्तुतिमात्रं**=मात्रचा विधिर्व्यावर्त्यते, "प्रव्रजन्ति" इति ब्रह्मलोकसंस्तवमात्रं विद्यते, कुतः? **उपादानात्**="लोकमिच्छन्तः" इत्युपादानादिति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः? **अपूर्वत्वात्**=प्रमाणान्तरानधिगतत्वाद् धारणवद् विधिरुपपद्यत इत्यर्थः ।

**अथोच्येत**—न खलु **"प्रव्रजन्ति"** इति पारिव्राज्याश्रमविधिर्वर्तते, किं तर्हि? ब्रह्मलोकसंस्तवः । **"एतमेव प्रव्राजिनो लोकमिच्छन्तः"** इत्युपादानात् । नहि तदुपादानमन्यथा कथञ्चित् सङ्गच्छते । ब्रह्मलोकोऽयमीदृशो यत्प्रेप्सया निखिलं परित्यज्य प्रव्रजन्ति किल मनुवंशजाः पुण्याकृतय इति च संस्तवो ब्रह्मात्मकलोकस्य प्रकृतत्वाद् घटते । तस्मादिह **"प्रव्रजन्ति"** इति पारिव्राज्याश्रमविधिर्नोपपद्यत इति । **नैतद् वक्तव्यम्** । अपूर्वत्वादुपपत्तेः । यथा हि दैवे होमे खलु यस्मिन् स्रुचि क्षिप्तं हविराहवनीयं प्रत्यानीयते तद्दण्डोपरि समिद्धारणमपूर्वमिति कृत्वा **"धारयति"** इति तद्विधिरुपपद्यते तथा चतुर्थस्य पारिव्राज्याश्रमस्याप्यपूर्वत्वात् **"प्रव्रजन्ति"** इति तद्विधिरुपपद्यते । नह्यसौ केनचित् प्रमाणान्तरेणाधिगम्यते येनापूर्वो न स्यात् । लोकोपादानं च तत्प्रयोजनमाख्यापयितुं क्रियते नान्यत् किञ्चिज्ज्ञापयितुम् । नच कर्मसु सक्ताः कुशला अपि कदाचिदात्मानं लोकं वेदितुं शक्नुवन्ति यावत् ते पुण्यकर्माणो निखिलं परित्यज्य न प्रव्रजन्ति नूनं पारिव्राज्यमेवैकं ब्रह्मलोकावाप्तिसाधनं नान्यत् किञ्चिदिति स्फुटमिह तत्प्रयोजनम् । दर्शयति च स्वयमेतद्वाक्यशेषः **"एतद् ह स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति । ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति"** ( बृ० ४ । ४ । २२ ) इति । तेनापि विधिरसौ निश्चीयते । अर्थवादलक्षणस्य तस्य तन्निश्चयहेतुत्वाभ्युपगमात् । तथाचोपपन्नः प्रव्रजन्तीति धारणवत् पारिव्राज्याश्रमविधिः ॥ २१ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"भावशब्दाच्च"** ॥ २२ ॥

विधिर्धारणवदित्यनुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । **भावशब्दात्**=भावः क्रिया प्रव्रज्या, तच्छ्रुतेः प्रव्रजन्तीति धारणवद् विधिरवसीयत इत्यर्थः ।

**"अथ ह याज्ञवल्क्यस्य द्वे भार्य्ये बभूवतुर्मैत्रेयी च कात्यायनी च"** (बृ० ४।५।१) इत्यादिनोपक्रम्य याज्ञवल्क्यस्य महर्षेरन्तिमे वयसि गेहाद् प्रव्रज्यां तावदाकर्णयति श्रुतिः **"एतावदरे खल्वमृतत्व..ेति होक्त्वा याज्ञवल्क्यः प्रवव्राज"** (बृ० मां० ४।५।२५) इति। यदि हि प्रव्रज्याविधिर्न विद्येत न जातु याज्ञवल्क्यस्य महर्षेः प्रव्रज्यां श्रुतिराकर्णयेत्। नह्येष याजुषसंहिताप्रवर्तको महर्षिरन्तरेण विधिं प्रव्रजितुं साहयति। न च यो विधिबन्धनं लोकानां यथाबलं कामयते स कदाचिदात्मनि श्लथयितुमुत्सहते। अनाश्वासप्रसङ्गात्। न च विध्यन्तरं तस्याः कचिदन्यत्र दृश्यते। अवश्यभवितव्यं च विधिना। तस्मात् **"प्रव्रजन्ति"** इत्येष एव पारिव्राज्यस्य चतुर्थाश्रमस्य विधिर्धारणवदिति यत्तमववक्ष्यामहे॥ २२॥

अत्राशङ्क्य निराचष्टे—

**"पारिप्लवार्था इति चेन्न विशेषितत्वात्"॥ २३॥**

**पारिप्लवार्थाः**=यागरात्रिष्वाख्येया नानाविधा आख्यायिकाः पारिप्लवाः, तत्समानार्था एताः सर्वा मैत्रेयीयाज्ञवल्क्यादिसंवादलक्षणा आख्यायिका इति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः? **विशेषितत्वात्**=विशिष्य प्रतिपादितत्वादित्यर्थः।

**अथोच्येत**—न खलु याज्ञवल्क्यस्य प्रव्रज्याश्रवणात् पारिव्राज्यस्य विधेयत्वमाख्यातुं शक्यते। तादृगाख्यानानां पारिप्लववन्मनोरञ्जनमात्रार्थत्वेन स्वार्थे प्रामाण्याभावात्। या हि नानाविधा आख्यायिकाः किल यजमानादिपुरतोऽध्वर्युणा यागरात्रिषु श्राव्यन्ते ताः सर्वाः पारिप्लवाः परिभाष्यन्ते। यत्रेदमुक्तमाश्वलायनेन **"पारिप्लवमाचक्षीत"** (आश्व० श्रौ० १०।६।१०) इति। ताश्चैताः केवलं मनोरञ्जनार्था भवन्ति, न च तासां स्वार्थे प्रामाण्यं विद्यते। तादृश्य एव चोपनिषत्सु पठिताः **"अथ ह याज्ञवल्क्यस्य द्वे भार्य्ये बभूवतुर्मैत्रेयी च**

**कात्यायनी च**" ( बृ० ४ । ५ । १ ) "**प्रतर्दनो ह दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च**" ( कौ० ३ । १ ) "**भृगुर्वै वारुणिर्वरुणं पितरमुपससार**" ( तै० ३ । १ ) इत्येवमादिकाः सर्वा आख्यायिकाः। न च तासामपि मनोरञ्जनव्यतिरेकेणान्यः कश्चिदर्थो विद्यते। यासां च मनोरञ्जनमात्रमेवार्थो न तासां स्वार्थे प्रामाण्यं सम्भवति। नहि मनो रञ्जयन्त्यः **कथार्णवीया** आख्यायिकाः कदाचित् स्वार्थे प्रामाण्यमश्नुवते। अप्रमाणीभूतासु च तासु याज्ञवल्क्यस्य प्रव्रज्या श्रूयते। न च सा तत्र श्रूयमाणा शक्नोति तद्विधिमाख्यापयितुम्। अन्यथा पारिप्लवा अपि कञ्चिद् विधिमाख्यापयितुं शक्नुयुरिति। **नैतद् वक्तव्यम्**। विशेषितत्वात्। पारिप्लवा आख्यायिका हि श्रुत्या स्वयं विशेष्यन्ते "**मनुर्वैवस्वतो राजा**" ( शत० १३ । ४ । ३ । ३ ) इत्येवमादिना। ताभ्यश्चोपनिषत्सु पठिता एता मैत्रेयीयाज्ञवल्क्यसंवादलक्षणा आख्यायिकाः सर्वा अत्यन्तमतिरिच्यन्ते। न चात्यन्तमतिरिच्यमानानामेतासां तत्समानार्थत्वं कल्पयितुं शक्यते। ता हि सर्वाः केवलं मनोरञ्जनार्थं समाम्नायन्ते ब्रह्मविद्योपदेशार्थश्चैताः। स्वार्थे प्रामाण्यरहितास्ता भवन्ति, प्रामाण्यवत्यश्चैताः। गुरुणा ह्याख्यायिकाभिरुपदिश्यमानमर्थं शिष्याः सौकर्य्येण प्रतिपद्यन्ते। ताश्चेत् सम्प्रदायविदां महर्षीणां भवेयुस्तदा किमु वक्तव्यं तत्प्रतिपत्तिसौकर्य्यम्। श्रद्धातिशयहेतुत्वात्। एवम्भूता एव चैताः सर्वा आख्यायिका उपनिषत्सु पठ्यन्ते। नहि तासामेकाऽपि तादृशी काचित् प्रदर्शयितुं शक्यते यत्रात्मविद्या नोपदिश्येत गुरूणां च सम्प्रदायविदां सा न भवेत्। तथा चेदेताः सर्वा विद्यन्ते तदा सन्ति स्वार्थेऽपि प्रामाण्यवत्य इति सहर्षं मन्तव्यम्। प्रामाण्यवतीषु चामूषु श्रुता याज्ञवल्क्यस्य महर्षेः प्रव्रज्याऽपि तद्विधिमाख्यापयितुं पारयति नास्ति नाम निरोधकं किञ्चित्। सति च तद्विधौ यथा ब्रह्मचर्य्यादयस्त्रय आश्रमाः किल यथासमयं वैदिकैरनुष्ठेया वर्तन्ते तथा तत्रभवतामूर्ध्वरेतसां परिव्राजकानां चतुर्थः पारिव्राज्याश्रमोऽपि वैदिकैरनुष्ठेयो वर्तत इति निश्ची-

यते । तत्र च सत्यपि ज्ञाने कर्माभावादनङ्गं कर्मणो ज्ञानमिति निष्प्रत्यूहम् ॥ २३ ॥

**ननु** भवतु कर्मानङ्गं ज्ञानं किं तेन? तत्राह—

**"तथाचैकवाक्यतोपबन्धात्"** ॥ २४ ॥

**तथाच**=कर्मानङ्गत्वे सति **ऐकवाक्यतोपबन्धात्**=उपबन्धः सम्बन्धः, परमपुरुषार्थप्राप्तिसाधनविषयाणां श्रुतीनामेकवाक्यतालक्षणसम्बन्धात् सिद्धं स्वप्रधानं स्वतन्त्रं ज्ञानं परमपुरुषार्थप्राप्तिसाधनमित्यर्थः ।

यावत्यः खलु परमपुरुषार्थप्राप्तिसाधनविषयाः श्रुतयो विद्यन्ते **"य इत्तद्विदुस्तेऽमृतत्वमानशुः"** (ऋ० २ । ३ । १८ । २३) इत्येवमाद्याः, तासां सर्वासामेकवाक्यतोपबन्धेन ज्ञानादेव स्वप्रधानात् स्वतन्त्रात् परमपुरुषार्थो मोक्षः प्राप्यत इति बादरायणाचार्य्यमतमेव प्रसिध्यतितराम् तदेव च नः सर्वेषां वैदिकानां सुश्रद्धेयमनुष्ठेयं च यथाशक्ति नान्यत् किञ्चित् । श्रुतीनां तासामेकवाक्यतोपबन्धश्चास्माभिर्जिज्ञासासूत्रे पुरस्तात् सविस्तरं प्रादर्शि ॥ २४ ॥

सिद्धमेव परिस्फोरयन्नधिकविवक्षयाऽभिधत्ते—

**"अत एव चाग्नीन्धनाद्यनपेक्षा"** ॥ २५ ॥

**अत एव च**=यस्मात् स्वप्रधानं स्वतन्त्रं ज्ञानमेव परमपुरुषार्थसाधनमत एव च तस्मा**दग्नीन्धनाद्यनपेक्षा**=अग्न्याधानमग्नीन्धनम्, अग्निहोत्रदर्शपूर्णमासप्रभृतिकर्मजातं तत्पूर्वकत्वादादिना परिगृह्यते, तदपेक्षा न विद्यत इत्यर्थः ।

ज्ञानस्य हि परमपुरुषार्थसिद्धौ कर्मापेक्षायां स्वातन्त्र्यं हीयते । न च कश्चित् सत्यां शक्तौ स्वातन्त्र्यं हातुमुत्सहते किं पुनः सर्वावभासनक्षमं ज्ञानम् । स्वातन्त्र्यं च ज्ञानस्य परमपुरुषार्थसिद्धौ दर्शयन्ति श्रुतिस्मृतयः प्रत्यक्षं, न तत् कथञ्चिदपह्नोतुं शक्यते । तस्मान्नास्ति तस्य तत्र तदपेक्षा ॥ २५ ॥

ननु ज्ञानस्य परमपुरुषार्थसिद्धौ यथा कर्मापेक्षा न विद्यते तथा किं स्वोत्पत्तावपि न विद्यत इत्याकाङ्क्षायामधिकरणान्तरमारचयन्नाह—

**"सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्"** ॥ २६ ॥

चस्त्वर्थः, तेन ज्ञानस्य स्वोत्पत्तौ कर्मानपेक्षा व्यावर्त्यते । **सर्वापेक्षा**=अग्निहोत्रादिसर्वकर्मापेक्षा ज्ञानस्य स्वोत्पत्तौ विद्यते, कुतोऽवगम्यते? **यज्ञादिश्रुतेः**=यज्ञादीनां ज्ञानहेतुताप्रतिपादकश्रुतेः, **अश्ववत्**=यथा स्वार्थसिद्धावपेक्षाऽभावेऽपि स्वोत्पत्तौ यथाविधि विशुद्धमातापितृरजोवीर्य्यसंयोजनादिसर्वकर्मापेक्षा विद्यते सैन्धवस्याश्वस्येत्यर्थः । ज्ञानस्य स्वोत्पत्तौ कर्मापेक्षा विद्यते किंवा न विद्यत इति संशयः । तत्र न विद्यत इति पूर्वः पक्षः, विद्यत इति सिद्धान्तः । किं तावत् प्राप्तम्? न विद्यत इति ब्रूमः । प्रमाणजन्यत्वात् । ज्ञानं हि प्रमाणेनान्तःकरणेन जन्यते न कर्मणा । न च यद् येन न जन्यते तस्य तदपेक्षा युज्यते । नहि पटो जायमानः कदाचिद् मृदमपेक्षते । स्वतन्त्रं च स्वार्थसिद्धौ ज्ञानमित्युक्तम् । तत्र स्वतन्त्रस्य च युक्तमन्यत्रापि स्वातन्त्र्यम् । नहि यदेकत्र स्वातन्त्र्यं भजते तदन्यत्र पारतन्त्र्यमालम्बते । विरुद्धं चैकत्र स्वातन्त्र्यं पारतन्त्र्यं चोभयं युगपत् । अतः स्वार्थसिद्धाविव स्वोत्पत्तावपि नास्ति कर्मापेक्षा ज्ञानस्येति । **एवं** प्राप्तेऽभिधीयते—**सर्वकर्मापेक्षाऽश्ववत्** । यथा हि सैन्धवस्याभिजातस्याश्वस्य खलु स्वार्थसिद्धावपेक्षाभावेऽपि स्वोत्पत्तौ यथाविधि विशुद्धमातापितृरजोवीर्य्यसंयोजनादिसर्वकर्मापेक्षा विद्यते तथा ज्ञानस्यापि स्वोत्पत्तौ सर्वकर्मापेक्षा विद्यते । निष्प्रतिबन्धं खलु प्रमाणं ज्ञानमुपजनयितुं पारयते न सप्रतिबन्धम् । नहि चक्षुरादिभिः करणैरूपादिज्ञाने जनयितव्ये प्रतिबन्धनिवृत्तिर्नापेक्ष्यते । प्रमाणेनान्तःकरणेन चात्मज्ञाने जनयितव्ये पाप्मलक्षणाऽविशुद्धिर्नूनं प्रतिबन्धिका विद्यते । न च सा यावद् वरिवृत्यते तावत् प्रमाणेन तेन तद्गोचरं ज्ञानमुपजनयितुं पार्य्यते । ज्ञानेन वा तेन सत्यपि तादृशि प्रमाणे कदाचिदुत्पत्तुमीश्यते । तन्निवृत्तिश्च

कर्माधीना नान्याधीनेति सिद्धान्तः । अग्निहोत्रादीनि कर्माणि ह्यनभिसंहितफलानि यथाशास्त्रमनुष्ठीयमानानि चेतसोऽन्तःकरणस्य पाप्मलक्षणामविशुद्धिं तावदपनयन्ति । ततो विशुद्धे सुप्रसन्ने च चेतसि मुमुक्षूणामात्मगोचरा विविदिषा नियमेनोपजायते । तदनु च तद्गोचरं ज्ञानमिति स्वोत्पत्तौ प्रतिबन्धनिवृत्त्यादिमुखेन सर्वाणि तानि कर्माणि ज्ञानेनापेक्ष्यन्त इति विस्पष्टम् । दर्शयति चैतत् स्वयं यज्ञादिश्रुतिः **"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन"** ( बृ० ४ । ४ । २२ ) इति । **विविदिषन्ति** =वेदितुमिच्छन्ति, वेदनं ज्ञानं, यज्ञादिभिः कर्मभिर्ज्ञानं प्राप्तुमिच्छन्तीत्यर्थः । यज्ञपदेनाग्निहोत्रादीनि सर्वाणि कर्माणि गृह्यन्ते । तेषां ज्ञानसाधनत्वे सत्येव यज्ञादिभिर्ज्ञानं प्राप्तुमिच्छन्तीति श्रुतिव्यपदेश उपपद्यते यथा निस्त्रिंशस्य हननसाधनत्वे निस्त्रिंशेन जिघांसन्तीति लोकव्यपदेशः । अन्यथा यज्ञेनेत्यादितृतीयानुपपत्तेः । अतो विविदिषोत्पत्तिद्वारा ज्ञानोत्पत्तिसाधनानि तानि सर्वाणि कर्माणीत्यतिरोहितमत्र श्रुतिदर्शनम् । ज्ञानं चात्मविषयं वृत्त्यात्मकं ब्रह्मविषयं च परविद्यापरनामधेयस्वानुभवात्मकमित्युक्तमधस्तात् । स्वातन्त्र्यास्वातन्त्र्ये च तस्य विषयभेदादुपपद्येते नास्ति कश्चिद् विरोधः । सर्वत्र स्वातन्त्र्यं च न कस्याप्यभ्युपगन्तुं शक्यत इति कृतमिह मुधा तत्कोलाहलेन । **तस्मादस्ति** ज्ञानस्य स्वोत्पत्तौ सर्वकर्मापेक्षेति निश्चेतव्यम् ॥ २६ ॥

**स्वोत्पत्तौ** सर्वकर्मापेक्षा ज्ञानस्येति प्रतिपादितम् । सम्प्रति तदुत्पत्त्यर्थमवश्यानुष्ठेयं यत् साधनान्तरं तत्प्रतिपादयन्नाह—

**"शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्"** ॥ २७ ॥

तुना सर्वकर्मापेक्षाया अपर्याप्तत्वमुच्यते । **तथापि**=स्वोत्पत्तौ ज्ञानस्य सर्वकर्मापेक्षत्वेऽपि **शमदमाद्युपेतः**=उपरतितितिक्षा श्रद्धा समाधानं चेति चतुष्टयमादिना गृह्यते, तदर्थो जिज्ञासासूत्रे पूर्वत्रा-

मिहितः, शमदमादिभिर्युक्तः **स्यात्**=भवेन्मुमुक्षुरिति शेषः, कुतः? **तद्विधेः**=तदा शमदमादयः परामृश्यन्ते, विधिर्विधानं, तद्विधानात्, **तदङ्गतया**=ज्ञानसाधनतया **तेषां**=शमदमादीनाम**वश्यानुष्ठेय-त्वात्**=अवश्यानुष्ठानार्हत्वादित्यर्थः।

यद्यपि श्रुत्या ज्ञानोत्पत्तिसाधनत्वेनाग्निहोत्रप्रभृतीनि निखिलानि कर्माणि विधीयन्ते तथापि तदुत्पत्त्यर्थं न तदनुष्ठानमात्रं पर्य्याप्तमिति मुमुक्षुर्नियमेन शमदमाद्युपेतो भवेत्। अस्त्यग्निहोत्रादिनिखिलकर्मवच्छमदमादीनामपि तदुत्पत्तिसाधनत्वेन विधानम् "**तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति**" ( बृ० ४ । ४ । २३ ) इति। **ननुचात्र "पश्यति"** इति वर्तमानापदेशो भवति न विधिरिति। **मैवं मंस्थाः**। लेटो रूपत्वात्। लटो रूपत्वे हि पश्यतीति वर्तमानापदेशः स्यात्। लेटो रूपं चैतद् यथा "**तत्त्वमसि**" ( छां० ६ । ८ । ७ ) इत्यादौ "**असि**" इति लेटो रूपम्। तुल्यानि खलु लटो लेटो रूपाणि च प्रायशो भवन्ति। लेट् च भगवता पाणिनिना लिङर्थे विध्यादौ स्मर्यते "**लिङर्थे लेट्**" ( अष्टा० ३ । ४ । ७ ) इति। माध्यन्दिनाश्च "**पश्यति**" इत्यस्य स्थाने साक्षात् "**पश्येत्**" इति विधिमधीयते। विहितत्वसमानेऽपि च मुमुक्षोः शमदमादीनामनुष्ठानमत्यन्तमावश्यकं नाग्निहोत्रादीनां सर्वकर्मणाम्। किं कारणम्? यत्कारणं तानि ज्ञानस्य बहिरङ्गसाधनानि भवन्ति शमदमादीनि चान्तरङ्गसाधनानि। बहिरङ्गान्तरङ्गयोश्चान्तरङ्गमत्यन्तमुपयुज्यते साध्यं प्रति न बहिरङ्गम्। यस्य चात्यन्तमुपयोगस्तदवश्यानुष्ठेयं नेतरदिति विस्पष्टम्। अन्वयव्यतिरेकाभ्यामपि चैषोऽर्थो निर्धारयितुं शक्यते। सत्सु खलु कर्मसु शमदमाद्यभावे ज्ञानं नोदेति। कर्मठा अस्योदाहरणम्। सत्सु च शमदमादिषु कर्माभावेऽप्युदयमासादयति। तत्रभवन्तः परिव्राजोऽस्योदाहरणम्। तदिदं मनसि कृत्वैवाचार्य्यः खलु शमदमादीनामवश्यानुष्ठेयत्वं कर्मणां चानुष्ठेयत्वमात्रमवोचत। वक्ष्यति च कर्माभावेऽपि ज्ञानोत्पादमुपरिष्टात्

**"अन्तरा चापि तु तद्दृष्टेः"** ( वे० ३ । ४ । ३६ ) इति । न चैवं सर्वथा कर्मत्यागप्रसङ्ग इति स्वप्नेऽपि संशयितव्यम् । शमदमादिभिः सह कर्मणोऽपि ज्ञानसाधनत्वस्य श्रुत्या दर्शितत्वात् । **"तस्यै तपो दमः कर्मेति प्रतिष्ठा, वेदाः सर्वाङ्गानि, सत्यमायतनम्"** ( के० ४ । ८ ) इति । **तस्यै**=तस्या ब्रह्मविद्यायाः **प्रतिष्ठा**=आश्रयः प्राप्ति-साधनम् । न चेदं श्रुतिदर्शितं मूढोऽपि तित्याजिषति किं पुनर्वैदिको जिज्ञासुः । **तस्मात्** कर्मसु प्रवृत्तो मुमुक्षुः शमदमादिभिरवश्यमुपेतः स्यादित्याचार्य्याशयः ॥ २७ ॥

ज्ञानस्यान्तरङ्गबहिरङ्गसाधनानि विचारितानि । सम्प्रति तत्साधन-माहारोऽपि विचारयितव्यः । तमेव विचारयिष्यन्नाह—

**"सर्वान्नानुमतिः प्राणात्यये तद्दर्शनात्"** ॥ २८ ॥

ज्ञानसाधनस्यैवैषोऽपरो विचार इति चकारेणोच्यते । **सर्वान्नानु-मतिः**=छान्दोग्यबृहदारण्यकयोः श्रुता भक्ष्याभक्ष्यसर्वान्नानुज्ञा **प्राणा-त्यये**=प्राणस्य जीवितस्यात्यये विनाशे समुपस्थिते द्रष्टव्या, कुतः ? **तद्दर्शनात्**=तदा प्राणात्ययं परामृशति, प्राणात्यये समुपस्थिते चाक्रा-यणोषस्तेरभक्ष्यभक्षणदर्शनादित्यर्थः ।

छान्दोग्ये हि प्राणविद्यायां श्रूयते **"न ह वा एवंविदि किञ्च-नानन्नं भवति"** ( छां० ५ । २ । १ ) इति । तथा बृहदारण्यके **"न ह वा अस्यानन्नं जग्धं भवति, नानन्नं प्रतिगृहीतम्"** ( बृ० ६ । १ । १४ ) इति । प्राणविदो भक्ष्याभक्ष्यं सर्वमदनीयमेव भवति न किञ्चिदनदनीयमिति श्रुतिद्वयस्य संक्षिप्तोऽर्थः । अत्र संशयः किमिह श्रुता भगवतः प्राणविदो भक्ष्याभक्ष्यसर्वान्नानुमतिः सर्वेषु कालेषु प्रतिपत्तव्या किंवा प्राणात्यये समुपस्थित इति । विशेषश्रवणा-भावेन सामान्यतः श्रुतस्य सङ्कोचासम्भवात् **"प्राणस्यान्नमिदं सर्वं प्रजापतिरकल्पयत् । स्थावरं जङ्गमं चैव सर्वं प्राणस्य भोजनम्"** ( मनु० ५ । २८ ) इत्यादिस्मृतिदर्शनाच्च सर्वेषु काले-

त्त्वेति प्राप्तेऽभिधीयते—प्राणात्यये समुपस्थिते सर्वान्नानुमतिरियं वेदितव्या । तदैव चाक्रायणस्योषस्तेरभक्ष्यभक्षणदर्शनात् । दर्शयति खलु प्राणात्यये समुपस्थिते महर्षेस्तस्याभक्ष्यभक्षणं श्रुतिः **"मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास"** ( छां० १ । १० । १ ) इत्यादिना । तत्र मटचीभीरक्तवर्णैः क्षुद्रपक्षिविशेषैर्हतसस्येषु कुरुदेशेषु दुर्भिक्षे जाते चक्रस्य तनयः किलोषस्तिर्ऋषिर्बहिरटनयोग्ययाऽनुपजातपयोधरादिलीलक्ष्म्याऽटिकप्रदेशिन्या वा वनितया सार्धं हस्तिपानां ग्रामे कुत्सितावस्थां प्राप्त उवास । तत्र चाशनायया पीडितः कुल्माषान् खादन्तं हस्तिपं बिभिक्षे । तेन चोच्छिष्टेभ्योऽन्ये न विद्यन्त इति प्रत्याख्यातः पुनरप्येतेषां मे देहीत्यर्थयामास । ततो दयार्द्रहृदयेन हस्तिपेन दत्तान् सामिजग्धानेव कुल्माषानभ्यवजहार । तेनानुपानार्थमभ्यर्थितश्चोच्छिष्टदोषेणापाचकार । सामिजग्धानां कुल्माषाणामभ्यवहरणेऽनुपानस्यापाकरणे च निदानमेतत् कथयाम्बभूव **"न वा अजीविष्यामिमानखादन्"** ( छां० १ । १० । ४ ) इति । **"कामो म उदपानम्"** ( छां० १ । १० । ४ ) इति च । परेद्युश्च याजनेनार्जिजीषया जिगमिषुः पुनरपि तानेव स्वपरोच्छिष्टान् पर्य्युषितांश्च कुल्माषान् खादयाम्बभूवेति दर्शन्त्यास्तस्याः प्रत्यक्षमेवैष आशयो विज्ञायते प्राणात्यये समुपस्थिते तावद् भक्ष्याभक्ष्यं सर्वमन्नमत्तव्यमनुमन्यते नान्यदा कदाचनेति । सर्वदा भक्ष्याभक्ष्यसर्वान्नानुमतौ कल्प्यमानायां तु नूनमिदं महर्षेरुदपानापाकरणं पीड्येत । नहि सर्वदा तदनुमतौ तेन तदपाकर्तुं शक्यते । प्राणविदः प्राणात्यये भक्ष्याभक्ष्यसर्वान्नानुमतौ च ब्रह्मज्ञानार्थिनः सुतरामित्यर्थादापद्यते । सर्वं स्थावरजङ्गमं प्राणस्यान्नं दर्शयन्ती स्मृतिश्चोत्सर्गमात्रम् । तदपवाद उदाहरिष्यते । **तस्माद्** यत् सात्त्विकं शुद्धमभ्यवहार्य्यं शास्त्रविहितमन्नं तदनापदि मुमुक्षुणा नियमतोऽदनीयम् । भक्ष्यं हि तस्य तत् । आपदि प्राणात्यये समुपस्थिते तु भक्ष्याभक्ष्यं सर्वमन्नं यथाकाममिति निर्णयः ॥ २८ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"अबाधाच्च" ॥ २९ ॥**

सर्वान्नानुमतिः प्राणात्यये इत्यनुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । **अबाधात्**=श्रुतेर्बाधाभावात् प्राणात्यये सर्वान्नानुमतिः प्रतिपत्तव्येत्यर्थः ।

श्रुतिर्हि ज्ञानार्थिनो मुमुक्षोः खलु ज्ञानोत्पत्तिसाधनत्वेनाहारस्य शुद्धिमुपदिशति **"आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः"** (छां० ७ । २६ । २) इति । **सत्त्वं**=चित्तमन्तःकरणं, **ध्रुवा**=निश्चला, **स्मृतिः**=भूम्नो ब्रह्मणः साक्षात्कारात्मिका ज्ञप्तिः । सा च तदैव न बाध्यते यदि प्राणात्यये समुपस्थिते तावद् भक्ष्याभक्ष्यसर्वान्नानुमतिर्मन्यते न सर्वदा । यदि सर्वदा मन्येतावश्यमियं बाध्येत । नहि भक्ष्याभक्ष्यसर्वान्नाभ्यवहारे शास्त्रानुमतौ ज्ञातायां यतमानेनापि शुद्धाहारः समवाप्तुं शक्यते । रागस्य प्रतिबन्धकत्वेन बलादन्यत्रापि प्रवृत्तिसम्भवात् । शास्त्रं ह्युत्पथात् पुरुषान् निवर्तयति तदेव चेत् प्रवर्तकं तत्र विज्ञायेत का नु नाम पुनस्ततः प्रत्याशा निवृत्तेः । न च प्राणेन्द्रियाहारशुद्धेः सत्त्वशुद्धिहेतुत्वेन ज्ञानसाधनत्वमुपदिशन्त्याः श्रुतेर्युक्तो बाधः । **तस्मात्** प्राणात्यये समुपस्थिते सत्येव भक्ष्याभक्ष्यसर्वान्नानुमतिः प्रतिपद्यते न सर्वदेति निश्चयः ॥ २८ ॥

अत्रैव स्मृतिं प्रमाणयति—

**"अपि च स्मर्य्यते" ॥ ३० ॥**

सर्वान्नानुमतिः प्राणात्यय इत्यनुवर्तते । **अपि च**=न केवलं श्रुतिबाधाभावादेव प्रतिपद्यतेऽपि च **स्मर्य्यते**=प्राणात्यये सर्वान्नानुमतिर्भगवता मनुना स्मर्य्यत इत्यर्थः ।

स्मरति खलु भगवान् मनुः प्राणात्यये भक्ष्याभक्ष्यसर्वान्नानुमतिमविशेषेण **"जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । आकाशमिव पङ्केन न स पापेन लिप्यते"** (मनु० १०

१०४) इति । ततोऽपि न सर्वदेति युक्तं प्रतिपद्यामहे । पूर्वोदाहृता स्मृतिश्चैतया सङ्कोच्यते । सङ्कोचोऽपवाद इति चानर्थान्तरम् ॥ ३० ॥

अत्रैव मन्त्रवर्णमपि प्रमाणयति—

**"शब्दश्चातोऽकामकारे"** ॥ ३१ ॥

यत्र स्मृतिः प्रामाणि तत्रैव मन्त्रवर्णः प्रामाण्यत इति चार्थः । **शब्दः**=मन्त्रवर्णोऽ**तः**=अस्या**कामकारे**=कामकार इच्छा, भक्ष्याभक्ष्य-सर्वान्नकामकारप्रतिषेधे भवति प्रमाणमित्यर्थः ।

अस्ति खलु मन्त्रवर्णः **"सप्त मर्य्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरोऽगात्"** (ऋ० ७ । ५ । ३३ । ६) इति । स्तेयं तल्पारोहणं ब्रह्महत्यां भ्रूणहत्यां सुरापानं दुष्कृतस्य कर्मणः पुनः पुनः सेवां पातकेऽनृतोद्यमिति सप्त मर्य्यादाः **कवयः**=मेधाविन ऋषय-**स्ततक्षुः**=चक्रुः । तासां सप्तानां मर्य्यादानामे**कामित्**=एकामपि योऽ-**भ्यगात्**=अभिगच्छति अतिक्रामति भिनत्ति स तामभिगच्छन्**नंहुरः**—अंहस्वान् अंहः पापं तद्वान् भवति जायते (नि० ६ । ५ । ५) इति च तदुपरि यास्कमुनिभाष्यम् । तन्मूलक एव चैष श्लोकश्छन्दोगैरुदाह्रियते **"स्तेनो हिरण्यस्य सुरां पिबँश्च गुरोस्तल्पमावसन् । ब्रह्महा चैते पतन्ति चत्वारः पञ्चमश्चाचरँस्तैः"** (छां० ५ । १० । ९) इति । तमेतमनुवदति चानुपूर्व्येण भगवान् मनुः **ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापि तैः सह"** (मनु० ११ । ५४) इति । तत्र यथेष्टाचारमर्य्यादा-करणात् तासां मर्य्यादानामेकामप्यभिगच्छतश्च पापप्रतिपादनाद् भक्ष्याभक्ष्यसर्वान्नगोचरकामचारप्रतिषेधोऽस्य स्फुटमवगम्यते । स्वाभाविको हि मनुष्यमात्रस्य सुरापानादिगोचरः कामचारः । यत्रेदमाम्नायते **"यथा मांसं यथा सुरा यथाऽक्षा अधिदेवने । यथा पुंसो वृषण्यतः स्त्रियां निहन्यते मनः । एवा ते अघ्न्ये मनोऽधिवत्से निहन्यताम्"** (अथ० ६ ।

७ । ७० । १ ) इति । स्मर्य्यते च **"न मांसभक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला"** ( मनु० ५ । ५६ ) इति । मर्य्यादा-करणं तामभिगच्छतः पापप्रतिपादनं च तत्प्रतिषेधे सत्येवावकल्पते नान्यथा । वैयर्थ्यप्रसङ्गात् । एकत्र प्रतिषेधेऽवगम्यमाने चान्यत्रापि सोऽवगन्तुं शक्यते । समानत्वात् । अभक्ष्यं च सुरापानादिकं न भक्ष्यम् । यत्रेदं स्मर्य्यते **"यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम् । तद् ब्राह्मणेन नात्तव्यं देवानामश्नता हविः"** (मनु० ११ । ९५) इति । नच सर्वदा भक्ष्याभक्ष्यसर्वान्नानुमतौ प्रतिषेधोऽयं कथञ्चिदुपपद्यते । न्याय्या च तदुपपत्तिः । प्रामाणिकत्वात् । अतः प्राणात्यये समुपस्थिते भक्ष्याभक्ष्यसर्वान्नानुमतिर्मन्यते न सर्वदेति सिद्धान्तः ॥ ३१ ॥

ज्ञानसाधनमाहारश्चिन्तितः । सम्प्रति तत्साधनं स्वाश्रमकर्मोपदिशन्नाह—

**"विहितत्वाच्चाश्रमकर्मापि"** ॥ ३२ ॥

साधनान्तरोपदेशोऽयमिति चार्थः । **विहितत्वात्**=श्रुतिविहितत्वादा**श्रमकर्मापि**=शुद्धाहारवत् स्वाश्रमकर्माप्यनुष्ठातव्यमित्यर्थः ।

यथा हि ज्ञानार्थिना खलु ज्ञानोत्पत्त्यर्थं शास्त्रेणादिष्टः शुद्धाहारो नियमेन विधातव्यस्तथा स्वाश्रमकर्मापि नियमेनानुष्ठातव्यम् । श्रुतिविहितत्वात् । तद्विधायिका श्रुतिश्च प्रादर्शि **"सर्वकर्मापेक्षा च"** ( वे० ३ । ४ । २६ ) इत्यत्र प्राक् । विहितस्यानुष्ठानमावश्यकम् । अन्यथा वैगुण्यापातेन ज्ञानानुत्पत्तेः । अत एवाह भगवान् मनुः **"वेदोदितं स्वकं कर्म नित्यं कुर्य्यादतन्द्रितः । तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम्"** ( मनु० ४ । १४ ) इति । **स्वकं कर्म**=स्वाश्रमकर्म । **परमां गतिं**=परमा गतिर्मुक्तिः, तत्साधनम् । तथा भगवान् कृष्णः **"स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः"** ( गी० १८ । ४५ ) इति । **"सर्वापेक्षा च**

**यज्ञादिश्रुतेः**" ( वे० ३ । ४ । २६ ) इत्यत्र यज्ञादीनि कर्माणि स्वोत्पत्त्यर्थं ज्ञानेनापेक्ष्यन्त इत्युक्तम्, इह च ज्ञानार्थिनस्तदनुष्ठानमित्यपौनरुक्त्यम् ॥ ३२ ॥

स्वाश्रमकर्मानुष्ठाने हेत्वन्तरं समुच्चिनोति—

**"सहकारित्वेन च" ॥ ३३ ॥**

आश्रमकर्मेत्यनुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । **सहकारित्वेन**=प्रधानकारणेन सह मिलित्वा कार्य्यं कर्तुं निर्वर्तयितुं शीलमस्य तत्तथा, तस्य भावस्तत्त्वं, तेन सहकारिकारणत्वेन स्वाश्रमकर्मानुष्ठातव्यमित्यर्थः ।

आश्रमकर्म खलु यथाशास्त्रमनुष्ठीयमानं ज्ञानप्रतिबन्धिकां चेतोऽविशुद्धिमपनयति । ततो निष्प्रतिबन्धं प्रमाणेन चेतसा ज्ञानमुत्पद्यते । प्रतिबन्धनिवृत्त्या ज्ञानोत्पत्तौ साहाय्यमाचरच्चैतदापं भवति सहकारिकारणं ज्ञानस्य । तस्माद् यथा विहितत्वादाश्रमकर्मानुष्ठातव्यं ज्ञानार्थिनो ज्ञानोत्पत्त्यर्थं वर्तते तथा सहकारिकारणत्वेनाप्यस्ति तदनुष्ठातव्यम् । विहितत्वं पश्यतोऽपि कदाचिदननुष्ठानं सम्भाव्यते न सहकारित्वं पश्यत इति हेत्वन्तरोपन्यासः ।

यस्य पुनरेषा मतिरिह मोक्षे जनयितव्ये ज्ञानसहकारित्वं प्रतिपाद्यते कर्मण इति, स यथामति तोषितोऽस्माभिर्जिज्ञासासूत्रे ॥ ३३ ॥

**ननु** किं तदाश्रमकर्म विद्यते यद् विहितत्वेन सहकारित्वेन च ज्ञानार्थिनोऽनुष्ठातव्यमुपदिश्यते ? तत्राह—

**"सर्वथाऽपि त एवोभयलिङ्गात्" ॥ ३४ ॥**

**सर्वथाऽपि**=सर्वप्रकारेणापि विहितत्वेनापि सहकारित्वेनापि **त एव**=तदा पूर्वोक्ता यज्ञादयः परामृश्यन्ते, ततोऽन्येऽवधारणेन व्यावर्त्यन्ते, पूर्वोक्ता यज्ञादय एव ज्ञानार्थिनो ज्ञानप्राप्त्यर्थमनुष्ठातव्या उपदिश्यन्ते कुतो विज्ञायते ? **उभयलिङ्गात्**=श्रुतिस्मृत्युभयलिङ्गादित्यर्थः ।

"**सर्वापेक्षा च यज्ञादिश्रुतेः**" (वे० ३ । ४ । २६) इत्यत्र ये यज्ञादयः कर्मविशेषा अभिहितास्त एव विहितत्वबुद्ध्या सहकारित्वबुद्ध्या वा ज्ञानार्थिनो ज्ञानोत्पत्त्यर्थमनुष्ठातव्या उपदिश्यन्ते नान्ये केचन धर्माः । ज्ञानोत्पत्तिकारणत्वं च तेषां श्रुतिस्मृत्युभयलिङ्गादवगम्यते । तत्र "**यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्**" (ऋ० ८ । ४ । १९ । १६) "**तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन**" (बृ० ४ ।४ । २२) इत्यादिकं श्रुतिलिङ्गं "**स्वाध्यायेन व्रतैर्होमैस्त्रैविध्येनेज्यया सुतैः । महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः**" (मनु० २ । २८) इत्यादिकं च स्मृतिलिङ्गमवगन्तव्यम् ॥ ३४ ॥

आश्रमकर्मानुष्ठाने लिङ्गान्तरमुपन्यस्यति—

**अनभिभवं च दर्शयति**" ॥ ३५ ॥

आश्रमकर्मेत्यनुवर्तते । हेतौ चः । यस्माद**नभिभवम्**=अभिभवस्तिरस्कारः, तद्विपरीतोऽनभिभवः सत्कारः-आदरस्तं **दर्शयति**=आश्रमकर्मविषयं श्रुतिः प्रतिपादयति तस्मादनुष्ठातव्यं ज्ञानोत्पत्त्यर्थमाश्रमकर्मेत्यर्थः ।

"**एष ह्यात्मा न नश्यति यं ब्रह्मचर्य्येणानुविन्दति**" (छां० ८ । ५ । ३) इत्यादिका श्रुतिः खलु ब्रह्मचर्य्योपलक्षिताश्रमकर्ममाहात्म्यं प्रख्यापयन्ती तद्विषयं बह्वादरं दर्शयति । न च तद्दर्शनस्यानुष्ठानादन्यः कश्चनाभिप्रायः सम्भवति । तस्मान्निष्प्रत्यूहज्ञानोत्पत्त्यर्थमाश्रमकर्म यथाशास्त्रमनुष्ठातव्यमिति युक्तमवगच्छामः ॥ ३५ ॥

यज्ञादिकमाश्रमकर्मानुष्ठेयं शमदमादिकं चावश्यानुष्ठेयमित्युक्तम् । तदेवोद्धाव्य दर्शयितुकामोऽधिकरणान्तरमारचयन्नाह—

"**अन्तरा चापि तद्दृष्टेः**" ॥ ३६ ॥

आश्रमकर्मेति द्वितीयया विपरिणम्यानुवर्तते । ज्ञानोत्पत्त्याश्रयोऽ-

न्योऽयं विचार इति चकारेणोच्यते । सत्याश्रमकर्मणि ज्ञानोत्पादः पूर्वाभिहितोऽपिना समर्थ्यते । **अन्तराऽपि**=विनाऽप्याश्रमकर्म ज्ञानमुत्पत्तुमर्हति, कुतोऽवगम्यते? **तद्दृष्टेः**=तदा बुद्धिस्थं ज्ञानं परामृश्यते, येषां यज्ञादिकमाश्रमकर्म न विद्यते तेषामनाश्रमिणां विधुरादीनां ज्ञानोपलब्धेरित्यर्थः ।

यज्ञादिकमाश्रमकर्म प्रकृतम् । तत्रैष संशयः किं तज्ज्ञानोत्पत्त्यर्थं शमदमादिवदवश्यानुष्ठेयं वर्तते किं वा नेति । विहितत्वात् सहकारित्वाच्चावश्यानुष्ठेयं यथा शमदमादिकमित्येवं प्राप्तेऽभिधीयते—**अन्तरा चापि तद्दृष्टेः** । यदि हि यज्ञादिकमाश्रमकर्मापि खलु ज्ञानोत्पत्त्यर्थं शमदमादिवदवश्यानुष्ठेयं विद्येत तदा शमदमाद्यभावे यथा ज्ञानमुत्पद्यमानं न क्वचिदुपलभ्यते तथा यज्ञाद्याश्रमकर्माभावेऽपि नोपलभ्येत । नहि यदर्थं यस्यानुष्ठानमावश्यकं तत् तदभावेऽपि कदाचिद् भवितुमर्हति । रैक्ववाचक्नवीप्रभृतिषु चानाश्रमिषु यज्ञाद्याश्रमकर्माभावेऽपि ज्ञानमुत्पद्यमानं दृश्यते । श्रुतिप्रसिद्धा ह्येते भगवन्तः । श्रुतिरेव च तेषां विनापि यज्ञाद्याश्रमकर्म ज्ञानसद्भावं दर्शयति । को नु नाम स्वाध्यायशीलोऽनाश्रमिणं रैक्वं पामानं ज्ञानिनं नाधिगच्छति । यः किल विद्यागौरवसंरक्षणाय बहुमूल्योपहारेण जानश्रुतिं बहुदायिनं ज्ञानमनुशशास । तथा विपश्चिदग्रेसरां वाचक्नवीं च गार्गीं न जानाति । या किल जनकस्य राज्ञः संसदि सर्वेषां विद्यावतां समक्षे याज्ञवल्क्योपरि तीक्ष्णौ द्वौ शब्दबाणौ प्रचिक्षेप । मैत्रेयीवल्लभो याज्ञवल्क्यश्च भूरिचातुर्य्येण प्रक्षिप्तौ तौ प्रजहार । प्रमाणं च नः सर्वदा सर्वथा सर्वत्र श्रुतिदर्शनम् । **तस्माद्** यथा ज्ञानोत्पत्त्यर्थं शमदमादिकं मुमुक्षुभिरवश्यानुष्ठेयं वर्तते न तथा यज्ञादिकमाश्रमकर्मेति वेदितव्यम् ॥ ३६ ॥

अत्रैव स्मृतिं प्रमाणयति—

**"अपि च स्मर्य्यते"** ॥ ३७ ॥

आश्रमकर्मेति पूर्ववद् विपरिणम्य, अन्तराऽपीति च द्वयमनुवर्तते ।

पूर्वत्रैवैष प्रमाणोपन्यास इति चकारेणोच्यते। श्रुतिदर्शनमपिना समुच्चीयते। **स्मर्य्यते**=विनाप्याश्रमकर्म ज्ञानं स्मर्य्यत इत्यर्थः।

यथा हि रैक्ववाचक्नवीप्रभृतीनामनाश्रमिणामाश्रमकर्माभावेऽपि ज्ञानं श्रोश्रूय्यते तथा केषाञ्चिदाश्रमकर्मानपेक्षं ज्ञानं सास्मर्य्यतेऽपि **"जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः। कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते"** (मनु० २। ८७) इत्येवमादिकासु स्मृतिषु। **जप्येन**=प्रणवजपादिना। **संसिध्येत्**=अन्तःकरणशुद्ध्या मोक्षसाधनं ज्ञानं प्राप्नुयात्। **अन्यत्**=यज्ञादिकमाश्रमकर्म। **मैत्रः**=ईश्वरप्रियः। न च ज्ञानोत्पत्त्यर्थमाश्रमकर्मणो यज्ञादेरवश्यानुष्ठेयत्वे तदनपेक्षं ज्ञानं केषाञ्चित् स्मर्तुं शक्यते। प्रमाणं च श्रुतिमूलत्वान्नः स्मृतिः। अतो नावश्यानुष्ठेयं शमदमादिवदाश्रमकर्म॥ ३७॥

तदिदं युक्त्यन्तरेणोपोद्बलयति—

**"विशेषानुग्रहश्च"** ॥ ३८॥

स्मर्य्यत इत्यनुवर्तते। हेतौ चः। यस्माद् **विशेषानुग्रहः**= येषामाश्रमकर्म न वर्तते तेषामुपरि भगवतः परब्रह्मणः परमेश्वरस्य विशेषेण प्रसादः स्मर्य्यते तस्मादवगम्यते ज्ञानोत्पत्त्यर्थं शमदमादिवदवश्यानुष्ठेयमाश्रमकर्म न विद्यत इत्यर्थः।

ये ह्याश्रमकर्मणि यज्ञादौ न तावदधिक्रियन्ते शमदमादिमन्तो भूत्वा चानन्येन चेतसा भगवन्तं परब्रह्म परमात्मानं वाभजन्ते तदुपरि तस्य विशेषानुग्रहः स्मर्य्यते नवमे भगवद्गीतायाम् **"समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः। ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्। २९। अपि चेत् सुदुराचारो भजते मामनन्यभाक्। साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः। ३०। क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति। कौन्तेय! प्रतिजानीहि न मे भक्तः प्रणश्यति। ३१।** इति। **सुदुराचारः**=सर्वथाऽऽश्रमकर्मरहितः।

**"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः"** (गी० १८। ६६) इति च। तथा श्रूयतेऽप्याश्रमकर्मानपेक्षं केवलेश्वरानुग्रहनिबन्धनं तत्साक्षात्कारात्मकं ज्ञानम् **"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्"** (कठ० २। २३) इति। तस्माद् यथा ज्ञानोत्पत्त्यर्थं शमदमादिकमवश्यानुष्ठेयं न तथा यज्ञादिकमाश्रमकर्मेति सम्यगालोचामहे ॥ ३८ ॥

**ननु** कस्माद्धेतोर्ज्ञानोत्पत्त्यर्थं शमदमादिकमवश्यानुष्ठेयमुच्यते नाश्रमकर्म यज्ञादिकमिति। तत्राह—

**"अतस्त्वितरज्ज्यायो लिङ्गाच्च"** ॥ ३९ ॥

तुनाऽऽश्रमकर्मणो ज्यायस्त्वं व्यावर्त्यते। चकारेण श्रुतिः समुच्चीयते। यत इति शेषः। **अतः**=अस्मादाश्रमकर्मणो यज्ञादे**रितरत्**=शमदमादिकं **ज्यायः**=अन्तरङ्गत्वं ज्यायस्त्वं, ज्ञानस्यान्तरङ्गसाधनं वर्तते यतस्ततस्तदवश्यानुष्ठेयमुच्यते, कुतोऽवगम्यते तस्य ज्यायस्त्वम्? **लिङ्गाच्च**=श्रुतेः श्रुतिस्मृतिलिङ्गाच्चेत्यर्थः।

ज्ञानस्य हि यज्ञादिकमाश्रमकर्म बहिरङ्गसाधनं वर्तते शमदमादिकं चान्तरङ्गसाधनम्। बहिरङ्गान्तरङ्गयोश्चावश्यानुष्ठेयमन्तरङ्गं भवति न बहिरङ्गम्। तदभावेऽपि कार्य्यनिष्पत्तेः। सत्यपि तस्मिन्नन्तरङ्गाभावे च तदनिष्पत्तेः। सहकारित्वं चाश्रमकर्मस्थाने जपादीनामुपपद्यते नास्ति काचित् क्षतिः। **"यस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति"** (बृ० ४। ४। २२) इत्यादिका श्रुतिश्च ज्ञानान्तरङ्गसाधनत्वं शमदमादीनां सुव्यक्तमाकर्णयति। तदेव श्रौतस्मार्ते लिङ्गे अपि च प्रत्यक्षमवगमयतः। तत्र **"तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय। येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो**

ब्रह्मविद्याम्" (मुं० १ । २ । १३) इत्यादिकं श्रौतं लिङ्गम्, "अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् । आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः । ७ । इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च । जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् । ८ । असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु । नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु । ९ । मयि चानन्ययोगेन भक्तिरव्यभिचारिणी । विविक्तदेशसेवित्वमरतिर्जनसंसदि । १० । अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् । एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा" (गी० १३ । ७–११) इत्यादिकं च स्मार्तं लिङ्गम् । ज्ञानं=ज्ञानसाधनम् । अतो ज्ञानार्थिभिर्मुमुक्षुभिर्ज्ञानोत्पत्त्यर्थं शमदमादिकमवश्यानुष्ठेयं यज्ञादिकमाश्रमकर्म च यथाकामं सत्यधिकारेऽनुष्ठेयमसति चाननुष्ठेयं, वरं चाननुष्ठानादनुष्ठानं सत्यधिकार इति सिद्धान्तः ॥ ३९ ॥

आश्रमकर्मेति प्रकृतम् । तत्र कर्मगोचरं विचारविशेषं प्रवर्तयिष्यति । सम्प्रत्याश्रमगोचरं तं प्रवर्तयन्नाह–

"तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः" ॥ ४० ॥

तुनाऽतद्भूतो व्यावर्त्यते । तद्भूतस्य=पूर्वस्मादाश्रमादुत्तरमाश्रमं प्राप्तस्य प्रतिपन्नोर्ध्वरेतोभावस्य तत्रभवतामूर्ध्वरेतसामाश्रममास्थितस्य नैष्ठिकस्य वैखानसस्य परिव्राजकस्य वाऽतद्भावः=तद्भावाभावस्तस्मादुत्तराश्रमादधराश्रमेऽवरोहस्ततः प्रच्युतिरिति यावत्=न भवति, कुतः? नियमातद्रूपाभावेभ्यः=शास्त्रनियमात्, अतद्रूपस्तद्रूपाभावोऽवरोहस्तदभावात्—तत्प्रतिपादकवचनस्याचारस्य चाभावात्, जैमिनेरपि=बादरायणोऽप्यर्थः, तदिदं जैमिनेर्बादरायणस्य चोभयस्य मतमित्यर्थः ।

नैष्ठिकब्रह्मचारी, वानप्रस्थः, परिव्राडिति त्रय ऊर्ध्वरेतसः । तेषामारोहवत् प्रत्यवरोहः स्वाश्रमात् प्रच्युतिः पुनर्गृहस्थाश्रमप्रवेशः करण-

चापल्येन कदाचित्कामिनीसम्पर्को भवति किं वा न भवतीति संशयः । तत्र भवतीति पूर्वःपक्षः, न भवतीति सिद्धान्तः । स्वर्गादिकमारोहतां प्रत्यवरोहस्य दृष्टत्वाद् भवतीति प्राप्तेऽभिधीयते—न भवति प्रत्यवरोहः कदाचित् कस्यचिदूर्ध्वरेतसः । नियमात् । अस्ति तावच्छास्त्रनियमः पूर्वस्मादाश्रमादुत्तरमाश्रममारूढो न जातु प्रत्यवरोहेत् । पापो हि स तेन जायते । तमिमं शास्त्रनियमं श्रुतिस्मृतिलिङ्गाभ्यां साक्षात् स्मृतिवचनेन च प्रतिपद्यामहे । तत्र **"अत्यन्तमात्मानमाचार्य्यकुलेऽवसादयन्"** ( छां० २ । २३ । २ ) इत्यादिकं श्रुतिलिङ्गम् । **"आश्रमादाश्रमं गत्वा हुतहोमो जितेन्द्रियः । भिक्षाबलिपरिश्रान्तः प्रव्रजन् प्रेत्य वर्धते"** ( मनु० ६ । ३४ ) इत्यादिकं स्मृतिलिङ्गम् । **"आचार्य्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम् । आ विमोक्षाच्छरीरस्य सोऽनुतिष्ठेद् यथाविधि"** ( महाभा० १२ । २३४ । ४ ) इत्यादिकं च साक्षात्स्मृतिवचनम् । न चेदृशं लिङ्गं वा वचनं वा किञ्चित् प्रत्यवरोहप्रतिपादकमुपलभ्यते येन प्रत्यवरोहोऽपि भवति तत्रभवतामूर्ध्वरेतसामिति प्रतिपद्येत । न चात्र शिष्टाचारमप्युपलभामहे । तदुपलम्भाभावे च कथं स भवतीति मन्येत । स्वर्गादिकं तु कर्मफलोपभोगार्थमारुह्यते सति तदुपभोगे युज्यते तस्मादवरोहः, यत्रेदं श्रूयते **"इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति"** ( मुं० १ । २ । १० ) इति । स्मर्य्यते च **"ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति"** ( गी० ९ । २१ ) इति । तस्मादत्रभवतां नैष्ठिकवैखानसपरिव्राजकानां कस्याप्यूर्ध्वरेतसो मरणात् प्राङ् भवति कदाचित् प्रत्यवरोह इति जैमिनेर्बादरायणस्य चोभयाचार्य्यस्य निश्चितं मतम् ॥ ४० ॥

ननु संस्कारप्राबल्यात् कदाचित् प्रत्यवरोहेऽप्याधिकारिकं प्रायश्चित्तं भविष्यति किमूर्ध्वरेतसः स न भवतीति मुधाऽऽग्रहेणेति । तत्राह—

**"नाधिकारिकमपि पतनानुमानात् तदयोगात्" ॥ ४१ ॥**

तद्भूतस्यातद्भाव इति सप्तम्या विपरिणम्यानुवर्तते। **आधिकारिकं**=पूर्वमीमांसायां षष्ठेऽधिकाराध्याये निर्णीतं प्रायश्चित्तं **न च**= तद्भूतस्यातद्भावे नैव भवितुमर्हति, कुतः? **पतनानुमानात्**=पतितोऽयमिति शिष्टानुमानेन **तदयोगात्**=प्रायश्चित्तयोगासम्भवादित्यर्थः।

यत् खलु पूर्वमीमांसायां षष्ठेऽधिकाराध्याये **"अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात्"** (मी० ६। ८। २२) इत्यत्र प्रायश्चित्तं निर्णीतं तदत्रभवतस्तद्भूतस्योर्ध्वरेतसो नैष्ठिकादेरतद्भावे प्रत्यवरोहेऽधःपतने न भवति। तस्योपकुर्वाणकब्रह्मचारिविषयत्वेन तदविषयत्वात्। नह्यूर्ध्वरेता भूत्वा यः पनीपत्यते तद्विषयमिदं निर्णीयते किन्तूपकुर्वाणकब्रह्मचारिविषयम्। नैष्ठिकब्रह्मचारी वानप्रस्थः परिव्राजकश्च ततो व्यतिरिच्यन्ते। न च तेषामन्यतमस्याधःपतनमुपकुर्वाणकवत् पतनं शास्त्रविदो मन्यन्ते। नहि सर्वेषां श्रद्धापात्रीभूताः सर्वथा प्रविदिताखिलशास्त्रतत्त्वाश्चरममाश्रममारूढास्तत्रभवन्त ऊर्ध्वरेतसो नैष्ठिकादयः पनीपत्यमाना अपि कदाचित् पतिताः परिगणितुं शक्यन्ते। ते हि मूढधियो दुर्भगा दुश्चरिता आरूढपतितत्वादतिपतिता महापतिता इत्यनुमीयन्ते वैदिकतरणिकर्णधारैः किलात्रभवद्भिः शिष्टैः। प्रायश्चित्तयोगश्च पतितस्य सम्भवति नातिपतितस्य महापातकिनः। तस्मान्नास्ति तद्भूतस्योर्ध्वरेतसो नैष्ठिकादेरतद्भावे प्रच्युतौ सत्यामाधिकारिकं प्रायश्चित्तमन्यदिति तु किमु वक्तव्यम् ॥ ४१ ॥

अत्र मतान्तरं दर्शयति—

**"उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम्" ॥ ४२ ॥**

तद्भूतस्यातद्भावमिति द्वितीयया विपरिणम्य पतनमिति छित्वा चानुवर्तते। एवार्थोऽपिस्तेन महत्पूर्वत्वं व्यवच्छिद्यते। सर्वव्यावृत्त्यर्थस्तु-रेक इत्यस्याग्रे युज्यते। **उपपूर्वमपि**=तद्भूतस्यातद्भावमुपपूर्वं पतनमेवोपपातकमेवेति यावदेके **तु**=केचिदेके त्वाचार्या मन्यन्ते, **भावं**=तस्मा-

यश्चित्तसद्भावम**शनवत्**=अभक्ष्यभक्षणवत् कामयन्ते । **तदुक्तं**=तत्राभिहितं तैत्तिरीयाणामारण्यक इत्यर्थः ।

एके केचिदाचार्य्याः खलु तद्भूतस्योर्ध्वरेतसो नैष्ठिकादेरतद्भावमधःपतनमुपपातकमेव मन्यन्ते न महापातकम् । उपपातकस्य तस्य चाभक्ष्यभक्षणवत् प्रायश्चित्तं कामयन्ते । यथा हि किलाभक्ष्यभक्षणस्योपपातकत्वादस्ति किञ्चित् प्रायश्चित्तम् **"अभोज्यमन्नं नात्तव्यमात्मनः शुद्धिमिच्छता । अज्ञानभुक्तं तूत्तार्य्यं शोध्यं वाऽप्याशुशोधनैः"** ( मनु० ११ । १६० ) इत्यादिस्मृतेः, तथा नैष्ठिकादेरधःपतनस्यापि प्रायश्चित्तं किञ्चिद् विद्यते । नन्वुपपातकत्वाविशेषे तदेकस्य स्यान्नापरस्येति युज्यते । किं तत् प्रायश्चित्तमित्यत्र च स्पष्टमुक्तं तैत्तिरीयाणामारण्यके वातरशनप्रभृतिमुनीनां संवादे **"तान् ऋषयोऽब्रुवन् पवित्रं नो ब्रूत येनारेपसः स्यामेति । त एतानि सूक्तान्यपश्यन्"** ( तै० आ० २ । ७ ) इत्युपक्रम्य **"यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्यते"** ( तै० आ० २ । ८ ) इति । **भ्रूणहत्या** महापातकेषु गण्यते । ततोऽर्वाचीन**मेनः**=पापमुपपातकम् । **पवित्रं**=शुद्धिकारणम् । **नः**=अस्मभ्यं, **अरेपसः**=निष्पापाः । ऋषिभिः पृष्टाः खलु वातरशनाः संन्यासिनो यानि कूष्माण्डसंज्ञकानि त्रीणि सूक्तान्यपश्यन् तैर्यथाविधि होमेनोपपातकाद् विमुच्यते, तस्मादुपपातकविमोकार्थं कूष्माण्डहोमो विधातव्य इत्यारण्यकाशयो विस्पष्टः । नैष्ठिकादेरूर्ध्वरेतसोऽधःपतनमेनोऽपि भ्रूणहत्याया अर्वाचीनं वर्तत इति तस्याप्येतदेव प्रायश्चित्तमिति साधु मन्यामहे । **ननु**चाकामतो जातस्यैनसः प्रायश्चित्तमिदं न कामतः कृतस्य तस्येति । **नैष दोषः** । उभयथाऽपि प्रायश्चित्तस्मरणेनोपपत्तेः । स्मर्य्यते चोभयथाऽपि प्रायश्चित्तम् **"अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः । कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनात्"** ( मनु० ११ । ४५ ) इति । **श्रुतिः**=आरण्यकश्रुतिः । नूनमिदं स्वल्पमुच्यते दयार्णवो भगवान् वैवस्वतो मनुस्तु महापातकिनामुपपातकिनां चोभयेषामविशेषेण प्राय-

श्चित्तमुदाहरति **"महापातकिनश्चैते शेषाश्चाकार्य्यकारिणः । तपसैव सुतप्तेन मुच्यन्ते किल्बिषात्ततः"** (मनु० ११ । २३९) इति । यदा चैवं तदा नैष्ठिकादेरूर्ध्वरेतसोऽधःपतने नास्ति प्रायश्चित्तं किञ्चिदिति केयं वराका कथा, केन वा शक्यते श्रद्धातुम् । अतस्तद्भूतस्योर्ध्वरेतसो नैष्ठिकादेः कदाचिदतद्भावे विद्यते नामौपपातकं किञ्चित् प्रायश्चित्तमिति सम्यगुत्पश्यामः ॥ ४२ ॥

मतान्तरं प्रादर्शि, व्यवस्थितमधुना प्रदर्श्यते—

**"बहिस्तूभयथाऽपि स्मृतेराचाराच्च"** ॥ ४३ ॥

तद्भूत इति प्रथमयाऽतद्भाव इति च सप्तम्या विपरिणम्यानुवर्तते । तुनाऽबहिर्भावो व्यावर्त्यते । **उभयथाऽपि**=प्रायश्चित्तस्य भावेऽभावे चापि **बहिः**=तद्भूतो नैष्ठिकादिरतद्भावेऽधःपतने बहिष्कार्य्यः संव्यवहारेषु शिष्टैः, कुतः? **स्मृतेः**=मानवस्मृतेः**आचाराच्च**=शिष्टाचाराच्चेत्यर्थः ।

तद्भूतस्य नैष्ठिकादेरूर्ध्वरेतसोऽतद्भावे प्रायश्चित्तं स्यान्मा वा भूत् प्रायश्चित्तमुभयथाऽपि स शिष्टैः संव्यवहार्य्यो न क्रियते । सत्यपि प्रायश्चित्ते सर्वथाऽशुद्धेरनपनयात् । द्विविधा हि दुष्कृतकर्मजन्या किलाशुद्धिराश्रीयते प्रायश्चित्तेनापनेयाऽनपनेया च । नैष्ठिकादेरूर्ध्वरेतसः स्वाश्रमच्युतेर्दुष्कर्मणो जायमानाऽशुद्धिर्बहुनिन्दादर्शनात् प्रायश्चित्तेनापनीतेऽपि पापापूर्वे नापनीयते । न चानपनीतायां तस्यां स शिष्टानां संव्यवहार्य्यः कथञ्चिद् भवितुमर्हति । शुद्धाः हि शिष्टैः खलु संव्यवहार्य्यन्ते नाशुद्धाः पापवृत्तयः । प्रतिपादयति च सत्यपि प्रायश्चित्ते तदसंव्यवहारं शिष्टानां स्मृतिः **"बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः । शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संपिबेत्"** (मनु० ११ । १९०) इति । **संपिबेत्**=अन्योऽन्यं भोजनादिसंव्यवहारं न कुर्य्यादित्यर्थः । संवसेदित्याधुनिकः पाठः । यथा चैते तथैव स्वाश्रमभ्रष्टो नैष्ठिकादिः । तेषामसंव्यवहार्य्यत्वे भवति सोऽपि शिष्टैरसंव्यवहार्य्य इति गम्यते ।

प्रसिद्धश्च यः कश्चन नैष्ठिकादीनां स्वाश्रमाधिकारात् प्रच्यवते न तेन संव्यवहरन्ति शिष्टा इत्याचारो लोके। तस्मात् प्रायश्चित्ते जातेऽपि तत्तूलस्यातद्भावे युक्तो बहिष्कारः शिष्टानामिति सनातनो मार्गः ॥ ४३ ॥

आश्रमगोचरो विचारविशेषः पर्य्यवसितः । सम्प्रति कर्मगोचरः स प्रवर्तयितव्यः । तत्र किमिदं कर्म यजमानस्य कर्तव्यमाहोस्विदृत्विजामिति विचिकित्सायामृत्विजामिति निर्णीतम् "**अन्यो वा स्यात् परिक्रयाम्नानात् विप्रतिषेधात् प्रत्यगात्मनि**" (मी० ३ । ७ । २०) इत्यत्र पूर्वमीमांसायाम् । अत्रावशिष्टं कर्माङ्गोपासनमात्रं निर्णेतव्यमुपतिष्ठते । तद्गोचरविचारविशेष एव कर्मविचारविशेषः । इहापि कर्मवत् संशयः किमिदं याजमानं कर्म स्यादाहोस्विदार्त्विज्यमिति । याजमानमिति पूर्वः पक्षः, आर्त्विज्यमिति सिद्धान्तः । तत्र पूर्वंतावत् पूर्वाचार्य्यमतेन पूर्वं पक्षमुपन्यस्यति—

**"स्वामिनः फलश्रुतेरित्यात्रेयः" ॥ ४४ ॥**

**स्वामिनः**=स्वामी यजमानः "**स्वामिसप्तदशाः कर्मसामान्यात्**" (मी० ३ । ७ । ३८) इति स्मृतेः, स हि ऋत्विजः परिक्रीणाति, तस्य कर्तव्यं कर्माङ्गोपासनं भवितुमर्हति, कुतः? **फलश्रुतेः**=उपासकस्य तत्फलश्रुतेरित्या**त्रेयः**=आत्रेयाचार्य्यो मन्यत इत्यर्थः ।

उपासकस्य हि कर्माङ्गोपासनफलं श्रावयति श्रुतिः "**वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान् वृष्टौ पञ्चविधं सामोपास्ते**" (छां० २ । ३ । २) इत्यादिका । तत्र कोऽसावुपासकः स्यादिति फलसम्बन्धात् सुखेन प्रत्येतुं शक्यते यस्य फलसम्बन्धः स एवोपासक इति । फलसम्बन्धश्च साङ्गे कर्मण्यधिक्रियमाणस्योपपद्यते नान्यस्य कस्यचित् । नहि यो यत्र नाधिक्रियते तस्य तत्फलसम्बन्धः कथञ्चिदुपपत्तुमर्हति । साङ्गे कर्मणि चाधिक्रियते यजमानः । स एव च स्वामी । यत्कारणं तेनैवर्त्विग्वर्गः परिक्रीयते । यस्य चोपासनफलसम्बन्धः स एवोपासक इति निष्कण्टको मार्गः । अन्यथा कर्तृत्वभोक्तृत्वयोर्वैयधि-

करण्यापत्तेः । इष्यते च तयोरतिप्रसङ्गभिया सामानाधिकरण्यम् । **तस्मात्** स्वामिनो यजमानस्य कर्तव्यं कर्माङ्गोद्गीथाद्युपासनं नर्त्विजामित्यात्रेयाचार्य्यो मन्यते ॥ ४४ ॥

**सिद्धान्तमाह—**

**"आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते"॥४५॥**

स्वामिनेति तृतीयया विपरिणम्यानुवर्तते । **आर्त्विज्यम्**=ऋत्विजां कर्म कर्माङ्गोपासनमि**त्यौडुलोमिः**=औडुलोमिराचार्य्यो मन्यते, कुतः? **हि**=यत**स्तस्मै**=साङ्गकर्मणे **परिक्रीयते**=स्वामिना यजमानेनर्त्विग्वर्गः परिक्रीयत इत्यर्थः ।

न खलु कर्माङ्गोपासनं याजमानं कर्म भवितुमर्हति, तस्य साङ्गे कर्मण्यन्तर्भूतत्वेनर्त्विक्कर्मत्वात् । साङ्गकर्मानुष्ठानार्थं हि स्वामिना यजमानेनर्त्विजः परिक्रीयन्ते । साङ्गे कर्मणि चान्तर्भूयते कर्माङ्गोपासनमिति तदप्यार्त्विज्यमेव स्यान्न पुनर्याजमानं कर्म । नहि येन कर्म तदङ्गानि चोभयमनुष्ठीयते तस्याङ्गाश्रितोपासनं कर्म न भवतीति सङ्गच्छते वाचोयुक्तिः । ऋत्विग्वरणं च कर्मविधिषु सर्वत्र प्रसिद्धमिति नेदं वचोऽपूर्वम् । **"तं ह बको दाल्भ्यो विदाञ्चकार । स ह नैमिषीयाणामुद्गाता बभूव"** ( छां० १ । २ । १३ ) इत्याद्युपाख्यानं च कर्माङ्गोपासनमार्त्विज्यं कर्मेति विस्पष्टं दर्शयति । **तम्**=उद्गीथं, **दाल्भ्यः**=दल्भ्यस्य पुत्रः, **विदाञ्चकार**=उपासाञ्चक्रे; **नैमिषीयाणां**=नैमिषारण्यवासिनां सत्रिणामित्यर्थः । **ननु** कर्माङ्गोपासनस्यार्त्विज्यत्वे कर्तृत्वभोक्तृत्वयोर्वैयधिकरण्यं प्रसज्येतेति । **नैष दोषः** । ऋत्विग्द्वारा कर्तृत्वस्यापि भोक्तरि यजमाने विद्यमानत्वात् । यथा हि जयपराजयफलभागिनि वसुधाधिपे खलु योद्धृभिर्युद्धकर्तृत्वं वर्तते, यत्कारणं तेन योद्धारस्ते परिक्रीयन्ते युद्धार्थं, तथा कर्मफलभाजि स्वामिनि यजमानेऽपि कर्मार्थं क्रीतैर्ऋत्विग्भिः कर्माङ्गोपासनकर्तृत्वं विद्यते नास्ति तद्वैयधिकरण्यशङ्कावकाशः । द्वेधा हि कर्तृत्वमिष्यते प्रयोज्यकर्तृत्वं प्रयोजक-

कर्तृत्वं च । तत्र प्रयोज्यकर्तृत्वमृत्विजां भवति योद्धृवत्, प्रयोजककर्तृत्वं च यजमानस्य स्वामिनो यथा वसुधाधिपस्य । भोक्तृत्वेन च कर्तृत्वमात्र-मनुषज्यते न विशिष्टं कर्तृत्वमित्यदोषः । तस्मादार्त्विज्यं कर्माङ्गो-पासनमिति सिद्धान्तः ॥ ४५ ॥

अत्र श्रुतिं प्रमाणयति—

**"श्रुतेश्च" ॥ ४६ ॥**

आर्त्विज्यमित्यनुवर्तते । पूर्वत्रैवैष प्रमाणोपन्यास इति चार्थः । **श्रुतेः**=ऋत्विक्कर्तृकयजमानगामिफलाशासनश्रुतेः कर्माङ्गोपासनमार्त्वि-ज्यमित्यर्थः ।

अस्ति खलु श्रुतिः **"यां वै काश्चन यज्ञ ऋत्विज आशिष-माशासत इति, यजमानायैव तामाशासत इति हो-वाच"** (शत० १ । ३ । १ । २६) इति । **तस्मादु हैवंविदु-द्गाता ब्रूयात् कं ते काममागायानि"** (छां० १ । ७ । ८) इति च । **कामं**=काम्यमानं फलम् । **आगायानि**=गानेन सर्वतः सम्पादयानीत्यर्थः । तत्र हि यज्ञे कर्मणि प्रवर्तमानाः खल्वृत्विजो यजमानाय वाञ्छितं फलमाशासते तत्सम्पिपादयिषां च व्याकुर्वत इति प्रत्यक्षं श्राव्यते । न च तत् कर्माङ्गोपासनस्य याजमानत्वे कथञ्चित् घटते । नहि यजमानः **"कं ते काममागायानि"** इति व्याकर्तु-मर्हति । स्वस्य स्वं प्रति तथा व्याकरणानुपपत्तेः । न च श्रुतिरन्यथा श्रावयति । प्रमाणं हि सा । **तस्मादृत्विजां** कर्म कर्माङ्गोपासनं न यजमानस्य स्वामिन इति निश्चयः ॥ ४६ ॥

अवसिता प्रासङ्गिकी कथा । पुनः प्रकृतेन वर्तितव्यम् । पूर्वं ज्ञानस्य यज्ञादिकं बहिरङ्गं शमदमादिकं चान्तरङ्गं साधनं सविस्तरं न्यरूपि । सम्प्रति तस्य साधनान्तरं निरूपयितुमधिकरणान्तरमारभ्यते—

**"सहकार्य्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्या-दिवत्" ॥ ४७ ॥**

**सहकार्य्यन्तरविधिः**=बृहदारण्यके साधनान्तरविधिः प्रतिपत्तव्यः । **तृतीयं**=तदिदं पूर्वाभिहितापेक्षया तृतीयं साधनान्तरं **पक्षेण**=विकल्पेन **तद्वतः**=ब्रह्मज्ञानवतोऽनुष्ठातव्यं **विध्यादिवत्**=विधिनिषेधवदित्यर्थः ।

बृहदारण्यके कहोलब्राह्मणे श्रूयते **"तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्, बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः, अमौनं च मौनं च निर्विद्याथ ब्राह्मणः"** ( बृ० ३ । ५ । १ ) इति । यस्मात् पूर्वे ब्राह्मणा एतमात्मानं विदित्वा व्युत्थानादिकं चक्रुस्तस्मादिदानींतनोऽपि ब्राह्मणः **पाण्डित्यं**=श्रवणं **निर्विद्य**=निःशेषेण लब्ध्वा विधाय **बाल्येन**=स्वार्थे ष्यञ्, श्रवणोत्पन्नज्ञानदार्ढ्यहेतुबलेन मननेन **तिष्ठासेत्**=स्थातुमिच्छेत् साधकबाधकयुक्तिभिरसम्भावनादिनिरासार्थं मननं विदध्यात् । बाल्यं च पाण्डित्यं च पूर्वोक्तं निर्विद्याथ=अनन्तरं **मुनिः**=मौनशीलो मौनं निदिध्यासनं तत्परस्तिष्ठासेदित्यनुषङ्गः, मननं कृत्वा निदिध्यासनं कुर्य्यादित्याशयः । **अमौनं**=मौनव्यतिरिक्तं श्रवणं मननं, **मौनं**=निदिध्यासनं च **निर्विद्य**=निःशेषेण लब्ध्वाऽथ **ब्राह्मणः**=ब्रह्मसाक्षात्कारो ब्राह्मण्यं, तद्वान् भवेदित्यर्थः । तत्र संशयः—किमिह पाण्डित्यादिशब्देन श्रवणमननादिकं साधनान्तरं ज्ञानस्य विधीयते किंवा लोकसिद्धं पाण्डित्यादिकं किञ्चिदिति । सम्भवति लोकसिद्धपरिग्रहे तदसिद्धपरिग्रहोऽन्याय्य इति लोकसिद्धपाण्डित्यादिकं किञ्चिदिति प्राप्तेऽभिधीयते—**सहकार्य्यन्तरविधिः** । सहकार्य्यन्तरं=साधनान्तरम् । पूर्वं यज्ञादिकं शमदमादिकं च साधनं ज्ञानस्याभिहितं तदपेक्षया तृतीयमिदं साधनान्तरमिह विधीयत इति विज्ञातव्यम् । लोकसिद्धपाण्डित्यादिविधाने प्रयोजनाभावात् । पाण्डित्यादिविधानानन्तरं हि **"अथ ब्राह्मणः स्यात्"** इत्युपदिश्यते । **ब्राह्मणः**=ब्रह्मज्ञानवानित्यर्थः । न चोपदेशोऽयं तावदुपपद्यते यावत् पूर्वत्र ब्रह्मज्ञानसाधनविधिर्नानुमन्यते । नहि तद्विधानाभ्युपायाभावेऽथशब्दोपादानं कथञ्चित् सङ्गच्छते । अथशब्दो ह्यानन्तर्य्यवचनोऽत्र

**चरति श्रेष्ठस्तत्तदेवेतरो जनः"** ( गी० ३ । २१ ) इत्यादि श्रुतिस्मृतिलिङ्गेभ्यः ॥ ४७ ॥

**ननु** "विध्यादिवत्" इत्ययुक्तमुच्यते, तत्र स्वतन्त्रस्य प्रव्रज्याश्रमयोग्यत्वेऽपि गृहाश्रमायोग्यत्वात् । नहि विध्यादौ स्वतन्त्रः कदाचिद् गार्हस्थ्यमर्हति । तथा च **"स खल्वेवं वर्तयन् यावदायुषम्"** ( छां० ८ । १५ । १ ) इति गृहाश्रमिणोपसंहारो व्यर्थ इति । तत्राह—

**"कृत्स्नभावात्तु गृहिणोपसंहारः"** ॥ ४८ ॥

तुशब्देनोक्ताशङ्का व्यावर्त्यते । **कृत्स्नभावात्**=भावः सम्भवः, कृत्स्नानां ज्ञानसाधनानां गृहाश्रमे सम्भवाद् **गृहिणा**=गृहाश्रमिणो**पसंहारः**=समाप्तिः क्रियत इत्यर्थः ।

यानि खलु यज्ञादीनि निदिध्यासनान्तानि ज्ञानसाधनानि परिकीर्त्यन्ते तानि सर्वाणि केषाञ्चिद् गृहाश्रमिणामपि महाभाग्यानामीश्वरानुग्रहात् सुखेन सम्भवन्ति यथा परिव्राजकानाम् । तदेव मनसि कृत्वा छान्दोग्ये गृहाश्रमिणा विद्योपसंहारो विधीयते । विध्यादौ स्वातन्त्र्यं च गृहाश्रमे वर्तमानानामप्युपपद्यते । यत्कारणं ज्ञानेन तत्स्वातन्त्र्यं नियम्यते नाश्रमेण केनचित् । परिव्राजकानामिव गृहाश्रमिणामपि तदवस्थायां विधीयमानं निखिलं कर्म शिष्टाचारमात्रं मन्यते नेतरजनसाधारणम् । निदिध्यासनं च सर्वत्र कर्मासत्तया विरुध्यते न कर्ममात्रेण ॥ ४८ ॥

**ननु** यावन्ति ज्ञानसाधनानि निर्दिश्यन्ते तेषामेकं निदिध्यासनमेव नियमेनानुष्ठेयं निश्चिनुमहे नेतराणि । तेषां ज्ञानं प्रति साक्षात्साधनत्वाभावादिति । अस्योत्तरं पठति—

**"मौनवदितरेषामप्युपदेशात्"** ॥ ४९ ॥

**मौनवत्**=निदिध्यासनव**दितरेषामपि**=साधनान्तराणा**मप्युपदेशात्**=अनुशासनादनुष्ठेयत्वं निश्चेतव्यमित्यर्थः ।

यथा हि निदिध्यासनं खलु ज्ञानसाधनत्वेनोपदिश्यते तथा साधना-

न्तराण्यपि तत्साधनत्वेनोपदिश्यन्ते । न चोभयेषां तेषामुपदेशसाम्ये निदिध्यासनमेवैकमनुष्ठानमर्हति नान्यत् किञ्चित् साधनमिति निश्चयो युज्यते । वैषम्यकारणानुपलब्धेः । साक्षात्कारणता परम्पराकारणता चानुष्ठानानुष्ठाने कारणानां न प्रयोजयितुमर्हतः । कार्य्यमात्रे कारणानामेवंविधकारणतायाः सर्वत्रोपलम्भात् । नहि कुम्भोत्पत्तौ प्रवर्तमानानि दण्डचक्रचीवरादीनि निखिलानि कारणानि साक्षादेवोपयुज्यमानानि कचिदुपलभ्यन्ते । तत्र किञ्चित् कारणं साक्षादुपयुज्यते परम्परया च किञ्चिदिति सर्वेषां नः प्रत्यक्षम् । न च यत् प्रत्यक्षं तत् तर्कव्यपाश्रयेण कर्हिचिदपह्नोतुं शक्यते । ज्ञानोत्पत्तावपि साधनान्तराणां निदिध्यासनवत् साक्षादुपयोगाभावेऽपि परम्परयोपयोगोऽस्त्येव । न च यानि परम्परयोपयुज्यन्ते तानि विहाय साक्षादुपयुक्तमपि निदिध्यासनं ज्ञानोत्पत्त्यै कदाचिदवकल्पते । तदनुष्ठानं विना तदनुष्ठानासिद्धेः । **तस्माद्** यथा निदिध्यासनं ज्ञानसाधनत्वेनानुष्ठेयं निश्चीयते तथाऽऽश्रमकर्मप्रभृतीनि साधनान्तराण्यपि ज्ञानसाधनत्वेनानुष्ठेयानि निश्चेतव्यानि ॥ ४९ ॥

निदिध्यासनान्तानि ज्ञानसाधनानि निरूपितानि । सम्प्रति तत्सम्पादनप्रकारो मुमुक्षूणामुपदिश्यते—

**"अनाविष्कुर्वन्नन्वयात्"** ॥ ५० ॥

**अनाविष्कुर्वन्**=गुरूपदिष्टसाधनसम्पादनपद्धतिमप्रकाशयन् सततं तत्सम्पादनपरो भवेत्, कुतः? **अन्वयात्**=अनाविष्कारस्य साधनसम्पत्तावङ्गत्वेनान्वयादित्यर्थः ।

यानि खलु निदिध्यासनान्तानि ज्ञानसाधनानि निरूपितानि तानि गुरूपदिष्टमार्गेण साधु सम्पादयितव्यानि । यत्कारणं साधुसम्पादितान्येव तानि ज्ञानफलाय कल्पन्ते । गुरुणोपदिष्टस्तत्सम्पादनमार्गश्च यावत् साधनानि तानि न सम्यक् सम्पद्यन्ते तावन्नाविष्कर्तव्यः । तत्सम्पादनेऽनाविष्कारस्याङ्गत्वेनान्वयात् । गुरूपदिष्टसाधनसम्पत्तिमार्गस्यानाविष्कारो हि साधनसम्पादनेऽङ्गत्वेनान्वेति । स चेत् साधनसम्पत्तितः प्रागेवाविष्कि-

येत तदाऽङ्गहीनत्वान्न किमपि साधनं सम्पद्येत । यत्कारणमाविष्कारे बहवो विघ्नाः सम्भाव्यन्ते । लोकानां भिन्नरुचिकत्वात् । नहि सर्वैः सर्वमुपश्रुत्य श्लाघयन्नुत्साहयति । कदाचित् कश्चिदुत्साहयति कदाचिदुत्सादयति कश्चिदित्येषा हि लोकानां गतिः । अत एव चाविष्कारे सम्भावना विघ्नानाम् । यत्रैष उदाह्रियते "**श्रेयांसि बहुविघ्नानि**" इति । न च बहुषु सत्सु विघ्नेषु यतमानस्यापि साधनसम्पत्तिः सम्भवति । **तस्मान्**मुमुक्षुरनाविष्कुर्वन् साधनसम्पादनपरो भवेन्नाविष्कुर्वन् कर्हिचित् ॥ ५० ॥

**ननु** किमिदं सम्पद्यमानं साधनजातं मुमुक्षूणामैहिकं ज्ञानमुपजनयति किमुतामुष्मिकमिति । **अस्योत्तरमाह**—

**"ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्"** ॥ ५१ ॥

आमुष्मिकं प्रस्तुतप्रतिबन्ध इत्यपेरर्थः । **अप्रस्तुतप्रतिबन्धे**=अनुपस्थिते प्रतिबन्धे कस्मिँश्चि**दैहिकम्**=इह जन्मनि भवं ज्ञानमुपजनयति सम्पद्यमानं साधनजातम्, कुतोऽवगम्यते? **तद्दर्शनात्**=ऐहिकं ज्ञानं तदर्थः, केषाञ्चिदैहिकज्ञानस्य दर्शनादित्यर्थः ।

यदा ह्यस्य सम्पद्यमानस्य साधनजातस्य केनचिद् विपच्यमानेन बलीयसा कर्मान्तरेण प्रतिबन्धो न प्रस्तूयते नोपतिष्ठते तदा नियमेनैहिकं ज्ञानमुपजनयति मुमुक्षूणाम् । यदा तु विपच्यमानेन बलीयसा कर्मान्तरेण केनचित् प्रतिबध्यते तदाऽऽमुष्मिकम् । तदिदं श्रुतिस्मृतिदर्शनादवगम्यते । दर्शयन्ति खलु श्रुतिस्मृतयो विस्पष्टं जनकादीनामिहैव जन्मनि ज्ञानं वामदेवादीनां चामुष्मिन् जन्मनि गर्भस्थानाम् । सोऽयं प्रतिबन्धोपस्थित्यनुपस्थितिकृतो नूनं ज्ञानोत्पत्तौ विलम्बोऽविलम्बश्च नौत्पत्तिकः । साधनानां स्वरूपतो विशेषाभावात् । प्रतिबन्धश्च ज्ञानोत्पत्तौ कर्ममाहात्म्यवैचित्र्यात् सम्भाव्यते । स खलु प्रस्तुतः साधनसम्पत्तेः समीचीनत्वं विघटयति । समीचीनायाः साधनसम्पत्तेश्च तदुत्पत्तिरिष्यते नासमीचीनायाः । **तस्माद**प्रस्तुते प्रतिबन्धे ज्ञानमैहिकं प्रस्तुते च तस्मिन्नामुष्मिकमिति नियमः ॥ ५१ ॥

**ननु** साधनफले ज्ञाने यथैहिकामुष्मिकनियमो विद्यते तथा ज्ञानफले मुक्तावपि स्यात् फलत्वाविशेषादिति। अस्योत्तरमाह—

**"एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः"** ॥ ५२ ॥

वीप्सयाऽध्यायसमाप्तिरवद्योत्यते। **एवं**=ज्ञानवन्**मुक्तिफलानियमः**=ज्ञानफले मुक्तौ नास्ति कश्चिदैहिकामुष्मिकनियमः, कुतः? **तदवस्थावधृतेः**=ज्ञानावस्थायां तत्प्राप्तिवेलायां तदवाप्तिरवधारणादित्यर्थः।

यथा हि साधनफले ज्ञाने तावदैहिकामुष्मिकनियमो वर्तते तथा ज्ञानफले मुक्तावैहिकामुष्मिकनियमो न विद्यते। सा हि तदैवावाप्यते यदा ज्ञानमुपजायते। नहि ज्ञानमुपजायेत मुक्तिश्च नावाप्येतेति कदाचित् सम्भवति। श्रुतयश्च सुव्यक्तं ज्ञानोत्पत्तिवेलायामेव मुमुक्षूणां मोक्षावाप्तिमवधारयन्ति **"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"** (मुं० ३। १। ३) इत्याद्याः सहस्रशः। **तस्मा**ज्ज्ञानवत् तत्फले मुक्तौ नास्ति कश्चिदैहिकामुष्मिकनियम इति निश्चितो राद्धान्तः॥ ५२॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादवैदिकमुनिविरचितायां वेदान्तसूत्रवैदिकवृत्तौ तृतीयाध्यायस्य चतुर्थः पादः॥**



# चतुर्थोऽध्यायः

## प्रथमः पादः

तृतीयाध्याये यज्ञादिनिदिध्यासनान्तानि ज्ञानोत्पत्तिसाधनानि क्रमेण प्रत्यपीपदत्। तेषां ज्ञानोत्पत्तौ यथास्वभावमविशेषेणोपयोगेऽपि साक्षान्निदिध्यासनमेवैकमुपयुज्यत इति च तद्विधायकश्रुतिमीमांसया प्राबूबुधत्। सम्प्रति स्वावसरप्राप्तं ज्ञानफलं विस्तरेण प्रतिपिपादयिषुश्चतुर्थाध्यायमारभमाणः पूर्वमत्यन्तोपयुक्तस्य परमान्तरङ्गसाधनस्य निदिध्यासनस्यावृत्तिं तावदुपदिशति मुमुक्षूणां द्रागित्येव ज्ञानोत्पत्त्यर्थं तत्फललाभार्थं च—

**"आवृत्तिरसकृदुपदेशात्"** ॥ १ ॥

**आवृत्तिः**=साधनमात्रस्य प्रक्रान्तत्वेनोपस्थितत्वेऽप्यत्र निदिध्यासनमेव सम्बध्यतेऽव्यवहितत्वात्, आवृत्तिरभ्यासः यावज्ज्ञानोदयं निदिध्यासनावृत्तिर्विधातव्या, कुतः? **असकृदुपदेशात्**=असकृदुपदिश्यमानत्वादित्यर्थः।

**समाधिपर्य्यन्तं** ध्यानं हि निदिध्यासनमाचक्षते। न च तज्ज्ञानं **तावदुत्पादयितुमीष्टे** यावदावर्त्यमानं समाधिरूपेण न प्रतितेष्ठीयते। ब्रह्मात्मसाक्षात्कारलक्षणस्य ज्ञानस्य समाधावेव सम्भवात्। नहि समाधिं विना कदाचित् कस्यचिदुक्तलक्षणं ज्ञानं सम्भवति। श्रुतिश्च **"स आत्मा तत्त्वमसि श्वेतकेतो!"** (छां० ६। ८। ७) इति समाध्यपरपर्य्यायां ब्रह्मनिष्ठामसकृदुपदिशति। **तस्मा**ज्ज्ञानं तत्फलं च द्रागित्येव कामयमानैर्मुमुक्षुभिर्निदिध्यासनस्यावृत्तिः सततं विधातव्या ॥१॥

**निदिध्यासनावृत्तौ** लिङ्गमुपन्यस्यति—

**"लिङ्गाच्च"** ॥ २ ॥

आवृत्तिरित्यनुवर्तते । पूर्वत्रैवायं लिङ्गोपन्यास इति चार्थः। **लिङ्गात्**=श्रुतिस्मृतिलिङ्गादावृत्तिर्निदिध्यासनस्य गम्यत इत्यर्थः।

अस्ति खलु श्रुतिः "**यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दतेऽथ सोऽभयं गतो भवति**" (तै० २।७) इति। सा परब्रह्मणि परमेश्वरेऽभयां प्रतिष्ठां मोक्षपदप्राप्तिहेतुत्वेनोपदिशन्ती व्यक्तं निदिध्यासनस्यावृत्तिमवगमयति। अचला प्रतिष्ठा ह्यभया प्रतिष्ठा व्यपदिश्यते । सा च निदिध्यासनावृत्त्यैवोपपद्यते नान्यथा। नहि येन निदिध्यासनं नावर्त्यते तस्य परब्रह्मणि परमेश्वरे कदाचिदभया प्रतिष्ठा निष्पद्यते। "**तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः। गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः**" (गी० ५।१७) इत्यादिकं च स्मार्तं लिङ्गमपि निदिध्यासनावृत्तौ द्रष्टव्यम्॥ २॥

**ननु** को हि निदिध्यासनस्य विषयो यत्र तस्य सततमावृत्तिर्विधातव्या मुमुक्षुभिः? तत्राह—

**"आत्मेत्युपगच्छन्ति ग्राहयन्ति च"** ॥ ३॥

तुशब्देनानात्मा व्यवच्छिद्यते । वैदिकाभ्युपगमप्रदर्शनार्थमितिशब्द उपादीयते । **आत्मा**=परमात्मा निदिध्यासनस्य विषय **इत्युपगच्छन्ति**=अभ्युपगच्छन्ति वैदिकाः, **ग्राहयन्ति च**=ज्ञापयन्ति च श्रुतिस्मृतय इत्यर्थः।

निदिध्यासनस्य विषयः खलु परमात्मेति वैदिका अभ्युपगच्छन्ति, तमेव च श्रुतिस्मृतयोऽपि विषयत्वेन ग्राहयन्ति "**अरा इव रथनाभौ संहता यत्र नाड्यः। स एषोऽन्तश्चरते बहुधा जायमानः। ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात्**" (मुं० २।२।६) "**योगी युञ्जीत सततमात्मानं रहसि स्थितः। एकाकी यतचित्तात्मा निराशीरपरिग्रहः**" (गी० ६। १०) इत्याद्याः ; तस्मान्मुमुक्षुभिः सततं तत्रैव निदिध्यासनावृत्तिर्विधातव्या॥ ३॥

**ननु** किमर्थमात्मैव निदिध्यासनविषय उच्यते यावता मूर्त्यादौ कस्मिँश्चित् प्रकृत्यवयवेऽपि निदिध्यासनमावर्तयितुं शक्यते? **तत्राह—**

**"न प्रतीके न हि सः"** ॥ ४ ॥

आवृत्तिरात्मेति च पदद्वयमनुवर्तते । **प्रतीके**=मूर्त्यादौ प्रकृत्यवयवे **न**=निदिध्यासनावृत्तिर्न विधातव्या, कुतः? **हि**=यतः **सः**=प्रतीको **न**=आत्मा न विद्यत इत्यर्थः ।

मूर्त्यादौ प्रतीके तावदावर्त्यमानं निदिध्यासनं परमात्मगोचरसाक्षात्काराय न प्रकल्पते । तस्य स्वगोचरमात्रसाक्षात्कारप्रसवस्वाभाव्यात् । एष हि निदिध्यासनस्य स्वभावो यद्गोचरमावर्त्यते तद्गोचरमेव साक्षात्कारं प्रसूते नान्यगोचरम् । न च मूर्तिप्रभृतिः प्रतीकः परमात्मा विद्यते येन तद्गोचरमावर्त्यमानमपि निदिध्यासनं परमात्मगोचरं साक्षात्कारं प्रसुवीत । कांक्ष्यते च परमात्मगोचरः साक्षात्कारो न मूर्त्यादिगोचरः । आवृत्तिशक्तिश्च न कस्यचित्स्वभावं निरुणद्धि । **तस्मात्** परमात्मैव निदिध्यासनस्य विषयो न मूर्त्यादिः कश्चित् प्रतीक इति दृढं निश्चेतव्यम् ॥ ४ ॥

नन्वेवं चेत् कथं तर्हि **"मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेति"** (छां० ३ । १८ । १) **"आदित्यो ब्रह्मेत्यादेशः"** (छां० ३ । १९ । १) इत्याद्यासु श्रुतिषु मनआदौ प्रतीके ब्रह्मबुद्धिरुपदिश्यते । नहि निदिध्यासनं नाम भवति बुद्धेः किञ्चिद् विशिष्टमिति । तत्राह—

**"ब्रह्मदृष्टिरुत्कर्षात्"** ॥ ५ ॥

प्रतीक इत्यनुवर्तते । **ब्रह्मदृष्टिः**=मनआदौ प्रतीके ब्रह्मबुद्धिः **उत्कर्षात्**=निमित्तपञ्चमीयम्, उत्कृष्टत्वादुपदिश्यत इत्यर्थः ।

येयं मनआदौ प्रतीके खलु ब्रह्मबुद्धिरुपदिश्यते सा ग्रामनायके राजबुद्धिवदुत्कर्षनिमित्तादुपदिश्यते न कस्माच्चिन्निमित्तान्तरात् । यथा हि जगतीतलनायकापेक्षयाऽपकृष्टोऽपि ग्रामनायको ग्रामीणजनतापेक्षयो-

त्कृष्टत्वाद् राजेति व्यपदिश्यते तथा जगज्जन्मादिहेतुब्रह्मापेक्षयाऽपकृष्टोऽपि मनआदिप्रतीकः पदार्थान्तरापेक्षयोत्कृष्टत्वाद् ब्रह्मेत्युपदिश्यते । भवति हि मनोऽध्यात्ममुत्कृष्टं करणान्तरेभ्यः, अधिभूतं चाकाशं भूतान्तरेभ्यः, तथाऽऽदित्यश्चाधिदैवतं पदार्थान्तरेभ्यः । परब्रह्मणि परमेश्वरे च बृहत्त्व-लक्षणोत्कर्षनिमित्ता ब्रह्मशब्दप्रवृत्तिः प्रसिद्धेद्धि तत्सामान्यान्मनःप्रभृति-प्रतीकेऽपि तन्निमित्ता तत्प्रवृत्तिर्युज्यते नास्ति नामानुपपन्नं किञ्चित् । एतेन **"स य एतदेवंविद्वानादित्यं ब्रह्मेत्युपास्ते"** (छां० ७ । २ । २) **"यो वाचं ब्रह्मेत्युपास्ते"** (छां० ७ । २ । २) **"यः सङ्कल्पं ब्रह्मेत्युपास्ते"** (छां० ७ । २ । २) इत्याद्यासु श्रुतिष्वादित्यादिगोचरः प्रयुक्तो ब्रह्मशब्दोऽपि व्याख्यातो द्रष्टव्यः । तत्रापि तत्प्रयोगस्योत्कर्षनिमित्तत्वात् । उपास्तिश्च विदिपर्य्याय इत्यति-रोहितम् ॥ ५ ॥

**ननु** मनःप्रभृतिप्रतीके ब्रह्मबुद्धिरुत्कर्षादुपदिश्यताम्, आदित्यादि-बुद्धयः कर्माङ्ग उद्गीथादौ किन्निमित्ता उपदिश्यन्ते? तत्राह—

**"आदित्यादिमतयश्चाङ्ग उपपत्तेः"** ॥ ६ ॥

**"चोदनाद्यविशेषात्"** (वे० ३ । ३ । १) इत्यत्रादिपद-गृहीता हेतवो यथा पूर्वतन्त्रोक्ताः परामृश्यन्ते तथेहापि **"सारूप्यात्"** (मी० १ । ४ । २५) इति पूर्वतन्त्रोक्तो हेतुः परामृश्यते । विषय सामान्यात् । पूर्वबुद्धिसदृशं बुद्ध्यन्तरमेतदिति चकारेणोच्यते । **आदि-त्यादिमतयः**=आदित्यादिबुद्धयोऽङ्गे=कर्माङ्ग उद्गीथादौ **सारूप्यात्**= सारूप्यनिमित्ता उपदिश्यन्ते, कुतः? **उपपत्तेः**=उपपन्नत्वादित्यर्थः । **"य एवासौ तपति तमुद्गीथमुपासीत"** (छां० १ । ३ । १) **"लोकेषु पञ्चविधं सामोपासीत"** (छां० २ । २ । १) **"वाचि सप्तविधं सामोपासीत"** (छां० २ । ८ । १) **"इयमेवर्गग्निः साम"** (छां० १ । ६ । १) इत्याद्यासु श्रुतिषु यास्तावदुद्गीथादौ कर्माङ्गे सूर्य्यादिबुद्धय उपदिश्यन्ते सर्वास्ताः सारूप्यनि-मित्ताः प्रतिपत्तव्याः । सारूप्यं सादृश्यं तदेव तद्बुद्धिषु निमित्तम् ।

उच्चार्य्यमाणो ह्युद्गीथः किलोङ्कारो हार्दं तमो भयं चोभयमुच्छिनत्ति, परमात्मनामत्वात्, आदित्योऽप्युद्यन् जागतं तमो भयं चोभयं समूलमपहन्ति परमात्ममहिमत्वादित्युभयोः सारूप्यम् । अन्यत्राप्येवं सारूप्यं यथायथमभ्यूहितव्यम् । सारूप्यनिबन्धनोऽन्यत्रान्यबुद्ध्युपदेशश्चोपपद्यते । दृष्टप्रायत्वात् । दृश्यते खलु लोकशास्त्रयोः सारूप्यनिबन्धना मुखे चन्द्रबुद्धिर्माणवकेऽग्निबुद्धिः प्रस्तरे यजमानबुद्धिर्यूपे चादित्यबुद्धिरुपदिश्यमाना । न च सा केनचिदपह्नोतुं शक्यते । दृष्टमाहात्म्यस्य केनाप्यनभिभवनीयत्वात् । यथालोकशास्त्रं चात्रापि श्रुत्युपदेशेन भवितव्यं समानत्वादिति युक्तमुत्प्रेक्षामहे । **तस्मा**दुद्गीथादौ कर्माङ्गे सूर्य्यादिबुद्धयः सारूप्यादुपदिश्यन्त इति निश्चितं मतम् ॥ ६ ॥

**नि**दिध्यासनविषयोऽभ्यधायि । सम्प्रति तदावृत्तिप्रकारोऽभिधातव्यः । तदभिधायकं सूत्रं पठति—

**"आसीनः सम्भवात्"** ॥ ७ ॥

**आसीनः**=उपविष्टो निदिध्यासनं कुर्य्यात्, कुतः? **सम्भवात्**=आसीनस्य तत्सम्भवादित्यर्थः ।

आसीनः खलु मुमुक्षुर्निदिध्यासनं कुर्य्यान्न तिष्ठन् न गच्छन् न स्वपन् । तिष्ठतो देहपतनप्रतिबन्धे प्रयत्नातिशयस्यावश्यकत्वेन विक्षेपापत्तेः, गच्छतश्चित्तचाञ्चल्येनैकाग्र्यानुपपत्तेः, स्वपतो निद्राभिभवेन चित्तस्य निदिध्यासनानिष्पत्तेः । न चासीनस्यैवंजातीयका दोषाः कर्हिचित् सम्भावयितुमपि शक्यन्ते । तस्य तत्परिहारसमर्थत्वात् । यस्य चैवंविधदोषसम्भावनैव नास्ति तस्य सम्भवति निदिध्यासनमिति किमु वक्तव्यम् । **तस्मादा**सीनो निदिध्यासनं कुर्य्यात् ॥ ७ ॥

**अत्रै**व हेत्वन्तरं समुच्चिनोति—

**"ध्यानाच्च"** ॥ ८ ॥

आसीन इत्यनुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । **ध्यानात्**=ध्यानत्वान्निदिध्यासनमासीनो विदध्यादित्यर्थः ।

समाधिपर्य्यन्तं ध्यानं हि निदिध्यासनमाख्यायत इत्युक्तम्। ध्यानं च चित्तैकाग्र्यनिबन्धनं प्रसिद्धम्। चित्तैकाग्र्यं चासीनस्यैव सम्भवति न तिष्ठतो न चलतो न शयानस्य स्थित्यादेश्चित्तविक्षेपकत्वेन तत्प्रतिपक्षत्वात्। अतो मुमुक्षुरासीन एव नियमेन निदिध्यासनं विदध्यादित्याचार्य्याशयः ॥ ८ ॥

प्रयोजकान्तरमाह—

**"अचलत्वं चापेक्ष्य"** ॥ ९ ॥

आसीन इत्यनुवर्तते। पूर्वत्रैव प्रयोजकान्तरमेतदिति चार्थः। **अचलत्वं**=सर्वाङ्गनिश्चलत्वम**पेक्ष्य**=उद्दिश्य मुमुक्षुरासीनो निदिध्यासनं कुर्य्यादित्यर्थः।

निदिध्यासने प्रवृत्तेन खलु मुमुक्षुणा सर्वाङ्गनैश्चल्यमवश्यापेक्षितव्यम्। अन्यथा निदिध्यासनासिद्धेः। नहि यतमानस्यापि चलसर्वाङ्गस्य निदिध्यासनं कर्हिचित् सेद्धुमर्हति। सर्वाङ्गनैश्चल्यं चासीनस्य सम्भवति न तिष्ठतो न चलतो न शयानस्य। **तस्मादा**सीनः सततं निदिध्यासनं विदध्यात् ॥ ९ ॥

अन्यं प्रयोजकमाह—

**"स्मरन्ति च"** ॥ १० ॥

आसीन इत्यनुवर्तते। हेतौ चः। **स्मरन्ति**=यस्मादासनं निदिध्यासनाङ्गमधियन्ति तस्मादासीनो निदिध्यासनं विदध्यादित्यर्थः।

समाधिपर्य्यन्तं ध्यानं खलु निदिध्यासनमित्यसकृदुक्तम्। तदङ्गमासनं स्मरन्ति पतञ्जलिप्रभृतयो मुनयः **"यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि"** (यो० २।२९) इति। **"शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः"** (गी० ६। ११) इति च। स्वरूपादिकं च तस्य योगशास्त्रादवगन्तुं शक्यते। अङ्गं चाङ्गिसिद्धौ मुख्यं कारणम्। **तस्मादा**सीनो मुमुक्षुर्निदिध्यासनं विदध्यादिति युक्तम् ॥ १० ॥

**ननु** कायमासीनो निदिध्यासनं विदध्यात्? तत्राह—

**"यत्रैकाग्रता तत्राविशेषात्"** ॥ ११ ॥

**एकाग्रता**=चित्तैकाग्रता **यत्र**=यस्मिन् स्थाने सम्भवेत् **तत्र**=तस्मिन् स्थाने निदिध्यासनं विदध्यात्, कुतः? **अविशेषात्**=समानत्वादित्यर्थः।

चित्तैकाग्र्यं खलु निदिध्यासनं प्रयोजयति न स्थानम्। तत्र विशेषाभावात्। अविशिष्टं हि निदिध्यासकस्य सर्वं स्थानं हिमवद्दरी स्याज्जह्नुकन्यातटी स्यादरण्यं स्यादुपवनं स्यात् सदनं भवेन्मन्दिरं वा विद्येन नास्ति कश्चिद् विशेषः। यस्तु विशेषः स चित्तैकाग्र्यानुकूलः सर्वत्रेष्यते। अत एवाह श्रुतिः **"मनोऽनुकूले न तु चक्षुःपीडने"** (श्वे० २। १०) इति। स्मृतिरपि **"न स्थाननियमश्चित्तप्रसादात्"** (सां० ६। ३१) इति। समत्वशुचित्वादयस्तु चित्तैकाग्र्योपयोगित्वात् स्थानमात्रे स्वभावतोऽपेक्ष्यन्ते। **तस्माद्** मुमुक्षुर्यत्र चित्तैकाग्र्यसम्भवं विजानीयात् तत्रैवोपविश्य निदिध्यासनं विदध्यात्॥ ११॥

**ननु** कियन्तं कालं निदिध्यासनं विधातव्यमित्याकांक्षायामाह—

**"आ प्रायणात् तत्रापि हि दृष्टम्"** ॥ १२ ॥

**आ प्रायणात्**=प्रायणं मरणं, तत्पर्य्यन्तम्, अनेन यावद् ब्रह्मज्ञानं नोदेति तावान् दीर्घकालो विवक्ष्यते, नैरन्तर्य्यस्य सत्कारस्य चैतदुपलक्षणम्, निदिध्यासनं विधातव्यमिति शेषः, कुतः? **हि**=यतस्तत्रापि=विषयसप्तमीयं, तद्विषयमपि **दृष्टं**=भावे क्तः, श्रुतिदर्शनं विद्यत इत्यर्थः।

आ प्रायणं हि विधीयमानं निदिध्यासनं ज्ञानफलायावकल्पते नाल्पं कालम्। तावता तस्य समाधिरूपेणावस्थानासिद्धेः। तदिदं चाप्रायणं ध्यानं दर्शयन्ती श्रुतिरप्युपोद्बलयति **"स यो ह वै तद् भगवन्! मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत"** (प्र० ५। १) इत्यादिका। प्रायणपर्य्यन्तकालेन च यावद् ब्रह्मज्ञानं नोत्पद्यते तावान्

कालोऽभिप्रेयते नाधिकः । ज्ञानोत्पत्तौ निदिध्यासनस्य प्रयोजनाभावात् । नैरन्तर्य्यं सत्कारश्चानेनैव सङ्गृह्येते । **तस्माद्** यावद् ब्रह्मज्ञानं नोदियात् तावन्नैरन्तर्य्येण सत्कारेण च निदिध्यासनमावर्तयेन्मुमुक्षुरित्याकूतम् ॥ १२ ॥

नन्वेवं निदिध्यासनावृत्त्या ज्ञाने सति किं भवति? तत्राह—

**"तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्"** ॥ १३ ॥

**तदधिगमे**=तदा निदिध्यासनविषयः परमात्मा परामृश्यते, अधिगमो ज्ञानं, निदिध्यासनावृत्त्या परमात्मज्ञाने सत्यु**त्तरपूर्वाघयोः**= अघं पापं, ज्ञानोत्तरकालीनं करिष्यमाणमागामि पापमुत्तराघं, ज्ञानपूर्वकालीनं कृतं सञ्चितं पापं पूर्वाघं, तयो**रश्लेषविनाशौ**=श्लेषः सम्बन्धस्तदभावोऽश्लेषः सम्बन्धाभावः, प्रध्वंसो विनाशः, उत्तराघस्याश्लेषः, पूर्वाघस्य विनाशश्च भवतः, कुतोऽवगम्यते? **तद्व्यपदेशात्**=तत्प्रतिपादकश्रुतिस्मृतिव्यपदेशादित्यर्थः ।

निदिध्यासनावृत्त्या खलु सुसम्पन्ने निर्विचारवैशारद्ये जातायामृतम्भरायां प्रज्ञायां प्रत्यगात्मनः साक्षात्कार उपजायते । ततः परवैराग्येण निष्पन्ने निर्बीजे समाधौ च परब्रह्मणः परमेश्वरस्य साक्षात्कारः । उत्पन्ने च तस्मिन्नुत्तरपूर्वाघयोरश्लेषविनाशौ तत्रभवतो ब्रह्मज्ञानिनो जायेते । अचिन्तनीयमाहात्म्यात् । अचिन्तनीयमाहात्म्यं हि ब्रह्मज्ञानं यदैवोदयमासादयति तदैव तत्रभवतो ब्रह्मज्ञानिनः सञ्चितं सर्वं पापमशेषविशेषतो नाशयति, करिष्यमाणं पापं च न पुनस्तं संश्लिष्यति । जाज्वल्यमानतेजःकल्पं खलु ब्रह्मज्ञानमाचक्षते । यथा हि जाज्वल्यमानं तेजः स्वाधिष्ठाने सञ्चितं निखिलं काष्ठादि दाह्यं वस्तु क्षणेनाशेषविशेषतो भस्मयति, भविष्यच्च ततो यावद्वस्थानं दूरं विश्लेषयति, तथा जायमानं ब्रह्मज्ञानमपि स्वाधिष्ठाने सञ्चितं सर्वं पापमशेषविशेषतो नाशयति, करिष्यमाणं च ततो दूरं विश्लेषयति । तदिदं महामहिम्नस्तस्याद्भुतं नैसर्गिकं कृत्यं श्रुतिस्मृति-

व्यपदेशादवगच्छामः । भवति तावदुत्तराघाश्लेषविषयः श्रुतिव्यपदेशः "यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते" (छां० ४ । १४ । ३ ) इति । "तस्यैव स्यात् पदवित् तं विदित्वा न श्लिष्यते कर्मणा पापकेन" (बृ० ४ । ४ । २२ ) इति च । तथा पूर्वाघविनाशविषयः "तद् यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" (छां० ५ । २४ । ३ ) इति । "यथैधस्तेजसा वह्निः प्राप्तं निर्दहति क्षणात् । तथा ज्ञानाग्निना पापं सर्वं दहति ब्रह्मवित्" ( मनु० ११ । २४६ ) इति च तद्विषयः स्मृतिव्यपदेशः । न च श्रुतिस्मृतिव्यपदेशेनावगम्यमानं कदाचिदप्रामाण्यमश्नुते । "नहि कर्म क्षीयते" ( गौ० १९ । ५ ) इत्यादिकं स्मरणं त्वौत्सर्गिकम् । प्रायश्चित्तादिना तत्क्षयस्यापि श्रुतिस्मृतितोऽवगतत्वात् "सर्वां ह वै पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैवमेवं वेद" ( तै० सं० ५ । ३ । १२ । २ ) "यजेत वाऽश्वमेधेन स्वर्जिता गोसवेन वा । अभिजिद्विश्वजिद्भ्यां वा त्रिवृताग्निष्टुताऽपि वा" ( मनु० ११ । ७४ ) "जपन् वाऽन्यतमं वेदं योजनानां शतं व्रजेत् । ब्रह्महत्यापनोदाय मितभुङ्नियतेन्द्रियः" ( मनु० ११ । ७५ ) "कृत्वा पापं हि सन्तप्य तस्मात्पापात्प्रमुच्यते । नैवं कुर्य्यां पुनरिति निवृत्त्या पूयते तु सः" ( मनु० ११ । २३० ) महापातकिनश्चैव शेषाश्चाकार्य्यकारिणः । तपसैव सुतप्तेन मुच्यन्ते किल्विषात्ततः" ( मनु० ११ । २३९ ) इति । तथा "इदमापः प्रवहत यत्किञ्च दुरितं मयि । यद्वाऽहमभिदुद्रोह यद्वा शेप उतानृतम्" ( ऋ० १ । २ । १२ । २२ ) "विश्वानि देव ! सवितर्दुरितानि परासुव । यद्भद्रं तन्न आसुव" ( ऋ० ४ । ४ । २५ ।

५) इत्यादिमन्त्रलिङ्गेभ्यः। ब्रह्मज्ञानापेक्षया चात्यल्पं प्रायश्चित्तादिकम्। तेन चेत् कृतपापस्य सर्वस्य विनाशो भवति तदा किमु वक्तव्यं महता ब्रह्मज्ञानेनोत्तरपूर्वाघयोरश्लेषविनाशौ भवत इति॥ १३॥

अतिदिशति—

**"इतरस्याप्येवमसंश्लेषः पाते तु"॥ १४॥**

तदधिगमे तद्व्यपदेशादित्यनुवर्तते। नाशस्य श्रुतिस्मृतिसिद्धत्वेन संशयानुत्पत्तेरसंश्लेषमात्रग्रहणम्। **इतरस्यापि**=अघमुक्तं तदितरत् पुण्यं, तस्यापि पूर्वकृतस्योत्तरकृतस्य **चैवम्**=अघवदसंश्लेषः=तदधिगमेऽसंश्लेषविनाशौ भवतः, कुतोऽवगम्यते? तद्व्यपदेशात्। **पाते तु**=भोगेन प्रारब्धकर्मक्षयाद्देहपाते तु ब्रह्मसम्पत्तिर्वक्ष्यत इत्यर्थः।

ब्रह्मज्ञाने जाते तत्रभवतो ब्रह्मज्ञानिनो भवति पूर्वस्य सञ्चितस्य सर्वस्य पुण्यस्याशेषविशेषतो नाश इति निःसंशयम्। श्रुतिस्मृतिभिः प्रतिपादितत्वात्। विद्यते तावद् ब्रह्मज्ञाने जाते तत्रभवतो ब्रह्मज्ञानिनः सञ्चितस्य पुण्यपापात्मकस्य सर्वस्य कर्मणो नाशस्य प्रतिपादिका श्रुतिः **"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"** (मुं० २। २। ८) इत्येवमाद्या। तथा स्मृतिः **"ततः क्लेशकर्मनिवृत्तिः"** (यो० ४। ३०) **"यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन!। ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा"** (गी० ४। ३७) इत्येवञ्जातीयका। न च श्रुतिस्मृतिप्रतिपादितेऽर्थे संशयः कस्यचित् कर्हिचिदुत्पत्तुमर्हति। प्रामाणिकत्वात्। नहि प्रामाणिकेऽर्थेऽल्पधियोऽपि कदाचित् संशेरते महाधिय इति तु किमु वक्तव्यम्। उत्तरस्य विधास्यमानस्य सर्वस्य पुण्यस्यासंश्लेषे तु संशयावकाशो वर्तते भवेन्मा वा भूदिति। तस्य स्वशब्देनानुपादानात्। तमेवेमं संशयं निराचिकीर्षुः किलाचार्यः पूर्वाधिकरणन्यायमतिदिशन्नाह—ब्रह्मज्ञाने जाते तत्रभवतो ब्रह्मज्ञानिनो यथा पापस्य कर्मणो नाशोऽसंश्लेषश्च भवतस्तथा पुण्यस्य कर्मणोऽपि

भवत इति विज्ञातव्यम् । तद्व्यपदेशात् । व्यपदिशति खलु पापवत् पुण्यस्यापि नाशासंश्लेषौ श्रुतिः **"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"** (मुं० ३ । १ । ३) इत्यादिना नाशम् । विधूननस्य नाशार्थत्वनिश्चयात् । **"उभे उ हैवैष एते तरति नैनं कृताकृते तपतः"** (बृ० ४ । ४ । २२) इत्यादिना चासंश्लेषम् । **तपतः**=उद्वेजयतः संश्लिष्यत इत्यर्थः । श्रुति-व्यपदेशश्च नः सर्वदा सर्वत्र प्रमाणमित्यसकृदवोचाम । जन्मान्तरकारण-भूते चैते पुण्यपापे । पूर्वोत्तरयोस्तयोर्ज्ञानमाहात्म्येन नाशेऽसंश्लेषे च कारणाभावाज्जन्मान्तरानुपपत्तेरवश्यम्भाविनी मुक्तिर्भोगेन प्रारब्ध-कर्मक्षयादुपात्तदेहपात इत्यनन्तरं प्रवक्ष्यते । **तथाच** ब्रह्मज्ञाने जाते तत्रभवतो ब्रह्मज्ञानिनो ज्ञानमाहात्म्यात्सञ्चिते पुण्यपापे द्रागित्येव न-श्यतः क्रियमाणे च मात्रयाऽपि न तं भगवन्तं संश्लिष्यत इति सूत्रद्वय-निष्कर्षः ॥ १४ ॥

**पूर्वकृतयोः** पुण्यपापयोर्ब्रह्मज्ञानमाहात्म्येन नाश इत्यभिहितम् । तत्र संशयः किमविशेषेणारब्धानारब्धकार्य्ययोरुभयोर्नाशो भवति किमुत विशेषेणानारब्धकार्य्ययोरेवेति । पूर्वत्वाविशेषाच्छरीरस्थितेश्च कुलाल-चक्रभ्रमणादिवत् संस्कारवशेनोपपत्तेरविशेषेणोभयोरिति प्राप्तेऽभिधीयते—

**"अनारब्धकार्य्ये एव तु पूर्वे तदवधेः"** ॥ १५ ॥

तदधिगम इत्यनुवर्तते । तुशब्देन प्राप्तं व्यावर्त्यते । अवधारणेना-रब्धकार्य्ययोगो व्यवच्छिद्यते । **अनारब्धकार्य्ये**=नारब्धं प्रारब्धं कार्य्यं शरीरं याभ्यां पुण्यपापाभ्यां ते अनारब्धकार्य्ये अप्रवृत्तफले **पूर्वे**= अस्मिन् जन्मनि जन्मान्तरे वा कृते सञ्चिते पूर्वे पुण्यपापे तदधिगमे जाते नश्यतः, कुतः ? **तदवधेः**=भावप्रधानो निर्देशः, एकवचनमु-भयत्वाभिप्रायं, तदर्थस्तदधिगमः, सोऽवधिः सीमा नाशे यस्यानारब्ध-कार्य्यस्य पुण्यपापोभयस्येति बहुव्रीहिसमासः, तदवधित्वादित्यर्थः ।

द्विविधं खलु पुण्यपापात्मकं कर्म मन्यते पूर्वमुत्तरं च। ज्ञानोत्पत्तेः प्राग्भवं पूर्वं तदुत्तरभवमुत्तरम्। तत्र पूर्वं पुनर्द्विविधमारब्धकार्य्यमनारब्धकार्य्यं च। येनेदं ब्रह्मज्ञानायतनं शरीरमारभ्यते तदारब्धकार्य्यम्। येन च किमपि कार्य्यं नारभ्यते केवलं निधिवत् सञ्चितमवतिष्ठते तदनारब्धकार्य्यम्। तत्र ब्रह्मज्ञानेनानारब्धकार्य्यं सञ्चितमेव पुण्यपापात्मकं कर्म नाश्यते नारब्धकार्य्यं प्रारब्धं कर्म। उपजीव्यत्वात्। नहि यदुपजीव्य ब्रह्मज्ञानमजनि तत् कर्हिचिन्नाशयितुं पारयति। वह्नेरिव तस्य स्वोपजीव्यनाशकत्वाभ्युपगमे चावस्थानहेतोरभावात् तूर्णमिदं शरीरं निपतेत्। प्रारब्धं कर्म हि शरीरावस्थानहेतुरास्थीयते। तच्चेदुत्पन्नेन ब्रह्मज्ञानेन नश्येत् तदा किमाश्रयं शरीरमिदमवतिष्ठेत। नहि निरधिष्ठानं किञ्चिदवस्थानाय कल्पते। संस्कारश्च क्रियादिकारणमभ्युपगम्यते न वस्तुस्थितिकारणमित्यदृष्टान्तस्तावत् कुलालचक्रभ्रमणवदिति युक्तमुत्पश्यामः। कथञ्चिद् वस्तुस्थितिहेतुताकल्पनायामपि तस्य न शरीरस्थितिहेतुसंस्कारसद्भावे प्रमाणं किञ्चिदीक्षामहे येन सञ्चितकर्मवत् प्रारब्धकर्मनाशेऽपि तदवस्थानं कल्प्येत। न च निष्प्रमाणकं किञ्चित् कल्पयितुं शक्यते। **"चक्रभ्रमणवद् धृतशरीरः"** (सां० ४। ८२) इत्यादौ च निवृत्तायां प्रकृतौ तत्रभवतो जीवन्मुक्तस्य स्थितौ दृष्टान्तः प्रदर्श्यते न प्रारब्धकर्मविनाश इत्यविरोधः। यत्पुनरुच्यते पूर्वत्वाविशेषान्नाश इति। तन्न युक्तं पश्यामः। सत्यपि पूर्वत्वे नाशानर्हत्वान्नाशानुपपत्तेः। **"तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये"** (छां० ६। १४। २) इति च श्रुतिः सत्यपि ब्रह्मज्ञाने ब्रह्मोपसम्पत्तिलक्षणे मोक्षे प्रारब्धकर्मविलम्बं श्रावयन्ती नूनमिदं सञ्चितस्य कर्मणोऽवधिरेतत्पर्य्यन्तमेव सञ्चितं कर्मावस्थातुमर्हति नोर्ध्वमिति विस्पष्टमवगमयति। प्रव्यक्तो हि श्रुतेरक्षरार्थस्तस्य=सद्ब्रह्मसाक्षात्कारवतो जीवन्मुक्तस्य **तावदेव**=तावत्कालपर्यन्तमेव **चिरं**=विलम्बः सद्ब्रह्मोपसम्पत्तौ वर्तते **यावत्**=यावत्कालपर्य्यन्तं **न विमोक्ष्ये**=प्रारब्धकर्मणा न विमुच्यते, **अथ**=भोगेन प्रारब्धकर्मविमोक्षा-

नन्तरं **सम्पत्स्ये**=सद् ब्रह्मोपसम्पद्यत इति । न चानेन प्रारब्धं कर्म भोगेन क्षीयते सञ्चितं च ब्रह्मज्ञानेनेति न विस्पष्टमवगम्यते । नहि प्रव्यक्तेऽर्थेऽपि कदाचिन्मुह्यन्ति शास्त्रतत्त्वविदो विवेकिनः । "**कर्माणि**" (मुं० २ । २ । ८) "**सर्वकर्माणि**" (गी० ४ । २०) इत्यादिकं श्रुतिस्मृतिवचनं तु प्रारब्धकर्मातिरिक्तसञ्चितकर्ममात्राभिप्रायं द्रष्टव्यम् । अनेकजन्मार्जितत्वेन बहुत्वोपपत्तेः । **तस्माद्** ब्रह्मज्ञानोत्पत्तेः प्रागनुष्ठिते पूर्वे अनारब्धकार्य्ये सञ्चिते सुकृतदुष्कृते तत्रभवतो ब्रह्मज्ञानिनो ब्रह्मज्ञानसामर्थ्यादशेषविशेषतो नश्यत इति निर्णयः ॥ १५॥

नन्वनारब्धकार्य्ये पूर्वे सुकृतदुष्कृते चेदत्रभवतो ब्रह्मज्ञानिनो ब्रह्मज्ञानमाहात्म्यादशेषविशेषतो नश्यत इति निर्णीयेत तदा शास्त्रविहितमग्निहोत्रादिकमाश्रमकर्म केनापि नानुष्ठीयेत । सुकृतं हि तत् । न च सुकृतं नाशाय मूढधीरपि कश्चिदनुष्ठातुमुत्सहते शास्त्रधीरिति तु किमु वक्तव्यम् । प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायात् । विहितानुष्ठाने च नूनं शास्त्रं भवेदप्रमाणम् । तस्यापि शास्त्राप्रामाण्यहेतुत्वाभ्युपगमात् । यत्रेदमुक्तं दर्शनान्तरे "**अननुष्ठानलक्षणमप्रामाण्यम्**" (सां० १ । ८) इति । न च शास्त्रस्याप्रामाण्यमिष्यते । तस्मादयुक्त एष निर्णय इति । तत्राह—

**"अग्निहोत्रादि तु तत्कार्य्यायैव तद्दर्शनात्"** ॥१६॥

तदधिगम इत्यनुवर्तते । तुना शङ्काऽपनुद्यते । अवधारणेन कार्य्यान्तरं व्यवच्छिद्यते । यत इति शेषः । **अग्निहोत्रादि**=वेदानुवचनादिकमादिशब्देन गृह्यते, अग्निहोत्रादिकमाश्रमकर्म तदधिगमे सति न नश्यति, कुतः? यतस्तत्=अग्निहोत्रादि कर्म **तत्कार्य्याय**=तदा तदधिगमं परामृशति, ज्ञानलक्षणाय कार्य्याय वर्तते, कुतोऽवगम्यते? **दर्शनात्**=श्रुतिर्दर्शनं, तस्मादित्यर्थः ।

न खलु ब्रह्मज्ञानेनाग्निहोत्रादिकमाश्रमकर्म नाशमृच्छति । तत्कार्य्यत्वात् । ज्ञानं हि तस्य कार्य्यम् । शास्त्रविहितं तावदग्निहोत्रादिकमा-

श्रमकर्म फलाभिसन्धिवर्जितं यथाशास्त्रमनुष्ठीयमानं चित्तशुद्धिद्वारा ज्ञानमारभते । तदिदं बहूक्तमधस्तात् । तदारभ्यमाणं च ज्ञानं यावदनारब्धकार्य्यं कर्म तावदशेषविशेषतो नाशयितुं शक्नुवदपि नात्मारम्भकं तत्कर्म नाशयितुं शक्नोति । विरोधाभावात् । तस्य तदानीमभावाच्च । नहि यत्न विरुध्यते न वा तदानीं बोभूयते तत् तेन नाशयितुं शक्यते । सर्वोत्कृष्टफलं च ज्ञानं सर्वसम्मतम् । मोक्षैकफलत्वात् । मोक्षो हि सर्वस्मादुत्कृष्यते । यत्रेदमुक्तं दर्शनान्तरे "**उत्कर्षादपि मोक्षस्य सर्वोत्कर्षश्रुतेः**" ( सां० १ । ५ ) इति । न च यस्येदक्षं सर्वोत्कृष्टफलं ज्ञानं कार्य्यं तस्य कदाचित् कस्यचिदननुष्ठानं घटते । को नु नामानुन्मत्तस्तादृक्कार्य्यं कर्मानुष्ठातुं नोत्सहिष्यत इति दीर्घदृक्षा चिन्तयितव्यम् । सर्वो हि मोक्षं कामयमानो ज्ञानाय प्रतिपलं प्रयतते । ज्ञानं च शास्त्रविहिताग्निहोत्रादिकर्मकार्य्यम् । यत्रेदं श्रुतं भवति "**तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन**" ( बृ० ४ । ४ । २२ ) इति । न च यस्य यत्कार्य्यं तस्याननुष्ठाने तत् कथञ्चिदवाप्तुं शक्यते । **कारणभावात् कार्य्यभावः**" ( वै० ४ । १ । ३ ) इति नियमात् । तदनुष्ठाने च नास्ति शास्त्रस्य मात्रयाऽपि विहिताननुष्ठानलक्षणाप्रामाण्यचोद्यावतारः । तस्मादनारब्धकार्य्ये पूर्वे सुकृतदुष्कृते तत्रभवतो ब्रह्मज्ञानिनो ब्रह्मज्ञानमाहात्म्यादशेषविशेषतो नश्यत इति युक्तं निर्णीयते । ज्ञानकार्य्यस्याग्निहोत्रादेराश्रमकर्मणः सुकृते तस्मिन्नप्रवेशात् । उत्सर्गो हि सर्वदा सर्वत्रापवादविषयं परित्यज्य प्रवर्तत इति शास्त्रस्थितिः ॥ १६ ॥

नन्वग्निहोत्रादेराश्रमकर्मणोऽन्या काऽस्ति सुकृतकृत्या या किलोत्पन्नेन ब्रह्मज्ञानेनात्मसामर्थ्यादत्यन्तं विनाश्यत इति । तत्राह—

"**अतोऽन्याऽपि ह्येकेषामुभयोः**" ॥ १७ ॥

**अतः**=अग्निहोत्रादेराश्रमकर्मणो**ऽन्याऽपि**=भिन्नाऽपि सुकृतकृत्या वर्तते, कस्मात् प्रतिपद्यते ? **हि**=यस्मादे**केषां**=वाजसनेयकानामु**भयोः**=द्वयोः कर्मणोः समाम्नानं दृश्यत इत्यर्थः ।

अवान्तरभेदेन द्वेधा खल्वग्निहोत्रादिकमाश्रमकर्मास्थीयते फलाभिसन्धिनाऽनुष्ठीयमानं विना फलाभिसन्धिमनुष्ठीयमानं च । तत्र फलाभिसन्धिनाऽनुष्ठीयमानं स्वर्गादिफलायावकल्पते, तदन्तरेणानुष्ठीयमानं च चित्तशुद्धिद्वारा ज्ञानरूपाय कार्य्याय । तदिदमुभयविधमग्निहोत्रादिकमाश्रमकर्म वाजसनेयकानां फलभेदेन समाम्नातं दृश्यते **"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन"** ( बृ० ४ । ४ । २२ ) इति ज्ञानफलम् **"अथ ये यज्ञेन दानेन तपसा लोकान् जयन्ति"** ( बृ० ६ । २ । १६ ) इति च स्वर्गादिफलम् । साधनसम्पत्त्या जायमानं ब्रह्मज्ञानं च स्वर्गादिफलं सुकृतं कर्माशेषविशेषतो नाशयति विरोधात् ॥ १७ ॥

अग्निहोत्रादिकमाश्रमकर्म फलाभिसन्धिमन्तरेण यथाशास्त्रमनुष्ठीयमानं ज्ञानकार्य्याय प्रभवतीत्यभिहितम् । तत्रैष संशयः किमिदं सोपासनं ज्ञानकार्य्याय प्रभवति किंवा केवलमिति । **विविदिषन्ति यज्ञेन"** ( बृ० ४ । ४ । २२ ) इत्यविशेषश्रुतेः केवलमिति प्राप्तेऽभिधीयते—

**"यदेव विद्ययेति हि"** ॥ १८ ॥

**हि**=यस्माच्छन्दोगाः **"यदेव विद्यया"** ( छां० १ । १ । १० ) इति समामनन्ति तस्मात् सोपासनं कर्म ज्ञानकार्य्याय प्रभवतीति निश्चीयत इत्यर्थः ।

छन्दोगाः खलु **"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरं भवति"** ( छां० १ । १ । १० ) इति समामनन्ति । तत्र विद्योपासना, तत्संयुक्तस्य कर्मणो वीर्य्यवत्तरत्वसमाम्नानात् सोपासनस्याग्निहोत्रादेराश्रमकर्मणः स्वकार्य्ये ज्ञानं प्रत्यत्यन्तोपयोगो गम्यते । केवलस्य कर्मणः स्वकार्य्ये प्रति कयाचिन्मात्रयोपयोगेऽपि नास्त्यत्यन्तोपयोग इत्यस्ति तरबाशयो विस्पष्टः । यस्य च स्वकार्य्ये प्रत्यत्यन्तोपयोगो न विद्यते न तत् तदुत्पत्तौ द्रागित्येव प्रभवतीति स्फुटं विज्ञायते । अविशेषश्रवणं च सोपासने तस्मिन्नुपसंहर्तुं शक्यते नास्ति

कश्चिदतिभारः। तस्मादुपासनं कर्म चोभयं यथाशास्त्रं विधीयमानं ज्ञानकार्य्याय क्षमते न केवलं कर्मेति निश्चयः। **तथाच** शीघ्रं ज्ञानमिच्छद्भिर्मुमुक्षुभिः कर्मोपासनमुभयं यथाशास्त्रं विधातव्यम्॥ १८॥

अनारब्धकार्य्ययोः सुकृतदुष्कृतयोर्ब्रह्मज्ञानेनाशेषविशेषतो नाशो निरूपितः। इदानीमारब्धकार्य्ययोस्तयोर्भोगेन नाशं निरूपयन्नाह—

**"भोगेन त्वितरे क्षपयित्वा सम्पद्यते"॥ १९॥**

तुना क्षपणे भोगातिरिक्तं कारणं व्यवच्छिद्यते। **भोगेन**=स्वारब्धेष्टानिष्टफलोपभोगेने**तरे**=आरब्धकार्य्ये सुकृतदुष्कृते **क्षपयित्वा**=नाशयित्वा **सम्पद्यते**=सम्पत्तिरविभागः, समुद्रं सरिदिव ब्रह्मोपसम्पद्यते प्राप्नोतीत्यर्थः।

उत्तरे पुण्यपापे खलु तत्रभवन्तं ब्रह्मज्ञानिनं ब्रह्मज्ञानसामर्थ्यान्न संश्लिष्यतः। पूर्वे चानारब्धकार्य्ये पुण्यपापे व्रीह्यादिवद् दग्धबीजत्वेन भोगाङ्कुरजननासमर्थतया तत एवाशेषविशेषतो नश्यतः। ताभ्यामितरे प्रारब्धकार्य्ये पुण्यपापे च भोगेन विना क्षपयितुमशक्यत्वात् तेनैव क्षपयित्वाऽन्ते ब्रह्मोपसम्पद्यते सरिदिव सरित्पतिं तत्रभवान् ब्रह्मवित्। **"तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये"** (छां० ६। १४। २) **"ब्रह्मैव सन् ब्रह्माप्येति"** (छां० ४। ४। ६) इत्यादिश्रुतिभ्यः॥ १९॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादवैदिकमुनिविरचितायां वेदान्तसूत्रवैदिकवृत्तौ चतुर्थाध्यायस्य प्रथमः पादः॥**



# चतुर्थोऽध्यायः ।

## द्वितीयः पादः ।

कर्मोपासनं ज्ञानं चेति त्रितयं प्रकृतम् । ज्ञानसाधनत्वेन कर्मोपासने, तत्साध्यत्वेन च ज्ञानम् । तत्र ज्ञानस्य फलं परब्रह्मप्राप्तिर्या किल मुक्तिविदो मुक्तिरित्याचक्षते । सा च सावान्तरप्रभेदा चतुर्थस्यास्य चतुर्थे पादे सविस्तरं चिन्तयिष्यते । कर्मणः स्वतन्त्रं फलमन्तरिक्षलोकप्राप्तिः । **"कर्मणा पितृलोकः"** (बृ० १ । ५ । १६) इतिश्रुतेः । पितृलोकोऽन्तरिक्षलोकः स्वर्गलोक इत्यनर्थान्तरम् । तदिदं तृतीयाध्यायस्यादिमे पादे वैराग्यस्य हेतोश्चिन्तितम् । उपासनस्य स्वतन्त्रं फलं देवलोकप्राप्तिः । **"विद्यया देवलोकः"** (बृ० १ । ५ । १६) इति श्रुतेः । उपासनं विद्या । देवलोको द्युलोकः कार्य्यब्रह्मलोक इति समानार्थम् । सा नूनमिह चिन्तयितव्या । फलत्वसामान्यात् । सा च न तावच्चिन्तयितुं शक्यते यावदुत्क्रान्तिरस्य शरीरादस्मान्न चिन्त्यते । नहि शरीरादनुत्क्रामतो गतिस्ततो देवलोकप्राप्तिश्च कथञ्चिदुपपद्यते । शरीरादुत्क्रान्तिश्च तस्य वागादिपरिवारसम्पन्नस्यैव सम्बोभूयते न केवलस्य । नह्यसौ नृपतिरिवैकाकी स्वपुराच्छरीरात् कदाचिन्निष्क्रमितुमर्हति । तस्मादेषा वागादिसम्पत्त्युपक्रमा नाड्यादिना बहिर्निष्क्रमणान्ता चोत्क्रान्तिशब्देन परिभाष्यते यथा बहिर्निष्क्रमणनाडीमुखप्रवेशादारभ्य यावद्देवलोकप्राप्ति गतिः । तामिमां विस्तरेण चिन्तयितुं द्वितीयमिममुत्क्रान्तिपादमारभमाणः पूर्वं तावद् वाक्सम्पत्तिं चिन्तयन्नाह—

**"वाङ् मनसि दर्शनाच्छब्दाच्च"** ॥ १ ॥

सम्पद्यत इति पूर्वसूत्रादनुवर्तते । **वाङ्**=म्रियमाणस्य पुरुषस्य प्रथमं

वागिन्द्रियं **मनसि**=मनोनामकेऽन्तरिन्द्रिये चेतसि सम्पद्यते, कुतोऽवगम्यते? **दर्शनात्**=वाग्व्यापाराभावदर्शनात्, **शब्दाच्च**=श्रुतेश्चेत्यर्थः।

यदा खलु पुरुषस्य मरणमुपतिष्ठते तदा शरीरादुत्चिक्रमिषतस्तस्य पूर्वं वागिन्द्रियं मनसि सम्पद्यते। सम्पत्तिरत्राविभागोऽभिप्रेयते न प्रकृतिभावप्राप्तिः। मनसोऽप्रकृतित्वेन तत्र तदनुपपत्तेः। अविभागश्च लक्षणानन्यत्वरूपः संयोगविशेषो यत्र भेदे सत्यप्यभेद एवावभासते न भेदः। सरित्समुद्रयोः क्षीरनीरयोश्चाविभागस्तत्रोदाहरणमिति पुरस्तादवोचाम। सेयं म्रियमाणस्य वाचो मनसि सम्पत्तिस्तद्व्यापाराभावदर्शनादवगम्यते। दृश्यते हि मरणवेलायां वक्तुमिच्छन्नप्येष न वक्तुं शक्नोति। किं कारणम्? इदमेव कारणं तदानीं तस्य वागिन्द्रियं मनसि सम्पद्यते। दर्शयति च श्रुतिः प्राणान् तित्यजिषतो वागिन्द्रियस्य प्रथमं मनसि सम्पत्तिम् **"अस्य सोम्य! पुरुषस्य प्रयतो वाङ् मनसि सम्पद्यते, मनः प्राणे प्राणस्तेजसि, तेजः परस्यां देवतायाम्"** (छां० ६।८।६) इति ॥ १॥

**ननु** वागनन्तरं किमिन्द्रियं मनसि सम्पद्यते? तत्राह—

**"अत एव सर्वाण्यनु"** ॥ २॥

सम्पद्यन्ते वाचमिति पदद्वयं विपरिणम्य मनसीति च त्रयमनुवर्तते। **अनु**=वाचमनु **सर्वाणि**=वागतिरिक्तानि चक्षुरादीनि सर्वेन्द्रियाणि मनसि सम्पद्यन्ते, कुतोऽवगम्यते? **अत एव**=पूर्वसूत्रोक्तं हेतुद्वयमिदमा परामृश्यते, पूर्वोक्तादेव हेतुद्वयादित्यर्थः।

यदा हि मुमूर्षतस्तावत् पुरुषस्य वागिन्द्रियं मनसि सम्पद्यते तदा चक्षुरादीनामिन्द्रियाणां किञ्चिदपीन्द्रियं यथास्थानमवस्थातुं नोत्सहते। वाचमनु द्रागित्येव च सर्वाणि तानि सरित इव समुद्रे यथायथं मनसि सम्पद्यन्ते। को नु नामास्ति पुमाँल्लोके यस्य वागुपरमानन्तरं चक्षुरादिसर्वकरणोपरमो दृष्टिपथं नाधिरोहति। दर्शयति च मनसि वागिन्द्रियसम्पत्तिवदिन्द्रियान्तरसम्पत्तिमप्याथर्वणिकी श्रुतिः **"तस्मादुपशान्ततेजाः**

**पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः"** ( प्र० ३ । ९ ) इति । छान्दोग्यश्रुतौ च वागिति प्रदर्शनार्थमुपादीयते न निर्धारणार्थम् । "**वाङ् मनसि**" इति पृथगारम्भश्च सम्पत्तिक्रमप्रदर्शनार्थं इति सर्वमनवद्यम् ॥ २ ॥

**ननु** सम्पन्नसर्वेन्द्रियं मनः क्व सम्पद्यते? **तत्राह**—

"**तन्मनः प्राण उत्तरात्**" ॥ ३ ॥

सम्पद्यत इत्यनुवर्तते । **तन्मनः**=यत्र वागादीनि सर्वेन्द्रियाणि सम्पन्नानि तन्मनः **प्राणे**=मुख्ये प्राणे सम्पद्यते, कुतोऽवगम्यते? **उत्तरात्**=उत्तरवाक्यादित्यर्थः ।

श्रुत्यन्तरसाहाय्याद् "**वाङ् मनसि सम्पद्यते**" ( छां० ६ । ८ । ६ ) इति वाक्यात् पुरुषस्यास्य मरणवेलायां वागादीनि सर्वेन्द्रियाणि मनसि सम्पद्यन्त इति निर्धारितम् । इदानीं सम्पन्नसर्वेन्द्रियं मनः स्ववृत्त्यात्मके मुख्ये प्राणे सम्पद्यत इत्युत्तरवाक्यान्निर्धार्य्यते । अस्ति तावद् "वाङ् मनसि सम्पद्यते" ( छां० ६ । ८ । ६ ) इत्यस्माद् वाक्यादुत्तरं वाक्यम् "**मनः प्राणे**" ( छां० ६ । ८ । ६ ) इति । स्पष्टश्चास्यार्थः—प्रयतोऽस्य पुरुषस्य वागादीनि सर्वेन्द्रियाणि यस्मिन् मनसि सम्पद्यन्ते तन्मनो मुख्ये प्राणे सम्पद्यत इति । साधारणी वृत्तिर्ह्यन्तःकरणस्य मुख्यः प्राण इति सिद्धान्तः । तदानीं सेन्द्रियग्रामं मनः स्वकीयं सङ्कल्पविकल्पादिकमसाधारणं रूपं हित्वा साधारणवृत्त्यात्मना मुख्येन प्राणेनावतिष्ठत इति निष्कर्षः ॥ ३ ॥

**ननु** प्राणस्तदानीं क्व सम्पद्यते? तत्राह—

"**सोऽध्यक्षे तदुपगमादिभ्यः**" ॥ ४ ॥

सम्पद्यत इत्यनुवर्तते । **सः**=प्राणोऽ**ध्यक्षे**=सर्वकरणनायके विज्ञानात्मनि जीवे सम्पद्यते, कुतोऽवगम्यते? **तदुपगमादिभ्यः**=तदर्थोऽध्यक्षः, समीपागमनमुपगमः, आदिनाऽनुगमनावस्थाने गृह्येते, पश्चाद्गमनमनुगमनम्, अवस्थितिरवस्थानम्, तदुपगमादिभ्यो हेतुभ्य इत्यर्थः ।

यदा खलु वागादीनि सर्वेन्द्रियाणि मनसि सम्पद्यन्ते मनश्च मुख्ये प्राणे, तदा बाह्याभ्यन्तरसर्वकरणसमापन्नोऽयं मुख्यः प्राणः सर्वकरणाध्यक्षे जीवात्मनि सम्पद्यते। नहि तदानीं तस्य प्राणनापाननादिरूपा काचन वृत्तिरुदयमासादयति। स नूनं तदा प्राणनापाननादिवृत्तिरहितस्तत्र कारणात्मनाऽवतिष्ठते। सेयं जीवात्मनि तत्सम्पत्तिरुपगमादिभ्यो हेतुभ्योऽवगम्यते। श्रावयति खलु मरणवेलायां जीवात्मोपगमादिकं प्राणस्य श्रुतिः "**एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति, यत्रैतदूर्ध्वोच्छ्वासी भवति**" (बृ० ४। ३। ३८) इत्युपगमम्। **अभिसमायन्ति**=यात्रायामुद्यन्तं राजानं परिवारभूताः प्राणिन इवाभितः समीपमागच्छन्ति, के? **सर्वे प्राणाः**=प्राणमुख्याः सर्वे वागादयः प्राणाः, कदा? **अन्तकाले**=मरणवेलायाम्, कोऽसावन्तकालः? यत्रैतदूर्ध्वोच्छ्वासी **भवति**=जायत इति तदर्थः। **तमुत्क्रामन्तं प्राणोऽनूत्क्रामति**" (बृ० ४। ४। २) इत्यनुगमनम्। **तं**=जीवात्मानं, **प्राणः**=मुख्यः प्राणः, **अनूत्क्रामति**=अनुगच्छति। "**सविज्ञानो भवति**" (बृ० ४। ४। २) इति चावस्थानम्। विज्ञानमत्र सर्वकरणसमापन्ना बुद्धिः, विज्ञायतेऽनेनेति तद्व्युत्पत्तेः। तत्सारत्वात् प्राणस्य तदवस्थानेनावस्थानं तत्र तदानीं गम्यते। **ननु** "सोऽध्यक्षे" इति छान्दोग्यश्रुत्या विरुध्यते, तत्र "**प्राणस्तेजसि**" (छां० ६।८।६) इत्युपदिष्टत्वात्। **नैष दोषः**। अध्यक्षे सम्पद्य तेजःसम्पत्तौ तात्पर्य्यात्। यथा हि जह्नुतनयया सङ्गत्य सागरं गच्छन्त्यपि सप्ताश्वतनया सागरं गच्छतीति व्यपदिश्यते तथाऽध्यक्षे जीवात्मनि सम्पद्य तेजसि सम्पद्यमानः प्राणोऽपि तेजसि सम्पद्यत इत्युपदिश्यते। व्यवहितायां सत्यामपि सम्पत्तौ साक्षात्सम्पत्तिवदुपदेशो युज्यते नास्ति कश्चिद् विरोधः॥ ४॥

**ननु** प्राणसम्पन्नोऽध्यक्षस्तदानीं क्व सम्पद्यते? तत्राह—

"**भूतेषु तच्छ्रुतेः**"॥ ५॥

सम्पद्यतेऽध्यक्ष इति च प्रथमया विपरिणम्यानुवर्तते । **भूतेषु**=स्थूलशरीरबीजभूतेषु पञ्चसु तेजःसहचरितेषु भूतसूक्ष्मेषु प्राणसम्पन्नोऽध्यक्षः सम्पद्यते, कुतोऽवगम्यते ? **तच्छ्रुतेः**=तत्प्रतिपादकश्रुतेरित्यर्थः ।

वागादिकरणग्रामसम्पन्नं मनः, तत्सम्पन्नः प्राणः, तत्सम्पन्नोऽध्यक्षः प्रत्यगात्मा मरणवेलायां स्थूलदेहबीजभूतेषु पञ्चसु तेजःसहचरितेषु गन्धतन्मात्रादिनामकेषु पृथिव्यादिषु भूतसूक्ष्मेषु सम्पद्यते । प्रतिपादयति हि तत्र तत्सम्पत्तिं श्रुतिः **"प्राणस्तेजसि"** ( छां० ६ । ८ । ६ ) इति । **प्राणः**=प्राणसम्पन्नोऽध्यक्षः, **तेजसि**=प्राधान्याभिप्रायमेतत् , तेजःसहचरितेषु पञ्चसु भूतसूक्ष्मेषु ॥ ५ ॥

ननु **"प्राणस्तेजसि"** (छां० ६ । ८ । ६ ) इति श्रुतेस्तेजस्येवैकस्मिन् प्राणसम्पन्नस्याध्यक्षस्य सम्पत्तिः कुतो न मन्यते ? तत्राह—

**"नैकस्मिन् दर्शयतो हि"** ॥ ६ ॥

सम्पद्यतेऽध्यक्ष इति च पूर्ववद् विपरिणम्यानुवर्तते । **एकस्मिन्**=तेजस्येवैकस्मिन् **न**=न प्राणसम्पन्नोऽध्यक्षः सम्पद्यते, कुतः ? **हि**=यतो **दर्शयतः**=श्रुतिस्मृती पञ्चसु भूतसूक्ष्मेषु तत्सम्पत्तिं प्रतिपादयत इत्यर्थः ।

श्रुतिस्मृती खलु मरणवेलायां वागादिप्राणान्तेन परिवारेण सम्पन्नस्य तदध्यक्षस्य जीवात्मनः स्थूलदेहबीजभूतेषु पञ्चसु पृथिव्यादिषु भूतसूक्ष्मेषु सम्पत्तिं दर्शयतः **"पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयः"** ( बृ० ४ । ४ । ५ ) इत्याद्या श्रुतिः **"अण्व्यो मात्रा विनाशिन्यो दशार्धानां तु याः स्मृताः । ताभिः सार्धमिदं सर्वं सम्भवत्यनुपूर्वशः"** ( मनु० १ । २७ ) इत्याद्या च स्मृतिः । **अण्व्यः**=सूक्ष्माः, **मात्राः**=भूतसूक्ष्माख्याः पञ्च तन्मात्राः, **दशार्द्धानां**=पञ्चमहाभूतानां, **स्मृताः**=सांख्यशास्त्रे प्रतिपादिताः । न च तद्दर्शयित्र्योः श्रुतिस्मृत्योः सत्योरेकस्मिन् तेजस्येव तत्सम्पत्तिर्मन्तुं शक्यते । कारणं हि सर्वदा सर्वत्र कार्य्यक्षम-

मनुमेयं भवति । न च कार्य्यमिदं स्थूलं शरीरमेकेन तेजसा कदाचिन्निर्मातुं क्षम्यते येन वयं तत्रैव तत्सम्पत्तिं मन्येमहि । **"प्राणस्तेजसि"** (छां० ६ । ८ । ६) इति श्रुतौ तेजःपदं च तेजःप्राधान्यात्तेजःसहचरितेषु पञ्चसु स्थूलदेहबीजेषु भूतसूक्ष्मेषु प्रयुज्यत उपचारादित्युक्तम् । अतः प्राणसम्पन्नो जीवात्मा मरणवेलायां स्थूलशरीरबीजेषु भूतसूक्ष्मेषु पञ्चसु सम्पद्यत इति युक्तं मतम् ।

**यत्तु** याज्ञवल्क्यार्त्तभागयोः संवादे मरणवेलायामुपसंहृतेषु वागादिषु करणेषु **"क्वायं तदा पुरुषो भवति"** (बृ० ३ । २ । १३) इत्युपक्रम्य कर्माश्रयत्वं जीवात्मनः पुरुषस्य प्रदर्श्यते **"तौ ह यदूचतुः कर्म हैव तदूचतुः । अथ ह यत् प्रशशंसतुः कर्म हैव तत् प्रशशंसतुः"** (बृ० ३ । २ । १३) इति । **तौ**=याज्ञवल्क्यार्त्तभागौ । **तद्** लोकान्तरगतिप्रयोजकत्वात् प्रदर्शितं वेदितव्यम् । भूतेषु सम्पन्नो हि जीवात्मा स्वकर्मप्रयुक्तो देहान्तरं गच्छति **"पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन"** (बृ० ३ । २ । १३) इति वाक्यशेषात् **"तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य"** (बृ० ४ । ४ । ६) इति च श्रुत्यन्तरात् । यत्प्रयुक्ता च यस्य गतिस्तदाश्रयत्वप्रदर्शनं तस्य घटते न जातु विरुध्यते । प्रशंसाशब्दोऽपि च गतिप्रयोजकतया कर्मणः प्रकृष्टाश्रयत्वं प्रतिपादयति नत्वाश्रयान्तरं निवारयति । तदभावे प्रकृष्टत्वानुपपत्तेरित्यविरोधः । तदिदं वागादिभूतसूक्ष्मान्तं लिङ्गशरीरं तत्सम्पन्नस्तद्वेष्टितस्तदध्यक्षो जीवात्मा पूर्वस्माद्देहाद्देहान्तरं गन्तुमुत्क्रामति स्वकर्मप्रयुक्त इति निष्कर्षः ॥ ६ ॥

**ननु** किमेवंलक्षणोत्क्रान्तिरुपासकानामेव भवति किंवा कर्मिणामपि ? तत्राह—

**"समाना चाऽऽसृत्युपक्रमादमृतत्वं चानुपोष्य"** ॥ ७ ॥

आद्यश्चोऽवधारणे, द्वितीयो हेतौ । **आ सृत्युपक्रमात्**=मर्य्यादा-

**थामाङ्**, सृतिर्गतिः, आरम्भ उपक्रमः, आ लोकान्तरगत्यारम्भाद् बहिर्निष्क्रमणनाडीमुख्यप्रवेशतः प्रागिति यावत् **समाना च**=कर्मिणामुपासकानां च मरणकालीना सम्पत्तिः समानैव भवति, कुतः? **च**=यतोऽ**नुपोष्य**=निवासकर्मणो वसतेरूपं नोषतेर्दाहकर्मणः, शरीरं मुक्त्वा परित्यज्या**मृतत्वम्**=अर्चिरादिमार्गेण ब्रह्मलोकप्राप्तिरूपममृतत्वमुपासकाः प्राप्नुवन्ति कर्मिणश्च धूमादिमार्गेण पितृलोकमित्यर्थः ।

"**वाङ् मनसि सम्पद्यते**" (छां० ६ । ८ । ६) इत्येवमाद्या येयमुत्क्रान्तिस्तावच्चिन्तिता सा यावद् गतिर्नारभ्यते तावदुपासकानां कर्मिणां च समानैव बोभूयते न जातु विशिष्यते । गत्यर्थत्वादुत्क्रान्तेः । गत्यर्था ह्युत्क्रान्तिरिष्यते । अनुत्क्रामतो गत्यनुपपत्तेः । नहि शरीरान्नोत्क्रामति गन्तव्यदेशं गच्छति चेत्युपपद्यते । गतिश्च गन्तव्यभेदादुपासकानां कर्मिणां च बेभिद्यते । कर्मिणो हि वागादिसम्पत्तिक्रमेण शरीरान्निष्क्रम्य धूमादिमार्गेण स्वर्गलोकापरपर्य्यायं पितृलोकं गच्छन्ति, ब्रह्मोपासकाश्चार्चिरादिमार्गेण देवलोकापरपर्य्यायं कार्य्यब्रह्मलोकम् । तदेषा द्वयी गतिर्मन्त्रवर्णेऽपि विस्पष्टमाम्नायते "**द्वे सृती अशृणवं पितृणामहं देवानामुत मर्त्यानाम् । ताभ्यामिदं विश्वमेजत् समेति यदन्तरा पितरं मातरं च**" (ऋ० ८ । ४ । १२ । १५) इति । **द्वे सृती**=गती **मर्त्यानां**=मनुष्याणामशृण्वम् । एका पितृणां द्वितीया--**उत**=च देवानाम् । **पितरः**=कर्मिणः, **देवाः**=उपासकाः । **पितरं**=द्युलोकं, **मातरं**=पृथिवीलोकमिति मन्त्रवर्णपदार्थः । यथा खलु स्वाभीष्टप्रदेशं जिगमिषूणां मनुष्याणां गन्तव्यप्रदेशभेदेन गतिभेदेऽपि गत्यारम्भपर्य्यन्तस्तदनुकूलो नगरनिष्क्रमणमार्गो न भिद्यते तथा ब्रह्मलोकपितृलोकादिगन्तव्यप्रदेशभेदेन गतिभेदेऽप्युपासकानां कर्मिणां च गत्यारम्भपर्य्यन्तस्तदनुकूलः शरीरादुत्क्रान्तिलक्षणो वागादिभूतान्तः सम्पत्तिक्रमो न भिद्यते । नागरिका हि नगरान्तश्चत्वरेऽभिसमायन्ति, वागादयश्च हृदय इति समानमेतत् । गतिश्चोपासकानां कर्मिणां च सर्वेषां बहिर्निष्क्रमणनाडीमुखादारभ्यते । बहिर्निष्क्रमणना-

श्चाश्च बह्व्यो हृदयप्रदेशेन सँल्लग्ना विद्यन्ते। तत्रैव मरणसमये वागादि-परिवारेण सम्पन्नाः सर्वेऽमी जीवात्मानस्तया तया नाड्या स्वस्वगन्तव्य-प्रदेशमभिप्रतिष्ठन्ते। यत्रेदमाम्नातं भवति **"शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति"** (कठ० ६। १६) इति। एका=सुषुम्ना। **"तयोर्ध्वमायन्नमृतत्वमेति"** इत्युपासकाभिप्रायम्। **"विष्वङ्ङन्या उत्क्रमणे भवन्ति"** इति कर्मिमात्राभिप्रायम्। वक्ष्यति चोपासकानां ब्रह्मलोकगमनं सुषुम्नया स्वय-मनुपदमाचार्य्यः। ब्रह्मलोकं गताश्चोपासकाः प्रायेण ब्रह्मसाक्षात्कारं प्राप्यामृतत्वं भजन्ते। यत्रेदमुक्तं दर्शनान्तरे **"तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिः"** (सां० १। ९३) इति। तदेव हृदि निधाय ब्रह्मलोकमिति वक्तव्येऽमृतत्वमित्युक्तं वेदितव्यम्॥ ७॥

**ननु** ब्रह्मलोकप्राप्त्यै प्रस्थितानामुपासकानां स्थूलशरीरपरित्यागवल्लिङ्ग-शरीरपरित्यागः कुतो न मन्यते? तत्राह—

**"तदाऽपीतेः संसारव्यपदेशात्"**॥ ८॥

**तत्**=जीवात्माश्रयभूतं वागादिभूतसूक्ष्मान्तं लिङ्गशरीर**माऽपीतेः**= मर्य्यादायामाङ्, **"ब्रह्मैव सन् ब्रह्माप्येति"** (बृ० ४। ४। ६) इति श्रुत्युक्ता ब्रह्माप्ययलक्षणा मुक्तिरपीतिः, तत्पर्य्यन्तमवतिष्ठते, कुतः? **संसारव्यपदेशात्**=यावच्छरीरं संसारव्यपदेशादित्यर्थः।

जीवात्माश्रयभूतं लोकलोकान्तरगतिनिमित्तं वागादिभूतसूक्ष्मान्तं लिङ्गशरीरं विषयः। तत्रैष संशयः—किमिदं स्थूलशरीरवद् यावत्संसार-मवतिष्ठते किंवा तत ऊर्ध्वं मोक्षेऽप्यवतिष्ठत इति। मोक्षेऽप्यवतिष्ठत इति पूर्वः पक्षः, यावत्संसारमवतिष्ठत इति सिद्धान्तः। किं तावत् प्राप्तम्? संसारवन्मोक्षेऽप्यवतिष्ठत इति ब्रूमः। भोगसाधनत्वात्। भोग-साधनं खलु जीवात्मनो लिङ्गशरीरमभ्युपगम्यते। तद् यदि मोक्षे न विद्येत नास्य तदानीं भोगो निष्पद्येत। नहि साधनाभावे भोगो

निष्पत्तुमर्हति । सुखदुःखानुभवो हि भोगः समाश्रीयते । सुखदुःखानुभवश्चैन्द्रियकः प्रसिद्धः । इन्द्रियजातं च लिङ्गशरीरान्तर्गतमिति तदभावे कथमस्य भोगो निष्पद्येत । भोगश्च जीवात्मनः संसारवन्मोक्षेऽपि श्रूयते **"सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता"** (तै० २ । १) इति । **"स तत्र पर्य्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा"** (छां० ८ । १२ । ३ ) इति च । गतिनिमित्तत्वाच्च । निष्क्रियः खलु जीवात्मा स्वरूपतो विकारित्वभयादास्थीयते । क्रियानिमित्तं च लिङ्गशरीरम् । यत्रेदमुक्तं भवति **"निष्क्रियस्य तदसम्भवात्"** (सां० १ । ४९) **"गतिश्रुतिरप्युपाधियोगादाकाशवत्"** (सां० १ । ५१) इति । तद् यदि मोक्षे न विद्येत तदा नास्य तत्र श्रूयमाणा क्रिया काचनोपपद्येत । क्रिया च संसारवन्मोक्षेऽपि जीवात्मनः श्रूयते **"यत्र देवा अमृतमानशानास्तृतीये धामन्नध्यैरयन्त"** (यजु० ३२ । १० ) **"अथ य इह आत्मानमनुविद्य व्रजन्त्येताँश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति"** (छां० ८ । १ । ६ ) इति । तस्मात् प्रतिपद्यते संसारवन्मोक्षेऽपि लिङ्गशरीरमवतिष्ठत इति । एवं प्राप्तेऽभिधीयते—**तदाऽपीतेः संसारव्यपदेशात्** । सुखदुःखानुभवो हि संसार इति परिभाष्यते, यं किल भोगविदो भोग इति व्याचक्षते । तं च श्रुतिर्यावच्छरीरं जीवात्मनो व्यपदिशति नोर्ध्वम् **"आत्तो वै सशरीरः प्रियाप्रियाभ्याम् । न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति"** (छां० ८ । १२ । १ ) इति । संसारवन्मोक्षेऽपि लिङ्गशरीरं चेदवतिष्ठेत तदा नूनमस्य संसार एव मोक्षनाम्ना परिभाष्येत नार्थान्तरं किञ्चित् । नहि तत्र संसारवदवतिष्ठमाने लिङ्गशरीरे सुखदुःखसंस्पर्शः कथञ्चिद् वारयितुं शक्यते । तस्य तन्निबन्धनत्वेनावश्यम्भावित्वात् । साधनानि च तन्निवृत्त्यर्थं यथाशास्त्रमनुष्ठीयन्ते न तत्प्राप्त्यर्थम् । स्वतः प्राप्तत्वात् । यथाशास्त्रमनुष्ठीयमाने च साधनकलापे चेन्मोक्षेऽपि स न

निवर्तेत दिवानिशं च सन्तत्या यथापूर्वमनुवर्तेत तदा कृतमनया भूर्य्यायासकारिण्या मोक्षेच्छया । **“सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता”** (तै० २ । १) इति श्रुतिश्च न मुक्तात्मनां मोक्षे संसारवद् विषयोपभोगं श्रावयति यदर्थं लिङ्ग-शरीरावस्थानं तत्र कल्प्येत । किं तर्हि ? मनुष्यानन्दादारभ्य ब्रह्मलोका-नन्दपर्य्यन्तास्तारतम्येन वर्तमाना यावन्तस्त्रैलोक्यानन्दा वरीवृत्यन्ते सर्वे ते तत्रभवता मुक्तात्मना ब्रह्मानन्दोपभोगेनोपभुज्यन्ते । तदपेक्षया न्यूनत्वात् । अधिकोपभोगे च न्यूनोपभोगा अन्तर्धीयन्ते हस्तिपदे पदान्तरवदिति सर्वजनीनम् । कामशब्दश्चात्र पूर्वप्रक्रान्तान् मनुष्या-नन्दादीनेवाचष्टे न शब्दादीन् विषयान् । **“स तत्र पर्य्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा”** (छां० ८ । १२ । ३) इति श्रुतिश्च ब्रह्मज्ञानमाहात्म्यप्रख्यापनव्याजेन जीवन्मुक्तानामैश्वर्य्यविस्तारमात्रं दर्शयति न मुक्तात्मनां मोक्षे स्त्रीभी रमणं यानैर्गमनं ज्ञातिभिर्हसनं वा प्रतिपादयति । ब्रह्मानन्दावाप्तिलक्षणे मोक्षे स्त्रीयानप्रभृतीनां सम्भावयितुमप्यशक्यत्वात् । सम्भाव्यते चेदायु-ष्मता तदा बाह्यसम्मतः स्वर्ग एव ते मोक्षनाम्ना डिण्डिमायितः स्यान्न वैदिको मोक्ष इति दूरतः परित्याज्योऽसौ श्रेयोऽर्थिभिर्वैदिकैः । जीव-न्मुक्तैश्वर्य्यविस्तारमात्रप्रदर्शनपरा चैषा श्रुतिरिति चतुर्थे पादे स्वयमा-चार्य्येण प्रतिपादयिष्यते । न च गत्यर्थमपि मोक्षे लिङ्गशरीरावस्थानं युज्यते । तत्र गत्यनपेक्षणात् । अभीष्टवस्तुप्राप्त्यर्थं हि सर्वत्र गतिर-पेक्ष्यते । न च निरतिशयानन्दैकमूर्त्तौ जगज्जन्मादिकारणे भगवति परब्रह्मणि परमेश्वरे सम्प्राप्ते पुनरन्यत् किञ्चिदभीष्टं वस्तु प्राप्तव्यमव-शिष्यते यदर्थं मुक्तानामपि गतिरपेक्ष्येत । नहि मन्दमतिरपि कश्चि-दधिकं सम्प्राप्य कदाचिदल्पं सम्प्रेप्सति परमानन्दार्णवे निमग्नास्तत्रभ-वन्तो मुक्तात्मान इति तु किमु वक्तव्यम् । मुग्धाः खलु दिगम्बराः श्वेताम्बराश्च सच्चिदानन्दं जगज्जन्मादिकारणं भगवन्तं परब्रह्म परमा-त्मानममन्यमानाः सम्यग्दर्शनादिना मोक्षमवाप्य तत्र परमानन्दावेप्सया

दिवानिशमलोकाकाशे बम्भ्रम्यमाणास्तु कथञ्चिच्छोशुम्यन्ते न पुनर्वैदिका इति कृतं तत्र मुक्तात्मनां गत्याश्रयणेन। **"यत्र देवा अमृतमानशा- नास्तृतीये धामन्नध्यैरयन्त"** (यजु० ३२ । १० ) इति मन्त्रवर्णे च देवा इत्युपासका उच्यन्ते न ज्ञानिनः । तेषां मोक्षे गतिनिवृत्तेराम्नानात् **"य इत्तद्विदुस्त इमे समासते"** ( ऋ० २ । ३ । २१ । ३९ ) इति । **"अध्यैरयन्त"** इत्यस्य वा सर्वोपरि विराजन्त इत्यर्थः । कामचारश्रुतिरपि ब्रह्मलोकं गतानुपासकान् गोचरयति न मुक्तात्मन इत्यकिञ्चित्करमिह तदुदाहरणम् । न च मुक्तात्मनां शरीरं क्वचिदा- कर्ण्यते । शरीराभावश्च **"शतं मा पुर आयसीररक्षन्नध श्येनो जवसा निरदीयम्"** ( ऋ० ३ । ६ । १६ । १ ) **"तथा वि- द्वान् नामरूपाद् विमुक्तः परात्परं पुरुषमुपैति दिव्यम्"** ( मुं० ३ । २ । ८ ) **"अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः"** ( श्वे० २ । १५ ) इत्यादिश्रुतिलिङ्गेभ्यः, **"एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुप- सम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः"** ( छां० ८ । १२ । ३ ) **"तद् यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत, एवमेवेदं शरीरं शेते । अथायम- शरीरोऽमृतः प्राणो ब्रह्मैव तेज एव"** ( बृ० ४ । ४ । ७ ) इत्यादिश्रुतिवाक्येभ्यश्चाधिगम्यते । न च तदधिगतोऽर्थः शक्यते कर्हिचिदन्यथयितुम् । न वा प्रयोजनाभावे युक्तः कस्यचिदर्थस्याभ्यु- पायः । **तथाच** वागादिभूतसूक्ष्मान्तं जीवात्माश्रयभूतं लिङ्गशरीरं यावत्संसारमेवावतिष्ठते न संसारवद् ब्रह्मप्राप्तिलक्षणे मोक्षेऽप्यवस्थानं लभत इति साधीयान् सिद्धान्तः । ब्रह्मलोकश्च सावग्रहैश्वर्य्यत्वात् संसार एवाभ्युपगम्यते न मोक्षः । अत एव स्मर्य्यते ततोऽपि संसारवत् पुनरा- वृत्तिः **"आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन!"** ( गी० ८ । १६ ) इति । **तस्माद्** ब्रह्मलोकप्राप्त्यै प्रस्थितानामुपासकानां स्थूलशरीरपरित्याग एव मन्यते न लिङ्गशरीरपरित्यागः ॥ ८ ॥

**ननु** लिङ्गशरीरमा पीतेश्चेदवतिष्ठते तदा देहादस्मान्निष्क्रामद् देहाद्देहान्तरं वा सञ्चरत् कस्मादस्माभिर्न दृश्यते, किमिति मूर्त्तान्तरैर्वा न प्रतिहन्यते? तत्राह

**"सूक्ष्मं प्रमाणतश्च तथोपलब्धेः"** ॥ ९ ॥

तदित्यनुवर्तते। यस्य पूर्वमा पीतेरवस्थानमुक्तं तस्यैवेह सूक्ष्मत्वमुच्यत इति भिन्नक्रमेण चकारेणाभिधीयते। **सूक्ष्मं**=तल्लिङ्गशरीरं सूक्ष्मं प्रतिपत्तव्यम्, कस्मात्? **प्रमाणतः**=अनुमानतस्**तथोपलब्धेः**= सूक्ष्मत्वेनोपलम्भादित्यर्थः।

लिङ्गशरीरं तावत् सूक्ष्मं वर्तते। तस्य सूक्ष्मत्वं चेन्द्रियाग्राह्यत्वम्। तच्चानुद्भूतरूपस्पर्शत्वाद् यथा चाक्षुषस्य तेजसः। सूक्ष्मत्वादेव च देहान्निष्क्रामद् देहान्तरं वा सञ्चरदेतदस्माभिर्न दृश्यते। स्वच्छत्वाच्च न मूर्त्तान्तरैः प्रतिहन्यते। यथा हि स्वच्छस्वभावं खलु तेजः काचाभ्रपटलाभ्यां न जातु प्रतिबध्यते तथा स्वच्छस्वभावं सूक्ष्मं लिङ्गशरीरमपि देहान्तरं सञ्चरन्न केनचिन्मूर्त्तेन द्रव्येण प्रतिहन्यते। तस्य सूक्ष्मत्वं चानुमानप्रमाणादुपलभ्यते। श्रुतयो हि जीवात्माश्रयस्यास्य लिङ्गशरीरस्योत्क्रमणं नाडीचक्षुःश्रोत्रादिभ्यः सूक्ष्मेभ्यः शरीरावयवेभ्यः प्रतिपादयन्ति **"विष्वङ्ङन्या उत्क्रमणे भवन्ति"** (कठ० ६। १६) इत्याद्याः। तत् तस्य सूक्ष्मत्वे घटते नासूक्ष्मत्वे। नह्यसूक्ष्मं सत् सूक्ष्मेभ्यः शरीरावयवेभ्यः कथञ्चिन्निष्क्रमितुमर्हति। **तस्मा**दस्ति नूनमिदं सूक्ष्ममिति सुखेनोपलब्धुं शक्यते ॥ ९ ॥

**सौक्ष्म्याश्रयं** गुणं प्रदर्शयति—

**"नोपमर्देनातः"** ॥ १० ॥

तदित्यनुवर्तते। **अतः**=यतस्तत् सूक्ष्ममत **उपमर्देन**=स्थूलशरीरोपमर्देन **न**=नोपमृद्यत इत्यर्थः।

**दाहादिनिमित्तो नाश उपमर्दः** ॥ १० ॥

**लिङ्ग**शरीरसद्भावे लोकसिद्धं प्रमाणमुपन्यस्यति—

**"अस्यैव चोपपत्तेरेष ऊष्मा"** ॥ ११ ॥

यस्य पूर्वं सौक्ष्म्यं निरधारि, यस्य वा स्थूलशरीरोपमर्देनानुपमर्दोऽभ्यधायि, तस्यैव सद्भावे लोकसिद्धं प्रमाणमिदमुपन्यस्यत इति चार्थः । **अस्यैव**=स्थूलशरीरमेवकारेण व्यावर्त्यते, अस्य लिङ्गशरीरस्यैवै**ष**=सर्वेषां नः स्थूलशरीरसंस्पर्शनेनोपलभ्यमानमेत**दूष्मा**=औष्ण्यं वेदितव्यम्, कुतः? **उपपत्तेः**=युक्तेरित्यर्थः ।

य एष स्थूलशरीरे सर्वेषां नः संस्पर्शनेनोष्मा तावदुपलभ्यते न स स्थूलशरीरस्य धर्मो भवितुमर्हति । विद्यमानेऽपि तस्मिन् मृतावस्थायामनुपलम्भात् । नहि यो यस्य धर्मो भवति तस्य विद्यमानेऽपि तस्मिन्ननुपलम्भो युज्यते । अन्यथा रूपादयोऽपि तदानीं तत्र नोपलभ्येरन् । जीवात्मा च चेतनो न प्राकृतधर्माश्रयः शङ्कितुमपि शक्यते । न च धर्मः स्यान्निराश्रयश्चेति घटते । तस्मादस्त्युभाभ्यामतिरिक्तमान्तरं किञ्चित् प्राकृतं वस्तु यद्धर्म एष ऊष्मा पर्य्यवस्यति । तच्च **"तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य"** ( बृ० ४ । ४ । ६ ) **"सप्तदशैकं लिङ्गम्"** ( सां० ३ । ९ ) इत्यादिश्रुतिस्मृतिसिद्धं लिङ्गशरीरमिति निश्चयः ॥ ११ ॥

**ननु**वस्तु लिङ्गशरीरं तथापि तस्याऽपीतेरवस्थानं न युज्यते, तदुत्क्रान्तेः प्रतिषिद्धत्वादित्याशङ्क्य समाधत्ते—

**"प्रतिषेधादिति चेन्न शारीरात्"** ॥ १२ ॥

**प्रतिषेधात्**=उत्क्रान्तिप्रतिषेधादाऽपीतेरित्युक्तमयुक्तमिति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः? **शारीरात्**=शारीरः प्रत्यगात्मा, तस्मादुत्क्रान्तिप्रतिषेधो न शरीरादित्यर्थः ।

**अथोच्येत**—श्रुत्या खलु म्रियमाणस्य पुरुषस्य लिङ्गशरीरसंज्ञानां प्राणानां शरीरादुत्क्रान्तिः प्रतिषिध्यते **"यत्रायं पुरुषो म्रियत**

**उदस्मात् प्राणाः क्रामन्त्याहो नेति? नेति होवाच याज्ञवल्क्यः। अत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते"** (बृ० ३।२।११) इति। चेदिदमा ऽपीतेरवतिष्ठेत न जातु श्रुत्या तदुत्क्रान्तिः प्रतिषिध्येत। नहि तदपीतिपर्य्यन्तं प्रतितिष्ठति पुरुषमुत्क्रामन्तमनु च नोत्क्रामतीति कथञ्चिद् युज्यते। नूनमिदं स्थूलशरीरप्रकृतिमनुहरति यथा तस्या ऽपीतेरवस्थानं न भवति पुरुषमुत्क्रामन्तमनु चोत्क्रमणं, तथाऽस्यापि लिङ्गशरीरस्येति समानमुभयं प्रत्यवैमो नास्ति नाम वैशिष्ट्यं किञ्चित्। न च ब्रह्मज्ञानिनामिह प्राणोत्क्रान्तिः प्रतिषिध्यते नोपासकानां न वा कर्मिणामिति युक्तं भाष्यते। तत्प्रकरणाभावात्। यथा ह्युत्तरत्र **"स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति"** (बृ० ४।४।१) इत्युपक्रम्य **"तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः। तमुत्क्रामन्तं प्राणोऽनूत्क्रामति"** (बृ० ४ । ४ । २) इत्यज्ञानिनः शरीरादुत्क्रान्तिप्रकारमभिधाय **"अन्यन्नवतरं कल्याणतरं रूपं कुरुते"** (बृ० ४। ४।४) इति शरीरान्तरपरिग्रहं चोक्त्वा **"प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम्। तस्माल्लोकात् पुनरैत्यस्मै लोकाय कर्मणे"** (बृ० ४।४।६) इति तत्प्रकरणं परिसमाप्य **"अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति"** (बृ० ४।४।६) इति ब्रह्मज्ञानिप्रकरणमारभ्य तत्प्राणोत्क्रान्तिः प्रतिषिध्यते। न चैवमत्राज्ञानिप्रकरणपरिसमाप्तिर्ज्ञानिप्रकरणारम्भो वा दृश्यते येनैष ब्रह्मज्ञानिप्राणोत्क्रान्तिप्रतिषेधो गम्येत। न चेह ब्रह्मज्ञानिप्रकरणप्रदर्शकं किञ्चिदन्यदपि लिङ्गमुपलभामहे येन तत्प्रकरणं परिकल्प्य तत्प्राणोत्क्रान्तिप्रतिषेधं प्रतिपद्येमहि। नह्येते प्रश्नोत्तरे ब्रह्मज्ञानिविषये विधेते। तत्र हि ग्रहातिग्रहरूपेणेन्द्रियेन्द्रियार्थस्वभावो—ऽपामग्र्यन्नत्वं—म्रियमाणस्य जीवात्मनः प्राणोत्क्रान्तिप्रतिषेधो—नामानुवृत्ति—स्तस्य पुण्यपापानुगुणगतिप्राप्ति-

श्चेत्येतेऽर्थाः प्रश्नपूर्वकं प्रत्यक्षं प्रतिपादिताः लोक्यन्ते । न च लोक्यमानेषु तेषु ब्रह्मज्ञानिप्रकरणावसरः कथञ्चिदाख्यातुं शक्यते । न च **"अप पुनर्मृत्युं जयति"** (बृ० ३ । २ । १०) इति मृत्युजयलिङ्गेन तत्प्रकरणं कल्प्यत इति चारु भाषणम् । **"अग्निर्वै मृत्युः"** (बृ० ३ । २ । १०) इत्युपक्रमबलेनाग्निजय एवात्र मृत्युजय इति वक्तुं शक्यत्वात् । अग्निजयश्च न ब्रह्मज्ञानिनां लिङ्गं सम्भवति । साधारणत्वात् । अतो ब्रह्मज्ञानिव्यतिरिक्ताः केऽपि स्युरुपासका वा कर्मिणो वा सर्वेषां तेषामिह प्राणोत्क्रान्तिः प्रतिषिध्यत इति युक्तमुत्प्रेक्षामहे । न च तत्प्रतिषेधे लिङ्गशरीरस्या ऽपीतेरवस्थानं कथञ्चिदुपपादयितुमीश्यते । **तस्मादा ऽपीतेस्तदवतिष्ठत** इत्युक्तमयुक्तमिति । **नैतद् वक्तव्यम्** । शारीरात् । सत्यं ब्रह्मज्ञानिव्यतिरिक्तानामेषा प्राणोत्क्रान्तिः प्रतिषिध्यते तथापि न शरीरात् प्रतिषिध्यते किन्तु शारीरात् प्रत्यगात्मनः । कथमवगम्यते? "अस्मात्" इति सर्वनाम्ना तत्परामर्शस्यैवौचित्यात् । नहीदमा तेन शरीरपरामर्शो युज्यते । अप्रकृतत्वात् । शारीरात् प्रत्यगात्मनः प्राणोत्क्रान्तिप्रतिषेधे चोपपद्यते लिङ्गशरीरस्याऽपीतेरवस्थानम् । तत्प्रतिषेधकश्रुतेश्चैषोऽभिप्रायो यथा म्रियमाणं शारीरं जीवात्मानं खलु स्थूलमिदं शरीरं परिमुञ्चति नैवमेनं प्राणाः (सूक्ष्मं शरीरं) परिमुञ्चन्ति किन्तु तं परिष्वज्यैवोत्क्रामन्ति गच्छन्ति, तत्सहित एवायं शारीरो जीवात्मा शरीरादस्मादुत्क्रामति न केवल इति ॥ १२ ॥

एतदेव शाखान्तरसंवादेनोपोद्बलयति—

**"स्पष्टो ह्येकेषाम्"** ॥ १३ ॥

शारीरस्येति षष्ठ्या विपरिणम्यानुवर्तते । हिरवधारणे । **एकेषां**= कौषीतकिनां **स्पष्टो हि**=स्पष्ट एव प्राणैः सहोत्क्रमः शारीरस्य जीवात्मनः समाम्नायत इत्यर्थः ।

स्पष्टं खलु प्राणैः सहोत्क्रमणं शारीरस्य जीवात्मनः कौषीतकिनः समामनन्ति **"स यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वै-**

**रुत्क्रामति"** ( कौ० ३ । ४ ) न च शरीरादुत्क्रान्तिप्रतिषेधेऽभ्यु-पगम्यमाने तत् कथञ्चिदुपपद्यते । शारीरात् प्रत्यगात्मनस्तदभ्युपगमे च नास्ति काचिदनुपपत्तिः । प्राणात्मना लिङ्गशरीरेण सहोत्क्रमणे प्रति-षेधवाक्यतात्पर्यस्य प्रव्यक्तत्वात् ॥ १३ ॥

अत्रैव स्मृतिं प्रमाणयति—

**"स्मर्यते च"** ॥ १४ ॥

शारीरस्येति षष्ठ्या विपरिणम्यानुवर्तते । यत्र शाखान्तरसंवादः प्रादर्शि तत्रैव स्मृतिरेषा प्रमाण्यत इति चार्थः । **स्मर्य्यते**=प्राणात्मना लिङ्गशरीरेण सहोत्क्रमणं शारीरस्य जीवात्मनः स्मर्य्यत इत्यर्थः ।

अस्ति तावत् स्मृतिः **"ममैवांशो जीवलोके जीवभूतः सनातनः । मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति । ७। शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः । गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्"** ( गी० १५ । ७–८ ) इति । तत्रापि शारीरस्य जीवात्मनः प्राणैः सहोत्क्रमणस्य स्मरणादा-ऽपीतेर्लिङ्गशरीरावस्थानं गम्यते । अन्यथा तथाविधस्मरणानुपपत्तेः । **तस्मादा** ऽपीतेस्तदवतिष्ठत इति युक्तमुच्यते नायुक्तम् ॥ १४ ॥

**स**माप्ता प्रासङ्गिकी गाथा । पुनः प्रकृतमनुसरन्नाह—

**"तानि परे तथा ह्याह"** ॥ १५ ॥

सम्पद्यन्त इति विपरिणम्यानुषज्यते । व्यवहितत्वेऽप्यर्थतः सन्नि-हितत्वात् । **तानि**=वागादिसम्पन्नानि भूतसूक्ष्माणि **परे**=प्रकृतिपुरुषाभ्यां परस्मिन् परब्रह्मणि परमेश्वरे सम्पद्यन्ते, कुतोऽवगम्यते? **हि**=यत-**स्तथाऽऽह**=श्रुतिस्तथा वदतीत्यर्थः ।

जीवात्मसहितं वागादिभूतसूक्ष्मान्तं लिङ्गशरीरमुत्क्रान्तिवेलायां हृदया-वच्छिन्ने परब्रह्मणि परमेश्वरे सम्पद्यते । तथा **चाह** श्रुतिः **"तेजः परस्यां देवतायाम्"** ( छां० ६ । ८ । ६ ) इति । **तेजः**=वागा-दिसम्पन्नं निखिलं भूतसूक्ष्मं—वागादिभूतसूक्ष्मान्तं लिङ्गशरीरमारूढो

जीवात्मेति यावत् । अनेन सुषुप्तिप्रलययोरिवात्रापि जीवात्मनः सुख-दुःखोपभोगायासविश्रामः सूच्यते । तदर्थत्वादस्याः सम्पत्तेः । यत्रेदमुक्तं दर्शनान्तरे **"सम्प्रति परिमुक्तो द्वाभ्याम्"** ( सां० ३ । ६ ) इति ॥ १५ ॥

ननु कोऽयमिह सम्पत्तिशब्दार्थोऽभिप्रेयते ? तत्राह—

**"अविभागो वचनात्" ॥ १६ ॥**

**अविभागः**=विभागानर्हः संयोगविशेषोऽत्र सम्पत्तिशब्दार्थो विज्ञातव्यः, कुतः ? **वचनात्**=दृष्टान्तवचनादित्यर्थः ।

सम्पत्तिमुक्त्वा तदर्थाविष्करणाय दृष्टान्तस्तावदुच्यते **"यथा सोम्य ! मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान् समवहारमेकतां रसं गमयन्ति । १ । ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीति । एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पद्यामहे"** ( छां० ६ । ९ । १–२ ) इति । तत्रैकीभावं प्राप्तानामनेकविधरसानां स्वगोचरविवेकाभावं प्रतिपाद्य सत्सम्पत्तेस्तत्साम्यप्रदर्शनान्नूनमत्राविभाग एव सम्पत्तिरिष्यत इति स्फुटमवगम्यते । नह्येकीभावोऽविभागतो विशिष्यते । अविभागश्च विभागानर्हः संयोगविशेषो यस्मिन् सति पृथग्व्यवहारो नार्हति भवितुमिति प्रसिद्धः । कृतबहुनिर्वचनश्चायमधस्तात् । स एवायमविभागः समाधिसुषुप्तिप्रलयमोक्षेषु सर्वत्र सम्पत्तिपदार्थोऽभिप्रेयते नात्यन्तिको लय इति दृढं मनसि कर्तव्यम् ॥ १६ ॥

आ सृत्युपक्रमादुपासकानां कर्मिणां चोत्क्रान्तिः समाना नोर्ध्वमित्युक्तम् । तदेवेदानीमुपासकानां वैशिष्ट्यं दर्शयन् विशदयति—

**"तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया" ॥ १७ ॥**

**तदोकोऽग्रज्वलनं**=तस्य परब्रह्मणि सम्पन्नस्य लिङ्गशरीरसहितस्य जीवात्मनो यदोकः स्थानं हृदयं तस्य यदग्रमग्रभागस्तस्य ज्वलनं प्रद्योतनं प्रकाशनं भवति, **तत्प्रकाशितद्वारः**=तदा हृदयाग्रज्वलनं परामृशति, तत्प्रकाशितबहिर्निष्क्रमणद्वारो **हार्दानुगृहीतः**=हृदयस्थब्रह्मानुग्रहं प्राप्तो ब्रह्मोपासकः **शताधिकया**=शतादतिरिक्तयैकशततमया सुषुम्नाख्यया मूर्धन्यया ब्रह्मनाड्या निष्क्रामति शरीरादुत्क्रामति निर्गच्छति, कुतः? **विद्यासामर्थ्यात्**=उपासनमाहात्म्यात्, **तच्छेषगत्यनुस्मृतियोगाच्च**=तदा विद्यां परामृशति, तच्छेषभूता सुषुम्नानाम्नी या मूर्धन्या ब्रह्मनाडी गत्यै शिष्यते तदनुस्मृतिस्तदनुस्मरणं, तद्योगाच्च तदनुशीलनाच्चेत्यर्थः।

शरीरादुत्क्रान्तिसमये खलु परब्रह्मणि परमेश्वरे सम्पन्नस्य लिङ्गशरीरसहितस्य जीवात्मनो भाविलोकारम्भककर्मादिवशाद् हृदयस्याग्रं प्रद्योतते, तेन च बहिर्निष्क्रमणद्वारं तत्तत्स्थानलग्नं तत्तन्नाडीमुखम्। तदिदं कर्मिणामुपासकानां चाविशिष्टम्। "**तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति**" (बृ० ४। ४। २) इत्यविशेषेण श्रवणात्। तदनन्तरं कर्मिणस्तु तत्तन्नाड्या चक्षुरादिस्थानेभ्यः स्वस्वकर्मफलोपभोगार्थं निष्क्रामन्ति, ब्रह्मोपासकाश्च ब्रह्मानुगृहीताः सुषुम्नानाम्न्या ब्रह्मनाड्या मूर्धस्थानादेव ब्रह्मलोकोपभोगार्थं निर्गच्छन्ति। किमस्मिन् वैशिष्ट्ये कारणमिति चेत्? उपासनमाहात्म्यमिति ब्रूमः। अस्ति कर्मभ्यो विशिष्टं किञ्चिदुपासनमाहात्म्यम्। यदि कर्मिण इवोपासका अपि यतः कुतश्चित् स्थानान्निष्क्रामेयुस्तदा न ते ब्रह्मलोकं विन्देयुः। ततश्च कुण्ठितमाहात्म्यमुपासनं निरर्थकं प्रसज्जेत्। न च निरर्थकं तदिष्यते। तच्छेषगत्यनुस्मृतियोगश्चापरं कारणम्। हृदयादूर्ध्वा हि सुषुम्नानाम्नी ब्रह्मनाडी नितान्तभास्वरा तालुमूलं भित्त्वा मूर्धानमेत्य रश्मिभिरेकीभूता सूर्यमण्डलमनुप्रविष्टा ब्रह्मोपासनशेषतया ब्रह्मलोकगत्यै ब्रह्मोपासकानामुपदिश्यते, तदनुस्मृतियोगेनान्तवेलायां सूपासितहार्दब्रह्मानुगृहीतास्तदनुस्मरन्तश्च ते तयैव नाड्या मूर्धस्थानान्निष्क्रामन्ति

न स्थानान्तरेभ्यः । तदेतच्च हार्दब्रह्मोपासनां प्रकृत्य स्पष्टमनुशिष्यते छान्दोग्ये **"शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति"** ( छां० ८ । ६ । ३ ) इति । **विष्वङ्**=नानागतयः । **"चक्षुष्टो वा मूर्ध्नो वा, अन्येभ्यो वा शरीरदेशेभ्यः"** ( बृ० ४ । ४ । २ ) इत्यत्र **"मूर्ध्नो वा"** इत्युपासकाभिप्रायं शिष्यते **"चक्षुष्टो वा, अन्येभ्यो वा शरीरदेशेभ्यः"** इति च कर्मिमात्राभिप्रायम् । **"तं विद्याकर्मणी समन्वारभेते"** ( बृ० ४ । ४ । २ ) इति वाक्यशेषात् । उपासनं=विद्या । तम्=उपासकं विद्या समन्वारभते, तं=कर्मिणं च कर्मेति विभज्यान्वयः । परमात्मानुग्रहश्चोपासकानामुपरि भवति न कर्मिणामित्यत्र तत्सन्निधानासन्निधानमेव कारणं नान्यत् किञ्चित् ॥ १७ ॥

**ननु** शरीराच्छताधिकया मूर्धन्यया सुषुम्नाख्यया ब्रह्मनाड्या निष्क्रामन्नयं ब्रह्मोपासको ब्रह्मलोकगमनाय किमनुसारी भवति ? तत्राह—

**"रश्म्यनुसारी"** ॥ १८ ॥

शताधिकयेत्यनुवर्तते । **रश्म्यनुसारी**=शताधिकया मूर्धन्यया ब्रह्मनाड्या शरीरान्निष्क्रामन्नुपासकः सूर्य्यरश्म्यनुसारी भवतीत्यर्थः ।

हृदयादुद्गतया मूर्धन्यया ब्रह्मनाड्या शरीरान्निर्गतोऽयमुपासको ब्रह्मलोकगमनाय सूर्य्यरश्म्यनुसारी भवति । तस्य तदनुसारित्वं च हार्दब्रह्मविद्यायां सुव्यक्तमाम्नायते **"अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते"** ( छां० ८ । ६ ।५ ) इति ॥१८॥

अत्राशङ्क्य निराचष्टे—

**"निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद् दर्शयति च"** ॥ १९ ॥

शताधिकया रश्म्यनुसारीति पदद्वयमनुवर्तते । **निशि**=रात्रौ **न**=शताधिकया निष्क्रामन् रश्म्यनुसारी नोपपद्यते, नाडीरश्मिसम्बन्धविच्छे-

दादिति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः ? **सम्बन्धस्य**=नाडीरश्मिसम्बन्धस्य **यावद्देहभावित्वात्**=यावद्देहं भवितुं शीलत्वात्, **दर्शयति च**=प्रतिपादयति च श्रुतिरित्यर्थः ।

**अथोच्येत**—न खलु मूर्धन्यनाड्या निष्कामतो ब्रह्मोपासकस्य ब्रह्मलोकगमनाय सूर्य्यरश्म्यनुसारित्वमुपपद्यते । रात्रौ तद्धेतुनाडीरश्मिसम्बन्धस्य विच्छेदात् । न च तन्निष्क्रमणं दिवैव स्यान्न रात्राविति नियन्तुं शक्यते । तस्याद‍ृष्टाधीनत्वेनानियम्यत्वादिति । **नैतद् वक्तव्यम्** । यावच्छरीरभावित्वात् । यावच्छरीरभावी खलु नाडीरश्मिसम्बन्धो विद्यते । स यथा दिवाऽनुवर्तते तथा रात्रावपि वर्तते न कदाचिद् विच्छिद्यते । नहि रात्रौ प्रतीयमानाश्चन्द्ररश्मयः सूर्य्यरश्मयो न भवन्ति । को नु नाम चन्द्रमसा सम्बध्यमानानां सौर्य्यभासां चान्द्रिकात्वं न मन्यते । समाम्नायते च चन्द्रे सूर्य्यकिरणानामवस्थानम् "**अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् । इत्था चन्द्रमसो गृहे**" (ऋ० १ । ६ । ७ । १५ ) इति । **गोः**=आदित्यरश्मयः । "**अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते । तदेतेनोपेक्षितव्यम् । आदित्यतोऽस्य दीप्तिर्भवतीति**" (नि० २ । २ । २ ) इति च नैरुक्ता अप्यधीयते । लक्ष्यतेऽपि च निशासु निदाघवेलायामौष्ण्योपलब्ध्या सूर्य्यरश्मिसद्भावः । हेमन्तादौ च हिमाभिभवाद् दुर्दिनवत् तदनुपलम्भो वक्तुं शक्यते नाभावात् । न चैवमहर्निशं सत्सु सूर्य्यरश्मिषु नाडीभिस्तत्सम्बन्धविच्छेदः कर्हिचिदास्थ्यातुमीश्यते । श्रुतिश्च यावद्देहभावित्वं नाडीरश्मिसम्बन्धस्य प्रव्यक्तं दर्शयति "**तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं च, एवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं च । अमुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ताः, आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः**" (छां० ८ । ६ । २ ) इति । तस्मादहरिव रात्रावपि मूर्ध-

**म्यनाड्या** निष्कामतो ब्रह्मलोकगमनाय सूर्य्यरश्म्यनुसारित्वमुपपद्यते नास्ति **कश्चित्**प्रतिबन्धः ॥ १९ ॥

**अतिदिशति—**

**"अतश्चायनेऽपि दक्षिणे"** ॥ २० ॥

शताधिकया रश्म्यनुसारीति पदद्वयमनुवर्तते । निष्क्रदित्यपेरर्थः । **अतश्च**=पूर्वोक्तो हेतुरिदमा परामृश्यते, चोऽवधारणे, सम्बन्धस्य याव-द्देहभावित्वादेवायने **दक्षिणे**=कृष्णपक्षोऽनेनोपलक्ष्यते, दक्षिणायने सूर्य्ये मूर्धन्यनाड्या निष्कामन्नुपासको ब्रह्मलोकगमनाय सूर्य्यरश्म्यनु-सारी निष्क्रदुपपद्यत इत्यर्थः ।

यथा खलु निशायामुत्क्रामतो ब्रह्मोपासकस्य ब्रह्मलोकगमनाय सूर्य्य-रश्म्यनुसारित्वमुपपद्यते तथा कृष्णपक्षे दक्षिणायने सूर्य्ये चोत्क्रामतोऽपि तदनुसारित्वमुपपद्यते । नाडीरश्मिसम्बन्धस्य यावद्देहभावित्वाविशे-षात् । रात्रिवत् कृष्णपक्षे दक्षिणायने सूर्य्ये वा मरणे ब्रह्मोपासकस्य ब्रह्मलोकप्राप्तिर्नोपपद्यते कुतस्तरां तद्धेतुसूर्य्यरश्म्यनुसारित्वमिति मा नाम लोकप्रसिद्ध्या कश्चन शङ्किष्टेति सूत्रारम्भः । प्रसिद्धेरुत्तरायणादीनां प्राशस्त्यमात्रे तात्पर्य्यात् । **एतेन** भीष्मस्योत्तरायणमरणप्रतीक्षणमपि प्रत्युदितं वेदितव्यम् ॥ २० ॥

**ननु** दक्षिणायनेऽप्युत्क्रान्तस्य चेदुपासकस्य ब्रह्मलोकप्राप्त्यनुकूलं सूर्य्यरश्म्यनुसारित्वमुपपद्यते किमर्थं तर्हि दक्षिणायनमावृत्तिकारणमनावृत्ति-कारणं चोत्तरायणमुत्क्रमणे स्मर्य्यते **"यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः । प्रयाता यान्ति तं कालं वक्ष्यामि भरत-र्षभ"** ( गी० ८ । २३ ) इत्युपक्रम्य **"अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः"** ( गी० ८ । २४ ) **"धूमो रात्रिस्तथा कृष्णः षण्मासाः दक्षिणायनम् । तत्र चान्द्रमसं ज्योति-र्योगी प्राप्य निवर्तते"** ( गी० ८ । २५ ) इत्यादिना । तत्राह—

**"योगिनः प्रति च स्मर्य्यते स्मार्ते चैते"** ॥ २१ ॥

अयनं दक्षिणमिति प्रथमया विपरिणम्यानुवर्तते। तेनोत्तरमयनमुपलक्ष्यते। प्रथमश्चोऽवधारणे, तेनोपासका व्यावर्त्यन्ते। द्वितीयश्चः समुच्चये। **योगिनः प्रति च**=केवलप्राणायामाभ्यासिनः स्वच्छन्दमृत्यवोऽत्र योगिनो विवक्ष्यन्ते, तान् प्रत्येव **स्मर्य्यते**=दक्षिणायनमावृत्तिकारणमनावृत्तिकारणं चोत्तरायणमुत्क्रमणे स्मर्य्यते, **स्मार्ते च**=स्मृतिप्रतिपाद्ये **चैते**=दक्षिणायनोत्तरायणे इत्यर्थः।

इह श्रौतोऽर्थः खलु विचार्य्यते न स्मार्तः। स्मृतिश्च केवलं श्रौतार्थोपोद्बलनार्थं क्वचिदुदाह्रियतेऽनुकूला चेदवलोक्यते। तत्रापि परतः प्रामाण्यस्येष्टत्वात्। दक्षिणायनमावृत्तिकारणमनावृत्तिकारणं चोत्तरायणमुत्क्रमण इति च स्मार्तोऽर्थो न श्रौतः। तत्रापि योगिनः प्रत्येव स्मर्य्यते नोपासकान् प्रति। **"योगिनः"** (गी० ८। २३) इत्युपक्रमात्। **"योगी प्राप्य निवर्तते"** (गी० ८। २५) इति चोपसंहारात्। तथाच भिन्नविषयः स इति न तमत्राद्रियामहे। **तस्मादु**पासकानां दक्षिणेऽयनेऽप्युत्क्रान्तानां नास्ति ब्रह्मलोकप्राप्त्यनुकूले सूर्य्यरश्म्यनुसारित्वे कश्चिदुपसर्ग इति सर्वं चतुरस्रम्॥ २१ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादवैदिकमुनिविरचितायां वेदान्तसूत्रवैदिकवृत्तौ चतुर्थाध्यायस्य द्वितीयः पादः॥**

---



# चतुर्थोऽध्यायः ।

## तृतीयः पादः ।

उपासकस्योत्क्रान्तिर्द्वितीये पादे विचारिता । ब्रह्मलोकावाप्तिफला तद्गतिरिदानीमस्मिन् तृतीये पादे विचारयिष्यते । तत्र पूर्वं तन्मार्गनिर्धारणपरं सूत्रं तावदवतारयति—

**"अर्चिरादिना तत्प्रथितेः" ॥ १ ॥**

**अर्चिरादिना**=शरीरान्मूर्धन्यनाड्या निष्क्रम्य रश्म्यनुसारी भूत्वा देवयानेनार्चिरादिना मार्गेण ब्रह्मलोकं गच्छति, कुतोऽवगम्यते? **तत्प्रथितेः**=तस्य तन्मार्गत्वेन प्रसिद्धेरित्यर्थः ।

देवयानापरपर्य्यायोऽर्चिरादिमार्ग एवैकः खलु श्रुतिषु सर्वत्रोपासकमार्गत्वेन पाप्रथ्यते । **"तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद् यान् षडुदङ्ङेति मासाँस्तान् । १ । मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत् पुरुषोऽमानवः, स एनान् ब्रह्म गमयत्येष देवयानः पन्था"** (छां० ५ । १० । २) इति । तेनैव सर्वो ब्रह्मोपासको मरणसमये समुपस्थिते मूर्धन्यनाड्या शरीरादस्मान्निष्क्रम्य रश्म्यनुसारी भूत्वा ब्रह्मलोकं गच्छति ॥ १ ॥

ननु **"यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति, तस्मै तत्र विजिहीते यथा रथचक्रस्य खं, तेन स ऊर्ध्वमाक्रमते"** (बृ० ५ । १० । १) इति बृहदारण्यकश्रुतौ वायुरप्यर्चिरादिके देवयाने मार्गे श्रूयते । मार्गनिर्धारणपरायामुदाहृतछान्दोग्यश्रुतौ च न स आकर्ण्यते । तत्र किमनन्तरं वायुमभिसम्भवन्तीति

प्रतिपत्तव्यम् । नहि तत्र तदभिसम्भूत्यभावे स कथञ्चिच्छ्रावयितुं शक्यते ? तत्राह—

**"वायुमब्दादविशेषविशेषाभ्याम्"** ॥ २ ॥

**अब्दात्**=संवत्सराद् **वायुं**=वायुमभिसम्भवन्तीति प्रतिपत्तव्यम्, कुतः ? **अविशेषविशेषाभ्यां**=सामान्यविशेषाभ्यां श्रुतिवचनाभ्यामित्यर्थः ।

बृहदारण्यके गतिश्रुतौ योऽसौ वायुस्तावदर्चिरादिके देवयाने मार्गे श्रूयते स संवत्सरादुपरि निवेष्टव्यः **"मासेभ्यः संवत्सरं संवत्सराद् वायुम्"** इति । सामान्यविशेषाभ्यां श्रुतिवचनाभ्यां तथैवावगमात् । अस्ति खलु **"मासेभ्यः संवत्सरं संवत्सरादादित्यम्"** ( छां० ५ । १० । २ ) इति सामान्यवचनम् । **"स वायुमागच्छति, तस्मै तत्र विजिहीते यथा रथचक्रस्य खं, तेन स ऊर्ध्वमाक्रमते, स आदित्यमागच्छति"** (बृ० ५ । १० । १ ) इति च विशेषवचनम् । सामान्यवचनस्य विशेषवचनस्य चैकवाक्यता न्याय्या । अन्यथा तयोः सामान्यविशेषभावानुपपत्तेः । नहि यद् येन कदाऽप्येकवाक्यतां नापद्यते तस्य तेन सामान्यभावो वा विशेषभावो वा घटते । सति च तयोः परस्परं सामान्यविशेषभावे संवत्सरादुपरि नूनं निवेविश्यते वायुरिति युक्तमवगम्यते—**"मासेभ्यः संवत्सरमभिसम्भवन्ति, संवत्सराद् वायुं, वायोरादित्यम्"** इति । **"ते य एवमेतद् विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिरभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद् यान् षण्मासानुदङ्ङादित्य एति, मासेभ्यो देवलोकं देवलोकादादित्यम्"** ( बृ० ६ । २ । १५ ) इति मार्गप्रतिपादिकायां बृहदारण्यकश्रुतौ च देवलोकशब्देन वायुरेवोच्यते नार्थान्तरं किञ्चित् । सामान्यविशेषशब्दाभ्यां तथैव प्रतिपत्तेः । भवति हि **"देवलोकः"** इति सामान्यशब्दः, **"वायुः"** इति च

विशेषशब्दः । उभयोरेकशब्दत्वे च देवलोको वायुरिति सुखेन प्रतिपत्तुं शक्यते । तत्र लोकशब्दप्रयुक्तिश्च देशविशेषाभिप्रायेति नास्ति तदसामञ्जस्यम् । यथा च मार्गपरायां छान्दोग्यश्रुतौ वायुर्न पठ्यते तथा बृहदारण्यकश्रुतौ संवत्सरं नाधीयते । मार्गैकत्वप्रतिपत्त्यर्थमुभयमुभयत्रोपसंहर्तव्यमिति साधु निरीक्षामहे ॥ २ ॥

ननु **"स एतं देवयानं पन्थानमापद्याग्निलोकमार्चिषमागच्छति, स वायुलोकं स आदित्यलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्"** (कौ० १ । ३) इति देवयानमार्गं दर्शयन्त्यां कौषीतकिब्राह्मणोपनिषच्छ्रुतौ वरुणलोकोऽधिकः समाम्नायते । मार्गैकत्वप्रतिपत्त्यर्थं स किमुपरि निवेश्य इति वक्तव्यम्? तत्राह—

**"तडितोऽधि वरुणः सम्बन्धात्"** ॥ ३ ॥

**तडितः**=विद्युतोऽ**धि**=उपरि **वरुणः**=वरुणलोको निवेष्टव्यः, कुतः? **सम्बन्धात्**=परस्परमुभयसम्बन्धादित्यर्थः ।

वरणीयत्वगुणयोगाद्धि वरुणशब्दो जगज्जन्मादिकारणे भगवति परब्रह्मणि परमेश्वरे तावत् प्रवरीवृत्यते । वरणीयत्वं च सर्वेषामप्स्वपि सुव्यक्तमिति गुणलक्षणया तत्राप्येष यत्र क्वचित् प्रयुज्यते । अत्र चाप्स्वेव प्रयुक्त इति विज्ञातव्यम् । अस्ति च विद्युतोऽपां च परस्परं सम्बन्धः । यदा खलु विद्युतो विशालास्तीव्रस्तनितनिर्घोषा जीमूतोदरेषु नरीनृत्यन्ते तदा पनीपत्यन्ते पृथिव्यामाप इति को नु नाम न जानाति । दर्शयति च श्रुतिरप्येतद् **"विद्योतते स्तनयति वर्षिष्यति वै"** (छां० ७ । ११ । १) इति । सति च तासां परस्परसम्बन्धे भवति क्रमोऽपि शक्यनिरूपणः पूर्वं विद्युतमभिसम्भवन्ति तदनु वरुणलोकमिति । वरुणलोकस्येन्द्रलोकेन, तस्य च प्रजापतिलोकेनापि विद्यते निमित्तनैमित्तिकभावसम्बन्धः पूर्ववत् । स च श्रुत्यैव विस्पष्टः । तस्माद् **"आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्"** (छां० ५ ।

१० । २ ) इत्यत्र विद्युतोऽधि वरुणलोको योजयितव्यः **"विद्युतो वरुणलोकम्"** इति । वरुणलोकादिन्द्रलोकमिन्द्रलोकात् प्रजापति-लोकं प्रजापतिलोकाद् ब्रह्मलोकमिति च शिष्टो मार्गक्रमः प्रव्यक्तः । इन्द्रप्रजापतिशब्दाभ्यां चेह सूर्य्यसन्निहितौ तद्रश्मिसम्बद्धौ प्रदेशवि-शेषौ विवक्ष्येते इति न विस्मर्तव्यम् ॥ ३ ॥

ब्रह्मलोकं प्रति प्रस्थितस्योपासकस्य मार्गो निरधारि । सम्प्रति मार्ग-गतानामर्चिरादीनां स्वरूपं निर्धारणीयम् । तत्र संशयः—किमिमेऽर्चिरादयः प्रजापतिलोकपर्य्यन्ता मार्गचिह्नविशेषाः स्युराहोस्विद् ब्रह्मलोकं प्रति प्रस्थि-तस्योपासकस्य मार्गान्तर्भूता भोगस्थानविशेषाः किंवा तदतिवोढारस्तत्तत्प्र-देशविशेषसँल्लग्नाः सूर्य्यरश्मयो भवेयुरिति । चिह्नविशेषाः, भोगस्थानवि-शेषा वा स्युरिति पूर्वःपक्षः, तदतिवोढारस्तत्तत्प्रदेशविशेषसँल्लग्नास्तत्तत्सं-ज्ञाविशेषभाजः सूर्य्यरश्मय इति सिद्धान्तः । किं तावत् प्राप्तम्? मार्ग-चिह्नविशेषा इति ब्रूमः । उपदेशस्य लोकसामान्यदर्शनात् । यथा हि लोके खलु लवपुरतो हरिद्वारं देहरादूनं वा प्रतिष्ठासमानो वैदिकः कश्चन कैश्चि-दुपदिश्यते गच्छेतस्त्वममृतसरसं यत्र दिव्यं ज्योतिर्मयं गुरुमन्दिरं सिंहानां भूरितेजसां वरिवृत्यते, ततो जालन्धरं ततो लोदीहायनं ततोऽम्बालयं ततः सहारण्यपुरं ततो ज्वालापुरं ततो हरिद्वारं देहरादूनं वा प्राप्स्य-तीति, तथेहापि ब्रह्मलोकं प्रतिष्ठासमानो ब्रह्मोपासकस्तावदुपदिश्यते **"अर्चिषोऽहरह्न आपूर्य्यमाणपक्षम्"** ( छां० ५ । १० । १ ) इति । तदिदमुपदेशस्य लोकसामान्यदर्शनं नूनमिमे मार्गचिह्नविशेषाः स्युरिति व्यक्तमवगमयति । भोगस्थानविशेषा वा भवेयुः । लोकशब्दा-नुबन्धात् । कौषीतकिनां ह्यर्चिरादयो लोकशब्देनानुबध्यन्ते **"अग्नि-लोकमागच्छति स वायुलोकं स वरुणलोकम्"** ( कौ० १ । १ ) इति । लोकशब्दश्चास्ति भोगस्थानेषु निरूढो न विशेषतो विवरणं किंचिदपेक्षते । **"असुर्य्या नाम ते लोकाः"** ( यजु० ४० । ४ ) **"मनुष्यलोकः पितृलोको देवलोकः"** ( बृ० १ । ५ । १६ ) इति श्रूयतेऽपि चेति । **एवं** प्राप्तेऽभिधीयते—

"**आतिवाहिकास्तल्लिङ्गात्**" ॥ ४ ॥

**आतिवाहिकाः**=देशाद्देशान्तरे प्रापणं वहनम्, अतिशयेन वहनमतिवाहः, तत्र विदिताः प्रसिद्धा आतिवाहिकास्तत्तदाकाशप्रदेशविशेषसँल्लग्नाः सूर्य्यरश्मयोऽर्चिरादयो भवन्ति, कुतोऽवगम्यते? **तल्लिङ्गात्**=तदवबोधकश्रुतिलिङ्गादित्यर्थः ।

न खल्वर्चिरादयोऽमी मार्गचिह्नविशेषा भवन्ति, न वा भोगस्थानविशेषाः । लोकमार्गवदनभ्युपगमात् । यदि हि स्वं स्वं लोकं गच्छतां तावत् कर्मिणामुपासकानां वा मार्गो लोकमार्गवदभ्युपगम्येत तदाऽवश्यमिमे तच्चिह्नविशेषास्तदन्तर्भूता भोगस्थानविशेषा वा परिकल्प्येरन् । सामान्यात् । न च स लोकमार्गवदभ्युपगम्यते । केवलं लोकबुद्ध्यारोहार्थं लोकमार्गवदुपदिश्यते "**वेदा यो वीनां पदमन्तरिक्षेण पतताम् । वेद नावः समुद्रियः**" (ऋ० १ । २ । १७ । ७) इत्यादिवत् । न च यत्किञ्चित्सामान्येन सर्वथा सामान्यं कल्पयितुं शक्यते । अतिप्रसङ्गात् । लोकशब्दं च भोगं विनाऽपि क्वचित् प्रदेशमात्रे प्रयुञ्जते प्रयोक्तार इति न तदनुबन्धोऽप्यर्चिरादीनां भोगायतनत्वावगमायावकल्पते । "**स यावत् क्षिप्येत मनस्तावदादित्यं गच्छति**" (छां० ८ । ६ । ५) इति श्रुत्या च नितान्तक्षेपीयसा कालेन देवलोकप्राप्तिं दर्शयन्त्या भोगस्थानत्वमर्चिरादीनां प्रत्यक्षं निवार्य्यते । नहि तत्र तत्राल्पमपि भुञ्जानस्योपासकस्य क्षेपिष्ठेन कालेन देवलोकप्राप्तिः कथञ्चिदुपपद्यते । केऽमी स्युरर्चिरादयस्तर्हि? सूर्य्यरश्मय इति निगदामः । अर्थातिवहने प्रसिद्धत्वात् । अतिशयेन देशाद्देशान्तरे प्रापणं ह्यर्थानामतिवहनमाख्यायते । तत्र च प्रसिद्धाः किल सूर्य्यरश्मयः । को नु नामार्थज्ञः स्याद् येन सूर्य्यरश्मीनामर्थातिवाहकत्वं न प्रतिपद्यते । दूरेणास्तां वाऽर्थज्ञोऽयं सूक्ष्मशेमुषीकः, पांसुलपादकहालिकोऽपि तेषामर्थातिवाहकत्वं सम्यगवबुध्यते । कथमन्यथा यवचणकादिबीजवपनवेलायां शुष्कं किञ्चित् क्षेत्रमुखमवलोकयन् सूर्य्यकिरणसम्पर्काति-

रेकं तत्र कारणं ब्रूयात्, दुर्दिने च कदाचिदार्द्रवासः परिदधानो हेतुप्रश्ने प्रहसन् सूर्य्यानुदयं कारणमभिदध्यात् । शास्त्रे च सूर्य्यरश्मीनामर्थातिवाहकत्वं प्रसिध्यतितरामिति नातिरोहितं शास्त्रश्रमजुषां सूक्ष्मधियां वैदिकानाम् । नूनमेते सूर्य्यरश्मय एव भूमिष्ठमुदकं वर्षणहेतोरूर्ध्वमतिवहन्ति यत एष देवो यथासमयं वर्षति वृष्टं च पुनर्वर्षणाय शनैः शनै रश्मिभिः प्रत्यादत्ते । यत्रेदमाह यास्कः **"यद् वर्षन् पातयत्युदकं रश्मिभिस्तत् प्रत्यादत्ते"** (नि० ५ । ३ । ७) इति । समाना चार्थान्तरेषु सर्वत्रेयं चर्चा । न चैतैः कियता कालेन भूमिष्ठा अर्था ऊर्ध्वमतिवावह्यन्त इति मनसाऽप्याकलयितुं शक्यते । अचिन्त्यं हि तेषामतिवाहसामर्थ्यम् । अत एव किलाचार्य्यः **"सूर्यरश्मयः"** इति सूत्रयितव्ये **"आतिवाहिकाः"** इत्यसूसुत्रत् । नन्वर्थान्तरातिवाहकाः सूर्य्यरश्मयो भवन्तु लोकशास्त्रप्रसिद्धेः, पुरुषातिवाहकाः कुतोऽवगम्यन्ते? श्रुतिलिङ्गादित्याचक्ष्महे । सन्ति खलु **"एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन् । तं नयन्त्येताः सूर्य्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः । ५ । एह्येहीति तमाहुतयः सुवर्चसः सूर्य्यस्य रश्मिभिर्यजमानं वहन्ति । प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः"** (मुं० १ । २ । ५–६) **"अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव सूर्य्यरश्मिभिरूर्ध्वमाक्रमते"** (छां० ८ । ६ । ५) इत्यादीनि श्रुतितल्लिङ्गानि सहस्रशो, येभ्यः कर्मिणामुपासकानां च स्वस्वं लोकं प्रत्यतिवाहकाः सूर्य्यरश्मय इति स्फुटमवगम्यते । न च तदवगतोऽर्थोऽयं कालत्रयेऽपि संशयमर्हति । तत्तद्विशेषसंज्ञा च तेषामा पृथिव्या आ च देवलोकात् तत्तदाकाशप्रदेशविशेषसंयोगेनोपपद्यतेतरां नास्ति कश्चिद विरोधः । नन्वर्चिरादयो रश्मिसन्निवेशविशेषतः कथञ्चिदतिरिच्यन्ते । विकाशमापद्यमाना हि तेऽर्चिरादिनामभिर्व्यवह्रियन्ते, सङ्कोचमापद्यमानाश्च धूमादिनामभिरिति न परोक्षं केषामपि वेदविद्याविदां पण्डिता-

नाम् । तत्कृत एव च कर्मिणामुपासकानां च मार्गभेदः । कर्मठाः खलु ज्ञानप्रकाशविधुरत्वादुत्क्रामन्तोऽपि तद्विधुरेणैव पितृयानापरनामधेयेन धूमादिमार्गेण स्वस्वकर्मफलभोगाय पितृलोकं गच्छन्ति, ब्रह्मोपासकाश्च ततो विशिष्टाः सर्वतः प्रकाशाभावेऽपि भूरिप्रकाशवत्त्वादुत्क्रम्यास्माच्छरीरात् स्वस्वोपासनाफलभुक्त्यै प्रकाशमयेन देवयानापरनामकेनार्चिरादिमार्गेण ब्रह्मलोकमारोहन्तीति सर्वथा लोकमतिसङ्ग्रहाय यथालोकं प्रववृते किल सनातनीयमनुशासनपद्धतिर्वैदिकानाम् । स्वस्वलोकं प्रति वोढारस्तु सर्वेषामविशेषेण सूर्य्यरश्मय एवेति निश्चितं मतम् । अतस्त एवात्रार्चिरादिशब्दार्था इति सिद्धान्तः ॥ ४ ॥

**ननू**पासकानां चेतनत्वेन यथाकामगमनस्वभावत्वान्न तदतिवाहकाः सूर्य्यरश्मयः सिध्यन्ति । नहि ते चेतयन्ति किञ्चिद् येन बलेनैनान् ब्रह्मलोकमतिवहेयुरिति । अस्योत्तरं पठति—

**"उभयव्यामोहात् तत्सिद्धेः" ॥ ५ ॥**

**उभयव्यामोहात्**=व्यामोहोऽज्ञानं ज्ञानाभावः, उभयविधज्ञानाभावात् **तत्सिद्धेः**=रश्मीनां तदतिवाहकत्वसिद्धेरित्यर्थः ।

सत्यमुपासकाः खलु चेतना विद्यन्ते तथापि सम्पिण्डितकरणग्रामत्वान्न ते तदानीं बाह्यं वाऽऽभ्यन्तरं वा किञ्चन चेतयन्ते । अत एव चेतनाः सन्तोऽपि ते तदाऽचेतना इव मन्यन्ते । चेतयमाना हि किञ्चिदिष्टमनिष्टं वा लोके सर्वत्र कामयन्ते कामयमानाश्चोपादानाय हानाय वा मनोवाक्कायैः प्रयतन्ते । येषां पुनर्बाह्याभ्यन्तरकरणप्रयोज्यं किमपि चैतन्यं नोपजायते किं ते कामेरन् कस्मैचिद्वा प्रयतेरन् । प्रयत्नाभावे च स्यादुदकबिन्दूनामिव तेषां स्वच्छन्देन गमनं दूरमा पृथिव्या आ च ब्रह्मलोकात् । अचेतनातिवाहकत्वं च सूर्य्यरश्मीनामस्ति सुप्रसिद्धम् । तत्कल्पाश्चैते सम्पिण्डितकरणग्रामास्तावदुपासका इति तत्रापि न तदसिद्धिरुद्भावयितुं क्षम्यते । अविशेषात् । नह्यचेतनकल्पाः कदाचिदचेतनेभ्यो विशिष्यन्ते । न च येषामेकत्रातिवहनमस्ति सिद्धं तेषामन्यत्र

न तत् सिध्यतीति भाषणं युक्तमीक्षामहे । निर्हेतुकत्वात् । सूर्य्यरश्मीनां चोपासकातिवहने निमित्तत्वेऽपि तत्तत्प्रदेशसम्बन्धादपादानत्वमुपचारेण व्यपदिश्यमानं न विरुध्यते । अपादाने हेतौ चाविशिष्टा पञ्चमी स्मर्य्यत इति सर्वमनवद्यम् ॥ ५ ॥

शरीरादस्मादुत्क्रामन्तमुपासकं सूर्य्यरश्मयोऽर्चिरादिमार्गेणातिवहन्ति ब्रह्मलोकमिति विचारितम् । इदमिदानीं तत्र सन्दिह्यते—किं ब्रह्मलोकं प्रत्युपासकातिवहने केवलाः सूर्य्यरश्मयो निमित्तं विद्यन्ते किंवा विद्यते तत्सहकारि निमित्तान्तरमपि किञ्चिदिति । **"अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते"** ( छां० ८ । ६ । ५ ) इति श्रुत्या निमित्तान्तरस्य व्यवच्छेदात् केवलाः सूर्य्यरश्मय इति प्राप्तेऽभिधीयते—

**"वैद्युतेनैव ततस्तच्छ्रुतेः"** ॥ ६ ॥

एवकारेण विद्युल्लोकादधस्तनेषु लोकेषु ब्रह्मलोकप्राप्तिहेतुक्रत्वभिव्यक्तिर्व्यावर्त्यते । **वैद्युतेन**=विद्युल्लोकेऽभिव्यक्तेन क्रतुना सह सूर्य्यरश्मय**स्ततः**=विद्युल्लोकादूर्ध्वं तत्रभवन्तमुपासकमतिवहन्ति, कुतोऽवगम्यते ? **तच्छ्रुतेः**=तत्प्रतिपादकश्रुतेरित्यर्थः ।

यदा खल्वेष उपासकः शरीरादस्मादुत्क्रम्य सूर्य्यरश्मिभिर्विद्युल्लोकं प्राप्नोति तदाऽस्य ब्रह्मलोकप्राप्तिहेतुः स्वोपास्यविषयः क्रतुर्यथानियममभिव्यज्यते । तत्सहकृतास्त्वामी सूर्य्यरश्मयो द्रागित्येवैनं ब्रह्मलोकं गमयन्ति । तदिदं प्रतिपादयति स्वयं श्रुतिः **"आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति"** ( छां० ५ । १० । २ ) इति । **तत्**=तत्र । **पुरुषः**=क्रतुमयत्वात् पुरुषः क्रतुः । यत्रेदमाम्नायते **"ओं क्रतो ! स्मर"** ( यजु० ४० । १५ ) इति । **क्रतो !**=हे क्रतुमय पुरुष ! **ओं**=परब्रह्म परमात्मानं **स्मर**=चिन्तयेत्यर्थः । **अमानवः**=रजोवीर्य्यसम्मिश्रणेन यो मनोरपत्यं न भवति सः, मानस इति यावत् **"तान् वैद्युतान् पुरुषो मानस**

**एत्य ब्रह्मलोकान् गमयति**" ( बृ० ६ । २ । १५ ) इति समानविषयाच्छ्रुत्यन्तरादिति श्रुतिपदार्थः । विद्युल्लोकं प्राप्तं ह्युपासकं यथा सूर्य्यरश्मयो ब्रह्मलोकं गमयन्ति तथोपास्यब्रह्मगोचरस्तत्क्रतुरपि तत्राभिव्यक्तः सङ्गमयतीति सूर्य्यरश्मिवत् तस्यापि तद्गमयितृत्वव्यपदेश उपपद्यते राजसहचरे योद्धृवृन्दे जयपराजयावाप्तिव्यपदेशवत् । व्यवसायात्मको हि प्रत्ययः क्रतुरित्याख्यायते । दृढो निश्चयो दृढः सङ्कल्प इति तस्यैव नामान्तरम् । स चोपास्यब्रह्मगोचरो भवति ब्रह्मलोकप्राप्तिहेतुरिति श्रुतिवचनादेवावगम्यते "**यच्चित्तस्तेनैष प्राणमायाति, प्राणस्तेजसा युक्तः सहात्मना यथासङ्कल्पितं लोकं नयति**" ( प्र० ३ । १० ) "**अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिँल्लोके भवति तथेतः प्रेत्य भवति । स क्रतुं कुर्वीत**" ( छां० ३ । १४ । १ ) इत्येवञ्जातीयकात् । अतो विद्युल्लोकपर्य्यन्तं केवलाः सूर्य्यरश्मयस्तदुपरि चाब्रह्मलोकं तत्क्रतुसहकृतास्तेऽतिवहन्ति तत्रभवन्तमुपासकमिति निष्कृष्यते । स्वोपास्यब्रह्मगोचरः क्रतुश्च विद्युल्लोकं प्राप्यैवाभिव्यज्यते नाधस्तनेषु लोकेषु कुत्रचिदित्यत्र भगवदिच्छैव नियामिका नान्यत्किञ्चिदिति श्रुत्याधारादुत्तरयितुं पार्य्यते । श्रुतिर्हि नः सर्वत्र परमं प्रमाणमसति मन्त्रविरोधे । विद्युत्सामर्थ्यादेव चाधुनाऽप्यात्मनि विद्यमाने स्थूले देहे तत्तद्वस्तुगोचरः सङ्कल्पः प्रादुर्भोभूयमानो दृश्यते, विगलितस्थूलदेहत्वेन सम्पिण्डितकरणग्रामस्योपासकस्य सूक्ष्मे देहेऽपि विद्युत्प्रदेशं प्राप्य स पुनरभिव्यज्यत इति न तत्सामर्थ्यविदां मतिमतां मनोमन्दिरं चित्रमिव किञ्चिदध्यास्ते । वस्तुसामर्थ्यस्यानाशङ्कनीयत्वात् ॥ ६ ॥

मार्गं निर्धार्य्योपासकस्य गतिर्विन्यरूपि । सम्प्रति तद्गन्तव्यो ब्रह्मलोको निरूपयितव्यः । गन्तव्यार्थत्वाद् गन्तुर्गतेः । तत्रैष संशयः— किमुपासकं सूर्य्यरश्मिमुख्यस्तत्क्रतुः कार्य्यं ब्रह्मलोकं गमयति किमुत परब्रह्मपरमेश्वरात्मकमकार्य्यं ब्रह्मलोकमिति । कुतः संशयः ? ब्रह्मलोकशब्दस्योभयत्रापि प्रयोगोपलम्भात् । उभयगोचरः खलु ब्रह्मलोकशब्दः प्रयुज्य-

मान उपलभ्यते **"स सामभिरुन्नीयते ब्रह्मलोकम्"** (प्र० ५।५) **"ते ब्रह्मलोकेषु परान्तकाले"** (मुं० ३।२।६) इत्याद्यासु श्रुतिषु कार्य्यब्रह्मलोकगोचरः **"स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते"** (छां० ८।१५।१) इत्याद्यासु चाकार्य्यब्रह्मलोकगोचरः। अतो युज्यते संशयः। किं तावदुचितम्? अकार्य्यमिति ब्रूमः। **"स एनान् ब्रह्म गमयति"** (छां० ५।१०।२) इत्यविशेषेण ब्रह्मप्राप्तिव्यपदेशात्। नहि ब्रह्मलोकशब्दवत् क्वचिद् ब्रह्मशब्दोऽपि कार्य्ये ब्रह्मलोके प्रयुज्यत इति। **एवं** प्राप्तेऽभिधीयते—

**"कार्य्यं बादरिरस्य गत्युपपत्तेः"** ॥ ७॥

**कार्य्यं**=कार्य्यं ब्रह्मलोकं गमयति सूर्य्यरश्मिमुख्यः पुरुषक्रतुरुपासकमिति **बादरिः**=बादरिराचार्य्यो मन्यते, कुतः? **अस्य**=उपासकस्य **गत्युपपत्तेः**=तं प्रति गत्युपपत्तेरित्यर्थः।

यदि ह्युपासकस्यास्याकार्य्यो ब्रह्मलोकः खलु गन्तव्यो मन्येत तदा तस्य तं प्रति श्रूयमाणा गतिर्नोपपद्येत। यत्कारणं स परब्रह्मपरमेश्वरात्मको वर्तते। स च व्यापक इति न तं प्रति केनचिन्मार्गेण गन्तुर्गतिरुपपत्तुमर्हति। व्यवहितं हि किञ्चिदात्मतो मार्गविशेषेण गन्तुं शक्यते। न चोपासके गन्तरि प्रत्यगात्मनि परब्रह्मणि परमेश्वरे च किञ्चिद् व्यवधानं विद्यते। तदन्तरात्मत्वात् तस्य। कार्य्यो ब्रह्मलोकश्चास्माद् भूमिलोकाद् भूरिशो व्यवधीयते। यत्कारणं पृथिवीलोकादस्मात् स तृतीयोऽभ्युपगम्यते **"यत्र देवा अमृतमानशानास्तृतीये धामन्नध्यैरयन्त"** (यजु० ३२।१०) **"अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि"** (छां० ८।५।३) इत्यादिश्रुतिभ्यः। तृतीयत्वे च युक्तमुपासके गन्तरि गन्तव्ये तस्मिंश्च देशकृतमत्यन्तं व्यवधानम्। यत्र च व्यवधानं तं प्रति लोकवदुपासकस्य गन्तुरर्चिरादिना मार्गेण गतिरुपपद्यते। तस्मादुपासकं सूर्य्यरश्मिमुख्यः पुरुषक्रतुः कार्य्यं ब्रह्मलोकं गमयति नाकार्य्यमिति बादरिराचार्य्यो मन्यते॥ ७॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

**"विशेषितत्वाच्च"** ॥ ८ ॥

कार्य्यमित्यनुवर्तते । पूर्वत्रैवायं हेतुरिति चार्थः । **विशेषितत्वात्**= बहुत्वादिना विशेषितत्वात् कार्य्यं ब्रह्मलोकमुपासकं गमयति सूर्य्यरश्मिमुख्यः पुरुषक्रतुरित्यवगम्यत इत्यर्थः ।

**"तान् वैद्युतान् पुरुषो मानस एत्य ब्रह्मलोकान् गमयति, ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति"** ( बृ० ६ । २ । १५ ) इत्याद्यासु श्रुतिषु ह्युपासकानां गन्तव्यो ब्रह्मलोकः खलु बहुत्वेन वासाधिकरणत्वेन च विशेष्यते । यदि तेषामकार्य्यो ब्रह्मलोकस्तावद् गन्तव्यो विद्येत, नैवं स विशेष्येत । नहि बहुत्वं वासाधिकरणत्वं च परब्रह्मात्मके तस्मिन् कथञ्चित् सङ्गच्छते । कार्य्यस्य तु देशविशेषत्वादवान्तरप्रदेशभेदेन बहुत्वं वासाधिकरणत्वं च सुखेनोपपद्यते । **"तेषां न पुनरावृत्तिः"** ( बृ० ६ । २ । १५ ) इति कार्य्यं ब्रह्मलोकं प्राप्तानामुपासकानामपुनरावृत्तिश्च तत्र ब्रह्मज्ञानावाप्तिसम्भावनयाऽनुशिष्यते नाकार्य्यब्रह्मलोकबुद्ध्या । परब्रह्मपरमेश्वरप्राप्तितोऽन्यत्र सर्वत्र पुनरावृत्तेर्नियमात् । साम्प्रदायिकास्तु **"एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते"** ( छां० ४ । १५ । ६ ) इति समानविषये श्रुत्यन्तरे **"इमम्"** इति विशेषणोपादानादस्मिन् कल्पे तेषामपुनरावृत्तिरुपदिश्यते न कल्पान्तर इत्याचक्षते । स्पष्टो हि तेषामभिप्रायोऽर्चिरादिना मार्गेण कार्य्यं ब्रह्मलोकमभिसम्पद्यमाना उपासका यावत् तस्यावस्थानं तावत् तत्रैवावतिष्ठन्ते न ततः प्रागावर्तन्त इति । तस्मात् कार्य्यं ब्रह्मलोकं गमयति सूर्य्यरश्मिमुख्यः पुरुषक्रतुरुपासकमिति निश्चितं मतम् ॥ ८ ॥

कथं तर्हि **"स एनान् ब्रह्म गमयति"** ( छां० ५ । १० । २ ) इत्यविशेषेण ब्रह्मप्राप्तिरस्य व्यपदिश्यते ? तत्राह—

**"सामीप्यात्तु तद्व्यपदेशः"** ॥ ९ ॥

तुशब्देनान्यद् व्यपदेशनिमित्तं व्यावर्त्यते । **सामीप्यात्**=नैकट्यात् **तद्व्यपदेशः**=ब्रह्मप्राप्तिव्यपदेशो वेदितव्य इत्यर्थः ।

कार्य्ये ब्रह्मलोकं प्राप्तानामुपासकानां हि बहवः संसाराद् विरक्ता भवन्ति विरलाः किल तदनुरक्ताः । तत्र विरक्ताः शुद्धान्तःकरणत्वात् प्रत्यगात्मानं परब्रह्म परमेश्वरं च सुविविच्यानुभवन्तो नैरन्तर्य्येण जगज्जन्मादिकारणे भगवति तस्मिन् निर्भयं प्रतितिष्ठन्ति । तत्र तथा प्रतिष्ठितानां च तेषामदूरं खलु तत्साक्षाद्दर्शनं, तदनु च तत्प्राप्तिः । तदिदं कार्य्ये ब्रह्मलोके परब्रह्मणि परमेश्वरे च सामीप्यम् । तदेवाभिसन्धाय **"स एनान् ब्रह्म गमयति"** ( छां० ५ । १० । २ ) इत्यविशेषेण ब्रह्मप्राप्तिर्व्यपदिश्यते । यथा खलु तत्रभवता ब्रह्मदण्डिना **वृन्दावनं** प्रापयितव्येषु केषुचिदार्य्यतनयेषु गुरुकुलानुरागिषु भाविनीं गुरुकुलप्राप्तिमनुसन्धाय **"स एनान् गुरुकुलं प्रापयति"** इति व्यपदेशः सामीप्यादौपचारिकः प्रवर्तते तथा सूर्य्यरश्मिमुख्येन पुरुषक्रतुना कार्य्यं ब्रह्मलोकं गमयितव्येषु केषुचिदुपासकेषु भाविनीं साक्षाद्दर्शनहेतुकां ब्रह्मगतिमभिसन्धाय **"स एनान् ब्रह्म गमयति"** इत्यविशेषेण ब्रह्मप्राप्तिव्यपदेशोऽपि सामीप्यादौपचारिकः प्रवर्तितुमर्हति । नूनमिह ब्रह्मशब्दः सामीप्येन निमित्तेनोपचारात् कार्य्ये ब्रह्मलोके प्रवृत्त इति सूत्रकृदाशयो विस्पष्टः । औपचारिकप्रयोगनिमित्तेषु च सामीप्यमपि निमित्तमधीयते दर्शनान्तरे **"सहचरण-स्थान-तादर्थ्य-वृत्त-मान-धारण-सामीप्य-योग-साधनाधिपत्येभ्यो ब्राह्मण-मञ्च-कट-राज-स -चन्दन-गङ्गा-शाटकान्न-पुरुषेष्वतद्भावेऽपि तदुपचारः"** ( न्या० २ । २ । ५९ ) इति । विवृतं चैतत्सोदाहरणमस्माभिः **"न्यायसूत्रवैदिकवृत्तौ"** विस्तरेण । तस्मादुपासकं नयति कार्य्यं ब्रह्मलोकं सूर्य्यरश्मिमुख्यः पुरुषक्रतुरिति सुध्रुवम् ॥९॥

**ननु** सूर्य्यरश्मिमुख्येन पुरुषक्रतुना गमिताः कार्य्यं ब्रह्मलोकमुपासकाः प्राप्तब्रह्मदर्शनाः सन्तः कदा ते भगवता परब्रह्मणा परमेश्वरेणाविभागमापद्यन्ते ? तत्राह—

**"कार्य्यात्यये तदध्यक्षेण सहातः परमभिधानात्" ॥ १० ॥**

**कार्य्यात्यये**=कार्य्यस्य ब्रह्मलोकस्यात्यये विनाशे कार्य्यब्रह्मलोकभोगावसाने **तदध्यक्षेण**=तस्य कार्य्यब्रह्मलोकस्य लोकान्तरोपलक्षणमेतत्, पृथिव्यादिब्रह्मलोकान्तस्य सर्वलोकस्याध्यक्षेण स्वामिना **सह**=सार्धमविभागमापद्यन्ते, कुतोऽवगम्यते? **अतः**=कार्य्यब्रह्मलोकतः **परम्**=ऊर्ध्वम**भिधानात्**=विमुक्ता इत्यभिधानादित्यर्थः ।

कार्य्यं ब्रह्मलोकं प्राप्ताः खलु तत्रभवन्तो ब्रह्मोपासकाः सततं ब्रह्मनिष्ठया प्राप्तब्रह्मदर्शनास्तल्लोकभोगावसाने विच्छिन्ने लिङ्गदेहे सर्वलोकाधिपतिना परब्रह्मणा परमेश्वरेणाविभागमापद्यन्ते । तदिदम् **"अणुः पन्था विततः पुराणो मां स्पृष्टोऽनु वित्तो मयैव । तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गलोकमित ऊर्ध्वो विमुक्ताः"** (बृ० ४ । ४ । ८) इत्यादिश्रुतेः कार्य्यब्रह्मलोकादूर्ध्वं विमुक्ता भवन्तीत्यभिधानादवगम्यते । नहि विमोक्षोऽविभागादतिरिच्यते । वक्ष्यति चाविभागो मोक्ष इति स्वयमाचार्य्यः **"अविभागेन दृष्टत्वात्"** (वे० ४ । ४ । ४) इति । **"ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे"** (मुं० ३ । २ । ६) इति श्रुत्यन्तरे च प्राप्तब्रह्मदर्शनानां सर्वेषामुपासकानां कार्य्यब्रह्मलोकावसाने मोक्षो विस्पष्टमभिधीयते । न च श्रुतिभिरभिहितेऽर्थे युक्ता विप्रतिपत्तिः । ब्रह्मलोकं प्राप्ताश्च परब्रह्म परमात्मानं पश्यन्ति साक्षादिति प्रश्नोपनिषदि प्रव्यक्तं प्रतिपाद्यते **"स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते"** (प्र० ५ । ५) इति । परब्रह्म परमात्मानं साक्षात्पश्यतां च प्रारब्धभोगावसाने तेन सहाविभागो युज्यते । **"ब्रह्मविदाप्नोति परम्"** (तै० २ । १) इत्यादिश्रुतिभ्यः ॥ १० ॥

अत्रैव स्मृतिं प्रमाणयति—

**"स्मृतेश्च" ॥ ११ ॥**

कार्य्यात्यये तदध्यक्षेण सहेत्यनुवर्तते । पूर्वत्रैवायं प्रमाणोपन्यास इति

चार्थः । **स्मृतेः**=सांख्यस्मृतेः प्राप्तब्रह्मदर्शना उपासकाः कार्य्यब्रह्मलोकस्यात्यये तत्स्वामिना सहाविभागं प्रतिपद्यन्त इति गम्यत इत्यर्थः ।

अस्ति तावत् सांख्यस्मृतिः "**तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिः**" ( सां० १ । ८३ ) इति । ततो ब्रह्मलोकं गताः प्राप्तब्रह्मदर्शना ब्रह्मलोकभोगावसाने परब्रह्मणा परमेश्वरेणाविभागमापद्यन्त इति स्फुटमवगम्यते । भगवता तेनाविभागमापन्नानामेवापुनरावृत्तेरभ्युपगमात् । उपोद्बलयति चैतदेव स्मृत्यन्तरमपि "**आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन! । मामुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यते**" ( गी० ८ । १६ ) इति । तस्मात् कार्य्यं ब्रह्मलोकं नयति सूर्य्यरश्मिमुख्यः पुरुषक्रतुरुपासकमिति निश्चलो राद्धान्तः ॥ ११ ॥

अत्र व्युदासाय जैमिनिमतं प्रदर्शयति—

"**परं जैमिनिर्मुख्यत्वात्**" ॥ १२ ॥

**परं**=परब्रह्म परमेश्वरं गमयत्युपासकं सूर्य्यरश्मिमुख्यः पुरुषक्रतुरिति **जैमिनिः**=जैमिनिराचार्य्यो मन्यते, कुतः? **मुख्यत्वात्**=ब्रह्मशब्दस्य तत्रैव मुख्यत्वादित्यर्थः ।

"**स एनान् ब्रह्म गमयति**" (छां० ५। १० । २) इति श्रुतिर्ह्युपासकानां पुरुषक्रतुकर्तृकां तावद् ब्रह्मप्राप्तिमाकर्णयति । ब्रह्मशब्दश्च परब्रह्मणि परमेश्वरे मुख्यो वर्तते न कार्य्ये ब्रह्मलोके । सामीप्यात् तत्र तद्वृत्त्यभ्युपगमश्च जघन्यः । न च मुख्ये सम्भवति जघन्याश्रयणं न्याय्यम् । **तस्मात्** परब्रह्म परमात्मानमेव गमयत्युपासकं सूर्य्यरश्मिमुख्यः पुरुषक्रतुर्न कार्य्यं ब्रह्मलोकमिति जैमिनिमतम् ॥ १२ ॥

अत्रैव हेत्वन्तरं समुच्चिनोति—

"**दर्शनाच्च**" ॥ १३ ॥

परमित्यनुवर्तते । पूर्वत्रैव हेत्वन्तरसमुच्चय इति चार्थः । **दर्शनात्**=परब्रह्मणि परमेश्वरे ब्रह्मशब्दप्रयोगदर्शनादुपासकं परं तं गमयति सूर्य्यरश्मिमुख्यः पुरुषक्रतुरिति गम्यत इत्यर्थः ।

"**सत्यं ज्ञानमनन्तं ब्रह्म**" (तै० २ । १ ) "**ते यदन्तरा तद् ब्रह्म**" (छां० ८ । १४ । १ ) "**विज्ञानमानन्दं ब्रह्म**" (बृ० ३ । ९ । २८ ) इत्याद्यासु श्रुतिषु ब्रह्मशब्दस्तावत् परब्रह्मणि परमेश्वरे प्रयुज्यमानो दृश्यते । तत्सामान्यात् "**स एनान् ब्रह्म गमयति**" (छां० ५ । १० । २ ) इत्यत्रापि स तत्रैव प्रयुक्त इति गम्यते । **तस्माद्** परब्रह्म परमेश्वरमेव गमयति सूर्य्यरश्मिमुख्यः पुरुषक्रतुरुपासकमिति युक्तं मन्यामहे ॥ १३ ॥

तदेतद् व्युदस्यति—

"**न च कार्य्ये प्रतिपत्त्यभिसन्धिः**" ॥ १४ ॥

**न च**=नैव युक्तं मन्यते, कुतः? यतः **कार्य्ये**=कार्य्ये ब्रह्मलोके **प्रतिपत्त्यभिसन्धिः**=उपासना प्रतिपत्तिः, तात्पर्य्यमभिसन्धिः, उपासनाश्रुतीनामभिसन्धिर्वर्तेत इत्यर्थः ।

यावत्यः खलु प्रतिपत्तिविधायिकाः श्रुतयो विद्यन्ते तासां सर्वासां कार्य्यब्रह्मलोकप्राप्तावेवाभिसन्धिर्लक्ष्यते न परब्रह्मप्राप्तौ । सर्वत्रार्चिरादिमार्गेणोपासकगत्यभिधानात् । नहि परब्रह्मप्राप्तौ केनापि मार्गेण गतिरपेक्ष्यते । सर्वत्र विद्यमानत्वात् । कार्य्यब्रह्मलोकप्राप्तौ चास्ति गतेरपेक्षा । देशविशेषत्वाद् "**नन्दन**" वदिति न परोक्षम् । अतो बादरिमतमेव सम्यङ्मतं न जैमिनिमतमिति साधुप्रतिपद्यामहे ॥ १४ ॥

"**स एनान् ब्रह्म गमयति**" (छां० ५ । १० । २ ) इति श्रुतम् । तत्रैनान् कानित्याकाङ्क्षायामाह—

"**अप्रतीकालम्बनान् नयतीति बादरायण उभयथा दोषात् तत्क्रतुश्च**" ॥ १५ ॥

कार्य्यमिति द्वितीयया विपरिणम्यानुवर्तते । **अप्रतीकालम्बनान्**=प्रतीकः प्रकृत्यवयवः, तमालम्बन्ते ब्रह्मबुद्ध्योपासते ये ते प्रतीकालम्बनाः, तद्भिन्ना अप्रतीकालम्बनाः ये ब्रह्मैव ब्रह्मबुद्ध्योपासते तान् **नयति**=गमयति कार्य्यं ब्रह्मलोकं सूर्य्यरश्मिमुख्यः पुरुषक्रतुरिति **बादरायणः**=

बादरायणाचार्य्यो मन्यते, कुतः? **उभयथा**=उभयप्रकारेणोपासनं विदधतां नयने **दोषात्**=शास्त्राप्रामाण्यदोषापातात् **तत्क्रतुश्च**=तत्क्रतु-श्रुतिश्चोपरुध्येतेत्यर्थः ।

द्वेधा किलोपासका भवन्ति ब्रह्मोपासकाः प्रतीकोपासकाश्च । ये सर्वगं सर्वज्ञं सर्वशक्ति ब्रह्मोपासते ते ब्रह्मोपासकाः । ये च प्रकृत्यवयवं कञ्चित् सूर्य्यं वा चन्द्रमसं वा विद्युतं वा तैजसं वा पार्थिवं वा मूर्त्तद्रव्यं किञ्चिद् ब्रह्मदृष्ट्योपासते ते प्रतीकोपासकाः । तेषां ये ब्रह्मोपासकास्ते कार्य्यं ब्रह्मलोकं नीयन्ते नेतरे । किं कारणम्? इदमेव कारणमुभयेषां तेषां नयने शास्त्रेऽप्रामाण्यदोष आपतति । शास्त्रं हि प्रकृत्यवयवविषयं ब्रह्मोपासनमनन्तानर्थहेतुत्वात् प्रतिषेधति **"यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते"** ( के० १ । ४ ) इत्यादिना । यदि तत्प्रतिषिद्धमप्यनुष्ठीयेत तदनुष्ठाता च कार्य्यं ब्रह्मलोकं नीयेत तदाऽवश्यं तस्याप्रामाण्यमापतेत् । नहि तत्प्रति-षिद्धमनुष्ठीयते फलं च यथाकाममवाप्यते तत्राप्रामाण्यं च न प्रसज्यत इति सम्भवति । न च तदप्रामाण्यमिष्यते । भवति खलु तत्क्रतुश्रुतिः **"स यथाकामो भवति तत्क्रतुर्भवति, यत्क्रतुर्भवति तत्कर्म कुरुते, यत्कर्म कुरुते तदभिसम्पद्यते"** ( बृ० ४ । ४ । ५ ) इति । **"क्रतुमयः पुरुषो यत्क्रतुरस्मिन् लोके भवति तथेतः प्रेत्य भवति"** ( छां० ३ । १४ । १ ) इति च । ततोऽपि ये ब्रह्मक्रतवस्ते ब्रह्मलोकं नीयन्त इति स्फुटमवगम्यते । न च प्रतीकोपासकाः कर्हिचिद् ब्रह्मक्रतवः सम्भवन्ति येन तेऽपि कार्य्यं ब्रह्मलोकं नीयेरन् । अब्रह्मक्रतवश्च न तत्र नयितुं शक्यन्ते । पञ्चाग्नि-विद्यायामपि ब्रह्मोपासका एव पञ्चाग्निविदः कार्य्यं ब्रह्मलोकं गच्छन्ति न केवलं पञ्चाग्निविद इति प्रव्यक्तम् । **ननु** प्रतीकोपासका अपि ब्रह्मो-पासका एव सन्ति । ब्रह्मदृष्ट्या तदुपासनात् । तथाच ब्रह्मक्रतव एव भवेयुर्नाब्रह्मक्रतव इति । **न** । तत्र ब्रह्मणोऽमुख्यत्वेन तत्क्रतुत्वानुपपत्तेः । प्रतीकोपासनेषु हि प्रतीकास्तावन्मुख्या भवन्ति, ब्रह्म च तद्विशेषणत्वा-

दमुख्यम् । न चोपासका अमुख्यक्रतवः कथञ्चिदुपपद्यन्ते । मुख्यामुख्ययोर्मुख्यस्यैवोपासनविषयत्वौचित्यात् । यदि चाब्रह्मक्रतवः सन्तोऽप्येते ब्रह्मलोकं नीयेरन् तदा नूनमेषा तत्क्रतुश्रुतिरुपरुध्येत । तदिदं पूर्वतोऽपि महत्कष्टमुपस्थितं स्यात् । अतो ब्रह्मोपासकानेव कार्य्यं ब्रह्मलोकं नयति सूर्य्यरश्मिमुख्यः पुरुषक्रतुर्न जातु प्रतीकोपासकानिति बादरायणाचार्य्यो मन्यते ॥ १५ ॥

तदेतद् हेत्वन्तरेण पुष्णाति—

**"विशेषं च दर्शयति"** ॥ १६ ॥

अप्रतीकालम्बनान्नयतीत्यनुवर्तते । पूर्वत्रैव हेत्वन्तरमेतदिति चार्थः । यत इति शेषः । **विशेषं**=यतो ब्रह्मलोकस्य गन्तृणामुपासकानां प्रतीकोपासकेभ्यो विशेषं भेदं **दर्शयति**=प्रतिपादयति श्रुतिरतोऽप्रतीकालम्बनान्नयतीति गम्यत इत्यर्थः ।

ये तावदुपासकाः शरीरत्यागानन्तरं कार्य्यं ब्रह्मलोकं गच्छन्ति तानितरेभ्यः प्रतीकोपासकेभ्यो विशिष्य श्रुतिर्दर्शयति **"ये चेमेऽरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति"** ( छां० ५ । १० । १ ) इति । यदि हि प्रतीकोपासका अपि कार्य्यं ब्रह्मलोकं नीयेरन् तदा न जातु तेभ्यो विशिष्य तल्लोकस्य गन्तॄनुपासकान् दर्शयेच्छ्रुतिः । नहि कदाचिदतथ्यं सा दर्शयितुमर्हति । प्रमाणं ह्येषा । **तस्माद**प्रतीकालम्बनान् ब्रह्मोपासकानेव नयति कार्य्यं ब्रह्मलोकं सूर्य्यरश्मिमुख्यः पुरुषक्रतुर्न प्रतीकालम्बनान् प्रकृतितद्विकारोपासकान् शास्त्रविमुखानिति सूत्रकृन्मन्यते ॥ १६ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादवैदिकमुनिविरचितायां वेदान्तसूत्रवैदिकवृत्तौ चतुर्थाध्यायस्य तृतीयः पादः ॥**

---



# चतुर्थोऽध्यायः

## चतुर्थः पादः ।

तृतीये पादे ब्रह्मोपासनाफलमर्चिरादिमार्गेण कार्य्यब्रह्मलोकप्राप्तिर्न्य-रूपि । सम्प्रत्यस्मिन् चतुर्थे पादे तज्ज्ञानफलमिहैव ब्रह्मप्राप्तिर्निरूपयिष्यते । यां किल दुःखात्यन्तनिवृत्तिपूर्वकब्रह्मानन्दोपभुक्तिस्वरूपत्वान्मुक्तिरिति मुक्तिविदः परिब्रुवते । सा च द्वयी जीवन्मुक्तिर्विदेहमुक्तिश्च । जीवतः प्राणान् धारयतः सशरीरस्य सतो मुक्तिर्जीवन्मुक्तिः । विदेहस्य विगतदेहस्याशरीरस्य सतो मुक्तिर्विदेहमुक्तिः । तत्राभ्यर्हितत्वाद् बहुवक्तव्याभावाच्च पूर्वं तावद् विदेहमुक्तिं निरूपयिष्यन्नाह—

**"सम्पद्याविर्भावः स्वेनशब्दात्"** ॥ १ ॥

ब्रह्मेति द्वितीयया विपरिणम्याधिक्रियते । **सम्पद्य**=ब्रह्मोपसम्पद्य प्राप्तिरुपसम्पत्तिः, **आविर्भावः**=स्वेन रूपेणाभिनिष्पत्तिरभिनिष्पन्नस्वरूपस्य ब्रह्मानन्दोपभुक्तिरिति यावदस्य भवति, कुतो विज्ञायते? **स्वेनशब्दात्**=स्वेनपदघटिताच्छ्रुतिवचनादित्यर्थः ।

**"भोगेन त्वितरे क्षपयित्वा सम्पद्यते"** ( वे० ४ । १ । १९ ) इति पूर्वत्र सूत्रितम् । तेनेदं सम्बध्यते । मध्यमस्य पादद्वयार्थस्य प्रासङ्गिकत्वात् । दुःखात्यन्तनिवृत्तिर्ब्रह्मानन्दावाप्तिश्च मुक्तिरिति वैदिकैराम्नीयते । प्रकृतितत्कार्य्यसम्बन्धविच्छित्त्या दुःखहेतोरभावात् तदत्यन्तनिवृत्तिर्निर्वर्तते । ब्रह्मोपसम्पत्त्या च ब्रह्मानन्दावाप्तिः । उपभुक्तिरवाप्तिः प्राप्तिरिति समानार्थम् । सेयमनेन निरूप्यते । दुःखात्यन्तनिवृत्तेर्वैशेषिकादिषु विस्तरेण निरूपितत्वात् । यदा खल्वेष पुरुषोऽज्ञानमाहात्म्यात् प्रकृतिमुपसम्पद्यावतिष्ठते, यत्रेदमाम्नातम् **"अजो ह्येको जुषमाणोऽनुशेते"** ( श्वे० ४ । ५ ) इति, तदा प्रकृत्यवस्थानेन

तत्सारूप्यं भजमानोऽनाविर्भूतस्वरूपोऽशुद्धो विशिष्ट इत्युच्यते । यत्रेदमुक्तं भवति **"विशिष्टस्य जीवत्वमन्वयव्यतिरेकात्"** ( सां० ६ । ६३ ) इति । प्रकृत्यानन्दं चोच्चावचं यथाऽदृष्टमुपभुङ्क्ते यावन्न विमुच्यते । यदा पुनर्ज्ञानमाहात्म्याद् ब्रह्मोपसम्पद्यावतिष्ठते तदा प्रकृतितत्कार्य्यसम्बन्धविच्छेदेन ब्रह्मण्यवस्थानादाविर्भूतस्वरूपः शुद्धः केवल इति व्यपदिश्यते । यत्रेदमाम्नातम् **"यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम !"** ( कठ० ४ । १५ ) इति । **"ब्रह्मैव सन् ब्रह्माप्येति"** ( बृ० ४ । ४ । ६ ) इति च । **ब्रह्मैव**=वैशिष्ट्यहेतुः प्रकृतितत्कार्य्यसम्बन्धोऽवधारणेन व्यवच्छिद्यते, ब्रह्म—आविर्भूतस्वरूपः केवलः शुद्धः । साम्यातिशयविनिर्मुक्तं ब्रह्मानन्दं च यथा सुखमात्मना स्वेनोपभुङ्क्ते । यत्रेदमाम्नातम् **"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन"** ( तै० २ । ८ ) इति । येयमस्य ब्रह्मोपसम्पत्त्या प्रकृतितत्कार्य्यसम्बन्धविच्छेदेनाविर्भूतस्वरूपस्य शुद्धस्य केवलस्य सतो निजेनात्मना ब्रह्मानन्दोपभुक्तिः सैव मुक्तिः । तां च प्रतिपादयति स्वयं श्रुतिः **"एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते"** ( छां० ८ । १२ । ३ ) इति । प्रकृतितत्कार्य्यं सर्वमत्र शरीरेणोपलक्ष्यते । समुत्थानं परित्यागः । **परं ज्योतिः**=परं ब्रह्म । प्राप्तिरुपसम्पत्तिः । **स्वेन रूपेण**=स्वमात्मीयं, रूपेणेति बुद्धिरूपं व्यवच्छिद्यते, मुक्तौ तत्संसर्गस्यात्यन्तं विच्छेदात्, आत्मीयेन चिन्मात्ररूपेण । अभिनिष्पत्तिराविर्भावोऽवस्थानमिति यावत् । परज्योतिरुपसम्पत्तौ स्वरूपाभिनिष्पत्तौ च न जातु पूर्वापरभावो विवक्ष्यते । समानकालकत्वात् । क्त्वाप्रत्ययस्तु पूर्वापरभावाभावेऽपि "मुखं व्यादाय स्वपिति, तृणं संस्पृश्य व्रजति" इत्यादिवदुपपद्यते, नास्ति कश्चिद्दोषः । यदा बोध प्राप्तब्रह्मदर्शनस्तावद् भगवान् चरमदेहो भोगेन प्रारब्धकर्मपरिक्षये शरीरादिकं सर्वं प्रकृतितत्कार्य्यं परित्यज्य परब्रह्मणि

परमेश्वरे शुद्धः केवलः सन्नवतिष्ठते तदाऽस्य तत्स्वरूपानन्दोपभोगो नावशिष्यते । पयस्यवस्थितस्य शैत्योपभोगवत् तदवस्थानेनैव सम्पन्नत्वात् । अत एव श्रुत्या शरीरादिकं परित्यज्याभिनिष्पन्नस्वरूपस्य शुद्धस्य केवलस्य सतस्तत्रभवतो ब्रह्मविदः परब्रह्मोपसम्पत्तिरेव प्रतिपाद्यते न तत्स्वरूपानन्दोपभुक्तिरिति द्रष्टव्यम् ॥ १ ॥

**ननु** शरीरादस्मात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते यः स मुक्तिं प्राप्त इति कुतोऽवगम्यते ? तत्राह—

**"मुक्तः प्रतिज्ञानात्"** ॥ २ ॥

**मुक्तः**=मुक्तिं प्राप्तः सः **प्रतिज्ञानात्**=प्रतिज्ञावचनादवगम्यत इत्यर्थः ।

यः खलु ज्ञानमाहात्म्येन प्रारब्धभोगावसाने शरीरादस्मात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स मुक्तिं प्राप्त इत्युपसंहारप्रतिज्ञावचनतोऽवबुध्यते । अस्ति तावदुपसंहारे प्रतिज्ञावचनम् **"स उत्तमः पुरुषः"** (छां० ८ । १२ । ३) इति । **उत्तमः**=मुक्त इत्यर्थः । यो ह्यतिशयेनोर्ध्वो भवति स उत्तम इत्यभिधीयते । कोऽतिशयेनोर्ध्वः स्यात् ? योऽतिशयेनोर्ध्वं प्राप्नुयात् । अतिशयेनोर्ध्वं च परं ज्योतिर्ब्रह्मैव वर्तते नान्यत् किञ्चित् । पितृलोकद्युलोकयोरूर्ध्वोर्ध्वतरत्वेऽप्यूर्ध्वतमत्वाभावात् । भवति खलु पृथिवीलोकादूर्ध्वः पितृलोकः । यं किलान्तरिक्षलोकं समामनन्ति । तस्मादूर्ध्वो द्युलोकः । यः किलः कार्य्यो ब्रह्मलोक इति परिभाष्यते । ततश्चोर्ध्वं परं ज्योतिर्ब्रह्म । यत्रेदमाम्नायते **"यदतः परो दिवो ज्योतिर्दीप्यते"** (छां० ३ । १३ । ७) इति । **"त्रिपादूर्ध्व उदैत् पुरुषः"** (ऋ० ८ । ४ । १७ । ४) इति च । तत्र यथा वैदिककर्मानुष्ठानेन पितृलोकं प्राप्तः पुमानुदिति व्यपदिश्यते, ब्रह्मोपासनेन कार्य्यं ब्रह्मलोकं प्राप्तश्चोत्तरस्तथा ब्रह्मज्ञानेन परं ज्योतिर्ब्रह्म प्राप्त उत्तम इति प्रतिज्ञातुं शक्यते । परज्योतिषो भगवतस्तस्योत्तमत्वेन तदुपसम्पद्यमानस्य पुरुषस्यात्मनोऽप्युत्तमत्वोपपत्तेः । उत्त-

मत्वं च तस्माम्नायते साक्षाद् भगवति वेदे **"उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम्। देवं देवत्रा सूर्य्यमगन्म ज्योतिरुत्तमम्"** (ऋ० १। ४। ८। १०) इति। तत्प्राप्तिश्च मुक्तिरिति सिद्धान्तः। **तस्माद्** ब्रह्मज्ञानमाहात्म्येन परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते यः स नूनं मुक्तिं प्राप्त इति निश्चेतव्यं न मात्रयाऽपि भ्रमितव्यम्॥ २॥

**ननु** श्रुतौ चेदात्मशब्दः प्रयुज्येत तदाऽवश्यं वयं ज्ञानेन ब्रह्मोपसम्पद्यमानस्यात्मनो मुक्तिप्राप्तिं निश्चिन्वीमहि। न च तत्रात्मशब्दः प्रयुज्यते किन्तु सम्प्रसादशब्दः **"एष सम्प्रसादः"** (छां० ८। १२। ३) इति। स चावस्थाविशेषवचनो नात्मवचनः, तेनात्मा कुतो गृह्यते? तत्राह—

**"आत्मा प्रकरणात्"**॥ ३॥

**आत्मा**=सम्प्रसादशब्देनात्मा **प्रकरणात्**=प्रकरणतो गृह्यत इत्यर्थः।

**"य आत्माऽपहतपाप्मा विजरो विमृत्युः"** (छां० ८। ७। १) इत्यादिके यस्मिन् प्रकरणे खलु श्रुतिरेषा समाम्नायते तत् प्रकरणं प्रत्यगात्मनो वर्तते न तदवस्थाविशेषस्य। तदुपन्यासस्य तत्र विविक्तात्मस्वरूपावबोधनार्थत्वेन प्रासङ्गिकत्वात्। प्रकरणं चार्थपरिग्रहे हेतुरिष्यते सर्वत्र यथा श्रुत्यादिकम्। तस्मादवस्थाविशेषवचनेनापि प्रयुज्यमानेन सम्प्रसादशब्देनात्र प्रत्यगात्मैव गृह्यते नावस्थाविशेषः। **तथाच** युक्तः परज्योतिरुपसम्पद्यमानस्य तस्य मुक्तिप्राप्तिरिति निश्चयः। यथा च प्रकरणमिदं प्रत्यगात्मनः पुरुषस्यैव वर्तते नान्यस्य कस्य चित् तथोपपादितमस्माभिः सविस्तरं पुरस्तात्॥ ३॥

**ननु** किमियं प्रत्यगात्मनः पुरुषस्य परज्योतिरुपसम्पत्तिर्देवदत्तस्य ग्रामोपसम्पत्तिवद् विभागेनाभ्युपेयते किंवा नदीनां समुद्रोपसम्पत्तिवदविभागेन? तत्राह—

**"अविभागेन तु दृष्टत्वात्"** ॥ ४ ॥

आत्मन इति षष्ठ्या विपरिणम्यानुवर्तते । विभागेनेति तुना व्यावर्त्यते । **अविभागेन**=आत्मनः परज्योतिरुपसम्पत्तिरविभागेनाभ्युपेयते, कुतः ? **दृष्टत्वात्**=दर्शनादित्यर्थः ।

येयं खलु ज्ञानसामर्थ्यात् परज्योतिर्ब्रह्मोपसम्पत्तिः प्रत्यगात्मनः पुरुषस्य निर्दिश्यते सा नदीनां समुद्रोपसम्पत्तिवदविभागेनाभ्युपेयते न देवदत्तस्य ग्रामोपसम्पत्तिवद् विभागेन । किं कारणं ? यत्कारणं सा तथैव निर्दिश्यमाना दृश्यते **"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"** ( मुं० ३ । २ । ३ ) **"यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान् नामरूपाद् विमुक्तः परात् परं पुरुषमुपैति दिव्यम्"** ( मुं० ३ । २ । ८ ) **"ये पूर्वं देवा ऋषयश्च तद्विदुस्ते तन्मया अमृता वै बभूवुः"** ( श्वे० ५ । ६ ) इत्याद्यासु श्रुतिषु । श्रुतिनिर्देशश्च नः प्रमाणं सर्वत्र निःशङ्कमित्यलमिह तन्निरूपणेन बहुना ॥ ४ ॥

विदेहमुक्तिनिरूपणं पर्य्यवसितम् । सम्प्रति जीवन्मुक्तिनिरूपणं प्रवर्तिष्यते । तत्र द्वारं तावत् स्वेनशब्दार्थनिरूपणं मन्यमानो भगवान् सूत्रकृदादौ तदर्थगोचरं स्वशिष्यस्य जैमिनेर्मतं प्रदर्शयति—

**"ब्राह्मेण जैमिनिरुपन्यासादिभ्यः"** ॥ ५ ॥

आत्मेत्यनुवर्तते । **ब्राह्मेण**=सत्यसङ्कल्पादिना ब्रह्मणो रूपेणात्मा परं ज्योतिरुपसम्पद्याभिनिष्पद्यते **जैमिनिः**=इति जैमिनिराचार्य्यो मन्यते, कुतः ? **उपन्यासादिभ्यः**=उपन्यासोऽत्रोपक्रमः, उपसंहारः श्रुत्यन्तरनिर्देशश्चादिना गृह्येते, उपक्रमोपसंहारश्रुत्यन्तरनिर्देशेभ्य इत्यर्थः ।

उपक्रमे हि प्रत्यगात्मा खलु सत्यसङ्कल्पादिना रूपेणोपदिश्यते **"सत्यकामः सत्यसङ्कल्पः"** ( छां० ८ । ७ । १ ) इति । तयोः

पसंहारेऽपि तस्य तदेव रूपमुपदिश्यमानं दृश्यते **"स तत्र पर्य्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा"** (छां० ८ । १२ । ३ ) इत्यादिना । श्रुत्यन्तरे च विस्पष्टं ब्रह्मोप-सम्पद्यमानस्य प्रत्यगात्मनः सत्यसङ्कल्पादिरूपं निर्दिश्यते **"तस्य सर्वेषु लोकेषु कामचारो भवति"** (छां० ७ । २५ । २ ) इति । पूर्वोत्तरयोरुपक्रमोपसंहारयोः श्रुत्यन्तरे चात्मनः सत्यसङ्कल्पादिना रूपेणोपदिष्टत्वात् **"स्वेन रूपेणाभिनिष्पद्यते"** ( छां० ८ । १२ । ३ ) इति मध्येऽपि तस्य तेनैव रूपेणाभिनिष्पत्तिरुपदिश्यत इति विज्ञा-यते । अन्यथा प्रकरणवैरूप्यापत्तेः । स्वशब्दत्वं चान्तरात्मत्वाद् भगवतो ब्रह्मणोऽप्युपपद्यते नास्ति विरुद्धं नाम किञ्चित् । सत्यसङ्कल्पादिकं च ब्राह्मं रूपं प्रसेषिध्यते । तस्मात् **"स्वेन रूपेणाभिनिष्पद्यते"** इत्यस्य "ब्राह्मेण रूपेणाभिनिष्पद्यते" इत्यर्थ इति जैमिनिराचार्य्यो मन्यते ॥ ५ ॥

मतान्तरं दर्शयति—

**"चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः"** ॥ ६ ॥

आत्मेत्यनुवर्तते । **चितितन्मात्रेण**=आत्मीयेन चैतन्यमात्ररूपे-णात्मा निष्पद्यते, कुतोऽवगम्यते? **तदात्मकत्वात्**=चितितन्मात्र-रूपत्वादित्यौ**डुलोमिः**=औडुलोमिराचार्य्यो मन्यत इत्यर्थः ।

यद्धि यस्य रूपं तेनैव रूपेण तस्याभिनिष्पत्तिरुपपद्यते नान्यदीयेन रूपेण । विरोधात् । प्रत्यगात्मनश्चास्ति चितितन्मात्रमात्मीयं रूपम् **"एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनः एव"** (बृ० ४ । ५ । १३ ) **"द्रष्टा दृशिमात्रः"** ( यो० २ । २० ) इत्यादिश्रुतिस्मृतिभ्यः । **प्रज्ञानघनः**=चितितन्मात्रः । दृशि-श्चितिः । तस्मात् **"स्वेन रूपेणाभिनिष्पद्यते"** इत्यस्य "चिति-तन्मात्रेणात्मीयेन रूपेणाभिनिष्पद्यते" इत्यर्थ इत्यौडुलोमिराचार्य्यो मन्यते ॥ ६ ॥

सम्प्रति मतद्वयविरोधं परिहरिष्यन्नात्ममतमाह—

**"एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः"** ॥७॥

आत्मन इति षष्ठ्या विपरिणम्यानुवर्तते। **एवमपि**=ब्राह्मेण रूपेण चितितन्मात्रेण रूपेण चात्मनोऽभिनिष्पत्तावप्य**विरोधं**=विरोधाभावं **बादरायणः**=बादरायणाचार्य्यो मन्यते, कुतः? **उपन्यासात्**=श्रुतिभिरुपन्यस्तत्वात्, **पूर्वभावात्**=ब्राह्मेण रूपेणाभिनिष्पत्तेश्चितितन्मात्रेण रूपेणाभिनिष्पत्तितः प्राग्भावित्वादित्यर्थः।

यदा खल्वेष जीवात्मा पुण्यौघपरिपाकेण तीव्राभ्यामभ्यासवैराग्याभ्यामुपाश्रयाभ्यां परेण दत्तहस्त इव दुरतिक्रमं प्रकृतिप्राकारमुल्लङ्घ्य हृदयसद्मनि राराज्यमानं जगज्जन्मादिकारणं परं ज्योतिर्ब्रह्मोपसम्पद्यते=साक्षात् तद्दर्शनं प्रपद्यते तदा तद्दर्शनमाहात्म्येन जाज्वल्यमानचेतसः परमदर्शनीयस्यास्य पुण्यपुञ्जैकमूर्त्तेः पूर्वं तावदखिलं सत्यसङ्कल्पादिलक्षणं ब्राह्ममैश्वर्य्यमुपतिष्ठते। यत् किल तद्दर्शनस्यादिमं फलमिति तद्विदः सङ्गिरन्ते। तेनासौ निष्किञ्चनोऽपि महाराजाधिराज इव महीयमानो लोके तावदवतिष्ठते यावत् प्रारब्धं कर्म नोपभुज्यते। तत्र येयममुष्य खलु तत्रभवतो ब्रह्मदृशो ब्रह्मदर्शनानन्तरं सत्यसङ्कल्पादिरूपा निखिलब्राह्मैश्वर्य्योपस्थितिः, यत्रेदं श्रूयते **"जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः"** (मुं० ३। १। २) इति, सैव ब्राह्मेण रूपेणाभिनिष्पत्तिः। या चोपस्थितब्राह्मैश्वर्य्यतया महाराजाधिराजवन्महीयमानस्य तस्य प्रारब्धकर्मोपभोगपर्य्यन्तं लोकेऽवस्थितिः सैव जीवन्मुक्तिः। प्रारब्धकर्मोपभोगे चाहिरिव निर्ल्वयनीं स्थूलं सूक्ष्मं शरीरद्वयं परित्यज्य सर्वथा निर्मुक्तप्रकृतितत्कार्य्यसम्बन्धतया स्वीयेन चितितन्मात्ररूपेणाभिनिष्पन्नः शुद्धः केवलः सरितां पत्या सरिदिव परब्रह्मणा परमेश्वरेण परमं साम्यमुपगच्छति, यमविभागं किलाध्यात्मविदो व्याचक्षते, सेयं तस्य विदेहमुक्तिः। यत्रैतच्छ्रुतं भवति **"तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव"** (बृ० ४। ४। ७) इति।

**"निरञ्जनः परमं साम्यमुपैति"** ( मुं० ३ । १ । ३ ) इति च । परं ज्योतिर्ब्रह्मोपसम्पद्य ब्राह्मेण रूपेणात्मनोऽभिनिष्पत्तिश्चितितन्मात्रेण रूपेणाभिनिष्पत्तिश्चोभयी श्रुत्या साक्षादुपन्यस्यते । नहि यथा परज्योतिर्ब्रह्मोपसम्पद्यमानस्यात्मनो ब्राह्मेण रूपेणाभिनिष्पत्तिं श्रुतिरुपन्यस्यति तथा चितितन्मात्रेण रूपेण नोपन्यस्यति । तदुपन्याससहस्रस्य तत्रोभयत्र दर्शयितुं शक्यत्वात् । न च श्रुत्या यदुपन्यस्यते तत् कदापि परस्परं विरोधायावकल्पते । तस्यास्तच्छीलत्वाभावात् । अविरुद्धार्थोपन्यासो हि श्रुतेः स्वरसतः शीलमधिगम्यते न मिथो विरुद्धार्थोपन्यासः । अर्वाग्दृशो मनुष्याः खलु परस्परं विरुद्धमर्थं कथयन्ति न पारदर्शिनो महर्षयः । तद्वचश्चैषा श्रुतिः । सा विदेहमुक्तितः प्राग् जीवन्मुक्त्यवस्थायां ब्राह्मेण रूपेणात्मनोऽभिनिष्पत्तिं प्रतिपादयति विदेहमुक्तौ च चितितन्मात्रेण रूपेणेत्युभयोरविरोधो विस्पष्टः । स्वशब्दार्थे च जैमिनेः पक्षो लघीयान् गरीयाँश्चौडुलोमेरित्येष न्यायः । **"एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः"** ( छां० ८ । १२ । ३ ) इति श्रुतेर्विदेहमुक्तिप्रतिपादनपरत्वनिश्चयात् । जीवन्मुक्तिप्रतिपादनपरश्चास्ति **"स तत्र पर्य्येति जक्षत् क्रीडन् रममाणः"** ( छां० ८ । १२ । ३ ) इत्यादिकः प्रकरणावशिष्टोंऽशः । उपक्रमे **सत्यकामः सत्यसङ्कल्पः"** ( छां० ८ । १२ । १ ) इति तु जीवन्मुक्तिमभिप्रेत्योपदिश्यते न विदेहमुक्तिमित्युपनिषत्तत्त्वविदां परामर्शः । कामचारश्रुतिनिर्देशश्च जीवन्मुक्तिपरः प्रव्यक्तो न विशेषतो विवरणमपेक्षत इति बादरायणाचार्य्यो मन्यते ॥ ७ ॥

**ननु** न वयं तत्रभवतो जीवन्मुक्तस्य विदेहमुक्तितः प्राक् सत्यसङ्कल्पादिरूपब्राह्मैश्वर्य्यप्राप्तिमनुमन्यामहे । विकल्पासहत्वात् । नहि सा विकल्पं सहते । कोऽसौ विकल्पः? एष विकल्पः—किं तस्यासदादिवत् प्रयत्नापेक्षात् सङ्कल्पात् ते ते कामितार्थाः समुत्तिष्ठन्ति किंवा सङ्कल्पमात्रादिति । तत्र प्रयत्नापेक्षात् सङ्कल्पादिति चेत्? तदा कृतं तत्प्राप्त्याऽकिञ्चित्करया ।

प्रयत्नमहिम्नैव तत्समुत्थितेः । सङ्कल्पमात्रादिति चेत्? न युक्तमुच्यते । अनुपलब्धिपराहतत्वात् । नहि तत्रभवतां जीवन्मुक्तानां कस्यापि कामितार्थसमुत्थानं सङ्कल्पमात्रादुपलभ्यते । न चानुपलब्धस्य युक्तमनुमननमिति । अस्योत्तरं पठति—

**"सङ्कल्पादेव तु तच्छ्रुतेः"** ॥ ८ ॥

आत्मन इति षष्ठ्या विपरिणम्यानुवर्तते । तुशब्देनोक्ताशङ्का व्यावर्त्यते । **सङ्कल्पादेव**=प्रयत्नव्यवच्छेदोऽवधारणार्थः, सङ्कल्पमात्रादात्मनो जीवन्मुक्तस्य ते ते कामितार्थाः समुत्तिष्ठन्ति, कुतोऽवगम्यते? **तच्छ्रुतेः**=तत्प्रतिपादकश्रुतेरित्यर्थः ।

अस्मदादिसाधारणो जनः खल्वसत्यसङ्कल्पत्वात् तं तमर्थं कामयमानः प्रयतते, प्रयतमानः समीहते, समीहमानश्च लभते । न चैवं भवति तत्रभवान् जीवन्मुक्तः । स हि सत्यकामः सत्यसङ्कल्पः । यं यमर्थमिच्छति स तस्य सङ्कल्पादेव समुत्तिष्ठति । न च तत्रास्ति मात्रयाऽपि प्रयत्नापेक्षा । प्रतिपादयति चैतत् स्वयं श्रुतिः **"यं यमन्तमभिकामो भवति यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते"** (छां० ८ । २ । १० ) इति । सम्प्रतिपन्नं चैतदावयोरुभयोरिति सहर्षं तस्य ब्राह्मैश्वर्य्यप्राप्तिरनुमन्तव्या, न सा कर्हिचिद् विप्रतिपत्तिमर्हति ॥ ८ ॥

सत्यसङ्कल्पत्वं तत्रभवतो जीवन्मुक्तस्याभ्यधायि । सम्प्रति तस्य तन्निबन्धनमनन्याधिपतित्वमभिधीयते—

**"अत एव चानन्याधिपतिः"** ॥ ९ ॥

आत्मेत्यनुवर्तते । यस्य सत्यसङ्कल्पत्वमाख्यायि तस्यैवानन्याधिपतित्वमाख्यायत इति चार्थः । **अत एव**=सत्यसङ्कल्पत्वादेव **अनन्याधिपतिः**=न विद्यते ब्रह्मणोऽन्योऽधिपतिर्यस्य स तथा ब्रह्मातिरिक्ताधिपतिशून्यः स्वराड् स्वतन्त्रो भवति जीवन्मुक्त इत्यर्थः ।

यस्य खलु प्राणिनां दुर्लभतमा अपि पदार्थाः सङ्कल्पमात्राद् यथाकामं

त्वरितमुपतिष्ठन्ते कस्तस्यान्योऽधिपतिर्भवेत्। अन्यस्य सर्वस्यासत्यसङ्कल्पत्वेन तदाधिपत्यानर्हत्वात्। नह्यसत्यसङ्कल्पः कश्चित् सत्यसङ्कल्पस्य कस्यचिदधिपतिर्भवितुमर्हति। श्रुतिश्च तत्रभवन्तं जीवन्मुक्तं स्वराण्णाम्ना व्यपदिशन्ती तस्यानन्याधिपतित्वं सर्वथा स्वातन्त्र्यं च सुव्यक्तं दर्शयति **"स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति"** (छां० ७। २५। २) इति। **"सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्य्येति य एवं वेद"** (कौ० ४। २०) इति च। स्मृतिरपि **"सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि। समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति"** (मनु० १२। ९२) इति। तस्मात् सत्यसङ्कल्पवदनन्याधिपतिरपि भवति तत्रभवान् जीवन्मुक्त इत्यवगन्तव्यम्॥ ९॥

सत्यसङ्कल्पोऽनन्याधिपतिस्तत्रभवान् जीवन्मुक्त इति निरदीधरत्। सम्प्रति तस्य शरीराभिमानानभिमानौ तावन्निर्धारयिष्यन्नाह—

**"अभावं बादरिराह ह्येवम्"** ॥ १०॥

आत्मन इति षष्ठ्या विपरिणम्यानुवर्तते। **अभावं**=शरीराभिमानाभावं **बादरिः**=बादरिराचार्य्यस्तत्रभवतो जीवन्मुक्तस्यात्मनो मन्यते, कुतः? **हि**=यत **एवम्**=अशरीरस्य सतः पुरुषस्य सांसारिके सुखदुःखे न संस्पृशत इत्येवमाह=श्रुतिराहेत्यर्थः।

सांसारिकसुखदुःखयोः संस्पर्शासंस्पर्शौ ह्यात्मनः सशरीरत्वाशरीरत्वयोर्लिङ्गमाचक्षते। यं खलु सांसारिके सुखदुःखे संस्पृशतः स सशरीरः, यं च न ते संस्पृशतः सोऽशरीरः। यत्रेदं श्रूयते **"आत्मा वै सशरीरः प्रियाप्रियाभ्यां, न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति, अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः"** (छां० ८। १२। १) इति। न च तत्रभवन्तं जीवन्मुक्तं सांसारिके सुखदुःखे कर्हिचित् संस्पृशतः। संस्पृशेतां चेदसौ

सर्वदा प्रसन्नवदनो दृश्येत । नहि यः सांसारिकसुखदुःखाभ्यां कदाचिदपि संस्पृश्यते स सर्वदा प्रसन्नवदनो दृश्यते । मन्त्रवर्णश्च तत्रभवतस्तस्य सांसारिकसुखदुःखयोरभावं प्रत्यक्षमाह—**"यस्मिन् सर्वाणि भूतान्यात्मैवाभूद् विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः"** (यजु० ४० । ७) इति । तथौपनिषदश्रुतिरपि दर्शयति **"आत्मानं चेद् विजानीयादयमस्मीति पूरुषः । किमिच्छन् कस्य कामाय शरीरमनुसञ्ज्वरेत्"** (बृ० ४ । ४ । १२) इति । **"यथैव बिम्बं मृदयोपलिप्तं तेजोमयं भ्राजते तत् सुधान्तम् । तद्वाऽऽत्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः"** (श्वे० २ । १४) इति च । शोक इति सांसारिकसुखदुःखयोरुपलक्षणम् । कस्मात् पुनः संसारे वर्तमानोऽपि सांसारिकसुखदुःखाभ्यामसौ संस्पृश्यते? असङ्गत्वादिति ब्रूमः । यथा हि पद्मपत्रं खल्वम्भसि वर्तमानं न जलाम्भसा लिप्यते तथा संसारे वर्तमानोऽप्यत्रभवान् जीवन्मुक्तो न संसारेण सज्यते । ब्रह्मदर्शनमाहात्म्येन तद्धेतोरज्ञानसहितस्य मिथ्याभिमानस्य सर्वथा विनष्टत्वात् । मिथ्याभिमाननिबन्धनमेव च सशरीरत्वमाते स्थितिः । मिथ्याभिमाने विनष्टे सशरीरः सन्नपि मुक्तोऽपि भवत्यशरीरः । तस्य च दूरेण सांसारिकसुखदुःखयोः संस्पर्शः । न च स तत्रभवति जीवन्मुक्ते कालत्रयेऽपि लोक्यते । अतस्तस्य शरीराभिमानाभावं बादरिराचार्यो मन्यते ॥ १० ॥

अपरं मतमाह—

**"भावं जैमिनिर्विकल्पामननात्"** ॥ ११ ॥

आत्मन इति षष्ठ्या विपरिणम्यानुवर्तते । **भाव**=शरीराभिमानसद्भावं **जैमिनिः**=जैमिनिराचार्यो जीवन्मुक्तस्यात्मनो मन्यते, कुतः? **"विकल्पामननात्**=विविधः कल्पो विकल्पो वैविध्यमनेकधाभावः, तस्यामननं कथनं प्रतिपादनं तस्मादित्यर्थः ।

छन्दोगा हि भूमविद्यायां तत्रभवतो जीवन्मुक्तस्यानेकधाभावं तावदामनन्ति **"स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादश स्मृताः । शतं च दश चैकश्च सहस्राणि च विंशतिः"** (छां० ७ । २६ । २) इति । न च स तस्य शरीराभिमानाभावे कथञ्चिदुपपद्यते । नहि यो यथाकर्मोपात्तं शरीरं ममेदमिति नाभिमन्यते स प्राप्तशक्त्यतिशयोऽपि शिष्यप्रशिष्याद्यात्मनाऽनेकधाभावाय कर्हिचिदवकल्पते । नहि परिव्राडग्रणीर्भगवान् बुद्धो विनैव शरीराभिमानं शिष्यप्रशिष्याद्यात्मनाऽनेकधाभावं प्राप्नोदिति कस्यापि धीमतो बुद्धिसौधमध्यास्ते । यथा खलु देशाभिमानो मानवानामनेकधाभावे कारणं तथाऽस्ति शरीराभिमानोऽपि तत्र कारणम् । तत्रभवतां जीवन्मुक्तानामनेकधाभावश्च यथा श्रुत्या प्रतिपाद्यते तथा लोकवृत्तेनाप्यवबोध्यते । न चोभयथा सिद्धस्यापलापः केनचित् कर्तुं शक्यते । तस्मादत्रभवतो जीवन्मुक्तस्य शरीराभिमानसद्भावं जैमिनिराचार्य्यो मन्यते ॥ ११ ॥

स्वात्ममतमाह—

**"द्वादशाहवदुभयविधं बादरायणोऽतः"** ॥ १२ ॥

आत्मन इति षष्ठ्या विपरिणम्यानुवर्तते । **द्वादशाहवत्**=यथा यागविशेषस्य द्वादशाहस्य सत्रत्वमहीनत्वं चोभयविधत्वं तथो**भयविधं**=भावप्रधानो निर्देशः, उभयविधत्वं तत्रभवतो जीवन्मुक्तस्य **बादरायणः**=बादरायणाचार्य्यो मन्यते, कुतः ? **अतः**=पूर्वोदाहृतोभयविधश्रुतित इत्यर्थः ।

ज्ञानभूमिकाभेदाद्धि तत्रभवतां जीवन्मुक्तानां द्विविधो भेदस्तावदास्थीयते शरीराभिमानिनस्तदनभिमानिनश्चेति । ये खलु ज्ञानस्य चतुर्थ्यां पञ्चम्यां वा भूमिकायामवतिष्ठन्ते तेषां शरीराभिमानो वर्तत इति ते तदभिमानिनोऽभिलप्यन्ते । देशे देशे नगरे नगरे ग्रामे ग्रामे पुनः पुनर्गत्वा यावज्जीवं तत्र तत्रोषित्वा वा तेषामेव पुण्यजन्मनां वैदिकधर्मप्रचारः कृत्यम् । सततं देशात्मर्द्धिं कामयमानानां वैदिकानां च त एव

भगवन्तो विशुद्धसत्त्वाः स्थानेनान्नेनार्थेन च सर्वदा सर्वत्रातिशयश्रद्धाभक्तिभ्यामर्चयितव्याः । यत्रेदं श्रूयते "**यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते याँश्च कामान् । तं तं लोकं जयते ताँश्च कामाँस्तस्मादात्मज्ञं ह्यर्चयेद् भूतिकामः**" (मुं० ३ । १ । १० ) इति । ये तु ज्ञानस्य षष्ठ्यां सप्तम्यां वा भूमिकायां वर्तन्ते ते निवृत्तशरीराभिमानतया तदनभिमानिनो निगद्यन्ते । तेऽमी भगवन्तोऽवस्थानमात्रेणात्मजनपदं दर्शनमात्रेण च प्राणिसङ्घं सर्वतः पावयन्ति यथा दिविषदां मुख्यो भगवान् दिवाकरः । तेषां जननी कृतार्था कुलं च पवित्रमिति किमु वक्तव्यम् । यत्रेदमाख्यातं भवति "**कुलं पवित्रं जननी कृतार्था वसुन्धरा पुण्यवती च तेन । अपारसंवित्सुखसागरेऽस्मिन् लीनं परे ब्रह्मणि यस्य चेतः**' । १ । इति । तेषामेव च तत्रभवतां पुण्यपुञ्जैकमूर्तीनां मातापितृभावं कुले जन्म चात्मने सम्प्रार्थयते खलु पुत्रवित्तलोकेषणाद्रुपदेषु त्रिषु बद्धः शुनःशेपो नाम संसारी जीवः "**कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम । को नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरं च । १ । अग्नेर्वयं प्रथमस्यामृतानां मनामहे चारु देवस्य नाम । स नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरं च**" ( ऋ० १ । २ । १३ । १–२ ) इति द्वाभ्यां प्रश्नप्रतिवचनकल्पाभ्यां मन्त्राभ्याम् । किं कारणम्? यत्कारणं मोक्षमाणानां मर्त्यानां तत्कुले जन्म नियमेनापुनर्भवाय सम्पद्यते । यत्रैतच्छ्रुतं भवति "**स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित् कुले भवति**" ( मुं० ३ । २ । ९ ) इति । तदिदमुभयविधत्वं तत्रभवतो जीवन्मुक्तस्योभयविधश्रुत्युपलम्भाद् बादरायणाचार्य्यो मन्यते ।

**द्वादशाहवत्** । यथा द्वादशाहस्य यागस्यासनोपायनचोदनोपलम्भात् सत्रत्वं यजतिचोदनोपलम्भादहीनत्वं चेत्युभयविधत्वम् । तत्रानियतकर्तृकं सत्रं नियतकर्तृकश्चाहीन इति तद्विशेषः ॥ १२ ॥

**ननु** शरीराभिमानाभावे तत्रभवतो जीवन्मुक्तस्य प्रारब्धकर्मोपभोगः कथं भविष्यति? तत्राह—

**"तन्वभावे सन्ध्यवदुपपत्तेः"** ॥ १३ ॥

आत्मन इति षष्ठ्या विपरिणम्यानुवर्तते । **तन्वभावे**=तनुः शरीरं, तदभिमानाभावे **सन्ध्यवत्**=सन्ध्यः स्वप्नस्तेनेह तदवस्थः पुरुषो लक्ष्यते, स्वप्नद्रष्टृपुरुषवदत्रभवतो जीवन्मुक्तस्य प्रारब्धकर्मोपभोगो वेदितव्यः, कुतः? **उपपत्तेः**=मनोमात्रेणोपपत्तेरित्यर्थः ।

यथा हि स्वप्ने खलु शरीराभिमानाभावेऽपि स्वप्नदृशः पुरुषस्य मनोमात्रेण प्रारब्धकर्मोपभोगो बोभोति तथा शरीराभिमानाभावे तत्रभवतो जीवन्मुक्तस्यापि मनोमात्रेण प्रारब्धकर्मोपभोगो भविष्यति । बाह्यकार्य्यकरणवन्मनसोऽपि तत्साधनत्वाभ्युपगमात् ॥ १३ ॥

प्रसङ्गादुच्यते—

**"भावे जाग्रद्वत्"** ॥ १४ ॥

आत्मन इति षष्ठ्या विपरिणम्यानुवर्तते । **भावे**=शरीराभिमानसत्त्वे **जाग्रद्वत्**=जाग्रत्पुरुषवदत्रभवतो जीवन्मुक्तस्य प्रारब्धकर्मोपभोगो द्रष्टव्य इत्यर्थः ।

यथा हि जागरितावस्थायां पुरुषमात्रस्य बाह्यकार्य्यकरणैर्मनसा च प्रारब्धकर्मोपभोगो बोभूयते तथा शरीराभिमानिनस्तत्रभवतो जीवन्मुक्तस्यापि बाह्यकार्य्यकरणैर्मनसा च प्रारब्धकर्मोपभोगः सम्पद्यते । अविशेषात् ॥ १४ ॥

अत्रभवान् जीवन्मुक्तो ब्रह्मदर्शनमाहात्म्येन ब्राह्ममैश्वर्य्यं लभत इति स्थितम् । तत्र सत्यसङ्कल्पत्वं तन्निबन्धनमनन्याधिपतित्वं च तस्योपावर्णि । सम्प्रति सर्वज्ञत्वमुपवर्ण्यते—

**"प्रदीपवदावेशस्तथा हि दर्शयति"** ॥ १५ ॥

आत्मन इति षष्ठ्या विपरिणम्यानुवर्तते । **प्रदीपवत्**=प्रदीपस्य

सर्वपदार्थेषु प्रकाशकत्वेनावेशवदावेशः=तत्रभवतो जीवन्मुक्तस्य सर्वपदार्थेषु ज्ञातृत्वेनावेशः प्रवेशो जायते, कुतोऽवगम्यते? **हि**=यतस्तथा=यथोक्तं तथा **दर्शयति**=अवगमयति श्रुतिरित्यर्थः।

यथा हि स्थानविशेषेऽवस्थितः खलु प्रदीपः सन्निकृष्टं विप्रकृष्टं स्थूलं सूक्ष्मं सर्वं पदार्थमाविशति प्रकाशकत्वेन प्रविशति याथातथ्यतः प्रकाशयति, तथा तत्रभवान् जीवन्मुक्तोऽपि हृदयसद्मनि विराराज्यमानः सन्निकृष्टं विप्रकृष्टं स्थूलं सूक्ष्मं सर्वं पदार्थमाविशति ज्ञातृत्वेन प्रविशति याथातथ्यतः प्रकाशयति तत्त्वतो विजानाति। किं कारणं? न किञ्चिदन्यत् कारणं स्वरूपमेव भगवतस्तस्य तादृशं सम्पन्नं यत्सकाशात् सन्निकृष्टो वा विप्रकृष्टो वा स्थूलो वा सूक्ष्मो वा कोऽपि पदार्थः स्वीयं रूपं कथमप्यन्तर्धापयितुं न क्षमते। सर्वार्थप्रकाशनक्षमं हि स्वभावतो बुद्धिसत्त्वं पाप्ममलोपेतं यत्किञ्चिदर्थं प्रकाशयदपि न सर्वमर्थं प्रकाशयितुमीष्टे यथांऽशुकेनान्तर्हितः प्रदीपः, वारिदेनान्तर्हितो वा भगवान् दिवाकरः। तदपाये च प्रतिबन्धकाभावेन निष्प्रत्यूहं सन्निकृष्टं विप्रकृष्टं स्थूलं सूक्ष्मं सर्वं पदार्थं सुखेन याथातथ्यतः प्रकाशयितुमलं सम्पद्यते यथाऽनावृतः प्रदीपो यथा वाऽनावृतो दिवाकरः। विद्यते च तत्रभवतो जीवन्मुक्तस्य सर्वथा सर्वतः पाप्ममलापायो विशुद्धसत्त्वात्। यत्रैतच्छ्रुतं भवति "**यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः**" (मुं० ३। १। १०) इति। "**संन्यासयोगाद् यतयः शुद्धसत्त्वाः**" (मुं० ३। २। ६) इति च। तमिमं सार्वज्ञ्यप्रयोजकं सर्वार्थविषयमावेशं च भगवतस्तस्य दर्शयति स्वयं श्रुतिः "**विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र। तदक्षरं वेदयते यस्तु सोम्य! स सर्वज्ञः सर्वमेवाविवेश**" (प्र० ४। ११) इति। "**न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्। सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः**" (छां० ७। २६। २) इति

च । तस्माद् यथा सत्यसङ्कल्पोऽनन्याधिपतिश्च तथाऽस्ति सर्वज्ञोऽपि तत्रभवान् जीवन्मुक्त इति मन्तव्यम् ॥ १५ ॥

**अथोच्येत**—न खलु तत्रभवतो जीवन्मुक्तस्य सार्वज्ञ्यमस्माभिरभ्युपगन्तुं शक्यते, यावता ब्रह्मप्राप्तस्य बाह्याभ्यन्तरज्ञानाभावं प्रतिपादयति श्रुतिः "**प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्**" ( बृ० ४ । ३ । २१ ) इत्येवञ्जातीयका । भवति च ब्रह्मप्राप्तस्तत्रभवान् जीवन्मुक्त इति । अस्योत्तरं पठति—

**"स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि"** ॥ १६ ॥

आत्मन इति षष्ठ्या विपरिणम्यानुवर्तते । **स्वाप्ययसम्पत्त्योरन्यतरापेक्षं**=स्वाप्ययः सुषुप्तिः, सम्पत्तिर्मोक्षः, तयोरन्यतरावस्थापेक्षं बाह्याभ्यन्तरज्ञानाभावमात्मनः प्रतिपादयति श्रुतिः, कस्मात् प्रतिपद्यते ? **हि**=यस्मादा**विष्कृतं**=पूर्वोत्तरवाक्याभ्यां प्रकटितं प्रकाशितमेतदवलोक्यत इत्यर्थः ।

न तावदत्रभवन्तं जीवन्मुक्तमपेक्ष्य "**प्राज्ञेनात्मना**" (बृ० ४ । ३ । २१ ) इत्येवञ्जातीयकेन श्रुतिवाक्येन बाह्याभ्यन्तरज्ञानाभावः प्रतिपाद्यते येनासौ सर्वज्ञो नाभ्युपगम्येत । किं तर्हि ? सुषुप्तं मुक्तं पुरुषं चापेक्ष्य । भवति खलु पूर्वत्र "**यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति**" ( बृ० ४ । ३ । १९ ) इति सुषुप्तेर्निर्देशः "**सलिल एको द्रष्टाऽद्वैतो भवति**" ( बृ० ४ । ३ । ३२ ) इत्यादिनोत्तरत्र च मुक्तेः । **सलिलः**=सलिलप्रातिपदिकात् "**सर्वप्रातिपदिकेभ्यः क्विब् वा वक्तव्यः**" इति वार्तिकेनोपमानादाचारे क्विपि पचाद्यच्—प्रत्ययः, सलिलमिव सलिलः, यथा सलिलं सलिलनिधौ प्रक्षिप्तं तदविभागमापद्यते तथा द्रष्टा पुरुषः परब्रह्मणा परमेश्वरेणेत्यर्थः । तौ चोभयनिर्देशौ यस्य पूर्वत्र सुषुप्तिर्निर्दिश्यते मुक्तिश्चोत्तरत्र, नूनं मध्येऽपि तदन्यतरस्य बाह्याभ्यन्तरज्ञानाभावः प्रतिपाद्यत इति स्फुटमाविर्भावयतः । नहि पूर्वत्र सुषुप्तिनिर्देशो मुक्ति-

निर्देशे चोत्तरत्र विद्यमाने मध्ये जीवन्मुक्तिनिर्देशोऽकस्मात् प्रतिपत्तुं शक्यते । अतिप्रसङ्गात् । अतः सत्यसङ्कल्पादिवदस्ति सर्वज्ञोऽपि तत्रभवान् जीवन्मुक्त इति सहर्षमभ्युपगन्तव्यम् ॥ १६ ॥

सम्प्रति तदैश्वर्य्येयत्तामवधारयिष्यन्नाह—

**"जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च"** ॥ १७ ॥

आत्मन इति षष्ठ्या विपरिणम्यानुवर्तते । **जगद्व्यापारवर्जं**= जगज्जन्मादिव्यापारं वर्जयित्वा तत्रभवतो जीवन्मुक्तस्यैश्वर्य्यं वेदितव्यम्, कुतः? **प्रकरणात्**=प्रक्रियातोऽ**सन्निहितत्वाच्च**=जगद्व्यापारसन्निधानाभावाच्चेत्यर्थः ।

जीवन्मुक्तैश्वर्य्यं विषयः । किं तत् सावग्रहं स्यादाहोस्विन्निरवग्रहमिति संशयः । तत्र प्राप्तैश्वर्य्यत्वान्निरवग्रहमिति पूर्वपक्षे प्राप्ते सावग्रहमिति सिद्धान्तः । कुतः? यतो जगद्व्यापारवर्जं तदभ्युपेयते । कस्मात्? प्रकरणात् । यत्र हि जीवन्मुक्तिः खलु प्रक्रियते **"स तत्र पर्य्येति जक्षत् क्रीडन् रममाणः"** (छां० ८ । १२ । ३) इत्यादौ, तत्र सर्वत्र सर्वकामावाप्त्यादिव्यापारस्तत्रभवतो जीवन्मुक्तस्याकर्ण्यते न जगज्जन्मादिव्यापारः । सोऽपि चेद् विद्येत व्यापारान्तरवदवश्यमाकर्ण्येत । नहि विद्यमानस्याकर्णनाय श्रुतिः कञ्चिद् भारं मन्यते । असन्निहितत्वाच्च । यथा हि जीवन्मुक्तिप्रकरणे खलु जगज्जन्मादिव्यापारस्तत्रभवतो जीवन्मुक्तस्य कुत्रापि नाधीयते तथा न तत्प्रकरणेन सन्निधीयतेऽपि । यदि ह्युत्तरत्र वा पूर्वत्र वा कुत्रचिदधीयेत तदाऽवश्यं स तेन सन्निधीयेत । न चोत्तरत्र वा पूर्वत्र वा कुत्रचिदधीयानो दृश्यते । यस्य खलु प्रकरणे श्रवणं न विद्यते नापि प्रकरणेन सन्निधीयते स न कथञ्चिदभ्युपगन्तुं शक्यते । तस्माज्जगद्व्यापारवर्जं सावग्रहं तत्रभवतो जीवन्मुक्तस्यैश्वर्य्यमिति युक्तं मन्यामहे ॥ १७ ॥

अत्राशङ्क्य समाधत्ते—

**"प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्योक्तेः"** ॥ १८ ॥

आत्मन इति षष्ठ्या विपरिणम्य जगद्व्यापारवर्जमिति च पदद्वयमनुवर्तते । नेत्याशङ्कासामर्थ्याल्लभ्यते । **प्रत्यक्षोपदेशात्**=प्रत्यक्षं श्रुतिः, अनुशासनमुपदेशः, श्रुत्युपदेशादत्रभवतो जीवन्मुक्तस्यैश्वर्य्यं जगद्व्यापारवर्जं नेति **चेत्**=यद्युच्यते तदा **न**=न वाच्यम्, कुतः? **आधिकारिकमण्डलस्थोक्तेः**=अधिकारविशेषे नियुक्ता अधिकारविशेषं प्राप्ता आधिकारिकाः, तेषां मण्डलं वर्गः, तत्र यदैश्वर्य्यं तिष्ठति वर्तते तदुक्तेस्तदुपदेशादित्यर्थः ।

**अथोच्येत**–न खलु तत्रभवतो जीवन्मुक्तस्यैश्वर्य्यं जगद्व्यापारवर्जं सावग्रहमिति युक्तं मन्यते । यत्कारणं श्रुतिस्तस्य निरवग्रहं तदुपदिशति "**स स्वराड् भवति**" (छां० ७ । २५ । २) इति । "**सर्वेऽस्मै देवा बलिमावहन्ति**" (तै० १ । ५) इति च । **बलिं**=पूजाम् । न च भगवतस्तस्य निरवग्रहैश्वर्य्याभावे स्वराडिति श्रुत्युपदेशः कथञ्चिदुपपद्यते, सर्वेषां वा देवानां बल्यावहनं सङ्गच्छते । सर्वव्यापारेषु स्वातन्त्र्यं हि स्वराट्त्वम् । नहि यस्य जगज्जन्मादिषु व्यापारो न विद्यते स सर्वव्यापारेषु स्वतन्त्रो घटते । न च यथार्थोपदेशाय प्रवर्तमाना श्रुतिरयथार्थं किञ्चिदुपदेष्टुमर्हति । तस्मान्निरवग्रहमैश्वर्य्यं तत्रभवतो जीवन्मुक्तस्य न जगद्व्यापारवर्जं सावग्रहमिति । **नैतद् वक्तव्यम्** । आधिकारिकवर्गैश्वर्य्यस्योपदिष्टत्वात् । ये ह्यधिकारविशेषं प्राप्ता मुक्तात्मानः खलु वैदिकधर्मप्रचारादिकार्य्यविशेषाय भूमिमण्डलमागच्छन्ति तैर्यावदैश्वर्य्यं ब्रह्मानुग्रहात् समवाप्यते तावदैश्वर्य्यं तत्रभवतो जीवन्मुक्तस्य सम्राट्श्रुतिरुपदिशति नाधिकम् । नह्यसौ मुक्तापेक्षयाऽप्यधिको विद्यते । न च सर्वव्यापारेषु स्वातन्त्र्यं सम्राट्त्वमिति स्वीकारे जगदुत्पत्त्यादिव्यापारस्तत्रान्तर्भवितुमर्हति । येषु येषु व्यापारेषु सोऽधिक्रियते तन्मात्रस्य सर्वशब्देनाभिधानात् । जगज्जन्मादिव्यापारे च ब्रह्मैवाधिक्रियते न तत्रभवान् जीवन्मुक्त इति सर्वसम्प्रतिपन्नम् । बहुप्राचीनः खलु जगज्जन्मादिव्यापारोऽर्वाचीनश्चैष जीवन्मुक्त इति न तत्र तदधिकारः कथञ्चिदुपपद्यते । अत एव श्रुतिस्तं परित्यज्यैव तद्व्यापारं प्रतिपादयति

**"स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति"** ( छां० ७ । ५ । २ ) इत्याद्या । सर्वेषां देवानां बल्यावहनं च तत्रभवन्तं जीवन्मुक्तं प्रति युज्यते नास्ति तत्रासामञ्जस्यं नाम किञ्चित् । अतो जगद्व्यापारवर्जं सावग्रहं तत्रभवतो जीवन्मुक्तस्यैश्वर्यं न जातु निरवग्रहमिति युक्तं मन्तव्यं भवति ॥ १८ ॥

ऐश्वर्यं द्वेधा ज्ञानं क्रिया च । तत्र ज्ञानस्या जगत्पितुर्ब्रह्मण आ च सविकारायाः प्रकृतेरखिलो भावो विषयः, क्रियायाश्च जगद्व्यापारवर्ज-मिति विशेष उक्तः । सम्प्रति तत्रान्यो विशेष उच्यते—

**"विकारावर्ति च तथा हि स्थितिमाह"** ॥ १९ ॥

आत्मन इति षष्ठ्या विपरिणम्यानुवर्तते । यत्र पूर्व विशेषोऽभिहित-स्तत्रैवाधुना विशेषान्तरमभिधीयत इति चार्थः । **विकारावर्ति**=वि-काराः सर्वे जन्यभावाः, तानावर्तयितुं विषयत्वेन व्याप्तुं शीलमस्य तत्तथा निखिलजन्यभावविषयमिति यावत्तत्रभवतो जीवन्मुक्तस्यैश्वर्यं वेदितव्यम्, कुतः? **हि**=यतस्**तथा**=यथोच्यते तथा **स्थितिं**-तदवस्थिति**माह**-श्रुतिराहेत्यर्थः ।

यथा हि तत्रभवतो जीवन्मुक्तस्यैश्वर्यं खलु जगद्व्यापारवर्जं वर्तते तथा जन्यभावमात्रविषयमप्यवगन्तव्यम् । यत्कारणं स्वयं श्रुतिस्तत्र तदवस्थितिमाह—**"स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति"** ( छां० ८ । १२ । ६ ) इति । **लोकान्**=जन्यभावान् । **आप्तिः**=अधिष्ठातृत्वेन प्राप्तिः । कस्त-दभिप्रायः स्यात्? इह यावन्तो जन्यभावा विद्यन्ते तन्मात्रविषयमत्र-भवतो जीवन्मुक्तस्यैश्वर्यमवतिष्ठते नान्यविषयमिति । तदीदृशमैश्वर्य-मवाप्तः किल जीवन्मुक्तः पदार्थानां शक्तिमात्रं कञ्चित्कालमन्यथयितुं पारयते न स्वरूपम् । जगद्व्यापारान्तर्भावात् ॥ १९ ॥

तदेतत् प्रमाणान्तरेणोपोद्बलयति—

**"दर्शयतश्चैवं प्रत्यक्षानुमाने"** ॥ २० ॥

आत्मन इति षष्ठ्या विकारावर्ति चेति द्वितीयया विपरिणम्यानुवर्तते । पूर्वत्रैवैष प्रमाणान्तरोपन्यास इति चार्थः । **एवं**=छान्दोग्यश्रुतिवत् **प्रत्यक्षानुमाने**=तैत्तिरीयकी श्रुतिरत्र प्रत्यक्षं, योगस्मृतिरनुमानम्, उभे ते **दर्शयतः**=तत्रभवतो जीवन्मुक्तस्यैश्वर्य्यं विकारावर्ति दर्शयतोऽवगमयत इत्यर्थः ।

यथा हि तत्रभवतो जीवन्मुक्तस्यैश्वर्य्यं खलु विकारावर्ति छान्दोग्यश्रुतिराह तथा तैत्तिरीयकी श्रुतिर्योगस्मृतिश्चापि दर्शयतः "**अहं विश्वं भुवनमभ्यभवां सुवर्णज्योतिः**" ( तै० ३ । १० ) "**सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च**" ( यो० ३ । ४९ ) इति । **विश्वं भुवनं**=जन्यभावमात्रम् । **सर्वभावाधिष्ठातृत्वं**=निखिलजन्यपदार्थनियन्तृत्वम् । न च श्रुतिस्मृतिदर्शितं कर्हिचिदनभ्युपगममर्हति । प्रामाणिकत्वात् । अतो विकारावर्ति तत्रभवतो जीवन्मुक्तस्यैश्वर्य्यमिति यथार्थम् ॥ २० ॥

तदिदं लिङ्गेन पोपुष्यते—

"**भोगमात्रसाम्यलिङ्गाच्च**" ॥ २१ ॥

आत्मन इति षष्ठ्या विकारावर्ति चेति द्वितीयया विपरिणम्यानुवर्तते । पूर्वत्रैवैष लिङ्गोपन्यास इति चार्थः । **भोगमात्रसाम्यलिङ्गात्**=मात्रचा भोगतोऽन्यत्र साम्यं व्यवच्छिद्यते, सर्वकामावाप्तिरत्र भोगः, तन्मात्रे साम्यं समानत्वं, तदात्मकाल्लिङ्गादत्रभवतो जीवन्मुक्तस्यैश्वर्य्यं विकारावर्ति गम्यत इत्यर्थः ।

यदि हि तत्रभवतो जीवन्मुक्तस्यैश्वर्य्यं खलु विकारावर्ति न विद्येत तदा तस्य भगवता ब्रह्मणा सर्वैश्वर्य्यसाम्यं तावदाम्नायेत न सर्वकामावाप्तिलक्षणभोगमात्रसाम्यम् । तन्मात्रसाम्यं चाम्नायते "**सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता**" ( तै० २ । १ ) इति । न च यस्य येन सर्वैश्वर्य्यसाम्यं वरीवृत्यते तस्य

तदेकदेशेन भोगमात्रेण साम्यं कर्हिचिदाम्नातुं **शक्यते** । नहि श्रुत्याऽन्यथा किञ्चिदाम्नायते । भगवतो ब्रह्मणः सर्वकामावाप्तिर्नैसर्गिकी, तत्रभवतो जीवन्मुक्तस्य च नैमित्तिकीत्यन्यदेतत् । तदिदं भोगमात्रसाम्यं लिङ्गम् । ततो विकारावर्ति तत्रभवतो जीवन्मुक्तस्यैश्वर्यमिति निःशङ्कं प्रतिपद्यामहे ॥ २१ ॥

जीवन्मुक्तिगाथाऽपि पर्य्यवसिता । सम्प्रति मुक्तिं प्राप्तस्यावृत्तिः स्यात् किंवाऽनावृत्तिरिति चिन्तनीयमवशिष्यते । तत्रावृत्तिरिति पूर्वः पक्षोऽनावृत्तिरिति सिद्धान्तः । किं तावत् प्राप्तम्? आवृत्तिरिति ब्रूमः । **फलत्वात्** । मुक्तिः खलु ज्ञानस्य फलमाश्रीयते **"ज्ञानान्मुक्तिः"** ( सां० ३ । २३ ) इति स्मृतेः । फलत्वाच्च स्यादनित्या यथा कर्मफलं स्वर्गः । न चानित्यां तां प्राप्तस्यानावृत्तिः कथञ्चित् सङ्गच्छते । **अवस्थाविशेषत्वाच्च** । अवस्थाविशेषो हि जीवात्मनो मुक्तिर्यथा सुषुप्तिः । सुषुप्तिं गतस्य चावृत्तिरुपलभ्यते । तत्सामान्यान्मुक्तिं प्राप्तस्याप्यावृत्तिर्गम्यते । **संख्येयत्वाच्च** । संख्येयाः खलु जीवात्मानः । तन्निमेषाणां संख्येयत्वश्रुतेः **"सर्वं तद् राजा वरुणो विचष्टे यदन्तरा रोदसी यत् परस्तात् । संख्याता अस्य निमिषो जनानामक्षानिव श्वघ्नी निमिनोति तानि"** (अथ० ४ । ४ । १६ ।५) इति । संख्येयानां तेषां मुक्तिं प्राप्तस्यानावृत्तौ च क्रमेण सर्वमुक्तौ संसारोच्छेदः प्रसज्येत । न च स इष्यते । सर्गस्याकस्मिकत्वापत्तेः । **मान्त्रवर्णिकलिङ्गाच्च** । अस्ति तावद् याजुषो मन्त्रवर्णः **"त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्"** ( यजु० ३ । ६० ) इति । **त्र्यम्बकं**= सृष्टिस्थितिसंहारविषयास्तिस्रोऽम्बाः शक्तयो यस्य, प्रणवात्मानोऽकारोकारमकारास्त्रयोऽम्बाः शब्दाः प्रतिपादका वा यस्य, द्यौरन्तरिक्षं भूमिरिति त्रयाणां लोकानामम्बः पिता वा यो भवति स्वार्थे कन्, स त्र्यम्बकस्तम् । तत्र "माऽमृतान्मुक्षीय" इति प्रार्थनं लिङ्गम् । न च तन्मुक्तेरपुनरावृत्तौ कथञ्चिदुपपद्यते । **श्रवणाच्च** । श्रूयते खलु मुक्तेः

पुनरावृत्तिः कैवल्योपनिषदि **"ते ब्रह्मलोकेषु परान्तकाले परामृतात् परिमुच्यन्ति धीराः"** (कैव० ६) इति । **परिमुच्यन्ति**=पुनरावर्तन्त इत्यर्थः । न च श्रुतिरन्यथा किञ्चिच्छ्रावयति । तस्मान्मुक्तिं प्राप्तस्यावृत्तिरिति युक्तमुत्पश्याम इति । एवं प्राप्ते सिद्धान्तसूत्रं पठति—

**"अनावृत्तिः शब्दादनावृत्तिः शब्दात्" ॥ २२ ॥**

आत्मन इति षष्ठ्या विपरिणम्यानुवर्तते । अभ्यासेन शास्त्रपरिसमाप्तिः प्रद्योत्यते । **अनावृत्तिः**=आवृत्तिरागमनं पुनः संसारप्राप्तिः संसारसम्बन्धो बद्धजीववत्संसारे जन्म, मुक्तिं प्राप्तस्यावृत्तिर्न भवति, कुतोऽवगम्यते? **शब्दात्**=श्रुतिवचनादित्यर्थः ।

न खलु मुक्तिं प्राप्तो जीवात्मा पुनः कर्हिचित् संसारमावर्तते । ब्रह्मदर्शनमाहात्म्येन संसारावृत्तिहेतूनां सर्वतः परिक्षयात् । अविद्याकर्मादयो हि जीवात्मनः संसारावृत्तिहेतवोऽभ्युपेयन्ते **"क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः"** (यो० २ । १२) **"सति मूले तद्विपाको जात्यायुर्भोगाः"** (यो० २ । १३) इत्यादिस्मृतिभ्यः । ते च ब्रह्मदर्शनवेलायामेव परिक्षीयन्त इति कथमसौ पुनः संसारमावर्तेत । तदानीमविद्याकर्मादीनां परिक्षयं च श्रुतिस्मृतयो विस्पष्टं प्रतिपादयन्ति **"एतद् यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य!** (मुं० २ । १ । १०) **"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"** (मुं० २ । २ । ८) **"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"** (मुं० ३ । १ । ३) **"आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः"** (छां० ७ । २६ । २) **"तस्याभिध्यानाद् योजनात् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः"** (श्वे० १ । १०) **"ततः क्लेश-**

**कर्मनिवृत्तिः**" (यो० ४ । ३०) "**यथैधांसि समिद्धोऽग्नि-र्भस्मसात् कुरुतेऽर्जुन! । ज्ञानाग्निः सर्वकर्माणि भस्मसा-त्कुरुते तथा**" (गी० ४ । ३७) इत्याद्याः । नन्वविद्याकर्मादयोऽनादिभावा अभ्युपगम्यन्ते । यत्रेदं स्मृतं भवति "**अनादिरविवेकोऽन्यथा दोषद्वयप्रसक्तेः**" (सां० ६ । १२) "**न कर्माविभागादिति चेन्नानादित्वात्**" (वे० २ । १ । ३५) इति । ये चानादिभावा न च तेषां परिक्षयः कर्हिचिदुपपद्यते । तस्य सादिभावत्वेन व्याप्तत्वादिति । **नैष दोषः** । स्वरूपतोऽनादिभावानां परिक्षयानुपपत्तावपि प्रवाहतोऽनादिभावानां तदुपपत्तेः । स्वरूपतोऽनादिभावा हि न केनचित् कर्हिचित् परिक्षीयन्ते प्रवाहतोऽनादिभावानां परिक्षये तु नास्ति काचिदनुपपत्तिः । अत एवाह भगवान् पतञ्जलिः "**तासामनादित्वमाशिषो नित्यत्वात्**" (यो० ४ । १०) इति वासनानां प्रवाहतोऽनादित्वमुक्त्वा "**हेतुफलाश्रयालम्बनैः सङ्गृहीतत्वादेषामभावे तदभावः**" (यो० ४ । ११) इति । न च परिक्षयोऽत्र निवृत्तिमात्रं विवक्ष्यते नात्यन्तनिवृत्तिरिति कल्पयितव्यम् । "**हानौ तूपायनशब्दशेषत्वात्**" (वे० ३ । ३ । २६) इत्यादिना तस्य तत्परत्वावधारणात् । न चाविद्याकर्मादिहेतुपरिक्षये हेतुमती संसारावृत्तिराशङ्कितुमपि शक्यतेऽभ्युपगन्तुमिति तु किमु वक्तव्यम् । अनावृत्तिस्तु भगवतो मुक्तिं प्राप्तस्य जीवात्मनः श्रुत्या साक्षादुपदिश्यते "**न च पुनरावर्तते**" (छां० ८ । १५ । १) इति । चोऽवधारणे । जन्मावृत्तिः । "**स तु तत्पदमाप्नोति यस्माद् भूयो न जायते**" (कठ० ३ । ८) इति च । तथा स्मृत्याऽपि "**न मुक्तस्य पुनर्बन्धयोगोऽप्यनावृत्तिश्रुतेः**" (सां० ६ । १७) "**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः । १५ । आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन! । मामुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यते**" (गी० ८ । १५–१६) इत्येवमाद्यया । **ब्रह्मभुवनं**=

कार्य्यंब्रह्मलोकस्तृतीयो द्युलोक इति यावत् । यदि हि मुक्तिं प्राप्तः खलु जीवात्मा पुनः संसारमावर्त्तेत तदा म्रियेतापि । आवृत्तिमतो मरणावश्यम्भावात् । श्रुतयश्च मुक्तेरमृतत्वादिरूपतामाचक्षाणा मरणं मरणभयं चोभयं तत्रभवतो मुक्तस्य व्यासेधन्ति **"य इत्तद्विदुस्तेऽमृतत्वमानशुः"** (ऋ० २ । ३ । १८ । २३) **"तमेव विदित्वाऽति मृत्युमेति"** (यजु० ३१ । १८) **"तमेव विद्वान् न बिभाय मृत्योः"** (अथ० १० । ४ । ८ । ४४) **"तं वेद्यं पुरुषं यथा मा वो मृत्युः परिव्यथाः"** (प्र० ६ । ६) **य एतद्विदुरमृतास्ते भवन्ति"** (श्वे० ३ । १) इत्याद्याः । सोऽयं व्यासेधो मुक्तेरनावृत्तौ सुदृढं लिङ्गं प्रतिपद्यामहे । नह्यावर्त्तते जायते न म्रियते चेति सम्भवति । पुरुषार्थत्वाच्च । पुरुषार्थो हि मुक्तिः । यदि तां प्राप्तोऽपि पुरुषः पुनः संसारमावर्त्तेत नूनमिदं स्वर्गादिवदपुरुषार्थः सम्पद्येत । यत्रेदमुक्तं दर्शनान्तरे **"अपुरुषार्थत्वमन्यथा"** (सां० ६ । १८) इति । नह्यावृत्तिमन्तं स्वर्गं वा कार्य्यं ब्रह्मलोकं वा तृतीयमितो विवेकिनः सूक्ष्मधियः पुरुषोत्तमाः स्वप्नेऽप्यभ्यर्थयन्ते । यदा खलु सांसारिकं निखिलं सुखसम्पदुत्कर्षं तृणवत् परित्यज्य दुःसहदुःखावहं तपश्चरणादिभारातिशयं वावह्यमानेनापि ब्रह्मदर्शनमवाप्य कथञ्चिदन्तेऽन्तवदेव मुक्तिफलमुपभुज्यते तदा कथं नु नामायं पुरुषार्थः स्यात्, कथं वा पृथिवीलोक एवैषोऽस्माकं परमपुरुषार्थतां नेयात् । यत्र किलाल्पेनैव परिश्रमेण परिश्रमिभिरनवधिकं साम्राज्यादिसुखं द्रागित्येवोपभोक्तुं शक्यते । न च पृथिवीलोकस्य पुरुषार्थत्वेऽपि मुक्तेरपुरुषार्थत्वं वैदिकाः कर्हिचिन्मृष्यन्ते । पुरुषार्थत्वे च प्राप्तस्य तामनावृत्तिरिति सम्यगुच्यते । यत्तु मुक्तिः फलत्वादनित्या स्यात् स्वर्गादिवदित्युत्प्रेक्ष्यते । तन्न सुन्दरम् । ऐश्वर्य्यरूपत्वानभ्युपगमात् । दुःखात्यन्तनिवृत्तिपूर्विका ब्रह्मानन्दावाप्तिर्हि मुक्तिरभ्युपगम्यते नैश्वर्य्यरूपा स्वर्गादिवत् । तत्र च ब्रह्मानन्दो ब्रह्मस्वरूपत्वान्नित्यः, प्राप्तिरनुभवः, साऽपि पुरुषात्मकत्वान्नित्येति किं केनानित्यमुत्प्रेक्ष्येत । नूनमेष भवतां व्यसनविलसितः पुरुषार्थभ्रंशकरोऽस्थानेऽनित्यत्व-

विभ्रम इत्युदास्महे । मुक्तेरवस्थाविशेषत्वं च जीवात्मनः सुषुप्तिवदस्माभिरप्यनुमन्यते । तथाप्यस्ति तत्र कियान् विशेषः । सुषुप्तौ हि पुनरावृत्तिहेतवोऽनुवर्तन्ते मुक्तौ च सर्वथा ते चेच्छिद्यन्ते । यत्रेदमुक्तं दर्शनान्तरे **"द्वयोः सबीजमन्यत्र तद्धतिः"** (सां० ५ । ११७) इति । न च हेतूच्छेदेऽवस्थात्वसामान्यमात्रेण हेतुमत्कल्पना युज्यते । अतिप्रसङ्गात् । **यत्तु** मुक्तेः पुनरावृत्तौ साधनमुपन्यस्यते संख्येयत्वादिति । तत्र साधनं पश्यामः । साध्यत्वात् । सिद्धं हि साधनविदः साधनमाचक्षते न साध्यम् । साध्यं चैतत् संख्येयत्वं न तावदद्यापि सेषिध्यते । भवानेवात्र पृष्टो व्याचष्टां केनामी जीवात्मानः संख्यायन्ते जीवात्मना केनचिदाहोस्वित् परब्रह्मणा परमेश्वरेणेति । नाद्यः । विवादाभावप्रसङ्गात् । नहि जीवात्मानः स्वसंख्येयेऽर्थे कर्हिचिद् विवदन्ते । नान्त्यः । साध्यसमत्वात् । परब्रह्मणा परमेश्वरेण जीवात्मानः संख्यायन्त इत्येतदपि साध्यसमं वर्तते न जातु सिद्धम् । नह्युभाभ्यां वादिप्रतिवादिभ्यां तेन तत्संख्यानं मन्यते । मया मन्यते । जीव्यतां चिरं कुतस्त्वया मन्यते ? । सर्वज्ञत्वात् । सर्वज्ञं हि ब्रह्म सर्वज्ञातृत्वादिष्यते । चेददः सर्वं न विजानीयान्न सर्वज्ञं स्यात् । नहि सर्वं न विजानाति बोभोति च सर्वज्ञमिति युज्यते । सर्वान्तर्वर्तिनी च जीवात्मसंख्याऽपि पदार्थान्तरवद् विद्यते । ततो वयं निश्चितं विजानीमो भगवता तेन सर्वे ते संख्यायन्त इति । कर्मफलप्रदातृत्वाच्च । कर्मफलप्रदातृ तावद् ब्रह्मास्थीयते । यत्रेदमुक्तं भवति **"फलमत उपपत्तेः"** (वे० ३ । २ ।३८) इति । न च तत्प्रदातृत्वं तस्य जीवात्मसंख्याविज्ञानमन्तरा कथञ्चिद् घटते । नहि जीवात्मानः प्रत्येकं न विजानाति तेभ्यः कर्मफलं प्रददाति चेति संश्लिष्यते । प्रदीयते च प्रत्येकं कर्मफलम् । यत्रैतदुक्तं भवति **"ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्"** (न्या० ४ । १ । १८) इति । ततो वयं निःशङ्कमवगच्छामो नूनं भगवता तेन संख्यायन्ते सर्वे जीवात्मान इति । नैतत् सम्यगीक्षामहे । असंख्येयत्वेन दोषाभावात् । यदि हि जीवात्मनां संख्या

काचिद् विद्येत भगवता ब्रह्मणा च न विज्ञायेत तदाऽवश्यं सर्वज्ञं न भवेत् । न च जीवात्मनां संख्या काचिद् विद्यते । न च या न विद्यते तदविज्ञानेनैनदसर्वज्ञं भवितुमर्हति । विज्ञेये भवति तदविज्ञानस्यासार्वज्ञ्यसम्पत्तिहेतुत्वात् । हन्त यथा ब्रह्म स्वस्य देशतोऽन्तमविजानन्नासर्वज्ञं सम्पद्यते तथा जीवात्मसंख्यामविजानदपि नासार्वज्ञ्यमापद्यते । विज्ञेयाभावस्योभयत्रापि समानत्वात् । यथा हि भगवतो ब्रह्मणः खलु देशतोऽन्तो न विद्यते तथा जीवात्मनां संख्यातोऽन्तो न वर्तते । तदिदमुभयत्र विज्ञेयाभावसामान्यम् । यत्तु संख्याज्ञाने कर्मफलप्रदातृत्वादिति साधनमुपक्षिप्यते तदपि न चारु प्रत्यवैमः । संख्याज्ञानस्य तत्राप्रयोजकत्वात् । यदि हि प्रत्येकं जीवात्मभ्यः कर्मफलप्रदाने खलु संख्याज्ञानं प्रयोजकं विद्येत तदाऽवश्यं भगवतस्तस्य तद्गोचरं ज्ञानं परिकल्प्येत । जीवात्मानः संख्येयाश्चेत्युद्भाव्येत । न च तत्र तत् प्रयोजकं विद्यते । किं तर्हि प्रयोजकम्? भेदेन जीवात्मव्यक्तिज्ञानम् । तच्च तस्यास्त्येव । ज्ञेयस्य सद्भावात् । न च संख्याज्ञानाभावे व्यक्तिभेदज्ञानमात्रेण प्रत्येकं जीवात्मभ्यः कर्मफलप्रदानेऽभ्युपगम्यमाने भगवतो ब्रह्मणः शक्तिमाहात्म्यं किञ्चिन्नीचैः क्रियतेऽपि त्वत्युच्चैर्विधीयते---अहो यदसंख्येयेभ्यो जीवात्मभ्यो व्यक्तिभेदज्ञानमात्रेण याथातथ्यतः कर्मफलं प्रददाति, यत्र च "न मां प्रादात्" इति कश्चिदपि वक्तुं न साहयति । यत्रेदमाम्नायते **"नकिर्वक्ता न दादिति"** ( ऋ० ६ । ३ । ३ । १५ ) इति, तस्य कीदृशं शक्तिमाहात्म्यं स्यादिति । भवतैवात्र माध्यस्थ्येनोत्तरयितव्यं चेदस्मदादिसाधारणजन इव ब्रह्मापि संख्येयेभ्य एव कतिपयजीवात्मभ्यः कर्मफलं प्रदद्यात् तदा किं तस्य शक्तिमाहात्म्यं स्यात् । अत्रैव ह्यायुष्मन्! तच्छक्तिमाहात्म्यं वरीवृत्यते यत् किल जीवात्मभिर्दुःखेनापि कर्तुं न पार्य्यते तद् भगवता तेन सुखेन विधातुं शक्यते । किं तद् भवेदिति प्रश्ने तु यदिदमसंख्येयेभ्यस्तेभ्यो याथातथ्येन कर्मफलप्रदानमित्युत्तरयामः । यस्य च लोकोत्तरेऽपि तस्मिन् लौकिकी मतिरेवानिशमाविशति तं प्रतिबोधयामो बहु साधारणं नून-

मेतत् कृत्यं वेदितव्यम् । यत्कारणं संख्याज्ञानाभावेऽपि व्यक्तिभेदज्ञानमात्रेण लोकेऽनेकशो वैदिकार्मिकाः सहस्रेभ्यो जनेभ्यो यथानिर्देशं तत्तत्फलं प्रददाना अनुभूयन्ते । यत्र च वैदिकार्मिका अपि पर्य्याप्तास्तत्र वैदिकं ब्रह्मेति किमु वक्तव्यम् । अतो जीवात्मनां संख्येयत्वे कर्मफलप्रदातृत्वमलिङ्गम् । यत्तु तत्र मान्त्रवर्णिकं लिङ्गमुदाह्रियते **"संख्याता अस्य निमिषो जनानाम्"** (अथ० ४ । ४ । १६ । ५ ) इति । तदपि न सम्यगालोचामहे । तत्र जनशब्दस्य मनुष्यवचनत्वेन जीवमात्रवचनत्वाभावात् । यदि हि जीवमात्रवचनः खलु जनशब्द इह प्रयुज्येत तदाऽवश्यममेन लिङ्गेन संख्येया जीवात्मान इति प्रतिपद्येत । न च स तद्वचन इह प्रयुज्यते । किं वचनस्तर्हि प्रयुज्यते? मनुष्यवचन इति ब्रूमः । सामान्यात् । अस्ति तावदेतन्मन्त्रसमानोऽपरोऽप्याथर्वणो मन्त्रः **"यो ममार प्रथमो मर्त्यानां यः प्रेयाय प्रथमो लोकमेतम् । वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा सपर्य्यत"** (अथ० १८ । ३ । ३ । १३ ) इति । तत्र प्रयुक्तो जनशब्दो यथा मर्त्यशब्दसामानाधिकरण्यान्मनुष्यवचनो निःसङ्कोचमनुमन्यते तथाऽत्रापि स तद्वचनोऽनुमन्तुं शक्यते । नहि सर्वथा सामान्ये विद्यमाने क्वचिदेकत्र स तद्वचनो भवेन्नापरत्रेति विशेषकारणाभावे कथञ्चित् सङ्गच्छते । न च विशेषकारणमिह किञ्चिदीक्ष्यते । प्रायप्रयोगाच्च । वेदोपनिषत्स्मृतिषु प्रायेण जनशब्दप्रयोगः खलु मनुष्यविषयो दृश्यते **"यं रक्षन्ति प्रचेतसो वरुणो मित्रो अर्य्यमा । नू चित् स दभ्यते जनः"** (ऋ० १ । ३ । २२ । १ ) **"मरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जनः"** ( ऋ० १ । ६ । ११ । १ ) **"नाना हि त्वा हवमाना जना इमे"** ( ऋ० १ । ७ । १४ । ५ ) **"पञ्चजना मम होत्रं जुषध्वम्"** ( ऋ० ८ । १ । १३ । ४ ) **"दाधार क्षेममोको न रण्वो यवो न पक्वो जेता जनानाम्"** ( ऋ० १ । ५ । १० । ४ ) **"एते त इन्द्र! जन्तवो विश्वं पुष्यन्ति**

चार्य्यम् । अन्तर्हि ख्यो जनानाम्" (ऋ० १ । ६ । २ । ९) "इन्द्रियाणि शतक्रतो! या ते जनेषु पञ्चसु" (ऋ० ३ । २ । २२ । ९) "यथेमां वाचं कल्याणीमावदानि जनेभ्यो ब्रह्मराजन्याभ्यां शूद्राय चार्य्याय च स्वाय चारणाय च" (यजु० २३ । २) "ये के चात्महनो जनाः" (यजु० ४० । ३) "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः" (कठ० ६ । १७) "यशो जने असानि स्वाहा" (तै० १ । ४) "एष देवो विश्वकर्मा महात्मा सदा जनानां हृदये सन्निविष्टः" (श्वे० ४ । १७) "न त्वं नेमे जनाधिपाः" (गी० २ । १२) "चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन! (गी० ७ । १६) "तेऽहोरात्रविदो जनाः" (गी० ८ । १७) "तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" (गी० ८ । २४) "अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते" (गी० ९ । २२) प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः" (गी० १६ । ७) प्रेतान् भूतगणाँश्चान्ये यजन्ते तामसा जनाः" (गी० १७ । ४) "अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः" (गी० १७ । ५) इति । तत्सामान्यादत्रापि स तद्विषयः प्रयुक्त इति निष्प्रत्यूहं गन्तुं शक्यते । लोकसम्प्रवादाच्च । लोका हि यथाप्रकृति श्मशानवृक्षच्छायायामुपविष्टाः सम्प्रवदन्ते—सुजनः खलु विष्णुमित्रो यः किल समर्थोऽपि शत्रुमधिकुरुते स, दुर्जनो नूनमेष देवदत्तो यः किल गुरुभिर्बहूपकृतोऽपि पञ्चशतानि तेषामपजानीते स । किं तस्य मूढधियो लोकद्वयक्लेशकारिणाऽनेन कर्मणा यतो वयं प्रत्यक्षं पश्यामः "धनं पृथिव्यां पशवश्च गोष्ठे भार्य्या गृहद्वारि जनाः श्मशाने । देहश्चितायां परलोकमार्गे कर्मानुगो गच्छति जीव एकः" ॥ १ ॥ इति । ततोऽपि जनशब्दो मनुष्यवचन इति निःसंशयं प्रतिपद्यते । प्रत्यक्षो

हि वेदादिवदत्रापि तद्विषयो जनशब्दप्रयोगः । किंवदन्ती जनरवो जनश्रुतिरिति लोकवार्ताभिधानेनापि चैतत् सुदृढमुपोद्बल्यते । मन्यते च शब्दार्थनिर्णये तदपि प्रमाणम् । अन्यथा पक्षपातः प्रादुष्यात् । पक्षपातस्तु जघन्यो न विद्यावतां शोभते किं पुनर्वैदिकानां तेषाम् । **अथ** मन्त्रवर्णेषु सर्वत्र योगमेवाद्रियामहे न योगरूढिमिति चेत्? **तदा**ऽपि हन्त जनशब्दोऽयं जन्तुशब्दवन्मनुष्यवचन एव पर्य्यवस्यति न जीवमात्रवचनः । शास्त्रस्य मनुष्याधिकारत्वात् । अत एव भगवान् पाणिनिरपि **"ग्रामजनबन्धुभ्यस्तल्"** ( अष्टा० ४ । २ । ४३ ) इति जनताशब्दं मनुष्याणां समूहे व्युत्पादयति न जीवमात्रसमूहे । जन्तुशब्दश्च मनुष्यवचनः प्रयुज्यमानो लोक्यते **"एते त इन्द्र ! जन्तवः"** ( ऋ० १ । ६ । २ । ९ ) इत्यादिषु मन्त्रवर्णेषु । तस्माद् यत्किञ्चिदेतत् । मनुष्याश्च संख्येया इति तन्निमेषा अस्य वरुणस्य राज्ञः संख्याता भवितुमर्हन्ति नास्ति तत्र नाम किञ्चिदद्भुतम् । तथाच जीवात्मसंख्यायामेतदलिङ्गमिति सम्यगीक्षणम् । **ननु** मा नाम जीवात्मसंख्यायां भूदेतल्लिङ्गं, परिच्छिन्नत्वं भविष्यति । जीवात्मानो हि परिच्छिन्ना अणुपरिमाणत्वादाश्रीयन्ते । परिच्छिन्नानां च तेषामवश्यं कयाचित् संख्यया भवितव्यम् । देशतः परिच्छिद्यमानानां संख्यातः परिच्छेदस्यार्थिकत्वात् । नहि ये देशतः परिच्छिद्यन्ते ते संख्यातो न परिच्छिद्यन्त इति कथञ्चित् साङ्गत्यमापद्यते । तस्मात् संख्येया जीवात्मानः परिच्छिन्नत्वाद् धानाराशिवदिति । **नैतद् युक्तमुच्यते।** परिच्छिन्नत्वेऽप्यानन्त्यात् । प्राकृता ह्यर्थाः खलु देशेन परिच्छिद्यमानाः संख्यया परिच्छिद्यन्ते नाप्राकृताः, तत्रापि चेतनाः । चेतनाश्चामी जीवात्मान इति कथं ते संख्यया परिच्छिद्येरन् । न च संख्यातः परिच्छेदे तेषामुदाहरणमपि किञ्चिदालोकयामः । धानाराशिस्तु प्राकृतेषु केषुचिदर्थेषूदाहर्तुं शक्यते न चेतनेषु जीवात्मसु । श्रुतिश्च परिच्छिन्नत्वं प्रतिपादयन्ती स्वयं तेषामानन्त्यमाह **"बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स-**

**विज्ञेयः स चानन्त्याय कल्पते**" (श्वे० ५। १०) इति । न चानन्त्यमत्रासदृष्ट्याऽभिधीयते न जातु परमार्थत इति शङ्कितव्यम् । श्रुतीनां परमार्थतोऽर्थाभिधानस्यौत्पत्तिकत्वात् । अन्यथा "**सत्यं ज्ञानमनन्तं ब्रह्म**" (तै० २ । १) इत्यत्राप्यसदृष्ट्याऽनन्त्याभिधानशङ्कोत्पत्तेः । न च ब्रह्मणः परमार्थतो देशकृतान्ताभावात् तत्र शङ्केयं नोत्पत्स्यत इति सङ्गतमुत्तरम् । जीवात्मस्वपि तुल्यत्वात् । यथा हि ब्रह्मणि खलु परमार्थतो देशकृतान्ताभावान्न सा शङ्कोत्पत्स्यते तथा जीवात्मस्वपि नोत्पत्स्यते । तेषां परमार्थतः संख्याकृतान्ताभावादिति तुल्यमेतत् । कथं तर्ह्यस्माकमुत्पद्यते ? दुर्दैवविलसितात् संस्कारादिति मन्तव्यम् । सोऽयं संस्कारो यथाशास्त्रं गुरुकुलवासेन परिभ्रष्टव्योऽथ भवतामपि नोत्पत्स्यते । "**आनन्त्याय**=मोक्षाय" इत्यर्थाभ्युपगमे च मुक्तेरावृत्तिसाधनपरिश्रमो व्यर्थः । निगदेनैवानावृत्तिसिद्धेः । "**आनन्त्याय**=कालकृतान्ताभावाय" इत्यर्थस्तु शास्त्रमभ्युपगच्छतोऽनभ्युपगच्छतो वा बुद्धिमतः कस्यापि बुद्धिं नावतरितुं पारयति । प्रकृतिपर्य्यायाणां परमाणूनां परिच्छिन्नत्वेऽपि नित्यत्वाभ्युपगमात् । आनन्त्यमसंख्येयत्वं चेत्युभयमनर्थान्तरम् । तद् यथा श्वेताश्वतरश्रुत्या जीवात्मनां विस्पष्टमाख्यायते तथा वाजसनेयिमन्त्रेणापि प्रतिपाद्यते "**असंख्याताः सहस्राणि ये रुद्रा अधिभूम्याम् । तेषां सहस्रयोजनेऽव धन्वानि तन्मसि**" (यजु० १६ । ५४) इति । **असंख्याताः**=संख्याकृतान्तरहिताः । मा नामैतदसदृष्ट्या प्रतिपाद्यत इति कश्चन मन्दमतिः शङ्किष्ट तदर्थं विशेष्यते **सहस्राणि**=सर्वथाऽसंख्याता इत्याशयः । **रुद्राः**=जीवाः । ते हि रुदन्ति रोदयन्ति च । **भूमिः**=त्रिलोकी । **सहस्रयोजने**=युद्धे । **धन्वानि**=धनूंषि । **अवतन्मसि**=अवतनुमो विस्तारयाम इत्यर्थः । यः खलु युद्धेऽपराङ्मुखो युध्यते तं देशात्माभिमानिनं वीरोत्तमं पुरुषं प्रियं मन्यामहे न युद्धविमुखं पुरुषापसदमिति मन्त्राकूतम् । **ननु** निघण्टौ स्तोतृनामसु पाठादत्र रुद्राः=मनुष्याः स्युरिति । **नैष दोषः** । मनुष्याणामसंख्यातत्वाभावेन जीवात्ममात्रे वृत्त्युपपत्तेः । सत्यं

निघण्टौ स्तोतृनामसु रुद्रशब्दः पठ्यते तथाप्यत्रासंख्यातत्वाभिधानबलेन तस्य जीवात्ममात्रे वृत्तिरुपपद्यते । मनुष्याणामसंख्यातत्वाभावात् । नहि संख्याताः कदाचिदसंख्याताः प्रतिपादयितुं शक्यन्ते । जीवात्मनामसंख्यातत्वे च मुक्तेरनावृत्तावपि संसारोच्छेदो न प्रसज्यते माऽतो भैषीरायुष्मन्! । **यस्तु** मुक्तेरावृत्तौ मान्त्रवर्णिकं लिङ्गमुपन्यस्यते "**मृत्योर्मुक्षीय माऽमृतात्**" ( यजु० ३ । ६० ) इति । तन्न साधूपन्यस्यते । अभिप्रायापरिज्ञानात् । यदि हि मुक्तेरावृत्तिमभिप्रेत्य खल्वेतदभ्यर्थ्येत तदाऽवश्यं तत्र लिङ्गमिदमुपपद्येत । न च मुक्तेरावृत्तिमभिप्रेत्यैतदभ्यर्थ्यते । किं तर्हि ? मनुष्यशरीरं प्राप्तोऽहं भवदनुग्रहान्मुक्तिमेव प्राप्नुयां न पुनः-पुनर्जन्ममरणलक्षणं संसारमिति । स्पष्टश्चैषोऽभिप्रायोऽक्षरविन्यासादिति न तद्व्याक्रियायै प्रयतामहे । न चैवंविधाभिप्रायेणाभ्यर्थने मुक्तेरावृत्तौ लिङ्गमिदं कथञ्चिदुपपत्तुमर्हति । न चानुपपन्नलिङ्गत्वस्य साधकत्वं घटते । तस्मान्मुक्तिं प्राप्तस्यानावृत्तिरित्येष एव पक्षो ज्यायान् नावृत्तिरिति । **या** तु मुक्तेरावृत्तौ कैवल्योपनिषच्छ्रुतिः प्रामाण्यते "**ते ब्रह्मलोकेषु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे**" ( कै० ६ ) इति, सा कालत्रयेऽपि न तत्साधिका सम्पद्यते । अप्रमाणत्वात् । ईशाद्याः श्वेताश्वतरपर्य्यन्ता हि दशोपनिषदो वैदिकैः प्रमाणं मन्यन्ते न कैवल्यजाबालाद्याः । यत्कारणं तत्र बहवो वेदादिविरुद्धा देशात्मोन्नतिप्रतिपक्षा आधुनिका अर्था जेगीय्यन्ते यथा बाल्यावस्थाप्रव्रज्याप्रभृतयः । यत्रैतदुदाहृतं भवति "**ब्रह्मचर्य्यादेव प्रव्रजेत् । यदहरेव विरजेत् तदहरेव प्रव्रजेत्**" ( जा० ४ ) इति । न च यत् प्रमाणं न मन्यते तदभिहितः कोऽप्यर्थोऽभ्युपगन्तुं शक्यते । अतो मुक्तेः पुनरावृत्तौ कैवल्योपनिषच्छ्रुतिः प्रमाणमिति वञ्चनामात्रम् । **भवतु** वा कैवल्योपनिषत् प्रमाणं तथापि न तच्छ्रुतिरियं मुक्तेः पुनरावृत्तौ प्रमाणं भवितुमर्हति । यत्कारणं सा तत्रभवतो ब्रह्मविदो जीवन्मुक्तिसुखोपभोगेनोपभुक्ते प्रारब्धकर्मणि पतितेऽस्मिन् देहे विदेहमुक्तिप्राप्तिमभिधत्ते न मुक्तेः पुनरावृत्तिम् । कुतोऽवगम्यते ? श्रुत्यक्षरविन्यासात् ।

एष हि श्रुतेः समग्रः पाठः **"वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः। ते ब्रह्मलोकेषु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे"** (कै० ६) इति। तत्र पूर्वार्धे संन्यासादिनिखिलसाधनसम्पत्त्या प्राप्तब्रह्मसाक्षात्कारास्तत्रभवन्तो ब्रह्मविदः सङ्कीर्त्यन्त इति निःसन्दिग्धम्। उत्तरार्धे च तेषां पूर्वं जीवन्मुक्तिसुखोपभोगस्तदनु शरीरपातस्तदनु च विदेहमुक्तिरित्येषोऽर्थः परिकीर्तयितव्य इति युक्तं विज्ञायते। अन्यथा पूर्वोत्तरार्धयोस्तयोः परस्परमसंश्लेषापत्तेः। प्रमाणं च परस्परसंश्लिष्टार्थं वाक्यमास्थीयते नासंश्लिष्टार्थमित्यतिरोहितम्। न च पुनरावृत्तिवादिनस्ते "**ते**=येषां संन्यासादिनिखिलसाधनसम्पत्त्या ब्रह्मज्ञानं प्राप्तं ते **सर्वे**=विश्वे **ब्रह्मलोकेषु**=ब्रह्मात्मके लोके **परान्तकाले**=कल्पान्ते **परामृतात्**=मुक्तेः **परिमुच्यन्ति**=पुनरावर्तन्ते" इत्यर्थेऽभ्युपगम्यमाने पूर्वेणोत्तरमुत्तरेण वा पूर्वं मात्रयाऽपि संश्लिष्यते। अध्याहारकल्पना तु लघीयसी न सर्वत्राद्रियते। **"ब्रह्मलोकेषु"** इति बहुवचनपरित्यागोऽन्याय्यः। तदभावेऽपि संश्लिष्टार्थोपपत्तेः **"परान्तकाले"** इत्यस्य "कल्पान्ते" इत्यर्थोऽपि जघन्यः। अप्रसिद्धेः। साधारणजन्तूनां मरणकालो ह्यन्तकाल इति व्यवह्रियते, तत्रभवतां ब्रह्मविदां च पुनर्मरणाभावात् स एव सर्वस्मात् परोऽन्तकाल इति परान्तकालो व्यपदिश्यत इति मनसि धर्त्तव्यम्। **"परामृतात्"** इति च प्रथमार्थे पञ्चमी प्रयुज्यते न स्वार्थे। नूनं वेदोपनिषदपरिशीलननिबन्धनो भवतामेष दुश्चिकित्स्योऽस्थाने स्वार्थविभ्रमः। यथा हि **"पद्भ्यां शूद्रो अजायत"** (ऋ० ८। ४। १७। १२) **"पद्भ्यां पृथिवी"** (मुं० २। १। ४) **"यत् साक्षादपरोक्षाद् ब्रह्म"** (बृ० ३। ४। १) इत्यादिश्रुतिवाक्येषु प्रथमार्थे पञ्चमी प्रयुज्यते तथाऽत्रापि सा प्रयुक्तेत्यध्यवसीयते। श्रुत्यन्तरानुगमाच्च। पठ्यते खलु मुण्डके तत्समानार्था श्रुतिरन्या **"वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः। ते ब्रह्मलोकेषु परान्तकाले परामृताः परि-**

**मुच्यन्ति सर्वे"** ( मुं० ३ । २ । ६ ) इति । तत्र "परामृताः" इति प्रथमान्तः पाठो विस्पष्टः । तदनुगमादिहापि स एतदर्थोऽवगम्यते । न च वैपरीत्यं किं न स्यादिति कल्पयितव्यम् । तदुपष्टम्भकप्रयोगानुपलब्धेः । यथा हि प्रथमार्थे पञ्चमीप्रयोगः खलु वेदोपनिषत्सु सर्वत्रोपलभ्यते तथा पञ्चम्यर्थे प्रथमाप्रयोगो न क्वचिदुपलभ्यते । तदुपलम्भाभावे च निराश्रयेयं कल्पना कथमुद्भवेदुद्भवन्ती वा कथं जीवेदिति स्वयमन्तर्निधाय मनश्चिन्त्यम् । ये तु **"पद्भ्यां शूद्रो अजायत"** ( ऋ० ८ । ४ । १७ । १३ ) इत्यादा श्रूयमाणां पञ्चमीं स्वार्थे व्याचक्षते तैर्बहु पूर्वापरं व्याकुलीक्रियत इति निश्चितं तेऽपव्याख्यातार इत्यन्यत्र सविस्तरं व्याकरिष्यते । **"परिमुच्यन्ति"** इति पदास्वारस्यं चापरोक्षम् । मुञ्चतिर्हि नियमेन बन्धनाभावमाह न मुक्तेः पुनरावृत्तिम् । अनेकार्थत्वमपि धातूनां प्रयोगदर्शनबलेन कल्प्यते न यथाकामम् । नहि लोकवेदयोः कुत्रापि मुञ्चतेः पुनरावृत्तौ प्रयोगो दृश्यते । **परिमुच्यन्ति**=परितो मुच्यन्ते सर्वतो बन्धनरहिता भूयन्त इति च स्वरसस्तत्पदार्थोऽत्र बुद्धिमद्भिरनुगम्यते न तत्परित्यागः साधीयान् । बहु विचार्य्यं चैतदिह प्रतिभाति तत्र मनः प्रणिधातव्यं यदि श्रुतिरत्र मुक्तेः पुनरावृत्तिमभिदधीत तदा कथमनन्तरं ततोऽपुनरावृत्तिमाचक्षीत । नहि मिथो विरुद्धार्थाभिधानं श्रुतीनां कृत्यं केनापि श्रोतुमुत्सह्यते, मन्तुमिति तु किमु वक्तव्यम् । आचष्ट चानन्तरं प्रव्यक्तं मुक्तेरपुनरावृत्तिं श्रुतिः **"स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः। स एव सर्वं यद्भूतं यच्च भाव्यं सनातनं । ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये"** ( कै० ११ ) इति । **ननु** सापेक्षोऽत्र मृत्योरतिक्रमो मुक्तस्याख्यायते न निरपेक्ष इति । **न** । निरपेक्षस्य तस्यान्यत्राख्यानादर्शनात् । यदि हि निरपेक्षः खलु मृत्योरतिक्रमोऽन्यत्र क्वचित् कस्यचिदाख्यायेत तदाऽवश्यं तदपेक्षया सापेक्षोऽत्र स मुक्तस्याख्यायत इति मन्येत । न च स तथा क्वचिदन्यत्र कस्यचिदाख्यायमानो दृश्यते । दर्शनाभावे च बलादिह निरपेक्ष एव स मुक्तस्या-

ख्यायत इति मन्तुं शक्यते, नास्ति तत्र वचनावकाशः । तथाच श्रुतेरेषोऽर्थो निष्पन्नः "**ते**=येषां संन्यासादिनिखिलसाधनसम्पत्त्या ब्रह्मसाक्षात्कारः प्राजनि ते **सर्वे**=विश्वे भगवन्तो ब्रह्मविदो **ब्रह्मलोकेषु**=ब्रह्मनिर्मितलोकेषु **परामृतात्**=परामृताः जीवन्मुक्तिसुखभाजः **परान्तकाले**=प्रारब्धकर्मभोगेन प्राप्तायां मरणवेलायां **परिमुच्यन्ति**=सर्वतो बन्धनरहिता जायन्ते मुक्ताः बोभूयन्त इति । न चैवं निष्पन्नार्था भवन्ती सा भवति मुक्तेः पुनरावृत्तौ कर्हिचित् प्रमाणम् । हठात् प्रमाणने च स्वतन्त्रा आयुष्मन्त इत्युपरमामः । एतेन "**वेदान्तविज्ञानसुनिश्चितार्थाः**" ( मुं० ३ । २ । ६ ) इत्यादिका मुण्डकश्रुतिर्मुक्तेः पुनरावृत्तौ प्रमाणं स्यादित्येतदप्युत्तरितं वेदितव्यम् । तत्रानन्तराभिहितस्य "**गताः कलाः पञ्चदश प्रतिष्ठाः**" ( मुं० ३ । २ । ७ ) इत्यादिमुक्तिप्रकारविशेषस्यानुपपत्तेः । नहि मुक्तेः पुनरावृत्तिमभिधायानन्तरं तत्प्रकारविशेषाभिधानं कथञ्चिदुपपद्यते । "**परिमुच्यन्ति**" इति सामान्यतो मुक्तिं प्रतिज्ञाय सा कथं जायत इत्याकांक्षायां तत्प्रकारविशेषाभिधाने च नास्ति काचिदनुपपत्तिः । तस्मान्मुक्तिं प्राप्तस्यानावृत्तिरिति सङ्गतो वैदिको राद्धान्तः । सोऽयमुत्सर्गः । तदपवादो जगत्पितुर्भगवतो ब्रह्मणोऽभिलाषविशेष इष्यते । यत्रेदमाम्नातम् "**अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः । यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्**" ( ऋ० ८ । ७ । ११ । ५ ) इति । बहूक्तं चात्रास्माभिः पुरस्तादिति नाधुनाऽधिकमुच्यते । यत्तु मुक्तेः पुनरावृत्तौ "**कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम**" ( ऋ० १ । २ । १३ । १ ) इत्यादिकं मन्त्रद्वयं प्रमाण्यते तत् पुनर्जन्मनि कथञ्चित् प्रमाणं भवदपि तत्राप्रमाणं निश्चेतव्यम् । बद्धजीवप्रकरणस्थत्वात् । बद्धजीवप्रकरणस्थत्वं च तस्योत्तरमन्त्रेभ्यः स्फुटमवगम्यते "**तदिन्नक्तं तद्दिवा मह्यमाहुस्तदयं केतो हृद आ विचष्टे । शुनःशेपो यमह्वद् गृभीतः सोऽस्मान् राजा वरुणो मुमोक्तु**"

(ऋ० १ । २ । १५ । १२ ) इत्यादिकेभ्यः । **"शुनःशेपः"** इति जीवात्मसमाख्याऽपि च भवति तत्र बहुविशदं प्रमाणम् । **शुन इव**=वायुरिव सततं स्वविषये वहनशीलः सारमेयस्येव सततं स्वविषये लोलुपो वा **शेपः**=वैतसो यस्येति तद्व्युत्पत्तेः । शेपो वैतसस्य नामेति चोक्तं निरुक्ते **"शेपो वैतस इति पुंस्प्रजननस्य"** (नि० ३ । ४ । ४ ) इति । शेपस्य स्वविषये वहनशीलत्वं चाम्नायते साक्षाद् भगवति वेदे **"अश्वो वोहळा सुखं रथं हसनामुपमन्त्रिणः । शेपो रोमण्वन्तौ भेदौ वारिन्मण्डूक इच्छतीन्द्रायेन्दो ! परिस्रव"** ( ऋ० ७ । ५ । २५ । ४ ) इति । मुक्तेः पुनरावृत्तावेव तत्प्रामाण्याग्रहे चापवादाभिप्रायेण सङ्गमयितव्यम् । अन्यथा परब्रह्मणः परमेश्वरस्याग्नेर्मातापितृदर्शनहेतुत्वोपन्यासानुपपत्तेः । नहि कर्मणस्तद्दर्शनहेतुत्वे भगवतस्तस्य तद्दर्शनहेतुत्वोपन्यासः कथञ्चिदुपपद्यते । स्वनफलप्रदातृत्वबुद्ध्या तत्समाधानं तु कुशकाशावलम्बनायितमात्रम् । स्वनतथाचोत्सर्गो मुक्तेरनावृत्तिरावृत्तिश्चापवाद इति सर्व एव सिद्धः । चतुरस्रम् ॥ २२ ॥

**व्यासेन मुनिनाऽकारि वैदिकी ब्रह्मकप्रपा ।**
**मया हरिप्रसादेन वृत्त्या सम्यक् परिष्कृता ॥ १ ॥**
**यत्प्रसादादियं वृत्तिर्नित्यं स्थास्यति निश्चला ।**
**प्रह्वीभावेन वन्द्योऽसौ विद्यादानेश्वरस्सदा ॥ २ ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यात्मारामभगवत्पादशिष्यहरिप्रसादवैदिकमुनिविरचितायां वेदान्तसूत्रवैदिकवृत्तौ चतुर्थाध्यायस्य चतुर्थः पादः ॥**

**समाप्तश्चायं फलाध्यायश्चतुर्थः ॥**

**इति वेदान्तदर्शनम् ।**

---

# अथ वेदान्तसूत्रवैदिकवृत्तेः शुद्धाशुद्धपत्रम्

| पृष्ठाङ्कः | पङ्क्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २३ | २६ | प्रासमुभासंज्ञा | प्राप्तस्वभासंज्ञा |
| ३५ | १८ | पश्चादसद् | पश्चान्नसद् |
| ४७ | २ | आत्मनीनां | आत्मीयां |
| ४७ | ४ | आकास्मिकी | आकस्मिकी |
| ६० | १ | प्रतिष्ठति | प्रतितिष्ठति |
| ६३ | १५ | विकरोतीह | विकरोति हि |
| ६७ | ४ | सिमगिनिष्ठेना | सितत्वमगिनिष्ठेना |
| ८२ | १५ | **स्वमहिम्नि** | **स्वे महिम्नि** एवमग्रेऽपि |
| ८४ | २ | प्रतियोगाल्पत्वा | प्रतियोग्यल्पत्वा |
| ९२ | १० | **अस्य**=ब्रह्मणि चित्तप्रतिष्ठां विन्दमानस्यास्य | **अस्य** चित्तप्रतिष्ठां विन्दमान-स्यास्य |
| ९३ | ७ | निष्ठामभ्यस्यते | निष्ठामभ्यस्यति |
| ९७ | २० | वर्जितं | वर्जिता |
| ११३ | ५ | सामातिशयवि | साम्यातिशयवि |
| १३४ | १२ | प्रदर्शियितव्यः | प्रदर्शयितव्यः |
| १३७ | ६ | अथोच्येत | अथोच्यते |
| १५३ | १८ | ह्यनयोरर्थ | ह्युभयोरर्थ |
| १५५ | १ | कर्मफलभोक्तत्वं | कर्मफलभोक्तृत्वं |
| १५८ | २० | वद्धेन | वृद्धेन |
| १५९ | ७ | पाययतु | पाययितु |
| १६० | ९ | बुद्धेन | बुद्धेन |
| १६० | १७ | दुपचरितमपि | दुपचरितुमपि |
| १६० | २३ | न भवताति | न भवतीति |
| १६७ | ८ | भान्तुं | भातुं |
| १७३ | २४ | पारिकल्प्य | परिकल्प्य |
| १७६ | ११ | द्रष्टृत्वादयो | द्रष्टृत्वादयो |
| १९२ | ३ | यथा चैषा | यथा चैष |
| २२२ | २१ | भोक्तत्वाद | भोक्तृत्वाद |
| २३९ | १५ | जीवात्मेत्यगादिकम् | जीवात्मेत्यगादियम् |

| पृष्ठाङ्कः | पङ्क्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २३१ | २६ | दृष्टे | पृष्ठे |
| २५१ | २ | हृदयपुण्डरी | हृदयपुण्डरीक |
| २५७ | ७ | को न नाम | को नु नाम |
| २५८ | १५ | विविधबाधानतुभव | विविधबाधनानुभव |
| २५९ | ९ | परिशुद्धं मुक्तलक्षण | परिशुद्धमुक्तलक्षण |
| २७२ | २१ | भोक्तरो | भोक्तारो |
| २७७ | १९ | ज्योतींषि | ज्योतींषि एवमग्रेऽपि |
| २८० | ९ | तदानुष्ठानाभावात् | तदनुष्ठानाभावात् |
| २८२ | १३ | अहहारे त्वा | अह हारे त्वा |
| २८३ | २३ | निर्ब्रवाणः | निर्ब्रुवाणः |
| २८५ | ११ | शद्र ! | शूद्र ! |
| २८७ | १८ | यत्रेदम्नायते | यत्रेदमाम्नायते |
| ३०५ | १६ | पत्याशिदब्देभ्यः | पत्यादिशब्देभ्यः |
| ३०९ | ८ | ह्युपाहृतश्रुतौ | ह्युदाहृतश्रुतौ |
| ३११ | ७ | स्थीयते | स्थीयेत |
| ३१९ | ११ | द्वितीयाबहुवशनं | द्वितीया बहुवचनं |
| ३१९ | २० | कृतभोगापर्वगमे | कृतभोगापवर्गामे |
| ३३२ | २ | परिकील्यते | परिकीर्त्यते |
| ३३४ | २४ | निर्दिश्येत् | निर्दिश्येत |
| ३३८ | १९ | तद्वदनं | तद्वेदनं |
| ३४५ | २० | मेवात्रापन्यस्येते | मेवात्रोपन्यस्येते |
| ३५७ | ११ | दित्यौडलोमिः | दित्यौडुलोमिः |
| ३६४ | १ | जीवात्मानाम | जीवात्मनाम |
| ३६४ | १८ | तत्पर्य्यवासनस्य | तत्पर्य्यवसानस्य |
| ३७९ | ५ | पार्य्यते | पारयते |
| ४१२ | १७ | कारणं | करणं |
| ४१६ | २२ | प्रसज्यते | प्रसज्ज्यते |
| ४२३ | १४ | चेच्छेद्यते | चेच्छिद्यते |
| ४२५ | १५ | अपेक्षन्ते | अपेक्ष्यन्ते |
| ४३८ | १५ | कर्मण्युपजातुमर्हं | कर्मण्युपजनितुमर्हं |
| ४६१ | १४ | चेद | चेदर्थ |
| ४६४ | १७ | भूताति | भूतानि |

| पृष्ठाङ्कः | पङ्क्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४७६ | २० | तत्वविघाताम्र | तत्त्वाविघाताम्र |
| ४८७ | २ | आकाशम् | आकाशः |
| ४९९ | ९ | मभ्यवहार्य्यं किञ्चि | मभ्यवहार्य्यं वा किञ्चि |
| ५०० | १ | अश्नतेः | अश्नुतेः |
| ५१३ | २३ | सम्राड्त्वं | सम्राट्त्वं |
| ५१६ | २३ | ऽप्यधि परिमाण | ऽप्यधिकपरिमाण |
| ५१९ | ५ | त त्पत्तेः | तद्व्युत्पत्तेः |
| ५४१ | २२ | मश्नोतुमर्हति | मशितुमर्हति |
| ५५१ | १६ | श्रूयते | श्रूयेत |
| ५५७ | १ | चारिकतत्र | चारिकस्तत्र |
| ५५७ | १९ | श्रतयः | श्रुतयः |
| ५८७ | ११ | श्रद्धाशब्दस्यानभिधा | श्रद्धाशब्दस्याबभिधा |
| ५९३ | २४ | कर्माशस्य | कर्माशयस्य |
| ६०७ | १३ | पूर्वत्रेत्यादिनाऽवगमय्यते | पूर्वत्रेत्यादिनाऽवगमयति |
| ६३३ | २५ | इति । | इति च । |
| ६३५ | ४ | वेपयते | वेपते |
| ६३५ | १८ | लिङ्गं सर्वत्र | लिङ्गं हि सर्वत्र |
| ६३८ | ८ | करणम् | कारणम् |
| ६४५ | २७ | नाश्नवते | नाश्नुवते |
| ६४६ | २४ | भावत्वाम | भाक्त्वम |
| ६४९ | ९ | नेति श्रतिः | नेति श्रुतिः |
| ६५१ | ७२ | स्पुटमवमय्यते | स्फुटमवगम्यते |
| ६५९ | २६ | तयो | श्रुतयो |
| ६६८ | ९ | मधीयेरन् | मधीयीरन् |